# श्रीयाज्ञवल्क्यस्मृतिः।

## श्रीविज्ञानेश्वरकृतमिताक्षराटीकया समेता।

### अथ व्यवहाराध्यायः॥

#### साधारणव्यवहारमातृकाप्रकरणम् १

अभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनं परमो धर्मः। तच्च दुष्टनिग्रहमन्तरेण न संभवति। दुष्टपरिज्ञानं च न व्यवहारदर्शनमन्तरेण संभवति। तद्व्यवहारदर्शनमहरहः कर्तव्यमित्युक्तम् (आचाराध्याये ३६० श्लोके)। "व्यवहारान्स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहमिति"। स च व्यवहारः कीदृशः कतिविधः कथं चेतीतिकर्तव्यताकलापो नाभिहितस्तदभिधानाय द्वितीयोऽध्याय आरभ्यते।

**व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह।**
**धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः॥ १॥**

**व्यवहारानिति**। अन्यविरोधेन स्वात्मसंबन्धितया कथनं व्यवहारः। यथा, कश्चिदिदं क्षेत्रादि मदीयमिति कथयति, अन्योऽपि तद्विरोधेन मदीयमिति। तस्यानेकविधत्वं दर्शयति बहुवचनेन। **नृप इति** न क्षत्रियमात्रस्यायं धर्मः किंतु प्रजापालनाधिकृतस्यान्यस्यापीति दर्शयति। **पश्येदिति** पूर्वोक्तस्यानुवादो धर्मविशेषविधानार्थः। **विद्वद्भिर्**वेदव्याकरणादिधर्मशास्त्राभिज्ञैः। **ब्राह्मणैर्न** क्षत्रियादिभिः। ब्राह्मणैः सहेति तृतीया-निर्देशात्तेषामप्राधान्यम्। 'सहयुक्तेऽप्रधान' इति स्मरणात् (२-३-१९)। अतश्चादर्शनेऽन्यथादर्शने च राज्ञो दोषो न ब्राह्मणानाम्। यथाह मनुः। "अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन्। अयशो महदाप्नोति नरकं चाधिगच्छतीति। (अ. ८ श्लो. १२८) कथं **धर्मशास्त्रानुसारेण**। नार्थशास्त्रानुसारेण। देशादिसमयधर्मस्यापि धर्मशास्त्राविरुद्धस्य धर्मशास्त्रविषयत्वान्न पृथगुपादानम्। यथा च वक्ष्यति। 'निजधर्माविरोधेन यस्तु सामयिको भवेत्। सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च य' इति (अग्रे १८६ श्लो.)। **क्रोधलोभविवर्जित** इति। "धर्मशास्त्रानुसारेणेति सिद्धे क्रोधलोभविवर्जित इति वचनमादरार्थम्। क्रोधोऽमर्षः। लोभो लिप्सातिशयः॥ १॥

व्यवहारलक्षणम्।

**श्रुताध्ययनसंपन्ना धर्मज्ञाः सत्यवादिनः।**
**राज्ञा सभासदः कार्या** [illegible] तस्मात्। तस्याभयो-

१५

१०

२०

किंच। **श्रुतेन** मीमांसाव्याकरणादिश्रवणेन **अध्ययनेन** च वेदाध्ययनेन **संपन्नाः**। **धर्मज्ञाः** धर्मशास्त्रज्ञाः । **सत्यवादिनः** सत्यवचनशीलाः। **रिपौ मित्रे च ये समाः** द्वेषरागादिरहिताः । एवंभूताः **सभासदः** सभायां संसदि यथा सीदन्ति उपविशन्ति तथा दानमानसत्कारैः राज्ञा कर्तव्याः। यद्यपि श्रुताध्ययनसंपन्ना इत्यविशेषेणोक्तं तथापि ब्राह्मणा एव । यथाह **कात्यायनः**। "स तु सभ्यैः स्थिरैर्युक्तः प्राज्ञैर्मौलैर्द्विजोत्तमैः। धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैरिति"। ते च त्रयः कर्तव्याः बहुवचनस्यार्थवत्त्वात्। 'यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रय' इति **मनुस्मरणाच्च** (अ. ७ श्लो. ११)। **बृहस्पतिस्तु**। सप्त पञ्च त्रयो वा सभासदो भवन्तीत्याह। 'लोकवेदज्ञधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा। यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभेति'। न च ब्राह्मणैः सहेति पूर्वश्लोकोक्तानां ब्राह्मणानां श्रुताध्ययनसंपन्ना इत्यादि विशेषणमिति मन्तव्यम्। तृतीयाप्रथमान्तनिर्दिष्टानां विशेषणविशेष्यभावासंभवात्। विद्वद्भिरित्यनेन पुनरुक्तिप्रसंगाच्च। तथाच **कात्यायनेन** ब्राह्मणानां सभासदां च स्पष्टं भेदो दर्शितः। "सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः। ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मत" इति। तत्र ब्राह्मणा अनियुक्ताः, सभासदस्तु नियुक्ता इति भेदः। अत एवोक्तम्। 'नियुक्तो वाऽनियुक्तो वा धर्मज्ञो वक्तुमर्हतीति'। तत्र नियुक्तानां यथावस्थितार्थकथनेऽपि यदि राजाऽन्यथा करोति, तदाऽसौ निवारणीयोऽन्यथा दोषः। उक्तं च **कात्यायनेन** । "अन्यायेनापि तं यान्तं येऽनुयान्ति सभासदः। तेऽपि तद्भागिनस्तस्माद्बोधनीयः स तैर्नृप" इति। अनियुक्तानां पुनरन्यथाभिधानेऽनभिधाने वा दोषो न तु राज्ञोऽनिवारणे। "सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम्। अब्रुवन्विब्रुवन्वाऽपि नरो भवति किल्बिषीति" **मनुस्मरणात्** (अ. ७ श्लो. १३) **रिपौ मित्रे चेति**। चकाराल्लोकरञ्जनार्थं कतिपयैर्वणिग्भिरप्यधिष्ठितं सदः कर्तव्यम्। यथाह **कात्यायनः**। "कुलशीलवयोवृत्तवित्तवद्भिरमत्सरैः। वणिग्भिः स्यात्कतिपयैः कुलभूतैरधिष्ठितमिति" ॥ २ ॥

सभ्यांश्चाह।

सभ्यानां संख्यामाह।

५

१०

**अपश्यता कार्यवशाद्व्यवहारान्नृपेण तु ।**
**सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित् ॥ ३ ॥**

कार्यान्तरव्याकुलतया व्यवहा**रानपश्यता** नृपेण, पूर्वोक्तैः **सभ्यैः सह सर्वधर्मवित्** सर्वान्धर्मान् शास्त्रोक्तान् सामयिकांश्च धर्मान्वेत्ति विचारयतीति स सर्वधर्मवि**द्ब्राह्मणो** न क्षत्रियादिर्नियोक्तव्यो व्यवहारदर्शने। तं च **कात्यायनेनो**क्तगुणविशिष्टं कुर्यात्। यथाह। "दान्तं कुलीनं मध्यस्थमनुद्वेगकरं स्थिरम्। परत्रभीरुं धर्मिष्ठमुद्युक्तं क्रोधवर्जितमिति"। एवंभूतब्राह्मणासंभवे क्षत्रियं वैश्यं [illegible]म। यथाह **कात्यायनः**। "ब्राह्मणो यत्र न स्यात्तु क्षत्रियं तत्र योज-

व्यवहारान्नृपः पश्येदित्युक्तं तत्रानुकल्पमाह।

इति, आँवलभट्ट जॉलीकृत 'नारदीयस्मृतौ' पाठः

येत् । वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेदिति" । **नारदेन** त्वयमेव मुख्यो दर्शितः । "धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः । समाहितमतिः पश्येद्व्यवहारानन्-

प्राड्विवाकस्वरूपमाह ।

नुक्रमादिति" ( अ. १ श्लो. ३५ ) । प्राड्विवाकमते स्थितो न स्वमते स्थितः । राजा चारचक्षुषा परसैन्यं पश्यतीतिवत्तस्य चेयं यौगिकी संज्ञा । अर्थिप्रत्यर्थिनौ पृच्छतीति प्राट्, तयोर्वचनं विरुद्धमविरुद्धं च सभ्यैः सह विविनक्ति विवेचयति वेति[५] विवाकः, प्राट् चासौ विवाकश्चेति **प्राड्विवाकः** । उक्तं च । "विवादानुगतं पृष्ट्वा ससभ्यस्तत्प्रयत्नतः । विचारयति येनासौ प्राड्विवाकस्ततः स्मृत इति" ॥ ३ ॥

प्राड्विवाकादयः सभ्या यदि रागादिना स्मृत्यपेतं व्यवहारं विचारयन्ति तदा राज्ञा किं कर्तव्यमित्यत आह—

**रागाल्लोभाद्भयाद्वापि स्मृत्यपेतादिकारिणः ।**
**सभ्याः पृथक् पृथग्दण्ड्या विवादाद्द्विगुणं दमम् ॥ ४ ॥**

अपि च । पूर्वोक्ताः **सभ्या** रजसो निरङ्कुशत्वेन तदभिभूता **रागात्**स्नेहातिशयाल्**लोभा**ल्लिप्सातिशयाद्**भया**त्संत्रासा**त्स्मृत्यपेतं** स्मृतिविरुद्धं **आदि**शब्दादाचारापेतं कुर्वन्तः **पृथक्पृथक्** एकैकशो **विवादात्** विवादपराजयनिमित्ताद्दमा**द्द्विगुणं दमं** दण्ड्याः । न पुनर्विवादास्पदीभूताद्द्रव्यात् । तथा सति स्त्रीसंग्रहणादिषु दण्डाभावप्रसंगः । रागलोभभयानामुपादानं रागा-[१५]दिष्वेव द्विगुणो दमो नाज्ञानमोहादिष्विति नियमार्थम् ॥ 'न च राजा सर्वस्येष्टे ब्राह्मणवर्ज्यमिति' **गौतम**वचनात् न ब्राह्मणा अदण्ड्या इति मन्तव्यम् । तस्य प्रशंसार्थत्वात् ॥ यत्तु षड्भिः परिहार्यो राज्ञाऽवध्यश्चाबंध्यश्चादण्ड्यश्चाबहिःकार्यश्चापरिवाद्यश्चापरिहार्यश्चेति तदपि स एष बहुश्रुतो भवति । लोकवेदवेदाङ्गवित् वाकोवाक्येतिहासपुराणकुशलस्तदपेक्षस्तद्वृत्ति**श्चाष्टाचत्वारिंशत्संस्कारैः** संस्कृत**स्त्रिषु कर्मस्व**भिरतः **षट्सु** वा **सामयाचारिकेष्व**भिवि-[२०]नीत इति प्रतिपादितबहुश्रुतविषयं न ब्राह्मणमात्रविषयम् ॥ ४ ॥

**स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ।**
**आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥ ५ ॥**

धर्मशास्त्रसमयाचारविरुद्धेन **मार्गेण परैराधर्षितो**ऽभिभूतो यद्**राज्ञे** प्राड्विवाकाय वा **आवेदयति** विज्ञापयति **चेद्यदि** । तदावेद्यमानं **व्यवहारपदं** "प्रतिज्ञो-[२५]

व्यवहारविषयमाह ।

त्तरसंशयहेतुपरामर्शप्रमाणनिर्णयप्रयोजनात्मको **व्यवहारस्तस्य पदं** विषयस्तस्य चेदं सामान्यलक्षणम् ।

स च **द्विविधः शङ्काभियोगस्तत्त्वाभियोगश्चेति** ॥ यथाह **नारदः** । "अभियोगस्तु विज्ञेयः शङ्कातत्त्वाभियोगतः । शङ्काऽसतां तु संसर्गात्तत्त्वं होढाभिदर्शनादिति" (१-२७)॥ **होढं** लोप्त्रं लिङ्गमिति यावत् । तेन दर्शनं साक्षाद्वा दर्शनं होढाभिदर्शनं तस्मात् । **तत्त्वाभियो**-[३०]**गोऽपि द्विविधः । प्रतिषेधात्मको विध्यात्मकश्चेति । यथा** मत्तो **हिरण्यादिकं गृहीत्वा** न प्रयच्छति । क्षेत्रादिकं ममायमपहरतीति वा ॥ **उक्तंच कात्यायनेन** । "**न्याय्यं स्वं**

नेच्छते कर्तुमन्याय्यं वा करोति य" इति । स पुनश्चाष्टादशधा भिद्यते ॥ यथाह **मनुः** । ( अ. ८ श्लो. ४–७. ) "तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः । संभूय च समुत्थानं दत्तस्यानपकर्म च । वेतनस्यैव चादानं संविदश्च व्यतिक्रमः । क्रयविक्रयानुशयो विवादः स्वामिपालयोः । सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके । स्तेयं च साहसं चैव स्त्रीसंग्रहणमेव च । स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च ।[१]पदान्यष्टादशैतानि व्यवहारस्थिताविहेति"। एतान्यपि साध्यभेदेन पुनर्बहुत्वं गतानि ॥ यथाह **नारदः** (१–२०) । "एषामेव प्रभेदोऽन्यः शतमष्टोत्तरं भवेत् । क्रियाभेदान्मनुष्याणां शतशाखो निगद्यत" इति ॥

व्यवहारभेदाः ।

आवेदयति चेद्राज्ञे इत्यनेन स्वयमेवागत्यावेदयति न राजप्रेरितस्तत्पुरुषप्रेरितो वेति दर्शयति॥ यथाह **मनुः** (८–४३) । "नोत्पादयेत्स्वयं कार्यं राजा वाऽप्यस्य पूरुषः । न च प्रापितमन्येन १० ग्रसेतार्थं कथञ्चनेति" । **परैरिति** परेण पराभ्यां परैरित्येकस्यैकेन द्वाभ्यां बहुभिर्वा व्यवहारो भवतीति दर्शयति ॥ यत्पुन 'रेकस्य बहुभिः सार्धं स्त्रीणां प्रेष्यजनस्य च । अनादेयो भवेद्वादो धर्मविद्भिरुदाहृत' इति **नारद**वचनं तद्भिन्नसाध्यविषयम् । आवेदयति राज्ञे इत्यनेनैन राज्ञा पृष्टो विनीतवेष आवेदयेत् । आवेदितं च युक्तं चेन्मुद्रादिना प्रत्यर्थ्याह्वानमकल्पादीनां चानाह्वानमित्याद्यर्थसिद्धमिति नोक्तम् । **स्मृत्यन्तरे** तु स्पष्टार्थमुक्तम् ॥ यथा । "काले कार्या-१५ र्थिनः पृच्छेद्[२]प्रणतं पुरतः स्थितम् । किं कार्यं का च ते पीडा मा भैषीर्ब्रूहि मानव । केन कस्मिन्कदा कस्मात्पृच्छेदेवं सभागतम् । एवं पृष्टः स यद्ब्रूयात्स सभ्यैर्ब्राह्मणैः सह । विमृश्य कार्यं न्याय्यं चेदाह्वानार्थमतः परम् । मुद्रां वा निक्षिपेत्तस्मिन्पुरुषं वा समादिशेत् । अकल्पबालस्थविरविषमस्थक्रियाकुलान् । कार्यातिपातिव्यसनिनृपकार्योत्सवाकुलान् । मत्तोन्मत्तप्रमत्तार्तान्भृत्यान्नाह्वानयेन्नृपः । न हीनपक्षां युवतिं कुले जातां प्रसूतिकाम् । सर्ववर्णोत्तमां कन्यां [२]तां ज्ञातिप्रमुकाः स्मृताः । तदधीनकुटुम्बिन्यः स्वैरिण्यो **गणिकाश्च**[३] याः । निष्कुला याश्च पतितास्तासामाह्वानमिष्यते । कालं देशं च विज्ञाय कार्याणां च बलाबलं । अकल्पादीनपि शनैर्यानैराह्वानयेन्नृपः । ज्ञात्वाऽभियोगं येऽपि स्युर्वने प्रव्रजितादयः । तानप्याह्वानयेद्राजा गुरुकार्येष्वकोपयन्निति"।

२० आह्वानानाह्वाने ।

तदपवादः ।

आसेधव्यवस्थाप्यर्थसिद्धैव **नारदे**नोक्ता(१–४७–५४)। "वक्तव्येऽर्थे ह्यतिष्ठन्तमुत्क्रामन्तं च तद्वचः। २५ आसेधयेद्विवादार्थी यावदाह्वानदर्शनम् । स्थानासेधः कालकृतः प्रवासात्कर्मणस्तथा । चतुर्विधः स्यादासेधो नासिद्धस्तं विलङ्घयेत् । आसेधकाल आसिद्ध आसेधं योऽतिवर्तते । सविनयोऽन्यथाकुर्वन्नासेद्धा दण्डभाग्भवेत् । नदीसन्तारकान्तारदुर्देशोपप्लवादिषु । आसिद्धस्तं परासेधमुत्क्रामन्नापराध्नुयात् । निर्वेष्टुकामो रोगार्तो यियक्षुर्व्यसने स्थितः । अभियुक्तस्तथान्येन राजकार्योद्यतस्तथा । गवां प्रचारे गोपालाः सस्यावापे कृषीवलाः । शिल्पिनश्चापि तत्कालमायुधीयाश्च विग्रहे" इति । आसेधो ३० राजाज्ञयावरोधः अकल्पादयः पुत्रादिकमन्यं वा सुहृदं प्रेषयिष्यन्ति नच

आसेधस्य चातुर्विध्यमाह सएव ।

कश्चिदासेधातिक्रमेदण्डाभावमाह ।

---

१ प्रणतमिति पाठान्तरम् । २ ता ज्ञातिप्रमुकाः—ता ज्ञातिप्रमुखा इति च पाठः । ३ क—गिरिकाश्च । ४ । ५ क पुस्तके असेध इति पाठः स च समीचीनः ।

ते परार्थवादिनः “यो न भ्राता नच पिता न पुत्रो न नियोगकृत् । परार्थवादी दण्ड्यः स्याद्व्यवहारेषु विब्रुवन्निति” **नारदवचनात्** (२–२३) ॥ ५ ॥

प्रत्यर्थिनि मुद्रालेख्यपुरुषाणामन्यतमेनानीते किं कुर्यादित्यत आह—

**प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना ।**
**समामासतदर्धाहर्नामजात्यादिचिह्नितम् ॥ ६ ॥**

अर्थ्यत इत्यर्थः साध्यः सोऽस्यास्तीत्यर्थी तत्प्रतिपक्षः **प्रत्यर्थी** । **तस्याग्रतः पुरतो लेख्यं** लेखनीयम् । **यथा** येन प्रकारेण पूर्वमावेदनकाले आवेदितं तथा । न पुनरन्यथा । अन्यथावादित्वेन व्यवहारस्य भङ्गप्रसङ्गात् । “अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः । आहूतः प्रपलायी च हीनः पञ्चविधः स्मृत” इति । आवेदनकाल एवार्थिवचनस्य लिखितत्वात्पुनर्लेखनमनर्थकमित्यत आह । **समामासेत्यादि** ।[१] संवत्सरमासपक्षतिथिवारादिना अर्थिप्रत्यर्थिनाम ब्राह्मणजात्यादिचिह्नितम् । **आदि**शब्देन द्रव्यतत्संख्यास्थानवेलाक्षमालिङ्गादीनि गृह्यन्ते ॥ यथोक्तम् । “अर्थवद्धर्मसंयुक्तं परिपूर्णमनाकुलम् । साध्यवद्वाचकपदं प्रकृतार्थानुबन्धि च । प्रसिद्धमविरुद्धं च निश्चितं साधने क्षमम् । संक्षिप्तं निखिलार्थं च देशकालाविरोधि च । वर्षर्तुमासपक्षाहोवेलादेशप्रदेशवत् । स्थानावसथसाध्याख्याजात्याकारवयोयुतम् । साध्यप्रमाणसंख्यावदात्मप्रत्यर्थिनामवत् । परात्मपूर्वजानेकराजनामभिर[१]ङ्कितम् । क्षमालिङ्गात्मपीडावत्कथिताहर्तृदायकम् । यदावेदयते राज्ञे तद्भाषेत्यभिधीयत” इति । **भाषा** प्रतिज्ञा पक्ष इति नार्थान्तरम् । आवेदनसमये कार्यमात्रं लिखितं प्रत्यर्थिनोऽग्रतः समामासादिविशिष्टं लिख्यत इति विशेषः ।

भाषालक्षणम् ।

संवत्सरविशेषणं यद्यपि सर्वव्यवहारेषु नोपयुज्यते तथाप्याधिप्रतिग्रहक्रयेषु निर्णयार्थमुपयुज्यते, आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरेति वचनात् । अर्थव्यवहारेऽपि एकस्मिन्सं[२]वत्सरे यत्संख्याकं यद्द्रव्यं यतो येन गृहीतं प्रत्यर्पितं च पुनरन्यस्मिन्वत्सरे तद्द्रव्यं तत्संख्याकं ततस्तेन गृहीतं याच्यमानो यदि ब्रूयात्सत्यं गृहीतं प्रत्यर्पितं चेति । वत्सरान्तरे गृहीतं प्रत्यर्पितं नास्मिन्वत्सरे इत्युपयुज्यते । एवं मासाद्यपि योज्यम् । देशस्थानादयः पुनः स्थावरेष्वेवोपयुज्यन्ते । “देशश्चैव तथा स्थानं संनिवेशस्तथैव च । जातिः संज्ञाधिवासश्च प्रमाणं क्षेत्रनाम च । पितृपैतामहं चैव पूर्वराजानुकीर्तनम् । स्थावरेषु विवादेषु दशैतानि[२] निवेशयेदिति” स्मरणात् । **देशो** मध्यदेशादिः । **स्थानं** वाराणस्यादि । **संनिवेश**स्तत्रैव पूर्वापरदिग्विभागपरिच्छिन्नः सम्यङ्निविष्टो गृहक्षेत्रादिः । **जाति**रर्थिप्रत्यर्थिनो ब्राह्मणत्वादिः । **संज्ञा** च देवदत्तादिः । **अधिवासः** समीपदेशे निवासी जनः । **प्रमाणं** निवर्तनादि भूपरिमाणम् । **क्षेत्रनाम** शालिक्षेत्रं क्रमुकक्षेत्रम् । कृष्णभूमिः पाण्डुभूमिः इति । पितुः **पितामहस्य** च नामार्थिप्रत्यर्थिनोः पूर्वेषां त्रयाणां राज्ञां नामकीर्तनं चेति । समामासादीनां यस्मिन्व्यव[१]हारे यावदुपयुज्यते । तत्र तावल्लेखनीयमिति तात्पर्यार्थः ॥

१ फ वादादन । २ “कृष्णभूमः पांडुभूमः” इति सुबोधिनीटीकांतर्गतः पाठः; फ पुस्तकेऽप्येवमेव पाठः ।

एवं पक्षलक्षणे स्थिते पक्षलक्षणरहितानां पक्षवदवभासमानानां पक्षाभासत्वं सिद्धमेवेति **योगीश्वरेण** न पृथक्पक्षाभासा उक्ताः। अन्यैस्तु विस्पष्टार्थमुक्तं। "अप्रसिद्धं निराबाधं निरर्थं निष्प्रयोजनम्। असाध्यं वा विरुद्धं वा पक्षाभासं विवर्जयेत्"। **अप्रसिद्धं** मदीयं शशविषाणं गृहीत्वा न प्रयच्छतीत्यादि। **निराबाधम**स्मद्गृहदीपप्रकाशेनायं स्वगृहे व्यवहरतीत्यादि। **निरर्थम**भिधेयरहितं कचटतपजडदगबेत्यादि। **निष्प्रयोजनं** यथाऽयं देवदत्तोऽस्मद्गृहसन्निधौ सुस्वरमधीत इत्यादि। **असाध्यं** यथाऽहं देवदत्तेन सभ्रूभङ्गमुपहसित इत्यादि। एतत्साधनासंभवादसाध्यम्। अल्पकालत्वान्न साक्षिसंभवो, लिखितं दूरतो, अल्पत्वान्न दिव्यमिति। **विरुद्धं** यथाऽहं मूकेन शप्त इत्यादि। पुरराष्ट्रादिविरुद्धं वा। एतेषां स्वभावेनैव निराकरणमिति न निराक्रियते। तत्र च अप्रसिद्धादीनां व्युत्पत्त्यर्थमुपादानं तदप्यनेकपदसं-

पक्षाभासाः।

१० कीर्णस्य निराकरणं न क्रियते। "राज्ञा विवर्जितो यश्च यश्च पौरविरोधकृत्। राष्ट्रस्य वा समस्तस्य प्रकृतीनां तथैव च॥ अन्ये वा ये पुरग्राममहाजनविरोधकाः। अनादेयास्तु ते सर्वे व्यवहाराः प्रकीर्तिता" इति॥

यत्त्वनेकपदसंकीर्णः पूर्वपक्षो न सिध्यतीति तत्र यद्यनेकवस्तुसङ्कीर्ण इत्युच्यते तदा न दोषः। मदीयमनेन हिरण्यं वासो रूपकादि वाऽपहृतमित्येवंविधस्यादुष्टत्वात्। ऋणादानादि-

१५ पदसंकरे पक्षाभास इति चेत्तदपि न। मदीया रूपका अनेन वृद्ध्या गृहीताः, सुवर्णं चास्य हस्ते निक्षिप्तम्, मदीयं क्षेत्रमयमपहरतीत्यादीनां पक्षत्वमिष्यत एव। किंतु क्रियाभेदात्क्रमेण व्यवहारो न युगपदित्येतावत्। यथाह **कात्यायनः**। "बहुप्रतिज्ञं यत्कार्यं व्यवहारे सुनिश्चितम्। कामं तदपि गृण्हीयाद्राजा तत्त्वबुभुत्सयेति"। यस्मादनेकपदसंकीर्णः पूर्वपक्षो युगपन्न सिध्यतीति तस्यार्थः। अर्थिग्रहणात्पुत्रपौत्रादिग्रहणं तेषामेकार्थत्वात्। नियुक्तस्यापि नियोगेनैव

२० तदेकार्थत्वाक्षेपात्॥ 'अर्थिना संनियुक्तो वा प्रत्यर्थिप्रहितोऽपि वा। यो यस्यार्थे विवदते तयोर्जयपराजयाविति' स्मरणात्। नियुक्तजयपराजयौ मूलस्वामिनोरेव। एतच्च भूमौ फलके वा पाण्डुलेखेन लिखित्वा आवापोद्धारेण विशोधितं पश्चात्पत्रे निवेशयेत्। "पूर्वपक्षं स्वभावोक्तं प्राड्विवाकोऽभिलेखयेत्। पाण्डुलेखेन फलके ततः पत्रे विशोधित" मिति **कात्यायन**स्मरणात्। शोधनं च यावदुत्तरदर्शनं कर्तव्यं नातः परमनवस्थाप्रसंगात्। अत एव **नारदेनो-**

२५ **क्तम्**। "शोधयेत्पूर्ववादं तु यावन्नोत्तरदर्शनम्। अवष्टब्धस्योत्तरेण निवृत्तं शोधनं भवेदिति"। पूर्वपक्षमशोधयित्वैव यदोत्तरं दापयन्ति सभ्यास्तदा रागालोभादित्युक्तदण्डेन सभ्यान् दण्डयित्वा पुनः प्रतिज्ञापूर्वकं व्यवहारः प्रवर्तनीयो राज्ञेति॥ ६॥

एवं शोधितपत्रारूढे पूर्वपक्षे किं कर्तव्यमित्यत आह—

## श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ।

१० **श्रुतो** भाषार्थो येन प्रत्यर्थिनासौ श्रुतार्थः। तस्योत्तरं पूर्वपक्षादुत्तरत्र भवतीत्युत्तरं, **लेख्यं** लेखनीयम्। **पूर्वावेदकस्यार्थिनः संनिधौ** समीपे उत्तरं च यत्पूर्वोक्तस्य निराकरणं तदुच्यते। यथाह - "पक्षस्य व्यापकं सारमसंदिग्धमनाकुलम्।

उत्तरम्।

अव्याख्यागम्यमित्येतदुत्तरं तद्विदो विदुरि"ति । पक्षस्य व्यापकं निराकरणसमर्थम् । सारं न्याय्यं न्यायादनपेतम् । असंदिग्धं सन्देहरहितम् । अनाकुलं पूर्वापराविरुद्धम् । अव्याख्यागम्यं अप्रसिद्धपदप्रयोगेण दुःश्लिष्टविभक्तिसमासाध्याहाराभिधानेन वा अन्यदेशभाषाभिधानेन वा यत् व्याख्येयार्थं न भवति तत्सदुत्तरम् ॥ **तच्च चतुर्विधम्** । संप्रतिपत्तिर्मिथ्या प्रत्यवस्कन्दनं पूर्वन्यायश्चेति ॥ यथाह **कात्यायनः** । "सत्यं मिथ्योत्तरं चैव प्रत्यवस्कन्दनं तथा । पूर्वन्यायविधिश्चैवमुत्तरं स्याच्चतुर्विधमिति" । तत्र **सत्योत्तरं** यथा । रूपकशतं मह्यं धारयतीत्युक्ते सत्यं धारयामीति । यथाह । साध्यस्य सत्यवचनं प्रतिपत्तिरुदाहृतेति । **मिथ्योत्तरं** तु नाहं धारयामीति । तथा च **कात्यायनः** । "अभियुक्तोऽभियोगस्य यदि कुर्यादपह्नवम् । मिथ्या तत्तु विजानीयादुत्तरं व्यवहारत" इति । तच्च **मिथ्योत्तरं चतुर्विधम्** । 'मिथ्यैतन्नाभिजानामि तदा तत्र न संनिधिः । अजातश्चास्मि तत्काल इति मिथ्या चतुर्विधमिति' । **प्रत्यवस्कन्दनं** नाम । सत्यं गृहीतं प्रतिदत्तं प्रतिग्रहेण लब्धमिति वा । यथाह **नारदः** । 'अर्थिना लिखितो योऽर्थः प्रत्यर्थी यदि तं तथा । प्रपद्य कारणं ब्रूयात्प्रत्यवस्कन्दनं स्मृतमिति' । **प्राङ्न्यायोत्तरं** तु यत्राभियुक्त एवं ब्रूयादस्मिन्नर्थे अनेनाहमभियुक्तस्तत्र चायं व्यवहारमार्गेण पराजित इति ॥ उक्तं च **कात्यायनेन** । "आचारेणावसन्नोऽपि पुनर्लेखयते यदि । सोऽभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते" इति ।

चतुर्विधमुत्तरम् ।

मिथ्योत्तरं चतुर्विधम् ।

एवमुत्तरलक्षणे स्थिते उत्तरलक्षणरहितानामुत्तरवदवभासमानानामुत्तराभासत्वमर्थसिद्धं । स्पष्टीकृतं च स्मृत्यन्तरे । "संदिग्धमन्यत्प्रकृतादत्यल्पमतिभूरि च । पक्षैकदेशव्याप्यन्यत्तथा नैवोत्तरं भवेत् । यद्व्यस्तपदमव्यापि निगूढार्थं तथाकुलम् । व्याख्यागम्यमसारं च नोत्तरं स्वार्थसिद्धय" इति । तत्र **संदिग्धम्** । सुवर्णशतमनेन गृहीतमित्युक्ते सत्यं गृहीतं सुवर्णशतं माषशतं वेति । **प्रकृतादन्यत्** । यथा सुवर्णशताभियोगे पणशतं धारयामीति । **अत्यल्पं** सुवर्णशताभियोगे पञ्च धारयामीति । **अतिभूरि** सुवर्णशताभियोगे द्विशतं धारयामीति । **पक्षैकदेशव्यापि** हिरण्यवस्त्राद्यभियोगे हिरण्यं गृहीतं नान्यदिति । **व्यस्तपदं** । ऋणादानाभियोगे पदान्तरेणोत्तरम् । यथा सुवर्णशताभियोगे अनेनाहं ताडित इति । **अव्यापि** देशस्थानादिविशेषणाव्यापि । यथा मध्यदेशे वाराणस्यां पूर्वस्यां दिशि क्षेत्रमनेनापहृतमिति पूर्वपक्षे लिखिते क्षेत्रमपहृतमिति । **निगूढार्थं** यथा सुवर्णशताभियोगे किमहमेवास्मै धारयामीत्यत्र ध्वनिना प्राड्विवाकः सभ्यो वा अर्थी वा अन्यस्मै धारयतीति सूचयतीति निगूढार्थम् । **आकुलं** पूर्वापरविरुद्धम् । यथा सुवर्णशताभियोगे कृते सत्यं गृहीतं न धारयामीति । **व्याख्यागम्यं** दुःश्लिष्टविभक्तिसमासाध्याहाराभिधानेन व्याख्यागम्यम् । अदेशभाषाभिधानेन वा । यथा सुवर्णशतविषये पितृऋणाभियोगेगृहीतशतवचनात् सुवर्णानां पितुर्न जानामीति । अत्र गृहीतशतस्य पितुर्वचनात् सुवर्णानां शतं गृहीतमिति न जानामीति । **असारं** न्यायविरुद्धम् । यथा सुवर्णशतमनेन वृद्ध्या गृहीतं वृद्धिरेव दत्ता न मूलमित्यभियोगेन सत्यं वृद्धिर्दत्ता न मूलं गृहीतमिति ।

१ अश्लिष्ट इति पाठान्तरः । २ पञ्चाशतमिति पाठान्तरम् ।

उत्तरमित्येकवचननिर्देशादु**त्तराणां संकरो** निरस्तः । यथाह **कात्यायनः**। पक्षैकदेशे यत्सत्यमेकदेशे च कारणम् । मिथ्या चैवैकदेशे च संकरात्तदनुत्तरमिति । अनुत्तरत्वे च कारणं तेनैवोक्तम्, ' न चैकस्मिन्विवादे तु क्रिया स्याद्वादिनोर्द्वयोः । न चार्थसिद्धिरुभयोर्न चैकत्र क्रियाद्वयमिति' । **मिथ्याकारणोत्तरयोः संकरे** अर्थिप्रत्यर्थिनोर्द्वयोरपि क्रिया ५ प्राप्नोति । मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनीति स्मरणात् । तदुभयमेकस्मिन्व्यवहारे विरुद्धम् । यथा सुवर्णं रूपकशतं चानेन गृहीतमित्यभियोगे सुवर्णं न गृहीतं रूपकशतं गृहीतं प्रतिदत्तं चेति। **कारणप्राङ्न्यायसंकरे** तु प्रत्यर्थिन एव क्रियाद्वयम् । प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियामिति । यथा सुवर्णं गृहीतं प्रतिदत्तं रूपके व्यवहारमार्गेण पराजित इति । अत्र प्राङ्न्याये जयपत्रेण वा प्राङ्न्यायदर्शिभिर्वा भावयितव्यम् । कारणोक्तौ तु साक्षिले- १० ख्यादिभिर्भावयितव्यमिति विरोधः । एवमुत्तर**त्रयसंकरेऽपि** द्रष्टव्यम् । यथाऽनेन सुवर्णं रूपकशतं वस्त्राणि च गृहीतानीत्यभियोगे सत्यं सुवर्णं गृहीतं प्रतिदत्तं, रूपकशतं न गृहीतं, वस्त्रविषये तु पूर्वन्यायेन पराजित इति । एवं **चतुःसंकरेऽपि** । एतेषां चानुत्तरत्वं यौगपद्येन तस्यांशस्य तेन तेन विना सिद्धेः क्रमेणोत्तरत्वमेव । क्रमश्चार्थिनः प्रत्यर्थिनः सभ्यानां चेच्छया भवति । यत्र पुनरुभयोः संकरः तत्र यस्य प्रभूतार्थविषयत्वं तत्क्रियोपादानेन पूर्वं व्यवहारः १५ प्रवर्तनीयः । पश्चादल्पविषयोत्तरोपादानेन च व्यवहारो द्रष्टव्यः । यत्र संप्रतिपत्तेः उत्तरान्तरस्य च संकरस्तत्रोत्तरान्तरोपादानेन व्यवहारो द्रष्टव्यः । संप्रतिपत्तौ क्रियाभावात् । यथा **हारीतेन** । ' मिथ्योत्तरं कारणं च स्यातामेकत्र चेदुभे । सत्यं चापि सहान्येन तत्र ग्राह्यं किमुत्तरमि ' त्युक्त्वोक्तम् । 'यत्प्रभूतार्थविषयं यत्र वा स्यात्क्रियाफलम् । उत्तरं तत्र तज्ज्ञेयमसंकीर्णमतोऽ- न्यथा' । संकीर्णं भवतीति शेषः । शेषापेक्षया ऐच्छिकः क्रमो भवतीत्यर्थः । तत्र **प्रभूतार्थे,** २० यथा, अनेन सुवर्णं रूपकशतं वस्त्राणि च गृहीतानीत्यभियोगे, सत्यं सुवर्णं गृहीतं, रूपकशतं च न गृहीतं, वस्त्राणि तु गृहीतानि, प्रतिदत्तानि चेति । अत्र मिथ्योत्तरस्य प्रभूतविषयत्वात् अर्थिनः क्रियामादाय प्रथमं व्यवहारः प्रवर्तयितव्यः । पश्चाद्वस्त्रविषयो व्यवहारः । एवं मिथ्या- प्राङ्न्यायसंकरे कारणप्राङ्न्यायसंकरे च योजनीयम् । तथा तस्मिन्नेवाभियोगे, सत्यं सुवर्णं रूपकशतं च गृहीतं दास्यामि, वस्त्राणि तु न गृहीतानि, गृहीतानि प्रतिदत्तानीति वा, वस्त्र- २५ विषये पूर्वं पराजित इति चोत्तरे संप्रतिपत्तेर्भूरिविषयत्वेऽपि तत्र क्रियाभावान्मिथ्याद्युत्तरक्रिया- मादाय व्यवहारः प्रवर्तयितव्यः । यत्र तु मिथ्याकारणोत्तरयोः कृत्स्नपक्षव्यापित्वम् । यथा । गृह्यग्राहिकतया कश्चिद्वदति इयं गौर्मदीया अमुकस्मिन्काले नष्टा अद्यास्य गृहे दृष्टेति । अन्यस्तु मिथ्यैतत् एतत्प्रदर्शितकालात्पूर्वमेवास्मद्गृहे स्थिता मम गृहे जाता वेति वदति । इदं तावत्पक्षनिराकरणसमर्थत्वान्नानुत्तरं नापि मिथ्यैव । कारणोपन्यासात् । नापि कारणम् । एक- ३० देशस्याभ्युपगमाभावात् । तस्मात्सकारणं मिथ्योत्तरमिदम् । अत्र च प्रतिवादिनः क्रिया । कारणे प्रतिवादिनीति वचनात् । ननु मिथ्याक्रिया पूर्ववाद इति पूर्ववादिनः कस्मात्क्रिया न भवति । तस्य शुद्धमिथ्याविषयत्वात् । कारणे प्रतिवादिनीत्येतदपि कस्माच्छुद्धकारणविषयं न भवति । नैतत् । सर्वस्यापि कारणोत्तरस्य मिथ्यासहचरितरूपत्वात् । शुद्धकारणोत्तरस्याभावात् । प्रसि-

---

१ सुवर्णैकमिति पाठान्तरम् ।

द्वकारणोत्तरे प्रतिज्ञातार्थैकदेशस्याभ्युपगमेनैकदेशस्य मिथ्यात्वम्। यथा । सत्यं रूपकशतं गृहीतं न धारयामि प्रतिदत्तत्वादिति। प्रकृतोदाहरणे तु प्रतिज्ञातार्थैकदेशस्याभ्युपगमो नास्तीति विशेषः। एतच्च **हारीतेन** स्पष्टमुक्तम्। "मिथ्याकारणयोर्वाऽपि ग्राह्यं कारणमुत्तरमिति"। यत्र मिथ्याप्राङ्न्याययोः पक्षव्यापित्वम्। यथा। रूपकशतं धारयतीत्यभियोगे मिथ्यैतदस्मिन्नर्थे पूर्वमयं पराजित इति। अत्रापि प्रतिवादिन एव क्रिया। 'प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियामिति' वचनात्। शुद्धस्य प्राङ्न्यायस्याभावादनुत्तरत्वप्रसङ्गात् संप्रतिपत्तेरपि साध्यत्वेनोपदिष्टस्य पक्षस्य सिद्धत्वोपन्यासेन साध्यत्वनिराकरणादेवोत्तरत्वम्। यदा तु कारणप्राङ्न्यायसंकरः। यथा शतमनेन गृहीतमित्यभियुक्तः प्रतिवदति सत्यं गृहीतं प्रतिदत्तं चेत्यस्मिन्नेवार्थे प्राङ्न्यायेनायं पराजित इति। तत्र प्रतिवादिनो यथारुचीति न क्वचिद्वादिप्रतिवादिनोरेकस्मिन्व्यवहारे क्रियाद्वयप्रसङ्ग इति निर्णयः॥

एवमुत्तरे पत्रे निवेशिते साध्यसिद्धिः साधनायत्तत्वात्साधननिर्देशं कः कुर्यादित्यपेक्षित आह–

**ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्॥ ७॥**

**तत** उत्तरानन्तरम**र्थी** साध्यवान्। **सद्य** एवानन्तरमेव **लेखयेत्**। प्रतिज्ञातः साध्यः स चासावर्थश्चेति **प्रतिज्ञातार्थः**, तस्य **साधनं** साध्यतेऽनेनेति साधनं प्रमाणम्। अत्र सद्यो लेखयेदिति वदतोत्तराभिधाने कालविलम्बनमप्यङ्गीकृतमिति गम्यते। तच्चोत्तरत्र विवेचयिष्यते। अर्थी प्रतिज्ञातार्थसाधनं लेखयेदिति वदता यस्य साध्यमस्ति स प्रतिज्ञातार्थसाधनं लेखयेदित्युक्तं अतश्च प्राङ्न्यायोत्तरे प्राङ्न्यायस्यैव साध्यत्वात्प्रत्यर्थ्येवार्थी ज्ञात इति सएव साधनं लेखयेत्। कारणोत्तरेऽपि कारणस्यैव साध्यत्वात्कारणवाद्येवार्थीति सएव लेखयेत्। मिथ्योत्तरे तु पूर्ववाद्येवार्थी सएव साधनं निर्दिशेत्। ततोऽर्थी लेखयेदिति वदता अर्थ्येव लेखयेन्नान्य इत्युक्तम्। अतश्च संप्रतिपत्त्युत्तरे साध्याभावेन भाषोत्तरवादिनोर्द्वयोरप्यर्थित्वाभावात्साधननिर्देश एव नास्तीति तावतैव व्यवहारः परिसमाप्यत इति गम्यते। एतदेव **हारीतेन** स्पष्टमुक्तम्। "प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम्। मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेदिति"॥ ७॥

**तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा।**

**तस्य** साधनस्य प्रमाणस्य वक्ष्यमाणलिखितसाक्ष्यादिलक्ष्यलक्षणस्य **सिद्धौ** निर्वृत्तौ **सिद्धिं** साध्यस्य जयलक्षणां **प्राप्नोति**। **अतो**ऽस्मात्प्रकारा**दन्यथा** प्रकारान्तरे साधनासिद्धौ विपरीतं साध्यस्यासिद्धिं पराजयलक्षणा**माप्नोतीति** संबन्धः।

ततःकिमित्यत आह।

**चतुष्पाद्व्यवहारोऽयं विवादेषूपदर्शितः॥ ८॥**

व्यवहारान्नृपः पश्येदित्युक्तो व्यवहारः सोऽयमित्थं चतुष्पाच्चतुरंशकल्पनया विवादेषु ऋणादानादिषूपदर्शितो वर्णितः। तत्र 'प्रत्यर्थिनोऽग्रतो लेख्यं' इति **भाषापादः प्रथमः**। 'श्रुतार्थस्योत्तरं लेख्य' मित्यु**त्तरपादो द्वितीयः**। 'ततोऽर्थी लेखयेत्सद्य' इति **क्रियापादस्तृतीयः**। 'तत्सिद्धौ सिद्धिमाप्नोतीति' **साध्यसिद्धिपादश्चतुर्थः**। यथोक्तम्। 'परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु [1] वाक्यन्या-

एवंव्यवहाररूपमभिधायोपसंहरति।

याद्यवस्थानं व्यवहार उदाहृतः। भाषोत्तरक्रियासाध्यसिद्धिभिः क्रमवृत्तिभिः। आक्षिप्तचतुरंशस्तु चतुष्पादभिधीयत' इति। संप्रतिपत्त्युत्तरे तु साधनानिर्देशाद्भाषार्थस्यासाध्यत्वाच्च न साध्यसिद्धिलक्षणः पादोऽस्तीति द्विपात्त्वमेव। उत्तराभिधानानन्तरं सभ्यानामर्थिप्रत्यर्थिनोः कस्य क्रिया स्यादिति परामर्शलक्षणस्य प्रत्याकलितस्य **योगीश्वरेण** व्यवहारपादत्वेनानभिधानात् व्यवहर्तुः संबन्धा-
५ भावाच्च न व्यवहारपादत्वमिति स्थितम् ॥ ८ ॥ इति साधारणव्यवहारमातृकाप्रकरणम् ॥

## असाधारणव्यवहारमातृकाप्रकरणम् २

एवं सर्वव्यवहारोपयोगिनीं व्यवहारमातृकामभिधायाधुना क्वचिद्व्यवहारविशेषे कंचिद्विशेषं दर्शयितुमाह—

**अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत्।**

१० अभियुज्यत इति **अभियोगो**ऽपराधः तमभियोगम**निस्तीर्य** अपरिहृत्य **एन**मभियोक्तारं **न प्रत्यभियोजयेत्** अपराधेन न संयोजयेत्। यद्यपि प्रत्यवस्कन्दनं प्रत्यभियोगरूपं तथापि स्वापराधपरिहारात्मकत्वात् नास्य प्रतिषेधविषयत्वम्। अतः स्वाभियोगानुपमर्दनरूपस्य प्रत्यभियोगस्यायं निषेधः। इदं प्रत्यर्थिनमधिकृत्योक्तम्।

प्रत्यभियोगः।

**अभियुक्तं च नान्येन नोक्तं विप्रकृतिं नयेत् ॥ ९ ॥**

१५ **अभियुक्तं च नान्येनेति**। **अन्येना**भियुक्तमनिर्णीताभियोगमन्योऽर्थी नाभियोजयेत्। किंच। **उक्त**मावेदनसमये यदुक्तं, **तद्विप्रकृतिं** विरुद्धभावं **न नयेत्** न प्रापयेत्। एतदुक्तं भवति। यद्वस्तु येन रूपेणावेदनसमये निवेदितं तद्वस्तु तथैव भाषाकालेऽपि लेखनीयं नान्यथेति।

अथ अर्थिनं प्रत्याह।

ननु प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिनेत्यत्रैवेदमुक्तं किमर्थं पुनरुच्यते नोक्तं विप्र-
२० कृतिं नयेदिति। उच्यते। यथावेदितमर्थिनेत्यनेनावेदनसमये यद्वस्तु निवेदितं तदेव भाषासमयेऽपि तथैव लेखनीयं एकस्मिन्नपि पदे न वस्त्वन्तरमित्युक्तम्। यथाऽनेन रूपकशतं वृद्ध्या गृहीतमित्यावेदनसमये प्रतिपाद्य प्रत्यर्थिसन्निधौ भाषासमये वस्त्रशतं वृद्ध्या गृहीतमिति न वक्तव्यम्। तथा सति पदान्तरागमनेऽपि वस्त्वन्तरगमनाद्धीनवादी दण्ड्यः स्यादिति। नोक्तं विप्रकृतिं नयेदित्यनेनैकवस्तुत्वेऽपि पदान्तरगमनं निषिध्यते। यथा रूपकशतं वृद्ध्या
२५ गृहीत्वाऽयं न प्रयच्छतीत्यावेदनकालेऽभिधाय भाषाकाले रूपकशतं बलादपहृतवानिति वदतीति। तत्र वस्त्वन्तरगमनं निषिद्धमिह तु पदान्तरगमनं निषिध्यत इति न पौनरुक्त्यम्। एतदेव स्पष्टीकृतं **नारदेन**। "पूर्वपादं* परित्यज्य योऽन्यमालम्बते पुनः। पदसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः" इति। हीनवादी दण्ड्यो भवति। न प्रकृतादर्थाद्धीयते। अतः प्रत्य-

पदमवष्पादं। स्वार्थेऽण्.

र्थिनोऽर्थिनश्च प्रमादपरिहारार्थमेवायमभियोगमनिस्तीर्येत्याद्युपदेशो न प्रकृतार्थसिद्ध्यसिद्धिविषयः। अत एव वक्ष्यति। 'छलं निरस्य भूतेन व्यवहारान्नयेन्नृप' इति ( श्लो. १९ )।

एतच्चार्थव्यवहारे द्रष्टव्यम्। मन्युकृते तु व्यवहारे प्रमादाभिधाने प्रकृतादपि व्यवहाराद्धीयत एव। यथाह **नारदः**। "सर्वेष्वर्थविवादेषु वाक्छले नावसीदति। परस्त्रीभूम्यृणादाने शास्योऽप्यर्थान्न हीयते" इति। अस्यार्थः। **सर्वेष्वर्थविवादेषु**, न मन्युकृतेषु, **वाक्छले** प्रमादाभिधानेऽपि **नावसीदति** न पराजीयते। न प्रकृतादर्थाद्धीयत इत्यर्थः। अत्रोदाहरणं परस्त्रीत्यादि। परस्त्रीभूम्यृणादाने प्रमादाभिधानेन दण्ड्योऽपि यथा प्रकृतादर्थान्न हीयते एवं सर्वेष्वर्थविवादेष्विति। अर्थविवादग्रहणान्मन्युकृतविवादेषु प्रमादाभिधाने प्रकृतादप्यर्थाद्धीयत इति गम्यते। यथाऽहमनेन शिरसि पादेन ताडित इत्यावेदनसमये अभिधाय भाषाकाले हस्तेन पादेन वा ताडित इति वदन्न केवलं दण्ड्यः पराजीयते च ॥ ९ ॥

'अभियोगमनिस्तीर्य नेनं प्रत्यभियोजयेदि'त्यस्यापवादमाह—

## कुर्यात्प्रत्यभियोगं च कलहे साहसेषु च।

**कलहे** वाग्दण्डपारुष्यात्मके। **साहसेषु** विषशस्त्रादिनिमित्तप्राणव्यापादनादिषु। प्रत्यभियोगमभेव स्वाभियोगमनिस्तीर्याप्यभियोक्तारं प्रत्यभियोजयेत्। नन्वत्रापि पूर्वपक्षानुपमर्दनरूपत्वेनानुत्तरत्वात्प्रत्यभियोगस्य प्रतिज्ञान्तरत्वे युगपद्व्यवहारासंभवः समानः। सत्यम्। नात्र युगपद्व्यवहाराय प्रत्यभियोगोपदेशः, अपि तु न्यूनदण्डप्राप्तये अधिकदण्डनिवृत्तये वा। तथा हि। अनेनाहं ताडितः शप्तो वेत्यभियोगे पूर्वमहमनेन ताडितः शप्तो वेति प्रत्यभियोगे दण्डाल्पत्वम्। यथाह **नारदः**। "पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स दोषभाक्। पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुरि"ति॥ यदा पुनर्द्वयोर्युगपत्ताडनादिप्रवृत्तिस्तत्राधिकदण्डनिवृत्तिः। "पारुष्ये साहसे वापि युगपत्संप्रवृत्तयोः। विशेषश्चेन्न लभ्येत विनयः स्यात्समस्तयोरि"ति। एवं युगपद्व्यवहारप्रवृत्त्यसंभवेऽपि कलहादौ प्रत्यभियोगोऽर्थवान्, ऋणादानादिषु तु निरर्थक एव।

अर्थिप्रत्यर्थिनोर्विधिमुक्त्वा समभ्यस्य सभापतेः कर्तव्यमाह—

## उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये ॥ १० ॥

**उभयोरर्थि**प्रत्यर्थिनोः। सर्वेषु विवादेषु निर्णयस्य कार्यं **कार्यनिर्णयः**। आहिताग्न्यादिषु पाठात्कार्यशब्दस्य पूर्वनिपातः। निर्णयस्य कार्यं च साधितधनदानं दण्डदानं च तस्मिन्**समर्थः** **प्रतिभूः** प्रतिभवति तत्कार्ये तद्वद्भवतीति प्रतिभूर्ग्राह्यः। समभ्येन सभापतिना। तस्यासंभवेऽर्थिप्रत्यर्थिनो रक्षणे पुरुषा नियोक्तव्याः। तेभ्यश्च ताभ्यां प्रतिदिनं वेतनं देयम्। तथाह **कात्यायनः**। 'अथ चेत्प्रतिभूर्नास्ति कार्ययोग्यस्तु वादिनः। स रक्षितो दिनस्यान्ते दद्याद्भृत्याय वेतनमि'ति॥ १० ॥

प्रतिभूः।

**अर्थिप्रत्यर्थिनोर्निर्णयकार्ये समभ्येन सभापतिना प्रतिभूर्ग्राह्य इत्युक्तम्**। **किं तन्निर्णयकार्यं यस्मिन्प्रतिभूर्गृह्यत इत्यपेक्षित आह—**

* हस्तेन पादे इति पाठान्तरम्। १ प्राणीति पाठान्तरम्।

**निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम् ।**
**मिथ्याभियोगी द्विगुणमभियोगाद्धनं वहेत् ॥ ११ ॥**

**अर्थिना निवेदितस्याभियोगस्य** प्रत्यर्थिनाऽपह्नवे कृते यदाऽर्थिना साक्ष्यादिभि**र्भावितोऽ**ङ्गी-कारितः प्रत्यर्थी तदा **दद्याद्धनं** प्रकृतमर्थिने राज्ञे च **तत्सम**मपलापदण्डम् । अथार्थी भाव-
५ यितुं न शक्नोति तदा स एव **मिथ्याभियोगी** जात इत्यभियोगादभियुक्तधनाद्द्विगुणं धनं **दद्याद्राज्ञे** । प्राङ्न्याये प्रत्यवस्कन्दने चेदमेव योजनीयम् । तत्राप्यर्थ्यपह्नववादी प्रत्यर्थिना भावितो राज्ञे प्रकृतधनसमं दण्डं दद्यात् । अथ प्रत्यर्थी प्राङ्न्यायं कारणं वा भावयितुं न शक्नोति तदा स एव मिथ्याभियोगीति राज्ञे द्विगुणं धनं दद्यात् । अर्थिने च प्रकृतं धनं । संप्रति-पत्त्युत्तरे तु दण्डाभाव एव । एतच्च ऋणादानविषयमेव । पदान्तरेषु तत्र तत्र दण्डाभिधानाद-
१० धनव्यवहारेष्वस्यासंभवाच्च न सर्वविषयत्वम् । राज्ञाऽधमर्णिको दाप्य इत्यस्य ऋणादानविष-यत्वेऽपि तत्रैव विशेषं वक्ष्यामः । एतदेव सर्वव्यवहारविषयत्वेनापि योजनीयम् । कथं अ-भियोगस्य निह्नवेऽभियुक्तेन कृते यद्यभियोक्त्रा साक्ष्यादिभिर्भावितोऽभियुक्तस्तदा तत्समं तत्र तत्र प्रतिपदोक्तमेव । चशब्दोऽवधारणे । धनं दण्डं दद्याद्राज्ञ इत्यनुवादः । अथाभियोक्ता अभियोगं वक्तुं न शक्नोति तदा मिथ्याभियोगीति प्रतिपदोक्तं धनं दण्डं द्विगुणं दद्यादिति विधी-
१५ यते । अत्रापि प्राङ्न्याये प्रत्यवस्कन्दने च पूर्ववदेव योजनीयम् ॥ ११ ॥

'ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनमि'ति वदतोत्तरपादलेखने कालप्रतीक्षणं दर्शितं तत्रापवादमाह—

**साहसस्तेयपारुष्यगोभिशापात्यये स्त्रियाम् ।**
**विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः ॥ १२ ॥**

२० **साहसं** विषशस्त्रादिनिमित्तं प्राणिव्यापादनादि । **स्तेयं** चौर्यं । **पारुष्यं** वाग्दण्डपारुष्यं वक्ष्यमाणलक्षणम् । **गौ**र्दोग्ध्री । **अभिशापः** पातकाभियोगः । **अत्ययः** प्राणधनातिपातस्त-स्मिन् । द्वन्द्वैकवद्भावादेकवचनम् । **स्त्रियां** कुलस्त्रियां दास्यां च । कुलस्त्रियां चारित्रविवादे दास्यां स्वत्वविवादे । **विवादये**दुत्तरं दापयेत् । **सद्य एव** न कालप्रतीक्षणं कुर्यात् । **अन्यत्र** विवादान्तरेषु । **काल** उत्तरदानकालः । **इच्छया**र्थिप्रत्यर्थिसभ्यसभापतीनां । **स्मृत**
२५ उक्तः ॥ १२ ॥

**देशाद्देशान्तरं याति सृक्किणी परिलेढि च ।**
**ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥ १३ ॥**
**परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते ।**
**वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि ॥ १४ ॥**
**स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः ।**
**अभियोगे च साक्ष्ये वा दुष्टः स परिकीर्तितः ॥ १५ ॥**

**मनोवाक्कायकर्मभिर्यः स्वभावादेवं** न भयादिनिमित्ताद्**विकृतिं** विकारं याति गच्छति असाव**भियोगे साक्ष्ये वा दुष्टः परिकीर्तितः**। तां विकृतिं विभज्य दर्शयति। **देशाद्देशान्तरं याति न** क्वचिदवतिष्ठते । **सृक्किणी** ओष्ठपर्यन्तौ । **परिलेढि** जिह्वाग्रेण स्पर्शयति । घटयतीति कर्मणो विकृतिः । **अस्य ललाटं स्विद्यते** स्वेदबिन्दूङ्कितं भवति । **मुखं च वैवर्ण्यं** विवर्णत्वं पाण्डुत्वं कृष्णत्वं वा **एति** गच्छतीति ५ कायस्य विकृतिः। **परिशुष्यत्स्खलद्वाक्यः** । शुष्यत्सगद्गदं स्खलद्व्यत्यस्तं वाक्यं यस्य स तथोक्तः। **विरुद्धं** पूर्वापरविरुद्धं बहु भाषत इति वाचो विकृतिः। परोक्तां **वाचं** प्रतिवचनदानेन न प्रपूजयति । **चक्षुर्वा** प्रतिवीक्षणेन न पूजयतीति मनसो विकृतेर्लिङ्गम् । तथा **ओष्ठौ निर्भुजति** वक्रयतीत्यपि कायस्य विकृतिः।

दुष्टलक्षणमाह।

एतच्च दोषसंभावनामात्रमुच्यते। न दोषनिश्चयाय । स्वाभाविकनैमित्तिकविकारयोर्विवेकस्य १० दुर्ज्ञेयत्वात्। अथ कश्चिन्निपुणमतिर्विवेकं प्रतिपद्येत तथापि न पराजयनिमित्तं कार्यं भवति । न हि मरिष्यतो लिङ्गदर्शनेन मृतकार्यं कुर्वन्ति। एवमस्य पराजयो भविष्यतीति लिङ्गादवगतेऽपि न पराजयनिमित्तकार्यप्रसङ्गः ॥ १३ ॥ १४ ॥ १५ ॥

**संदिग्धार्थं स्वतन्त्रो यः साधयेद्यश्च निष्पतेत् ।**
**न चाहूतो वदेत्किंचिद्धीनो दण्ड्यश्च स स्मृतः ॥ १६ ॥**

किंच। **संदिग्धमर्थम**धमर्णेनानङ्गीकृतमेव । **यः स्वतंत्रः** साधननिरपेक्षः साधयत्यासेधादिना **स हीनो दण्ड्यश्च** भवति। यश्च स्वयं संप्रतिपन्नं साधनेन वा साधितं याच्यमानो **निष्पतेत्**पलायेत, यश्चाभियुक्तो राज्ञा **चाहूतः** सदसि न किंचिद्वदति, सोऽपि हीनो दण्ड्यश्च स्मृत इति संबध्यते। 'अभियोगे च साक्ष्ये वा दुष्टः स परिकीर्तित' इति प्रस्तुतत्वाद्धीनपरिज्ञानमात्रमेव मा भूदिति दण्ड्यग्रहणम्। दण्ड्यश्चापि शास्त्रोऽप्यर्थान्न हीयत इत्यर्थादहीनत्वदर्शना- २० दत्र तन्माभूदिति हीनग्रहणम् ॥ १६ ॥

अथ यत्र द्वावपि युगपद्धर्माधिकारिणं प्राप्तौ भाषावादिनौ। तद्यथा । कश्चित्प्रतिग्रहेण क्षेत्रं लब्ध्वा कञ्चित्कालमुपभुज्य कार्यवशात्सकुटुम्बो देशांतरं गतः। अन्योऽपि तदेव क्षेत्रं प्रतिग्रहेण लब्ध्वा कंचित्कालमुपभुज्य देशांतरं गतः। ततो द्वावपि युगपदागत्य मदीयमिदं क्षेत्रं मदीयमिदं क्षेत्रमिति परस्परं विवदमानौ धर्माधिकारिणं प्राप्तौ तत्र कस्य क्रियेत्याकांक्षित आह– २५

**साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः ।**
**पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः ॥ १७ ॥**

**उभयतः** उभयोरपि वादिनोः। **साक्षिषु** संभवत्सु । **साक्षिणः पूर्ववादिनः** । पूर्वस्मिन्काले मया प्रतिगृहीतमुपभुक्तं चेति यो वदत्यसौ **पूर्ववादी**। न पुनर्यः पूर्वं निवेदयति तस्य साक्षिणः प्रष्टव्याः। यदा त्वन्य एवं वदति सत्यमनेन पूर्वं प्रतिग्रहीतमुपभुक्तं च, किंतु ३० राज्ञेदमेव क्षेत्रमस्मादेव क्रयेण लब्ध्वा मह्यं दत्तमिति, अनेन वा प्रतिग्रहेण लब्ध्वा मह्यं दत्तमिति, तत्र पूर्वपक्षोऽसाध्यतयाऽधरीभूतस्तस्मिन् पूर्वपक्षेऽधरीभूते उत्तरकालं प्रतिगृहीतमुपभुक्तं

चेति वादिनः साक्षिणः प्रष्टव्या भवन्ति । इदमेव व्याख्यानं युक्ततरम् । मिथ्योत्तरे पूर्ववादिनः साक्षिणो भवन्ति । प्राङ्न्यायकारणोक्तौ पूर्वपक्षेऽधरीभूते उत्तरवादिनः साक्षिणो भवन्तीति व्याख्यानं न युक्तम् । अस्यार्थस्य ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनमित्यनेनैवोक्तत्वात्पुनरुक्तिप्रसङ्गात् । पूर्वव्याख्यानमेव स्पष्टीकृतं **नारदेन** । "मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनि । प्राङ्न्यायविधिसिद्धौ तु जयपत्रं क्रिया भवेदि"त्युक्त्वा । 'द्वयोर्विवदतोरर्थे द्वयोः सत्सु च साक्षिषु । पूर्वपक्षो भवेद्यस्य भवेयुस्तस्य साक्षिण' इति वदता एतस्य च *सर्वव्यवहारविलक्षणत्वाद्भेदेनोपन्यासः ॥ १७ ॥

**सपणश्चेद्विवादः स्यात्तत्र हीनं तु दापयेत् ।**
**दण्डं च स्वपणं चैव धनिने धनमेव च ॥ १८ ॥**

अपि च । यदि **विवादो** व्यवहारः । **सपणः** पणनं पणस्तेन सह वर्तत इति सपणः **स्यात्तदा** । **तत्र** तस्मिन् सपणे व्यवहारे । **हीनं** पराजितं पूर्वोक्तं । **दण्डं**, स्वकृतं च पणं राज्ञे अर्थिने च विवादास्पदीभूतं **धनं** दापयेद्राजा ।

यत्र पुनरेकः कोपावेशवशाद्यद्यहमत्र पराजितो भवामि तदा पणशतं दास्यामीति प्रतिजानीते, अन्यस्तु न किंचित्प्रतिजानीते, तत्रापि व्यवहारः प्रवर्तते । तस्मिंश्च प्रवृत्ते पणप्रतिज्ञावादी यदि हीयते तदा स एव सपणं दण्डं दाप्यः । अन्यस्तु पराजितो दण्डं दाप्यः न पणम् । स्वपणं चेति विशेषोपादानात् ।

यत्र त्वेकः शतम्, अन्यस्तु पञ्चाशतं प्रतिजानीते तत्रापि पराजये स्वकृतमेव पणं दाप्यौ । सपणश्चेद्विवादः स्यादिति वदता पणरहितोऽपि विवादो दर्शित इति ॥ १८ ॥

**छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः ।**
**भूतमप्यनुपन्यस्तं हीयते व्यवहारतः ॥ १९ ॥**

किंच । **छलं** प्रमादाभिहितं । **निरस्य** परित्यज्य । **भूतेन** वस्तुतत्त्वानुसारेण । **व्यवहारान्नयेदन्तं नृपः** । तस्माद्भूतमपि वस्तुतत्त्वमपि । **अनुपन्यस्तमनभिहितं** । **हीयते** हानिमुपगच्छति । **व्यवहारतो** व्यवहारेण साक्ष्यादिभिः । तस्माद्भूतानुसरणं कर्तव्यं यथाऽर्थिप्रत्यर्थिनौ सत्यमेव वदतस्तथा ससभ्येन सभापतिना यतितव्यं सामादिभिरुपायैः । तथा सति साक्ष्यादिनैरपेक्ष्येणैव निर्णयो भवति ।

अथ सर्वथाऽपि भूतानुसरणं न शक्यते कर्तुं तथा सति साक्ष्यादिभिर्निर्णयः कार्य इत्यनुकल्पः । यथोक्तम् । 'भूतच्छलानुसारित्वाद्द्विगतिः समुदाहृतः । भूतं तत्त्वार्थयुक्तं यत्प्रमादाभिहितं छलमिति' । तत्र भूतानुसारी व्यवहारो मुख्यः, छलानुसारी त्वनुकल्पः । साक्षिलेख्यादिभिर्व्यवहारनिर्णये कदाचिद्वस्त्वनुसरणं भवति । कदाचिन्न भवति । साक्ष्यादीनां व्यभिचारस्यापि संभवात् ॥ १९ ॥

* पूर्वव्यवहार अन्यः पाठः ।

'भूतमप्यनुपन्यस्तं हीयते व्यवहारात इत्यत्रोदाहरणमाह'—

**निह्नुते लिखितं नैकमेकदेशे विभावितः ।**
**दाप्यः सर्वं नृपेणार्थं न ग्राह्यस्त्वनिवेदितः ॥ २० ॥**

**नैकम**नेकं । सुवर्णं रजतवस्त्रादि । **लिखितम**भियुक्तमर्थिना प्रत्यर्थी यदि सर्वमेव **निह्नुते** अपजानीते तदाऽर्थि**नैकदेशे** हिरण्ये साक्ष्यादिभिः प्रत्यर्थी **भावितो**ऽङ्गीकारितः **सर्वं** रजताद्य**र्थं** पूर्वलिखितं दाप्योऽर्थिने **नृपेण** । **न ग्राह्यस्त्वनिवेदितः** । पूर्वं भाषाकाले अनिवेदितः पश्चादर्थिना पूर्वं मया विस्मृत इति निवेद्यमानो, **न ग्राह्यो** न दापयितव्यो नृपेण ।

एतच्च न केवलं वाचनिकमेकदेशे प्रत्यर्थिनो मिथ्यावादित्वनिश्चयादेकदेशान्तरेऽपि मिथ्यावादित्वसंभवात् । अर्थिनश्चैकदेशे सत्यवादित्वनिश्चयादेकदेशान्तरेऽपि सत्यवादित्वसंभवात् । एवं तर्कापरनामसंभावनाप्रत्ययानुगृहीतादस्मादेव **योगीश्वर**वचनात्सर्वं दापनीयं नृपेणेति निर्णयः । एवं च तर्कवाक्यानुसारेण निर्णये क्रियमाणे वस्तुनोऽन्यथात्वेऽपि व्यवहारदर्शिनां न दोषः । तथा च **गौतमो** । 'न्यायाधिगमे तर्कोऽभ्युपायस्तेनाभ्युपेत्य यथास्थानं गमयेदि'त्युक्त्वा तस्माद्राजाचार्यावनिन्द्यावित्युपसंहरति । न चैकदेशभावितोऽनुपादेयवचनः प्रत्यर्थीत्येतावदिह गम्यते । एकदेशविभावितो नृपेण सर्वं दाप्य इति वचनात् । यत्तु **कात्यायनेनोक्तम्** । 'अनेकार्थाभियोगेऽपि यावत्संसाधयेद्धनी । साक्षिभिस्तावदेवासौ लभते साधितं धनमि'ति तत्पुत्राद्यृणविषयम् । तत्र हि बहूनर्थानभियुक्तः पुत्रादिर्न जानामीति प्रतिवदन्निह्नववादी न भवतीत्येकदेशविभावितोऽपि न क्वचिदसत्यवादीति निह्नुते लिखितं नैकमिति शास्त्रं तत्र न प्रवर्तते । निह्नवाभावादपेक्षिततर्काभावाच्च । अनेकार्थाभियोगेऽपीति **कात्यायन**वचनं सामान्यविषयम् । विशेषशास्त्रस्य विषयं निह्नवोत्तरं परिहृत्याज्ञानोत्तरे प्रवर्तते ।

ननु ऋणादिषु विवादेषु स्थिरप्रायेषु निश्चितम् । ऊने वाऽप्यधिके वार्थे प्रोक्ते साध्यं न सिद्ध्यतीति वदता **कात्यायने**नानेकार्थाभियोगे साक्षिभिरेकदेशे भाविते‍ऽधिके वा भाविते साध्यं सर्वमेव न सिद्ध्यतीत्युक्तम् । तथा सत्येकदेशे भाविते अभावितैकदेशसिद्धिः कुतस्त्या* । उच्यते । लिखितसर्वार्थसाधनतयोपन्यस्तैः साक्षिभिरेकदेशाभिधानेऽधिकाभिधाने वा कृत्स्नमेव साध्यं न सिद्ध्यतीति तस्यार्थः । तत्रापि निश्चितं न सिद्ध्यतीति वचनात्पूर्ववत्संशय एवेति प्रमाणान्तरस्यावसरोऽस्त्येव । छलं निरस्येति नियमात् । साहसादौ तु सकलसाध्यसाधनतयोद्दिष्टैः साक्षिभिरेकदेशेऽपि साधिते कृत्स्नसाध्यसिद्धिर्भवत्येव । तावतैव साहसादेः सिद्धत्वात्**कात्यायन**वचनाच्च । 'साध्यार्थांशेऽपि गदिते साक्षिभिः सकलं भवेत् । स्त्रीसंगे साहसे चौर्ये यत्साध्यं परिकीर्तितमिति' ॥ २० ॥

ननु निह्नुते लिखितं नैकमितीयं स्मृतिस्तथाऽनेकार्थाभियोगेऽपीतीयमपि स्मृतिरेव; तत्रानयोः स्मृत्योः परस्परविरोधे सतीतरेतरबाधनादप्रामाण्यं कस्मान्न भवति, विषयव्यवस्था किमित्याश्रीयत, इत्यत आह—

* कुतो भवा ।

**स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः ।**

**यत्र स्मृत्योः** परस्परतो **विरोधस्तत्र** विरोधपरिहाराय विषयव्यवस्थापनादावुत्सर्गापवादादिलक्षणो **न्यायो बलवान्**समर्थः । स च न्यायः कुतः प्रत्येतव्य इत्यत आह । **व्यवहारत इति** । व्यवहाराद्वृद्धव्यवहारादन्वयव्यतिरेकलक्षणादवगम्यते । अतश्च प्रकृतोदाहरणेऽपि विषयव्यवस्थैव युक्ता । एवमन्यत्रापि विषयव्यवस्थाविकल्पादि यथासंभवं योज्यम् ।

धर्मशास्त्रयोर्विरोधे ।

**अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ॥ २१ ॥**

धर्मशास्त्रानुसारेणेत्यनेनैवौशनसाद्यर्थशास्त्रस्य निरस्तत्वात् धर्मशास्त्रान्तर्गतमेव राजनीतिलक्षणमर्थशास्त्रमिह विवक्षितम् । अर्थशास्त्रधर्मशास्त्रस्मृत्योर्विरोधे अर्थशास्त्राद्धर्मशास्त्रं बलवदिति **स्थितिर्**मर्यादा । यद्यपि समानकर्तृकतया अर्थशास्त्रधर्मशास्त्रयोः स्वरूपगतो विशेषो नास्ति तथापि प्रमेयस्य धर्मस्य प्राधान्यादर्थस्य चाप्राधान्याद्धर्मशास्त्रं बलवदित्यभिप्रायः । धर्मस्य प्राधान्यं शास्त्रादौ दर्शितं तस्माद्धर्मशास्त्रार्थशास्त्रयोर्विरोधे अर्थशास्त्रस्य बाध एव न विषयव्यवस्था नापि विकल्पः । किमत्रोदाहरणम् । ( मनुस्मृ. अ. ८ श्लो. ३५०, ) । न तावत् ‘ गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् । आततायिनमायान्तं हन्यादेवाविचारयन् । नाततायिवधे दोषो हन्तुर्भवति कश्चन । प्रच्छन्नं वा प्रकाशं वा मन्युस्तं मन्युमृच्छति ’ । तथा । ‘ आततायिनमायान्तमपि वेदान्तगं रणे । ( प्रकाशं वा ) जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेदि ’त्याद्यर्थशास्त्रम् । ‘इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् । कामतो ब्राह्मणवधे निष्कृतिर्न विधीयत’ इत्यादि धर्मशास्त्रं, तयोर्विरोधे धर्मशास्त्रं बलवदिति युक्तम् । अनयोरेकविषयत्वासंभवेन विरोधाभावान्न बलाबलचिन्ताऽवतरति । तथाहि । ‘शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोरुपध्यत’ इत्युपक्रम्यात्मनश्च परित्राणे दक्षिणानां च संगरे । स्त्रीविप्राभ्युपपत्तौ च घ्नन्धर्मेण न दण्डभागित्यात्मरक्षणे दक्षिणादीनां यज्ञोपकरणानां च रक्षणे युद्धे च स्त्रीब्राह्मणहिंसायां चाततायिनमकूटशस्त्रेण घ्नन् न दण्डभागित्युक्त्वा तस्यार्थवादार्थमिदमुच्यते गुरुं वा बालवृद्धौ वेत्यादि । गुर्वादीनत्यन्तावध्यानप्याततायिनो हन्यात्किमुतान्यानिति । वाशब्दश्रवणादपिवेदान्तगमित्यत्रापिशब्दश्रवणाच्च गुर्वादीनां वध्यत्वप्रतीतिः । नाततायिवधे दोषोऽन्यत्र गोब्राह्मणादिति सुमन्तुवचनाच्च । ‘आचार्यं च प्रवक्तारं मातरं पितरं गुरुम् । न हिंस्याद्ब्राह्मणान् गाश्च सर्वांश्चैव तपस्विन’ इति मनुवचनाच्च । आचार्यादीनामाततायिनां हिंसाप्रतिषेधेनेदं वचनं सार्थवन्नान्यथा । हिंसामात्रप्रतिषेधस्य सामान्यशास्त्रेणैव सिद्धत्वात् । नाततायिवधे दोषो हन्तुर्भवति कश्चनेत्येतदपि ब्राह्मणादिव्यतिरिक्तविषयमेव । यतः ‘ अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते ह्याततायिनः ’ । यथा ‘उद्यतासिर्विषाग्निश्च शापोद्यतकरस्तथा । आथर्वणेन हन्ता च पिशुनश्चापि राजनि । भार्यातिक्रमकारी च रन्ध्रान्वेषणतत्परः । एवमाद्यान्विजानीयात्सर्वानेवाततायिन’ इति सामान्येनाततायिनो दर्शिताः । अतश्च ब्राह्मणादयः आततायिनश्च आत्मादित्राणार्थं हिंसानभिसंधिना निवार्यमाणाः प्रमादाद्यदि विपद्येरन् तत्र लघुप्रायश्चित्तं राजदण्डाभावश्चेति निश्चयः । तस्मा-

एवं सर्वत्रप्रसंगेऽपवादमाह ।

दन्यदिहोदाहरणं वक्तव्यम् । उच्यते । हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यतः । अतो यतेत तत्प्राप्ताविस्यर्थशास्त्रं । धर्मशास्त्रानुसारेण क्रोधलोभविवर्जित इति धर्मशास्त्रं । तयोः क्वचिद्विषये विरोधो भवति । यथा । चतुष्पाद्व्यवहारे वर्तमाने एकस्य जयेऽवधार्यमाणे मित्रलब्धिर्भवति न धर्मशास्त्रमनुसृतं भवति । अन्यस्य जयेऽवधार्यमाणे धर्मशास्त्रमनुसृतं भवति मित्रलब्धिर्विपरीता । तत्रार्थशास्त्राद्धर्मशास्त्रं बलवत् । अत एव धर्मार्थसन्निपाते अर्थग्राहिण एतदेवेति प्रायश्चित्तस्य गुरुत्वं दर्शितमापस्तम्बेन । एतदेवेति द्वादशवार्षिकं प्रायश्चित्तं परामृश्यते ॥ २१ ॥

ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनमित्युक्तं, किं तत्साधनमित्यपेक्षित आह—

**प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम् ।**
**एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥ २२ ॥**

प्रमीयते परिच्छिद्यतेऽनेनेति **प्रमाणम्** । तच्च **द्विविधं मानुषं दैविकं** चेति । तत्र **मानवं त्रिविधं लिखितं भुक्तिः साक्षिणश्चेति** कीर्तितं महर्षिभिः । तत्र **लिखितं द्विविधं शासनं चीरकं** चेति । **शासन**मुक्तलक्षणम् ( आचाराध्याये ३१८ श्लो. ) **चीरकं** तु वक्ष्यमाणलक्षणम् । **भुक्ति**रुपभोगः । **साक्षिणो** वक्ष्यमाणस्वरूपप्रकाराः ( साक्षिप्रकरणे ५ ) ।

प्रमाणचतुष्टयम् ।

ननु लिखितस्य साक्षिणां च शब्दाभिव्यक्तिद्वारेण शाब्देऽन्तर्भावाद्युक्तं प्रामाण्यम् । भुक्तेस्तु कथं प्रामाण्यम् । उच्यते । भुक्तिरपि कैश्चिद्विशेषणैर्युक्ता स्वत्वहेतुभूतक्रयादिकमव्यभिचारादनुमापयन्त्यनुपपद्यमाना वा कल्पयन्तीत्यनुमानेऽर्थापत्तौ वाऽन्तर्भवतीति प्रमाणमेव । एषां लिखितादीनां त्रयाणामन्यतमस्याप्यभावे दिव्यानां वक्ष्यमाणस्वरूपभेदानामन्यतमं जातिदेशकालद्रव्याद्यपेक्षया प्रमाणमुच्यते । मानुषाभाव एव दिव्यस्य प्रामाण्यमस्मादेव वचनादवगम्यते । दिव्यस्य स्वरूपप्रामाण्ययोरागमगम्यत्वात् । अतश्च यत्र परस्परविवादेन युगपद्धर्माधिकारिणं प्राप्तयोरेको मानुषीं क्रियामपरस्तु दैवीमवलम्बते तत्र मानुष्येव ग्राह्या । तथा च **कात्यायनः** । 'यद्येको मानुषीं ब्रूयादन्यो ब्रूयात्तु दैविकीम् । मानुषीं तत्र गृह्णीयान्नतु दैवीं क्रियां नृप' इति । यत्रापि प्रधानैकदेशसाधनं मानुषं संभवति तत्रापि न दैवमाश्रयणीयम् । यथा रूपकशतमनया वृद्ध्या गृहीत्वायं न प्रयच्छतीत्यभियोगापह्नवे ग्रहणसाक्षिणः सन्ति; नो संख्यायां वृद्धिविशेषे वा; अतो दिव्येन भावयामीत्युक्ते तत्रैकदेशविभावितन्यायेनापि संख्यावृद्धिविशेषसिद्धेर्न दिव्यस्यावकाशः । उक्तं च **कात्यायनेन** । 'यद्येकदेशव्याप्ताऽपि क्रिया विद्येत मानुषी । सा ग्राह्या न तु पूर्णाऽपि दैविकी वदतां नृणामिति' । यत्तु गूढसाहसिकानां तु प्राप्तं दिव्यैः परीक्षणमिति तदपि मानुषासंभवकृतनियमार्थम् । यदपि **नारदेनोक्तम्** । 'अरण्ये निर्जने रात्रावन्तर्वेश्मनि साहसे । न्यासापह्नवने चैव दिव्या संभवति क्रियेति' । तदपि मानुषासंभव एव । तस्मान्मानुषाभाव एव दिव्येन निर्णय इत्यौत्सर्गिकम् । अस्य चापवादो दृश्यते । 'प्रक्रान्ते साहसे वादे पारुष्ये दण्डवाचिके । बलोद्भतेषु कार्येषु साक्षिणो दिव्यमेव चेति' । तथा लेख्यादीनामपि क्वचिन्नियमो दृश्यते तथा । 'पूगश्रे-

णीगणादीनां या स्थितिः परिकीर्तिता। तस्यास्तु साधनं लेख्यं न दिव्यं न च साक्षिणः'। तथा। 'द्वारमार्गक्रियाभोगजलवाहादिषु क्रिया। भुक्तिरेव तु गुर्वी स्यान्न दिव्यं न च साक्षिणः। दत्तादत्तेऽथ भृत्यानां स्वामिना निर्णये सति'। विक्रयादानसंबन्धे क्रीत्वा धनमनिच्छति। द्यूते समाह्वये चैव विवादे समुपस्थिते। साक्षिणः साधनं प्रोक्तं न दिव्यं न च ५लेख्यकमिति'॥ २२॥

उभयत्र प्रमाणसद्भावे प्रमाणगतबलाबलविवेके चासति पूर्वापरयोः कार्ययोः कस्य बलीयस्त्वमित्यत आह—

**सर्वेष्वर्थविवादेषु बलवत्युत्तरा क्रिया।**

ऋणादिषु **सर्वेष्वर्थविवादेषु उत्तरा** क्रिया। क्रियत इति क्रिया कार्यं। बलवति उत्तरकार्ये १० साधिते तद्वादी विजयी भवति। पूर्वकार्ये सिद्धेऽपि तद्वादी पराजीयते। तद्यथा, कश्चिद्ग्रहणेन धारणं साधयति, कश्चित्प्रतिदानेनाधारणं; तत्र ग्रहणप्रतिदानयोः प्रमाणसिद्धयोः प्रतिदानं बलवदिति प्रतिदानवादी जयति। तथा, पूर्वं द्विकं शतं गृहीत्वा कालान्तरे त्रिकं शतमङ्गीकृतवान; तत्रोभयत्र प्रमाणसद्भावेऽपि त्रिशतग्रहणं बलवत्। पश्चाद्भावित्वात्पूर्वाबाधेनानुत्पत्तेः। उक्तं च। पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सेत्स्यतीति।

१५ **आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा॥ २३॥**

**आध्यादिषु त्रिषु** पूर्वमेव कार्यं बलवत्। तद्यथा। एकमेव क्षेत्रमन्यस्याधिं कृत्वा किमपि गृहीत्वा पुनरन्यस्याप्याधाय किमपि गृह्णाति तत्र पूर्वस्यैव तद्भवति नोत्तरस्य एवं प्रतिग्रहे क्रये च। नन्वाहितस्य तदानीमस्वत्वात्पुनराधानमेव न संभवति। एवं दत्तस्य च क्रीतस्य दानक्रयौ नोपपद्येते तस्मादिदं वचनमनर्थकम्। उच्यते।

अस्यापवादमाह।

२० अस्वत्वेऽपि मोहात्कश्चिल्लोभाद्वा पुनराधानादिकं करोति तत्र पूर्वं बलवदिति न्यायमूलमेवेदं वचनमित्यचोद्यम्॥ २३॥

भुक्तेः कैश्चिद्विशेषणैर्युक्तायाः प्रामाण्यं दर्शयिष्यन् कस्याश्चिद्भुक्तेः कार्यान्तरमाह—

**पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी।**
**परेण भुज्यमानाया धनस्य दशवार्षिकी॥ २४॥**

२५ **परेणासंबन्धेन। भुज्यमानां** भुवं धनं वा। **पश्यतः अब्रुवतः** मदीयेयं भूः न त्वया भोक्तव्येति अप्रतिषेधयतः। तस्य **भूमेर्विंशतिवार्षिकी** अप्रतिरवं विंशतिवर्षोपभोगनिमित्ता हानिर्भवति। **धनस्य तु** हस्त्यश्वादे**र्दशवार्षिकी हानिः**।

नन्वेतदनुपपन्नम्। नह्यप्रतिषेधात्स्वत्वमपगच्छति अप्रतिषिद्धस्य दानविक्रयादिवत् स्वत्वनिवृत्तिहेतुत्वस्य लोकशास्त्रयोरप्रसिद्धत्वात्। नापि विंशतिवर्षोपभोगात् स्वत्वम्। उपभोगस्य स्वत्वेऽप्रमाणत्वात् प्रमाणस्य च प्रमेयं प्रत्यनुत्पादकत्वात्। रिक्थक्रयादिषु स्वत्वकारकहेतुषु अपाठाच्च। तथाहि। 'स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विनिर्जितम्। निर्विष्टं वैश्यशूद्रयोरित्य'ष्टावेव स्वत्वकारणहेतून् गौतमः पठति न भोगम्। न

चेदमेव वचनं विंशतिवर्षोपभोगस्य स्वत्वोत्पत्तिहेतुत्वं प्रतिपादयतीति युक्तम् । स्वत्वस्य स्वत्वहेतूनां च लोकप्रसिद्धत्वेन शास्त्रैकसमधिगम्यत्वाभावात् । एतच्च विभागप्रकरणे निपुणतरमुपपादयिष्यते । **गौतमवचनं** तु नियमार्थम् ।

अपि च । 'अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि । चौरदण्डेन तं पापं दण्डयेत्पृथिवीपति' रित्येतदनागमोपभोगस्य स्वत्वहेतुत्वे विरुध्यते । नचानागमं तु यो भुंक्ते इत्येतत्परोक्षभोगविषयम् पश्यतोऽब्रुवत इति प्रत्यक्षभोगविषयमिति युक्तं वक्तुम् । अनागमं तु यो भुंक्ते इत्यविशेषाभिधानात् । 'नोपभोगे बलं कार्यमाहर्त्रा तत्सुतेन वा । पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थित' इति **कात्यायन**वचनाच्च । समक्षभोगे च हानिकरणाभावेन हानेरसंभवात् । न चैतन्मन्तव्यम् । आधिप्रतिग्रहक्रयेषु पूर्वस्याः क्रियायाः प्राबल्यादपवादेन, भूविषये विंशतिवर्षोपभोगयुक्तायाः, धनविषये दशवर्षोपभोगयुक्तायाः, उत्तरविषयक्रियायाः प्राबल्यमनेनोच्यत इति । यतस्तेषूत्तरैव क्रिया तत्त्वतो नोपपद्यते स्वमेव ह्याधेयं देयं विक्रेयं च भवति । न चाहितस्य दत्तस्य विक्रीतस्य वा स्वत्वमस्ति । अस्वत्वस्य दाने प्रतिग्रहे च दण्डः स्मर्यते । 'अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति । उभौ तौ चौरवच्छास्यौ दाप्यौ चोत्तमसाहसमिति'; तथाध्यादीनां त्रयाणामपवादत्वेऽस्य श्लोकस्याधिसीमादीनामुत्तरश्लोकेऽपवादो नोपपद्यते । तस्माद्भूम्यादीनां हानिरनुपपन्नैव । नापि व्यवहारहानिः । यतः । 'उपेक्षां कुर्वतस्तस्य तूष्णींभूतस्य तिष्ठतः । काले विपन्ने पूर्वोक्ते व्यवहारो न सिध्यती'ति **नारदेनो**पेक्षायां लिङ्गाभावकृता व्यवहारहानिरुक्ता न तु वस्त्वभावकृत्वा । तथा **मनुना**ऽपि (अ. ८ श्लो. १४८) । 'अजडश्चेदपौगण्डो विषये चास्य भुज्यते । भग्नं तद्व्यवहारेण भोक्ता तद्धनमर्हतीति' व्यवहारतो भङ्गो दर्शितो न वस्तुतः । व्यवहारभङ्गश्चैवं । भोक्ता किल वदति 'अजडोऽयमपौगण्डो बालोऽयमस्य सन्निधौ विंशतिवर्षाण्यप्रतिरवं मया भुक्तं तत्र बहवः साक्षिणः सन्ति । यद्यस्य स्वमन्यायेन मया भुज्यते तदायं किमित्येतावन्तं कालमुदास्ते इति' तत्र चायं निरुत्तरो भवतीति । एवं निरुत्तरस्यापि वास्तवो व्यवहारो भवत्येव । 'छलं निरस्य भूतेन व्यवहारान्नयेन्नृप' ( या. व. व्य. १९ ) इति नियमात् ।

अथ मतम् । यद्यपि न वस्तुहानिर्नापि व्यवहारहानिस्तथापि पश्यतोऽप्रतिषेधतो व्यवहारहानिशङ्का भवतीति तन्निवृत्तये तूष्णीं न स्थातव्यमित्युपदिश्यत इति । तन्न न स्मार्तकालाया भुक्तेर्हानिशङ्काकारणत्वाभावात् तूष्णीं न स्थातव्यमित्येतावन्मात्राभिधित्सायां विंशतिग्रहणमविवक्षितं स्यात् । अथोच्यते । विंशतिग्रहणमूर्ध्वपत्रदोषोद्भावननिराकरणार्थम् । यथाह **कात्यायनः** । 'शक्तस्य संनिधावर्थो यस्य लेख्येन भुज्यते । विंशद्वर्षाण्यतिक्रान्तं तत्पत्रं दोषवर्जितमिति ।' तदपि न आध्यादिष्वपि विंशतेरूर्ध्वं पत्रदोषोद्भावननिराकरणस्य समत्वेनापवादासंभवात् । यथाह **कात्यायनः** । 'अथ विंशतिवर्षाणि आधिर्भुक्तः सुनिश्चितः । तेन लेख्येन तत्सिद्धिर्लेख्यदोषविवर्जिता' । तथा । 'सीमाविवादे निर्णीते सीमापत्रं विधीयते । तस्य दोषाः प्रवक्तव्या यावद्वर्षाणि विंशतिरिति' । एतेन धनस्य दशवार्षिकीत्येतदपि प्रत्युक्तम् । तस्मादस्य श्लोकस्या-

१ श्लोक २५.

न्योऽर्थो वक्तव्यः । उच्यते । भूमेर्धनस्य च फलहानिरिह विवक्षिता न वस्तुहानिर्नापि व्यवहारहानिः । तथाहि । निराक्रोशं विंशतिवर्षोपभोगादूर्ध्वं यद्यपि स्वामी न्यायतः क्षेत्रं लभते तथापि फलानुसरणं न लभते, अप्रतिषेधलक्षणात्स्वापराधात्, अस्माच्च वचनात् । परोक्षभोगे तु विंशतेरूर्ध्वमपि फलानुसरणं लभत एव । पश्यत इति वचनात् । प्रत्यक्षभोगे च साक्रोशे । ५ अब्रुवत इति वचनात् । विंशतेः प्राक् प्रत्यक्षे निराक्रोशे च लभते विंशतिग्रहणात् ।

ननु तदुत्पन्नस्यापि फलस्य स्वत्वात्तद्धानिरनुपपन्नैव । बाढं तस्य स्वरूपाविनाशेन तथैवावस्थाने यथा तदुत्पन्नपूगपनसवृक्षादीनां । यत्पुनस्तदुत्पन्नमुपभोगान्नष्टं तत्र स्वरूपनाशादेव स्वत्वनाशः । 'अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि । चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिरि'त्यनेन वचनेन निष्क्रयरूपेण गणयित्वा चौरवत्तत्समद्रव्यदानं प्राप्तं हानिर्विंशतिवार्षिकीति अपोद्यते । १० राजदण्डः पुनरस्त्येव विंशतेरूर्ध्वमपि । अनागमोपभोगादपवादाभावाच्च । तस्मात्स्वाम्युपेक्षालक्षणस्वापराधादस्माच्च वचनाद्विंशतेरूर्ध्वं फलं नष्टं न लभत इति स्थितम् । एतेन धनस्य दशवार्षिकीत्येतदपि व्याख्यातम् ॥ २४ ॥

**आधिसीमोपनिक्षेपजडबालधनैर्विना ।**
**तथोपनिधिराजस्त्रीश्रोत्रियाणां धनैरपि ॥ २५ ॥**

१५ आधिश्च सीमा च उपनिक्षेपश्च आधिसीमोपनिक्षेपाः । जडश्च बालश्च जडबालौ तयोर्धने जडबालधने; आधिसीमोपनिक्षेपाश्च जडबालधने च आधिसीमोपनिक्षेपजडबालधनानि तैर्विना । उपनिक्षेपो नाम रूपसंख्याप्रदर्शनेन रक्षणार्थं परस्य हस्ते निहितं द्रव्यम् । यथाह नारदः ( अ. २ श्लो. १ ) । 'स्वं द्रव्यं यत्र विस्रंभान्निक्षिपत्यविशङ्कितः । निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैरि'ति । उपनिधानमुपनिधिः । आध्या-

अस्यापवादमाह ।

२० दिषु पश्यतोऽब्रुवतोऽपि भूमेर्विंशतेरूर्ध्वं धनस्य दशभ्यो वर्षेभ्य ऊर्ध्वमपि हानिर्न भवति । पुरुषापराधस्य तथाविधस्याभावात् । उपेक्षाकारणस्य तत्र तत्र संभवात् । तथाहि । आधेराधित्वोपाधिक एव भोग इत्युपेक्षायामपि न पुरुषापराधः । सीम्नश्चिरकृततुषाङ्गारादिचिह्नैः सुसाध्यत्वादुपेक्षा संभवति । उपनिक्षेपोपनिध्योर्भुक्तेः प्रतिषिद्धत्वात् । प्रतिषेधातिक्रमोपभोगे च सोदयफललाभादुपेक्षोपपत्तिः । जडबालयोर्जडत्वाद्बालत्वादुपेक्षा युक्तैव । राज्ञो बहुकार्यव्याकुल- २५ त्वात् । स्त्रीणामज्ञानात् अप्रागल्भ्याच्च । श्रोत्रियस्याध्ययनाध्यापनतदर्थविचारानुष्ठानव्याकुलत्वादुपेक्षा युक्तैव । तस्मादाध्यादिषु सर्वत्रोपेक्षाकारणसंभवात् । समक्षभोगे निराक्रोशे च न कदाचिदपि फलहानिः ॥ २५ ॥

**आध्यादीनां विहर्तारं धनिने दापयेद्धनम् ।**
**दण्डं च तत्समं राज्ञे शक्त्यपेक्षमथापि वा ॥ २६ ॥**

आध्यादीनां श्रोत्रियद्रव्यपर्यन्तानां ( श्लो. २५ ) । चिरकालोपभोगबलेनापहर्तारं । विवादास्पदीभूतं धनं । स्वामिने दापयेदित्यनुवादः । दण्डं च तत्समं विवादास्पदीभूतद्रव्यसमं राज्ञे दापयेदिति विधिः । यद्यपि गृहक्षेत्रादिषु तत्समो दण्डो न संभवति तथापि मर्यादायाः

आध्यादिषु दण्डविशेषप्रतिपादनार्थमाह ।

प्रभेदे च सीमातिक्रमणे तथेत्यादिवक्ष्यमाणो दण्डो द्रष्टव्यः । अथ तत्समदण्डेनापहर्तुर्दमनं न भवति बहुधनत्वेन । तदा शक्त्यपेक्षं धनं दापयेत् । यावता तस्य दर्पोपशमो भवति तावद्दापयेत् । दण्डो दमनादित्याहुस्तेनादान्तान् दमयेदिति दण्डग्रहणस्य दमनार्थत्वात् । यस्य तु तत्सममपि द्रव्यं नास्ति सोऽपि यावता पीड्यते तावद्दाप्यः । यस्य पुनः किमपि धनं नास्ति असौ धिग्दण्डादिना ५ दमनीयः । तथा च मनुः ( अ. ८ श्लो. १२९ ) । 'धिग्दण्डं प्रथमं कुर्याद्वाग्दण्डं तदनन्तरम् । तृतीयं धनदण्डं तु वधदण्डमतः परम्' । वधदण्डोऽपि शारीरो ब्राह्मणव्यतिरिक्तानां दशधा दर्शितः । तथाह मनुः ( अ. ८ श्लो. १२४–१२५ ) । 'दश स्थानानि दण्डस्य मनुः स्वायंभुवोऽब्रवीत् । त्रिषु वर्णेषु यानि स्युरक्षतो ब्राह्मणो व्रजेत् । उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम् । चक्षुर्नासा च कर्णौ च धनं देहस्तथैव चेति' । एतेषां यन्निमित्तापराधस्तत्रैवोपस्थादौ १० निग्रहः कार्य इति द्रष्टव्यम् । कर्म वा कारयितव्यो बन्धनागारं वा प्रवेशयितव्यः । यथोक्तं कात्यायनेन । 'धनदानासहं बुध्वा स्वाधीनं कर्म कारयेत् । अशक्तौ बन्धनागारं प्रवेश्यो ब्राह्मणादृत' इति । ब्राह्मणस्य पुनर्द्रव्याभावे कर्मवियोगादीनि प्रयोज्यानि । यथाह गौतमः । 'कर्मवियोगविख्यापननिर्वासनाङ्ककरणादीन्यवृत्ताविति' । नारदेनापि ( अ. १४ श्लो. ८–९ ) 'वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने । तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसः । अविशे- १५ षेण सर्वेषामेष दण्डविधिः स्मृत' इत्युक्त्वोक्तम् । वधादृते ब्राह्मणस्य, 'न वधं ब्राह्मणोऽर्हतीति ( अ. १४ श्लो. ९–१० ) । शिरसो मुण्डनं दण्डस्तस्य निर्वासनं पुरात् । ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेन चे'ति । अङ्कने च व्यवस्था दर्शिता । 'गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः । स्तेये तु श्वपदं कार्यं ब्रह्महण्यशिराः पुमानिति' । यत्तु 'चक्षुर्निरोधो ब्राह्मणस्ये- त्यापस्तम्बवचनम् । ब्राह्मणस्य, पुरान्निर्वासनसमये, वस्त्रादिना चक्षुर्निरोधः कर्तव्य इति २० तस्यार्थो न चक्षुरुद्धरणम् । 'अक्षतो ब्राह्मणो व्रजेत्' 'न शारीरो ब्राह्मणे दण्ड' इत्यादि मनुगौतमवचनविरोधात् इत्यलं प्रसङ्गेन ॥ २६ ॥

स्वत्वाव्यभिचारित्वेन भोगस्य स्वत्वे प्रामाण्यमुक्तम् । भोगमात्रस्य स्वत्वव्यभिचारित्वात कीदृशो भोगः प्रमाणमित्यत आह—

## आगमोऽभ्यधिको भोगाद्विना पूर्वक्रमागतात् । २५

स्वत्वहेतुः प्रतिग्रहक्रयादिरागमः । स भोगदप्यधिको बलीयान् । स्वत्वबोधने भोगस्यागमसापेक्षत्वात् । यथाह नारदः ( अ. १ श्लो. ८५ ) । आगमेन विशुद्धेन भोगो याति प्रमाणताम् । अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छतीति । न च भोगमात्रात्स्वत्वागमः । परकीयस्याप्यपहारादिनोपभोगप्रसङ्गात् । अत एव 'भोगं केवलतो यस्तु कीर्तयेन्नागमं क्वचित् । भोगच्छलापदेशेन विज्ञेयः स तु तस्कर' इति स्मर्यते ( अ. १ श्लो. ८६ ) । अतश्च सागमो ५ दीर्घकालो निरन्तरो निराक्रोशः प्रत्यर्थिप्रत्यक्षश्चेति पञ्चविशेषणयुक्तो भोगः प्रमाणमित्युक्तं भवति । तथा च स्मर्यते । 'सागमो दीर्घकालश्चाविच्छेदोऽपरवोज्झितः । प्रत्यर्थिसंनिधानोऽपि परिभोगोपि पञ्चधेति' । क्वचिदागमनिरपेक्षस्यापि भोगस्य प्रामाण्यमित्याह । विना पूर्वक्रमागतादिति । पूर्वेषां पित्रादीनां त्रयाणां क्रमः पूर्वक्रमः तेनागतो यो भोगस्तस्माद्विना

**आगमोऽभ्यधिक** इति संबन्धः। स पुनरागमादभ्यधिकः आगमनिरपेक्षः प्रमाणमित्यर्थः। तत्राप्यागमज्ञाननिरपेक्षो न सत्तानिरपेक्षः। सत्ता तु तेनैवावगम्यत इति बोद्धव्यम्। विना पूर्वक्रमागतादित्येतच्च स्मार्तकालप्रदर्शनार्थम्। आगमोऽभ्यधिको भोगादिति च स्मार्तकालविषयम्। अतश्च स्मरणयोग्ये काले योग्यानुपलब्धा आगमाभावनिश्चयसंभवादागमज्ञानसापेक्षस्यैव ५भोगस्य प्रामाण्यम्। अस्मार्ते तु काले योग्यानुपलब्ध्यभावेनागमाभावनिश्चयासंभवादागमज्ञाननिरपेक्ष एव संततो भोगः प्रमाणम्। एतदेव स्पष्टीकृतं **कात्यायनेन**। 'स्मार्तकाले क्रिया भूमेः सागमा भुक्तिरिष्यते। अस्मार्तेऽनुगमाभावात्क्रमात्त्रिपुरुषागतेति'। स्मार्तश्च कालो वर्षशतपर्यन्तः। 'शतायुर्वै पुरुष' इति श्रुतेः। अनुगमाभावादिति योग्यानुपलब्ध्यभावेनागमाभावनिश्चयाभावादिति। अतश्च वर्षशताधिको भोगः संततोऽप्रतिरवः प्रत्यर्थिप्रत्यक्षश्चागमाभावे वा निश्चिते अव्यभिचारा- १०दाक्षिप्तागमः स्वत्वं गमयति। अस्मार्तेऽपि कालेऽनागमस्मृतिपरम्परायां सत्यां न भोगः प्रमाणम्। अत एवानागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि। चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिरित्युक्तम्। न चानागमं तु यो भुङ्क्ते इत्येकवचननिर्देशाद्बहून्यब्दशतान्यपीति अपिशब्दप्रयोगात्प्रथमस्य पुरुषस्य निरागमे चिरकालोपभोगेऽपि दण्डविधानमिति मन्तव्यम्। द्वितीये तृतीये वा पुरुषे निरागमस्य भोगस्य प्रामाण्यप्रसङ्गान्न चैतदिष्यते। 'आदौ तु कारणं दानं मध्ये १५भुक्तिस्तु सागमे'ति **नारदस्मरणात्**। तस्मात्सर्वत्र निरागमोपभोगे अनागमं तु यो भुङ्क्त इत्येतत् द्रष्टव्यम्। 'यदप्यन्यायेनापि यद्भुक्तं पित्रा पूर्वतरैस्त्रिभिः। न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतमिति' ( ना. अ. १ श्लो. ९१ )। तदपि पित्रा सह पूर्वतरैस्त्रिभिरिति योज्यम्। तत्रापि क्रमात् त्रिपुरुषागतमित्यस्मार्तकालोपलक्षणम्। त्रिपुरुषविवक्षायामेकवर्षाभ्यन्तरेऽपि पुरुषत्रयातिक्रमसंभवात्। द्वितीये वर्षे निरागमस्य भोगस्य प्रामाण्यप्रसंगः। तथा सति। 'स्मार्त- २०काले क्रिया भूमेः सागमा भुक्तिरिष्यत' इति स्मृतिविरोधः। अन्यायेनापि यद्भुक्तमित्येतच्चान्यायेनापि भुक्तमपहर्तुं न शक्यम्। किंपुनरन्यायानिश्चय इति व्याख्येयमपिशब्दश्रवणात्। यच्चोक्तं **हारीतेन**। 'यद्विनागममत्यन्तं भुक्तं पूर्वैस्त्रिभिर्भवेत्। न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतमिति'। तत्राप्यत्यन्तमागमं विनेति अत्यन्तमुपलभ्यमानमागमं विनेति व्याख्येयम्। न पुनरागमस्वरूपं विनेति। आगमस्वरूपाभावे भोगशतेनापि न स्वत्वं भवतीत्युक्तम्। २५क्रमात्त्रिपुरुषागतमित्येतदुक्तार्थम्। ननु स्मरणयोग्ये काले भोगस्यागमसापेक्षस्य प्रामाण्यमनुपपन्नम्। तथाहि। यद्यागमः प्रमाणान्तरेणावगतस्तदा तेनैव स्वत्वावगमान्न भोगस्य स्वत्वे आगमे वा प्रामाण्यम्। अथ प्रमाणान्तरेणागमो नावगतः कथं तद्विशिष्टो भोगः प्रमाणम्। उच्यते। प्रमाणान्तरेणावगतागमसहित एव निरन्तरो भोगः कालान्तरे स्वत्वं गमयति। अवगतोऽप्यागमो भोगरहितो न कालान्तरे स्वत्वं गमयितुमलम्। मध्ये दानविक्रयादिना स्वत्वागमसंभवा- ३०दिति सर्वमनवद्यम्॥

आगमसापेक्षो भोगः प्रमाणमित्युक्तं; आगमस्तर्हि भोगनिरपेक्ष एव प्रमाणमित्यत आह—

**आगमेऽपि बलं नैव भुक्तिः स्तोकापि यत्र नो॥ २७॥**

यस्मिन्नागमे स्वल्पाऽपि भुक्तिर्नो नास्ति तस्मिन्नागमे बलं संपूर्णं नैवास्ति। अयमभिसंधिः।

स्वस्वत्वनिवृत्तिः परस्वत्वापादनं च **दानम्** । परस्वत्वापादनं च परो यदि स्वीकरोति तदा संपद्यते नान्यथा । **स्वीकारश्च त्रिविधः । मानसो वाचिकः कायिकश्चेति** । तत्र **मानसो** ममेदमिति संकल्परूपः । **वाचिकस्तु** ममेदमित्याद्यभिव्याहारोल्लेखी सविकल्पकः प्रत्ययः । **कायिकस्तु** पुनरुपादानाभिमर्शनादिरूपोऽनेकविधः । तत्र च नियमः स्मर्यते । 'दद्यात्कृष्णाजिनं पुच्छे गां पुच्छे करिणं करे । केसरेषु तथैवाश्वं दासीं शिरसि दापयेदिति' । **आश्वलायनोऽ**प्याह । 'अनुमन्त्रयेत्प्राण्यभिमृशेदप्राणिकन्यां चेति' । तत्र हिरण्यवस्त्रादावुदकदानानन्तरमेवोपादानादिसंभवात् । त्रिविधोऽपि स्वीकारः संपद्यते । क्षेत्रादौ पुनः फलोपभोगव्यतिरेकेण कायिकस्वीकारासंभवात् स्वल्पेनाप्युपभोगेन भवितव्यम् । अन्यथा दानक्रियादेः संपूर्णता न भवतीति फलोपभोगलक्षणकायिकस्वीकारविकल आगमो दुर्बलो भवति । तत्सहितादागमाभावात् । एतच्च द्वयोः पूर्वापरकालापरिज्ञाने । पूर्वापरकालपरिज्ञाने तु विगुणोऽपि पूर्वकालागम एव बलीयानिति । अथवा । लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधमित्युक्तं, एतेषां समवाये कुत्र कस्य वा प्राबल्यमित्यत्रेदमुपतिष्ठते । 'आगमोऽभ्यधिको भोगादिना पूर्वक्रमागतात् । आगमेऽपि बलं नैव भुक्तिः स्तोकापि यत्र नो' इति । अयमर्थः । आद्ये पुरुषे साक्षिभिर्भावित आगमो भोगादप्यधिको बलवान् । पूर्वक्रमागताद्भोगाद्विना । स पुनः पूर्वक्रमागतो भोगश्चतुर्थपुरुषे लिखितेन भावितादागमाद्बलवान् । मध्यमे तु भोगरहितादागमात्स्तोकभोगसहितोऽप्यागमो बलवानिति । एतदेव **नारदेन** स्पष्टीकृतम् । 'आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा । कारणं भुक्तिरेवैका संतता या चिरन्तनीति' ॥ २७ ॥

पश्यतोऽब्रुवत इत्यत्र विंशतिवर्षोपभोगादूर्ध्वं भूमेर्धनस्यापि दशवर्षोपभोगादूर्ध्वं फलानुसरणं न भवतीत्युक्तम् । तत्र फलानुसरणवद्दण्डानुसरणमपि न भविष्यतीत्याशंक्य पुरुषव्यवस्थया प्रामाण्यव्यवस्थया च दण्डव्यवस्थां दर्शयितुमाह—

**आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत् ।**
**न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी ॥ २८ ॥**

**येन** पुरुषेण भूम्यादे**रागमः** स्वीकारः **कृतः** स पुरुषः कुतस्ते क्षेत्रादिकमित्यभियुक्तस्तमागमं प्रतिग्रहादेरिति लिखितादिभिरुद्धरेत् भावयेत् । अनेन चाद्यस्य पुरुषस्यागममनुद्धरतो दण्ड इत्युक्तं भवति । **तत्सुतो** द्वितीयोऽभियुक्तो नागममुद्धरेत् । किं तु अविच्छिन्नाप्रतिरवसमक्षभोगम् । अनेन चागममनुद्धरतो द्वितीयस्य न दण्डोऽपि तु विशिष्टं भोगमनुद्धरतो दण्ड इति प्रतिपादितम् । तत्सुतस्तृतीयोऽनागमं नापि विशिष्टं भोगमुद्धरेदपि तु क्रमागतं भोगमात्रम् । अनेनापि तृतीयस्य क्रमायातभोगानुद्धरणे दण्डो नागमानुद्धरणे न विशिष्टभोगानुद्धरणे चेत्यभिहितम् । तत्र तयोर्द्वितीयतृतीययोर्भुक्तिरेव गरीयसी । तत्रापि द्वितीये गुरुस्तृतीये गरीयसीति विवेक्तव्यम् । त्रिष्वप्यागमानुद्धरणेऽर्थहानिः समानैव । दण्डे तु विशेष इति तात्पर्यार्थः । उक्तं च **हारीतेन** । 'आगमस्तु कृतो येन स दण्ड्यस्तमनुद्धरन् । न तत्सुतस्तत्सुतो वा भोग्यहानिस्तयोरपीति' ॥ २८ ॥

१ फ—स्वत्वानवृत्तः ।

अस्मार्तकालोपभोगस्यागमज्ञाननिरपेक्षस्य प्रामाण्यमुक्तं विनापूर्वक्रमागतादित्यत्र तस्यापवाद माह—

**योऽभियुक्तः परेतः स्यात्तस्य रिक्थी तमुद्धरेत् ।**
**न तत्र कारणं भुक्तिरागमेन विना कृता ॥ २९ ॥**

यदा पुनराहर्त्रादिरभियुक्तोऽकृतव्यवहारनिर्णय एव **परेतः** परलोकं गतो भवेत्तदा **तस्य रिक्थी** पुत्रादिस्त**मागममुद्धरेत्**; यस्मा**त्तत्र** तस्मिन्व्यवहारे **भुक्तिरागम**रहिता साक्ष्यादिभिः साधितापि न प्रमाणम्। पूर्वाभियोगेन भोगस्य सापवादत्वात्। **नारदेनाप्युक्तम्**। 'नवारूढविवादस्य प्रेतस्य व्यवहारिणः। पुत्रेण सोऽर्थः संशोध्यो न तं भोगो निवर्तयेदि'ति ॥ २९ ॥

अनिर्णीतव्यवहारे व्यवहर्तरि प्रेते व्यवहारो न निवर्तत इति स्थितम्। निर्णीतेऽपि व्यवहारे १० स्थिते च व्यवहर्तरि वा व्यवहारः क्वचित्पुनः प्रवर्तते क्वचिन्न प्रवर्तत इति व्यवस्थासिद्धये व्यवहारदर्शिनां बलाबलमाह—

**नृपेणाधिकृताः पूगाः श्रेणयोऽथ कुलानि च ।**
**पूर्वं पूर्वं गुरु ज्ञेयं व्यवहारविधौ नृणाम् ॥ ३० ॥**

राजसभातो निर्णायकान्तरमाह।

**नृपेण** राज्ञा। **अधिकृताः** व्यवहारदर्शने नियुक्ताः। 'राज्ञा सभासदः कार्या' इत्या- १५ दिनोक्ताः। **पूगाः** समूहाः। भिन्नजातीनां भिन्नवृत्तीनां एकस्थाननिवासिनां यथा ग्रामनगरादयः। **श्रेणयो** नानाजातीनामेकजातीनामप्येकजातीयकर्मोपजीविनां संघाताः। यथा हेडाबुकादीनां ताम्बूलिककुविन्दचर्मकारादीनां च। **कुलानि** ज्ञातिसंबन्धिबन्धूनां समूहाः। एतेषां नृपाधिकृतादीनां चतुर्णां **पूर्वं पूर्वं** यद्यत्पूर्वं पठितं, तत्तद्**गुरु** बलवज्**ज्ञेयं** वेदितव्यम्। **नृणां** व्यवहर्तॄणां **व्यवहारविधौ** व्यवहारदर्शन- २० कार्ये। एतदुक्तं भवति। नृपाधिकृतैर्निर्णीते व्यवहारे पराजितस्य यद्यप्यसंतोषः कुदृष्टिबुद्ध्या भवति तथापि न पूगादिषु पुनर्व्यवहारो भवति। एवं पूगनिर्णीतेऽपि न श्रेण्यादिगमनम्। तथा श्रेणिनिर्णीते कुलगमनं न भवति। कुलनिर्णीते तु श्रेण्यादिगमनं भवति। श्रेणिनिर्णीते पूगादिगमनम्। पूगनिर्णीते नृपाधिकृतगमनं भवतीति। **नारदेन** पुनर्नृपाधिकृतैर्निर्णीतेऽपि व्यवहारे नृपगमनं भवतीत्युक्तम्। 'कुलानि श्रेणयश्चैव पूगोश्चाधिकृतो नृपः। प्रतिष्ठा व्यव- २५ हाराणां पूर्वेषामुत्तरोत्तरमिति' (अ. १ श्लो. ७)। तत्र च नृपगमने सोत्तरसभ्येन राज्ञा पूर्वैः सभ्यैः सह सपणव्यवहारे निर्णीयमाने यद्यसौ कुदृष्टवादी पराजितस्तदाऽसौ दण्ड्यः। अथासौ जयति तदाऽधिकृताः सभ्या दण्ड्याः ॥ ३० ॥

दुर्बलैर्व्यवहारदर्शिभिर्दृष्टो व्यवहारः परावर्तते, प्रबलदृष्टस्तु न निवर्तत इत्युक्तम्। इदानीं प्रबलदृष्टोऽपि व्यवहारः कश्चिन्निवर्तत इत्याह—

**बलोपाधिविनिर्वृत्तान् व्यवहारान्निवर्तयेत् ।**
**स्त्रीनक्तमन्तरागारबहिःशत्रुकृतांस्तथा ॥ ३१ ॥**

१ नृपणाधिकृताः प्राड्विवाकादयः। २ गणाः। ३ गुर्वेभ्यस्तूत्तरोत्तरम्

**बलेन** बलात्कारेण, **उपाधिना** भयादिना, **विनिर्वृत्तान्निष्पन्नान्व्यवहारान्निवर्तयेत्** । तथा **स्त्रीभिर्नक्तं** रात्रावस्त्रीभिरपि । **अन्तरागारे** गृहाभ्यन्तरे, **बहिर्ग्रामादिभ्यः, शत्रुभिश्च कृतान्व्यवहारान्निवर्तयेदिति संबन्धः** ॥ ३१ ॥

**मत्तोन्मत्तार्तव्यसनिबालभीतादियोजितः ।**
**असंबद्धकृतश्चैव व्यवहारो न सिध्यति ॥ ३२ ॥**

अपि च । **मत्तो** मदनीयद्रव्येण । **उन्मत्त** उन्मादेन, पञ्चविधेन वातपित्तश्लेष्मसंनिपातग्रहसंभवेनोपसृष्टः । **आर्तो** व्याध्यादिना । **व्यसन**मिष्टवियोगोऽनिष्टप्राप्तिः तज्जनितं दुःखं तद्वान् व्यसनी । **बालो** व्यवहारायोग्यः । भीतोऽरातिभ्यः । **आदि**ग्रहणात्पुरराष्ट्रादिविरुद्धः । 'पुरराष्ट्रविरुद्धश्च यश्च राज्ञा विसर्जितः । अनादेयो भवेद्वादो धर्मविद्भिरुदाहृत ' इति **मनुस्मरणात्** । एतैर्**योजितः** कृतो, **व्यवहारो न सिध्यति** । अनियुक्तासंबद्धकृतोऽपि व्यवहारो न सिध्यतीति संबन्धः । यत्तु स्मरणम् । 'गुरोः शिष्ये पितुः पुत्रे दम्पत्योः स्वामिभृत्ययोः । विरोधेऽपि मिथस्तेषां व्यवहारो न सिध्यति ' तदपि गुरुशिष्यादीनामात्यन्तिकव्यवहारप्रतिषेधपरं न भवति । तेषामपि कथंचिद्व्यवहारस्येष्टत्वात् । तथाहि । ' शिष्यशिष्टिरवधेनाशक्तौ रज्जुवेणुविदलाभ्यां तनुभ्यामन्येन घ्नन् राज्ञा शास्य ' इति **गौतमस्मरणात्** । ' नोत्तमाङ्गे कथं च नेति ' **मनुस्मरणाच्च** । यदि गुरुः कोपावेशवशान्महता दण्डेनोत्तमाङ्गे ताडयति तदा स्मृतिव्यपेतेन मार्गेणाधर्षितः शिष्यो यदि राज्ञे निवेदयति तदा भवत्येव व्यवहारपदम् ॥ तथा भूर्या पितामहोपात्तेत्यादिवचनात्पितामहोपात्ते भूम्यादौ पितापुत्रयोः स्वाम्ये समाने यदि पिता विक्रयादिना पितामहोपात्तं भूम्यादि नाशयति तदा पुत्रो यदि धर्माधिकारिणं प्रवेशयति तदा पितापुत्रयोरपि भवत्येव व्यवहारः ॥ तथा 'दुर्भिक्षे व्याधिकार्ये च व्याधौ संप्रतिरोधके । गृहीतस्त्रीधनं भर्ता नाकामो दातुमर्हतीति' स्मरणात् । दुर्भिक्षादिव्यतिरेकेण यदि स्त्रीधनं भर्ता व्ययीकृत्य विद्यमानधनोऽपि याच्यमानो न ददाति तदा दम्पत्योरपीष्यत एव व्यवहारः । तथा भक्तदासस्य स्वामिना सह व्यवहारान्वक्ष्यति । गर्भदासस्यापि । गर्भदासादीनधिकृत्य । ' यश्चैषां स्वामिनं कश्चिन्मोचयेत्प्राणसंशयात् । दासत्वात्स विमुच्येत पुत्रभागं लभेत चेति ' **नारदोक्तत्वात्** । तदमोचने पुत्रभागादाने च स्वामिना सह व्यवहारः केन वार्यते । तस्मात् दृष्टादृष्टयोः श्रेयस्करो न भवति गुर्वादिभिर्व्यवहार इति प्रथमं शिष्यादयो निवारणीयाः राज्ञा ससभ्येनेति 'गुरोः शिष्य' इत्यादिश्लोकस्य तात्पर्यार्थः । अत्यन्तनिर्बन्धे तु शिष्यादीनामप्युक्तरीत्या प्रवर्तनीयो व्यवहारः । यदपि 'एकस्य बहुभिः सार्धं स्त्रीणां प्रेष्यजनस्य च । अनादेयो भवेद्वादो धर्मविद्भिरुदाहृत' इति **नारदवचनम्** । तत्रैकस्यापि । 'गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः' । तथा 'एकं घ्नन्तं बहूनां चे'त्यादिस्मरणादेकार्थैर्बहुभिः सार्धं व्यवहार इष्यत एवेति । भिन्नार्थैर्बहुभिरेकस्य युगपद्व्यवहारो न भवतीति द्रष्टव्यम् । स्त्रीणामित्यपि गोपशौण्डिकादिस्त्रीणां स्वातन्त्र्याद्व्यवहारो भवत्येवेति । तदन्यासां कुलस्त्रीणां पतिषु जीवत्सु तत्पारतन्त्र्यादनादेयो व्यवहार इति व्याख्येयम् । प्रेष्यजनस्य चेति एतदपि प्रेष्यजनस्य स्वामिपारतन्त्र्यात् स्वार्थव्यवहारेऽपि स्वाम्यनुज्ञयैव व्यवहारो नान्यथेति योजनीयम् ॥३२॥

मत्तोन्मत्तादिभिर्योजितो व्यवहारो न सिध्यति।

परावर्त्यव्यवहारमुक्त्वा इदानीं परावर्त्यद्रव्यमाह—

**प्रनष्टाधिगतं देयं नृपेण धनिने धनम् ।**
**विभावयेन्न चेल्लिङ्गैस्तत्समं दण्डमर्हति ॥ ३३ ॥**

**प्रनष्टं** हिरण्यादि शौल्किकस्थानपालादिभि**रधिगतं** राज्ञे समर्पितं यत्तद्राज्ञा **धनिने** दात-
५ व्यम् । यदि धनी रूपसंख्यादिभिर्लिङ्गैर्भावयति । यदि न भावयति तदा तत्समं दण्ड्यः ।
असत्यवादित्वात् । अधिगमस्य स्वत्वनिमित्तत्वात् स्वत्वे प्राप्ते तत्परावृत्तिरने-
परावर्त्यद्रव्यं ।
नोक्ता । अत्र च कालावधिं वक्ष्यति । 'शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृ-
तम् । अर्वाक्संवत्सरात्स्वामी हरेत परतो नृप' इति । **मनुना** पुनः संवत्सरत्रयमवधित्वेन
निर्दिष्टम् । 'प्रणष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत् । अर्वाक् त्र्यब्दाद्धरेत्स्वामी परतो
१० नृपतिर्हरेदिति' ( अ. ८ श्लो. ३० ) । तत्र वर्षत्रयपर्यन्तमवश्यं रक्षणीयम् । तत्र यदि संवत्स-
रादर्वाक् स्वाम्यागच्छेत्तदा कृत्स्नमेव दद्यात् । यदा पुनः संवत्सरादूर्ध्वमागच्छति तदा किंचि-
द्भागं रक्षणमूल्यं गृहीत्वा शेषं स्वामिने दद्यात् । यथाह । 'आददीताथ षड्भागं प्रनष्टाधिगता-
न्नृपः । दशमं द्वादशं वाऽपि सतां धर्ममनुस्मरन्निति' ( अ. ८ श्लो. ३३ ) । तत्र प्रथमे वर्षे
कृत्स्नमेव दद्यात् । द्वितीये द्वादशं भागं, तृतीये दशमं, चतुर्थादिषु षष्ठं भागं गृहीत्वा शेषं
१५ दद्यात् । राजभागस्य चतुर्थोऽंशोऽधिगन्त्रे दातव्यः । स्वाम्यनागमे तु कृत्स्नस्य धनस्य चतुर्थमंशम-
धिगन्त्रे दत्वा शेषं राजा गृह्णीयात् । तथाह **गौतमः** । 'प्रनष्टस्वामिकमधिगम्य संवत्सरं राज्ञा
रक्ष्यमूर्ध्वमधिगन्तुश्चतुर्थोऽंशो राज्ञः शेषमिति । अत्र संवत्सरमित्येकवचनमविवक्षितम् । 'राजा
त्र्यब्दं निधापयेदिति' स्मरणात् । 'हरेत परतो नृप' इत्येतदपि स्वामिन्यनागते त्र्यब्दादूर्ध्वं
व्ययीकरणाभ्यनुज्ञा । ततः परमागते तु स्वामिनि व्ययीभूतेऽपि द्रव्ये राजा स्वांशमवतार्य
२० तत्समं दद्यात् । एतच्च हिरण्यादिविषयम् । गवादिविषये वक्ष्यति 'पणानेकशफे दद्यादि'त्यादिना ३३

रथ्याशुल्कशालादिनिपतितस्य सुवर्णादेर्नष्टस्याधिगमे विधिमुक्त्वा, अधुना भूमौ चिरनिखातस्य
सुवर्णादेर्निधिशब्दवाच्यस्याधिगमे विधिमाह—

**राजा लब्ध्वा निधिं दद्याद्द्विजेभ्योऽर्धं द्विजः पुनः ।**
**विद्वानशेषमादद्यात्स सर्वस्य प्रभुर्यतः ॥ ३४ ॥**
२५ **इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत् ।**
**अनिवेदितविज्ञातो दाप्यस्तं दण्डमेव च ॥ ३५ ॥**

उक्तलक्षणं **निधिं राजा लब्ध्वा अर्धं** ब्राह्मणेभ्यो दत्वा शेषं कोशे निवेशयेत् । **ब्राह्म-
णस्तु विद्वान्** श्रुताध्ययनसंपन्नः सदाचारो यदि निधिं लभेत तदा सर्वमेव
निधिप्राप्तौ ।
गृण्हीयात् । यस्मादसौ सर्वस्य जगतः प्रभुः । **इतरेण** तु राजविद्वद्ब्राह्मणव्य-
३० तिरिक्तेन अविद्वद्ब्राह्मणक्षत्रियादिना, **निधौ लब्धे, राजा षष्ठांशमधिगन्त्रे** दत्वा शेषं निधिं
स्वयमेवाहरेत् । यथाह **वसिष्ठः** । 'आप्रज्ञायमानं वित्तं योऽधिगच्छेद्राजा तद्धरेत् षष्ठमंशमधि-

१ राज्ञा त्र्यब्दमिति क्वचित्पाठः ।

गग्रे दद्यादिति ।' **गौतमोऽपि** । 'निध्यधिगमो राजधनं भवति । न ब्राह्मणस्याभिरूपस्य अब्रा-ह्मणोऽप्याख्याता षष्ठमंशं लभेतेत्येक' इति । अनिवेदित इति कर्तरि निष्ठा । अनिवेदितश्चासौ विज्ञातश्च राज्ञेऽप्यनिवेदितविज्ञातः यः कश्चिन्निधिं लब्ध्वा राज्ञे न निवेदितवान्, विज्ञातश्च राज्ञा स सर्वं निधिं दाप्यो दण्डं च शक्त्यपेक्षया । अथ निधेरपि स्वाम्यागत्य रूपकसंख्यादिभिः स्वत्वं भावयति तदा तस्मै राजा निधिं दत्वा षष्ठं द्वादशं वांऽशं स्वयमाहरेत् । यथाह **मनुः**५ ( अ. ८ श्लो. ३५ ) 'ममायमिति यो ब्रूयान्निधिं सत्येन मानवः । तस्याददीत षड्भागं राजा द्वादशमेव वे'ति । अंशविकल्पस्तु वर्णकालाद्यपेक्षया वेदितव्यः॥ ३४ ॥ ३५ ॥

**देयं चौरहृतं द्रव्यं राज्ञा जानपदाय तु ।**
**अददद्धि समाप्नोति किल्बिषं यस्य तस्य तत् ॥ ३६ ॥**

**चौरैर्हृतं द्रव्यं**, चौरेभ्यो विजित्य, **जानपदाय** स्वदेशनिवासिने **यस्य तत्** द्रव्यं **तस्मै**१० **राज्ञा** दातव्यम् । **हि** यस्मात् **अददत्** अप्रयच्छन् **यस्य** तदपहृतं द्रव्यं **तस्य किल्बिषमाप्नोति** । तस्य चौरस्य च । यथाह **मनुः** ( अ. ८ श्लो. ४० ) । 'दातव्यं सर्ववर्णेभ्यो राज्ञा चौरहृतं धनम् । राजा तदुपयुञ्जानश्चौरस्याप्नोति किल्बिष-मिति' । यदि चौरहस्तादादाय स्वयमुपभुंक्ते तदा चौरस्य किल्बिषमाप्नोति । अथ चौरहृतमुपे-क्षते तदा जानपदस्य किल्बिषम् । अथ चौरहृताहरणाय यतमानोऽपि न शक्नुयादाहर्तुं तदा१५ तावद्धनं स्वकोशाद्दद्यात् । यथाह **गौतमः** । 'चौरहृतमवजित्य यथास्थानं गमयेत् कोशाद्वा दद्यादिति' । **कृष्णद्वैपायनो**ऽपि । 'प्रत्याहर्तुं न शक्तस्तु धनं चौरहृतं यदि । स्वकोशात्तद्धि देयं स्यादशक्तेन महीक्षितेति' ॥ ३६ ॥ इति असाधारणव्यवहारमातृकाप्रकरणम् ।

(चौरहृतं प्रत्याह ।)

## अथ ऋणादानप्रकरणम् ३

साधारणासाधारणरूपी व्यवहारमातृकामभिधायाधुनाष्टादशानां व्यवहारपदानामाद्यमृणादानपदं२० दर्शयति । 'अशीति भागो वृद्धिः स्या'दित्यादिना 'मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धन' इत्येवमन्तेन । तच्च ऋणादानं सप्तविधम् । ईदृशमृणं देयं, ईदृशमदेयं, अनेनाधिकारिणा देयं, अस्मिन् समये देयं, अनेन प्रकारेण देय, **मित्यधमर्णे पञ्चविधम्** । **उत्तमर्णे** दानविधिरादानविधिश्चेति **द्विविधमिति** । एतच्च **नारदेन** स्पष्टीकृतम् । 'ऋणं देयमदेयं च येन यत्र यथा च यत् । दानग्रहणधर्माश्च ऋणादा-२५ नमिति स्मृतमिति' ( अ. १ श्लो. १ ) । तत्र प्रथममुत्तमर्णस्य दानविधिमाह । तत्पूर्वकत्वादि-तरेषाम् ॥

(ऋणदानं सप्तविधम् ।)

**अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके ।**
**वर्णक्रमाच्छतं द्वित्रिचतुःपञ्चकमन्यथा ॥ ३७ ॥**

**मासि मासि** प्रतिमासं । **बन्धकं** विश्वासार्थं यदाधीयते आधिरिति यावत् । **बन्धकेन सह**३०

सबन्धकेप्रयोगे अशीतिभागो वृद्धिः।

वर्तत इति सबन्धकः प्रयोगस्तस्मिन् **सबन्धके** प्रयोगे प्रयुक्तस्य द्रव्यस्य **अशीतिभागो वृद्धिर्धर्म्या** भवति। **अन्यथा** बन्धकरहिते प्रयोगे। **वर्णानां** ब्राह्मणादीनां **क्रमेण द्वित्रिचतुःपञ्चकं** शतं धर्म्यं भवति । ब्राह्मणेऽधमर्णे द्विकं शतं, क्षत्रिये त्रिकं, वैश्ये चतुष्कं, शूद्रे पञ्चकं मासिमासीत्येव । द्वौ वा ५ त्रयो वा चत्वारो वा पञ्च वा द्वित्रिचतुःपञ्चाः अस्मिन् शते वृद्धिर्दीयते इति द्वित्रिचतुःपञ्चकं शतम्। 'तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयत' इति (व्या. सू. ५-१-४७)। 'संख्याया अतिशदन्तायाः कन्' (५-१-२२)। 'तदन्तविधि'श्च (१-१-७२) अत्र द्रष्टव्यः 'वृद्धेर्वृद्धिश्चक्रवृद्धिः प्रतिमासं तु कालिका। इच्छाकृता कारिता स्यात्कायिका कायकर्मणा। इयं च वृद्धिर्मासि मासि गृह्यते इति **कालिका** । इयमेव वृद्धिर्दिवसगणनया विभज्य प्रति १० दिवसं गृह्यमाणा **कायिका** भवति। तथा च **नारदेन** (अ. १ श्लो. १०-१०४) 'कायिका कालिका चैव कारिता च तथा परा। चक्रवृद्धिश्च शास्त्रेषु तस्य वृद्धिश्चतुर्विधे'त्युक्त्वोक्तम्। 'कायाविरोधिनी शश्वत्पणपादादिकायिका। प्रतिमासं स्रवन्ती या वृद्धिः सा कालिका मता। वृद्धिः सा कारिता नामाधमर्णेन स्वयंकृता। वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृतेति' ॥ ३७ ॥

## कान्तारगास्तु दशकं सामुद्रा विंशकं शतम्।

गृहीतृविशेषेण प्रकारान्तरमाह।

१५ कान्तारमरण्यं तत्र गच्छन्तीति **कान्तारगाः**। ये वृद्ध्या धनं गृहीत्वाधिकलाभार्थमतिगहनं प्राणधनविनाशशङ्कास्थानं प्रविशन्ति ते दशकं शतं दद्युः। ये च **समुद्रगास्ते** विंशकं शतं मासि मासीत्येव। एतदुक्तं भवति । 'कान्तारगेभ्यो दशकं शतं सामुद्रेभ्यश्च विंशकं शतं उत्तमर्ण आदद्यात्। मूलनाशस्यापि शङ्कितत्वादिति' ॥

## दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु ॥ ३८ ॥

इदानीं कारितां वृद्धिमाह।

२० **सर्वे** वा ब्राह्मणादयोऽधमर्णाः अबन्धके सबन्धके वा **स्वकृतां** स्वाभ्युपगतां **वृद्धिं सर्वासु जातिषु दद्युः**। क्वचिदकृतापि वृद्धिर्भवति । यथाह **नारदः** (अ. १ श्लो. १०८)। 'न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचित्। अनाकारितमप्यूर्ध्वं वत्सरार्धाद्विवर्धत' इति। यस्तु याचितकं गृहीत्वा देशान्तरं गतस्तं प्रति **कात्यायनेनोक्तम्**। 'यो याचितकमादाय तमदत्वा दिशं व्रजेत् । ऊर्ध्वं संवत्सरात्तस्य तद्धनं २५ वृद्धिमाप्नुयादिति'। यश्च याचितकमादाय याचितोऽप्यदत्वा देशान्तरं व्रजति तं प्रति **तेनैवोक्तम्**। 'कृतोद्धारमदत्वा यो याचितस्तु दिशं व्रजेत्। ऊर्ध्वं मासत्रयात्तस्य तद्धनं वृद्धिमाप्नुयादिति'। यः पुनः स्वदेशे स्थित एव याचितो याचितकं न ददाति तं याचितकालादारभ्य वृद्धिं दापयेद्राजा। यथाह। 'स्वदेशेऽपि स्थितो यस्तु न दद्याद्याचितः क्वचित्। तं ततोऽकारितां वृद्धिमनिच्छन्तं च दापयेदिति'। अनाकारितवृद्धेरपवादो **नारदेनोक्तः**। 'पण्यमूल्यं ३० भृतिर्न्यासो दण्डो यश्च प्रकल्पितः। वृथादानाक्षिकपणा वर्धन्ते नाविवक्षिता' इति। **अविवक्षिता** अनाकारिता इति ॥ ३८ ॥

---

१ ग्रहीतृविशेषेणेति समीचीनः पाठः। २ आक्षिकोऽक्षक्रीडासंबन्धी।

अधुना द्रव्यविशेषेण वृद्धिविशेषमाह पशुस्त्रीणां संततिरेव वृद्धिः—

**सन्ततिस्तु पशुस्त्रीणां**

पशूनां स्त्रीणां **सन्ततिरेव** वृद्धिः । पशूनां स्त्रीणां पोषणासमर्थस्य तत्पुष्टिसन्ततिकामस्य प्रयोगः संभवति । ग्रहणं च क्षीरपरिचर्यार्थिनः ।

अधुना प्रयुक्तस्य द्रव्यस्य वृद्धिग्रहणमन्तरेणापि चिरकालावस्थितस्य कस्य द्रव्यस्य कियती परा वृद्धिरित्यपेक्षित आह—

**रसस्याष्टगुणा परा ।**

**वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा परा ॥ ३९ ॥**

**रसस्य** तैलघृतादेर्वृद्धिग्रहणमन्तरेण चिरकालावस्थितस्य स्वकृतया वृद्ध्या वर्धमानस्या**ष्टगुणा** वृद्धिः । **परा** नातः परं वर्धते । तथा **वस्त्रधान्यहिरण्यानां** यथासङ्ख्यं चतुर्गुणा त्रिगुणा द्विगुणा च वृद्धिः परा । **वसिष्ठेन** तु 'रसस्य त्रैगुण्यमुक्तम् । द्विगुणं हिरण्यं, त्रिगुणं धान्यं, धान्येनैव रसा व्याख्याताः पुष्पमूलफलानि च । तुला घृतं त्रितयमष्टगुणमिति' । **मनुना** तु धान्यस्य पुष्पमूलफलादीनां च पञ्चगुणत्वमुक्तम् । 'धान्ये शदे लवे वाह्ये नातिक्रामति पञ्चतामिति' ( अ. ८ श्लो. १५१ ) । **शदः** क्षेत्रफलं पुष्पमूलफलादि । **लवो** मेषोर्णाचमरीकेशादिः । **वाह्यो** बलीवर्दतुरगादिः । धान्यशदलववाह्यविषया वृद्धिः पञ्चगुणत्वं नातिक्रामतीति । तत्राधमर्णयोग्यतावशेन दुर्भिक्षादिकालवशेन च व्यवस्था द्रष्टव्या ।

रसादीनां वृद्धिः ।

**एतच्च** सकृत्प्रयोगे सकृदाहरणे च वेदितव्यम् । पुरुषान्तरसंक्रमणेन प्रयोगान्तरकरणे तस्मिन्नेव वा पुरुषे अनेकशः प्रयोगान्तरकरणे सुवर्णादिकं द्वैगुण्याद्यतिक्रम्य पूर्ववद्वर्धते । सकृत्प्रयोगेऽपि प्रतिदिनं प्रतिमासं प्रतिसंवत्सरं वा वृद्ध्याहरणेऽधमर्णे देयस्य द्वैगुण्यसंभवात्पूर्वाहृतवृद्ध्या सह द्वैगुण्यमतिक्रम्य वर्धत एव । यथाह **मनुः** । 'कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहितेति' ( अ. ८ श्लो. १५१ ) । सकृदाहृतेत्यपि पाठोऽस्ति । उपचयार्थं प्रयुक्तं द्रव्यं **कुसीदं**, तस्य वृद्धिः **कुसीदवृद्धिः** द्वैगुण्यं **नात्येति** नातिक्रामति । यदि **सकृदाहिता** सकृत्प्रयुक्ता पुरुषान्तरसंक्रमणादिना प्रयोगान्तरकरणे द्वैगुण्यमत्येति । सकृदाहृतेति पाठे तु शनैः शनैः प्रतिदिनं प्रतिमासं प्रतिसंवत्सरं वाऽधमर्णादाहृता द्वैगुण्यमत्येतीति व्याख्येयम् । तथा **गौतमे**नाप्युक्तम् । 'चिरस्थाने द्वैगुण्यं प्रयोगस्येति' । **प्रयोगस्ये**त्येकवचननिर्देशात्प्रयोगान्तरकरणे द्वैगुण्यातिक्रमोऽभिप्रेतः । **चिरस्थान** इति निर्देशात् शनैः शनैर्वृद्धिग्रहणे द्वैगुण्यातिक्रमो दर्शितः ॥ ३९ ॥

ऋणप्रयोगधर्मा उक्ताः । सांप्रतं प्रयुक्तस्य धनस्य ग्रहणधर्मा उच्यन्ते—

**प्रपन्नं साधयन्नर्थं न वाच्यो नृपतेर्भवेत् ।**

**साध्यमानो नृपं गच्छन् दण्ड्यो दाप्यश्च तद्धनम् ॥ ४० ॥**

**प्रपन्न**मभ्युपगतमधमर्णेन धनं । साक्ष्यादिभिर्भावितं वा । **साधयन्**प्रत्याहरन् धर्मादिभिरुपायैरुत्तमर्णो **नृपतेर्न** वाच्यो निवारणीयो न भवति । धर्मादयश्चोपाया **मनुना** दर्शिताः । ( अ.

८ श्लो. ४९ ) । 'धर्मेण व्यवहारेण छलेनाचरितेन च । प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन चेति' । **धर्मेण** प्रीतियुक्तेन सत्यवचनेन । **व्यवहारेण** साक्षिलेख्याद्युपायेन । **छलेन** उत्सवादिव्याजेन भूषणादिग्रहणेन । **अचरितेन** अभोजनेन । **पञ्चमे-नोपायेन बलेन** निगडबन्धनादिना । उपचयार्थं प्रयुक्तं द्रव्यमेतैरुपायैरात्मसात्कु-

प्रयुक्तद्रव्यस्य ग्रहणप्रकारः ।

५ र्यादिति ।

प्रपन्नं साधयन्नर्थं न वाच्य इति वदन् अप्रतिपन्नं साधयन् राज्ञा निवारणीय इति दर्शयति । एतदेव स्पष्टीकृतं **कात्यायनेन** । 'पीडयेद्यो धनी कश्चिदृणिकं न्यायवादिनम् । तस्मादर्थात्स हीयेत तत्समं चाप्नुयाद्दममिति' । यस्तु धर्मादिभिरुपायैः प्रपन्नमर्थं साध्यमानो याच्यमानो नृपं गच्छेद्राजानमभिगम्य साधयन्तमभियुङ्क्ते स दण्ड्यो भवति शक्त्यनुसारेण । धनिने तद्धनं

१० दाप्यश्च । राज्ञा दापने च प्रकारा दर्शिताः । 'राजा तु स्वामिने विप्रं सान्त्वेनैव प्रदापयेत् । देशाचारेण चान्यांस्तु दुष्टान् संपीड्य दापयेत् । रिक्थिनं सुहृदं वापि छलेनैव प्रदापयेदिति' । साध्यमानो नृपं गच्छेदित्येतत् स्मृत्याचारव्यपेतेनेत्यस्य प्रत्युदाहरणं च बोद्धव्यम् ॥ ४० ॥

बहुषूत्तमर्णिकेषु युगपत्प्राप्तेष्वेकोऽधमर्णिकः केन क्रमेण दाप्यो राज्ञेत्यपेक्षित आह—

**गृहीतानुक्रमाद्दाप्यो धनिनामधमर्णिकः ।**

१५ **दत्त्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरम् ॥ ४१ ॥**

समानजातीयेषु धनिषु येनैव क्रमेण धनं गृहीतं तेनैव क्रमेणाधमर्णिको राज्ञा दाप्यः । भिन्नजातीयेषु तु ब्राह्मणादिक्रमेण ॥ ४१ ॥

यदा पुनरुत्तमर्णो दुर्बलः प्रतिपन्नमर्थं धर्मादिभिरुपायैः साधयितुमशक्नुवन्राज्ञा साधितार्थो भवति तदाऽधमर्णस्य दण्डमुत्तमर्णस्य च भृतिदानमाह—

२० **राज्ञाऽधमर्णिको दाप्यः साधिताद्दशकं शतम् ।**

**पञ्चकं च शतं दाप्यः प्राप्तार्थो ह्युत्तमर्णिकः ॥ ४२ ॥**

**अधमर्णिको राज्ञा** प्रतिपन्नार्थात्**साधिताद्दशकं शतं दाप्यः** । प्रतिपन्नस्य साधितार्थस्य दशममंशं राजाऽधमर्णिकाद्दण्डरूपेण गृह्णीयादित्यर्थः । उत्तमर्णस्तु **प्राप्तार्थः पञ्चकं शतं** भृतिरूपेण **दाप्यः** । साधितार्थस्य विंशतितमं भागमुत्तमर्णाद्राजा

न्यायार्थं व्यय-दानम् ।

२५ भृत्यर्थं गृह्णीयादित्यर्थः । अप्रतिपन्नार्थसाधने तु दण्डविभागो दर्शितो 'निह्नवे भावितो दद्यादि'त्यादिना ॥ ४२ ॥

सधनमधमर्णिकं प्रत्युक्तं । अधुना निर्धनमधमर्णिकं प्रत्याह—

**हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत् ।**

**ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ॥ ४३ ॥**

३० **ब्राह्मणादिरुत्तमर्णो हीनजातिं** क्षत्रियादिजातिं **परिक्षीणं** निर्धनम्**ऋणार्थं** ऋणनिवृत्त्यर्थं **कर्म** स्वकर्म स्वजात्यनुरूपं **कारयेत्** तत्कुटुम्बाविरोधेन । **ब्राह्मणः** पुनः **परिक्षीणो** निर्धनः **शनैः**

निर्धनाधमर्णिकविषये ।

**शनैः यथोदयं** यथासंभवमृणं दाप्यः । अत्र च हीनजातिग्रहणं समजातेरप्युपलक्षणम् । अतश्च समानजातिमपि परिक्षीणं यथोचितं कर्म कारयेत् । ब्राह्मणग्रहणं च श्रेष्ठजातेरुपलक्षणं अतश्च क्षत्रियादिरपि परिक्षीणो वैश्यादेः शनैः शनैर्दाप्यो यथोदयम् । एतदेव **मनुना** स्पष्टीकृतम् । ( अ. ८ श्लो. १७७ ) 'कर्मणापि समं कुर्याद्धनिकेनाधमर्णिकः । समोऽपकृष्टजातिश्च दद्याच्छ्रेयांस्तु तच्छनैरिति' । उत्तमर्णेन ५ समं निवृत्तोत्तमर्णाधमर्णव्यपदेशमात्मानमधमर्णः कर्मणा कुर्यादित्यर्थः ॥ ४३ ॥

**दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं धनम् ।**
**मध्यस्थस्थापितं तत्स्याद्वर्धते न ततः परम् ॥ ४४ ॥**

किंच । **उपचयार्थं प्रयुक्तं धनं** अधमर्णेन **दीयमान**मुत्तमर्णो वृद्धिलोभाद्यदि **न गृह्णाति** तदाऽधमर्णेन **मध्यस्थहस्ते स्थापितं यदि** स्यात्तदा **ततः** स्थापनादूर्ध्वं **न** १० **वर्धते** । अथ स्थापितमपि याच्यमानो न ददाति ततः पूर्ववद्वर्धत एव ॥ ४४ ॥

मध्यस्थस्थापितं न वर्धते ।

इदानीं देयमृणं यदा येन च देयं तदाह—

**अविभक्तैः कुटुम्बार्थे यदृणं तु कृतं भवेत् ।**
**दद्युस्तद्रिक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि ॥ ४५ ॥**

कुटुम्बार्थं कृतमृणं देयम् ।

**अविभक्तै**र्बहुभिः **कुटुम्बार्थमे**कैकेन वा यदृणं कृतं तदृणं कुटुम्बी दद्यात् । १५ तस्मिन्प्रेते प्रोषिते वा तद्रिक्थिनः सर्वे दद्युः ॥ ४५ ॥

येन देयमित्यत्र प्रत्युदाहरणमाह—

**न योषित्पतिपुत्राभ्यां न पुत्रेण कृतं पिता ।**
**दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतं तथा ॥ ४६ ॥**

**पत्या** कृतमृणं **योषि**द्भार्या नैव दद्यात् । **पुत्रेण** कृतं योषिन्**माता न** दद्यात् । तथा पुत्रेण २० कृतं **पिता** न दद्यात् । तथा भार्याकृतं **पतिर्न** दद्यात् । **कुटुम्बार्थादृत इति सर्वविशेषणम्** । अतश्च कुटुम्बार्थं येन केनापि कृतं तत् कुटुम्बिना देयम् । तदभावे तद्दायहरैर्देयमित्युक्तमेव ॥ ४६ ॥

अदेयमृणम् ।

पुत्रपौत्रैर्ऋणं देयमिति वक्ष्यति तस्य पुरस्तादपवादमाह—

**सुराकामद्यूतकृतं दण्डशुल्कावशिष्टकम् ।**
**वृथादानं तथैवेह पुत्रो दद्यान्न पैतृकम् ॥ ४७ ॥**

**सुरापानेन** यत्कृतमृणं । **कामकृतं** स्त्रीव्यसननिर्वृत्तं । **द्यूते** पराजयनिर्वृत्तं । **दण्डशुल्कयोरवशिष्टं वृथादानं** धूर्तबन्दिमल्लादिभ्यो यत्प्रतिज्ञातम् । 'धूर्ते बन्दिनि मल्ले च कुवैद्ये कितवे शठे । चाटचारणचौरेषु दत्तं भवति निष्फलमिति' स्मरणात् । एतदृणं पित्रा कृतं

१ समोऽवकृष्टजातिस्तु ।

पुत्रादिः शाण्डकादम्या न दद्यात्। यत्र दण्डशुल्कावशिष्टकमित्यवशिष्टग्रहणात्सर्वं दातव्यमिति न मन्तव्यम्। 'दण्डं वा दण्डशेषं वा शुल्कं तच्छेषमेव वा। न दातव्यं तु पुत्रेण यच्च न व्यावहारिकमि'त्यौशनसस्मरणात्। गौतमेनाप्युक्तम्। 'मद्यशुल्कद्यूतकामदण्डा पुत्रानाध्यावहेयुरिति'। न पुत्रस्योपरि भवन्तीत्यर्थः। अनेनादेयमृणमुक्तम्॥ ४७॥

५ न पतिः स्त्रीकृतं तथेत्यस्यापवादमाह—

**गोपशौण्डिकशैलूषरजकव्याधयोषिताम्।**
**ऋणं दद्यात्पतिस्तासां यस्माद्वृत्तिस्तदाश्रया॥ ४८॥**

**गोपो** गोपालः। **शौण्डिकः** सुराकारः। **शैलूषो** नटः। **रजको** वस्त्राणां रञ्जकः। **व्याधो** मृगयुः। एतेषां योषिद्भिर्यदृणं कृतं तत्पतिभिर्देयं। **यस्मात्तेषां वृत्तिर्जीवनं** (स्त्रीकृतऋणदानं।)
१० **तदाश्रया** योषिदधीना। यस्माद्वृत्तिस्तदाश्रयेति हेतुव्यपदेशादन्येऽपि ये योषिदधीनजीवनास्तेऽपि योषित्कृतमृणं दद्युरिति गम्यते॥ ४८॥

पतिकृतं भार्या न दद्यादित्यस्यापवादमाह—

**प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत्कृतम्।**
**स्वयं कृतं वा यदृणं नान्यत्स्त्री दातुमर्हति॥ ४९॥**

१५ मुमूर्षुणा प्रवत्स्यता वा पत्या नियुक्तया ऋणदाने **यत्प्रतिपन्नं** तत्पतिकृतमृणं **देयम्**। यच्च **पत्या सह** भार्यया ऋणं **कृतं** तदपि भर्त्रभावे भार्यया अपुत्रया देयम्। (प्रतिपन्नमृणं देयम्।) यच्च **स्वयमेव कृतं ऋणं** तदपि देयम्। ननु प्रतिपन्नादि त्रयं स्त्रिया देयमिति न वक्तव्यम्। संदेहाभावात्। उच्यते। 'भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः। यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनमिति' वचनान्निर्धनत्वेन प्रतिपन्नादिष्वदानाशङ्कायामि-
२० दमुच्यते। प्रतिपन्नं स्त्रिया देयमित्यादि। न चानेन वचनेन स्त्र्यादीनां निर्धनत्वमभिधीयते। पारतन्त्र्यमात्रप्रतिपादनपरत्वात्। एतच्च विभागप्रकरणे स्पष्टीकरिष्यते। नान्यत्स्त्री दातुमर्हतीत्येतत्तर्हि न वक्तव्यम्। विधानेनैवान्यत्र प्रतिषेधसिद्धेः। उच्यते। 'प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत्कृत' मित्येतयोरपवादार्थमुच्यते। अन्यत्सुराकामादिवचनोपात्तं प्रतिपन्नमपि पत्या सह कृतमपि न देयमिति॥ ४९॥

२५ पुनरपि यदृणं दातव्यं, यत्र च काले दातव्यं तत्रितयमाह—

**पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽपि वा।**
**पुत्रपौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम्॥ ५०॥**

पिता यदि दातव्यमृणमदत्वा **प्रेतो** दूरदेशं गतोऽचिकित्सनीयव्याध्याद्यभिभूतो वा तदा तत्कृतमृणमाख्यापने पुत्रेण पौत्रेण वा पितृधनाभावेऽपि पुत्रत्वेन पौत्रत्वेन च। (पुत्रपौत्रैर्ऋणं देयम्।)
३० तत्र क्रमोऽप्ययमेव पित्रभावे पुत्रः पुत्राभावे पौत्र इति। पुत्रेण पौत्रेण वा निह्नवे कृते अर्थिना साक्ष्यादिभिर्भावितमृणं देयं पुत्रपौत्रैरित्यन्वयः।

---

१ मद्यशुल्ककामदण्डान् इति पाठः। २ फ-पुत्रानाभिभवेयुः।

अत्र पितरि प्रोषित इत्येतावदुक्तम्। कालविशेषस्तु **नारदेनोक्तो** द्रष्टव्यः। 'नार्वाक्संवत्सराद्विंशात्पितरि प्रोषिते सुतः। ऋणं दद्यात्पितृव्ये वा ज्येष्ठे भ्रातर्यथाऽपि वेति' (अ. १ श्लो. १४)। प्रेतेऽप्यप्राप्तव्यवहारकालो न दद्यात्। प्राप्तव्यवहारकालस्तु दद्यात्। स च कालस्तेनैव दर्शितः (अ. १ श्लो. ३५-३६)। 'गर्भस्थैः सदृशो ज्ञेय आऽष्टमाद्वत्सराच्छिशुः। बाल आषोडशाद्वर्षात्पौगण्डश्चेति शब्द्यते। परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते' इति। यद्यपि पितृमरणादूर्ध्वं बालोऽपि स्वतन्त्रो जातस्तथाऽपि नर्णभाग्भवति। यथाऽऽह (अ. १ श्लो. ३१)। 'अप्राप्तव्यवहारश्चेत्स्वतन्त्रोऽपि हि नर्णभाक्। स्वातन्त्र्यं हि स्मृतं ज्येष्ठे ज्यैष्ठ्यं गुणवयःकृतमिति'। तथा आसेधाह्वाननिषेधश्च दृश्यते। 'अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती। विषमस्थाश्च नासेध्या न चैतानाह्वयेन्नृप' इति। तस्मात्। 'अतः पुत्रेण जातेन स्वार्थमुत्सृज्य यत्नतः। ऋणात्पिता मोचनीयो यथा न नरकं व्रजेदिति'। पुत्रेण व्यवहारज्ञतया जातेन निष्पन्नेनेति व्याख्येयम्। श्राद्धे तु बालस्याप्यधिकारः। 'न ब्रह्माभिव्याहारयेदन्यत्र स्वधानिनयनादिति' **गौतमस्मरणात्**।

पुत्रपौत्रैरिति बहुवचननिर्देशाद्बहवः पुत्रा यदि विभक्ताः स्वांशानुरूपेण ऋणं दद्युः। अविभक्ताश्चेत्संभूयसमुत्थानेन गुणप्रधानभावेन वर्तमानानां प्रधानभूत एव वा दद्यादिति गम्यते। यथाह **नारदः**। 'अत ऊर्ध्वं पितुः पुत्रा ऋणं दद्युर्यथांशतः। अविभक्ता विभक्ता वा यस्तां वहते धुरमिति'। अत्र च पुत्रपौत्रैर्ऋणं देयमित्यविशेषेणोक्तं। तथाऽपि पुत्रेण, यथा पिता सवृद्धिकं ददाति तथैव ऋणं देयम्। पौत्रेण तु समं मूलमेव दातव्यं न वृद्धिरिति विशेषोऽवगन्तव्यः। 'ऋणमात्मीयवत्पित्र्यं देयं पुत्रैर्विभावितम्। पैतामहं समं देयमदेयं तत्सुतस्य त्विति' **बृहस्पतिवचनात्**। अत्र विभावितमित्यविशेषोपादानात्साक्षिविभावितमित्यत्र साक्षिग्रहणं प्रमाणोपलक्षणम्। समं यावद्गृहीतं तावदेव देयं न वृद्धिः। तत्सुतस्य प्रपौत्रस्यादेयमगृहीतधनस्य। एतच्चोत्तरश्लोके स्पष्टयिष्यते ॥ ५० ॥

ऋणापाकरणे ऋणी तत्पुत्रः पौत्र इति त्रयः कर्तारो दर्शितास्तेषां च समवाये क्रमोऽपि दर्शितः। इदानीं कर्त्रन्तरसमवाये च क्रममाह—

**रिक्थग्राह ऋणं दाप्यो योषिद्ग्राहस्तथैव च।**
**पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः ॥ ५१ ॥**

अन्यदीयं द्रव्यमन्यस्य क्रयादिव्यतिरेकेण यत्स्वीयं भवति **तद्रिक्थम्**। विभागद्वारेण रिक्थं गृह्णातीति **रिक्थग्राहः**। **स ऋणं दाप्यः**। एतदुक्तं भवति। यो यदीयं द्रव्यं रिक्थरूपेण गृह्णाति स तत्कृतमृणं दाप्यो न चौरादिरिति। योषितं भार्यां गृह्णातीति **योषिद्ग्राहः**। स तथैव दाप्यः। यो यदीयां योषितं गृह्णाति स तत्कृतमृणं दाप्यः। योषितोऽविभाज्यद्रव्यत्वेन रिक्थव्यपदेशानर्हत्वाद्भेदेन निर्देशः। पुत्रश्चा**नन्याश्रितद्रव्यः** ऋणं दाप्यः। अन्यमाश्रितमन्याश्रितं अन्याश्रितं मातृपितृसंबन्धिद्रव्यं यस्यासावन्याश्रितद्रव्यः न अन्याश्रितद्रव्यः **अनन्याश्रितद्रव्यः**। **पुत्रहीनस्य रिक्थिन** ऋणं दाप्य इति संबन्धः।

ऋणदानाधिकारिणांक्रममाह।

---

१ पितरौ विना।

एतेषां समवाये क्रमश्च पाठक्रम एव । रिक्थग्राह ऋणं दाप्यस्तदभावे योषिद्ग्राहस्तदभावे पुत्र इति । नन्वेतेषां समवाय एव नोपपद्यते । 'न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुरिति'। पुत्रे सत्यन्यस्य रिक्थग्रहणासंभवात् । योषिद्ग्राहोऽपि नोपपद्यते 'न द्वितीयश्च साध्वीनां क्वचिद्भर्तोपदिश्यत' इति स्मरणात् । तदृणं पुत्रो दाप्य इत्यप्ययुक्तम् । पुत्रपौत्रैर्ऋणं देयमित्युक्तत्वात् । अनन्याश्रितद्रव्य इति विशेषणमप्यनर्थकम् । पुत्रे सति द्रव्यस्यान्याश्रयणासंभवात् । संभवे च रिक्थग्राहीत्यनेनैव गतार्थत्वात् । पुत्रहीनस्य रिक्थिन इत्येतदपि न वक्तव्यम् । पुत्रे सत्यपि रिक्थग्राही ऋणं दाप्य इति स्थितम् । असति पुत्रे रिक्थग्राही सुतरां दाप्य इति सिद्धमेवेति । अत्रोच्यते । पुत्रे सत्यप्यन्यो रिक्थग्राही संभवति । क्लीबान्धबधिरादीनां पुत्रत्वेऽपि रिक्थग्राहाभावात् । तथा च 'क्लीबादीननुकम्प्य भर्तव्यास्तु निरंशका' इति वक्ष्यति (व्य.अ.श्लो.१४०)।
१० तथा 'सवर्णापुत्रोऽप्यन्यायवृत्तिर्न लभेतैकेषामिति' **गौतमस्मरणात्** । अतश्च क्लीबादिषु पुत्रेषु सत्सु अन्यायवृत्ते च सवर्णापुत्रे सति रिक्थग्राही पितृव्यतत्पुत्रादिः ।

योषिद्ग्राहो यद्यपि शास्त्रविरोधेन न संभवति तथाप्यतिक्रान्तनिषेधः पूर्वपतिकृतर्णापाकरणाधिकारी भवत्येव । योषिद्ग्राहो यश्चतसृणां स्वैरिणीनामन्तिमां गृह्णाति यश्च पुनर्भुवां तिसृणां प्रथमाम् । यथाह **नारदः** ( अ. १२ श्लो. ४५-५३ ) । ' परपूर्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम् । **पुनर्भूस्त्रिविधा** तासां **स्वैरिणी** तु **चतुर्विधा** । कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता । **पुनर्भूः प्रथमा** नाम पुनः संस्कारकर्मणा । देशधर्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते । उत्पन्नसाहसाऽन्यस्मै सा **द्वितीया** प्रकीर्तिता । उत्पन्नसाहसा उत्पन्नव्यभिचारा । असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते । सवर्णाय सपिण्डाय सा **तृतीया** प्रकीर्तिता । स्त्रीप्रसूताऽप्रसूता वा पत्यावेव तु जीवति । कामा-
२० त्समाश्रयेदन्यं **प्रथमा स्वैरिणी** तु सा । कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता । पुनः पत्युर्गृहं यायात्सा **द्वितीया** प्रकीर्तिता । मृते भर्तरि तु प्राप्तान्देवरादीनपास्य या । उपगच्छेत्परं कामात्सा **तृतीया** प्रकीर्तिता । प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा च या । तवाहमित्युपगता सा **चतुर्थी** प्रकीर्तिता । अन्तिमा स्वैरिणीनां या प्रथमा च पुनर्भुवाम् । ऋणं तयोः पतिकृतं दद्याद्यस्तामुपाश्रित ' इति । तदन्योऽपि योषिद्ग्राह ऋणापाकरणेऽधिकारी **तेनैव** दर्शितः
२५ ( अ. १ श्लो. २१ ) । ' या तु सप्रधनैव स्त्री सापत्या वाऽन्यमाश्रयेत् । सोऽस्या दद्यादृणं भर्तुरुत्सृजेद्वा तथैव ताम् ' । प्रकृष्टेन धनेन सह वर्तते इति सप्रधना । बहुधनेति यावत् । तथा 'अधनस्य ह्यपुत्रस्य मृतस्योपैति यः स्त्रियम् । ऋणं वोढुः स भजते सैव चास्य धनं स्मृतमिति' ( अ. १ श्लो. २२ ) ।

*परपूर्वादिस्त्रीस्वरूपम् ।* (margin, line १५)

पुत्रस्य पुनर्वचनं क्रमार्थम् । अनन्याश्रितद्रव्य इति बहुषु पुत्रेषु रिक्थाभावेऽप्यंशग्रहणयोग्यस्यैव
३० ऋणापाकरणेऽधिकारो नायोग्यस्यान्धादेरित्येवमर्थम् । पुत्रहीनस्य रिक्थिन इत्येतदपि पुत्रपौत्रहीनस्य प्रपौत्रादयो यदि रिक्थं गृह्णन्ति तदा ऋणं दाप्याः नान्यथेत्येवमर्थम् । पुत्रपौत्रौ च रिक्थग्रहणाभावेऽपि दाप्यावित्युक्तम् । **यथाह नारदः** ( अ. १ श्लो. ४ ) । '**क्रमादव्याहतं प्राप्तं पुत्रैर्य**-

---

१ सोंका ।

मर्णमुद्धृतम् । दद्युः पैतामहं पौत्रास्तच्चतुर्थान्निवर्तत' इति सर्वं निरवद्यम् । यद्वा । योषिद्ग्राहाभावे पुत्रो दाप्य इत्युक्तम् । पुत्राभावे योषिद्ग्राहो दाप्य इत्युच्यते । पुत्रहीनस्य रिक्थिन इति रिक्थशब्देन योषिदेवोच्यते । 'सैव चास्य धनं स्मृतमि'ति स्मरणात् । 'यो यस्य हरते दारान् स तस्य हरते धनमिति' च ।

ननु योषिद्ग्राहाभावे पुत्र ऋणं दाप्यः पुत्राभावे योषिद्ग्राह इति परस्परविरुद्धम् । उभयसद्भावे न कश्चिद्दाप्य इति । नैष दोषः । अन्तिमस्वैरिणीग्राहिणः प्रथमपुनर्भूग्राहिणः सप्रधनस्त्रीहारिणश्चाभावे पुत्रो दाप्यः, पुत्राभावे तु निर्धननिरपत्ययोषिद्ग्राही दाप्य इति । एतदेवोक्तं **नारदेन** (अ. श्लो. २३)। 'धनस्त्रीहारिपुत्राणामृणभाग्यो धनं हरेत् । पुत्रोऽसतोः स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोरि'ति । धनस्त्रीहारिपुत्राणां समवाये यो धनं हरेत्स ऋणभाक् । पुत्रोऽसतोः स्त्रीधनिनोः । स्त्री च धनं च स्त्रीधने ते विद्येते ययोस्तौ स्त्रीधनिनौ तयोः स्त्रीधनिनोरसतोः पुत्र एव ऋणभाक् भवति । धनिपुत्रयोरसतोः स्त्रीहार्येवर्णभाक् । स्त्रीहार्यभावे पुत्र ऋणभाक् पुत्राभावे स्त्रीहारीति विरोधप्रतिभासपरिहारः पूर्ववत् ।

पुत्रहीनस्य रिक्थिन इत्यस्यान्या व्याख्या । एते धनस्त्रीहारिपुत्रा ऋणं कस्य दाप्या इति क्षायां उत्तमर्णस्य दाप्यास्तदभावे तत्पुत्रादिः तत्पुत्राद्यभावे कस्य दाप्या इत्यपेक्षायामिदमुपतिष्ठते । पुत्रहीनस्य रिक्थिन इति पुत्राद्यन्वयहीनस्योत्तमर्णस्य यो रिक्थी रिक्थग्रहणयोग्यः सपिण्डादिस्तस्य रिक्थिनो दाप्याः । तथा च **नारदेन** (अ. १ श्लो. ११२-११३) । 'ब्राह्मणस्य तु यद्देयं सान्वयस्य च नास्ति चेत् । निर्वपेत्तत्सकुल्येषु तदभावे स्वबन्धुष्वित्य' भिहितम् । 'यदा तु न सकुल्याः स्युर्न च संबन्धिबान्धवाः । तदा दद्याद्द्विजेभ्यस्तु तेष्वसत्स्वप्सु निक्षिपेदिति' ॥ ५१ ॥

अधुना पुरुषविशेषे ऋणग्रहणप्रतिषेधप्रसंगादन्यदपि प्रतिषेधति ।

**भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि ।**
**प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम् ॥ ५२ ॥**

प्रतिभुवो भावः **प्रातिभाव्यं** । भ्रातॄणां दम्पत्योः पितापुत्रयोश्चा**विभक्ते द्रव्ये** द्रव्यविभागात्प्राक्प्रातिभाव्यमृणं साक्ष्यं च **न स्मृतं मन्वादिभिः** । अपि तु प्रतिषिद्धं साधारणधनत्वात् । प्रातिभाव्यसाक्षित्वयोः पक्षे द्रव्यव्ययावसानत्वात् ऋणस्य चावश्यप्रतिदेयत्वात् । एतच्च परस्परानुमतिव्यतिरेकेण । परस्परानुमत्या त्वविभक्तानामपि प्रातिभाव्यादि भवत्येव । विभागादूर्ध्वं परस्परानुमतिव्यतिरेकेणापि भवति ।

प्रातिभाव्यमृणं साक्ष्यंचाविभक्ते निषिद्धं ।

ननु दम्पत्योर्विभागात्प्राक् प्रातिभाव्यादिप्रतिषेधो न युज्यते । तयोर्विभागाभावेन विशेषणानर्थक्यात् । विभागाभावश्चा**पस्तम्बेन** दर्शितः । 'जायापत्योर्न विभागो विद्यत' इति । सत्यम् । श्रौतस्मार्ताग्निसाध्येषु कर्मसु तत्फलेषु च विभागाभावो न पुनः सर्वकर्मसु द्रव्येषु च । तथा हि । जायापत्योर्न विद्यते इत्युक्त्वा किमिति न विद्यते इत्यपेक्षायां हेतुमुक्तवान्[1] पाणिग्रहणाद्धि

१ वीक्षायां । २ प्रातिभाव्यं ।

सहत्वं कर्मसु तथा पुण्यफलेषु चेति । हि यस्मात्पाणिग्रहणादारभ्य कर्मसु सहत्वं श्रूयते। जायापती अग्निमादधीयातामिति । तस्मादाधाने सहाधिकारादाधानसिद्धाग्निसाध्येषु कर्मसु सहाधिकारः। तथा कर्म स्मार्तं विवाहाग्नावित्यादिस्मरणाद्विवाहसिद्धाग्निसाध्येष्वपि कर्मसु सहाधिकार एव। अतश्चोभयविधाग्निनिरपेक्षेषु कर्मसु पूर्तेषु जायापत्योः पृथगेवाधिकारः संपद्यते। ५ तथा पुण्यानां फलेषु स्वर्गादिषु जायापत्योः सहत्वं श्रूयते। 'दिविज्योतिरजरमारभेता'मित्यादि। येषु पुण्यकर्मसु सहाधिकारस्तेषां फलेषु सहत्वमिति बोद्धव्यम्। न पुनः पूर्तानां भर्त्रनुज्ञयाऽनुष्ठितानां फलेष्वपि।

ननु द्रव्यस्वामित्वेऽपि सहत्वमुक्तम्। द्रव्यपरिग्रहेषु च। न हि भर्तुर्विप्रवासे नैमित्तिके दाने स्तेयमुपदिशन्तीति। सत्यम्। द्रव्यस्वामित्वं पत्न्या दर्शितमनेन। न पुनर्विभागाभावः यस्मा- १० द्द्रव्यपरिग्रहेषु चेत्युक्त्वा तत्र कारणमुक्तम्। भर्तुर्विप्रवासे नैमित्तिकेऽवश्यकर्तव्ये दानेऽतिथिभोजनभिक्षाप्रदानादौ हि यस्मान्न स्तेयमुपदिशन्ति मन्वादयस्तस्माद्भार्यायामपि द्रव्यस्वामित्वमस्ति। अन्यथा स्तेयं स्यादिति। तस्माद्भर्तुरिच्छया भार्याया अपि द्रव्यविभागो भवत्येव न स्वेच्छया। यथा वक्ष्यति। 'यदि कुर्यात्समानंशान्पत्न्यः कार्याः समांशिका' इति (व्य.अ.श्लो११५) ॥५२॥

अधुना प्रातिभाव्यं निरूपयितुमाह—

१५ **दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते।**
**आद्यौ तु वितथे दाप्याावितरस्य सुता अपि ॥ ५३ ॥**

**प्रातिभाव्यं** नाम विश्वासार्थं पुरुषान्तरेण सह समयः। **तच्च** विषयभेदात्त्रिधा भिद्यते। यथा। **दर्शने** दर्शनापेक्षायां एनं दर्शयिष्यामीति। **प्रत्यये** विश्वासे मत्प्रत्ययेनास्य धनं प्रयच्छ नायं त्वां वञ्चयिष्यते। यतोऽमुकस्य पुत्रोऽयं उर्वराप्रायभूरस्य ग्रामवरो वाऽस्तीति। **दाने** यद्ययं न ददाति तदानीमहमेव दास्यामीति प्रातिभाव्यं विधीयत इति प्रत्येकं संबन्धः। **आद्यौ** तु दर्शनप्रत्ययप्रतिभुवौ। **वितथे** अन्यथाभावे अदर्शने विश्वासव्यभिचारे च। **दाप्यौ** राज्ञा प्रस्तुतं धनमुत्तमर्णस्य। **इतरस्य** दानप्रतिभुवः सुता अपि दाप्याः। **वितथ** इत्येव शाठ्येन निर्धनत्वेन वाऽधमर्णे प्रतिकुर्वति इतरस्य सुता अपीति वदता पूर्वयोः सुता न दाप्या इत्युक्तम्। सुता इति वदता न पौत्रा २५ दाप्या इति दर्शितम् ॥ ५३ ॥

प्रातिभाव्यं त्रिविधम्।

एतदेव स्पष्टीकर्तुमाह—

**दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा।**
**न तत्पुत्रा ऋणं दद्युर्दद्युर्दानाय यः स्थितः ॥ ५४ ॥**

यदा दर्शनप्रतिभूः प्रात्ययिको वा प्रतिभूर्दिवंगतः तदा तयोः पुत्राः प्रातिभाव्यायातं पैतृकमृणं न दद्युः। यस्तु दानाय स्थितः प्रतिभूर्दिवं गतस्तस्य पुत्रा दद्युर्न पौत्राः। ते च मूलमेव दद्युर्न वृद्धिम्। 'ऋणं पैतामहं पौत्राः प्रातिभाव्यागतं सुतः। समं दद्यात्तत्सुतौ तु न दाप्याविति निश्चय' इति व्यासवचनात्। प्रातिभा-

दर्शनप्रतिभुवः पुत्रैरृणं न देयम्।

व्यव्यतिरिक्तं पैतामहमृणं पौत्रः समं यावद्गृहीतं तावदेव दद्यान्न वृद्धिम् । तथा तत्सुतोऽपि प्रातिभाव्यागतं पित्र्यमृणं सममेव दद्यात् । तयोः पुत्रपौत्रयोः सुतौ पौत्रप्रपौत्रौ च प्रातिभाव्यायातं अप्रातिभाव्यं च ऋणं यथाक्रममगृहीतधनौ न दाप्याविति । यदपि स्मरणम् । 'खादको वित्तहीनः स्याल्लग्नको वित्तवान्यदि । मूलं तस्य भवेद्देयं न वृद्धिं दातुमर्हतीति' । तदपि लग्नकः प्रतिभूः खादकोऽधमर्णः । लग्नको यदि वित्तवान्मृतस्तदा तस्य पुत्रेण मूलमेव दातव्यं न ५ वृद्धिरिति व्याख्येयम् ।

यत्र दर्शनप्रतिभूः प्रत्ययप्रतिभूर्वा बन्धकं पर्याप्तं गृहीत्वा प्रतिभूर्जातस्तत्र तत्पुत्रा अपि तस्मादेव बन्धकात् प्रातिभाव्यायातमृणं दद्युरेव । यथाह **कात्यायनः** । 'गृहीत्वा बन्धकं यत्र दर्शनेऽस्य स्थितो भवेत् । विना पित्रा धनात्तस्माद्दाप्यः स्यात्तदृणं सुत' इति । दर्शनग्रहणं प्रत्ययस्योपलक्षणम् । विना पित्रा पितरि प्रेते दूरदेशं गते वेति ॥ ५४ ॥ १०

यस्मिन्ननेकप्रतिभूसंभवस्तत्र कथं दातव्यमित्याह—

**बहवः स्युर्यदि स्वांशैर्दद्युः प्रतिभुवो धनम् ।**
**एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि ॥ ५५ ॥**

यद्येकस्मिन्प्रयोगे द्वौ **बहवो** वा प्रतिभुवः **स्युस्त**दृणं संविभज्य स्वांशेन दद्युः । **एकच्छायाश्रितेषु** प्रतिभूषु एकस्याधमर्णस्य छाया सादृश्यं तामाश्रिताः एक- १५ च्छायाश्रिताः । अधमर्णो यथा कृत्स्नद्रव्यदानाय स्थितस्तथा दाने प्रतिभुवोऽपि प्रत्येकं कृत्स्नदानाय स्थिताः । एवं दर्शने प्रत्यये च तथैकच्छायाश्रितेषु प्रतिभूषु सत्सु **धनिकस्योत्त**मर्णस्य **यथारुचि** यथाकामं अतश्च धनिको वित्ताद्यपेक्षायां स्वार्थं यः प्रार्थयते स एव कृत्स्नं दद्यान्नांशतः । तेष्वेकच्छायाश्रितेषु यदि कश्चिद्देशान्तरं गतस्तत्पुत्रश्च संनिहितस्तदा धनिकेच्छया सर्वं दाप्यः । मृते तु कस्मिंश्चित्तत्सुतः स्वपित्रंशमवृद्धिकं दाप्यः । २० यथाह **कात्यायनः** । 'एकच्छायां प्रविष्टानां दाप्यो यस्तत्र दृश्यते । प्रोषिते तत्सुतः सर्वं पित्रंशं तु मृते सममिति' ॥ ५५ ॥

प्रतिभुवामनेकत्वे ऋणदानप्रकारः।

प्रातिभाव्ये ऋणदानविधिमुक्त्वा प्रतिभूदत्तस्य प्रतिक्रियाविधिमाह—

**प्रतिभूर्दापितो यत्तु प्रकाशं धनिनो धनम् ।**
**द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद्भवेत् ॥ ५६ ॥** २५

यद्द्रव्यं **प्रतिभूस्त**त्पुत्रो वा धनिकेनोपपीडितः **प्रकाशं** सर्वजनसमक्षं राज्ञा **धनिनो दापितो** न पुनर्द्वैगुण्यलोभेन स्वयमुपेत्य दत्तम् । यथाह **नारदः** । 'यं चार्थं प्रतिभूर्दद्याद्धनिकेनोपपीडितः । ऋणिकस्तं प्रतिभुवे द्विगुणं प्रतिदापयेदिति' । **ऋणिकैर**धमर्णैस्**तस्य** प्रतिभुवस्त**द्द्विगुणं** प्रतिदातव्यं स्यात् । तच्च कालविशेषमनपेक्ष्य सद्य एव द्विगुणं दातव्यम् । वचनारम्भसामर्थ्यात् । एतच्च हिरण्यविषयम् ।

ऋणिकैः प्रतिभुवः द्विगुणं दातव्यम्।

ननु इदं प्रतिभूवचनं द्वैगुण्यमात्रं प्रतिपादयति । तच्च पूर्वोक्तकालकलाक्रमाबाधेनाप्युपपद्यते । यथा जातेष्टिविधानं शुचित्वाबाधेन । अपि च सद्यः सवृद्धिकदानपक्षे पशुस्त्रीणां सद्यः

सन्तत्यभावान्मूल्यदानमेव प्राप्नोति। तदसत्। वस्त्रदानहिरण्यानां चतुस्त्रिद्विगुणा परेत्यनेनैव कालकलाक्रमेण द्वैगुण्यादिसिद्धेः द्वैगुण्यमात्रविधान इदं वचनमनर्थकं स्यात्। पशुस्त्रीणां तु कालक्रमपक्षेऽपि च सन्तत्यभावे स्वरूपदानमेव। यदा प्रतिभूरपि द्रव्यदानानन्तरं कियतापि कालेनाधमर्णेन संघटते तदा सन्ततिरेव संभवत्येव। यद्वा पूर्वसिद्धसन्तत्या सह पशुस्त्रियो दास्य-
५तीति न किंचिदेतत्। अथ प्रातिभाव्यं प्रीतिकृतमतश्च प्रतिभुवा दत्तं प्रीतिदत्तमेव। न च प्रीति-दत्तस्य याचनात्प्राग्वृद्धिरस्ति। यथाह। 'प्रीतिदत्तं तु यत्किंचिद्वर्धते न त्वयाचितम्। याच्य-मानमदत्तं चेद्वर्धते पञ्चकं शतमिति'। अतश्चास्य प्रीतिदत्तस्यायाचितस्यापि दानदिवसादारभ्य यावद्विगुणं कालक्रमेण वृद्धिरित्यनेन वचनेनोच्यत इति तदप्यसत्। अस्यार्थस्यास्माद्वचनाद-प्रतीतेर्द्विगुणं प्रतिदातव्यमित्येतावदिह प्रतीयते। तस्मात्कालक्रममनपेक्ष्यैव द्विगुणं प्रतिदातव्यं
१० वचनारम्भसामर्थ्यादिति सुष्ठूक्तम्॥ ५६॥

प्रतिभूदत्तस्य सर्वत्र द्वैगुण्ये प्राप्तेऽपवादमाह—

**सन्ततिः स्त्रीपशुष्वेव धान्यं त्रिगुणमेव च।**
**वस्त्रं चतुर्गुणं प्रोक्तं रसश्चाष्टगुणस्तथा॥ ५७॥**

हिरण्यद्वैगुण्यवत्कालानादरेणैव स्त्रीपश्वादयः प्रतिपादितवृद्ध्या दाप्याः। श्लोकस्तु व्याख्यात
५एव। यस्य द्रव्यस्य यावती वृद्धिः पराकाष्ठोक्ता तद्द्रव्यं प्रतिभूदत्तं खादकेन तया वृद्ध्या सह कालविशेषमनपेक्ष्य सद्यो दातव्यमिति तात्पर्यार्थः। यदा तु दर्शनप्रतिभूः संप्रतिपन्ने काले अधमर्णं दर्शयितुमसमर्थः तदा तद्गवेषणाय तस्य पक्षत्रयं दातव्यम्। तत्र यदि तं दर्शयति तदा मोक्तव्योऽन्यथा प्रस्तुतं धनं दाप्यः। 'नष्टस्यान्वेषणार्थं तु दाप्यं पक्षत्रयं परम्। यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत्। काले व्यतीते प्रतिभूर्यदि तं नैव दर्शयेत्। निबन्धं दाप-
१०येत्तत्तु प्रेते चैव विधिः स्मृत' इति कात्यायनवचनात्। लग्नकविशेषनिषेधश्च तेनैवोक्तः। 'न स्वामी न च वै शत्रुः स्वामिनाधिकृतस्तथा। निरुद्धो दण्डितश्चैव संदिग्धश्चैव न क्वचित्। नैव रिक्थी न मित्रं च न चैवात्यन्तवासिनः। राजकार्यनियुक्तश्च ये च प्रव्रजिता नराः। न शक्तो धनिने दातुं दण्डं राज्ञे च तत्समम्। जीवन्वाऽपि पिता यस्य तथैवेच्छाप्रवर्तकः। नावि-ज्ञातो ग्रहीतव्यः प्रतिभूः स्वक्रियां प्रतीति'। संदिग्धोऽभिशस्तः। अत्यन्तवासिनो नैष्ठिकब्र-
१५ह्मचारिणः। इति प्रतिभूविधिः।

धनप्रयोगे विश्वासहेतू द्वौ प्रतिभूराधिश्च। यथाह नारदः। 'विस्रम्भहेतू द्वावत्र प्रतिभूरा-धिरेव चेति'। तत्र प्रतिभूर्निरूपितः। इदानीमाधिर्निरूप्यते। आधिर्नाम गृहीतस्य द्रव्यस्यो-परि विश्वासार्थमधमर्णेनोत्तमर्णेऽधिक्रियते आधीयत इत्याधिः। स च द्विविधः। कृतकालोऽकृतकालश्च। पुनश्चैकैकशो द्विविधः। गोप्यो भोग्यश्च।

आधिविधिः।

२०यथाह नारदः। 'अधिक्रियत इत्याधिः स विज्ञेयो द्विलक्षणः। कृतकालेऽपनेयश्च यावद्देयो-द्यतस्तथा। स पुनर्द्विविधः प्रोक्तो गोप्यो भोग्यस्तथैव चेति'। कृते काले आधानकाल एवा-मुष्मिन्काले दीपोत्सवादौ मयाऽयमाधिर्मोक्तव्योऽन्यथा तवैवाधिर्भविष्यतीति। एवं निरूपिते काले अपनेयः आत्मसमीपं नेतव्यो मोचनीय इत्यर्थः। देयं

आधिभेदाः।

दानं देयमनतिक्रम्य यावद्देयमुद्यतो नियतः स्थापित इत्यर्थः । यावद्देयमुद्यतो यावद्देयोद्यतः गृहीतधनप्रत्यर्पणावधिरनिरूपितकाल इत्यर्थः । गोप्यो रक्षणीयः ॥ ५७ ॥

**आधिः प्रणश्येद्द्विगुणे धने यदि न मोक्ष्यते ।**
**काले कालकृतो नश्येत्फलभोग्यो न नश्यति ॥ ५८ ॥**

प्रयुक्ते **धने** स्वकृतया वृद्ध्या कालक्रमेण द्विगुणीभूते यद्याधिरधमर्णेन द्रव्यदानेन **न मोक्ष्यते**५ तदा नश्यति । अधमर्णस्य धनं प्रयोक्तुः स्वं भवति । **कालकृतः** । आहिताग्न्यादिषु पाठात्कालशब्दस्य पूर्वनिपातः । सतु **काले** निरूपिते प्राप्ते **नश्येत्** द्वैगुण्यात् प्रागूर्ध्वं वा । **फलभोग्यः** फलं भोग्यं यस्यासौ फलभोग्यः । क्षेत्रारामादिः । स कदाचिदपि **न नश्यति** । कृतकालस्य गोप्यस्य भोग्यस्य च तत्कालातिक्रमे नाश उक्तः काले कालकृतो नश्येदिति । अकृतकालस्य भोग्यस्य नाशाभाव उक्तः । फलभोग्यो न१० नश्यतीति पारिशेष्यादाधिः प्रणश्येदित्येतदकृतकालगोप्याधिविषयमवतिष्ठते । द्वैगुण्यातिक्रमेण निरूपितकालातिक्रमेण च विनाशे चतुर्दशदिवसप्रतीक्षणं कर्तव्यम् । **बृहस्पति**वचनात् । 'हिरण्ये द्विगुणीभूते पूर्णे काले कृतावधेः । बन्धकस्य धनी स्वामी द्विसप्ताहं प्रतीक्ष्य च । तदन्तरा धनं दत्त्वा ऋणी बन्धमवाप्नुयादिति ।

एवं चतुर्विधस्याधेर्विशेषमाह ।

नन्वाधिः प्रणश्येदित्यनुपपन्नम् । अधमर्णस्य स्वत्वनिवृत्तिहेतोर्दानविक्रयादेरभावात् । धनि-१५ नश्च स्वत्वहेतोः प्रतिग्रहक्रयादेरभावात्, **मनु**वचनविरोधाच्च । (अ. ८ श्लो. १४३) । 'न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रय ' इति । कालेन संरोधः **कालसंरोध**श्चिरकालमवस्थानं तस्मात्कालसंरोधाच्चिरकालावस्थानादाधेर्न **निसर्गोऽस्ति** नान्यत्राधीकरणमस्ति **नच विक्रयः** । एवमाधीकरणविक्रयप्रतिषेधाद्धनिनः स्वत्वाभावोऽवगम्यत इति । उच्यते । आधीकरणमेव लोके सोपाधिकः स्वत्वनिवृत्तिहेतुः । आधिस्वीकारश्च सोपाधिकः स्वत्वापत्तिहेतुः प्रसिद्धः । तत्र२० धनद्वैगुण्ये, निरूपितकाले प्राप्ते च, द्रव्यदानस्यात्यन्तनिवृत्तेरनेन वचनेनाधमर्णस्यात्यन्तिकी स्वत्वनिवृत्तिः, उत्तमर्णस्य चात्यन्तिकं स्वत्वं भवति । न च मनुवचनविरोधः । यतः । (अ. ८ श्लो. १४३) । ' नत्वेवाधौ सोपकारे कौसीदीं वृद्धिमाप्नुयादिति ' भोग्याधिं प्रस्तुत्येदमुच्यते, 'न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रय ' इति । भोग्यस्याधेश्चिरकालावस्थानेऽप्याधीकरणविक्रयनिषेधेन धनिनः स्वत्वं न भवति । इहाप्युक्तम् । फलभोग्यो न नश्यतीति । गोप्याधौ तु२५ पृथगारब्धं मनुना । (अ. ८ श्लो. १४४) । ' न भोक्तव्यो बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेदिति' । इहापि वक्ष्यते । 'गोप्याधिभोगे नो वृद्धिरिति ' । आधिः प्रणश्येद्द्विगुण इति तु गोप्याधिं प्रत्युच्यते । इति सर्वमविरुद्धम् ॥ ५८ ॥

**गोप्याधिभोगे नो वृद्धिः सोपकारेऽथ हापिते ।**
**नष्टो देयो विनष्टश्च दैवराजकृताद्दृते ॥ ५९ ॥**

किं च **गोप्याधे**स्ताम्रकटाहादेरुपभोगेन न वृद्धिर्भवति । अल्पेऽप्युपभोगे महत्यपि वृद्धिर्हातव्या । समयातिक्रमात् । तथा **सोपकारे** उपकारे उपकारकारिणि बलीवर्दताम्रकटाहादौ

भोग्याधौ सवृद्धिके **हापिते** हानिं व्यवहाराक्षमत्वं गमिते नो वृद्धिरिति संबन्धः । **नष्टो** विकृतिं गतः ताम्रकटाहादिश्छिद्रभेदनादिना पूर्ववत्कृत्वा देयः । तत्र गोप्याधिर्नष्टश्चेत्पूर्ववत्कृत्वा देयः ।' उपभुक्तोऽपि चेद्वृद्धिरपि हातव्या । भोग्याधिर्यदि नष्टस्तदा पूर्ववत्कृत्वा देयः । वृद्धिसद्भावे वृद्धिर्हातव्या । विनष्टः आत्यन्तिकं नाशं प्राप्तः सोऽपि देयो मूल्यादिद्वारेण तद्दाने सवृद्धिकं मूल्यं लभते । यदा न ददाति तदा मूलनाशः । 'विनष्टे मूलनाशः स्याद्दैवराजकृतादृत' इति **नारदवचनात्** । दैवराजकृताद्दते । दैवमभ्युदकदेशोपप्लवादि । दैवकृताद्विनाशाद्विना । तथा स्वापराधरहिताद्**राजकृतात्** । दैवराजकृते तु विनाशे सवृद्धिकं मूल्यं दातव्यम् । अधमर्णेनाध्यन्तरं वा । यथाऽऽह । 'स्रोतसापहृते क्षेत्रे राज्ञा चैवापहारिते । आधिरन्योऽथ कर्तव्यो देयं वा धनिने धनमिति' । तत्र स्रोतसापहृत इति दैवकृतोपलक्षणम् ॥ ५९ ॥

गोप्याधेर्भोगे वृद्धिर्न ।

आधिनाशे ।

तत्रापवादः ।

**आधेः स्वीकरणात्सिद्धी रक्ष्यमाणोऽप्यसारताम् ।**
**यातश्चेदन्य आधेयो धनभाग्वा धनी भवेत् ॥ ६० ॥**

अपि च । **आधे**र्भोग्यस्य गोप्यस्य च **स्वीकरणा**दुपभोगादाधिग्रहण**सिद्धिः** न साक्षिलेख्यमात्रेण नाप्युद्देशमात्रेण । यथाऽऽह **नारदः** । 'आधिस्तु द्विविधः प्रोक्तो जङ्गमः स्थावरस्तथा । सिद्धिरस्योभयस्यापि भोगो यद्यस्ति नान्यथेति' । अस्य च फलं 'आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरेति' । स्वीकारान्तक्रिया पूर्वा बलवती । स्वीकाररहिता तु पूर्वाऽपि न बलवतीति । स चाधिः प्रयत्नेन रक्ष्यमाणोऽपि कालवशेन **यद्यसारताम्**-विकृत एव सवृद्धिकमूल्यद्रव्यापर्याप्ततां गतस्तदाऽधिरन्यः कर्तव्यो धनिने धनं वा देयम् । रक्ष्यमाणोऽप्यसारतामिति वदताऽऽधिः प्रयत्नेन रक्षणीयो धनिनेति ज्ञापितम् ॥ ६० ॥

आधिसिद्धिः ।

आधिः प्रणश्येद्द्विगुणे इत्यस्यापवादमाह—

**चरित्रबन्धककृतं सवृद्ध्या दापयेद्धनम् ।**
**सत्यङ्कारकृतं द्रव्यं द्विगुणं प्रतिदापयेत् ॥ ६१ ॥**

चरित्रं शोभनचरितं । चरित्रेण बन्धकं **चरित्रबन्धकं** तेन यद्द्रव्यमात्मसात्कृतं पराधीनं वा कृतम् । एतदुक्तं भवति । धनिनः स्वच्छाशयत्वेन बहुमूल्यमपि द्रव्यमाधीकृत्याधमर्णेनाल्पमेव द्रव्यमात्मसात्कृतम् । यदि वाऽधमर्णस्य स्वच्छाशयत्वेनाल्पमूल्याधिं गृहीत्वा बहुद्रव्यमेव धनिनाऽधमर्णाधीनं कृतमिति । तद्धनं नृपो **वृद्ध्या सह** दापयेत् । अयमाशयः । एवं रूपं बन्धकं द्विगुणीभूतेऽपि द्रव्ये न नश्यति । किं तु द्रव्यमेव द्विगुणं दातव्यमिति । तथा, **सत्यङ्कारकृतं** । करणं कारः । भावे घञ् । सत्यस्य कारः सत्यङ्कारः । 'कारे सत्यागदस्येति' मुम् ( व्या. सू. ६–३–७० ) सत्यङ्कारेण कृतं सत्यङ्कारकृतम् । अयमभिसन्धिः । यदा बन्धकार्पणसमय एवेत्थं परिभाषितं 'द्विगुणीभूतेऽपि द्रव्ये मया द्विगुणं द्रव्यमेव दातव्यं नाधिनाश' इति तदा तद्द्विगुणं दापयेदिति ।

द्विगुणे धने आधिर्नश्यतीत्यस्यापवादः ।

**अन्योऽर्थः**। चरित्रमेव बन्धकं चरित्रबन्धकं। चरित्रशब्देन गङ्गास्नानाग्निहोत्रादिजनितमपूर्वमुच्यते। यत्र तदेवाधीकृत्य यद्द्रव्यमात्मसात्कृतं तदा तत्र तदेव द्विगुणीभूतं दातव्यं नाधिनाश इति। आधिप्रसङ्गादन्यदुच्यते। **सत्यङ्कारकृतमिति**। क्रयविक्रयादिव्यवस्थानिर्वाहाय यदङ्गुलीयकादि परहस्ते कृतं तद्व्यवस्थातिक्रमे द्विगुणं दातव्यम्। तत्रापि येनाङ्गुलीयकाद्यर्पितं स एव चेद्व्यवस्थातिवर्ती तेन तदेव दातव्यम्। इतरश्चेद्व्यवस्थातिवर्ती तदा तदेवाङ्गुलीयकादि द्विगुणं प्रतिदापयेदिति॥ ६१॥ ५

**उपस्थितस्य मोक्तव्य आधिः स्तेनोऽन्यथा भवेत्।**
**प्रयोजकेऽसति धनं कुलेऽन्यस्याधिमाप्नुयात्॥ ६२॥**

किं च धनदानेनाधिमोक्षणायोप**स्थितस्याधिर्मोक्तव्यो** धनिना न वृद्धिलोभेन स्थापयितव्यः। **अन्यथा** अमोक्षणे **स्तेनः** चौरवद्दण्ड्यो भवति। असन्निहिते पुनः प्रयोक्तरि कुले तदाप्तहस्ते सवृद्धिकं **धनं** निधायाधमर्णकः स्वीयं बन्धकं गृह्णीयात्॥६२॥ १०

आधिमोक्षः।

अथ प्रयोक्ताऽप्यसन्निहितस्तदाप्ताश्च धनस्य ग्रहीतारो न सन्ति यदि वा असंनिहिते प्रयोक्तर्याधिविक्रयेण धनदित्साऽधर्मणस्य तत्र किं कर्तव्यमित्यपेक्षित आह—

**तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः।**

तस्मिन्काले यत्तस्याधेर्मूल्यं तत्परिकल्प्य तत्रैव धनिनि तमाधिं वृद्धिरहितं स्थापयेन्न तत ऊर्ध्वं विवर्धते। यावद्धनी धनं गृहीत्वा तमाधिं मुञ्चति यावद्वा तन्मूल्यद्रव्यमृणिने प्रवेशयति। १५

यदा तु द्विगुणीभूतेऽपि धने द्विगुणं धनमेव ग्रहीतव्यं न त्वाधिनाश इति विचारितमृणकाल एव तदा द्विगुणीभूते द्रव्ये असन्निहिते चाधमर्णे धनिना किं कर्तव्यमित्यत आह—

**विना धारणिकाद्वाऽपि विक्रीणीत ससाक्षिकम्॥ ६३॥**

**धारणिकाद**धमर्णाद्**विना** अधमर्णे असन्निहिते, साक्षिभिस्तदाप्तैश्च सह तमाधिं **विक्रीय** तद्धनं गृह्णीयाद्धनी। **वाशब्दो** व्यवस्थितविकल्पार्थः। यदर्णग्रहणकाले द्विगुणीभूतेऽपि धने धनमेव ग्रहीतव्यं न त्वाधिनाश इति न विचारितं तदा आधिः प्रणश्येद्द्विगुण इत्याधिनाशः। विचारिते त्वयं पक्ष इति॥ ६३॥ २०

**यदा तु द्विगुणीभूतमृणमाधौ तदा खलु।**
**मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने॥ ६४॥** २५

**यदा** प्रयुक्तं धनं स्वकृतया वृद्ध्या **द्विगुणीभूतं तदा**ऽधौ कृते **तदुत्पन्ने** आध्युत्पन्ने द्रव्ये **द्विगुणे** धनिनः प्रविष्टे धनिनाऽऽधिर्मोक्तव्यः। यदि वाऽदावेवाधौ दत्ते द्विगुणीभूते द्रव्ये त्वयाऽऽधिर्मोक्तव्य इति परिभाषया कारणान्तरेण वा भोगाभावेन यदा द्विगुणीभूतमृणं तदाऽऽधौ भोगार्थं धनिनि प्रविष्टे तदुत्पन्ने द्रव्ये द्विगुणे सत्याधिर्मोक्तव्यः। अधिकोपभोगे तदपि देयम्। सर्वथा सवृद्धिकमूल्यापाकरणार्थाध्युपभोगविषयमिदं वचनम्। तमेनं **क्षयाधिमाचक्षते** लौकिकाः। यत्र तु **वृद्ध्यर्थ** एवाध्युपभोग इति ३०

भोग्याधौ विशेषमाह।

परिभाषा तत्र द्वैगुण्यातिक्रमेऽपि यावन्मूल्यदानं तावदुपभुङ्क्त एवाधिम्। एतदेव स्पष्टीकृतं **बृहस्पतिना**। 'ऋणी बन्धमवाप्नुयात्। फलभोग्यं पूर्णकालं दत्त्वा द्रव्यं तु सामकम्। यदि प्रकर्षितं तत्स्यात्तदा न धनभाग्धनी। ऋणी च न लभेद्बन्धं परस्परमतं विना' ति'। अस्यार्थः। फलं भोग्यं यस्यासौ **फलभोग्यः** बन्धक आधिः। स च **द्विविधः**। सवृद्धिकमूल्यापाकरणार्थो ५ **वृद्धिमात्रार्थापाकरणार्थश्च**। तत्र च सवृद्धिमूल्यापाकरणार्थं बन्धं **पूर्णकालं** पूर्णः कालो यस्यासौ **पूर्णकालस्तमाप्नुयादृणी**। यदा सवृद्धिकं मूल्यं फलद्वारेण धनिनः प्रविष्टं तदा बन्धमाप्नुयादित्यर्थः। **वृद्धिमात्रापाकरणार्थं तु बन्धकं** सामकं दत्वाऽऽप्नुयादृणी। समं मूल्यं सममेव सामकम्। **अस्यापवादमाह**। 'यदि प्रकर्षितं तत्स्यात्परस्परमतं विना'। तद्बन्धकं प्रकर्षितमतिशयितं वृद्धेरप्यधिकफलं यदि स्यात्तदा न धनभाग्धनी। सामकं न लभते धनी मूल्यमदत्वैवर्णी बन्धमाप्नुयादिति १० यावत्। अथ त्वप्रकर्षितं तद्बन्धकं वृद्ध्येऽप्यपर्याप्तं तदा सामकं दत्वाऽपि बन्धं न लभेताधमर्णः वृद्धिशेषमपि दत्वैव लभेतेत्यर्थः। पुनरुभयत्रापवादमाह। उत्तमर्णाधमर्णयोः परस्परानुमत्यभावे यदि प्रकर्षितमित्याद्युक्तं परस्परानुमतौ तूत्कृष्टमपि बन्धकं यावन्मूल्यदानं तावदुपभुङ्क्ते धनी निकृष्टमपि मूल्यमात्रदानेनैवाधमर्णो लभत इति॥ ६४॥

इति ऋणादानप्रकरणम्।

१५

## अथ उपनिधिप्रकरणम् ४

**वासनस्थमनाख्याय हस्तेऽन्यस्य यदर्प्यते।**
**द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत्॥ ६५॥**

निक्षेपद्रव्यस्याधारभूतं द्रव्यान्तरं **वासनं** करण्डादि तत्स्थं **वासनस्थं** यद्द्रव्यं रूपसंख्यादिविशेष**मनाख्याय** अकथयित्वा मुद्रित**मन्यस्य हस्ते** रक्षणार्थं विस्रम्भा**दर्प्यते** स्थाप्यते त**द्द्रव्यमौपनिधिक**मुच्यते। यथाह **नारदः**। 'असंख्यातमविज्ञातं समुद्रं यन्निधीयते। तज्जानीयादु**पनिधिं** निक्षेपं गणितं विदुरिति'। **प्रतिदेयं तथैव तत्**। यस्मिन् स्थापितं तेन यथैव पूर्वमुद्रादिचिह्नितमर्पितं तथैव स्थापकाय प्रतिदेयं प्रत्यर्पणीयम्॥ ६५॥

२० उपनिधिप्रत्याह।

प्रतिदेयमित्यस्यापवादमाह—

**न दाप्योऽपहृतं तं तु राजदैविकतस्करैः।**

२५ **तमुपनिधिं राज्ञा दैवेनोदकादिना तस्करैर्वाऽपहृतं** नष्टं न **दाप्योऽसौ**। यस्मिन्नुपहितं धनिन एव तत् द्रव्यं नष्टं यदि जिह्मकारितं न भवति। यथाऽऽह **नारदः**। 'ग्रहीतुः सह योऽर्थेन नष्टो नष्टः स दायिनः। दैवराजकृते तद्वन्नचेत्तज्जिह्मकारितमिति'। (२–९)

उपनिधिदान-अपवादः

अस्यापवादमाह-

**भ्रेषश्चेन्मार्गिते दत्ते दाप्यो दण्डं च तत्समम्॥ ६६॥**

स्वामिना मार्गिते याचिते यदि न ददाति तदा तदुत्तरकालं यद्यपि राजादिभिर्भ्रेषो नाशः संजातस्तथापि तद्द्रव्यं मूल्यकल्पनया धनिने ग्रहीता दाप्यो राज्ञे च तत्समं दण्डम्॥ ६६॥

**आजीवन् स्वेच्छया दण्ड्यो दाप्यस्तं चापि सोदयम्।**

यः **स्वेच्छया** स्वाम्यननुज्ञयोपनिहितं द्रव्य**माजीव**त्युपभुङ्क्ते व्यवहरति वा प्रयोगादिना लाभार्थमसावुपभोगानुसारेण लाभानुसारेण च **दण्ड्य**स्तं चोपनिधिं **सोदय**मुपभोगे सवृद्धिकं ५ व्यवहारे सलाभं धनिने **दाप्यः**। वृद्धिप्रमाणं च **कात्यायनेनोक्तम्**। 'निक्षेपं वृद्धिशेषं च क्रयं विक्रयमेव च। याच्यमानो न चेद्दद्याद्वर्धते पञ्चकं शतमिति'। एतच्च भक्षिते द्रष्टव्यम्। उपेक्षाज्ञाननष्टे तु तेनैव विशेषो दर्शितः। 'भक्षितं सोदयं दाप्यः समं दाप्य उपेक्षितम्। किंचिन्न्यूनं प्रदाप्यः स्यात् द्रव्यमज्ञाननाशितमिति'। **किंचिन्न्यूनमिति** चतुर्थांशहीनम्। १०

भोक्तारंप्रति दण्डमाह।

उपनिधेर्धर्मान् याचितादिष्वतिदिशति—

**याचितान्वाहितन्यासनिक्षेपादिष्वयं विधिः॥ ६७॥**

विवाहाद्युत्सवेषु वस्त्रालङ्कारादि याचित्वा नीतं **याचितम्**। यदेकस्य हस्ते निहितं द्रव्यं तेनाप्यनु पश्चादन्यहस्ते स्वामिने देहीति निहितं **तदन्वाहितम्**। **न्यासो** नाम गृहस्वामिने दर्शयित्वा तत्परोक्षमेव गृहजनहस्ते प्रक्षेपो, गृहस्वामिने समर्पणीयमिति। समक्षं तु **समर्पणं** १५ **निक्षेपः**। **आदिशब्देन** सुवर्णकारादिहस्ते कटकादिनिर्माणाय न्यस्तस्य सुवर्णादेः प्रतिन्यासस्य च परस्परप्रयोजनापेक्षायां त्वयेदं मदीयं रक्षणीयं मयेदं त्वदीयं रक्ष्यते इति न्यस्तस्य **ग्रहणम्**। यथाऽऽह **नारदः**। "एष एव विधिर्दृष्टो याचितान्वाहितादिषु। शिल्पिषूपनिधौ[1] न्यासे प्रतिन्यासे तथैव चेति"। एतेषु याचितादिष्वयं विधिः उपनिधेर्यः प्रतिदानादिविधिः स एव वेदितव्यः॥६७॥

इति उपनिधिप्रकरणम्। २०

## अथ साक्षिप्रकरणम् ५

'प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितमित्यु'क्तम्। तत्र भुक्तिर्निरूपिता। साम्प्रतं साक्षिस्वरूपं निरूप्यते। साक्षी च साक्षाद्दर्शनाच्छ्रवणाच्च भवति। यथाह **मनुः**। (अ. ८. श्लो. ७४.)। "समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिद्ध्यतीति"। स च द्विविधः। कृतोऽकृतश्चेति। साक्षित्वेन निरूपितः **कृतः**, अनिरूपितो**ऽकृतः**। तत्र **कृतश्च** २५ षड्विध इत्येकादशविधः। यथाह **नारदः**। (अ. १. श्लो. १४९–१५०.)। "एकादशविधः साक्षी शास्त्रे दृष्टो मनीषिभिः। कृतः पञ्चविधो ज्ञेयः षड्विधोऽकृत उच्यत" इति। तेषां च भेदस्तेनैव दर्शितः। "लिखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च। गूढश्चोत्तरसाक्षी च साक्षी पञ्चविधः स्मृतः" इति। लिखितादीनां च स्वरूपं **कात्यायनेनो-**

साक्षिस्वरूपम्।

साक्षिभेदाः।

[1] शिल्पे चोपनिधौ इत्यपि पाठः।

कम्। 'अर्थिना स्वयमानीतो यो लेख्ये संनिवेश्यते। स साक्षी लिखितो नाम स्मारितः पत्रकादृत' इति। 'स्मारितः पत्रकादृत' इत्यस्य विवरणं तेनैव कृतम्। 'यस्तु कार्यप्रसिद्ध्यर्थं दृष्ट्वा कार्यं पुनः पुनः।' स्मार्यते ह्यर्थिना साक्षी स स्मारित इहोच्यत' इति। यस्तु यदृच्छयाऽऽगतः साक्षी क्रियते स यदृच्छाभिज्ञः। अनयोः पत्रानारूढत्वेऽपि भेदस्तेनैव दर्शितः। 'प्रयोजनार्थमानीतः प्रसङ्गादागतश्च यः। द्वौ साक्षिणौ त्वलिखितौ पूर्वपक्षस्य साधकाविति'। तथा। 'अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम्। यः श्रावितः स्थितो गूढो गूढसाक्षी स उच्यत' इति। तथा। 'साक्षिणामपि यः साक्ष्यमुपर्युपरि भाषते। श्रवणाच्छ्रावणाद्वाऽपि स साक्ष्युत्तरसंज्ञित' इति। षड्विधस्याप्यकृतस्य भेदो नारदेन दर्शितः। (अ. १ श्लो. १५१-१५२.) "ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम्। कार्येष्वधिकृतो यः स्यादर्थिना प्रहितश्च यः। कुल्याः कुलविवादेषु विज्ञेयास्तेऽपि साक्षिण" इति। प्राड्विवाकग्रहणं लेखकसभ्योपलक्षणार्थम्। 'लेखकः प्राड्विवाकश्च सभ्याश्चैवानुपूर्वशः। नृपे पश्यति तत्कार्यं साक्षिणः समुदाहृता' इति।

तेषां पृथक् पृथग्लक्षणानि।

ते साक्षिणः[1] कीदृशाः कियन्तश्च भवन्तीत्यत आह—

**तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः।**
**धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः॥ ६८॥**
**त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्तक्रियापराः।**
**यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः॥ ६९॥**

साक्षिलक्षणानि।

**तपस्विनस्**तपःशीलाः। **दानशीला** दाननिरताः। **कुलीना** महाकुलप्रसूताः। **सत्यवादिनः** सत्यवदनशीलाः। **धर्मप्रधानाः** नार्थकामप्रधानाः। **ऋजवो**ऽकुटिलाः। **पुत्रवन्तो** विद्यमानपुत्राः। **धनान्विता** बहुसुवर्णादिधनयुक्ताः। **श्रौतस्मार्तक्रियापराः** नित्यनैमित्तिकानुष्ठानरताः। एवंभूताः पुरुषाः **त्र्यवराः** साक्षिणो भवन्ति। त्रयः अवराः अन्यूना येषां ते त्र्यवराः त्रिभ्योऽर्वाङ् न भवन्ति। **परतस्तु** यथाकामं भवन्तीत्यर्थः। जातिमनतिक्रम्य **यथाजाति**। जातयो मूर्धावसिक्तादयः अनुलोमजाः प्रतिलोमजाश्च। तत्र मूर्धावसिक्तानां मूर्धावसिक्ताः साक्षिणो भवन्ति। एवमम्बष्ठादिष्वपि द्रष्टव्यम्। वर्णमनतिक्रम्य **यथावर्णम्**। वर्णा ब्राह्मणादयः। तत्र ब्राह्मणानां ब्राह्मणा एवोक्तलक्षणा उक्तसंख्याकाः साक्षिणो भवन्ति। एवं क्षत्रियादिष्वपि द्रष्टव्यम्। तथा स्त्रीणां साक्ष्यं स्त्रिय एव कुर्युः। यथाऽऽह **मनुः**। (अ. ८. श्लो. ६८.) 'स्त्रीणां साक्ष्यं स्त्रियः कुर्युरिति'। सजातिसवर्णासंभवे सर्वे मूर्धावसिक्तादयो ब्राह्मणादयश्च सर्वेषु मूर्धावसिक्तादिषु ब्राह्मणादिषु च यथासंभवं साक्षिणो भवन्ति।

साक्षिसंख्या।

उक्तलक्षणानां साक्षिणामसंभवे प्रतिषेधरहितानामन्येषामपि साक्षित्वप्रतिपादनार्थमसाक्षिणो वक्तव्याः। ते च पञ्चविधा **नारदेन** (अ. १. श्लो. १५७.) दर्शिताः। "असाक्ष्यपि हि

---

१ ङ तेऽपि।

शास्त्रेषु दृष्टः पञ्चविधो बुधैः। वचनाद्दोषतो भेदात्स्वयमुक्तेर्मृतान्तर" इति। के **पुनर्वचनादसाक्षिण** इत्यत आह। (अ. १. श्लो. १५८.) "श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजितादयः। असाक्षिणस्ते वचनान्नात्र हेतुरुदाहृत" इति। **तापसा** वानप्रस्थाः। **आदि**शब्देन पित्रा विवदमानादीनां ग्रहणम्। यथाह **शंखः**। 'पित्रा विवदमानगुरुकुलवासिपरिव्राजकवानप्रस्थनिर्ग्रन्थाश्चासाक्षिण' इति। **दोषादसाक्षिणो** दर्शिताः। (अ. १. श्लो. १५९.) "स्तेनाः साहसिकाश्चण्डाः कितवा वञ्चकास्तथा। असाक्षिणस्ते दुष्टत्वात्तेषु सत्यं न विद्यत" इति। **चण्डाः** कोपनाः। **कितवा** द्यूतकृतः। **भेदादसाक्षिणां** च स्वरूपं तेनैव दर्शितम्। "साक्षिणां लिखितानां च निर्दिष्टानां च वादिनाम्। तेषामेकोऽन्यथावादी भेदात्सर्वे न साक्षिण" इति। तथा **स्वयमुक्तिस्वरूपं** चोक्तम्। (अ. १. श्लो. १६१.) 'स्वयमुक्तिरनिर्दिष्टः स्वयमेवैत्य यो वदेत्। सूचीत्युक्तः स शास्त्रेषु न स साक्षित्वमर्हतीति'। **मृतान्तरस्यापि** लक्षणमुक्तम्। (अ. १. श्लो. १६२.) 'योऽर्थः श्रावयितव्यः स्यात्तस्मिन्नसति चार्थिनि। क्व तद्वदतु साक्षित्वमित्यसाक्षी मृतान्तर' इति। येनार्थिना प्रत्यर्थिना वा साक्षिणां योऽर्थः श्रावयितव्यो भवेत् यूयमत्रार्थे साक्षिण इति तस्मिन्नर्थिनि प्रत्यर्थिनि वा असति मृतेऽर्थे चानिवेदिते साक्षित्वं कस्मिन्नर्थे कस्य वा कृते साक्ष्यं वदत्विति मृतान्तरः साक्षी न भवति। यत्र तु मुमूर्षुणा सुस्थेन वा पित्रा पुत्रादयः श्राविता अस्मिन्नर्थेऽमी साक्षिण इति तत्र मृतान्तरोऽपि साक्षी। यथाऽऽह **नारदः**। "मृतान्तरोऽर्थिनि प्रेते मुमूर्षुश्रावितादृते'। तथा, 'श्रावितोऽनातुरेणापि यस्त्वर्थो धर्मसंहितः। मृतेऽपि तत्र साक्षात्स्यात् षट्सु चान्वाहितादिष्विति" ॥ ६८ ॥ ६९ ॥

तानेतान् साक्षिणो दर्शयति—

**स्त्रीबालवृद्धकितवमत्तोन्मत्ताभिशस्तकाः।**
**रङ्गावतारिपाखण्डिकूटकृद्विकलेन्द्रियाः ॥ ७० ॥**
**पतिताप्तार्थसंबन्धिसहायरिपुतस्कराः।**
**साहसी दृष्टदोषश्च निर्धूताद्यास्त्वसाक्षिणः ॥ ७१ ॥**

वर्ज्याः साक्षिणः।

**स्त्री** प्रसिद्धा। **बालो**ऽप्राप्तव्यवहारः। **वृद्धो**ऽशीतिकावरः। **वृद्धग्रहणं** वचननिषिद्धानामन्येषामपि श्रोत्रियादीना**मुपलक्षणार्थम्**। **कितवो**ऽक्षदेवी। **मत्तः** पानादिना। **उन्मतो** ग्रहाविष्टः। **अभिशस्तो**ऽभियुक्तो ब्रह्महत्यादिना। **रङ्गावतारी** चारणः। **पाखण्डिनो** निर्ग्रन्थप्रभृतयः। **कूटकृ**त्कपटलेख्यादिकारी। **विकलेन्द्रियः** श्रोत्रादिरहितः। **पतितो** ब्रह्महादिः। **आप्तः** सुहृत्। **अर्थसंबन्धी** विप्रतिपद्यमानार्थसंबन्धी। **सहाय** एककार्यः। **रिपुः** शत्रुः। **तस्करः** स्तेनः। **साहसी** स्वबलावष्टम्भकारी। **दृष्टदोषो** दृष्टवितथवचनः। **निर्धूतो** बन्धुभिस्त्यक्तः। आद्यशब्दादन्येषामपि स्मृत्यन्तरोक्तानां दोषादसाक्षिणां भेदादसाक्षिणां स्वयमुक्तेर्मृतान्तरस्य च ग्रहणम्। एते स्त्रीबालादयः साक्षिणो न भवन्ति ॥ ७० ॥ ७१ ॥

त्र्यवराः साक्षिणो ज्ञेया इत्यस्यापवादमाह—

**उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित् ।**

ज्ञानपूर्वकं नित्यनैमित्तिककर्मानुष्ठायी **धर्मवित्** । स एकोऽप्युभयानुमतश्चेत्साक्षी भवति । अपिशब्दबलाद्द्वावपि । यद्यपि श्रौतस्मार्तक्रियापरा इति त्र्यवराणामपि धर्मवित्त्वं समानं तथापि तेषामुभयानुमत्यभावेऽपि साक्षित्वं भवत्येकस्य द्वयोर्वोभयानुमत्यैव साक्षित्वं भवतीत्यर्थवत् त्र्यवरग्रहणम् ।

एकसाक्षिविषये ।

तपस्विनो दानशीला इत्यस्यापवादमाह—

**सर्वः साक्षी संग्रहणे चौर्यपारुष्यसाहसे ॥ ७२ ॥**

**संग्रहणादीनि** वक्ष्यमाणलक्षणानि । तेषु सर्वे वचननिषिद्धास्तपःप्रभृतिगुणरहिताश्च साक्षिणो भवन्ति । दोषादसाक्षिणो भेदादसाक्षिणः स्वयमुक्तिश्चात्रापि साक्षिणो न भवंति । सत्याभावादेर्हेतोरत्रापि विद्यमानत्वात्[1] । 'मनुष्यमारणं चौर्यं परदाराभिमर्शनम् । पारुष्यमुभयं चेति साहसं स्याच्चतुर्विधमिति' वचनाद्यद्यपि स्त्रीसंग्रहणचौर्यपारुष्याणां साहसत्वं तथापि तेषां स्वबलावष्टम्भेन जनसमक्षं क्रियमाणानां साहसत्वम् । रहसि क्रियमाणानां तु संग्रहणादिशब्दवाच्यत्वमिति तेषां साहसात्पृथगुपादानम् ॥ ७२ ॥

चौर्यादिषु वर्ज्यसाक्षिणोऽपि ग्राह्याः ।

**साक्षिणः श्रावयेद्वादिप्रतिवादिसमीपगान् ।**

अर्थिप्रत्यर्थिसन्निधौ **साक्षिणः** समवेतान् । 'नासमवेताः पृष्टाः प्रब्रूयुरिति' **गौतमवचनात्** । वक्ष्यमाणं **श्रावयेत्** । तत्रापि **कात्यायनेन** विशेषो दर्शितः । "सभान्तःसाक्षिणः सर्वानर्थिप्रत्यर्थिसन्निधौ । प्राड्विवाको नियुञ्जीत विधिनाऽनेन सान्त्वयन् ॥ देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं द्विजान् । उदङ्मुखान्प्राङ्मुखान्वा पूर्वाह्णे वै शुचिः शुचीन् । आहूय साक्षिणः पृच्छेन्नियम्य शपथैर्भृशम् । समस्तान् विदिताचारान् विज्ञातार्थान्पृथक्पृथगिति" । तथा ब्राह्मणादिषु श्रावणे **मनुना** नियमो दर्शितः । ( अ. ८ श्लो. ११३ ) "सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः । गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैरिति" । **ब्राह्मण**'मन्यथा ब्रुवतः सत्यं ते नश्यतीति' शापयेत् । **क्षत्रियं** 'वाहनायुधानि तव विफलानीति' । 'गोबीजकाञ्चनादीनि तव विफलानि भविष्यन्तीति' **वैश्यम्** । **शूद्र**'मन्यथा ब्रुवतस्तव सर्वाणि पातकानि भविष्यन्तीति शापयेत्' । अत्र चापवादस्तेनैव दर्शितः । ( अ. ८ श्लो. १०२ ) "गोरक्षकान् वाणिजकांस्तथा कारुकुशीलवान् । प्रेष्यान्वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेदिति ।" **विप्रग्रहणं** क्षत्रियवैश्ययोरुपलक्षणार्थम् । **कुशीलवा** गायकाः । प्रतिवादिना साक्षिदूषणे दत्ते प्रत्यक्षयोग्यदूषणेषु बाल्यादिषु तथैव निर्णयः । अयोग्येषु तु तद्वचनाल्लोकतश्च निर्णयो न साक्ष्यन्तरेणेति नानवस्था । यदि साक्षिदोषमुद्भाव्य साधयितुं न शक्नोति प्रतिवादी तदाऽसौ दो-

साक्षिश्रावणमाह ।

[1] क–सत्यवादित्वहेतोरत्राऽपि ।

षानुसारेण दण्ड्यः । अथ साधयति तदा न साक्षिणः । यथाऽऽह ।"असाधयन् दमं दाप्यो दूषणं साक्षिणां स्फुटम् । भाविते साक्षिणो वर्ज्याः साक्षिधर्मनिराकृता" इति । उद्दिष्टेषु च सर्वेषु साक्षिषु दुष्टेष्वर्थी यदा क्रियान्तरनिरपेक्षस्तदा पराजितो भवति । 'जितः सविनयं दाप्यः शास्त्रदृष्टेन कर्मणा । यदि वादी निराकाङ्क्षः साक्षिसत्ये व्यवस्थित' इति स्मरणात् । साकाङ्क्षश्चेत्क्रियान्तरमवलम्बेतेत्यभिप्रायः ॥

**ये पातककृतां लोका महापातकिनां तथा ॥ ७३ ॥**
**अग्निदानां च ये लोका ये च स्त्रीबालघातिनाम् ।**
**स तान्सर्वानवाप्नोति यः साक्ष्यमनृतं वदेत् ॥ ७४ ॥**
**सुकृतं यत्त्वया किंचिज्जन्मान्तरशतैः कृतं ।**
**तत्सर्वं तस्य जानीहि यं पराजयसे मृषा ॥ ७५ ॥** १०

कथं श्रावयेदित्यत आह ।

पातकोपपातकमहापातककारिणामग्निदानां स्त्रीबालघातिनां च ये लोकास्तान् सर्वानसावाप्नोति यः साक्ष्यनृतं वदेदिति । तथा जन्मान्तरशतैर्यत्सुकृतं कृतं तत्सर्वं तस्य भवति यस्त्वे अनृतवदनेन पराजितो भवतीति श्रावयेदिति संबन्धः । एतच्च शूद्रविषयं द्रष्टव्यम् । शूद्रं सर्वैस्तु पातकैरिति शूद्रे सर्वपातकश्रावणस्य विहितत्वात् । गोरक्षकादिद्विजातिविषयं च । गोरक्षकान् वाणिजकानित्युक्तत्वात् । १५ अन्यानेकजन्मार्जितसुकृतसंक्रमणस्य महापातकादिफलप्राप्तेश्चानृतमात्रेणानुपपत्तेः । साक्षिसंत्रासार्थमिदमुच्यते । यथाऽऽह **नारदः** । "पुराणैर्धर्मवचनैः सत्यमाहात्म्यकीर्तनैः । अनृतस्यापवादैश्च भृशमुत्रासयेदिति" ॥ ७३ ॥ ७४ ॥ ७५ ॥

यदा तु श्राविताः साक्षिणः कथंचिन्न ब्रूयुस्तदा किं कर्तव्यमित्यत आह—

**अब्रुवन्हि नरः साक्ष्यमृणं सदशबन्धकम् ।** २०
**राज्ञा सर्वं प्रदाप्यः स्यात् षट्चत्वारिंशकेऽहनि ॥ ७६ ॥**

साक्ष्यादाने ऋणं देयम् ।

यः साक्ष्यमङ्गीकृत्य श्रावितः सन् कथंचिन्न वदति स राज्ञा सर्वं सवृद्धिकमृणं धनिने दाप्यः । सदशबन्धकं दशमांशसहितं दशमांशश्च राज्ञो भवति । 'राज्ञाऽधमर्णिको दाप्यः साधिताद्दशकं शतमि'त्युक्तत्वात् । एतच्च षट्चत्वारिंशकेऽहनि प्राप्ते वेदितव्यम् । ततोऽर्वाग्वदन्न दाप्यः । इदं च व्याध्याद्युपप्लवरहितस्य । यथाऽऽह २५ **मनुः** । ( अ. ८ श्लो. १०७ ) । "त्रिपक्षादब्रुवन् साक्ष्यमृणादिषु नरोऽगदः । तदृणं प्राप्नुयात्सर्वं दशबन्धं च सर्वश" इति । अगद इति राजदैवोपप्लवविरहोपलक्षणम् ॥ ७६ ॥

यस्तु जानन्नपि साक्ष्यमेव नाङ्गीकरोति दौरात्म्यात्तं प्रत्याह—

**न ददाति हि यः साक्ष्यं जानन्नपि नराधमः ।**
**स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि ॥ ७७ ॥** ३०

**यः पुनर्नराधमो** विप्रतिपन्नमर्थं विशेषतो **जानन्नपि साक्ष्यं न ददाति** । नाङ्गीकरोति स

**कूटसाक्षिणां तुल्यः पापैः** कृत्वा **दण्डेन** च । कूटसाक्षिणां च दण्डं वक्ष्यति ( श्लो. ८० ) । कूटसाक्षिणश्च दण्डयित्वा पुनर्व्यवहारः प्रवर्तनीयः । कृतोऽपि वा कौटसाक्ष्ये विदिते निवर्तनीयः । यथाऽऽह **मनुः** (अ. ८ श्लो. ११७) । 'यस्मिन् यस्मिन् विवादे तु कौटसाक्ष्यं कृतं भवेत् । तत्तत्कार्यं निवर्तेत कृतं चाप्यकृतं भवेदिति' ॥ ७७ ॥

साक्ष्यदाने दण्डः ।

५ साक्षिविप्रतिपत्तौ कथं निर्णय इत्यत आह—

**द्वैधे बहूनां वचनं समेषु गुणिनां तथा ।**
**गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तमाः ॥ ७८ ॥**

साक्षिणां **द्वैधे** विप्रतिपत्तौ **बहूनां** वचनं ग्राह्यम् । **समेषु** समसंख्येषु द्वैधे ये **गुणिनस्तेषां** वचनं प्रमाणम् । यदा पुनर्गुणिनां विप्रतिपत्तिस्तदा ये **गुणवत्तमाः** श्रुताध्ययनतदर्थानुष्ठानधनपुत्रादिगुणसंपन्नास्तेषां वचनं ग्राह्यम् । यत्र तु गुणिनः कतिपये इतरे च बहवस्तत्रापि गुणिनामेव वचनं ग्राह्यम् । 'उभयानुमतः साक्षी भवत्येकोऽपि धर्मविदिति' गुणातिशयस्य मुख्यत्वात् । यत्तु भेदादसाक्षिण इत्युक्तं तत्सर्वसाम्येना गृह्यमाणविशेषविषयम् ॥ ७८ ॥

१० साक्षिणां विप्रतिपत्तौ निर्णयः ।

साक्षिभिश्च कथमुक्ते जयः कथं वा पराजय इत्यत आह—

१५ **यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ।**
**अन्यथावादिनो यस्य ध्रुवस्तस्य पराजयः ॥ ७९ ॥**

**यस्य** वादिनः **प्रतिज्ञां** द्रव्यजातिसंख्यादिविशिष्टां **साक्षिणः सत्यां** वदन्ति सत्यमेवं जानीमो वयमिति स जयी भवति । यस्य पुनर्वादिनः प्रतिज्ञाम**न्यथा** वैपरीत्येन मिथ्यैतदिति वदन्ति तस्य पराजयो ध्रुवो निश्चितः । यत्र तु प्रतिज्ञातार्थस्य विस्मरणादिना भावाभावौ साक्षिणो न प्रतिपादयन्ति तत्र प्रमाणान्तरेण निर्णयः कार्यः, न च राज्ञा साक्षिणः पुनः पुनः प्रष्टव्याः । स्वभावोक्तमेव वचनं ग्राह्यम् । यथाऽऽह ।"स्वभावोक्तं वचस्तेषां ग्राह्यं यद्दोषवर्जितम् । उक्ते तु साक्षिणो राज्ञा न प्रष्टव्याः पुनः पुनरिति" ॥ ७९ ॥

साक्षिद्वारा जयपराजयौ ।

२०

'अन्यथावादिनो यस्य ध्रुवस्तस्य पराजय' इत्यस्यापवादमाह—

२५ **उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तमाः ।**
**द्विगुणा वाऽन्यथा ब्रूयुः कूटा स्युः पूर्वसाक्षिणः ॥ ८० ॥**

पूर्वोक्तलक्षणैः **साक्षिभिः साक्ष्ये** स्वाभिप्राये प्रतिज्ञातार्थवैपरीत्येनाभिहिते **यद्यन्ये** पूर्वेभ्यो **गुणवत्तमाः द्विगुणा** वा **अन्यथा** प्रतिज्ञातार्थानुगुण्येन साक्ष्यं **ब्रूयुस्तदा पूर्वे साक्षिणः कूटा** मिथ्यावादिनो भवेयुः ।

तदपवादः ।

नन्वेतदनुपपन्नम् । अर्थिप्रत्यर्थिसभ्यसभापतिभिः परीक्षितैः प्रमाणभूतैः साक्षिभिर्निगदिते प्रमाणान्तरान्वेषणेऽनवस्थादोषप्रसङ्गात् । 'निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत् । लिखितं

श्लो. १६५)। 'न परेण संमुद्दिष्टमुपेयात्साक्षिणं रहः । भेदयेन्नैव चान्येन हीयेतैवं समाचरन्निति' ॥ ८२ ॥

साक्षिणामवचनमसत्यवचनं च सर्वत्र प्रतिषिद्धं; तदपवादार्थमाह—

**वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् ।**

५ यत्र **वर्णिनां** शूद्रविट्क्षत्रविप्राणां सत्यवचनेन **वधः** संभाव्यते तत्र **साक्ष्यनृतं वदेत्** सत्यं न वदेत् । अनेन च सत्यवचनप्रतिषेधेन साक्षिणः पूर्वप्रतिषिद्धमसत्यवचनमवचनं चाभ्यनुज्ञायते । यत्र शङ्काभियोगादौ सत्यवचने वर्णिनो वधोऽनृतवचने न कस्यापि वधस्तत्रानृतवचनमभ्यनुज्ञायते । यत्र तु सत्यवचनेऽर्थिप्रत्यर्थिनोरन्यतरस्य वधोऽसत्यवचने चान्यतरस्य वधस्तत्र तूष्णींभावाभ्यनुज्ञा, राजा यद्यनु-
१० मन्यते । अथ राजा कथमप्यकथने न मुञ्चति तदा भेदादसाक्षित्वं कर्तव्यम् । तस्याप्यसंभवे सत्यमेव वदितव्यम् । असत्यवचने वर्णिवधदोषोऽसत्यवचनदोषश्च । सत्यवचने तु वर्णिवधदोष एव । तत्र च यथाशास्त्रं प्रायश्चित्तं कर्तव्यम् ।

(क्वचित्साक्षिणोऽनृतवचनानुज्ञामाह ।)

तर्ह्यसत्यवचने तूष्णींभावे च शास्त्राभ्यनुज्ञया प्रत्यवायाभाव इत्यत आह—

**तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः ॥ ८३ ॥**

१५ **तत्पावनाय** अनृतवचनावचननिमित्तप्रत्यवायपरिहाराय **सारस्वतश्चरुर्द्विजैरे**कैकशो **निर्वाप्यः** कर्तव्यः । सरस्वती देवता अस्येति **सारस्वतः** । अनवस्रावितान्तरूष्मपक्कौदने **चरु**शब्दः प्रसिद्धः । इहायमभिसन्धिः । साक्षिणामनृतवचनमवचनं च यन्निषिद्धं तदिहाभ्यनुज्ञातम् । यत्तु नानृतं वदेद्'ब्रुवन्विब्रुवन्वाऽपि नरो भवति किल्बिषीति' च सामान्येनानृतवचनमवचनं च निषिद्धं तदतिक्रमनिमित्तमिदं प्रायश्चित्तं ।
२० न च मन्तव्यम् साक्षिणामनृतवचनावचनाभ्यनुज्ञानेऽपि साधारणानृतवचनावचनप्रतिषेधातिक्रमनिमित्तप्रत्यवायस्य तादवस्थ्यादभ्यनुज्ञावचनमनर्थकमिति । यतः साक्षिणामसत्यवचनावचनप्रतिषेधातिक्रमयोर्भूयान्प्रत्यवायः असाधारणानृतवचनावचनयोरल्पीयानित्यर्थवदभ्यनुज्ञावचनम्।

(अनृतवचने प्रायश्चित्तम् ।)

यद्यपि भूयसः प्रत्यवायस्य निवृत्त्या आनुषङ्गिकस्याल्पीयसः प्रत्यवायस्य निवृत्तिरन्यत्र तथापीहाभ्यनुज्ञावचनात्प्रायश्चित्तविधानाच्च भूयसो निवृत्त्याऽल्पीयानप्यानुषङ्गिकोऽपि प्रत्यवायो न
२५ निवर्तत इति गम्यते ।

एतदेवान्यत्र प्रश्नेषु वर्णिवधाशङ्कायां पान्थादीनामनृतवचनावचनाभ्यनुज्ञानं वेदितव्यम् । न च तत्र प्रायश्चित्तमस्ति प्रतिषेधान्तराभावात् । निमित्तान्तरेण कालान्तरेऽर्थतत्त्वावगमेऽपि साक्षिणामन्येषां च दण्डाभावोऽस्मादेव वचनादवगम्यत इति ॥ ८३ ॥

इति साक्षिप्रकरणम्

१ फ—नान्यतरस्य । २ तादवस्थ्यादवचनाभ्यनुज्ञावचनमिति पाठः

अर्थशास्त्रे प्रवासशब्दस्य मारणे प्रयोगात् । अस्य चार्थशास्त्रस्वरूपत्वात् । तत्रापि प्रवासनमोष्ठच्छेदनं जिह्वाच्छेदनं प्राणवियोजनं च कौटसाक्ष्यविषयानुसारेण द्रष्टव्यम् । ब्राह्मणं तु दण्डयित्वा विवासयेत्. स्वराष्ट्रान्निष्कासयेत् । वाससो विगतो विवासाः । विवाससं करोतीति णिचि कृते णाविष्ठवत्प्रातिपदिकस्येति टिलोपे रूपम् । नग्नीकुर्यादित्यर्थः । अथवा वसत्यस्मिन्निति वासो गृहं; विवासयेत् भग्नगृहं कुर्यादिति । ब्राह्मणस्यापि लो- ५ भादिकारणविशेषापरिज्ञाने अनभ्यासे च तत्र तत्रोक्तो दण्ड एव । अभ्यासे त्वर्थदण्डो विवासनं च । तत्रापि जातिद्रव्यानुबन्धाद्यपेक्षया विवासनं नग्नीकरणं गृहभङ्गो देशान्निर्वासनं चेति व्यवस्था द्रष्टव्या । लोभादिकारणविशेषापरिज्ञाने अनभ्यासे चाल्पविषये कौटसाक्ष्ये ब्राह्मणस्यापि क्षत्रियादिवदर्थदण्ड एव । महाविषये तु देशान्निर्वासनमेव । अत्राप्यभ्यासे सर्वेषामेव मनूक्तं द्रष्टव्यम् । १०

न च ब्राह्मणस्यार्थदण्डो नास्तीति मन्तव्यम् । अर्थदण्डाभावे शारीरदण्डे च निषिद्धे, स्वल्पेऽप्यपराधे नग्नीकरणगृहभङ्गाङ्ककरणविप्रवासनं दण्डाभावो वा प्रसज्येत । "चतुर्णामपि वर्णानां प्रायश्चित्तमकुर्वताम् । शारीरं धनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेदिति" स्मरणाच्च । तथा ( मनु. अ. ८ श्लो. ३७८ ) । "सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद्व्रजन्निति" स्मरणात् । यत्तु **शंखव**चनम् 'त्रयाणां वर्णानां धनापहारवधबन्धनक्रियाविवासनाङ्ककरणं १५ ब्राह्मणस्येति' । तत्र धनापहारः सर्वस्वापहारो विवक्षितो वधसाहचर्यात् । 'शारीरस्त्ववरोधादिर्जीवितान्तः प्रकीर्तितः । काकिण्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव चेति' । वधसर्वस्वहरणयोः सहपाठात् । यदप्युक्तम् । 'राष्ट्रादेनं बहिः कुर्यात्समग्रधनमक्षतमिति' तत्प्रथमकृतसाहसविषयं न सर्वविषयम् । शारीरस्तु ब्राह्मणस्य न कदाचिद्भवति । ( अ. ८ श्लो. ३८० ) । 'न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितमिति' सामान्येन **मनु**स्मरणात् । तथा । **मनुः** ( अ. ८ २० श्लो. ३८१ ) । 'न ब्राह्मणवधाद्भूयानधर्मो विद्यते भुवि । तस्मादस्य वधं राजा मनसाऽपि न चिन्तयेदिति' ॥ ८१ ॥

**यः साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तत्तमोवृतः ।**
**स दाप्योऽष्टगुणं दण्डं ब्राह्मणं तु विवासयेत् ॥ ८२ ॥**

अपि च **यस्तु** साक्षित्वमङ्गीकृत्यान्यैः साक्षिभिः सह **साक्ष्यं श्रावितः** सन्निगदनकाले २५ **तमोवृतो** रागाद्याक्रान्तचित्तस्तत्**साक्ष्यमन्येभ्यः** साक्षिभ्यो **निह्नुते**, नाहमत्र साक्षी भवामीति स विवादपराजये यो दण्डस्तं दण्ड**मष्टगुणं** दाप्यः । **ब्राह्मणं** पुनरष्टगुणद्रव्यदण्डदानासमर्थं **विवासयेत्** । विवासनं च नग्नीकरणगृहभङ्गदेशनिर्वासनलक्षणं विषयानुसारेण द्रष्टव्यम् । इतरेषां त्वष्टगुणद्रव्यदण्डासंभवे स्वजात्युचितकर्मकरणनिगडबन्धनकारागृहप्रवेशादि द्रष्टव्यम् । एतच्च पूर्वश्लोकेऽप्यनुसर्तव्यम् । यदा १ सर्वे साक्ष्यं निह्नुवते तदा सर्वे समानदोषाः । यदा तु साक्ष्यमुक्त्वा पुनरन्यथा वदन्ति तदाऽनुबन्धाद्यपेक्षया दण्ड्याः । यथाह **कात्यायनः** । 'उक्त्वाऽन्यथा ब्रुवाणाश्च दण्ड्याः स्युर्वाक्छलान्विता' इति । न चान्येनोक्ताः साक्षिणोऽन्येन रहस्यनुसर्तव्याः । यथाह **नारदः** । ( अ. १

जानतः साक्ष्यानङ्गीकारे दण्डः ।

यदि प्रत्यर्थी गुणवत्तमान् द्विगुणान्वाऽन्यान् साक्षिणः पूर्वोक्तविपरीतं संवादयति तदा पूर्ववादिनः साक्षिणः कूटा इति व्याचक्षते । तदसत् । प्रत्यर्थिनः क्रियानुपपत्तेः । तथा हि । अर्थी नाम साध्यस्यार्थस्य निर्देष्टा, तत्प्रतिपक्षस्तदभाववादी प्रत्यर्थी; तत्राभावस्य भावसिद्धिसापेक्षसिद्धित्वा-द्भावस्य चाभावनिरपेक्षसिद्धित्वाद्भावस्यैव साध्यत्वं युक्तम् । अभावस्य स्वरूपेण साक्ष्यादिप्रमे-
५यत्वाभावात् । अतश्चार्थिन एव क्रिया युक्ता । अपि चोत्तरानुसारेण सर्वत्रैव क्रिया नियता स्मर्यते । 'प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम् । मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेदिति' । न चैकस्मिन्व्यवहारे द्वयोः क्रिया । 'न चैकस्मिन्विवादे तु क्रिया स्याद्वादिनोर्द्व-योरिति' स्मरणात् । तस्मात्प्रतिवादिनः साक्षिणो गुणवत्तमाद्विगुणा वाऽन्यथा ब्रूयुरित्यनुपपन्नम् । अथ मतम् । द्वावपि भावप्रतिज्ञावादिनौ मदीयमिदं दायादप्राप्तं मदीयमिदं दायादप्राप्तमिति
१०प्रतिज्ञावादिनोः पूर्वापरकालविभागानाकलितमेव वदतस्तत्र द्वयोः साक्षिषु सत्सु कस्य साक्षिणो ग्राह्या इत्याकांक्षयां 'द्वयोर्विवदतोरर्थे द्वयोः सत्सु च साक्षिषु । पूर्वपक्षो भवेद्यस्य भवेयुस्तस्य साक्षिण' इति वचनेन यः पूर्वं निवेदयति तस्य साक्षिणो ग्राह्या इति स्थिते तस्यापवादमाह । 'उक्तेऽपि साक्षिभिः साक्ष्ये' इति । अतश्च पूर्वोत्तरयोर्वादिनोः समसंख्येषु समगुणेषु साक्षिषु सत्सु पूर्ववादिन एव साक्षिणः प्रष्टव्याः । यदा तु उत्तरवादिनः साक्षिणो गुणवत्तमा द्विगुणा वा तदा
१५प्रतिवादिनः साक्षिणः प्रष्टव्याः । एवं च नाभावस्य साध्यता, उभयोरपि भाववादित्वाच्चतुर्विधो-त्तरविलक्षणत्वाच्च प्रकृतोदाहरणे न क्रियाव्यवस्था । एकस्मिन्व्यवहारे यथैकस्यार्थिनः क्रियाद्वयं, परमते तथा वादिप्रतिवादिनोः क्रियाद्वयेऽप्यविरोध इति तदप्याचार्यो नानुमन्यते । 'उक्तेऽपि साक्षिभिः साक्ष्ये' इत्यपिशब्दादर्थात्प्रकरणाद्वाऽर्थस्यानवगमादित्यलं प्रसङ्गेन ॥ ८० ॥

कूटसाक्षिणो दर्शितास्तेषां दण्डमाह—

२० **पृथक्पृथग्दण्डनीयाः कूटकृत्साक्षिणस्तथा ।**
**विवादाद्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः ॥ ८१ ॥**

यो धनदानादिना कूटान्साक्षिणः करोतीति स **कूटकृत्** । **साक्षिणश्च** ये तथा कूटास्ते **वि-वादा**द्विवादपराजयात्पराजये यो दण्डस्तत्र तत्रोक्तः तं **दण्डं द्विगुणं** पृथक्पृथगेकैकशो दण्ड-नीयाः । **ब्राह्मणस्तु विवास्यो** राष्ट्रान्निर्वास्यो न दण्डनीयः । एतच्च लोभा-दिकारणविशेषापरिज्ञाने अनभ्यासे च द्रष्टव्यम् । 'लोभादिकारणविशेषपरिज्ञाने अभ्यासे च **मनुनोक्तम्** । (अ. ८ श्लो. १२०।१२१.) । 'लोभात्सहस्रं दण्ड्यः स्यान्मोहात्पूर्वं तु साहसम् । भयाद्वौ मध्यमौ दण्डौ मैत्र्यात्पूर्वं चतुर्गुणम् । कामाद्दशगुणं पूर्वं क्रोधात्तु त्रिगुणं परम् । अज्ञानाद्वे शते पूर्णे बालिश्याच्छतमेव त्विति'' । तत्र **लोभो**ऽर्थलिप्सा । **मोहो** विपर्ययज्ञानम् । **भयं** संत्रासः । **मैत्री** स्नेहातिशयः । **कामः** स्त्रीव्यतिरेकाभिलाषः । **क्रोधो**ऽ-
३० मर्षः । **अज्ञान**मस्फुटज्ञानम् । **बालिश्यं** ज्ञानानुत्पादः । सहस्रादिषु ताम्रिकाः पणा गृह्यन्ते ।

(कूटसाक्षिणां दण्डः ।)

२५

तथा (मनु. अ. ८ श्लो. १२३.) । 'कौटसाक्ष्यं तु कुर्वाणांस्त्रीन्वर्णान्धार्मिको नृपः । प्रवासयेद्दण्डयित्वा ब्राह्मणं तु विवासयेदिति' । एतच्चाभ्यासविषयम् । कुर्वाणानितिवर्त-मानकालनिर्देशात् । त्रीन्वर्णान् क्षत्रियादीन् पूर्वोक्तं दण्डयित्वा प्रवासयेत् मारयेत् ।

साक्षिणो वाऽपि पूर्वमावेदितं न चेत्'। 'यथा पक्केषु धान्येषु निष्फलाः प्रावृषो गुणाः। निर्णिक्त-व्यवहाराणां प्रमाणमफलं तथेति' (अ. १ श्लो. ६३) **नारदवचनाच्च**। उच्यते। यदाऽर्थी प्रतिज्ञा-तार्थस्यान्तरात्मसाक्षित्वेनानाविष्कृतदोषाणामपि साक्षिणां वचनमर्थविसंवादित्वेनाप्रमाणं मन्यमानः साक्षिष्वपि दोषं कल्पयति तदा प्रमाणान्तरान्वेषणं केन वार्यते। उक्तं च। 'यस्य च दुष्टं करणं, यत्र च मिथ्येति प्रत्ययः, स एवासमीचीन' इति। यथा चक्षुरादिकरणदोषानध्यवसायेऽप्यर्थविसंवादा- ५ त्सजनितस्य ज्ञानस्य प्रामाण्येन करणदोषकल्पना। तथेहापि साक्षिपरीक्षातिरेकेण वाक्यपरीक्षो-पदेशाच्च 'साक्षिभिर्भाषितं वाक्यं सह सभ्यैः परीक्षयेदिति' **कात्यायनेना**प्युक्तम्। 'यदा शुद्धा क्रिया न्यायात्तदा तद्वाक्यशोधनम्। शुद्धाच्च वाक्याद्यः शुद्धः स शुद्धोऽर्थ इति स्थितिरिति'। क्रिया साक्षिलक्षणा 'नार्थिसंबन्धिनो नाप्ता' इति न्यायाद्यदा शुद्धा तदा तद्वाक्यशोधनं साक्षि-वाक्यशोधनं कर्तव्यम्। वाक्यशुद्धिश्च सत्यार्थप्रतिपादनेन। 'सत्येन शुद्ध्यते वाक्यमिति' स्मर- १० णात्। एवं शुद्धायाः क्रियायाः शुद्धवाक्याच्च यः शुद्धोऽवगतोऽर्थः स शुद्धस्तथाभूत इति स्थिति-रीदृशी मर्यादा न्यायविदाम्। करणदोषबाधकप्रत्ययाभावे सति अवितथ एवार्थ इत्यर्थः।

ननु स्वयमर्थिना प्रमाणीकृतान् साक्षिणोऽतिक्रम्य कथं क्रियान्तरं प्रमाणीक्रियते। नैष दोषः। यतः 'क्रियां बलवतीं मुक्त्वा दुर्बलां योऽवलम्बते। स जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात्क्रियामिति' **कात्यायनेन** जयावधारणोत्तरकालं क्रियान्तरपरिग्रहनिषेधाज्जयावधारणात्प्राक् क्रियान्तरपरिग्रहो १५ दर्शितः। **नारदेना**पि 'निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेदिति' (अ. १ श्लो. ६२) वदता जयावधारणोत्तरकालमेव प्रमाणान्तरं निषिद्धं न प्रागपि। तस्मादुक्तेऽपि साक्षिभिः साक्ष्ये अपरि-तुष्यता क्रियान्तरमङ्गीकर्तव्यमिति स्थितम्।

एवं स्थिते यद्यभिहितवचनेभ्यः साक्षिभ्यो गुणवत्तमाः द्विगुणा वा पूर्वनिर्दिष्टा असन्निहिताः साक्षिणः सन्ति तदा त एव प्रमाणीकर्तव्याः। 'स्वभावेनैव यद्ब्रूयुस्तद्ग्राह्यं व्यावहारिकमि'त्यस्य २० सर्वव्यवहारशेषत्वात्। 'निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत्। लिखितं साक्षिणो वाऽपि पूर्वमावेदितं न चेदिति' **नारदवचना**च्च (अ. १ श्लो. ६२)। पूर्वनिर्दिष्टानामसंभवे त्वनिर्दिष्टा अपि तथाविधा एव साक्षिणो ग्राह्या न दिव्यम्। 'संभवे साक्षिणां प्राज्ञो वर्जयेद्दैविकीं क्रियामिति' स्मरणात्। तेषामसंभवे दिव्यं प्रमाणं कर्तव्यम्। अतःपरमपरितुष्यताऽप्यर्थिना न प्रमाणान्तरमन्वे-षणीयम्। **मनु**वचनादिति परिसमापनीयो व्यवहारः। २५

यत्र तु प्रत्यर्थिनः स्वप्रत्ययविसंवादित्वेन साक्षिवचनस्याप्रामाण्यं मन्यमानस्य साक्षिषु दोषारो-पणेनापरितोषस्तत्र प्रत्यर्थिनः क्रियोपन्यासावसराभावात्सप्ताहावधिकदैविकराजिकव्यसनोद्भवेन सा-क्षिपरीक्षणं कर्तव्यम्। तत्र च दोषावधारणे विवादास्पदीभूतमृणं दाप्याः। सारानुसारेण दण्ड-नीयाश्च। अथ दोषानवधारणं तदा प्रत्यर्थिना तावता संतोष्टव्यम्। यथाह **मनुः**। (अ. ८ श्लो. १०८)। 'यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः। रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो ३० दमं च स' इति। एतच्च 'यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेदि'त्यस्यापरितुष्यत्प्रत्य-र्थिविषयेऽपवादो द्रष्टव्यः।

केचि'दुक्तेऽपि साक्षिभिः साक्ष्ये' इत्येतद्वचनमर्थिना निर्दिष्टेषु साक्षिष्वर्थ्यनुकूलमभिहितवत्सु

नष्टं वा तदा शुद्ध्यै अधमर्णत्वनिवृत्त्यर्थमन्यल्लेख्यं कारयेदुत्तमर्ण अधमर्णः। पूर्वोक्तक्रमेणोत्तमर्णो विशुद्धिपत्रमधमर्णाय दद्यादित्यर्थः।

ससाक्षिके ऋणे कृत्स्ने दातव्ये किं कर्तव्यमित्यत आह—

**साक्षिमच्च भवेद्यद्वा तद्दातव्यं ससाक्षिकम् ॥ ९४ ॥**

यत्तु ससाक्षिकमृणं तत्पूर्वसाक्षिसमक्षमेव दद्यात् ॥ ९४ ॥

इति लेख्यप्रकरणम्

## अथ दिव्यप्रकरणम् ७

लिखितसाक्षिभुक्तिलक्षणं त्रिविधं मानुषप्रमाणमुक्तम्। अथावसरप्राप्तं दिव्यं प्रमाणमभिधास्यन् 'तुलाग्न्याप इत्यादि'भिराद्यैः पञ्चभिः श्लोकैर्दिव्यमातृकां कथयति। तत्र तावद्दिव्यान्युपदिशति ॥ १०

**तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये।**

तुलादीनि कोशान्तानि पञ्च **दिव्यानीह** धर्मशास्त्रे **विशुद्धये** संदिग्धस्यार्थस्य संदेहनिवृत्तये दातव्यानीति ॥

अन्यत्रान्यान्यपि तण्डुलादीनि दिव्यानि सन्ति। 'घटोऽग्निरुदकं चैव विषं कोशस्तथैव च। तण्डुलाश्चैव दिव्यानि सप्तमस्तप्तमाषक' इति **पितामह**स्मरणात्। अतः कथमेतावन्त्येवेत्यत १५ आह—

**महाभियोगेष्वेतानि**

**एतानि महाभियोगेष्वेव** नान्यत्रेति नियम्यते, न पुनरिमान्येव दिव्यानीति। महत्त्वावधिं च वक्ष्यति। नन्वल्पाभियोगेऽपि कोशोऽस्त्येव[3]। 'कोशमल्पेऽपि दापयेदिति' स्मरणात्। सत्यम्। कोशस्य तुलादिषु पाठो न महाभियोगेष्वेवेति नियमार्थः। किं तु सावष्टम्भाभियोगेऽपि प्राप्त्यर्थः। २० अन्यथा शङ्काभियोग एव स्यात्। 'अवष्टम्भाभियुक्तानां[4] धटादीनि विनिर्दिशेत्। तण्डुलाश्चैव कोशश्च शङ्कास्वेव न संशय' इति स्मरणात् ॥

महाभियोगेषु शङ्कितेषु सावष्टम्भेषु चाविशेषेण प्राप्तावपवादमाह—

**शीर्षकस्थेऽभियोक्तरि ॥ ९५ ॥**

एतानि तुलादीन्य**भियोक्तरि शीर्षकस्थे**ऽभियुक्तस्य भवन्ति। शीर्षकं शिरः। व्यवहारस्य २५ चतुर्थः पादो जयपराजयलक्षणस्तेन च दण्डो लक्ष्यते; तत्र तिष्ठतीति **शीर्षकस्थः**; तत्प्रयुक्तदण्डभागित्यर्थः ॥ ९५ ॥

'ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनमिति' ( ७ श्लोके ) भावप्रतिज्ञावादिन एव क्रियाव्यवस्था दर्शिता; तदपवादार्थमाह—

१ फ—तत्पूर्वसाक्षिकमेव। २ ग—ध्यासन्। ३ कोश इष्यते इत्यपिपाठः। ४ घ=अवष्टंभादियुक्तानां।

**रुच्या वाऽन्यतरः कुर्यादितरो वर्तयेच्छिरः ।**

**रुच्या**ऽभियोक्त्रभियुक्तयोः परस्परसंप्रतिपत्त्याऽ**न्यतरो**ऽभियुक्तोऽभियोक्ता वा दिव्यं **कुर्या-दितरो**ऽभियुक्तः अभियोक्ता वा **शिरः** शारीरमर्थदण्डं वा **वर्तयेदङ्गी**कुर्यात् । अयमभिसन्धिः । न मानुषप्रमाणवद्दिव्यं प्रमाणं भावैकगोचरं अपि तु भावाभावविशेषेण गोचरयति । अतश्च ५ मिथ्योत्तरे प्रत्यवस्कन्दने प्राङ्न्याये वाऽर्थिप्रत्यर्थिनोरन्यतरस्येच्छया दिव्यं भवतीति ॥

अल्पाभियोगे महाभियोगे शङ्कासावष्टम्भयोरप्यविशेषेण कोशो भवतीत्युक्तं । तुलादीनि विषा-न्तानि तु महाभियोगेष्वेव सावष्टम्भेष्वेवेति च नियमो दर्शितः । तत्रावष्टम्भाभियोगेष्वेवेत्यस्या-पवादमाह—

**विनाऽपि शीर्षकात्कुर्यान्नृपद्रोहेऽथ पातके ॥ ९६ ॥**

१० **राजद्रोहा**भिशङ्कायां ब्रह्महत्यादि**पातका**भिशङ्कायां च शिरःस्थायिना विनाऽपि तुलादीनि **कुर्यात्** । महाचौर्याभिशङ्कायां च । यथाऽऽह । 'राजभिः शङ्कितानां च निर्दिष्टानां च दस्यु-भिः । आत्मशुद्धिपराणां च दिव्यं देयं शिरो विनेति' । तण्डुलाः पुनरल्पचौर्यशङ्कायामेव । 'चौर्ये तु तण्डुला देया नान्यत्रेति विनिश्चय' इति **पितामहव**चनात् ॥ तप्तमाषस्तु महाचौ-र्याभिशङ्कायामेव । 'चौर्यशङ्काभियुक्तानां तप्तमाषो विधीयत' इति स्मरणात् ॥ अन्ये पुनः १५ शपथा अल्पार्थविषयाः । "सत्यवाहनशस्त्राणि गोबीजकनकानि च । देवतापितृपादांश्च दत्तानि सुकृतानि च । स्पृशेच्छिरांसि पुत्राणां दाराणां सुहृदां तथा ॥ अभियोगेषु सर्वेषु कोशपानमथापि वा । इत्येते शपथाः प्रोक्ता **मनुना** स्वल्पकारण' इति **नारदादि**स्मरणात् ॥

यद्यपि मानुषप्रमाणानिर्णेयस्य निर्णायकं यत्तद्दिव्यमिति लोकप्रसिद्ध्या शपथानामपि दिव्यत्वं तथापि कालान्तरनिर्णयनिमित्तत्वेन समनन्तरनिर्णयनिमित्तेभ्यो धटादिभ्यो दिव्येभ्यो भेदत्वव्यप-२० देशो ब्राह्मणपरिव्राजकवत् । कोशस्य तु शपथत्वेऽपि धटादिषु पाठो महाभियोगविषयत्वेनावष्टम्भा-भियोगविषयत्वेन च धटादिसाम्यान्नतु समनन्तरनिर्णयनिमित्तत्वेन । तण्डुलानां तप्तमाषस्य च समनन्तरनिर्णयनिमित्तत्वेऽप्यल्पविषयत्वेन शङ्काविषयत्वेन च धटादिवैलक्षण्यात्तेष्वपाठ इति सन्तोष्टव्यम् ॥ एतानि च दिव्यानि शपथाश्च यथासंभवमृणादिषु विवादेषु प्रयोक्तव्यानि ।

यत्तु **पितामहवचन**म् 'स्थावरेषु विवादेषु दिव्यानि परिवर्जयेदिति'; तदपि लिखितसामन्ता-२५ दिसद्भावे दिव्यानि परिवर्जयेदिति व्याख्येयम् । ननु विवादान्तरेष्वपि प्रमाणान्तरसंभवे दिव्यानाम-नवकाश एव । सत्यम् । ऋणादिषु विवादेषु उक्तलक्षणसाक्ष्युपन्यासे अर्थिना कृतेऽपि प्रत्यर्थी यदि च दण्डाभ्युपगमावष्टम्भेन दिव्यमवलम्बते तदा दिव्यमपि भवति । साक्षिणामाशयदोषसंभवाद्दिव्यस्य निर्दोषत्वेन वस्तुतत्त्वविषयत्वात्तल्लक्षणत्वाच्च धर्मस्य । यथाह **नारदः** । "तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिणि । दैवसाध्ये पौरुषेयीं न लेख्यं वा प्रयोजयेदिति" । स्थावरेषु विवादेषु ३० प्रत्यर्थिना दण्डावष्टम्भेन दिव्यावलम्बने कृतेऽपि सामन्तादिदृष्टप्रमाणसद्भावे न दिव्यं ग्राह्यमिति विकल्पनिराकरणार्थम् । स्थावरेषु विवादेष्वित्यादि**पितामह**वचनं नात्यन्तिकदिव्यनिराकरणा-र्थम् । लिखितसामन्ताद्यभावे स्थावरविवादेष्वनिर्णयप्रसंगात् ॥ ९६ ॥

१ दस्युत्वेन निर्दिष्टानामित्यर्थः । २ घ—निषिद्धत्वेन ।

**सचैलं स्नातमाहूय सूर्योदय उपोषितम् ।**
**कारयेत्सर्वदिव्यानि नृपब्राह्मणसन्निधौ ॥ ९७ ॥**

किंच । पूर्वेद्युरु**पोषितमुदि**ते सूर्ये **सचैलं स्नातं** दिव्यग्राहिण**माहूय** नृपस्य सभ्यानां च ब्राह्मणानां सन्निधौ सर्वाणि दिव्यानि **कारये**त्प्राड्विवाकः । 'त्रिरात्रोपोषिताय स्युरेकरात्रोषिताय वा । नित्यं दिव्यानि देयानि शुचये चार्द्रवाससे' इत्युपवासविकल्पः ५ **पितामहेनोक्तो** बलवदबलवन्महाकार्याल्पकार्यविषयत्वेन व्यवस्थितो द्रष्टव्यः । उपवासनियमश्च कारयितुः प्राड्विवाकस्यापि । 'दिव्येषु सर्वकार्याणि प्राड्विवाकः समाचरेत् । अध्वरेषु यथाध्वर्युः सोपवासो नृपाज्ञयेति' **पितामह**वचनात् ॥

दिव्ये साधारण-विधिः ।

अत्र च यद्यपि 'सूर्योदय' इत्यविशेषेणोक्तं तथापि शिष्टसमाचाराद्भानुवारे दिव्यानि देयानि । तत्रापि 'पूर्वाह्णेऽग्निपरीक्षा स्यात्पूर्वाह्णे च घटो भवेत् । मध्याह्ने तु जलं देयं धर्मतत्त्वमभीप्सता ॥ १० दिवसस्य तु पूर्वाह्णे कोशसिद्धिर्विधीयते । रात्रौ तु पश्चिमे यामे विषं देयं सुशीतल' इति **पितामहोक्तो** विशेषो द्रष्टव्यः ॥ अनुक्तकालविशेषाणां तण्डुलतप्तमाषप्रभृतीनां पूर्वाह्ण एव प्रदानम् । 'पूर्वाह्णे सर्वदिव्यानां प्रदानं परिकीर्तितमिति' सामान्येन **नारद**स्मरणात् । अहनि त्रिधा विभक्ते पूर्वो भागः पूर्वाह्णो, मध्यो मध्याह्नः, उत्तमोऽपराह्णः ।

तथाऽपरोऽपि कालविशेषो विधिप्रतिषेधमुखेन दर्शितः । **विधिमुख**स्तावत् । "अग्नेः शिशिर- १५ हेमन्तौ वर्षाश्चैव प्रकीर्तिताः । शरद्ग्रीष्मेषु सलिलं हेमन्ते शिशिरे विषम् । चैत्रो मार्गशिराश्चैव वैशाखश्च तथैव च । एते साधारणा मासा दिव्यानामविरोधिनः । कोशस्तु सर्वदा देयस्तुला स्यात्सार्वकालिकीति"। कोशग्रहणं सर्वशपथानामुपलक्षणम् । तण्डुलानां पुनर्विशेषानभिधानात्सार्वकालिकत्वम् । **प्रतिषेधमुखो**ऽपि । 'न शीते तोयसिद्धिः स्यान्नोष्णकालेऽग्निशोधनम् । न प्रावृषि विषं दद्यात्प्रवाते न तुलां तथा । नापराह्णे न सन्ध्यायां न मध्याह्ने कदाचनेति' । 'न शीते तोयशुद्धिः २० स्यादि'त्यत्र शीतशब्देन हेमन्तशिशिरवर्षाणां ग्रहणम् । नोष्णकालेऽग्निशोधनमित्यत्रोष्णकालशब्देन ग्रीष्मशरदोर्विधानलब्धस्यापि पुनर्निषेध आदरार्थः । प्रयोजनं तु वक्ष्यते ॥ ९७ ॥

**तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम् ।**
**अग्निर्जलं वा शूद्रस्य यवाः सप्त विषस्य वा ॥ ९८ ॥**

**स्त्री** स्त्रीमात्रं जातिवयोवस्थाविशेषानादरेण । **बाल** आ षोडशाद्वर्षाज्जातिविशेषानादरेण । २५ **वृद्धो**ऽशीतिकावरः । **अन्धो** नेत्रविकलः । **पङ्गुः** पादविकलः । **ब्राह्मणो** जातिमात्रम् । **रोगी** व्याधितः । एतेषां शोधनार्थं तुलैवेति नियम्यते । **अग्निः** फालस्तप्तमाषश्च क्षत्रियस्य । **जलमेव** वैश्यस्य । वाशब्दोऽवधारणे । **विषस्य यवा** उक्तपरिमाणाः । **सप्तैव शूद्रस्य** शोधनार्थं भवन्ति । ब्राह्मणस्य तुलाविधानात् शूद्रस्य यवाः सप्त विषस्य वेति विषविधानादग्निर्जलं वेति क्षत्रियवैश्यविषयमुक्तम् । एतदेव स्पष्टीकृतं **पितामहे** ३० 'ब्राह्मणस्य घटो देयः क्षत्रियस्य हुताशनः । वैश्यस्य सलिलं प्रोक्तं विषं शूद्रस्य दापयेदिति' ।

अधिकारि-व्यवस्थामाह ।

१ फक-वेला । २ फ-सर्वकालिकीति ।

यत्तु स्त्र्यादीनां दिव्याभावस्मरणम् । 'सव्रतानां भृशार्तानां व्याधितानां तपस्विनाम् । स्त्रीणां च न भवेद्दिव्यं यदि धर्मस्त्वपेक्षित' इति त'द्रुच्या वाऽन्यतरः कुर्यादिति' विकल्पनिवृत्त्यर्थम् । एतदुक्तं भवति । अवष्टम्भाभियोगेषु स्त्र्यादीनामभियोक्तृत्वेऽभियोज्यानामेव दिव्यमेतेषामभियोज्यत्वेऽप्यभियोक्तृणामेव दिव्यम् । परस्पराभियोगे तु विकल्प एव । तत्रापि तुलैवेत्यनेन ५ वचनेन नियम्यते । तथा महापातकादिशङ्काभियोगे स्त्र्यादीनां तुलैवेति । एतच्च वचनं सर्वदिव्यसाधारणेषु मार्गशिरश्चैत्रवैशाखेषु स्त्र्यादीनां सर्वदिव्यसमवधाने नियामकतयाऽर्थवत् । न च सर्वकालं स्त्रीणां तुलैवेति । 'स्त्रीणां च न विषं प्रोक्तं न चापि सलिलं स्मृतम् । घटकोशादिभिस्तासामन्तस्तत्त्वं विचारयेदिति' विषसलिलव्यतिरिक्तघटकोशाग्न्यादिभिः शुद्धिविधानात् । एवं बालादिष्वपि योजनीयम् ।

१० तथा ब्राह्मणादीनामपि न सार्वकालिकस्तुलादिनियमः । 'सर्वेषामेव वर्णानां कोशशुद्धिर्विधीयते । सर्वाण्येतानि सर्वेषां ब्राह्मणस्य विषं विनेति' **पितामह**-वचनात् । तस्मात्साधारणे काले बहुदिव्यसमवधाने तुलादिनियमार्थमेवेदं वचनम् । कालान्तरे तु तत्तत्कालविहितं सर्वेषाम् । तथाहि । वर्षास्वग्निरेव सर्वेषाम् । हेमन्तशिशरयोस्तु क्षत्रियादित्रयाणामग्निविषयोर्विकल्पः । ब्राह्मणस्य त्वग्निरेव न कदाचिद्विषम् । 'ब्राह्मणस्य विषं विनेति' प्रतिषेधात् । ग्रीष्मशरदोस्तु सलिलमेव । १५ येषां तु व्याधिविशेषेणाग्न्यादिनिषेधः, 'कुष्ठिनां वर्जयेदग्निं सलिलं श्वासकासिनाम् । पित्तश्लेष्मवतां नित्यं विषं तु परिवर्जयेदिति' तेषामग्न्यादिकालेऽपि साधारणं तुलाद्येव दिव्यं भवति । तथा 'तोयमग्निर्विषं चैव दातव्यं बलिनां नृणामिति' वचनाद्दुर्बलानामपि सर्वथा विधिप्रतिषेधादृतुकालानतिक्रमेण जातिवयोवस्थाश्रितानि दिव्यानि देयानि ॥ ९८ ॥

महाभियोगेष्वेतानीत्युक्तं; तत्राभियोगस्य यदपेक्ष्यं महत्त्वं तदिदानीमाह—

२० **नासहस्राद्धरेत्फालं न विषं न तुलां तथा ।**

**पणसहस्रादर्वाक् फालं विषं तुलां** वा न कारयेत् । मध्यवर्ति जलमपि । यथोक्तम् । 'तुलादीनि विषान्तानि गुरुष्वर्थेषु दापयेदिति' । अत्र कोशस्याग्रहणम् 'कोशमल्पेऽपि दापयेदि'त्यल्पाभियोगेऽपि तस्य स्मरणात् । एतानि चत्वारि दिव्यानि पणसहस्रादूर्ध्वमेव भवन्तीति । नार्वागित्यर्थः । नन्वर्वागप्यग्न्यादीनि **पितामहेन** दर्शितानि । 'सहस्रे तु घटं दद्यात्सहस्रार्धे २५ तथाऽऽयसम् । अर्धस्यार्धे तु सलिलं तस्यार्धे तु विषं स्मृतमिति' । सत्यम् । तत्रेत्थं व्यवस्था । यद्द्रव्यापहारे पातित्यं भवति तद्विषयं **पितामह**वचनमितरद्रव्यविषयं **योगीश्वर**वचनमिति । एतच्च वचनद्वयं स्तेयसाहसविषयम् । अपह्नवे तु विशेषो दर्शितः **कात्यायनेन** ।

'दत्तस्यापह्नवो यत्र प्रमाणं तत्र कल्पयेत् । स्तेयसाहसयोर्दिव्यं स्वल्पेऽप्यर्थे प्रदापयेत् ॥
सर्वद्रव्यप्रमाणं तु ज्ञात्वा हेम प्रकल्पयेत् । हेमप्रमाणयुक्तं तु तदा दिव्यं नियोजयेत् ॥
३० ज्ञात्वा संख्यां सुवर्णानां शतनाशे विषं स्मृतम् । अशीतेस्तु विनाशे वै दद्यादेव हुताशनम् ॥
षष्ट्या नाशे जलं देयं चत्वारिंशति वै घटम् । विंशद्दशविनाशे तु कोशपानं विधीयते ॥
पञ्चाधिकस्य वा नाशे ततोऽर्धार्धस्य तण्डुलाः । ततोऽर्धार्धविनाशे हि स्पृशेत्पुत्रादिमस्तकान् ॥
ततोऽर्धार्धविनाशे तु लौकिकयश्च क्रियाः स्मृताः । एवं विचारयन्राजा धर्मार्थाभ्यां न हीयत' इति ॥

---

१ घ–फालं तु ।

'ज्ञात्वा संख्यां सुवर्णानामि'त्यत्र सुवर्णशब्दः 'षोडश माषाः सुवर्ण' इत्युक्तपरिमाणवचनः। नाशशब्दश्चात्रापह्नववचनः। 'नासहस्राद्धरेत्फाल'मित्यत्र तु ताम्रिकपणसहस्रं बोद्धव्यम्।

ननु नृपद्रोहे पातके चैतानि दिव्यान्युक्तानि। तत्कथं 'नासहस्राद्धरेत्फाल'मित्यत्राह—

**नृपार्थेष्वभिशापे च वहेयुः शुचयः सदा ॥ ९९ ॥**

**नृपद्रोहेषु** महापातकाभियोगे च सदा द्रव्यसंख्यामनपेक्ष्यैवैतानि दिव्यानि कुर्युरुपवासा- ५ दिना **शुचयः** सन्तः। तथा देशविशेषोऽपि **नारदे**नोक्तः।"सभाराजकुलद्वारे देवायतनचत्वरे। निधेयो निश्चलः पूज्यो धूपमाल्यानुलेपनैरिति"। निधेयो धटः। व्यवस्था च **कात्यायने**नोक्ता। 'इन्द्रस्थानेऽभिशस्तानां महापातकिनां नृणाम्। नृपद्रोहे प्रवृत्तानां राजद्वारे प्रयोजयेत्। प्रातिलोम्यप्रसूतानां दिव्यं देयं चतुष्पथे। अतोऽन्येषु सभामध्ये दिव्यं देयं विदुर्बुधाः। अस्पृश्याधमदासानां म्लेच्छानां पापकारिणाम्। प्रातिलोम्यप्रसूतानां निश्चयो न तु राजनि। तत्प्रसिद्धानि १० दिव्यानि संशये तेषु निर्दिशेदिति'। **इति दिव्यमातृका** ॥ ९९ ॥

एवं सर्वदिव्योपयोगिनीं दिव्यमातृकामभिधायेदानीं धटादिदिव्यानां प्रयोगमाह—

**तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः।**
**प्रतिमानसमीभूतो रेखां कृत्वाऽवतारितः ॥ १०० ॥**
**'त्वं तुले सत्यधामासि पुरा देवैर्विनिर्मिता।** १५
**तत्सत्यं वद कल्याणि संशयान्मां विमोचय ॥ १०१ ॥**
**यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय।**
**शुद्धश्चेद्गमयोर्ध्वं मां' तुलामित्यभिमन्त्रयेत् ॥ १०२ ॥**

तुलाया धारणं तोलनं ये विदन्ति सुवर्णकारप्रभृतयः तैः **प्रतिमानेन** मृदादिना **समीभूतः** समीकृतस्**तुलामाश्रितो**ऽधिरूढोऽभियुक्तोऽभियोक्ता वा दिव्यकारी **रेखां कृ**- २० **त्वा** येन सन्निवेशेन प्रतिमानसमीकरणदशायां शिक्यतलेऽवस्थितस्तस्मिन् पाण्डुलेख्येनाङ्कयित्वाऽवतारितस्तुलामभिमन्त्रयेत् प्रार्थयेतानेन मन्त्रेण। 'हे तुले **त्वं सत्यस्य** स्थानमसि। **पुरा** आदिसृष्टौ **देवै**र्हिरण्यगर्भप्रभृतिभि**र्विनिर्मितो**त्पादिता। **तस्मा**त्**सत्यं** संदिग्धस्यार्थस्य स्वरूपं **वद** दर्शय। **कल्याणि** शोभने अस्मा**त्संशयान्मां विमोचय**। हे **मातः यद्यहं पापकृ**दसत्यवाद्य**स्मि ततो मां त्वमधो नय**। अथ **शुद्धः** स- २५ त्यवाद्यस्मि ततो **मामूर्ध्वं गमये**ति'। प्राड्विवाकस्य तुलाभिमन्त्रणमन्त्रः स्मृत्यन्तरोक्तः। अयं तु दिव्यकारिणः। जयपराजयलक्षणम् तु मन्त्रलिङ्गादेवावगम्यत इति न पृथगुक्तम्। **धटनिर्माणं** पुनरारोहणाद्यर्थसिद्धमेव **पितामहनारदादिभिः** स्पष्टीकृतम्। तद्यथाः—

धटादिदिव्यप्रयोगः।

"छित्वा तु यज्ञियं वृक्षं यूपवन्मन्त्रपूर्वकम्। प्रणम्य लोकपालेभ्यस्तुला कार्या मनीषिभिः ॥
मन्त्रः सौम्यो वानस्पत्यच्छेदने जप्य एव च। चतुरस्रा तुला कार्या दृढा ऋज्वी तथैव च ॥ ३०
कटकानि च देयानि त्रिषु स्थानेषु चार्थवत्। चतुर्हस्ता तुला कार्या पादौ चोपरि तत्समौ ॥

प्रान्तरं तु तयोर्हस्तौ भवेदध्यर्धमेव वा । हस्तद्वयं निखेयं तु पादयोरुभयोरपि ॥
तोरणे च तथा कार्ये पार्श्वयोरुभयोरपि । घटादुच्चतरे स्यातां नित्यं दशभिरङ्गुलैः ॥
अवलम्बौ च कर्तव्यौ तोरणाभ्यामधोमुखौ । मृन्मयौ सूत्रसंबद्धौ घटमस्तकचुम्बिनौ ॥
प्राङ्मुखो निश्चलः कार्यः शुचौ देशे घटस्तथा । शिक्यद्वयं समासज्य पार्श्वयोरुभयोरपि ॥
५ प्राङ्मुखान्कल्पयेद्दर्भान् शिक्ययोरुभयोरपि । पश्चिमे तोलयेत्कर्तनन्यस्मिन्मृत्तिकां शुभाम् ।
पिटकं पूरयेत्तस्मिन्निष्टकाग्रावपांसुभिः ॥"

अत्र च मृत्तिकेष्टकाग्रावपांसूनां विकल्पः ।

"परीक्षका नियोक्तव्यास्तुलामानविशारदाः । वणिजो हेमकाराश्च कांस्यकारास्तथैव च ॥
कार्यः परीक्षकैर्नित्यमवलम्बसमो घटः । उदकं च प्रदातव्यं घटस्योपरि पण्डितैः ॥
१० यस्मिन्न प्लवते तोयं स विज्ञेयः समो घटः । तोलयित्वा नरं पूर्वं पश्चात्तमवतार्य तु ॥
घटं तु कारयेन्नित्यं पताकाध्वजशोभितम् । तत आवाहयेद्देवान् विधिनाऽनेन मन्त्रवित् ॥
वादित्रतुर्यघोषैश्च गन्धमाल्यानुलेपनैः । प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततो वदेत् ॥
'एह्येहि भगवन्धर्म ह्यस्मिन् दिव्ये समाविश । सहितो लोकपालैश्च वस्वादित्यमरुद्गणैः ॥
आवाह्य तु घटे धर्मं पश्चादङ्गानि विन्यसेत् । इन्द्रं पूर्वे तु संस्थाप्य प्रेतेशं दक्षिणे तथा ॥
१५ वरुणं पश्चिमे भागे कुबेरं चोत्तरे तथा । अग्न्यादिलोकपालांश्च कोणभागेषु विन्यसेत् ॥
इन्द्रः पीतो यमः श्यामो वरुणः स्फटिकप्रभः । कुबेरस्तु सुवर्णाभो वह्निश्चापि सुवर्णभः ॥
तथैव निर्ऋतिः श्यामो वायुर्धूम्रः प्रशस्यते । ईशानस्तु भवेद्रक्त एवं ध्यायेत्क्रमादिमान् ॥
इंद्रस्य दक्षिणे पार्श्वे वसूनाराधयेद्बुधः । धरो ध्रुवस्तथा सोम आपश्चैवानिलोऽनलः ॥
प्रत्यूषश्च प्रभातश्च वसवोऽष्टौ प्रकीर्तिताः । देवेशेशानयोर्मध्ये आदित्यानां तथा गणम् ॥
२० धाताऽर्यमा च मित्रश्च वरुणोंऽशुर्भगस्तथा । इन्द्रो विवस्वान्पूषा च पर्जन्यो दशमः स्मृतः ॥
ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः । इत्येते द्वादशादित्या नामभिः परिकीर्तिताः ॥
अग्नेः पश्चिमभागे तु रुद्राणामयनं विदुः । वीरभद्रश्च शम्भुश्च गिरिशश्च महायशाः ॥
अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः । भुवनाधीश्वरश्चैव कपाली च विशांपतिः ॥
स्थाणुर्भवश्च भगवान् रुद्रास्त्वेकादश स्मृताः । प्रेतेशरक्षोमध्ये तु मातृस्थानं प्रकल्पयेत् ॥
२५ ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा । वाराही चैव माहेंद्री चामुण्डा गणसंयुता ॥
निर्ऋतेरुत्तरे भागे गणेशायतनं विदुः । वरुणस्योत्तरे भागे मरुतां स्थानमुच्यते ॥
गगनः स्पर्शनो वायुरनिलो मारुतस्तथा । प्राणः प्राणेशजीवौ च मरुतोऽष्टौ प्रकीर्तिताः ॥
घटस्योत्तरभागे तु दुर्गामावाहयेद्बुधः । एतासां देवतानां तु स्वनाम्ना पूजनं विदुः ॥
भूषावसानं धर्माय दत्वा चार्घ्यादिकं क्रमात् । अर्घ्यादि पश्चादङ्गानां भूषान्तमुपकल्पयेत् ॥
३० गन्धादिकां नैवेद्यान्तां परिचर्यां प्रकल्पयेदिति" ।

अत्र च तुला पताकाध्वजालङ्कृतां विधाय तस्यामे'ह्येहीति' मन्त्रेण धर्ममावाह्य 'धर्मायार्घ्यं कल्पयामि नम' इत्यादिना प्रयोगेणार्घ्यपाद्याचमनीयमधुपर्काचमनीयस्नानवस्त्रयज्ञोपवीताचमनीयमुकुटकटका-

---

१ हस्तद्वयं निधेयमिति पाठान्तरम् ।

**मम्**। **योग**शब्देनालब्धलाभकरणं श्रौतस्मार्ताग्निसाध्यम**िष्टं कर्म** लक्ष्यते। **क्षेम**शब्देन लब्धपरिरक्षणहेतुभूतं बहिर्वेदिदानतडागारामनिर्माणादि **पूर्तं कर्म** लक्ष्यते। तदुभयं पैतृकमपि पितृद्रव्यविरोधार्जितमप्यविभाज्यम्। यथाह **लौगाक्षिः**। 'क्षेमं पूर्तं योगमिष्टमित्याहुस्तत्त्वदर्शिनः। अविभाज्ये च ते प्रोक्ते शयनासनमेव चेति'। 'योगक्षेमशब्देन योगक्षेमकारिणो राजमन्त्रिपुरोहितादय उच्यन्ते' इति केचित्। 'छत्रचामरशस्त्रोपानत्प्रभृतय' इत्यन्ये। **प्रचारो** गृहारामादिषु प्रवेशनिर्गममार्गः सोऽप्यविभाज्यः। **यत्तूशनसा** क्षेत्रस्याविभाज्यत्वमुक्तम्। 'अविभाज्यं सगोत्राणामा सहस्रकुलादपि। याज्यं क्षेत्रं च पत्रं च कृतान्नमुदकं स्त्रिय' इति तद्ब्राह्मणोत्पन्नक्षत्रियादिपुत्रविषयम्। 'न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै। यद्यप्येषां पिता दद्यान्मृते विप्रासुतो हरेदिति' स्मरणात्। **याज्यं** याजनकर्मलब्धम्। पितृप्रसादलब्धस्याविभाज्यत्वं वक्ष्यते। नियमातिक्रमस्याविभाज्यत्वमनन्तरमेव निरासि। पितृद्रव्यविरोधेन यदर्जितं तद्विभजनीयमिति स्थितं। तत्रार्जकस्य भागद्वयम् **वसिष्ठ**वचनात्। 'येन चैषां स्वयमुपार्जितं स्यात्स द्व्यंशमेव लभेतेति' (१७-५१) ॥ ११ ॥ ११९ ॥

**सामान्यार्थसमुत्थाने विभागस्तु समः स्मृतः।**

अस्यापवादमाह। अविभक्तानां भ्रातॄणां सामान्यस्यार्थस्य[1] कृषिवाणिज्यादिना समुत्थाने[2] सम्यग्वर्धने केनचित्कृते समएव विभागो नार्जयितुरंशद्वयम्॥

पित्र्ये द्रव्ये तु पुत्राणां विभागो दर्शितः। इदानीं पैतामहे पौत्राणां विभागे विशेषमाह—

**अनेकपितृकाणां तु पितृतो भागकल्पना॥ १२० ॥**

यद्यपि पैतामहे द्रव्ये पौत्राणां जन्मना स्वत्वं पुत्रैरविशिष्टं तथापि तेषां पितृद्वारेणैव पैतामहद्रव्ये विभागकल्पना। न स्वरूपापेक्षया। एतदुक्तं भवति। यदा अविभक्ता भ्रातरः पुत्रानुत्पाद्य दिष्टं गतास्तदैकस्य द्वौ पुत्रावन्यस्य त्रयोऽपरस्य चत्वार इति पुत्राणां वैषम्ये तत्र द्वावेकं स्वपित्र्यमंशं लभेते। अन्ये त्रयोऽप्येकमंशं पित्र्यं चत्वारोऽप्येकमंशं पित्र्यं लभन्त इति। तथा केषुचित्पुत्रेषु ध्रियमाणेषु केषुचित्पुत्राननुत्पाद्य विनष्टेष्वयमेव न्यायो ध्रियमाणाः स्वांशानेव लभन्ते। नष्टानामपि पुत्राः पित्र्यानेवांशाँल्लभन्त इति वाचनिकी व्यवस्था॥ १२० ॥ (अनेकभ्रातृपुत्राणां विभागप्रकारः।)

अधुना विभक्ते पितर्यविद्यमानभ्रातृके वा पौत्रस्य पैतामहे द्रव्ये विभागो नास्ति अध्रियमाणे पितरि पितृतो भागकल्पनेत्युक्तत्वात्। भवतु वा स्वार्जितवत् पितुरिच्छयैवेत्याशंकित आह—

**भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव च।**
**तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चैव हि॥ १२१ ॥**

**भूः** शालिक्षेत्रादिका। **निबन्ध** एकस्य पर्णभारकस्येयन्ति पर्णानि। तथा एकस्य क्रमु-

[1] फ घ-साधारणस्य। [2] ङ-संभूयसमुत्थाने।

पितामहधने पितुः पुत्रस्य च सत्ता समाना ।

कफलभारकस्येयन्ति क्रमुकफलानीत्याद्युक्तलक्षणः । **द्रव्यं** सुवर्णरजतादि यत्पितामहेन प्रतिग्रहविजयादिना लब्धं **तत्र पितुः पुत्रस्य च स्वाम्यं** लोकप्रसिद्धमिति कृत्वा विभागोऽस्ति । **हि** यस्मात्त**त्सदृशं** समानम् । तस्मान्न पितुरिच्छयैव विभागो नापि पितुर्भागद्वयम् । अतः 'पितृतो भागकल्पनेत्ये'-
५ तत्स्वाम्ये समेऽपि वाचनिकम् । 'विभागं चेत्पिता कुर्यादि'त्येतत्स्वार्जितविषयम् । तथा 'द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पितेत्ये'तदपि स्वार्जितविषयम् ।'जीवतोरस्वतन्त्रः स्याज्जरयाऽपि समन्वित' इत्येतदपि पारतन्त्र्यं मातापित्रर्जितद्रव्यविषयम् । तथा अनीशास्ते हि जीवनोरित्येतदपि । तथा च सरजस्कायां मातरि, सस्पृहे च पितरि, विभागमनिच्छत्यपि पुत्रेच्छया पैतामहद्रव्यविभागो भवति । तथा अविभक्तेन[1] पित्रा पैतामहे द्रव्ये दीयमाने विक्रीयमाणे वा पौत्रस्य निषेधेऽप्य-
१० धिकारः । पित्रर्जिते तु न निषेधाधिकारः । तत्परतन्त्रत्वात् । अनुमतिस्तु कर्तव्या । तथाहि । पैतृके पैतामहे च स्वाम्यं यद्यपि जन्मनैव तथापि पैतृके पितृपरतन्त्रत्वात् पितुः स्वार्जकत्वेन प्राधान्यात् पित्रा विनियुज्यमाने स्वार्जिते द्रव्ये पुत्रेणानुमतिः कर्तव्या । पैतामहे तु द्वयोः स्वाम्यमविशिष्टमिति निषेधाधिकारोऽप्यस्तीति विशेषः । **मनुरपि** । ( अ. ९ श्लो. २०९ ) 'पैतृकं तु पिता द्रव्यमनवाप्तं यदाप्नुयात् । न तत्पुत्रैर्भजेत्सार्धमकामः स्वयमर्जितमिति' । यत्पि-
१५ तामहार्जितं केनाप्यपहृतं पितामहेनानुद्धृतं यदि पितोद्धरति तत्स्वार्जितमिव पुत्रैः सार्धमकामः स्वयं न विभजेदिति वदन् पितामहार्जितमकामोऽपि पुत्रेच्छया पुत्रैः सह विभजेदिति दर्शयति ॥ १२१ ॥

विभागोत्तरकालमुत्पन्नस्य पुत्रस्य कथं विभागकल्पनेत्यत आह—

## विभक्तेषु सुतो जातः सवर्णायां विभागभाक् ।

पितृमरणोत्तरमुत्पन्ने विशेषः ।

२० **विभक्तेषु** पुत्रेषु पश्चात्**सवर्णायां** भार्यायामुत्पन्नो **विभागभाक्** । विभज्यते इति विभागः । पित्रोर्विभागस्तं भजतीति विभागभाक् । पित्रोरूर्ध्वं तयोरंशं लभत इत्यर्थः । मातृभागं चासत्यां[2] दुहितरि । 'मातुर्दुहितरः शेषमि'त्युक्तत्वात् । असवर्णायामुत्पन्नास्तु स्वांशमेव पित्र्याल्लँभते[3] । मातृकं तु सर्वमेव । एतदेव **मनुनोक्तम्** ( अ. ९ श्लो. २१६ ) 'ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनमिति' । पित्रोरिदं पित्र्यमिति
२५ व्याख्येयम् । 'अनीशः पूर्वजः पित्रोर्भ्रातुर्भागे[4] विभक्तज' इति स्मरणात् । विभक्तयोर्मातापित्रोर्भागे विभागात्पूर्वमुत्पन्नो न स्वामी विभक्तजश्च भ्रातुर्भागे न स्वामीत्यर्थः । तथा विभागोत्तरकालं पित्रा यत्किंचिदर्जितं तत्सर्वं विभक्तजस्यैव ॥ 'पुत्रैः सह विभक्तेन पित्रा यत्स्वयमर्जितम् । विभक्तजस्य तत्सर्वमनीशाः पूर्वजाः स्मृता' इति स्मरणात् । ये च विभक्ताः पित्रा सह संसृष्टाः पितुरूर्ध्वं तैः सार्धं विभक्तजो विभजेत् । यथाह **मनुः** ( अ. श्लो. २१६ ) 'संसृष्टास्तेन वा
३० ये स्युर्विभजेत स तैः सहेति' ।

---

१ क–तथाऽविभक्तेन; ग ञ–तथा विभक्तेन । २ फ ञ–च सत्यां दुहितरि । ३ घ–पित्र्यल्लभते । ४ ञ–विभागे ।

पितुरूर्ध्वं पुत्रेषु विभक्तेषु पश्चादुत्पन्नस्य कथं विभागकल्पनेत्यत आह—

**दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात् ॥ १२२ ॥**

तस्य पितरि प्रेते भ्रातृविभागसमयेऽस्पष्टगर्भायां मातरि भ्रातृविभागोत्तरकालमुत्पन्नस्य विभागस्तद्विभागः कुत इत्यत आह। **दृश्याद्**भ्रातृभिर्गृहीताद्धनात्। कीदृशात् **आयव्ययविशोधितात्**। **आयः** प्रतिदिवसं प्रतिमासं प्रत्यब्दं वा यदुत्पद्यते। **व्ययः** पितृकृतर्णापाकरणं। ताभ्यामायव्ययाभ्यां यच्छोधितं तस्मात् उद्धृत्य तद्भागो दातव्यः स्यात्। एतदुक्तं भवति। प्रातिस्विकेषु भागेषु तदुत्थमायं प्रवेश्य पितृकृतं चर्णमपनीयावशिष्टेभ्यः स्वेभ्यः स्वेभ्यो भागेभ्यः किंचित्किंचिदुद्धृत्य विभक्तजस्य भागः स्वभागसमः कर्तव्य इति।

एतच्च विभागसमयेऽप्रजस्य भ्रातुर्भार्यायामस्पष्टगर्भायां विभागादूर्ध्वमुत्पन्नस्यापि वेदितव्यम्। स्पष्टगर्भायां तु प्रसवं प्रतीक्ष्य विभागः कर्तव्यः। यथाह **वसिष्ठः** (१७-४०-४१.)। 'अथ भ्रातृणां दायविभागो याश्चानपत्याः स्त्रियस्तासामा पुत्रलाभादिति'। गृहीतगर्भाणामा प्रसवात्प्रतीक्षणमिति योजनीयम् ॥ १२२ ॥

विभक्तजः पित्र्यं मातृकं च सर्वं धनं गृह्णातीत्युक्तं तत्र यदि विभक्तः पिता माता वा विभक्ताय पुत्राय स्नेहवशादाभरणादिकं प्रयच्छति तत्र विभक्तजेन दानप्रतिषेधो न कर्तव्यो नापि दत्तं प्रत्याहर्तव्यमित्याह—

**पितृभ्यां यस्य यद्दत्तं तत्तस्यैव धनं भवेत्।**

माता**पितृभ्यां** विभक्ताभ्यां पूर्वं विभक्तस्य पुत्रस्य **यद्दत्त**मलङ्कारादि **तत्तस्यैव** पुत्रस्य न विभक्तजस्य स्वं भवति। न्यायसाम्याद्विभागात्प्रागपि यस्य यद्दत्तं तत्तस्यैव; तथाऽसति विभक्तजे विभक्तयोः पित्रोरंशं तदूर्ध्वं विभजतां यस्य यद्दत्तं तत्तस्यैव नान्यस्येति वेदितव्यम् ॥

जीवद्विभागे स्वपुत्रसमांशित्वं पत्नीनामुक्तं 'यदि कुर्यात्समानंशानित्यादिना'; पितुरूर्ध्वं विभागेऽपि मातुः स्वपुत्रसमांशित्वं दर्शयितुमाह—

**पितुरूर्ध्वं विभजतां माताऽप्यंशं समं हरेत् ॥ १२३ ॥**

मातुःसमांशत्वं। **पितुरूर्ध्वं** पितुः प्रयाणादूर्ध्वं **विभजतां** माताऽपि स्वपुत्रांश**समं अंशं हरेत्**। यदि स्त्रीधनं न दत्तम्। दत्ते त्वर्धांशहारिणीति वक्ष्यते ॥ १२३ ॥

पितरि प्रेते यद्यसंस्कृता भ्रातरः सन्ति तत्संस्कारे कोऽधिक्रियत इत्यत आह—

**असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः।**

पितुरूर्ध्वं विभजद्भिर्भ्रातृभिर**संस्कृता** भ्रातरः समुदायद्रव्येण **संस्कर्तव्याः**।

**भगिन्यश्च निजादंशाद्दत्वांऽशं तु तुरीयकम् ॥ १२४ ॥**

अस्यार्थः। भगिन्यश्चासंस्कृताः संस्कर्तव्या भ्रातृभिः। किं कृत्वा निजादंशाच्चतुर्थमंशं दत्वा।

१ क घ ङ फ-पत्नीना।

अनेन दुहितरोऽपि पितुरूर्ध्वं अंशभागिन्य इति गम्यते । तत्र निजादंशादिति प्रत्येकं परिकल्पितादंशादुद्धृत्य चतुर्थांशो दातव्य इत्येवमर्थो न भवति । किं तु यज्जातीया कन्या तज्जातीयपुत्रभागाच्चतुर्थांशभागिनी सा कर्तव्या । एतदुक्तं भवति । यदि ब्राह्मणी सा कन्या तदा ब्राह्मणीपुत्रस्य यावानंशो भवति तस्य चतुर्थांशस्तस्या भवति । तद्यथा । यदि कस्यचिद्ब्राह्मण्येव एका पत्नी, पुत्रश्चैकः, कन्या चैका, तत्र पित्र्यं सर्वमेव द्रव्यं द्विधा विभज्य तत्रैकं भागं चतुर्धा विभज्य तुरीयमंशं कन्यायै दत्वा शेषं पुत्रो गृह्णीयात् । यदा तु द्वौ पुत्रौ, एका कन्या, तदा पितृधनं सर्वं त्रेधा विभज्य, एकं भागं चतुर्धा विभज्य, तुरीयमंशं कन्यायै दत्वा शेषं द्वौ पुत्रौ विभज्य गृह्णीतः॥ अथ त्वेकः पुत्रो, द्वे कन्ये, तदा पित्र्यं धनं त्रेधा विभज्य, एकं भागं चतुर्धा विभज्य, तत्र द्वौ भागौ द्वाभ्यां कन्याभ्यां दत्वाऽवशिष्टं सर्वं पुत्रो गृह्णात्येवं समानजातीयेषु समविषमेषु भ्रातृषु भगिनीषु च योजनीयम् । यदा तु ब्राह्मणीपुत्र एकः, क्षत्रिया कन्यैका, तत्र पित्र्यं धनं सप्तधा विभज्य क्षत्रियापुत्रभागांस्त्रींश्चतुर्धा विभज्य तुरीयांशं क्षत्रियाकन्यायै दत्वा शेषं ब्राह्मणीपुत्रो गृह्णाति । यत्र तु द्वौ ब्राह्मणीपुत्रौ, क्षत्रिया कन्या चैका, तत्र पित्र्यं धनमेकादशधा विभज्य तेषु क्षत्रियापुत्रभागान् त्रीन् चतुर्धा विभज्य चतुर्थमंशं क्षत्रियाकन्यायै दत्वा शेषं सर्वं ब्राह्मणीपुत्रौ विभज्य गृह्णीतः ॥ एवं जातिवैषम्ये भ्रातृणां भगिनीनां च संख्यायाः साम्ये वैषम्ये च सर्वत्रोहनीयम् । न च निजादंशा'द्दत्वांऽशं तु तुरीयकमिति' तुरीयांशाविवक्षया संस्कारमात्रोपयोगि द्रव्यं दत्वेति व्याख्यानं युक्तम् । **मनु**वचनविरोधात् (अ. ९ श्लो. ११८) "स्वेभ्योंऽशेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक् । स्वात्स्वादंशाच्चतुर्भागं पतिताः स्युरदित्सव" इति । अस्यार्थः । ब्राह्मणादयो भ्रातरो ब्राह्मणीप्रभृतिभ्यो भगिनीभ्यः स्वेभ्यः स्वजातिविहितेभ्योंऽशेभ्यश्चतुरोंऽशान् हरेद्विप्र इत्यादिवक्ष्यमाणेभ्यः स्वात्स्वादंशादात्मीयात्मीयभागाच्चतुर्थं चतुर्थं भागं दद्युः । न चात्मभागादुद्धृत्य चतुर्थांशो देय इत्युच्यते । किंतु स्वजातिविहितादेकस्मादंशात्पृथक्पृथगेकस्यै कन्यायै चतुर्थोंऽशो देय इति जातिवैषम्ये संख्यावैषम्ये च विभागक्लृप्तिरुक्तैव । 'पतिताः स्युरदित्सव' इत्यकरणे प्रत्यवायश्रवणादवश्यं दातव्यता प्रतीयते ।

अत्रापि चतुर्भागवचनमविवक्षितं संस्कारोपयोगिद्रव्यदानमेव विवक्षितमिति चेन्न । स्मृतिद्वयेऽपि चतुर्थांशदानाविवक्षायां प्रमाणाभावाददाने प्रत्यवायश्रवणाच्चेति । यदपि कैश्चिदुच्यते । अंशदानविवक्षायां बहुभ्रातृकायां बहुधनत्वं बहुभगिनीकस्य च निर्धनता प्राप्नोतीति तदुक्तरीत्या परिहृतमेव । न ह्यत्रात्मीयाद्भागादुद्धृत्य चतुर्थांशस्य दानमुच्यते येन तथा स्यादतोऽस्मत्सहाय-**मेधातिथिप्रभृ**तीनां व्याख्यानमेव चतुरस्रं न **भारुचेः** । तस्मात्पितुरूर्ध्वं कन्याऽप्यंशभागिनी । पूर्वं चेद्यत्किंचित्पिता ददाति तदेव लभते विशेषवचनाभावादिति सर्वमनवद्यम् ॥ १२४ ॥

एवं 'विभागं चेत्पिता कुर्यादि'त्यादिना प्रबन्धेन समानजातीयानां भ्रातॄणां परस्परं पित्रा सह विभागक्लृप्तिरुक्ता । अधुना भिन्नजातीयानां विभागमाह—

असंस्कृतासु भगिनीषु विशेषमाह ।

१ क ग ड फ–पूव तु ।

**चतुस्त्रिद्व्येकभागाः स्युर्वर्णशो ब्राह्मणात्मजाः ।**
**क्षत्रजास्त्रिद्व्येकभागा विड्जास्तु द्व्येकभागिनः ॥ १२५ ॥**

'तिस्रोवर्णानुपूर्व्येणेति' ब्राह्मणस्य चतस्रः, क्षत्रियस्य तिस्रो, वैश्यस्य द्वे, शूद्रस्यैकेति, भार्या दर्शितास्तत्र **ब्राह्मणात्मजा** ब्राह्मणोत्पन्ना **वर्णशः** वर्णशब्देन ब्राह्मणादिवर्णाः स्त्रिय उच्यन्ते संख्यैकवचनाच्च वीप्सायामित्यधिकरणकारकादेकवचनाद्वीप्सायां शस् । अतश्च वर्णे वर्णे५ **ब्राह्मणोत्पन्ना** यथाक्रमं **चतुस्त्रिद्व्येकभागाः स्युर्भवेयुः** । एतदुक्तं भवति । ब्राह्मणेन ब्राह्मण्यामुत्पन्ना एकैकशश्चतुरश्चतुरो भागांल्लभन्ते । तेनैव क्षत्रियायामुत्पन्नाः प्रत्येकं त्रींस्त्रीन् भागान् लभन्ते । वैश्यायां द्वौ द्वौ शूद्रायामेकमेकमिति । **क्षत्रजाः** क्षत्रियेणोत्पन्नाः वर्णशः इत्यनुवर्तते । **यथाक्रमं** त्रिद्व्येकभागाः क्षत्रियेण क्षत्रियायामुत्पन्नाः प्रत्येकं त्रीन् त्रीन् भागान् लभन्ते । वैश्यायां द्वौ द्वौ शूद्रायामेकमेकम् । **विड्जाः**१० वैश्येनोत्पन्नाः अत्रापि वर्णश इत्यनुवर्तते । यथाक्रमं द्व्येकभागिनः वैश्येन वैश्यायामुत्पन्नाः प्रत्येकं द्वौ द्वौ भागौ लभन्ते । शूद्रायामेकमेकम् । शूद्रस्यैकैव भार्येति भिन्नजातीयपुत्राभावात्तत्पुत्राणां पूर्वोक्त एव विभागः ।

विजातीयविभागमाह ।

यद्यपि चतुस्त्रिद्व्येकभागा इत्यविशेषेणोक्तं तथापि प्रतिग्रहप्राप्तभूव्यतिरिक्तविषयमिदं द्रष्टव्यम् । यतः स्मरन्ति । 'न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै । यद्यप्येषां पिता दद्यान्मृते विप्रासुतो हरेदिति' । प्रतिग्रहग्रहणात्क्रयादिना लब्धा भूः क्षत्रियादिसुतानामपि भवत्येव । शूद्रापुत्रस्य विशेषप्रतिषेधाच्च । शूद्र्यां द्विजातिभिर्जातो न भूमेर्भागमर्हतीति यदि क्रयादिप्राप्ता भूः क्षत्रियादिसुतानां न भवेत्तदा शूद्रापुत्रस्य विशेषप्रतिषेधो नोपपद्यते । यत्पुनः ( **मनुः** अ. ९ श्लो. १५५ ) 'ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक् । यदेवास्य पिता दद्यात्तदेवास्य धनं भवेदिति' । तदपि जीवता पित्रा यदि शूद्रापुत्राय किमपि प्रदत्तं स्यात्तद्विषयम् । यदा तु२० प्रसाददानं नास्ति तदैकांशभागित्यविरुद्धम् ॥ १२५ ॥

अथ सर्वविभागशेषं किंचिदुच्यते—

**अन्योन्यापहृतं द्रव्यं विभक्ते यत्तु दृश्यते ।**
**तत्पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः ॥ १२६ ॥**

**परस्परापहृतं** समुदायद्रव्यं विभागकालेचाज्ञातं, **विभक्ते** पितृधने यद्दृश्यते **तत्समैरं**-२५ **शैर्विभजेरन्नित्येवं स्थितिः** शास्त्रमर्यादा । अत्र समैरंशैरिति वदता उद्धारविभागो निषिद्धः । विभजेरन्निति वदता येन दृश्यते तेनैव न ग्राह्यमिति दर्शितम् । एवं च वचनस्यार्थवत्त्वान्न समुदायद्रव्यापहारे दोषाभावपरत्वम् । ननु **मनुना** ज्येष्ठस्यैव समुदायद्रव्यापहारे दोषो दर्शितो न कनीयसाम् ( अ. ९ श्लो. २१३ ) 'यो ज्येष्ठो विनिकुर्वीत लोभाद्भ्रन्धूनयवीयसः । स ज्येष्ठः स्यादभागश्च नियन्तव्यश्च३० राजभिरिति' वचनात् । नैतत् यतः संभावितस्वातन्त्र्यस्य पितृस्थानीयस्य ज्येष्ठस्यापि दोषं

भ्रात्रादिवञ्चनया स्थापितद्रव्यस्य विभागमाह ।

वदता ज्येष्ठपरतन्त्राणां कनीयसां पुत्रस्थानीयानां दण्डापूपिकनीत्या सुतरां दोषो दर्शित एव । तथा चाविशेषेणैव दोषः श्रूयते । **गौतमः** । 'यो वै भागिनं भागान्नुदते चयते एवैनं स यदि चैनं न चयतेऽथ पुत्रमथ पौत्रं चयत' इति यो भागिनं भागार्हं भागान्नुदते भागादपाकरोति भागं तस्मै न प्रयच्छति स भागान्नुन्न एनं नोत्तारं चयते नाशयति दोषिणं करोति । ५ यदि तं न नाशयति तदा तस्य पुत्रं पौत्रं वा नाशयतीति ज्येष्ठविशेषमन्तरेणैव साधारणद्रव्यापहारिणो दोषः श्रुतः । अथ साधारणं द्रव्यमात्मनोऽपि स्वं भवतीति स्वबुद्ध्या **गृह्यमाणं न** दोषमावहतीति मतम् । तदसत् । स्वबुद्ध्या गृहीतेऽपि वर्जनीयतया परस्वमपि गृहीतमेवेति निषेधानुप्रवेशाद्दोषमावहत्येव । यथा मौद्गे चरौ विपन्ने सदृशतया माषेषु गृह्यमाणेषु अयज्ञिया वै माषा इति निषेधो न प्रविशति । मुद्गावयवबुद्ध्या गृह्यमाणत्वादिति पूर्वपक्षि- १० णोक्ते, मुद्गावयवेषु गृह्यमाणेषु वर्जनीयतया माषावयवा अपि गृह्यन्ते एवेति निषेधः प्रविशत्येवेति **राद्धान्तिनोक्तम्** । तस्माद्वचनतो न्यायतश्च साधारणद्रव्यापहारे दोषोऽस्त्येवेति सिद्धम् ॥ १२६ ॥

द्व्यामुष्यायणस्य भागविशेषं दर्शयंस्तस्य स्वरूपमाह—

**अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।**
**१५ उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥ १२७ ॥**

'**अपुत्रां** गुर्वनुज्ञात' ( आ. अ. श्लो. ६८-६९ ) इत्याद्युक्तविधिना **अपुत्रेण** देवरादिना **परक्षेत्रे** परभार्यायां गुरु**नियोगेनोत्पादितः** पुत्र **उभयो**र्बीजिक्षेत्रिणोरौरसो **रिक्थी** रिक्थहारी **पिण्डदाता** च ।

द्व्यामुष्यायणलक्षणम् ।

**धर्मत** इत्यस्यार्थः । यदाऽसौ नियुक्तो देवरादिः स्वयमप्यपुत्रोऽपुत्रस्य क्षेत्रे स्वपरपुत्रार्थं प्रवृत्तो यं २० जनयति स द्विपितृको द्व्यामुष्यायणो द्वयोरपि रिक्थहारी पिण्डदाता च । यदा तु नियुक्तः पुत्रवान् केवलं क्षेत्रिणः पुत्रार्थं प्रयतते तदा तदुत्पन्नः क्षेत्रिण एव पुत्रो भवतीति न बीजिनः । स च न नियमेन बीजिनो रिक्थहारी पिण्डदो वेति । यथोक्तं **मनुना** । ( अ. ९ श्लो. ५३ ) "क्रियाभ्युपगमात्क्षेत्रं बीजार्थं यत्प्रदीयते । तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव चेति" । **क्रियाभ्युपगमादिति** अत्रोत्पन्नमपत्यमावयोरुभयोरपि भवत्विति संविदङ्गीकरणाद्यत्क्षेत्रं क्षेत्र- २५ स्वामिना बीजावपनार्थं बीजिने दीयते तत्र तस्मिन्क्षेत्रे उत्पन्नस्यापत्यस्य बीजिक्षेत्रिणौ भागिनौ स्वामिनौ दृष्टौ महर्षिभिः । तथा । ( **मनुः** अ. ९ श्लो. ५२ ) "फलं त्वनभिसंधाय क्षेत्रिणां बीजिनां तथा । प्रत्यक्षं क्षेत्रिणामर्थो बीजाद्योनिर्बलीयसीति" । **फलं त्वनभिसंधायेति** अत्रोत्पन्नमपत्यमावयोरुभयोरस्त्वित्येवमनभिसंधाय परक्षेत्रे यदपत्यमुत्पाद्यते तदपत्यं क्षेत्रिण एव यतो बीजाद्योनिर्बलीयसीति । गवाश्वादिषु तथा दर्शनात् ।

१ दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते । यथा, 'मूषकेण दंडो भक्षितः' इत्यनेन तत्सहचरितमपूपभक्षणमर्थादायातं भवतीति 'नियतसमानन्यायादर्थांतरमापततीत्येष न्यायो **दंडापूपिका सा. द. १०** २ **क फ**-अवर्जनीयतया; **घ-**आवर्जनीयतया । ३ **क फ घ ज**-आवर्जनीयतया । ४ क्रियाभ्युपगमात्त्वेतत् ।

अत्रापि नियोगो वाग्दत्ताविषय एव । इतरस्य नियोगस्य **मनुना** निषिद्धत्वात् । ( अ. ९ श्लो. ५९।६० ) । 'देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया । प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये ॥ विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि । एकमुत्पादयेत्पुत्रं न द्वितीयं कथंचनेत्ये''वं नियोगमुपन्यस्य **मनुः** स्वयमेव निषेधति " नान्यस्मिन्विधवा नारी नियोक्तव्या द्विजातिभिः । अन्यस्मिन्हि नियुञ्जाना धर्मं हन्युः सनातनम् ॥ नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् । न विवाहविधावुक्तं विधवावेदनं पुनः ॥ अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः । मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति ॥ स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा । वर्णानां संकरं चक्रे कामोपहतचेतनः ॥ ततःप्रभृति यो मोहात् प्रमीतपतिकां स्त्रियम् । नियोजयत्यपत्यार्थे गर्हन्ते तं हि साधव " इति ( अ. ९ श्लो. ६४–६८ ) ॥

नियोगः ।

नियोगनिन्दा ।

न च विहितप्रतिषिद्धत्वाद्विकल्प इति मन्तव्यम् । नियोक्तृणां निन्दाश्रवणात् । स्त्रीधर्मेषु व्यभिचारस्य बहुदोषश्रवणात् । संयमस्य प्रशस्तत्वाच्च । यथाह **मनुरेव** । ( अ. ५ श्लो. १५७ ) " कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः । न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य त्विति " जीवनार्थं पुरुषान्तराश्रयणं प्रतिषिध्य, " आसीतामरणात् क्षान्ता नियता ब्रह्मचारिणी । यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् ॥ अनेकानि सहस्राणि कौमारब्रह्मचारिणां । दिवं गतानि विप्राणामकृत्वा कुलसंततिम् ॥ मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता । स्वर्गं गच्छत्यपुत्राऽपि यथा ते ब्रह्मचारिणः ॥ अपत्यलोभाद्या तु स्त्री भर्तारमतिवर्तते । सेह निन्दामवाप्नोति परलोकाच्च हीयते " ( अ. ५ श्लो. १५८–१६१ ) इति पुत्रार्थमपि पुरुषान्तराश्रयणं निषेधति । तस्माद्विहितप्रतिषिद्धत्वाद्विकल्प इति न युक्तम् ॥

एवं विवाहसंस्कृतानियोगे प्रतिषिद्धे कर्स्तर्हि धर्म्यो नियोग इत्यत आह । ( मनु. अ. ९ श्लो. ६९।७० ) " यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः । तामनेन विधानेन निजो विन्देत देवरः ॥ यथाविध्यभिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् । मिथो भजेता प्रसवात्सकृत्सकृदृतावृतौ " इति ॥ 'यस्मै वाग्दत्ता कन्या स प्रतिग्रहमन्तरेणैव तस्याः पति'रित्यस्मादेव वचनादवगम्यते तस्मिन्प्रेते देवरस्तस्य ज्येष्ठः कनिष्ठो वा निजः सोदरो विन्देत परिणयेत् । यथाविधि यथाशास्त्रमधिगम्य परिणीय अनेन विधानेन घृताभ्यङ्गवाङ्नियमादिना शुक्लवस्त्रां शुचिव्रतां मनोवाक्कायसंयतां । मिथो रहसा गर्भग्रहणात् प्रत्यृत्वेकवारं गच्छेत् । अयं च विवाहो वाचनिको घृताभ्यङ्गादिनियमवन्नियुक्ताभिगमनाङ्गमिति न देवरस्य भार्यात्वमापादयति । अतस्तदुत्पन्नमपत्यं क्षेत्रस्वामिन एव भवति । न देवरस्य । संविदा तूभयोरपि ॥ १२७ ॥

धर्मनियोगः ।

समानासमानजातीयानां पुत्राणां विभागक्लृप्तिरुक्ता, अधुना मुख्यगौणपुत्राणां दायग्रहणव्यवस्थां दर्शयिष्यन् तेषां स्वरूपं तावदाह—

**औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः ।**
**क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥ १२८ ॥**

**गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः ।**
**कानीनः कन्यकाजातो मातामहसुतो मतः ॥ १२९ ॥**
**अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः ।**
**दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ॥ १३० ॥**
**क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात्स्वयंकृतः ।**
**दत्तात्मा तु स्वयंदत्तो गर्भे विन्नः सहोढजः ॥ १३१ ॥**
**उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः ।**

उरसो जात **औरसः** पुत्रः स च **धर्मपत्नीजः** सवर्णा धर्मविवाहोढा धर्मपत्नी तस्यां जात औरसः पुत्रो मुख्यः । **तत्समः पुत्रिकासुतः** तत्सम औरससमः । पुत्रिकायाः सुतः पुत्रिकासुतः । अतएवौरससमः । यथाह **वसिष्ठः** । "अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् । अस्यां यो जायते पुत्रः स मे पुत्रो भवेदितीति" ( १७-१७ ) । अथवा पुत्रिकैव सुतः पुत्रिकासुतः सोऽप्यौरससम एव पित्रवयवानामल्पत्वात् मात्रवयवानां बाहुल्याच्च । यथाह **वसिष्ठः** । 'द्वितीयः पुत्रिकैवेति'[2] ( १७-१५ ) । द्वितीयः पुत्रः पुत्रिकैवेत्यर्थः ॥ द्व्यामुष्यायणस्तु जनकस्यौरसादपकृष्टोऽन्यक्षेत्रोत्पन्नत्वात् । **क्षेत्रजः** क्षेत्रजातस्तु सगोत्रेणेतरेण वा । **इतरेणासपिण्डेन** देवरेण वोत्पन्नः पुत्रः क्षेत्रजः ॥ १२८ ॥

औरसपुत्रिकापुत्रक्षेत्रजलक्षणानि । (१०)

**गूढजः** पुत्रो भर्तृगृहे **प्रच्छन्न उत्पन्नो** हीनाधिकजातीयपुरुषजत्वपरिहारेण पुरुषविशेषजत्वनिश्चयाभावेऽपि सवर्णजत्वनिश्चये सति बोद्धव्यम् । **कानीनस्तु** कन्यकायामुत्पन्नः पूर्ववत्सवर्णात्स मातामहस्य पुत्रः । यद्यनूढा सा भवेत्तथा पितृगृह एव संस्थिता । अथोढा तदा वोढुरेव पुत्रः । यथाह **मनुः** ( अ. ९ श्लो. १७२ ) "पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः । तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवमिति" ॥ १२९ ॥

गूढजकानीनौ ।

**पौनर्भवस्तु** पुत्रोऽक्षतायां क्षतायां वा पुनर्भ्वां सवर्णादुत्पन्नः । मात्रा भर्त्रनुज्ञया प्रोषिते प्रेते वा भर्तरि पित्रा वोभाभ्यां वा सवर्णाय यस्मै दीयते स तस्य **दत्तकः** पुत्रः । यथाह **मनुः** । ( अ. ९ श्लो. १६८ ) "माता पिता वा[3] दद्यातां यमद्भिः पुत्रमापदि । सदृशं[4] प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुत" इति । आपद्ग्रहणादनापदि न देयः । दातुरयं प्रतिषेधः । तथा एकः पुत्रो न देयः । "न त्वेवैकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वेति" **वसिष्ठस्मरणात्** (१५.३) तथानेकपुत्रसद्भावेऽपि ज्येष्ठो न देयः । ( **मनुः** अ. ९ श्लोक. १०६ ) "ज्येष्ठेन जातमात्रेण पुत्री भवति मानव" इति । तस्यैव पुत्रकार्यकरणे मुख्यत्वात् । पुत्रप्रतिग्रहप्रकारश्च "पुत्रं प्रतिग्रहीष्यन्बन्धूनाहूय राजनि चावेद्य निवेशनमध्ये

पौनर्भवदत्तपुत्रलक्षणं ।

(१५, २०, २५)

१ ज्ञ–भिन्नः । २ 'तृतीयः पुत्रिका विज्ञायते' इति '**बांबे संस्कृतसीरीजां**'तर्गतः पाठः ३ वा शब्दान्मात्रभावे पितैव दद्यात् । पित्रभावे मातैवोभयसत्वे तु उभावपीति **मदनः** । ४ सदृशं कुलगुणादिभिर्न जात्येति **मेधातिथिः** । सदृशं जात्येति **कुल्लूकभट्टः** ।

व्याहृतिभिर्हुत्वा अदूरबान्धवं बन्धुसन्निकृष्ट एव प्रतिगृह्णीयादिति" **वसिष्ठेनोक्तः** । (१५-६) 'अदूरबान्धवमि'त्यत्यन्तदेशभाषाविप्रकृष्टस्य प्रतिषेधः । एवं क्रीतस्वयंदत्तकृत्रिमेष्वपि योजनीयम् । समानन्यायत्वात् ॥ १३० ॥

**क्रीतस्तु** पुत्र**स्ताभ्यां** मातापितृभ्यां मात्रा पित्रा वा **विक्रीतः** पूर्ववत् तथैकं ज्येष्ठं च पुत्रं वर्जयित्वा आपदि सवर्ण इत्येव । यत्तु **मनुनोक्तम्** । ( अ. ९ श्लो. १७४ ) "क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात् । स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वेति" । तद्गुणैः सदृशोऽसदृशो वेति व्याख्येयम् । न जात्या । 'सजातीयेष्वयं प्रोक्त' इत्युपसंहारात् । **कृत्रिमः स्यात्स्वयंकृतः** । कृत्रिमस्तु पुत्रः स्वयं पुत्रार्थिना धनक्षेत्रप्रदर्शनादिप्रलोभनेनैव पुत्रीकृतो मातापितृविहीनस्तत्सद्भावे तत्परतन्त्रत्वात् । **दत्तात्मा** तु पुत्रो यो मातापितृविहीनस्ताभ्यां त्यक्तो वा 'तवाहं पुत्रो भवामीति' स्वयं दत्तत्वमुपगतः । **सहोढज**स्तु गर्भे स्थितो गर्भिण्यां परिणीतायां यः परिणीतः स वोढुः पुत्रः ॥ १३१ ॥

क्रीतादिपुत्रलक्षणं ।

**अपविद्धो** मातापितृभ्यामुत्सृष्टो यो गृह्यते स ग्रहीतुः पुत्रः । सर्वत्र सवर्ण इत्येव ॥

एवं मुख्यामुख्यपुत्राननुक्रम्यैतेषां दायग्रहणे क्रममाह—

**पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः ॥ १३२ ॥**

**एतेषां** पूर्वोक्तानां पुत्राणां द्वादशानां **पूर्वस्य पूर्वस्याभावे उत्तर** उत्तरः **पिण्डदः**श्राद्धदों**ऽशहरो** धनहरो वेदितव्यः । औरसपौत्रिकेयसमवाये औरसस्यैव धनग्रहणे प्राप्ते **मनु**रपवादमाह । ( अ. ९ श्लो. १३४ ) "पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते । समस्तत्र विभागः स्यात् ज्येष्ठता नास्ति हि स्त्रियाः" इति । तथा अन्येषामपि पूर्वस्मिन् पूर्वस्मिन् सत्यप्युत्तरेषां पुत्राणां चतुर्थांशभागित्वमुक्तं **वसिष्ठेन** (१५-९) । 'तस्मिंश्चेत्प्रतिगृहीते औरस उत्पद्येत चतुर्थभागभागी स्यात् दत्तक' इति । दत्तकग्रहणं क्रीतकृत्रिमादीनां प्रदर्शनार्थम् । प्रकरण*विशेषात् । तथा च **कात्यायनः** । 'उत्पन्ने त्वौरसे पुत्रे चतुर्थांशहराः सुताः । सवर्णा असवर्णास्तु ग्रासाच्छादनभाजना' इति । सवर्णा दत्तकक्षेत्रजादयस्ते मत्यौरसे चतुर्थांशहराः । असवर्णाः कानीनगूढोत्पन्नसहोढजपौनर्भवास्तु त्वौरसे सति न चतुर्थांशहराः किंतु ग्रासाच्छादनभाजनाः ।

दायग्रहणक्रमः ।

यदपि **विष्णु**वचनम् । 'अप्रशस्तास्तु कानीनगूढोत्पन्नसहोढजाः । पौनर्भवश्च नैवैते पिण्डरिक्थांशभागिन' इति । तदप्यौरसे सति चतुर्थांशनिषेधपरमेव । औरसाद्यभावे तु कानीनादीनामपि सकलपित्र्यधनग्रहणमस्त्येव । 'पूर्वाभावे परः पर' इति वचनात् ॥ यदपि **मनु**वचनम् ( अ. ९ श्लो. १६३ ) "एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः । शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनमिति" तदपि दत्तकादीनामौरसप्रतिकूलत्वे निर्गुणत्वे च वेदितव्यम् । तत्र क्षेत्रजस्य विशेषो दर्शित**स्तेनैव** । ( अ. ९ श्लो. १६४ ) "षष्ठं तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात् । औरसो विभजन् दायं पित्र्यं पञ्चममेव वेति" । प्रतिकूलत्वनिर्गुणत्वसमुच्चये

* क फ ञ—पुत्रीकरणाविशेषात् ।

षष्ठमंशम् । एकतरसद्भावे पञ्चममिति विवेक्तव्यम् ॥ यदपि मनुना पुत्राणां षड्द्वयमुपन्यस्य पूर्वषट्कस्य दायादबान्धवत्वमुक्तं उत्तरषट्कस्यादायादबान्धवत्वमुक्तम् । (अ. ९ श्लो. १५९।१६०) "औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च । गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट् ॥ कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा । स्वयंदत्तश्च शौद्रश्च षडदायादबा-
५न्धवा" इति । तदपि स्वपितृसपिण्डसमानोदकानां सन्निहितरिक्थहरान्तराभावे पूर्वषट्कस्य तद्रिक्थहरत्वमुत्तरषट्कस्य तु तन्नास्ति । बान्धवत्वं पुनः समानगोत्रत्वेन सपिण्डत्वेन चोदकप्रदानादिकार्यकरत्वं वर्गद्वयस्यापि सममेवेति व्याख्येयम् ॥ (अ. ९ श्लो. २४२) "गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः । गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधेत्य"त्र दत्रिमग्रहणस्य पुत्रप्रतिनिधिप्रदर्शनार्थत्वात् । पितृधनहारित्वं तु पूर्वस्य पूर्वस्याभावे सर्वेषाम-
१० विशिष्टम् । (मनु. अ. ९ श्लो. १८५) "न भ्रातरो न पितरः पुत्रा रिक्थहराः पितु"रित्यौरसव्यतिरिक्तानां पुत्रप्रतिनिधीनां सर्वेषां रिक्थहारित्वप्रतिपादनपरत्वात् । औरसस्य तु (मनु. अ. ९ श्लो. १६३) "एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुरि"त्यनेनैव रिक्थभाक्त्वस्योक्तत्वात् । दायादशब्दस्य दायादानपि दापयेदित्यादौ पुत्रव्यतिरिक्तरिक्थभाग्विषयत्वेन प्रसिद्धत्वाच्च । **वासिष्ठादि**षु वर्गद्वयेऽपि कस्यचिद्व्यत्ययेन पाठो गुणवद्गुणवद्विषयो वेदितव्यः ।
१५ **गौतमीये** तु पौत्रिकेयस्य दशमत्वेन पाठो विजातीयविषयः । तस्मात्स्थितमेतत्पूर्वपूर्वाभावे परः परोंऽशभागिति ॥ यत्तु (अ. ९ श्लो. १८२) "भ्रातृणामेकजातानामेकश्चेत्पुत्रवान् भवेत् । सर्वे ते तेन पुत्रेण पुत्रिणो **मनु**रब्रवीदिति" ॥ तदपि भ्रातृपुत्रस्य पुत्रीकरणसंभवेऽन्येषां पुत्रीकरणनिषेधार्थम् । न पुनः पुत्रत्वप्रतिपादनाय । 'तत्सुता गोत्रजा बन्धुरि'त्यनेन विरोधात् ॥१३२॥

इदानीमुक्तोपसंहारव्याजेन तत्रैव नियममाह—

२० **सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः ।**

समानजातीयेष्वेव पुत्रेषु **अयं** 'पूर्वाभावे परः पर' इत्युक्तो **विधिः** न भिन्नजातीयेषु । तत्र च कानीनगूढोत्पन्नसहोढजपौनर्भवाणां सवर्णत्वं जनकद्वारेण न स्वरूपेण । तेषां वर्णजातिलक्षणाभावस्योक्तत्वात् । तथाऽनुलोमजानां मूर्धावसिक्तादीनामौरसेष्वन्तर्भावात्तेषामप्यभावे क्षेत्रजादीनां दायहरत्वं बोद्धव्यम् । शूद्रापुत्रस्त्वौरसोऽपि कृत्स्नं भागमन्याभावेऽपि न लभते ।
२५ यथाह **मनुः** । (अ. ९ श्लो. १५४) "यद्यपि स्यात्तु सत्पुत्रो यद्यपुत्रोऽपि वा भवेत्[1] । नाधिकं दशमाद्दद्याच्छूद्रापुत्राय धर्मत" इति । यदि सत्पुत्रो विद्यमानद्विजातिपुत्रो यद्यपुत्रोऽविद्यमानद्विजातिपुत्रो वा स्यात्तस्मिन्मृते क्षेत्रजादिर्वाऽन्यो वा सपिण्डः[2] शूद्रापुत्राय तद्धनाद्दशमांशादधिकं न दद्यादित्यस्मादेव क्षत्रियावैश्यापुत्रयोः सवर्णापुत्राभावे सकलधनग्रहणं गम्यते ॥

अधुना शूद्रधनविभागे विशेषमाह—

३० **जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत् ॥ १३३ ॥**
**मृते पितरि कुर्युस्तं भ्रातरस्त्वर्धभागिकम् ।**
**अभ्रातृको हरेत्सर्वं दुहितॄणां सुताद्दते[3] ॥ १३४ ॥**

१ घ्यसत्पुत्रोपि वा भवेदिति पाठान्तरम् । २ ञ—वाऽसपिण्डः । ३ क—तद्धन ।

शूद्रेण दास्यामुत्पन्नः पुत्रः **कामतः** पितुरिच्छया भागं लभेते। पितुरूर्ध्वं तु यदि परिणीतापुत्राः सन्ति तदा ते भ्रातरस्तं दासीपुत्रं **अर्धभागिनं कुर्युः**। स्वभागादर्धं दद्युरित्यर्थः। अथ परिणीतापुत्रा न सन्ति तदा कृत्स्नं धनं दासीपुत्रो गृह्णीयात्। यदि परिणीतादुहितरस्तत्पुत्रा वा न सन्ति। तत्सद्भावे त्वर्धभागिक एव दासीपुत्रः। अत्र च शूद्रग्रहणाद्द्विजातिना दास्यामुत्पन्नः पितुरिच्छयाऽप्यंशं न लभते, नाप्यर्धं, दूरत एव कृत्स्नम्। किंत्वनुकूलश्चेज्जीवनमात्रं लभते॥१३३॥१३४॥

शूद्रेणापरिणीतायामुत्पन्ने विशेषमाह।

मुख्यगौणसुता दायं गृह्णन्तीति निरूपितम्। तेषामभावे सर्वेषां दायादक्रम उच्यते—

**पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा।**
**तत्सुता गोत्रजा बन्धुः शिष्यः सब्रह्मचारिणः॥ १३५॥**
**एषामभावे पूर्वस्य धनभागुत्तरोत्तरः।**
**स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः॥ १३६॥**

पूर्वोक्ता द्वादशपुत्रा यस्य न सन्ति असाव**पुत्रः**। तस्या**पुत्रस्य स्वर्यातस्य** परलोकं गतस्य **धनभाक्** धनग्राही **एषां** पत्न्यादीनामनुक्रान्तानां मध्ये **पूर्वस्य** पूर्वस्याभाव **उत्तर उत्तरो** धनभागिति संबन्धः। **सर्वेषु** मूर्धावसिक्तादिषु अनुलोमजेषु प्रतिलोमजेषु **वर्णेषु** च ब्राह्मणादिषु **अयं** दायग्रहण**विधि**र्दायग्रहणक्रमो वेदितव्यः।

विभक्तस्यापुत्रस्यासंसृष्टिनो धनेऽधिकारिणः।

तत्र प्रथमं **पत्नी** धनभाक्। पत्नी विवाहसंस्कृता। 'पत्युर्नो यज्ञसंयोग' इति स्मरणात्। एकवचनं च जात्यभिप्रायेण अतश्च बह्वयश्चेत्सजातीया विजातीयाश्च यथांशं विभज्य धनं गृह्णन्ति। यथा **वृद्धमनु**रपि पत्न्याः समग्रधनसंबन्धं वक्ति। 'अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता। पत्न्येव दद्यात्तत्पिडं कृत्स्नमंशं लभेत चेति'। **बृहद्विष्णु**रपि। 'अपुत्रधनं पत्न्यभिगामि, तदभावे दुहितृगामि, तदभावे पितृगामि, तदभावे मातृगामीति'। **कात्यायनोऽपि**। 'पत्नी पत्युर्धनहरी[1] या स्यादव्यभिचारिणी। तदभावे तु दुहिता यद्यनूढा भवेत्तदेति'। तथा। 'अपुत्रस्यार्यकुलजा पत्नी दुहितरोऽपि वा। तदभावे पिता माता भ्राता पुत्राश्च कीर्तिता' इति। **बृहस्पतिरपि**। 'कुल्येपु विद्यमानेपु पितृभ्रातृसनाभिषु। असुतस्य प्रमीतस्य पत्नी तद्भागहारिणी'। एतद्विरुद्धानीव वाक्यानि लक्ष्यन्ते। "भ्रातृणामप्रजाः प्रेयात् कश्चिच्चेत्प्रव्रजेत वा। विभजेरन् धनं तस्य शेषास्ते स्त्रीधनं विना॥ भरणं चास्य कुर्वीरन्स्त्रीणामाजीवनक्षयात्। रक्षन्ति शय्यां भर्तुश्चेदाच्छियुरितरासु त्विति" (अ.१३श्लो.२५-२६) पत्नीसद्भावेऽपि भ्रातृणां धनग्रहणं पत्नीनां च भरणमात्रं **नारदे**नोक्तम्। **मनुना**[2]ऽपि। (अ. ९ श्लो. १८५) "पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वे"त्यपुत्रस्य धनं पितुर्भ्रातुर्वेति दर्शितम्। यथा (अ. ९ श्लो. २१७) "अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्। मातर्यपि च वृत्तायां पितुर्माता हरेद्धनमिति"। मातुः पितामह्याश्च धनसंबन्धो दर्शितः। **शंखेनापि**। 'स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेयातां

१ क ङ=भर्तुर्धनहारी। २ ज—मनुना तु; ङ—मनुना च।

ज्येष्ठा या पत्नीति। भ्रातृणां पित्रोर्ज्येष्ठायाश्च पत्न्याः क्रमेण धनसंबन्धो दर्शितः। **कात्यायननापि**'। 'विभक्ते संस्थिते द्रव्यं पुत्राभावे पिता हरेत्। भ्राता वा जननी वाऽथ माता वा तत्पितुः क्रमादि'त्यवमादीनां विरुद्धार्थानां वाक्यानां **धारेश्वरेण** व्यवस्था दर्शिता

पत्नी गृह्णीयादित्येतद्वचनजातं विभक्तभ्रातृस्त्रीविषयम्। सा च यदि नियोगार्थिनी भवति। ५ कुत एतत् नियोगसव्यपेक्षायाः पत्न्या धनहरणं न स्वतन्त्राया इति। 'पिता हरेदपुत्रस्ये'त्यादिवचनात्तत्र व्यवस्थाकारणं वक्तव्यम्। नान्यद्व्यवस्थाकारणमस्तीति। **गौतमवचनाच्च**। (२८-२१-२२) 'पिण्डगोत्रर्षिसंबन्धा रिक्थं भजेरन् स्त्री वाऽनपत्यस्य बीजं लिप्सेतेति'। अस्यार्थः। पिण्डगोत्रर्षिसंबन्धा अनपत्यस्य रिक्थं भजेरन्स्त्री वा रिक्थं भजेत्। यदि बीजं लिप्सेतेति। **मनुर**पि ( अ. ९ श्लो. १४६ ) "धनं यो बिभृयाद्भ्रातुर्मृतस्य स्त्रियमेव वा। सोऽपत्यं भ्रातुरुत्पाद्य दद्यात्तस्यैव १० तद्धनमिति"। अनेनैतद्दर्शयति:—विभक्तधनेऽपि भ्रातर्युपरतेऽपत्यद्वारेणैव पत्न्या धनसंबन्धो नान्यथेति। तथाऽविभक्तधनेऽपि। ( **मनु**. अ. ९ श्लो. १२० ) "कनीयान् ज्येष्ठभार्यायां पुत्रमुत्पादयेद्यदि। समस्तत्र विभागः स्यादिति धर्मो व्यवस्थित" इति। तथा **वसिष्ठो**ऽपि। 'रिक्थलोभान्नास्ति नियोग' इति ( १७-६५ )। रिक्थलोभान्नियोगं प्रतिषेधन् नियोगद्वारक एव पत्न्या धनसंबन्धो नान्यथेति दर्शयति। नियोगाभावे तु पत्न्या भरणमात्रमेव **नारदवचनात्**। १५ 'भरणं चास्य कुर्वीरन्स्त्रीणामा जीवनक्षयादिति' (१३-२६)। **योगीश्वरे**णापि किल वक्ष्यते। (व्य.अ.१४२) "अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः। निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव चेति"। अपि च। द्विजातिधनस्य यज्ञार्थत्वात्स्त्रीणां च यज्ञेऽनधिकाराद्धनग्रहणमयुक्तम्। तथा च केनापि स्मृतम्। 'यज्ञार्थं द्रव्यमुत्पन्नं तत्रानधिकृतास्तु ये। अरिक्थभाजस्ते सर्वे ग्रासाच्छादनभाजनाः। यज्ञार्थं विहितं वित्तं तस्मात्तद्विनियोजयेत्। स्थानेषु धर्मजुष्टेषु न स्त्रीमूर्खविधर्मि- २० ष्विति' तदनुपपन्नम्। 'पत्नी दुहितर' इत्यत्र नियोगस्याप्रतीतेरप्रस्तुतत्वाच्च।

अपि च इदमत्र वक्तव्यम्। पत्न्या धनग्रहणे नियोगो वा निमित्तं तदुत्पन्नमपत्यं वा। तत्र नियोगस्यैव निमित्तत्वे अनुत्पादितपुत्राया अपि धनसंबन्धः प्राप्नोति। उत्पन्नस्य च पुत्रस्य धनसंबन्धो न प्राप्नोति। अथ तदपत्यस्यैव निमित्तत्वं तथा सति पुत्रस्यैव धनसंबन्धात्पत्नीति नारब्धव्यम्॥ अथ स्त्रीणां पतिद्वारको धनसंबन्धः पुत्रद्वारको वा नान्यथेति मतं तदप्यसत्। ( मनु. अ. २५ ९ श्लो. १९४ ) "अध्यग्न्यध्यावहनिकं दत्तं च प्रीतिकर्मणि। भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतमि"त्यादिविरोधात्। किंच। सर्वपुत्राभावे 'पत्नी दुहितर' इत्यारब्धं तत्र नियुक्ताया धनसंबन्धं वदता क्षेत्रजस्यैव धनसंबन्ध उक्तो भवति। स च प्रागेवाभिहित इत्यपुत्रप्रकरणे 'पत्नीति' नारब्धव्यम्। अथ 'पिण्डगोत्रर्षिसंबन्धा रिक्थं भजेरन् स्त्री वाऽनपत्यस्य। बीजं लिप्सेतेति' (२८-२१-२२) **गौतम**वचनान्नियुक्ताया धनसंबन्ध इति तदप्यसत्। न हि यदि बीजं लिप्सेत ३० तदाऽनपत्यस्य स्त्री धनं गृह्णीयादित्ययमर्थोऽस्मात्प्रतीयते। किंत्वनपत्यस्य धनं पिण्डगोत्रर्षिसंबन्धा भजेरन्स्त्री वा। सा स्त्री बीजं वा लिप्सेत संयता वा भवेदिति तस्या धर्मान्तरोपदेशः। वा शब्दस्य पक्षान्तरवचनत्वेन यथार्थाप्रतीतेः। अपि च संयताया एव धनग्रहणं युक्तम्। न

१ ञ—योगीश्वरेण।

नियुक्ताया स्मृतिलोकनिन्दितायाः। 'अपुत्रा'शयनं भर्तुः पालयन्ती व्रते स्थिता। पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत चेति' संयताया एव धनग्रहणमुक्तम्। तथा नियोगश्च निन्दितो **मनुना**। (अ. ९ श्लो. ६४) "नान्यस्मिन्विधवा नारी नियोक्तव्या द्विजातिभिः। अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनमि"त्यादिना। यत्तु

नियोगनिन्दा।

**वसिष्ठ**वचनम्। 'रिक्थलोभान्नास्ति नियोग' इति। तदविभक्ते संसृष्टिनि*वा भर्तरि प्रेते तस्या५ धनसंबन्धो नास्तीति स्वापत्यस्य धनसंबन्धार्थं नियोगो न कर्तव्य इति व्याख्येयम्। यदपि **नारद**वचनम्। 'भरणं चास्य कुर्वीरन् स्त्रीणामा जीवनक्षयादिति'। तदपि 'संसृष्टानां तु यो भागस्तेषामेव स इष्यत' इति (१३-२४)। संसृष्टानां प्रस्तुतत्वात्तत्स्त्रीणामनपत्यानां भरणमात्रप्रतिपादनपरम्। न च 'भ्रातॄणामप्रजाः प्रेयादि'त्येतस्य संसृष्टिविषयत्वे 'संसृष्टानां तु यो भाग' इत्यनेन पौनरुक्त्यमाशङ्कनीयम्। यतः पूर्वोक्तविवरणेन स्त्रीधनस्याविभाज्यत्वं तत्स्त्रीणां च१० भरणमात्रं विधीयते। यद 'प्यपुत्रा योषितश्चैषामि'त्यादिवचनं तत् क्लीबादिस्त्रीविषयमिति वक्ष्यते।

यत्तु द्विजातिधनस्य यज्ञार्थत्वात्स्त्रीणां च यज्ञेऽनधिकाराच्च धनग्रहणमयुक्तमिति तदसत्। सर्वस्य द्रव्यजातस्य यज्ञार्थत्वे दानहोमाद्यसिद्धेः। अथ यज्ञशब्दस्य धर्मोपलक्षणत्वात् दानहोमादीनामपि धर्मत्वात्तदर्थत्वमविरुद्धमिति मतम्। एवं तर्ह्यर्थकामयोर्धनसाध्ययोरसिद्धिरेव स्यात्। तथा सति 'धर्ममर्थं च कामं च यथाशक्ति न हापयेत्'। तथा। 'न पूर्वाह्णमध्यन्दिनापराह्णानफलान्१५ कुर्याद्यथाशक्ति धर्मार्थकामेभ्यः' तथा। 'न तथैतानि शक्यन्ते संनियन्तुमसेवये'त्यादि**याज्ञवल्क्यगौतममनु**वचनविरोधः। अपि च धनस्य यज्ञार्थत्वे हिरण्यं धार्यमिति हिरण्यधारणस्य क्रत्वर्थतानिराकरणेन पुरुषार्थत्वमुक्तं तत्प्रत्युद्धृतं स्यात्। किंच। यज्ञशब्दस्य धर्मोपलक्षणपरत्वे स्त्रीणामपि पूर्तधर्माधिकाराद्धनग्रहणं युक्ततरम्। यत्तु पारतन्त्र्यवचनं 'न स्त्री स्वातन्त्र्यमर्हती'त्यादि तदस्तु पारतन्त्र्यं, धनस्वीकारे तु को विरोधः? कथं तर्हि यज्ञार्थं द्रव्यमुत्पन्नमित्यादिवच-२० नम्। उच्यते। यज्ञार्थमेवार्जितं यद्धनं तद्यज्ञ एव नियोक्तव्यं पुत्रादिभिरपीत्येवंपरं तत्। 'यज्ञार्थं लब्धमददद्भासः काकोपि वा भवेदिति' दोषश्रवणस्य पुत्रादिष्वप्यविशेषात्।

यदपि **कात्यायनेनो**क्तम्। 'अदायिकं राजगामि योषिद्भृत्यौर्ध्वदेहिकम्। अपास्य श्रोत्रियद्रव्यं श्रोत्रियेभ्यस्तदर्पयेदिति' अदायिकं दायादरहितं यद्धनं तद्राजगामि राज्ञो भवति योषिद्भृत्यौर्ध्वदेहिकमपास्य तत्स्त्रीणामशनाच्छादनोपयुक्तं और्ध्वदेहिकं धनिनः श्राद्धाद्युपयुक्तं चापास्य२५ परिहृत्य राजगामि भवतीति संबन्धः। अस्यापवादः। 'श्रोत्रियद्रव्यं च योषिद्भृत्यौर्ध्वदेहिकमपास्य श्रोत्रियायोपपादयेदिति'। एतदप्यवरुद्धस्त्रीविषयम्। योषिद्ग्रहणात्। **नारद**वचनं च (१३-५२)। 'अन्यत्र ब्राह्मणात्किं तु राजा धर्मपरायणः। तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृत' इत्यवरुद्धस्त्रीविषयमेव। स्त्रीशब्दग्रहणात्। इह तु पत्नीशब्दादूढायाः संयताया धनग्रहणमविरुद्धम्। तस्माद्विभक्तासंसृष्टिन्यपुत्रे स्वर्याते पत्नी धनं प्रथमं गृह्णातीत्ययमर्थः सिद्धो भवतीति। विभागस्योक्त-३० त्वात्संसृष्टिनां वक्ष्यमाणत्वात्।

एतेनाल्पधनविषयत्वं **श्रीकरादि**भिरुक्तं निरस्तं वेदितव्यम्। तथा ह्यौरसेषु पुत्रेषु सत्स्वपि

---

* **याज्ञवल्कीये** आचाराध्याये श्लो. ११५ मनुस्मृतौ अ. २२ श्लो. ९६। १ **कफ**—धर्मोपलक्षणत्वे। २ **कड**—गृह्णीयात्।

जीवद्विभाग अजीवद्विभागे च पत्न्याः पुत्रसमांशग्रहणमुक्तम्। 'यदि कुर्यात्समानंशान् पत्न्यः कार्याः समांशिकाः'। 'पितुरूर्ध्वं विभजतां माताऽप्यंशं समं हरेदिति' च। तथा सत्यपुत्रस्य स्वर्यातस्य धनं पत्नी भरणादतिरिक्तं न लभत इति व्यामोहमात्रम्। अथ 'पत्न्यः कार्याः समांशिका' इत्यत्र 'माताऽप्यंशं समं हरेदि'त्यत्र च जीवनोपयुक्तमेव धनं स्त्री हरतीति मतं तदसत्। अंश-
५ शब्दस्य समशब्दस्य चानर्थक्यप्रसङ्गात्। स्यान्मतम्। बहुधने जीवनोपयुक्तं धनं गृह्णाति अल्पे तु पुत्रांशसमांशं गृह्णातीति तच्च न। विधिवैषम्यप्रसङ्गात्। तथा हि। 'पत्न्यः कार्याः समांशिकाः' 'माताऽप्यंशं समं हरेदिति' च बहुधने जीवनमात्रोपयुक्तम् वाक्यान्तरमपेक्ष्य प्रतिपादयति, अल्पधने तु पुत्रांशसममंशं प्रतिपादयतीति॥ यथा 'चातुर्मास्येषु द्वयोः प्रणयन्ती'त्यत्र पूर्वपक्षिणा सौमिकप्रणयनातिदेशे हेतुत्वेन 'न वैश्वदेव उत्तरवेदिमुपकिरन्ति न शुनासीरीय' इत्युत्तरवेदि-
१० प्रतिषेधे दर्शिते, राद्धान्तैकदेशिना न सौमिकप्रणयनातिदेशप्राप्ताया उत्तरवेद्याः प्रथमोत्तमयोः पर्वणोरयं प्रतिषेधः किंतु'पात्तं वपन्तीति' प्राकरणिकेन वचनेन प्राप्ताया 'उत्तरवेद्याः प्रतिषेधोऽय-मि'त्यभिहिते, 'पुनः पूर्वपक्षिणोपात्तं वपन्तीति' प्रथमोत्तमयोः पर्वणोः प्रतिषेधमपेक्ष्य पाक्षिकीमुत्तर-वेदिं प्रापयति' मध्यमयोस्तु निरपेक्षमेव नित्यवदुत्तरवेदिं प्रापयतीति विधिवैषम्यं दर्शितम्। राद्धान्तेऽपि विधिवैषम्यभयात्प्रथमोत्तमयोः पर्वणोरुत्तरवेदिप्रतिषेधो नित्यानुवादो द्वयोः प्रणय-
१५ न्तीत्याद्यर्थवादपर्यालोचनयोपात्तं वपन्तीति मध्यमयोरेव वरुणप्रघाससाकमेधपर्वणोरुत्तरवेदिं विधत्त इति दर्शितम्।

यदपि मतम्। (अ. ९ श्लो. १८५) 'पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वेति' मनुस्मरणात्। तथा 'स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेयातां ज्येष्ठा वा पत्नीति' शंखस्मरणाच्च, अपुत्रस्य धनं भ्रातृगामि इति प्राप्तं, 'भरणं चास्य कुर्वीरन्स्त्रीणामाजी-
२० वनक्षयादि'त्यादिवचनाच्च भरणोपयुक्तं धनं पत्नी लभत इत्यपि स्थितम्। एवं स्थिते बहुधने अपुत्रे स्वर्याते भरणोपयुक्तं पत्नी गृह्णाति शेषं च भ्रातरो; यदा तु पत्नीभरणमात्रोपयुक्तमेव द्रव्यमस्ति, ततो न्यूनं वा, तदा किं पत्न्येव गृह्णात्युत भ्रातरोऽपीति विरोधे पूर्वबलीयस्त्वज्ञाप-नार्थं 'पत्नी दुहितर' इत्यारब्धमिति तदप्यत्र भगवानाचार्यो न मृष्यति। यतः। (मनु. अ. ९ श्लो. १८५) 'पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वेति' विकल्पस्मरणान्नेदं क्रमपरं
२५ वचनमपि तु धनग्रहणेऽधिकारप्रदर्शनमात्रपरम्। तच्चासत्यपि पत्न्यादिगणे घटत इति व्याचचक्षे। शंखवचनमपि संसृष्टभ्रातृविषयमिति। अपि चाल्पविषयत्वमस्माद्वचनात्प्रकरणाद्वा नावगम्यते। 'धनभागुत्तरोत्तर' इत्यस्य च 'पत्नी दुहितर' इति विपयद्वये वाक्यान्तरमपेक्ष्याल्पधनविषयत्वम्। पित्रादिषु तु धनमात्रविषयत्वमिति पूर्वोक्तं विधिवैषम्यं तदवस्थमेवेति यत्किञ्चिदेतत्।

पत्नी

यत्तु हारीतवचनम्। 'विधवा यौवनस्था चेन्नारी भवति कर्कशा। आयुषः क्षपणार्थं
३० तु दातव्यं जीवनं तदेति' तदपि शङ्कितव्यभिचारायाः सकलधनग्रहणनिषेधपरम्। अस्मादेव वचनादनाशङ्कितव्यभिचारायाः सकलधनग्रहणं गम्यते। एतदेवाभिप्रेत्योक्तं शंखेन। 'ज्येष्ठा

१ ङ—तथा। २ ङ—वैश्वदेव इ०। ३ जीर्णपुस्तके पात्रमिति पाठान्तरं। ४ फ—संसृष्टभ्रातृ-वचनमिति।

वा पत्नीति'। ज्येष्ठा गुणज्येष्ठा अनाशङ्कितव्यभिचारा सा सकलं धनं गृहीत्वाऽन्यां कर्कशामपि मातृवत्पालयतीति सर्वमनवद्यम्। तस्मादपुत्रस्य स्वर्यातस्य विभक्तस्यासंसृष्टिनः परिणीता स्त्री संयता सकलमेव धनं गृह्णातीति स्थितम्।

दुहिता।

तदभावे दुहितरः। दुहितर इति बहुवचनं समानजातीयानामसमानजातीयानां च समविषमांशप्राप्त्यर्थम्[1]। तथा च **कात्यायनः**। 'पत्नी भर्तुर्धनहरी या स्यादव्यभिचारिणी। तदभावे तु दुहिता यद्यनूढा भवेत्तदेति'। **बृहस्पतिरपि**। 'भर्तुर्धनहरी पत्नी तां विना दुहिता स्मृता। अङ्गादङ्गात्संभवति पुत्रवद्दुहिता नृणाम्। तस्मात्पितृधनं त्वन्यः कथं गृह्णीत मानव' इति। तत्र चोढानूढासमवायेऽनूढैव गृह्णाति। 'तदभावे तु दुहिता यद्यनूढा भवेत्तदेति' विशेषस्मरणात्। तथा प्रतिष्ठिताप्रतिष्ठितासमवाये अप्रतिष्ठितैव[2] तदभावे प्रतिष्ठिता। 'स्त्रीधनं[3] दुहितॄणामप्रत्तानामप्रतिष्ठितानां चेति' **गौतमवचनस्य**[4] च पितृधनेऽपि समानत्वात्। न चैतत्पुत्रिकाविषयमिति मन्तव्यम्। 'तत्समः पुत्रिकासुत' इति पुत्रिकायास्तत्सुतस्य चौरससमत्वेन पुत्रप्रकरणेऽभिधानात्।

दौहित्रः।

**च**शब्दाद्दुहित्रभावे दौहित्रो धनभाक्। यथाह **विष्णुः**। 'अपुत्रपौत्रसंताने दौहित्रा धनमाप्नुयुः। पूर्वेषां तु स्वधाकारे पौत्रा दौहित्रिका मता' इति॥ **मनुरपि**। (अ. ९ श्लो. १३६) 'अकृता वा कृता वाऽपि यं विन्देत्सदृशात्सुतम्। पौत्री मातामहस्तेन दद्यात्पिडं हरेद्धनमिति'॥ तदभावे पितरौ मातापितरौ धनभाजौ। यद्यपि युगपदधिकरणवचनतायां द्वन्द्वस्मरणात् तदपवादत्वादेकशेषस्य धनग्रहणे पित्रोः क्रमो न प्रतीयते, तथापि विग्रहवाक्ये मातृशब्दस्य पूर्वनिपातादेकशेषाभावपक्षे च मातापितराविति मातृशब्दस्य पूर्वं श्रवणात्, पाठक्रमादेवार्थक्रमावगमाद्धनसंबन्धेऽपि क्रमापेक्षायां प्रतीतक्रमानुरोधेनैव प्रथमं माता धनभाक् तदभावे पितेति गम्यते। किंच पिता पुत्रान्तरेष्वपि साधारणो,माता तु न साधारणीति प्रत्यासत्त्यतिशया'दनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेदिति' वचनान्मातुरेव प्रथमं धनग्रहणं युक्तम्। न च सपिण्डेष्वेव प्रत्यासत्तिर्नियामिका, अपि तु समानोदकादिष्वप्यविशेषेण धनग्रहणे प्राप्ते प्रत्यासत्तिरेव नियामिकेत्यस्मादेव वचनादवगम्यत इति। मातापित्रोर्मातुरेव प्रत्यासत्त्यतिशयाद्धनग्रहणं युक्ततरम्[5]। तदभावे पिता धनभाक्।

माता। पिता।

---

१ **कडफ**—समविषमांशप्राप्त्यर्थम्। समविपमाप्राप्त्यर्थमिति समीचीनः पाठः। बहुवचनसामर्थ्यात्। २ अप्रतिष्ठिता निर्धनाः। ३ स्त्रीपदं पितुरप्युपलक्षकमिति सांप्रदायिकाः। ४ अ. २८–२४. '५ **मयूखे**–दौहित्राभावे पिता तदभावे माता। तथा च **कात्यायनः**। 'अपुत्रस्यास्य कुलजा पत्नी दुहितरोऽपि वा। तदभावे पिता माता भ्राता पुत्राः प्रकीर्तिताः'। **विष्णुश्च**। 'अपुत्रधनं पत्न्यभिगामि। तदभावे दुहितृगामि। तदभावे दौहित्रगामि। तदभावे पितृगामि। तदभावे मातृगामि। तदभावे भ्रातृगामि। तदभावे भ्रातृपुत्रगामि। तदभावे सकुल्यगामि'। यत्तु **विज्ञानेश्वरः**। द्वन्द्वापवादके पितरावित्येकशेषे क्रमाप्रतीतावपि तदर्थबोधके विग्रहवाक्ये मातृशब्दस्य पूर्वनिपातात् अपवाद्यद्वन्द्वक्रमानुसारात् पितुः पुत्रान्तरसाधारण्यात् मातुस्त्वसाधारण्याच्चादौ मातुस्तदभावे पितुर्धनग्रहणमूचे तदेतद्वचोविरोधादपास्तम्। विग्रहवाक्ये मातृशब्दस्य पूर्वनिपातएकशेषस्य द्वन्द्ववैकल्पिकत्वेन तदपवादत्वे साधारण्यासाधारण्ययोः क्रमनियामकत्वे मानाभावाच्च।' इति '**बापूशास्त्रीमोघे**' इत्येतैः संशोधितपुस्तके टिप्पणिका वर्तते।

पित्रभावे भ्रातरो धनभाजः । तथा च मनुः ( अ. ९ श्लो. १८५ ) 'पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वेति' । यत्पुनर्धारेश्वरेणोक्तम् । ( अ. ९ श्लो. २१७ ) "अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात् । मातर्यपि च वृत्तायां पितुर्माता हरेद्धनमिति ' मनुवचनाज्जीवत्यपि पितरि मातरि वृत्तायां पितुर्माता पितामही धनं हरेन्न पिता । यतः ५ पितृगृहीतं धनं विजातीयेष्वपि पुत्रेषु गच्छति पितामहीगृहीतं तु सजातीयेष्वेव गच्छतीति पितामह्येव गृह्णातीति" एतदप्याचार्यो नानुमन्यते । विजातीयपुत्राणामपि धनग्रहणस्योक्तत्वात् । ' चतुस्त्रिद्व्येकभागाः स्युरित्यादिनेति ' ( अ. ९ श्लो. १८९ ) यत्पुन'रहार्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिरिति ' मनुस्मरणं तन्नृपाभिप्रायं न तु पुत्राभिप्रायम् । भ्रातृष्वपि सोदराः प्रथमं गृह्णीयुः भिन्नोदराणां मात्रा विप्रकर्षात् । 'अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेदिति' १० स्मरणात् । सोदराणामभावे भिन्नोदरा धनभाजः ।

भ्रातरः ।

भ्रातॄणामप्यभावे तत्पुत्राः पितृक्रमेण धनभाजः । भ्रातृभ्रातृपुत्रसमवाये भ्रातृपुत्राणामनधिकारः । भ्रात्रभावे भ्रातृपुत्राणामधिकारवचनात् ॥ यदा त्वपुत्रे भ्रातरि स्वर्याते तद्भ्रातॄणामविशेषेण धनसंबन्धे जाते भ्रातृधनविभागात्प्रागेव यदि कश्चिद्भ्राता मृतस्तदा तत्पुत्राणां पितृतोऽधिकारे प्राप्ते तेषां भ्रातॄणां च विभज्य ग्रहणे पितृतो भागकल्पनेति युक्तम् ।

भिन्नोदरा धनभाजः ।

भ्रातृपुत्राः १५ धनभाजः ।

भ्रातृपुत्राणामप्यभावे गोत्रजा धनभाजः । गोत्रजाः पितामही सपिण्डाः समानोदकाश्च । तत्र पितामही प्रथमं धनभाक् । ( अ. ९ श्लो. २१७ ) 'मातर्यपि च वृत्तायां पितुर्माता धनं हरेदिति' मात्रनन्तरं पितामह्या धनग्रहणे प्राप्ते पित्रादीनां भ्रातृसुतपर्यन्तानां बद्धक्रमत्वेन मध्येऽनुप्रवेशाभावात् । 'पितुर्माता धनं हरेदि'त्यस्य वचनस्य धनग्रह- २० णाधिकारप्राप्तिमात्रपरत्वादुत्कर्षे तत्सुतानन्तरं पितामही गृह्णातीत्यविरोधः ।

गोत्रजाः पितामही ।

पितामह्याश्चाभावे समानगोत्रजाः सपिण्डाः पितामहादयो धनभाजः । भिन्नगोत्राणां सपिण्डानां बन्धुशब्देन ग्रहणात् । तत्र च पितृसन्तानाभावे पितामही पितामहः पितृव्यास्तत्पुत्राश्च क्रमेण धनभाजः । पितामहसन्तानाभावे प्रपितामही प्रपितामहस्तत्पुत्रास्तत्सूनवश्चेत्येवमा सप्तमात्समानगोत्राणां सपिण्डानां धनग्रहणं २५ वेदितव्यम् । तेषामभावे समानोदकानां धनसंबन्धः । ते च सपिण्डानामुपरि सप्त वेदितव्याः । जन्मनामज्ञानावधिका वा । यथाह बृहन्मनुः । 'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते । समानोदकभावस्तु निवर्तेताचतुर्दशात् । जन्मनाम्नोः स्मृतेरेके तत्परं गोत्रमुच्यते ' इति ।

पितामहादयो धनभाजः । समानोदकाः ।

१ तदभावे भगिनी । 'अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं हरेत्' इति मनूक्तेः ( अ. ९ श्लो. १८८ ) 'बहवो ज्ञातयो यत्र सकुल्या बान्धवास्तथा । यस्त्वासन्नतरस्तेषां सोऽनपत्यधनं हरेदिति' । बृहस्पत्युक्तेः तस्या अपि भातृगोत्र उत्पन्नत्वेन गोत्रजत्वाविशेषाच्च । सगोत्रता परं नास्ति नच साऽत्र धनग्रहणप्रयोजकत्वेनोक्ता । मयूखः ।

गोत्रजाभावे बन्धवो धनभाजः। बन्धवश्च त्रिविधाः। आत्मबन्धवः पितृबन्धवो मातृबन्धवश्चेति। यथोक्तम्। "आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः। आत्ममातुलपुत्राश्च विज्ञेया ह्यात्मबान्धवाः॥ पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः। पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः॥ मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः। मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवा इति"॥ तत्र चान्तरङ्गत्वात्प्रथममात्मबन्धवो धनभाजस्तदभावे पितृबन्धवस्तदभावे मातृबन्धव इति क्रमो वेदितव्यः। 5

गोत्रजाभावे बन्धवः।

बन्धूनामभावे आचार्यः। तदभावे शिष्यः॥ 'पुत्राभावे यः प्रत्यासन्नः सपिण्डस्तदभावे आचार्यः; आचार्याभावेऽन्तेवासीत्यापस्तम्बस्मरणात्' (२-६-१४-२-३)॥ शिष्याभावे सब्रह्मचारी धनभाक्। येन सहैकस्मादाचार्यादुपनयनाध्ययनतदर्थज्ञानप्राप्तिः स सब्रह्मचारी। तदभावे ब्राह्मणद्रव्यं यः कश्चित् श्रोत्रियो गृह्णीयात्। 'श्रोत्रिया ब्राह्मणस्यानपत्यस्य रिक्थं भजेरन्निति' **गौतम**स्मरणात् (२८-४१)। तदभावे ब्राह्मणमात्रम्। यथाह **मनुः**। (अ. ९ श्लो. १८८) 'सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः। त्रैविद्याः शुचयो दान्तास्तथा धर्मो न हीयते' इति॥ 'न कदाचिदपि ब्राह्मणद्रव्यं राजा गृह्णीयात्'। (अ. ९ श्लो. १८९) 'अहार्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थिति'रिति **मनु**वचनात्। **नारदे**नाप्युक्तम् 'ब्राह्मणार्थस्य तन्नाशे दायादश्चेन्न कश्चन। ब्राह्मणायैव दातव्यमेनस्वी स्यान्नृपोऽन्यथेति'॥ क्षत्रियादिधनं सब्रह्मचारिपर्यन्तानामभावे राजा हरेत्। न ब्राह्मणः। यथाह **मनुः** (अ. ९ श्लो. १८९) 'इतरेषां तु वर्णानां सर्वाभावे हरेन्नृप' इति॥ १३५॥ १३६॥ 10 15

शिष्यः सब्रह्मचारी।

पुत्राः पौत्राश्च दायं गृह्णन्ति तदभावे पत्न्यादय इत्युक्तं; इदानीं तदुभयापवादमाह—

**वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः।**
**क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः॥ १३७॥** 20

**वानप्रस्थस्य यतेर्ब्रह्मचारिणश्च, क्रमेण** प्रतिलोमक्रमे**णाचार्यः सच्छिष्यो धर्मभ्रात्रेकतीर्थी च रिक्थस्य** धनस्य भागिनः। ब्रह्मचारी नैष्ठिकः। उपकुर्वाणस्य तु धनं मात्रादय एव गृह्णन्ति। नैष्ठिकस्य तु धनं तदपवादत्वेनाचार्यो गृह्णातीत्युच्यते। यतेस्तु धनं सच्छिष्यो गृह्णाति। **सच्छिष्यः** पुनरध्यात्मशास्त्रश्रवणधारणतदर्थानुष्ठानक्षमः। दुर्वृत्तस्याचार्यादेरपि भागानर्हत्वात्। वानप्रस्थस्य धनं धर्मभ्रात्रेकतीर्थी गृह्णाति। **धर्मभ्राता** प्रतिपन्नो भ्राता। **एकतीर्थी** एकाश्रमी। धर्मभ्राता चासावेकतीर्थी च धर्मभ्रात्रेकतीर्थी। एतेषामाचार्यादीनामभावे पुत्रादिषु सत्स्वप्येकतीर्थ्येव गृह्णाति। 25

वानप्रस्थयतिब्रह्मचारिणां धनेऽधिकारिणः।

'नन्वनंशास्त्वाश्रमान्तरगताः' इति (१७-५२) **वसिष्ठ**स्मरणादाश्रमान्तरगतानां रिक्थसंबन्ध एव नास्ति कुतस्तद्विभागः। न च नैष्ठिकस्य स्वार्जितधनसंबन्धो युक्तः। प्रतिग्रहादिनिषेधात्। 'अनिचयो भिक्षुरिति' **गौतम**स्मरणात् (३-११)। भिक्षोरपि न स्वार्जितधनसंबन्धसंभवः। उच्यते। वानप्रस्थस्य तावत्। 'अह्नो मासस्य षण्णां वा तथा संवत्सरस्य वा। अर्थस्य निचयं कुर्यात्कृतमाश्वयुजे त्यजेदिति' वचनाद्धनसंबन्धोऽस्त्येव। **यते**रपि, 'कौपीनाच्छादनार्थं वा

वासोऽपि बिभृयाच्च सः। योगसंभारभेदांश्च गृह्णीयात्पादुके तथे'त्यादिवचनाद्वस्त्रपुस्तकसंबन्धोऽस्त्येव नैष्ठिकस्यापि शरीरयात्रार्थं वस्त्रादिसंबन्धोऽस्त्येवेति तद्विभागकथनं युक्तमेव ॥ १३७॥

इदानीं स्वर्यातस्यापुत्रस्य पत्न्यादयो धनभाज इत्यस्यापवादमाह—

**संसृष्टिनस्तु संसृष्टी**

५ विभक्तं धनं पुनर्मिश्रीकृतं संसृष्टं तदस्यास्तीति **संसृष्टी**। संसृष्टित्वं च न येन केनापि किंतु पित्रा भ्रात्रा पितृव्येण वा। यथाह **बृहस्पतिः**। 'विभक्तो यः पुनः पित्रा भ्रात्रा वैकत्र संस्थितः। पितृव्येणाथवा प्रीत्या स तत्संसृष्ट उच्यत' इति। तस्य **संसृष्टिनो** मृतस्यांशं भागं विभागकाले अविज्ञातगर्भायां भार्यायां पश्चादुत्पन्नस्य पुत्रस्य **संसृष्टी दद्यात्**। पुत्राभावे संसृष्ट्येवापहरेत् गृह्णीयात् न पत्न्यादिः॥

संसृष्टिधनाधिकारिणमाह।

१० संसृष्टिनस्तु संसृष्टीत्यस्यापवादमाह—

**सोदरस्य तु सोदरः।**
**दद्यादपहरेच्चांशं जातस्य च मृतस्य च ॥ १३८ ॥**

संसृष्टिनः संसृष्टीत्यनुवर्तते। अतश्च **सोदरस्य** संसृष्टिनो मृतस्यांशं **सोदरः** संसृष्टी संसृष्टिजातस्य सुतस्य दद्यात्। तदभावे अपहरेदिति पूर्ववत् संबन्धः। एवं च सोदरासोदरसंसर्गे सोद-
१५ रसंसृष्टिनो धनं सोदर एव संसृष्टी गृह्णाति, न भिन्नोदरः संसृष्ट्यपीति पूर्वोक्तस्यापवादः॥१३८॥

इदानीं संसृष्टिन्यपुत्रे स्वर्याते संसृष्टिनो भिन्नोदरस्य सोदरस्य चासंसृष्टिनः सद्भावे कस्य धनग्रहणमिति विवक्षायां द्वयोर्विभज्य ग्रहणे कारणमाह—

**अन्योदर्यस्तु संसृष्टी नान्योदर्यो धनं हरेत्।**
**असंसृष्ट्यपि चादद्यात्संसृष्टो नान्यमातृजः ॥ १३९ ॥**

२० **अन्योदर्यः** सापत्नो भ्राता **संसृष्टी** धनं हरेत् **न** पुनः **अन्योदर्यो धनं हरेदसंसृष्टी**। अनेनान्वयव्यतिरेकाभ्यामन्योदर्यस्य संसृष्टित्वं धनग्रहणे कारणमुक्तं भवति। असंसृष्टीत्येतदुत्तरेणापि संबध्यते। अतश्चासंसृष्ट्यपि संसृष्टिनो धनमाददीत। कोसावित्यत आह। संसृष्ट इति। **संसृष्ट** एकोदरसंसृष्टः सोदर इति यावत्। अनेनासंसृष्टस्यापि सोदरस्य धनग्रहणे सोदरत्वं कारणमुक्तम्। संसृष्ट इत्युत्तरेणापि संबध्यते। तत्र च संसृष्टः संसृष्टीत्यर्थः, **नान्यमातृजः**। अत्रैव-
२५ शब्दाध्याहारेण व्याख्यानं कार्यम्। संसृष्ट्यप्यन्यमातृज एव संसृष्टिनो धनं नाददीतेति।

एवं चा'संसृष्ट्यपि चादद्या'दित्यपिशब्दश्रवणात् 'संसृष्टो नान्यमातृज' एवेत्यवधारणनिषेधाच्चासंसृष्टसोदरस्य संसृष्टभिन्नोदरस्य च विभज्य ग्रहणं कर्तव्यमित्युक्तं भवति। द्वयोरपि धनग्रहणकारणस्यैकैकस्य सद्भावात्। एतदेव स्पष्टीकृतं **मनुना**। (अ. ९ श्लो. २१०) 'विभक्ताः सहजीवन्तो विभजेरन्पुनर्यदीति' संसृष्टिविभागं प्रक्रम्य (अ. ९ श्लो. २११। २१२) "येषां
३० ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः। म्रियेतान्यतरो वाऽपि तस्य भागो न लुप्यते। सोदर्या विभजेयुस्तं समेत्य सहिताः समम्। भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभय" इति वदता येषां

---

१ झ–विभागं। २ झ–संसृष्टानुजातस्य; ख ग फ–संसृष्टी जातस्य। ३ संसृष्टाः सहजीवन्तो इत्यपि पाठान्तरम्।

भ्रातॄणां संसृष्टिनां मध्ये ज्येष्ठः कनिष्ठो मध्यमो वांऽशप्रदानतोंऽशप्रदाने, सार्वविभक्तिकस्तसिः, विभागकाल इति यावत्। **हीयेत** स्वांशात् भ्रश्येत आश्रमान्तरपरिग्रहेण ब्रह्महत्यादिना वा म्रियेत वा तस्य भागो न लुप्यते अतः पृथगुद्धरणीयो न संसृष्टिन एव गृह्णीयुरित्यर्थः। तस्योद्धृतस्य विनियोगमाह। 'सोदर्या विभजेयुस्तमिति'। तमुद्धृतं भागं सोदर्याः सहोदरा असंसृष्टा अपि समेत्य देशान्तरगता अपि समागम्य सहिताः संभूय समं न न्यूनाधिकभावेन ये च भ्रातरो भिन्नोदराः संसृष्टास्ते च सनाभयो भगिन्यश्च समं विभजेयुः। समं विभज्य गृह्णीयुरिति स्पष्टोऽर्थः॥ १३९॥

पुत्रपत्न्यादिसंसृष्टिनां यद्दायग्रहणमुक्तं तस्यापवादमाह—

**क्लीबोऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जडः।**
**अन्धोऽचिकित्स्यरोगाद्या भर्तव्याः स्युर्निरंशकाः॥ १४०॥**

**क्लीबस्तृ**तीयप्रकृतिः। **पतितो** ब्रह्महादिः। **तज्जः** पतितोत्पन्नः। **पङ्गुः** पादविकलः। **उन्मत्तकः** वातिकपैत्तिकश्लैष्मिकसन्निपातग्रहावेशलक्षणैरुन्मादैरभिभूतः। **जडो** विकलान्तःकरणः हिताहितावधारणाक्षम इति। **अन्धो** नेत्रेन्द्रियविकलः। **अचिकित्स्यरोगः** अप्रतिसमाधेययक्ष्मादिरोगग्रस्तः।

अनंशाः।

**आद्य**शब्देनाश्रमान्तरगतपितृद्वेष्युपपातकिबधिरमूकनिरिन्द्रियाणां ग्रहणम्। यथाह **वसिष्ठः**। 'अनंशास्त्वाश्रमान्तरगता' इति (१७-५२) **नारदेनापि**। 'पितृद्विट् पतितः षण्ढो यश्च स्यादौपपातिकः। औरसा अपि नैतेंऽशं लभेरन्क्षेत्रजाः कुत' इति (अ. १३ श्लो. २१)। **मनुरपि** (अ. ९ श्लो. २०१) 'अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा। उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रिया' इति। निरिन्द्रियो निर्गतमिन्द्रियं यस्माद्व्याध्यादिना स निरिन्द्रियः।

एते क्लीबादयोऽनंशा रिक्थभाजो न भवन्ति। केवलमशनाच्छादनदानेन पोषणीया भवेयुः। अभरणे तु पतितत्वदोषः। 'सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा। ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेदिति' **मनु**स्मरणात् (अ. ९ श्लो. २०२) अत्यन्तं यावज्जीवमित्यर्थः।

तेषां भरणम्।

एतेषां विभागात्प्रागेव दोषप्राप्तावनंशत्वमुपपन्नं न पुनर्विभक्तस्य। विभागोत्तरकालमप्यौषधादिना दोषनिर्हरणे भागप्राप्तिरस्त्येव। 'विभक्तेषु सुतो जातः सवर्णायां विभागभागि'त्यस्य समानन्यायत्वात्। पतितादिषु पुंलिङ्गत्वमविवक्षितं अतश्च पत्नीदुहितृमात्रादीनामप्युक्तदोषदुष्टानामनंशित्वं वेदितव्यम्॥ १४०॥

क्लीबादीनामनंशत्वात्तत्पुत्राणामप्यनंशित्वे प्राप्ते इदमाह—

**औरसाः क्षेत्रजास्त्वेषां निर्दोषा भागहारिणः।**

**एतेषां** क्लीबादीना**मौरसाः क्षेत्रजा** वा पुत्रा **निर्दोषा** अंशग्रहणविरोधिक्लैब्यादिदोषरहिता **भागहारिणो**ऽशग्राहिणो भवन्ति। तत्र क्लीबस्य क्षेत्रजः पुत्रः **संभवत्यन्ये**षामौरसा अपि। औरसक्षेत्रजयोर्ग्रहणमितरपुत्रव्युदासार्थम्॥

षण्ढादीनां पुत्राणां विभागः।

१ क ख ग ड फ-तृतीयप्रकृतिः। २ ज-अनाशत्वात्।

**सुताश्चैषां प्रभर्तव्या यावद्वै भर्तृसात्कृता ॥ १४१ ॥**

क्लीबादिदुहितॄणां विशेषमाह ।

**एषां** क्लीबादीनां **सुता** दुहितरो यावद्विवाहसंस्कृता भवन्ति तावद्भरणीयाः । **च**शब्दात्संस्कार्याश्च ॥ १४१ ॥

**अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः ।**
**निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च ॥ १४२ ॥**

**एषां** क्लीबादीनामपुत्राः **पत्न्यः साधुवृत्तयः** सदाचाराश्चेद्भर्तव्या भरणीयाः । **व्यभिचारिण्यस्तु निर्वास्याः** । **प्रतिकूलास्तथैव च** निर्वास्या भवन्ति । भरणीयाश्चाव्यभिचारिण्यश्चेत् । न पुनः प्रातिकूल्यमात्रेण भरणमपि न कर्तव्यम् ॥ १४२ ॥

क्लीबादिपत्नीनां विशेषमाह ।

'विभजेरन्सुताः पित्रोरि'[1]त्यत्र स्त्रीपुंधनविभागं संक्षेपेणाभिधाय पुरुषधनविभागो विस्तरेणाभिहितः । इदानीं स्त्रीधनविभागं विस्तरेणाभिधास्यंस्तत्स्वरूपं तावदाह—

**पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् ।**
**आधिवेदनिकाद्यं च स्त्रीधनं परिकीर्तितम् ॥ १४३ ॥**

**पित्रा मात्रा पत्या भ्रात्रा** च यद्दत्तं, यच्च विवाहकालेऽग्नावधिकृत्य मातुलादिभिर्दत्तं, **आधिवेदनिकं** अधिवेदननिमित्तं 'अधिविन्नस्त्रियै दद्यादिति'[2] वक्ष्यमाणं । **आद्य**शब्देन रिक्थक्रयसंविभागपरिग्रहाधिगमप्राप्तमेतत् स्त्रीधनं **मन्वादिभिरुक्तम्** ।

स्त्रीधनं तद्भेदाश्च ।

स्त्रीधनशब्दश्च यौगिको न पारिभाषिकः । योगसंभवे परिभाषाया अयुक्तत्वात् । यत्पुनर्**मनु**नोक्तम् ॥ ( अ. ९ श्लो. १९४ ) । 'अध्यग्न्यध्यावाहनिकं दत्तं च प्रीतिकर्मणि । भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतमिति' स्त्रीधनस्य षड्विधत्वं तन्न्यूनसंख्याव्यवच्छेदार्थं नाधिकसंख्याव्यवच्छेदाय ॥ अध्यग्न्यादिस्वरूपं च **कात्यायने**नाभिहितम् । "विवाहकाले यत्स्त्रीभ्यो दीयते ह्यग्निसन्निधौ । **तदध्यग्निकृतं** सद्भिः स्त्रीधनं परिकीर्तितम् ॥ यत्पुनर्लभते नारी नीयमाना पितुर्गृहात् । **अध्यावाहनिकं** नाम स्त्रीधनं तदुदाहृतम् । प्रीत्या दत्तं तु यत्किंचिच्छ्वश्र्वा वा श्वशुरेण वा । पादवन्दनिकं चैव **प्रीतिदत्तं** तदुच्यते ॥ ऊढया कन्यया वाऽपि पत्युः पितृगृहेऽपि वा । भ्रातुः सकाशात्पित्रोर्वा लब्धं **सौदायिकं** स्मृतमिति" ॥ १४३ ॥

अध्यग्न्यादिस्त्रीधनलक्षणम् ।

**बन्धुदत्तं तथा शुल्कमन्वाधेयकमेव च ।**

किंच । **बन्धुभिः** कन्याया मातृबन्धुभिः पितृबन्धुभिश्च **यद्दत्तं** शुल्कं यद्गृहीत्वा कन्या दीयते । **अन्वाधेयकं** परिणयनादनु पश्चादाहितं दत्तम् । उक्तं च **कात्यायनेन** । 'विवाहात्परतो यच्च लब्धं भर्तृकुलात्स्त्रिया । **अन्वाधेयं** तु तद्द्रव्यं लब्धं पितृकुलात्तथेति' । स्त्रीधनं परिकीर्तितमिति गतेन संबन्धः ॥

एवं स्त्रीधनमुक्तं तद्विभागमाह ।

---

१ अ. २ श्लो. ११७ । २ श्लो. १४८.

**अतीतायामप्रजसि बान्धवास्तदवाप्नुयुः ॥ १४४ ॥**

तत्पूर्वोक्तं स्त्रीधन**मप्रजसि** अनपत्यायां दुहितृदौहित्रीपुत्रपौत्ररहितायां स्त्रियामतीतायां मृतायां **बान्धवा** भर्त्रादयो वक्ष्यमाणा गृह्णन्ति ॥ १४४ ॥

सामान्येन बान्धवा धनग्रहणाधिकारिणो दर्शिताः। इदानीं विवाहभेदेनाधिकारिभेदमाह—

**अप्रजःस्त्रीधनं भर्तुर्ब्राह्मादिषु चतुर्ष्वपि।**
**दुहितॄणां प्रसूता चेच्छेषेषु पितृगामि तत् ॥ १४५ ॥**

**अप्रजसः स्त्रियाः** पूर्वोक्तायाः ब्राह्मदैवार्षप्राजापत्येषु चतुर्षु विवाहेषु भार्यात्वं प्राप्ताया[1] अतीतायाः पूर्वोक्तं **धनं** प्रथमं **भर्तुर्भ**वति। तदभावे तत्प्रत्यासन्नानां सपिण्डानां भवति। **शेषे**ष्वासुरगान्धर्वराक्षसपैशाचेषु विवाहेषु **तदप्रजःस्त्रीधनं पितृगामि**। माता च पिता च पितरौ तौ गच्छतीति पितृगामि। एकशेषनिर्दिष्टाया अपि मातुः प्रथमं धनग्रहणं पूर्वमेवोक्तम्। तदभावे तत्प्रत्यासन्नानां धनग्रहणम्। सर्वेष्वेव विवाहेषु प्रसूताऽपत्यवती **चेद्दुहितॄणां** तद्धनं भवति। अत्र दुहितृशब्देन दुहितृदुहितर उच्यन्ते। साक्षाद्दुहितॄणां 'मातुर्दुहितरः शेषमि'त्यत्रोक्तत्वात्।

विवाहभेदेनाधिकारिभेदाः।

अतश्च मातृधनं मातरि मृतायां प्रथमं दुहितरो गृह्णन्ति। तत्र चोढानूढासमवायेऽनूढा गृह्णाति। तदभावे परिणीता। तत्रापि प्रतिष्ठिताप्रतिष्ठितासमवायेऽप्रतिष्ठिता गृह्णाति। तदभावे प्रतिष्ठिता यथाह **गौतमः** ( २८-२४ )। 'स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां चेति'। तत्र चशब्दात् प्रतिष्ठितानां च। अप्रतिष्ठिता अनपत्या निर्धना वा। एतच्च शुल्कव्यतिरेकेण। शुल्कं तु सोदर्याणामेव। 'भगिनीशुल्कं सोदर्याणामूर्ध्वं मातुरिति' **गौतम**वचनात् ( २८-२५ ) ॥

सर्वासां दुहितॄणामभावे दुहितृदुहितरो गृह्णन्ति। 'दुहितॄणां प्रसूता चेदि'त्यस्माद्वचनात्। तासां भिन्नमातृकाणां विषमाणां समवाये मातृद्वारेण भागकल्पना। 'प्रतिमातृतो वा स्ववर्गेण भागविशेष' इति **गौतम**स्मरणात् (२८-१७)॥ दुहितृदौहित्रीणां समवाये दौहित्रीणां किंचिदेव दातव्यम्। यथाह **मनुः**। (अ.९श्लो.१९३) 'यास्तासां स्युर्दुहितरस्तासामपि यथार्हतः। मातामह्या धनात्किंचित्प्रदेयं प्रीतिपूर्वकमिति'॥ दौहित्रीणामप्यभावे दौहित्रा धनहारिणः। यथाह **नारदः**। (अ.१३श्लो.२) 'मातुर्दुहितरोऽभावे दुहितॄणां तदन्वय' इति। तच्छब्देन सन्निहितदुहितृपरामर्शात् ॥

दौहित्राणामभावे पुत्रा गृह्णन्ति। 'ताभ्य ऋतेऽन्वय' इत्युक्तत्वात्। **मनुर**पि दुहितॄणां पुत्राणां च मातृधनसंबन्धं दर्शयति॥ 'जनन्यां संस्थितायां तु समं सर्वे सहोदराः। भजेरन्मातृकं रिक्थं भगिन्यश्च सनाभय' इति ( अ. ९ श्लो. १९२ )। मातृकं रिक्थं सर्वे सहोदराः समं भजेरन्, सनाभयः[3] भगिन्यश्च समं भजेरन्निति संबन्धः। न पुनः सहोदरा भगिन्यश्च संभूय भजेरन्निति। इतरेतरयोगस्य द्वन्द्वैकशेषाभावादप्रतीतेः। विभागकर्तृत्वान्वयेनापि चशब्दोपपत्तेः। यथा[4] 'देवदत्तः कृषिं कुर्याद्यज्ञदत्तश्चेति'। समग्रहणमुद्धारविभागनिवृत्त्यर्थम्। सोदरग्रहणं भिन्नोदरनिवृत्त्यर्थम्। अनपत्यहीनजातिस्त्रीधनं त भिन्नोदराऽप्युत्तमजातीयसपत्नी-

---

१ श्लो. ११७. २ श्लो. ११७। ३ ग-सनाभयः समं, भगिन्यश्च १०। ४ घ ङ यथाह।

दुहिता गृह्णाति। तदभावे तदपत्यम्। **मनुः**। (अ. ९ श्लो. १९८) 'स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं कथंचन। ब्राह्मणी तद्धरेत्कन्या तदपत्यस्य वा भवेदिति'। ब्राह्मणीग्रहणमुत्तमजात्युपलक्षणम्। अतश्चानपत्यवैश्याधनं क्षत्रिया कन्या गृह्णाति। पुत्राणामभावे पौत्राः पितामहीधनहारिणः। 'रिक्थभाज ऋणं प्रतिकुर्युरिति' **गौतम**स्मरणात् (१२-४०)। 'पुत्रपौत्रैर्ऋणं देयमिति' पौत्राणामपि पितामह्यृणापाकरणेऽधिकारात्। पौत्राणामप्यभावे पूर्वोक्तभर्त्रादयो बान्धवा धनहारिणः॥

स्त्रीधनप्रसङ्गेन वाग्दत्ताविषयं किंचिदाह—

**दत्वा कन्यां हरन्दण्ड्यो व्ययं दद्याच्च सोदयम्।**

**कन्यां** वाचा **दत्वा**ऽपहरन् द्रव्यानुबन्धाद्यनुसारेण राज्ञा **दण्डनीयः**। एतच्चापहरणकारणाभावे। सति तु कारणे, 'दत्तामपि हरेत्कन्यां श्रेयांश्चेद्वर आव्रजेदि'त्यपहारिण्यनुज्ञानान्न दण्ड्यः। यच्च वाग्दाननिमित्तं वरेण स्वसंबन्धिनां कन्यासंबन्धिनां वोपचारार्थं धनं व्ययीकृतं तत्सर्वं सोदयं सवृद्धिकं कन्यादाता वराय दद्यात्॥

वाग्दत्तकन्याहरणे दण्डः।

अथ कथंचिद्वाग्दत्ता संस्कारात्प्राक् म्रियते तदा किं कर्तव्यमित्यत आह—

**मृतायां दत्तमादद्यात्परिशोध्योभयव्ययम्॥ १४६॥**

यदि **वाग्दत्ता मृता** तदा यत्पूर्वमङ्गुलीयकादि शुल्कं वा वरेण **दत्तं** तद्वर आददीत। **परिशोध्योभयव्ययम्**। उभयोरात्मनः कन्यादातुश्च यो व्ययस्तं परिशोध्य, विगणय्यावशिष्टमाददीत। यत्तु कन्यायै मातामहादिभिर्दत्तं शिरोभूषणादिकं वा क्रमागतं तत्सहोदरा भ्रातरो गृह्णीयुः। 'रिक्थं मृतायाः कन्याया गृह्णीयुः सोदरास्तदभावे मातुस्तदभावे पितुरिति' **बौधायन**स्मरणात् (परिशिष्ट ७)॥ १४६॥

वाग्दानोत्तरं कन्यामरणे निर्णयः।

मृताप्रजःस्त्रीधनं भर्तृगामीत्युक्तम्। इदानीं जीवन्त्याः सप्रजाया अपि स्त्रिया धनग्रहणे क्वचिद्भर्तुरभ्यनुज्ञामाह—

**दुर्भिक्षे धर्मकार्ये च व्याधौ संप्रतिरोधके।**
**गृहीतं स्त्रीधनं भर्ता न स्त्रियै दातुमर्हति॥ १४७॥**

**दुर्भिक्षे** कुटुम्बभरणार्थं **धर्मकार्ये** अवश्यकर्तव्ये **व्याधौ** च **संप्रतिरोधके** बन्दिग्रहणनिग्रहादौ द्रव्यान्तररहितः **स्त्रीधनं** गृह्णन् **भर्ता न** पुन**र्दातुमर्हति**। प्रकारान्तरेणापहरन्दद्यात्। भर्तृव्यतिरेकेण जीवन्त्याः स्त्रिया धनं केनापि दायादेन न ग्रहीतव्यम्। 'जीवन्तीनां तु तासां ये तद्धरेयुः स्वबान्धवाः। तांशिष्याच्चौरदण्डेन धार्मिकः पृथिवीपतिरिति' दण्डविधानात् (**मनु** अ. ८ श्लो. २९)। तथा। 'पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो[3] भवेत्। न तं भजेरन्दायादा भजमानाः पतन्ति ते' इति दोषश्रवणाच्च (मनु अ. ९ श्लो. २००)॥ १४७॥

दुर्भिक्षादिसंकटे भर्त्रा स्त्रीधनं ग्राह्यम्।

---

१ फ ग तथा च। २ **मनुस्मृतिटीकायां** 'ब्राह्मणीकन्यापुत्रस्येति' **राघवानन्दः**; 'तस्या अपत्यस्य तद्धनं भवेदिति' **रामचन्द्रः**। ३ धृतो भर्त्रादिना तस्यै दत्तः स तया धृत इत्यर्थः।

**अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम्।**
**न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्धं प्रकीर्तितम् ॥ १४८ ॥**

यस्या उपरि विवाहः साऽधिविन्ना सा चासौ स्त्री चेत्यधिविन्नस्त्री तस्यै **अधिविन्नस्त्रियै आधिवेदनिकं** अधिवेदननिमित्तं धनं **समं** यावदधिवेदनार्थं व्ययीकृतं तावद्**दद्यात्**। यस्यै श्वशुरेण भर्त्रा वा **स्त्रीधनं न दत्तम्। दत्ते** पुनः स्त्रीधने आधिवेदनिकद्रव्यस्या**र्धं** दद्यात्। अर्धशब्दश्चात्र समविभागवचनो न भवति, अतश्च यावता तत्पूर्वदत्तमाधिवेदनिकसमं भवति तावद्देयमित्यर्थः ॥ १४८ ॥

आधिवेदनिकं स्त्रीधनमुक्तं तदाह।

एवं विभागमुक्त्वा इदानीं तत्संदेहे निर्णयहेतूनाह—

**विभागनिह्नवे ज्ञातिबन्धुसाक्ष्यभिलेखितैः।**
**विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः ॥ १४९ ॥**

**विभागस्य** निह्नवे अपलापे **ज्ञातिभिः**, पितृबन्धुभिर्मातृ**बन्धुभिः** मातुलादिभिः **साक्षिभिः** पूर्वोक्तलक्षणैर्लेख्येन च विभागपत्रेण **विभागभावना** विभागनिर्णयो ज्ञातव्यः। तथा **यौतकैः** पृथक्कृतैर्गृहक्षेत्रैश्च। पृथक्कृष्यादिकार्यप्रवर्तनं पृथक् पञ्चमहायज्ञादिधर्मानुष्ठानं च **नारदेन** विभागलिङ्गमुक्तम्। 'भ्रातॄणामविभक्तानामेको धर्मः प्रवर्तते। विभागे सति धर्मोऽपि भवेत्तेषां पृथक् पृथगिति' (अ. १३ श्लो. ३७) ॥ तथा पराण्यपि विभागलिङ्गानि तेनैवोक्तानि। 'साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च। विभक्ता भ्रातरः कुर्युर्नाविभक्ताः कथंचनेति' (अ. १३ श्लो. ३९) ॥ १४९ ॥

विभागस्य निह्नवे विभागनिर्णयः।

इति रिक्थविभागप्रकरणम्

---

## अथ सीमाविवादप्रकरणम् ९.

**सीम्नो विवादे क्षेत्रस्य सामन्ताः स्थविरादयः।**
**गोपाः सीमाकृषाणा ये सर्वे च वनगोचराः ॥ १५० ॥**
**नयेयुरेते सीमानं स्थलाङ्गारतुषद्रुमैः।**
**सेतुवल्मीकनिम्नास्थिचैत्याद्यैरुपलक्षिताम् ॥ १५१ ॥**

ग्रामद्वयसंबन्धिनः **क्षेत्रस्य सीम्नो विवादे** तथैकग्रामान्तर्वर्तिक्षेत्रमर्यादाविवादे च **सामन्तादयः स्थलाङ्गारादिभिः** पूर्वकृतैः सीमालक्षणै**रुपलक्षितां** चिह्नितां **सीमां नयेयुः** निश्चिनुयुः ॥ सीमा क्षेत्रादिमर्यादा सा चतुर्विधा। जनपदसीमा ग्रामसीमा क्षेत्रसीमा गृहसीमा चेति ॥ सा च यथासंभवं पञ्चलक्षणा। तदुक्तं **नारदेन**। "ध्वजिनी मत्स्यिनी चैव नैधानी भयवर्जिता। राजशासननीता च सीमा पञ्चविधा स्मृतेति" ॥ ध्वजिनी वृक्षादिलक्षिता। वृक्षादीनां प्रकाशत्वेन ध्वजतुल्यत्वात्। मत्स्यिनी

अधुना सीमाविवादनिर्णय उच्यते

सलिलवती । मत्स्यशब्दस्य स्वाधारजललक्षणत्वात् । नैधानी निखाततुषाङ्गारादिमती । तेषां निखातत्वेन निधानतुल्यत्वात् । भयवर्जिता अर्थिप्रत्यर्थिपरस्परसंप्रतिपत्तिनिर्मिता । राजशासननीता ज्ञातृचिह्नाभावे राजेच्छया निर्मिता ।

एवंभूतायां षोढा विवादः संभवति । यथाह **कात्यायनः** । "आधिक्यं न्यूनता चांशे अस्ति नास्तित्वमेव च । अभोगभुक्तिः सीमा च षड्भूवादस्य हेतव" इति ॥ तथाहि । ममात्र पञ्चनिवर्तनाया भूमेरधिका भूरस्तीति केनचिदुक्ते पञ्चनिवर्तनैव नाधिकेत्याधिक्ये विवादः । पञ्चनिवर्तना मदीया भूमिरित्युक्ते न ततो न्यूनैवेति न्यूनतायाम् । पञ्चनिवर्तनो ममांश इत्युक्ते अंश एव नास्तीत्यस्तिनास्तित्वविवादः संभवति । मदीया भूः प्रागविद्यमानभोगैव भुज्यते इत्युक्ते न मन्तता चिरन्तन्येव मे भुक्तिरित्यभोगभुक्तौ विवादः । इयं मर्यादेयं वेति सीमाविवाद इति षट्प्रकार एष विवादः संभवति । षट्प्रकारेऽपि भूविवादे श्रुत्यर्थाभ्यां सीमाया अपि निर्णीयमानत्वात् सीमानिर्णयप्रकरणे तस्यान्तर्भावः ।

समन्ताद्भवाः **सामन्ताः** । चतसृषु दिक्ष्वनन्तरग्रामादयस्ते च प्रतिसीमं व्यवस्थिताः । 'ग्रामो ग्रामस्य सामन्तः क्षेत्रं क्षेत्रस्य कीर्तितम् । गृहं गृहस्य निर्दिष्टं समन्तात्परिरभ्य हीति' **कात्यायन**वचनात् । ग्रामादिशब्देन तत्स्थाः पुरुषा लक्ष्यन्ते । 'ग्रामः पलायित' इति यथा । सामन्तग्रहणं च तत्संसक्ताद्युपलक्षणार्थम् । उक्तं च **कात्यायनेन** । 'संसक्तकास्तु सामन्तास्तत्संसक्तास्तथोत्तराः । संसक्तसक्तसंसक्ताः पद्माकाराः प्रकीर्तिता' इति ॥ **स्थविरा** वृद्धाः । आदिग्रहणेन मौलोद्धृतयोर्ग्रहणम् । वृद्धादिलक्षणं च **तेनै**वोक्तम् । 'निष्पाद्यमानं यैर्दृष्टं तत्कार्यं तद्गुणान्वितैः । वृद्धा वा यदि वाऽवृद्धास्ते तु वृद्धाः प्रकीर्तिताः । ये तत्र पूर्वं सामन्ताः पश्चाद्देशान्तरं गताः । तन्मूलत्वात्तु ते मौला ऋषिभिः परिकीर्तिताः ॥ उपश्रवणसंभोगकार्याख्यानोपचिह्निताः । उद्धरन्ति पुनर्यस्मादुद्धृतास्ते ततः स्मृता' इति ॥ **गोपाः** गोचारकाः । **सीमाकृषाणाः** सीमासंनिहितक्षेत्रकर्षकाः । **सर्वे च वनगोचराः** वनचारिणो व्याधादयः । ते च **मनु**नोक्ताः । ( अ. ८ श्लो. २६० ) 'व्याधान् शाकुनिकान् गोपान् कैवर्तान् मूलखातकान् । व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनगोचरानिति' ॥ **स्थल**मुन्नतो भूप्रदेशः । **अङ्गारो**ऽग्नेरुच्छिष्टम् । **तुषा** धान्यत्वचः । **द्रुमा** न्यग्रोधादयः । **सेतु**र्जलप्रवाहबन्धः । **चैत्यं** पाषाणादिबन्धः । आदिशब्देन वेणुवालुकादीनां ग्रहणम् । एतानि च प्रकाशाप्रकाशभेदेन द्विप्रकाराणि । तथा च **मनुः** । (अ. ८ श्लो. २४६।४७।४८) 'सीमावृक्षांस्तु कुर्वीत न्यग्रोधाश्वत्थकिंशुकान् । शाल्मलीशालतालांश्च क्षीरिणश्चैव पादपान् ॥ गुल्मान्वेणूंश्च विविधान् शमीवल्लीस्थलानि च । शरान्कुब्जकगुल्मांश्च यथा सीमा न नश्यति ॥ तडागान्युदपानानि वाप्यः प्रस्रवणानि च । सीमासंधिषु कार्याणि देवतायतनानि चेति' प्रकाशरूपाणि ॥ ( अ. ८ श्लो. २४९।५०।५१।५२ ) 'उपच्छन्नानि चान्यानि सीमालिङ्गानि कारयेत् । सीमाज्ञाने नृणां वीक्ष्य नित्यं लोके विपर्ययम् ॥ अश्मनोऽस्थीनि गोवालांस्तुषान् भस्मकपालिकाः । करीषमिष्टकाङ्गारशर्करावालुकास्तथा ॥ यानि चैवंप्रकाराणि कालाद्भूमिर्न भक्षयेत् । तानि संधिषु सीमायामप्रकाशानि कारयेत् ॥ एतैर्लिङ्गैर्नयेत्सीमां

सीमावृक्षाः ।

राजा विवदमानयोरिति ' प्रच्छन्नलिङ्गानि ॥ 'एतैः प्रकाशाप्रकाशरूपैर्लिङ्गैः सामन्तादिप्रदर्शितैः सीमांप्रति विवदमानयोः सीमानिर्णयं कुर्याद्राजा ॥ १५० ॥ १५१ ॥

यदा पुनश्चिह्नानि न सन्ति विद्यमानानि वा लिङ्गालिङ्गतया संदिग्धानि तदा निर्णयोपायमाह—

**सामन्ता वा समग्रामाश्चत्वारोऽष्टौ दशापि वा ।**
**रक्तस्रग्वसनाः सीमां नयेयुः क्षितिधारिणः ॥ १५२ ॥**

**सामन्ताः** । पूर्वोक्तलक्षणाः । **समग्रामाश्चत्वारोऽष्टौ दशापि वेति** एवं समसंख्याः प्रत्यासन्नग्रामीणाः । **रक्तस्रग्विणो** रक्ताम्बरधरा मूर्ध्न्यारोपित**क्षितिखण्डाः** सीमानं नयेयुः प्रदर्शयेयुः। 'सामन्ता वेति' विकल्पाभिधानं स्मृत्यन्तरोक्तसाक्ष्यभिप्रायम्। यथाह **मनुः** । ( अ. ८ श्लो. २५३ ) ' साक्षिप्रत्यय एव स्यात्सीमावादविनिर्णय ' इति ॥ तत्र च साक्षिणां निर्णेतृत्वं मुख्यं तदभावे सामन्तानाम् । तदुक्तम् । **मनुः** ( अ. ८ श्लो. २५८ ) ' साक्ष्यभावे तु चत्वारो ग्रामाः सीमान्तवासिनः । सीमाविनिर्णयं कुर्युः प्रयता राजसन्निधाविति ' ॥ तदभावे तत्संसक्तादीनां निर्णेतृत्वम् । यथाह **कात्यायनः** । ' स्वार्थसिद्धौ प्रदुष्टेषु सामन्तेष्वर्थगौरवात् । तत्संसक्तैस्तु कर्तव्य उद्धारो नात्र संशयः ॥ संसक्तसक्तदोषे तु तत्संसक्ताः प्रकीर्तिताः । कर्तव्या न प्रदुष्टास्तु राज्ञा धर्मं विजानतेति' ।

सीमाविवादे सीमादर्शकाः ।

सामन्ताद्यभावे मौलादयो ग्राह्याः । तेषामभावे सामन्तमौलवृद्धोद्धृतादयः । ' स्थावरे षट्प्रकारेऽपि कार्या नात्र विचारणेति ' **कात्यायनेन** क्रमविधानात् । एते च सामन्तादयः संख्यागुणातिरेकेण संभवन्ति । ' सामन्ताः साधनं पूर्वं निर्दोषाः स्युर्गुणान्विताः । द्विगुणास्तूत्तरा ज्ञेयास्ततोऽन्ये त्रिगुणा मता ' इति स्मरणात्॥ ते च साक्षिणः सामन्तादयश्च स्वैः शपथैः शापिताः सन्तः सीमां नयेयुः । ( अ० ८ श्लो० २५६ ) ' शिरोभिस्ते गृहीत्वोर्वीं स्रग्विणो रक्तवाससः । सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समञ्जसमिति ' **मनु**स्मरणात् । नयेयुरिति बहुवचनं द्वयोर्निरासार्थं नैकस्य । ' एकश्चेदुन्नयेत्सीमां सोपवासः समुन्नयेत् । रक्तमाल्याम्बरधरो भूमिमादाय मूर्धनीति ' **नारदे**नैकस्याभ्यनुज्ञानात् ( अ० ११ श्लो० १० ) ॥ योऽयं ( अ० ११ श्लो० ९ ) ' नैकः समुन्नयेत्सीमां नरः प्रत्ययवानपि । गुरुत्वादस्य कार्यस्य क्रियैषा बहुषु स्थिते 'त्येकस्य निषेधः स उभयानुमतधर्मविद्व्यतिरिक्तविषय इत्यविरोधः ॥

स्थलादिचिह्नाभावेऽपि साक्षिसामन्तादीनां सीमाज्ञान उपायविशेषो **नारदे**नोक्तः । (अ० ११ श्लो० ६) '**निम्नगापहृतोत्सृष्टनष्टचिह्नासु भूमिषु । तत्प्रदेशानुमानाच्च प्रमाणाद्भोगदर्शनादिति'** । **निम्नगाया नद्या अपहृतेनापहरणेनोत्सृष्टानि** स्वस्थानात्प्रच्युतानि नष्टानि वा लिङ्गानि यासु मर्यादाभूमिषु तत्र तत्प्रदेशानुमानादुत्सृष्टनष्टचिह्नानां प्राचीनप्रदेशानुमानात् ग्रामादारभ्य सहस्रदण्डपरिमितं क्षेत्रमस्य ग्रामस्य पश्चिमे भागे इत्येवंविधात्प्रमाणाद्वा प्रत्यर्थिसमक्षमविप्रतिपन्नाया अस्मार्तकालोपलक्षितभुक्तेर्वा निश्चिनुयुः ॥

१ प्रमाणैर्भोगदर्शनैरित्यपि पाठः ।

**बृहस्पतिना** चात्र विशेषो दर्शितः। 'आगमं च प्रमाणं च भोगकालं च नाम च। भूभागलक्षणं चैव ये विदुस्तेऽत्र साक्षिण' इति॥ एते च साक्षिसामन्तादयः शपथैः श्राविताः सन्तः कुलादिसमक्षं राज्ञा प्रष्टव्याः। यथाह **मनुः** (अ. ८ श्लो. २५४) 'ग्रामेयककुलानां तु समक्षं सीम्नि साक्षिणः। प्रष्टव्याः सीमलिङ्गानि तयोश्चैव विवादिनोरिति'। ते च पृष्टाः साक्ष्या-
५ दयः ऐकमत्येन समस्ताः सीम्नि निर्णयं ब्रूयुः।

तैर्निर्णीतां सीमानं तत्प्रदर्शितसकललिङ्गयुक्तां साक्ष्यादिनामान्वितां चाविस्मरणार्थं पत्रे समारोपयेत्। उक्तंच **मनुना** (अ. ८ श्लो. २६१) 'ते पृष्टास्तु यथा ब्रूयुः समस्ताः सीम्नि निर्णयम्। निबध्नीयात्तथा सीमां सर्वांस्तांश्चैव नामत' इति॥ एतेषां साक्षिसामन्तप्रभृतीनां सीमाचङ्क्रमणदिनादारभ्य यावत्त्रिपक्षं राजदैविकं व्यसनं चेन्नोत्पद्यते तदा तत्प्रदर्शनात्सीमानिर्णयः।
१० अयं च राजदैविकव्यसनावधिः **कात्यायने**नोक्तः। 'सीमाचङ्क्रमणे कोशे पादस्पर्शे तथैव च। त्रिपक्षपक्षसप्ताहं दैवराजिकमिष्यत' इति॥ १५२॥

यदा त्वमीषामुक्तसाक्षि[1]वचसां त्रिपक्षाभ्यन्तरे रोगादि दृश्यते अथवा प्रतिवादिनिर्दिष्टाभ्यधिकसंख्यागुणसाक्ष्यन्तरविरुद्धवचनता तदा ते मृषाभाषितया दण्डनीयास्तदाह—

## अनृते तु पृथक् दण्ड्या राज्ञा मध्यमसाहसम्।

१५ **अनृते** मिथ्यावादने निमित्तभूते सति सर्वे सामन्ताः प्रत्येकं **मध्यमसाहसेन** चत्वारिंशदधिकेन पणपञ्चशतेन **दण्डनीयाः**। सामन्तविषयता चास्य साक्षिमौलादीनां स्मृत्यन्तरे दण्डान्तरविधानादवगम्यते। तथा च **मनुः** (अ. ८ श्लो. २५७) 'यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः। विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतं दममिति'॥ **नारदो**ऽपि (अ. ११ श्लो. ७)। 'अथ चेदनृतं ब्रूयुः सामन्ताः सीमनिर्णये। सर्वे पृथक् पृथक् दण्ड्या राज्ञा मध्यमसाहस-
२० मिति' सामन्तानां मध्यमसाहसं दण्डमभिधाय 'शेषाश्चेदनृतं ब्रूयुर्नियुक्ता भूमिकर्मणि। प्रत्येकं तु जघन्यास्ते विनेयाः पूर्वसाहसमिति' तत्संसक्तादिषु प्रथमसाहसमुक्तवान्॥ मौलादीनामपि तमेव दण्डमाह। 'मौलवृद्धादयस्त्वन्ये दण्डगत्या पृथक् पृथक्। विनेयाः प्रथमेनैव साहसेनानृते स्थिता' इति (अ. ११ श्लो. ८)। आदिशब्देन गोपशाकुनिकव्याधवनगोचराणां ग्रहणम्। यद्यपि शाकुनिकादीनां पापरतत्वाल्लिङ्गप्रदर्शन एवोपयोगो न साक्षात्सीमानिर्णये
२५ तथापि लिङ्गदर्शन एव मृषाभाषित्वसंभवाद्दण्डविधानमुपपद्यत एव।

'अनृते तु पृथक् दण्ड्या' इत्येतद्दण्डविधानमज्ञानविषयम्॥ 'बहूनां तु गृहीतानां न सर्वे निर्णयं यदि। कुर्युर्भयाद्वा लोभाद्वा दण्ड्यास्तूत्तमसाहसमिति' ज्ञानविषये साक्ष्यादीनां **कात्यायनेन** दण्डान्तरविधानात्॥ तथा साक्षिवचनभेदेऽप्ययमेव दण्ड**स्तेनै**वोक्तः। 'कीर्तिते यदि भेदः स्याद्दण्ड्यास्तूत्तमसाहसमिति'। एवमज्ञानादिनाऽनृतवदने साक्ष्यादीन् दण्डयित्वा
३० पुनः सीमाविचारः प्रवर्तयितव्यः। 'अज्ञानोक्तौ दण्डयित्वा पुनः सीमां विचारयेदि'त्युक्त्वा। 'त्यक्त्वा दुष्टांस्तु सामन्तानन्यान्मौलादिभिः सह। संमिश्र्य कारयेत्सीमामेवं धर्मविदो विदुरिति' निर्णयप्रकार**स्तेनै**वोक्तः॥

---

1 ग ङ—साक्ष्यवचसां; ङ—साक्ष्यस्य च वचसां।

यदा पुनः सामन्तप्रभृतयो ज्ञातारश्चिह्नानि च न सन्ति तदा कथं निर्णय इत्यत आह—

**अभावे ज्ञातृचिह्नानां राजा सीम्नः प्रवर्तिता ॥ १५३ ॥**

**ज्ञातृणां** सामन्तादीनां लिङ्गादीनां च वृक्षादीनाम**भावे राजैव सीम्नः प्रवर्तिता** प्रवर्तयिता। अन्तर्भावितोऽत्र ण्यर्थः। ग्रामद्वयमध्यवर्तिनीं विवादास्पदीभूतां भुवं समं प्रविभज्य अस्येयं भूरस्येयमित्युभयोः समर्प्य तन्मध्ये सीमालिङ्गानि कुर्यात्। यदा तस्यां भूमावन्यतरस्यो- ५ पकारातिशयो दृश्यते तदा तस्यैव ग्रामस्य सकला भूः समर्पणीया। यथाह **मनुः**। (अ. ८ श्लो. २६५) 'सीमायामविषह्यायां स्वयं राजैव धर्मवित्। प्रदिशेद्भूमिमेकेषामुपकारादिति स्थितिरिति' ॥ १५३ ॥

असत्यामप्यतद्भावाशंकायामस्याः स्मृतेर्न्यायमूलतां दर्शयितुमतिदेशमाह—

**आरामायतनग्रामनिपानोद्यानवेश्मसु।** १०
**एष एव विधिर्ज्ञेयो वर्षाम्बुप्रवहादिषु ॥ १५४ ॥**

**आरामः** पुष्पफलोपचयहेतुर्भूभागः। **आयतनं** निवेशनं पलालकूटाद्यर्थं विभक्तो भूप्रदेशः। **ग्रामः** प्रसिद्धः। ग्रामग्रहणं च नगराद्युपलक्षणार्थम्। **निपानं** पानीयस्थानं वापीकूपप्रभृतिकम्। **उद्यानं** क्रीडावनम्। **वेश्म** गृहम्। **एतेष्वारामादिष्वयमेव** सामन्तसाक्ष्यादिलक्षणो **विधिर्ज्ञातव्यः**। तथा प्रवर्षणोद्धत**जलप्रवाहेषु** अनयोर्गृहयोर्मध्येन जलौघः प्रवहति १५ अनयोर्वेत्येवंप्रकारे विवादे आदिग्रहणात्प्रासादेष्वपि प्राचीन एव विधिर्वेदितव्यः। तथा च **कात्यायनः**। 'क्षेत्रकूपतडागानां केदारारामयोरपि। गृहप्रासादावसथनृपदेवगृहेषु चेति' १५४

सीमानिर्णयमुक्त्वा तत्प्रसंगेन मर्यादाप्रभेदनादौ दण्डमाह—

**मर्यादायाः प्रभेदे च सीमातिक्रमणे तथा।**
**क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः ॥ १५५ ॥** २०

अनेकक्षेत्रव्यवच्छेदिका साधारणा **भूर्मर्यादा** तस्याः **प्रकर्षेण भेदने, सीमातिक्रमणे** सीमानमतिलंघ्य कर्षणे, **क्षेत्रस्य** च भयादिप्रदर्शनेन **हरणे,** यथाक्रमेण **अधमोत्तममध्यम**साहसा दण्डा वेदितव्याः। क्षेत्रग्रहणं चात्र गृहारामाद्युपलक्षणार्थम्। यदा पुनः स्वीयभ्रान्त्या क्षेत्रादिकमपहरति तदा द्विशतो दमो वेदितव्यः यथाह **मनुः**। (अ. ८ श्लो. २६४) 'गृहं तडागमारामं क्षेत्रं वा भीषया हरन्। शतानि २५ पञ्च दण्ड्यः स्यादज्ञानाद्द्विशतो दम' इति। अपह्रियमाणक्षेत्रादिभूयस्त्वपर्यालोचनया कदाचिदुत्तमोऽपि दण्डः प्रयोक्तव्यः। अत एवाह। 'वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने। तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहस' इति ॥ १५५ ॥

मर्यादादीनां भेदादिषु दण्डाः।

यः पुनः परक्षेत्रे सेतुकूपादिकं प्रार्थनयाऽर्थदानेन वा लब्धानुज्ञो निर्मातुमिच्छति तन्निषेधतः क्षेत्रस्वामिन एव दण्ड इत्याह— ३०

**न निषेध्योऽल्पबाधस्तु सेतुः कल्याणकारकः।**
**परभूमिं हरन्कूपः स्वल्पक्षेत्रो बहूदकः ॥ १५६ ॥**

**परकीयां भूमिमपहरन्** नाशयन्नपि **सेतुर्**जलप्रवाहबन्धः क्षेत्रस्वामिना न प्रतिषेध्यः, स चेदीषत्पीडाकरो बहूपकारकश्च भवति । कूपश्चाल्पक्षेत्रव्यापित्वेनाल्पबाधो बहूदकत्वेन कल्याणकारकश्चातो बहूदको नैव निवारणीयः । कूपग्रहणं च वापीपुष्करिण्याद्युपलक्षणार्थम् । यदा पुनरसौ सर्वक्षेत्रवर्तितया बहुबाधो नद्यादिसमीपक्षेत्रवर्तितया अल्पोपकारकस्तदाऽसौ. निषेध्य इत्यर्थादुक्तं भवति ॥ सेतोश्च द्वैविध्यमुक्तं **नारदेन** (अ. ११ श्लो. १८)। 'सेतुश्च द्विविधो ज्ञेयः खेयो **बन्ध्य**स्तथैव च । तोयप्रवर्तनात्खेयो बन्ध्यः स्यात्तन्निवर्तनादिति '॥

सेतोर्निषेधकस्य क्षेत्रस्वामिन एव ५ दण्डः।

यदा त्वन्यनिर्मितं सेतुं भेदनादिना नष्टं स्वयं संस्करोति तदा पूर्वस्वामिनं तद्वंश्यं नृपं वा पृष्ट्वैव संस्कुर्यात् । यथाह **नारदः** ( अ.११ श्लो. २०-२१ ) । 'पूर्वप्रवृत्तमुत्सन्नमपृष्ट्वा स्वामिनं १० तु यः । सेतुं प्रवर्तयेत्कश्चिन्न स तत्फलभाग्भवेत् ॥ मृते तु स्वामिनि पुनस्तद्वंश्ये वाऽपि **मानवे** । राजानमामन्त्र्य ततः कुर्यात्सेतुप्रवर्तनमिति' ॥ १५६ ॥

क्षेत्रस्वामिनं प्रत्युपदिष्टमिदानीं सेतोः प्रवर्तयितारं प्रत्याह—

**स्वामिने योऽनिवेद्यैव क्षेत्रे सेतुं प्रवर्तयेत् ।**
**उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः ॥ १५७ ॥**

१५ **क्षेत्रस्वामिन**मनभ्युपगम्य, तदभावे राजानं वा, यः परक्षेत्रे **सेतुं प्रवर्तयत्य**सौ फलभाङ् न भवत्यपि तु तदुत्पन्ने फले **क्षेत्रस्वामिनो भोगस्तदभावे राज्ञः** । तस्मात्प्रार्थनया अर्थदानेन वा क्षेत्रस्वामिनं तदभावे राजानं वाऽनुज्ञाप्यैव परक्षेत्रे सेतुः प्रवर्तनीय इति तात्पर्यम् ॥ १५७॥

क्षेत्रस्वामिना सेतुर्न प्रतिषेध्य इत्युक्तमिदानीं तस्यैव प्रसक्तानुप्रसक्त्या क्वचिद्विध्यन्तरमाह—

**फालाहतमपि क्षेत्रं न कुर्याद्यो न कारयेत् ।**
२० **स प्रदाप्यः कृष्टफलं क्षेत्रमन्येन कारयेत् ॥ १५८ ॥**

यः पुनः क्षेत्रस्वामिपार्श्वे अहमिदं क्षेत्रं कृषामीति अङ्गीकृत्य पश्चादुत्सृजति न चान्येन कर्षयति तच्च क्षेत्रं यद्यपि **फालाहतं** ईषद्धलेन विदारितं न सम्यग्बीजवापार्हं तथापि तस्य[1] **कृष्टस्य फलं** यावत्तत्रोत्पत्त्यर्हं सामन्तादिकल्पितं तावदसौ कर्षको दापनीयः । तच्च **क्षेत्रं** पूर्वकर्षकादाच्छि**द्यान्येन कारयेत्** ॥ १५८ ॥

२५ इति सीमाविवादप्रकरणम् ॥

## अथ स्वामिपालविवादप्रकरणम् १०

व्यवहारपदानां परस्परहेतुहेतुमद्भावाभावात् तेषामाद्यमृणादानमित्यादिना पाठक्रमो न विवक्षित इति व्युत्क्रमेण स्वामिपालविवादोऽभिधीयते—

**माषानष्टौ तु महिषी सस्यघातस्य कारिणी ।**
३० **दण्डनीया तदर्धं तु गौस्तदर्धमजाविकम् ॥ १५९ ॥**

१ ञ-तस्याकृष्टस्य ।

पर**सस्यविनाशकारिणी महिषी अष्टौ माषान्दण्डनीया। गौस्तदर्धं** चतुरो माषान्। **अजा** मेषाश्च माषद्वयं दण्डनीयाः । महिष्यादीनां धनसंबन्धाभावात्तत्स्वामी पुरुषो लक्ष्यते । माषश्चात्र ताम्रिकपणविंशतितमो भागः । 'माषो विंशतिमो भागः पणस्य परिकीर्तित' इति **नारद**स्मरणात् ।

गवादिपशुभिः परसस्यादिभक्षणे पशुस्वामिनो दण्डः।

एतच्चाज्ञानविषयम् । ज्ञानपूर्वे तु 'पणस्य पादौ द्वौ गां तुं तद्द्विगुणं महिषीं तथा । तथाऽजाविकवत्सानां पादो दण्डः प्रकीर्तित' इति **स्मृत्यन्तरो**क्तं द्रष्टव्यम् । यत्पुन**र्नारदेनो**क्तम् ( अ. ११ श्लो. ३१ ) । 'माषं गां दापयेद्दण्डं द्वौ माषौ महिषीं तथा । तथाजाविकवत्सानां दण्डः स्यादर्धमाषिक' इति तत्पुनः प्ररोहयोग्यमूलावशेषभक्षणविषयम् ॥ १५९ ॥

अपराधातिशयेन क्वचिद्दण्डद्वैगुण्यमाह—

**भक्षयित्वोपविष्टानां यथोक्ताद्द्विगुणो दमः ।**

यदि पशवः परक्षेत्रे सस्यं **भक्षयित्वा** तत्रैवानिवारिताः शेरते तदा **यथोक्ताद्दण्डाद्द्विगुणो दण्डो** वेदितव्यः । सवत्सानां पुनर्भक्षयित्वोपविष्टानां यथोक्ताच्चतुर्गुणो दण्डो वेदितव्यः । 'वसतां द्विगुणः प्रोक्तः सवत्सानां चतुर्गुण' इति वचनात् ॥

क्षेत्रान्तरे पश्वन्तरे वाऽतिदेशमाह—

**सममेषां विवीतेऽपि खरोष्ट्रं महिषीसमम् ॥ १६० ॥**

**विवीतः** प्रचुरतृणकाष्ठो रक्ष्यमाणः परिगृहीतो भूप्रदेशः, तदुपघाते**ऽपी**तरक्षेत्रदण्डेन **समं दण्डमेषां** महिष्यादीनां विद्यात् । खराश्च उष्ट्राश्च **खरोष्ट्रं तन्महिषीसमम्** । महिषी यत्र यादृशेन[1] दण्डेन दण्ड्यते तत्र तादृशेनैव दण्डेन खरोष्ट्रमपि प्रत्येकं दण्डनीयम् । सस्योपरोधकत्वेन खरोष्ट्रयोः प्रत्येकं महिषीतुल्यत्वाद्दण्डस्य चापराधानुसारित्वात्खरोष्ट्रमिति समाहारो न विवक्षितः ॥ १६० ॥

परसस्यविनाशे गोस्वामिनो दण्ड उक्तः; इदानीं क्षेत्रस्वामिने फलमप्यसौ दापनीय इत्याह—

**यावत्सस्यं विनश्येत्तु तावत्स्यात्क्षेत्रिणः फलम् ।**
**गोपस्ताड्यस्तु गोमी तु पूर्वोक्तं दण्डमर्हति ॥ १६१ ॥**

सस्यग्रहणं क्षेत्रोपचयोपलक्षणार्थम् । यस्मिन्क्षेत्रे **यावत्प**लालधान्यादिकं गवादिभिर्विनाशितं **तावत्क्षेत्रफलमे**तावति क्षेत्रे एतावद्भवतीति सामन्तैः परिकल्पितं तत्क्षेत्रस्वामिने **गोमी** दापनीयः । **गोप**स्तु ताडनीय एव न फलं दापनीयः । गोपस्य ताडनं पूर्वोक्तधनदण्डसहितमेव पालदोषेण सस्यनाशे द्रष्टव्यम् । 'या नष्टा पालदोषेण गौस्तु सस्यानि नाशयेत् । न तत्र गोमिनां दण्डः पालस्तं दण्डमर्हतीति' वचनात्[2] ॥

गोमी पुनः स्वापराधेन सस्यनाशे पूर्वोक्तं दण्डमेवार्हति न ताडनम् । फलदानं पुनः सर्वत्र गोस्वामिन एव । तत्फलपुष्टमहिष्यादिक्षीरेणोपभोगद्वारेण तत्क्षेत्रफलभागित्वात् । गवादिभक्षि-

[1] ङ-तादृशेन । [2] नारदस्मृतौ अ. ११ श्लो. ३५ ।

तावशिष्टं पलालादिकं गोस्वामिनैव ग्रहीतव्यम् । मध्यस्थकल्पितमूल्यदानेन क्रीतप्रायत्वात् । अत एव **नारदः** ( ११–३८ ) । 'गोभिस्तु भक्षितं सस्यं यो नरः प्रतियाचते । सामन्तानुमतं देयं धान्यं यत्तत्र वापितम् ॥ पलालं गोमिनो देयं[1] धान्यं वै कर्षकस्य त्विति ' ॥ १६१ ॥

**पथि ग्रामविवीतान्ते क्षेत्रे दोषो न विद्यते ।**
**अकामतः कामचारे चौरवद्दण्डमर्हति ॥ १६२ ॥**

क्षेत्रविशेषे अपवादमाह ।

**पथि** ग्रामसमीपवर्तिनि **क्षेत्रे ग्रामविवीत**समीपवर्तिनि च क्षेत्रे **अकामतो** गोभिर्भक्षिते गोपगोमिनोर्द्वयोरप्यदोषः । दोषाभावप्रतिपादनं दण्डाभावार्थं विनष्टसस्य मूल्यदानप्रतिषेधार्थं च । **कामचारे** कामतश्चारणे **चौरवत्** चौरस्य यादृशो दण्डस्तादृशं **दण्डमर्हति** ।

एतच्चानावृतक्षेत्रविषयम् । 'यत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि । न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणामिति' दण्डाभावस्यानावृतक्षेत्रविषयत्वेन **मनु**नोक्तत्वात् ( अ. ८ श्लो. २३८ ) 'आवृते पुनर्मार्गादिक्षेत्रेऽपि दोषोऽस्त्येव । वृतिकरणं च **तेनै**वोक्तम् । ( अ. ८ श्लो. २३९ ) वृतिं च तत्र कुर्वीत यामुष्ट्रो नावलोकयेत् । छिद्रं निवारयेत्सर्वं श्वसूकरमुखानुगमिति' ॥१६२॥

**महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः ।**
**पालो येषां न ते मोच्या दैवराजपरिप्लुताः ॥ १६३ ॥**

पशुविशेषेऽपि दण्डाभावमाह ।

महांश्चासावुक्षा च **महोक्षो** वृषः सेक्ता । **उत्सृष्टपशवः** वृषोत्सर्गादिविधानेन देवतोद्देशेन वा त्यक्ताः । **सूतिका** प्रसूता अनिर्दशाहा । **आगन्तुकः** स्वयूथात्परिभ्रष्टो देशान्तरादागतः । एते **मोच्याः** । परसस्यभक्षणेऽपि न दण्ड्याः । येषां च पालो न विद्यते तेऽपि **दैवराजपरिप्लुताः** दैवराजोपहताः सस्यनाशकारिणो न दण्ड्याः ।

आदिग्रहणाद्धस्त्यश्वादयो गृह्यन्ते । ते **चोशनसो**क्ताः । 'अदण्ड्या हस्तिनो ह्यश्वाः प्रजापाला हि ते स्मृताः । अदण्ड्यौ काणकुब्जौ[2] च ये शश्वत्कृतलक्षणाः ॥ अदण्ड्यागन्तुकी गौश्च सूतिका वाऽभिसारिणी[3] । अदण्ड्याश्चोत्सवे गावः श्राद्धकाले तथैव चेति '* । अत्रोत्सृष्टपशूनामस्वामिकत्वेन दण्ड्यत्वासंभवात् दृष्टान्तार्थमुपादानम् । यथोत्सृष्टपशवो न दण्ड्या एवं महोक्षादय इति ॥ १६३ ॥

गोस्वामिन उक्तमिदानीं गोपं प्रत्युपदिश्यते—

**यथार्पितान् पशून्गोपः सायं प्रत्यर्पयेत्तथा ।**
**प्रमादमृतनष्टांश्च प्रदाप्यः कृतवेतनः ॥ १६४ ॥**

---

१ 'गावस्तु गोमिनादेया' इति पाठः । २ **क फ**–काणकुंटौ च; 'अदण्ड्याः काणकूटाश्च वृषाश्च कृतलक्षणाः' इत्यपि पाठान्तरम् । कूटः एकशृङ्गः कृतलक्षणः प्रतप्तायसेन कृतलाञ्छनः । ३ **क ग फ**–चाभिसारिणी; अभिसारिणी स्वयूथात्प्रच्युता पुनः स्वयूथगामिनी । * **नारदस्मृता**वपि (अ. ११ श्लो. ३२) एतदर्थमेववचनम् ।

गोस्वामिना प्रातःकाले यथा गणयित्वा **यथा समर्पिताः** पशवस्तथैव **सायं**काले गोपो गोस्वामिने **पशून्** विगणय्य **प्रत्यर्पयेत्** । **प्रमादेन** स्वापराधेन **मृतान्नष्टांश्च** पशून् **कृतवेतनः** कल्पितवेतनो गोपः स्वामिने **दाप्यः** । वेतनकल्पना च **नारदे**नोक्ता । 'गवां शताद्वत्सतरी धेनुः स्याद्द्विशता भृतिः । प्रतिसंवत्सरं गोपे सन्दोहश्चाष्टमेऽहनीति' । प्रमादनाशश्च **मनुना** स्पष्टीकृतः । (अ. ८ श्लो. २३२) 'नष्टं जग्धं च कृमिभिः श्वहतं विषमे मृतम् । हीनं पुरुषकारेण प्रदद्यात्पाल एव त्विति' ॥ प्रसह्य चौरैरपहृतान् न दाप्यः । यथाह **मनुः** । (अ. ८ श्लो. २३३) 'विक्रम्य तु हृतं चौरैर्न पालो दातुमर्हति । यदि देशे च काले च स्वामिनः स्वस्य शंसतीति' । दैवराजमृतानां पुनः कर्णादि प्रदर्शनीयम् । (अ. ८ श्लो. २३४) 'कर्णौ चर्म च वालांश्च बस्तिं स्नायुं च रोचनाम् । पशुषु स्वामिनां दद्यान्मृतेष्वङ्गानि दर्शयन्निति' **मनुस्मरणात्** ॥ १६४ ॥

गोपविषये आह ।

**पालदोषविनाशे तु पाले दण्डो विधीयते ।**
**अर्धत्रयोदशपणः स्वामिनो द्रव्यमेव च ॥ १६५ ॥**

किंच । पालदोषेण पशुविनाशे अर्धाधिकत्रयोदशपणं दण्डं पालो दाप्यः । स्वामिनश्च द्रव्यं विनष्टपशुमूल्यं मध्यस्थकल्पितम् । दण्डपरिमाणार्थः श्लोकोऽन्यत्पूर्वोक्तमेव ॥ १६५ ॥

**ग्रामेच्छया गोप्रचारो भूमी राजवशेन वा ।**
**द्विजस्तृणैधःपुष्पाणि सर्वतः सर्वदा हरेत् ॥ १६६ ॥**

गोप्रसङ्गात् गोप्रचारमाह ।

**ग्रामेच्छया** ग्राम्यजनेच्छया भूम्यल्पत्वमहत्त्वापेक्षया राजेच्छया वा **गोप्रचारः** कर्तव्यः । गवादीनां प्रचारणार्थं कियानपि भूभागोऽकृष्टः परिकल्पनीय इत्यर्थः । **द्विजस्तृणेन्धनाद्यभावे** गवाग्निदेवतार्थं तृणकाष्ठकुसुमानि **सर्वतः** स्ववदनिवारित **आहरेत्** । फलानि त्वपरिवृतादेव । 'गोग्न्यर्थे तृणमेधांसि वीरुद्वनस्पतीनां च पुष्पाणि स्ववदाददीत फलानि चापरिवृतानामिति' **गौतमस्मरणात्** (१२-२८) ॥

एतच्चापरिगृहीतविषयम् । परिगृहीते द्विजव्यतिरिक्तस्यापि परिग्रहादेव स्वत्वसिद्धेः । यथा **तेनै**वोक्तम् (१०-३१) । 'स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेष्विति' । यत्पुनरुक्तम् । 'तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलम् । अनापृच्छन् हि गृह्णानो हस्तच्छेदनमर्हतीति' तद्द्विजव्यतिरिक्तविषयमनापद्विषयं वा । गवादिव्यतिरिक्तविषयं वेति ॥ १६६ ॥

**१ क फ–** विवुष्यातु । २ अंकादि दर्शयेदिति क्वचित्पाठः । ३ 'अर्धत्रयोदशपणः अर्धरहितत्रयोदशपणः सार्धद्वादशपण इति यावत् । तास्तृतीयपूर्वपदाः समानाधिकरणेन समस्यन्त उत्तरपदलोपश्चेति वार्तिकादुत्तरपदलोपी कर्मधारयः । यत्तु विज्ञानेश्वरेणार्धाधिकत्रयोदशपणो दण्डः इतिव्याख्यातं तत् सार्धद्विमात्रादिषु अर्धत्रिमात्रादि महाभाष्यकारशब्दप्रयोगदर्शनादुपेक्ष्यम्' । इति **श्रीबापूशास्त्री मोघे** इत्येतैः शोधितमिताक्षरापुस्तके टिप्पणीयं दृश्यते ॥

इदमपरं गवादीनां स्थानासनसौकर्यार्थमुच्यते—

**धनुःशतं परीणाहो ग्रामक्षेत्रान्तरं भवेत्।**
**द्वे शते खर्वटस्य स्यान्नगरस्य चतुःशतम्॥ १६७॥**

**ग्रामक्षेत्रयोरन्तरं धनुः**शतपरिमितं **परीणाहः**। सर्वतोदिशं अनुप्रगस्यं कार्यम्। **खर्व-** ५ गवादिप्रचारार्थं **टस्य** प्रचुरकण्टकसन्तानस्य ग्रामस्य द्वे शतं परीणाहः। **नगरस्य** बहुजनसं- क्षेत्रपरिमाणम्। कीर्णस्य धनुषां **चतुःशत**परिमितमन्तरं कार्यम्॥ १६७॥

इति स्वामिपालविवादप्रकरणम्॥

## अथास्वामिविक्रयप्रकरणम् ११

संप्रत्यस्वामिविक्रयाख्यं व्यवहारपदमुपक्रमते। तस्य च लक्षणं **नारदे**नोक्तम् (७-१)। १० 'निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वाऽपहृत्य वा। विक्रीयते समक्षं यत् स ज्ञेयोऽस्वामिविक्रय' इति। तत्र किमित्याह—

**स्वं लभेतान्यविक्रीतं क्रेतुर्दोषोऽप्रकाशिते।**
**हीनाद्रहो हीनमूल्ये वेलाहीने च तस्करः॥ १६८॥**

**स्व**मात्मसंबन्धि द्रव्यं **अन्यविक्रीत**मस्वामिविक्रीतं यदि पश्यति तदा **लभेत** गृह्णीयात्। १५ अस्वामिविक्रयस्य स्वत्वहेतुत्वाभावात्। विक्रीतग्रहणं दत्ताहितयोरुपलक्ष- (अस्वामिवि- क्रयाख्यं पदम्।) णार्थम्। अस्वामिविक्रीतत्वेन तुल्यत्वात्। अत एवोक्तम्। 'अस्वामिविक्रयं दान- माधिं च विनिवर्तयेदिति'। **क्रेतुः** पुन**रप्रकाशिते** गोपिते क्रये **दोषो** भवति। तथा **हीना**द्द्रव्यागमोपायहीना**द्रहसि** चैकान्तेऽसंभाव्ये द्रव्यादपि, **हीनमूल्ये**नाल्पतरेण च मूल्येन क्रये, **वेलाहीने** वेलया हीनो वेलाहीनः क्रयो रात्र्यादौ कृतस्तत्र च क्रेता **तस्करो** २० भवति। तस्करवत् दण्डभाग्भवतीत्यर्थः। यथोक्तम्। 'द्रव्यमस्वामिविक्रीतं प्राप्य स्वामी तदा- प्नुयात्। [1]प्रकाशे क्रयतः शुद्धिः क्रेतुः स्तेयं रहः क्रयादिति'॥ १६८॥

स्वाम्यभियुक्तेन क्रेत्रा किं कर्तव्यमित्यत आह—

**नष्टापहृतमासाद्य हर्तारं ग्राहयेन्नरम्।**
**देशकालातिपत्तौ च गृहीत्वा स्वयमर्पयेत्॥ १६९॥**

२५ **नष्टमपहृतं** वाऽन्यदीयं क्रयादिना प्राप्य **हर्तारं** विक्रेतारं **नरं ग्राहयेत्**। चौरोद्धरणका- दिभिः। आत्मविशुद्ध्यर्थं राजदण्डाप्राप्त्यर्थं च। अथाविदितदेशान्तरं गतः कालान्तरे वा विपन्नस्तदा मूलसमाहरणाशक्तेर्विक्रेतारमदर्शयित्वैव **स्वयमेव** तद्धनं नाष्टिकस्य **समर्पयेत्**। तावतैवासौ शुद्धो भवतीति **श्रीकराचार्येण** व्याख्यातं तदिदमनुपपन्नम्। '[2]विक्रेतुर्दर्शनाच्छु- द्धिरि'त्यनेन पौनरुक्त्यप्रसङ्गादतोऽन्यथा व्याख्यायते। **नष्टापहृत**मिति नाष्टिकं प्रत्ययमुप- ३० देशः। नष्टमपहृतं वाऽऽत्मीयद्रव्य**मासाद्य** क्रेतृहस्तस्थं ज्ञात्वा तं **हर्तारं** विक्रेतारं स्थानपाला-

---
१ क ज—प्रकाशक्रयतः। २ अग्रे श्लो. १७०.

दिभिर्ग्राहयेत् । **देशकालातिपत्तौ** देशकालातिक्रमे स्थानपालाद्यसन्निधाने तद्विज्ञापनकालात् प्राक् पलायनशङ्कायां **स्वयमेव गृहीत्वा** तेभ्यः **समर्पयेत्** ॥ १६९ ॥

ग्राहिते हर्तरि किं कर्तव्यमित्यत आह—

**विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपो दमम् ।**
**क्रेता मूल्यमवाप्नोति तस्माद्यस्तस्य विक्रयी ॥ १७० ॥**

यद्यसौ गृहीतः क्रेता न मयेदमपहृतमन्यसकाशात्क्रीतमिति वक्ति तदा तस्य क्रेतु**र्विक्रेतुर्दर्शनमात्रेण शुद्धि**र्भवति । न पुनरसावभियोज्यः । किं तु तत्प्रदर्शितेन विक्रेत्रा सह नाष्टिकस्य विवादः[1] । यथाह **बृहस्पतिः** । 'मूले समाहृते क्रेता नाभियोज्यः कथंचन । मूलेन सह वादस्तु नाष्टिकस्य विधीयत' इति ॥ तस्मिन् विवादे यद्यस्वामिविक्रयनिश्चयो भवति तदा **तस्य** नष्टापहृतस्य गवादिद्रव्यस्य यो **विक्रयी** विक्रेता **तस्य सकाशात्स्वामी** नाष्टिकः स्वीयं **द्रव्य**मवाप्नोति । **नृप**श्चापराधानुरूपं **दण्डं क्रेता** च **मूल्य**मवाप्नोति ।

अथासौ देशांतरगतस्तदा योजनसंख्ययाऽऽनयनार्थं कालो देयः । 'प्रकाशं वा क्रयं कुर्यान्मूलं वाऽपि समर्पयेत् । मूलानयनकालश्च देयस्तत्राध्वसंख्ययेति, स्मरणात् ॥ अथाविज्ञातदेशतया मूलमाहर्तुं न शक्नोति तदा क्रयं शोधयित्वैव शुद्धो भवति । 'असमाहार्यमूलस्तु क्रयमेव विशोधयेदिति' वचनात् ॥ यदा पुनः साक्ष्यादिभिर्दिव्येन वा क्रयं न शोधयति, मूलं च न प्रदर्शयति, तदा स एव दण्डभाग्भवतीति । 'अनुपस्थापयन्मूलं क्रयं वाऽप्यविशोधयन् । यथाभियोगं धनिने धनं दाप्यो दमं च स' इति **मनु**स्मरणात् ॥ १७० ॥

स्वं लभेतान्यविक्रीतमित्युक्तं; तल्लिप्सुना किं कर्तव्यमित्यत आह—

**आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा ।**
**पञ्चबन्धो दमस्तस्य राज्ञे तेनाविभाविते ॥ १७१ ॥**

**आगमेन** रिक्थक्रयादिना **उपभोगेन**[2] च मदीयमिदं द्रव्यं तच्चैवं **नष्ट**मपहृतं वेत्यपि **भाव्यं** साधनीयं तत्स्वामिना । **अतोऽन्यथा तेन** स्वामिना **अविभाविते पञ्चबन्धो** नष्टद्रव्यस्य पञ्चमांशो **दमो** नाष्टिकेण **राज्ञे** देयः । अत्र चायं क्रमः । पूर्वस्वामी नष्टमात्मीयं साधयेत् । ततः क्रेता चौर्यपरिहारार्थं मूल्यलाभाय च विक्रेतारं आनयेत् । अथानेतुं न शक्नोति तदाऽऽत्मदोषपरिहाराय क्रयं शोधयित्वा द्रव्यं नाष्टिकस्य समर्पयेदिति ॥ १७१ ॥

नष्टवस्तुनिश्चयोपायाः ।

**हृतं प्रनष्टं यो द्रव्यं परहस्तादवाप्नुयात् ।**
**अनिवेद्य नृपे दण्ड्यः स तु षण्णवतिं पणान् ॥ १७२ ॥**

**हृतं प्रनष्टं** वा चौरादिहस्तस्थं **द्रव्य**मनेन मदीयं द्रव्यमपहृतमिति **नृपस्यानिवेद्यैव** दर्पादिना यो गृह्णाति असौ **षडुत्तरान् नवतिं पणान् दण्डनीयः** । तस्करप्रच्छादकं प्रत्याह । प्रच्छादकत्वेन दुष्टत्वात् ॥ १७२ ॥

तस्करस्य

[1] झ—विवाहः । [2] झ—उपयोगेन ।

राजपुरुषानीतं प्रत्याह—

**शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम् ।**
**अर्वाक्संवत्सरात्स्वामी हरेत परतो नृपः ॥ १७३ ॥**

यदा तु शुल्काधिकारिभिः स्थानरक्षिभिर्वा नष्टमपहृतं द्रव्यं राजपार्श्वं प्रत्यानीतं तदा ५ **संवत्सरादर्वाक्** प्राप्तश्चेत् नाष्टिकस्तद्द्रव्यमवाप्नुयात् ।[1] ऊर्ध्वं पुनः संवत्सराद्राजा गृह्णीयात् । स्वपुरुषानीतं च द्रव्यं जनसमूहेषूद्घोष्य यावत्संवत्सरं राज्ञा रक्षणीयम् । यथाह **गौतमः** । 'प्रनष्टस्वामिकमधिगम्य राज्ञे प्रब्रूयुर्विख्याप्य संवत्सरं राज्ञा रक्ष्यमिति' (१०–३६–३७)। यत्पुन**र्मनुना** विध्यन्तरमुक्तम् । ( अ. ८ श्लो. ३० ) 'प्रनष्टस्वामिकं द्रव्यं राजा त्र्यब्दं निधापयेत् । अर्वाक् त्र्यब्दाद्धरेत्स्वामी परतो नृपतिर्हरेदिति' तच्छ्रुतवृत्तसंपन्नब्राह्मणविषयम् । रक्षणनिमित्त-१० षड्भागग्रहणं च **तेनै**वोक्तम् । ( मनु. अ. ८ श्लो. ३३ ) 'आददीताथ षड्भागं प्रनष्टाधिगतान्नृपः । दशमं द्वादशं वाऽपि सतां धर्ममनुस्मरन्निति' ॥ तृतीयद्वितीयप्रथमसंवत्सरेषु यथाक्रमं षष्ठादयो भागा वेदितव्याः । प्रपञ्चितं चैतत्पुरस्तात् ॥ १७३ ॥

मनूक्तषड्भागादिग्रहणस्य द्रव्यविशेषे अपवादमाह—

**पणानेकशफे दद्याच्चतुरः पञ्च मानुषे ।**
१५ **महिषोष्ट्रगवां द्वौ द्वौ पादं पादमजाविके ॥ १७४ ॥**

परस्वामिकनष्टलब्धपशूनामेकदिने भृतिमाह ।

**एकशफे** अश्वादौ प्रनष्टाधिगते तत्स्वामी राज्ञे रक्षणनिमित्तं **चतुरः पणान् दद्यात्** । **मानुषे** मनुष्यजातीये द्रव्ये **पञ्च** पणान् । **अजाविके** पुनः प्रत्येकं पादं पादम् । **महिषोष्ट्रगवां** रक्षणनिमित्तं प्रत्येकं **द्वौ द्वौ** पणान् दद्यादिति सर्वत्रानुषज्यते ॥[1] अजाविकमिति समासनिर्देशेऽपि पादं पादमिति वीप्साबलात्प्रत्येकं २० संबन्धोऽवगम्यते ॥ १७४ ॥

इत्यस्वामिविक्रयप्रकरणम् ॥

## अथ दत्ताप्रदानिकप्रकरणम् १२

दत्ताप्रदानिकम् ।

**अधुना विहितोऽविहित**मार्गद्वयाश्रयतया[2] दत्तानपाकर्म दत्ताप्रदानिकमिति च लब्धाभिधानद्वयं दानाख्यं व्यवहारपदं अभिधीयते । तत्स्वरूपं च **नारदेनो**क्तम् (४–१) । 'दत्त्वा २५ द्रव्यमसम्यग्यः पुनरादातुमिच्छति । दत्ताप्रदानिकं नाम व्यवहारपदं हि तदिति' असम्यगविहितमार्गाश्रयेण द्रव्यं दत्वा पुनरादातुमिच्छति यस्मिन् विवादपदे तद्दत्ताप्रदानिकं दत्तस्याप्रदानं पुनर्हरणं यस्मिन्दानाख्ये तद्दत्ताप्रदानिकं नाम व्यवहारपदम् । विहितमार्गाश्रयत्वेन तत्प्रतिपक्षभूतं तदेव व्यवहारपदं दत्तानपाकर्मेत्यर्थादुक्तं भवति । दत्तस्यानपाकर्म अपुनरादानं यत्र दानाख्ये विवादपदे तद्दत्तानपाकर्म । तच्च देयादेयादिभेदेन चतुर्विधम् । यथाह

१ ग–षज्जते । २ ग–विहितमार्गद्वया ।

**नारदः**। (४-२) 'अथ देयमदेयं च दत्तं वाऽदत्तमेव च। व्यवहारेषु विज्ञेयो दानमार्गश्चतुर्विध' इति। तत्र देयमित्यनिषिद्धदानक्रियायोग्यमुच्यते। अदेयमस्वतया निषिद्धतया वा दानानर्हं यत्पुनः प्रकृतिस्थेन दत्तमव्यावर्तनीयं तद्दत्तमुच्यते। अदत्तं तु यत्प्रत्याहरणीयं तत्कथ्यते। तदेतत्संक्षेपतो निरूपयितुमाह।

**स्वं कुटुम्बाविरोधेन देयं**

**स्वमा**त्मीयं **कुटुम्बाविरोधेन** कुटुम्बभरणावशिष्टमिति यावत्तद्द्यात्। तद्भरणस्यावश्यकत्वात्। तथाच **मनुः**। (अ. ८ श्लो. ३५) 'वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः। अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीदिति'। 'कुटुम्बाविरोधेने'त्यनेनादेयमेकविधं दर्शयति। 'स्वं दद्यादि'त्यनेन चास्वभूतानामन्वाहितयाचितकाधिसाधारणनिक्षेपाणां पञ्चानामप्यदेयत्वं व्यतिरेकतो दर्शितम्। यत्पुन**र्नारदेना**ष्टविधत्वमदेयानामुक्तम् (४-३)। 'अन्वाहितं याचितकमाधिः साधारणं च यत्। निक्षेपः पुत्रदारांश्च सर्वस्वं चान्वये सति॥ आपत्स्वपि च कष्टासु वर्तमानेन देहिना। अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतमिति'॥ एतददेयत्वमात्राभिप्रायेण। न पुनः स्वत्वाभावाभिप्रायेण। पुत्रदारसर्वस्वप्रतिश्रुतेषु स्वत्वस्य सद्भावात्॥ अन्वाहितादीनां स्वरूपं प्रागेव प्रपञ्चितम्॥

अदेयम्।

स्वं दद्यादित्यनेन दारसुतादेरपि स्वत्वाविशेषेण देयत्वप्रसङ्गे प्रतिषेधमाह—

**दारसुतादृते।**
**नान्वये सति सर्वस्वं यच्चान्यस्मै प्रतिश्रुतम्॥ १७५॥**

**दारसुतादृते** दारसुतव्यतिरिक्तं स्वं दद्यान्न दारसुतमित्यर्थः। तथा पुत्रपौत्राद्य**न्वये** विद्यमाने सर्वं धनं **न** दद्यात्। 'पुत्राननुत्पाद्य संस्कृत्य वृत्तिं चैषां प्रकल्पयेदिति' स्मरणात्। तथा हिरण्यादिकमन्यस्मै **प्रतिश्रुतमन्यस्मै न** देयम्॥ १७५॥

एवं दारसुतादिव्यतिरिक्तं देयमुक्त्वा प्रसङ्गाददेय[1]धनग्रहणं च प्रतिग्रहीत्रा प्रकाशमेव कर्तव्यमित्याह—

**प्रतिग्रहः प्रकाशः स्यात्स्थावरस्य विशेषतः।**

प्रतिग्रहणं **प्रतिग्रहः**, सः **प्रकाशः** कर्तव्यः विवादनिराकरणार्थम्। **स्थावरस्य च विशेषतः** प्रकाशमेव ग्रहणं कार्यम्। तस्य सुवर्णादिवदात्मनि स्थितस्य दर्शयितुमशक्यत्वात्॥

एवं प्रासङ्गिकमुक्त्वा प्रकृतमनुसरन्नाह—

**देयं प्रतिश्रुतं चैव दत्वा नापहरेत्पुनः॥ १७६॥**

**देयं प्रतिश्रुतं** चैव। यद्यस्मै धर्मार्थं प्रतिश्रुतं तत्तस्मै देयमेव यद्यसौ धर्मात्प्रच्युतो न भवति। प्रच्युते न पुनर्दातव्यम्। 'प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यादिति' **गौतम**स्मरणात् (५-२३)। **दत्वा नापहरेत्पुनः**। न्यायमार्गेण यद्दत्तं तत्सप्तविधमपि पुनर्नापहर्तव्यम्। किंतु **तथैवानु**-

[1] क ख—देयधनग्रहण।

मन्तव्यम्। यत्पुनरन्यायेन दत्तं तददत्तं षोडशप्रकारमपि प्रत्याहर्तव्यमेवेत्यर्थादुक्तं भवति। दत्तादत्तस्वरूपम्। **नारदेन** च 'दत्तं सप्तविधं प्रोक्तमदत्तं षोडशात्मकमिति' प्रतिपाद्य दत्तादत्तयोः स्वरूपं विवृतम्।

'पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात्प्रत्युपकारतः। स्त्रीशुल्कानुग्रहार्थं च **दत्तं** दानविदो विदुः॥

५ **अदत्तं** तु भयक्रोधशोकवेगरुगन्वितैः। तथोत्कोचपरीहासव्यत्यासच्छलयोगतः॥

बालमूढास्वतन्त्रार्तमत्तोन्मत्तापवर्जितम्। कर्ता ममेदं कर्मेति प्रतिलाभेच्छया च यत्॥

अपात्रे पात्रमित्युक्ते कार्ये वाऽधर्मसंयुते। यद्दत्तं स्यादविज्ञानाद**दत्त**मिति तत्स्मृतमिति॥

( अ. ४ श्लो. ८-११ )

अयमर्थः। पण्यस्य क्रीतद्रव्यस्य यन्मूल्यं दत्तम्। भृतिर्वेतनं कृतकर्मणे दत्तम्। तुष्ट्या १० बन्दिचारणादिभ्यो दत्तम्। स्नेहाद्दुहितृपुत्रादिभ्यो दत्तम्। प्रत्युपकारतः उपकृतवते प्रत्युपकाररूपेण दत्तम्। स्त्रीशुल्कं परिणयनार्थं कन्याज्ञातिभ्यो यद्दत्तम्। यच्चानुग्रहार्थमदृष्टार्थं दत्तं। तदेतत्**सप्तविधमपि दत्तमेव** न प्रत्याहरणीयम्।

भयेन बन्दिग्राहादिभ्यो दत्तम्। क्रोधेन पुत्रादिभ्यो वैरनिर्यातनायान्यस्मै दत्तम्। पुत्रवियोगादिनिमित्तशोकावेशेन दत्तम्। उत्कोचेन कार्यप्रतिबन्धनिरासार्थमधिकृतेभ्यो दत्तम्। परि- १५ हासेनोपहासेन दत्तम्। एकोऽपि स्वं द्रव्यमन्यस्मै ददात्यन्योऽपि तस्मै ददातीति दानव्यत्यासः। छलयोगतः शतदानमभिसंधाय सहस्रमिति परिभाष्य ददाति। बालेनाप्राप्तषोडशवर्षेण। मूढेन लोकवादानभिज्ञेन। अस्वतन्त्रेण पुत्रदासादिना। आर्तेन रोगाभिभूतेन। मत्तेन मदनीयमत्तेन वातिकाद्युन्मादग्रस्तेन वा अपवर्जितं दत्तम्। यथाऽयं मदीयं कर्म करिष्यतीति प्रतिलाभेच्छया दत्तम्। अचतुर्वेदाय चतुर्वेदोऽहमित्युक्तवते दत्तम्। यज्ञं करिष्यामीति धनं लब्ध्वा द्यूतादौ २० विनियुञ्जनाय दत्तमित्येवं षोडशप्रकारमपि दत्तम**दत्तमित्युच्यते**। प्रत्याहरणीयत्वात्।

आर्तदत्तस्यादत्तत्वं धर्मकार्यव्यतिरिक्तविषयम्। 'स्वस्थेनार्तेन वा दत्तं श्रावितं धर्मकारणात्। अदत्वा तु मृते दाप्यस्तत्सुतो नात्र संशय' इति **कात्यायनस्मरणात्**॥ तथेदमपरं संक्षिप्तार्थवचनं सर्वविवादसाधारणम्॥ मनुः ( अ. ८ श्लो. १६५ ) 'योगाधमनविक्रीतं योगदानप्रतिग्रहम्।[1] यस्य चाप्युपधिं पश्येत्तत्सर्वं विनिवर्तयेदिति'॥ योग उपाधिः। येनागामिनोपाधि- २५ विशेषेणाधिविक्रयदानप्रतिग्रहाः कृतास्तदुपाधिविगमे तान् क्रयादीन्विनिवर्तयेदित्यस्यार्थः। यः पुनः षोडशप्रकारमपि अदत्तं गृह्णाति यश्चादेयं प्रयच्छति तयोर्दण्डो **नारदेनोक्तः** ( ४-१२ )। 'गृह्णात्यदत्तं यो लोभाद्यश्चादेयं प्रयच्छति। अदेयदायको दण्ड्यस्तथा दत्तप्रतीच्छक' इति॥१७६॥

इति दत्ताप्रदानिकं नाम प्रकरणम्॥

## अथ क्रीतानुशयप्रकरणम् १३

३० अथ क्रीतानुशयः कथ्यते। तत्स्वरूपं च। **नारदेनोक्तम्** ( ९-१ )। 'क्रीत्वा मूल्येन य

[1] क—योगदानं प्रतिग्रहं।

पण्यं क्रेता न बहु मन्यते । क्रीतानुशय इत्येतद्विवादपदमुच्यते' इति॥ तत्र च यस्मिन्नहनि पण्यं क्रीतं तस्मिन्नेवाह्नि तदविकृतं प्रत्यर्पणीयमिति तेनैवोक्तम् (९-२)। 'क्रीत्वा मूल्येन यत्पण्यं दुष्क्रीतं मन्यते क्रयी। विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाह्नयविक्षतमिति'। द्वितीयादिदिने तु प्रत्यर्पणे विशेषस्तेनैवोक्तः (९-३)। 'द्वितीयेऽह्नि ददत्क्रेता मूल्यात् त्रिंशांशमावहेत्। द्विगुणं तु तृतीयेऽह्नि परतः क्रेतुरेव तदिति'॥ परतोऽनुशयो न कर्तव्य इत्यर्थः। एतच्च बीजे-५ व्यतिरिक्तोपभोगादि विनश्वरवस्तुविषयम्॥

बीजादिक्रये पुनरन्य एव प्रत्यर्पणविधिरित्याह—

**दशैकपञ्चसप्ताहमासत्र्यहार्द्धमासिकम्।**
**बीजायोवाह्यरत्नस्त्रीदोह्यपुंसां परीक्षणम्॥ १७७॥**

**बीजं** व्रीह्यादिबीजम्। **अयो** लोहादि। **वाह्यो** बलीवर्दादिः। **रत्नं** मुक्ताप्रवालादिकम्।१० **स्त्री** दासी। **दोह्यं** महिष्यादि। **पुमान्** दासः। एषां बीजादीनां यथाक्रमेण दशाहादिकः परीक्षाकालो विज्ञेयः। परीक्ष्यमाणे च बीजादौ यद्यसम्यक्त्वबुद्ध्याऽनुशयो भवति तदा दशाहाभ्यन्तर एव क्रयनिवृत्तिर्न पुनरूर्ध्वमित्युपदेशप्रयोजनम्॥ यत्तु **मनुवचनम्** (अ. ८ श्लो. २२२) 'क्रीत्वा विक्रीय वा किंचिद्यस्येहानुशयो भवेत्। सोऽन्तर्दशाहात् तद्द्रव्यं दद्याच्चैवाददीत चेति' तदुक्तलोहादिव्यतिरिक्तोपभोगविनश्वरगृहक्षेत्रयानशयनासनादिविषयम्। १५

सर्वं चैतदपरीक्षितक्रीतविषयम्। यत्पुनः परीक्ष्य न पुनः प्रत्यर्पणीयमिति समयं कृत्वा क्रीतं तद्विक्रेत्रे न प्रत्यर्पणीयम्। तदुक्तम्।'क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः। परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत्पुनरिति'॥ १७७॥

दोह्यादिपरीक्षाप्रसङ्गेन स्वर्णादेरपि परीक्षामाह—

**अग्नौ सुवर्णमक्षीणं रजते द्विपलं शते।** २०
**अष्टौ त्रपुणि सीसे च ताम्रे पञ्च दशायसि॥ १७८॥**

**वह्नौ** प्रताप्यमानं **सुवर्णं** न क्षीयते अतः कटकादिनिर्माणार्थं यावत्स्वर्णकारहस्ते प्रक्षिप्तं तावत्तुलितं तैः प्रत्यर्पणीयम्। इतरथा क्षयं दाप्या दण्ड्याश्च। **रजते** तु **शतपले** प्रताप्यमाने **पलद्वयं** क्षीयते। **अष्टौ त्रपुणि सीसे** च शत इत्यनुवर्तते। त्रपुणि सीसे च शतपले प्रताप्यमानेऽष्टौ पलानि क्षीयन्ते। **ताम्रे पञ्च दशायसि** ताम्रे शतपले पञ्चपलानि। अयसि दशप-२५ लानि क्षीयन्ते। अत्रापि शत इत्येव। कांस्यस्य तु त्रपुताम्रयोनित्वात्तदनुसारेण क्षयः कल्प्यः। इतोऽधिकक्षयकारिणः शिल्पिनो दण्ड्याः॥ १७८॥

**शते दशपला वृद्धिरौर्णे कार्पाससौत्रिके।**
**मध्ये पञ्चपला वृद्धिः सूक्ष्मे तु त्रिपला मता॥ १७९॥**

---

१ तस्मिन्नेवाह्नि वीक्षितमिति **मयूखे** पाठः। २ **ङ**=परतोऽशयो। ३ **ङ**=एतच्च बीजातिरिक्तोपभोगविनश्वरवस्तुविषयम्। **क**=एतच्च बीजादिव्यतिरिक्तोपभोग। ४ **फ**=तदुक्तं। ५ **कफ**–परीक्षण। ६ **कफ**–रौर्णकार्पाससौत्रिके। ७ **फ**–सुसूक्ष्मे त्रिपला मता।

स्थूलेनौर्णसूत्रेण यत्कम्बलादिकं क्रियते तस्मिन् शतपले दशपला वृद्धिर्वेदितव्या। एवं कार्पाससूत्रनिर्मिते पटादौ वेदितव्यम्। **मध्ये** अनतिसूक्ष्मनिर्मिते पटादौ पञ्चपला वृद्धिः। सूक्ष्मसूत्ररचिते शते त्रिपला वृद्धिर्वेदितव्या। एतच्चाप्रक्षालितवासोविषयम्॥ १७९॥

क चित्कम्बलादौ वृद्धिमाह।

५ **कार्मिके रोमबद्धे च त्रिंशद्भागः क्षयो मतः।**
**न क्षयो न च वृद्धिश्च कौशेये वल्कलेषु च॥ १८०॥**

**कार्मिकं** कर्मणा चित्रेण निर्मितम्। यत्र निष्पन्ने पटे चक्रस्वस्तिकादिकं चित्रं सूत्रैः क्रियते **तत्कार्मिक**मित्युच्यते। यत्र प्रावारादौ रोमाणि बध्यन्ते स **रोमबद्धः** तत्र **त्रिंशत्तमो** भाग **क्षयो** वेदितव्यः। **कौशेये** कोशप्रभवे **वल्कलेषु** वृक्षत्वङ्निर्मितेषु वसनेषु **वृद्धिह्रासौ** न स्तः किंतु यावद्वयनार्थं[1] कुविन्दादिभ्यो १० दत्तं तावदेव प्रत्यादेयम्॥ १८०॥

द्रव्यान्तरे विशेषमाह।

द्रव्यानन्त्यात्प्रतिद्रव्यं क्षयवृद्धिप्रतिपादनाशक्तेः सामान्येन ह्रासवृद्धिज्ञानोपायमाह—

**देशं कालं च भोगं च ज्ञात्वा नष्टे बलाबलम्।**
**द्रव्याणां कुशला ब्रूयुर्यत्तद्दाप्यमसंशयम्॥ १८१॥**

१५ शाणक्षौमादौ द्रव्ये नष्टे ह्रासमुपगते **द्रव्याणां कुशलाः** द्रव्यवृद्धिक्षयाभिज्ञाः **देशं कालमुपभोगं** तथा नष्टद्रव्यस्य **बलाबलं** सारासारतां च परीक्ष्य यत्कल्पयन्ति **तदसंशयं** शिल्पिनो दाप्याः॥ १८१॥

इति क्रीतानुशयप्रकरणम्॥

## अथाभ्युपेत्याशुश्रूषाप्रकरणम् १४

२० सांप्रतमभ्युपेत्याशुश्रूषाख्यमपरं विवादपदमभिधातुमुपक्रमते। तत्स्वरूपं च **नारदे**नोक्तम्॥ 'अभ्युपेत्य तु शुश्रूषां यस्तां न प्रतिपद्यते। अशुश्रूषाभ्युपेत्यैतद्विवादपदमुच्यत' इति (५-१)। आज्ञाकरणं शुश्रूषा तामङ्गीकृत्य पश्चाद्यो न संपादयति तद्विवादपदमभ्युपेत्याशुश्रूषाख्यम्॥ शुश्रूषकश्च पञ्चविधः। शिष्योऽन्तेवासी भृतकोऽधिकर्मकृद्दास इति तेषामाद्याश्चत्वारः कर्मकरा इत्युच्यन्ते ते च शुभकर्मकारिणः। दासाः पुनर्गृहजातादयः पञ्चदशप्रकाराः गृहद्वारा- २५ शुचिस्थानरथ्यावस्करशोधनाद्यशुभकर्मकारिणः। तदिदं **नारदेन** स्पष्टीकृतम्:—

'शुश्रूषकः पञ्चविधः शास्त्रे दृष्टो मनीषिभिः। चतुर्विधाः कर्मकरास्तेषां दासास्त्रिपञ्चकाः॥
शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वधिकर्मकृत्। एते कर्मकरा ज्ञेया दासास्तु गृहजादयः॥
सामान्यमस्वतन्त्रत्वमेषामाहुर्मनीषिणः। जातिकर्मकरस्तूक्तो विशेषो वृत्तिरेव च॥

---

[1] क-वसनार्थं।

विक्रीणानस्य यो लाभस्तेन सहितं पण्यं विक्रेता क्रेत्रे दापयितव्यः । अयं च क्रीतपण्यसमर्पणनियमोऽनुशयाभावे द्रष्टव्यः ॥ सति त्वनुशये 'क्रीत्वा विक्रीय वा किंचिदि'त्यादि **मनूक्तं** (अ. ८-२२२) वेदितव्यम् ॥ २५४ ॥

**विक्रीतमपि विक्रेयं पूर्वेक्रेतर्यगृह्णति ।**
**हानिश्चेत्क्रेतृदोषेण क्रेतुरेव हि सा भवेत् ॥ २५५ ॥'**

किंच । यदा पुनर्जातानुशयः क्रेता पण्यं न जिघृक्षति तदा **विक्रीतमपि** पण्यमन्यत्र **विक्रेयम्** । यदा पुनर्विक्रेत्रा दीयमानं क्रेता न गृह्णाति तच्च पण्यं राजदैविकेनोपहतं तदा **क्रेतुरेवासौ हानिर्भवेत्** । पण्याग्रहणरूपेण **क्रेतृदोषेण** नाशितत्वात् ॥ २५५ ॥

**राजदैवोपघातेन पण्ये दोषमुपागते ।**
**हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः ॥ २५६ ॥** १०

अपि च । यदा पुनः क्रेत्रा प्रार्थ्यमानमपि पण्यं विक्रेता न समर्पयति, अजातानुशयोऽपि, तच्च राजदैविकेनोपहतं भवति, तदाऽसौ **हानिर्विक्रेतुरेव** । अतोऽन्यददुष्टं पण्यं विनष्टसदृशं क्रेत्रे देयम् ॥ २५६ ॥

**अन्यहस्ते च विक्रीतं दुष्टं वाऽदुष्टवद्यदि ।**
**विक्रीणीते दमस्तत्र मूल्यात्तु द्विगुणो भवेत् ॥ २५७ ॥** १५

किंच । यः पुनर्विनैवानुशयमेकस्य हस्ते विक्रीतं पुन**रन्यस्य हस्ते** विक्रीणीते, सदोषं वा पण्यं प्रच्छादितदोषं **विक्रीणीते,** तदा तत्पण्यमूल्याद्विगुणो दमो वेदितव्यः । **नारदेनाप्यत्र** विशेषो दर्शितः । 'अन्यहस्ते च विक्रीय योऽन्यस्मै तत्प्रयच्छति । द्रव्यं तद्द्विगुणो दाप्यो विनयस्तावदेव तु ॥ निर्दोषं दर्शयित्वा तु सदोषं यः प्रयच्छति । स मूल्याद्द्विगुणं दाप्यो विनयं तावदेव त्विति, (८-६-७) ॥ २०

सर्वश्चायं विधिर्दत्तमूल्ये पण्ये द्रष्टव्यः । अदत्तमूल्ये पुनः पण्ये वाङ्मात्रक्रेयक्रेतृविक्रेत्रोर्नियमकारिणः समयादृते प्रवृत्तौ निवृत्तौ वा न कश्चिद्दोषः । यथाह **नारदः** । 'दत्तमूल्यस्य पण्यस्य विधिरेष प्रकीर्तितः । अदत्तेऽन्यत्र समयान्न विक्रेतुरविक्रय' इति (८-१०) ॥ २५७ ॥

विक्रयानुशयोऽभिहितः; क्रीतानुशयस्वरूपं तु प्राक् प्रपञ्चितं; अधुना तदुभयसाधारणं धर्ममाह—

**क्षयं वृद्धिं च वणिजा पण्यानामविजानता ।** २५
**क्रीत्वा नानुशयः कार्यः कुर्वन् षड्भागदण्डभाक् ॥ २५८ ॥**

परीक्षितक्रीतपण्यानां क्रयोत्तरकालं क्रयकालपरिमाणतोऽर्घकृतां **वृद्धिम**पश्यता क्रेत्रा **अनुशयो न कार्यः** । विक्रेत्रा च महार्घनिबन्धनं पण्यक्षयमपश्यता नानुशयितव्यम् । **वृद्धिक्षय**परिज्ञाने पुनः क्रेतृविक्रेत्रोरनुशयो भवतीति व्यतिरेकादुक्तं भवति । अनुशयकालावधिस्तु **नारदे**नोक्तः । 'क्रीत्वा मूल्येन यत्पण्यं दुष्क्रीतं मन्यते क्रयी । विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाह्नयविक्षतम् ॥ द्वितीयेऽह्नि ददत्क्रेता मूल्यात्त्रिंशांशमावहेत् । द्विगुणं तु तृतीयेऽह्नि परतः क्रेतुरेव तदिति' (९-२-३) ॥ ३०

अपरीक्षितक्रयविक्रये पुनः पण्यवैगुण्यनिबन्धनानुशयावधि'दशैकपञ्चसप्ताहेत्यादिना' दर्शित एव। तदनया वाचोयुक्त्या वृद्धिक्षयपरिज्ञानस्यानुशयकारणत्वमवगम्यते। तथा पण्यपरीक्षा-विधिबलात्पण्यदोषाणामनुशयकारणत्वं। अतः पण्यदोषतद्वृद्धिक्षयकारणत्रितयाभावेऽनुशयकाला-भ्यन्तरेऽपि यद्यनुशयं करोति तदा पण्यषड्भागं दण्डनीयः। अनुशयकारणसद्भावेऽप्यनुशय-
५ कालातिक्रमेणानुशयं कुर्वतोऽप्ययमेव दण्डः। उपभोगेनाविनश्वरेषु स्थिरार्घेष्वनुशयकालाति-क्रमेणानुशयं कुर्वतो **मनूक्तो** दण्डो द्रष्टव्यः। (अ० ८, श्लो० २२३)। 'परेण तु दशाहस्य न दद्यान्नापि दापयेत्। आददानोऽददच्चैव राज्ञा दण्ड्यः शतानि षडिति' ॥ २५८ ॥

इति विक्रीयासंप्रदानं नाम प्रकरणम्।

## अथ संभूयसमुत्थानप्रकरणम् २२

१० संभूयसमुत्थानं नाम विवादपदमिदानीमभिधीयते—

**समवायेन वणिजां लाभार्थं कर्म कुर्वताम्।**
**लाभालाभौ यथाद्रव्यं यथा वा संविदा कृतौ ॥ २५९ ॥**

सर्वे वयमिदं कर्म मिलिताः कुर्म इत्येवंरूपा संप्रतिपत्तिः **समवायः**, तेन ये वणिङ्नटनर्तक-प्रभृतयो लाभलिप्सवः प्रातिस्विकं कर्म कुर्वते तेषां **लाभालाभावु**पचयापचयौ **यथाद्रव्यं** येन
१५ यावद्धनं पण्यग्रहणार्थं दत्तं तदनुसारेणावसेयौ। **यद्वा**। प्रधानगुणभावपर्यालोचनयाऽस्य भाग-द्वयमस्यैको भाग इत्येवंरूपया **संविदा** समयेन यथा संप्रतिपन्नौ तथा वेदितव्यौ ॥ २५९ ॥

**प्रतिषिद्धमनादिष्टं प्रमादाद्यच्च नाशितम्।**
**स तद्दद्याद्विप्लवाच्च रक्षिताद्दशमांशभाक् ॥ २६० ॥**

किंच। तेषां संभूय प्रचरतां मध्ये पण्यमिदमित्थं न व्यवहर्तव्यमिति **प्रतिषिद्धमा**चरतां
२० **यन्नाशितमनादिष्टम**ननुज्ञातं वा कुर्वाणेन तथा **प्रमादात्प्र**ज्ञाहीनतया वा येन यन्नाशितं **स तत्पण्यं** वणिग्भ्यो **दद्यात्**। यः पुनस्तेषां मध्ये चौरराजादिजनिताद्व्यसनात्पण्यं पालयति स **तस्माद्रक्षिता**त्पण्या**द्दशममंशं** लभते ॥ २६० ॥

**अर्घप्रक्षेपणाद्विंशं भागं शुल्कं नृपो हरेत्।**
**व्यासिद्धं राजयोग्यं च विक्रीतं राजगामि तत् ॥ २६१ ॥**

२५ इयतः पण्यस्येयन्मूल्यमित्य**र्घ**स्तस्य **प्रक्षेपणात्** राजतो निरूपणाद्धेतोरसौ मूल्याद्विंशतित-ममंशं शुल्कार्थं गृह्णीयात्। यत्पुनर्**व्यासिद्ध**मन्यत्र न विक्रेयमिति राज्ञा प्रतिषिद्धं यद्राजयोग्यं मणिमाणिक्याद्यप्रतिषिद्धमपि तद्राज्ञेऽनिवेद्य लाभलोभेन विक्रीतं **चेद्राजगामि** मूल्यदाननिरपेक्षं तत्सर्वं पण्यं राजाऽपहरेदित्यर्थः ॥ २६१ ॥

**मिथ्या वदन्परीमाणं शुल्कस्थानादपासरन्।**
**दाप्यस्त्वष्टगुणं यश्च सव्याजक्रयविक्रयी ॥ २६२ ॥**

यः पुनर्वणिक् शुल्कवञ्चनार्थं पण्यपरिमाणं निह्नुते, शुल्कग्रहणस्थानाद्वाऽपसरति, यश्चास्येदमस्येदं वेत्येवं विवादास्पदीभूतं पण्यं क्रीणाति विक्रीणीते वा, ते सर्वे पण्यादष्टगुणं दण्डनीयाः ॥ २६२ ॥

**तरिकः स्थलजं शुल्कं गृह्णन् दाप्यः पणान्दश ।**
**ब्राह्मणप्रातिवेश्यानामेतदेवानिमन्त्रणे ॥ २६३ ॥**

अपि च, शुल्कं हि द्विविधं स्थलजं जलजं च । तत्र स्थलज'मर्घप्रक्षेपणाद्विंशं भागं शुल्कं नृपो हरेदि'त्यत्रोक्तम् । जलजं तु **मानवेऽ**भिहितम् । 'पणं यानं तरे दाप्यः पुरुषोऽर्धपणं तरे । पादं पशुश्च योषिच्च पादार्धं रिक्तकः पुमान् ॥ भाण्डपूर्णानि यानानि तार्यं दाप्यानि सारतः । रिक्तभाण्डानि यत्किंचित्पुमांसश्चापरिच्छदाः ॥ गर्भिणी तु द्विमासादिस्तथा प्रव्रजितो मुनिः । ब्राह्मणा लिङ्गिनश्चैव न दाप्यास्तारिकं नरा' इति ( अ० ८ श्लो० ४०४।५।७। ) । शुल्कद्वयेऽ- १० प्ययमपरो विशेषः । 'न भिन्नकार्षापणमस्ति शुल्कं न शिल्पवृत्तौ न शिशौ न दूते । न भैक्षलब्धे न हृतावशेषे न श्रोत्रिये प्रव्रजिते न यज्ञे' इति ॥ तीर्यतेऽनेनेति तरिः नावादिः तज्जन्यशुल्केऽधिकृतस्**तरिकः** स यदा स्थलोद्भवं शुल्कं गृह्णाति तदा **दशपणान्** दण्डनीयः । 'वेशो वेश्म प्रतिवेश' इति स्ववेश्माभिमुखं स्ववेश्मपार्श्वस्थं चोच्यते, तत्र भवाः प्रातिवेश्याः, ब्राह्मणाश्च ते प्रातिवेश्याश्च **ब्राह्मणप्रातिवेश्याः**, तेषां श्रुतवृत्तसंपूर्णानां श्राद्धादिषु विभवे सत्यनिमन्त्रणे १५ एतदेव दशपणात्मकं दण्डनं वेदितव्यम् ॥ २६३ ॥

**देशान्तरगते प्रेते द्रव्यं दायादबान्धवाः ।**
**ज्ञातयो वा हरेयुस्तदागतास्तैर्विना नृपः ॥ २६४ ॥**

यदा संभूयकारिणां मध्ये यः कश्चिद्देशान्तरगतो मृतस्तदा तदीयमंशं **दायादाः** पुत्राद्यपत्यवर्गो **बन्धवो** मातृपक्षा मातुलाद्याः **ज्ञातयो**ऽपत्यवर्गव्यतिरिक्ताः सपिण्डा २० वा **आगताः** संभूय व्यवहारिणो ये देशान्तरादागतास्ते वा गृह्णीयुः । **तैर्विना** दायाद्यभावे राजा गृह्णीयात् ।

देशान्तरमृतवणिग्रिक्थं प्रत्याह ।

वाशब्देन च दायादादीनां वैकल्पिकमधिकारं दर्शयति । पौर्वापर्यनियमस्तु पत्नी दुहितर इत्यादिप्रतिपादित एवात्रापि वेदितव्यः । शिष्यसब्रह्मचारिब्राह्मणनिषेधो वणिक्प्राप्तिश्च वचनप्रयोजनम् । वणिजामपि मध्ये यः पिण्डदानर्णदानादिसमर्थः स गृह्णीयात् । सामर्थ्याविशेषे २५ सर्वे वणिजः संसृष्टिनो विभज्य गृह्णीयुः । तेषामप्यभावे दशवर्षं दायादाद्यागमनं प्रतीक्ष्यानागतेषु स्वयमेव राजा गृह्णीयात् । तदिदं **नारदेन** स्पष्टीकृतम् । 'एकस्य चेत्स्यान्मरणं दायादोऽस्य तदाप्नुयात् । अन्यो वाऽसति दायादे शक्ताश्चेत्सर्व एव ते ॥ तदभावे तु गुप्तं तत्कारयेद्दशवत्सरान् । अस्वामिकमदायादं दशवर्षस्थितं ततः ॥ राजा तदात्मसात्कुर्यादेवं धर्मो न हीयत' इति ( अ. ३ श्लो. ७-१७-१८ ) ॥ २६४ ॥

**[1]जिह्मं त्यजेयुर्निर्लाभमशक्तोऽन्येन कारयेत् ।**

१ 'व्यसनं'मित्यपरः पाठः ।

किंच। **जिह्मो** वञ्चकः तं **निर्गतलाभमाच्छिद्य त्यजेयुर्बहिः** कुर्युः। यश्च संभूयकारिणां मध्ये भाण्डप्रत्यवेक्षणादिकं कर्तुमसमर्थोऽ**सावन्येन** स्वं कर्म भाण्डभारवाहनं तदायव्ययपरीक्षणादिकं **कारयेत्** ॥

प्रागुपदिष्टं वणिग्धर्ममृत्विगादिष्वतिदिशति—

**अनेन विधिराख्यात ऋत्विक्कर्षककर्मिणाम् ॥ २६५ ॥**

**अनेन** लाभालाभौ 'यथाद्रव्यमि'त्यादिवणिग्धर्मकथनेन **ऋत्विजां** होत्रादीनां कृषीवलानां नटनर्तकतक्षादीनां च शिल्पकर्मोपजीविनां **विधिर्वर्तनप्रकार आख्यातः**। तत्र च ऋत्विजां धनविभागे विशेषो **मनुना** दर्शितः। (अ० ८ श्लो० २१० ) 'सर्वेषामर्थिनो मुख्यास्तदर्धेनार्धिनोऽपरे। तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिन' इति ॥ अस्यायमर्थः। 'ज्योतिष्टोमेन तं शतेन दीक्षयन्तीति' वचनेन गवां शतमृत्विगानतिरूपे दक्षिणाकार्ये विनियुक्तम्। ऋत्विजश्च होत्रादयः षोडश। तत्र कस्य कियानंश इत्यपेक्षायामिदमुच्यते। सर्वेषां होत्रादीनां षोडशर्त्विजां मध्ये ये मुख्याश्चत्वारो होत्रध्वर्युब्रह्मोद्गातारः ते गोशतस्यार्थिनः सर्वेषां भागपूरणोपपत्तिवशादष्टाचत्वारिंशद्रूपार्धेनार्धभाजः। अपरे मैत्रावरुणप्रतिप्रस्थातृब्राह्मणाच्छंसिप्रस्तोतारस्तदर्धेन मुख्यांशस्यार्धेन चतुर्विंशतिरूपेणार्धभाजः। ये पुनस्तृतीयिनः अच्छावाकनेष्ट्राग्नीध्रप्रतिहर्तारस्ते तृतीयिनो मुख्यांशस्य षोडशगोरूपतृतीयांशेन तृतीयांशभाजः। ये तु पादिनः ग्रावस्तुदुन्नेतृपोतृसुब्रह्मण्यास्ते मुख्यभागस्य यश्चतुर्थांशो द्वादशगोरूपस्तद्भाजः ॥

ऋत्विजां धनविभागे विशेषप्रकारः।

ननु कथमयमंशनियमो घटते। न तावदत्र समयो नापि द्रव्यसमवायो नापि वचनं यद्वशाद्भागनियमः स्यादतः 'समं स्यादश्रुतत्वादिति' न्यायेन सर्वेषां समांशभाक्त्वं कर्मानुरूपेण वांऽशभाक्त्वमिति युक्तम् ॥ अत्रोच्यते। ज्योतिष्टोमप्रकृतिके द्वादशाहेऽर्धिनस्तृतीयिनः पादिन इति सिद्धवदनुवादो न घटते। यदि तत्प्रकृतिभूते ज्योतिष्टोमे अर्धतृतीयचतुर्थांशभाक्त्वं मैत्रावरुणादीनां न स्यादतो वैदिकार्धिप्रभृतिसमाख्याबलात् प्रागुक्तोऽशनियमोऽवकल्प्यत इति निरवद्यम् ॥ २६५ ॥

इति संभूयसमुत्थानप्रकरणम्।

## अथ स्तेयप्रकरणम् २३

इदानीं स्तेयं प्रस्तूयते। तल्लक्षणं च **मनुना**भिहितम् ( अ. ८ श्लो. ३३२ ) 'स्यात्साहसं त्वन्वयवत्प्रसभं कर्म यत्कृतम्। निरन्वयं भवेत्स्तेयं कृत्वाऽपह्नुवते च यदिति'। अन्वयवत्। द्रव्यरक्षिराजाध्यक्षादिसमक्षम्। प्रसभं बलावष्टम्भेन यत्परधनहरणादिकं क्रियते तत्साहसम्। स्तेयं तु तद्विलक्षणं निरन्वयं द्रव्यस्वाम्याद्यसमक्षं वञ्चयित्वा यत्परधनहरणं तदुच्यते। यच्च सान्वयमपि कृत्वा न मयेदं कृतमिति भयान्निह्नुते तदपि

स्तेयलक्षणम्।

स्तेयम् ॥ **नारदेनाप्युक्तम्**। 'उपायैर्विविधैरेषां छलयित्वाऽपकर्षणम्। सुप्तमत्तप्रमत्तेभ्यः स्तेयमाहुर्मनीषिण' इति (१४-१७) ॥

तत्र तस्करग्रहणपूर्वकत्वाद्दण्डनस्य ग्रहणस्य ज्ञानपूर्वकत्वात् ज्ञानोपायं तावदाह—

**ग्राहकैर्गृह्यते चौरो लोप्त्रेणाथ पदेन वा।**
**पूर्वकर्मापराधी च तथा चाशुद्धवासकः ॥ २६६ ॥**

यश्चौरोऽयमिति जनैर्विख्याप्यते असौ **ग्राहकै** राजपुरुषैः स्थानपालप्रभृतिभिर्ग्रहीतव्यः। **लोप्त्रेणा**पहृतभाजनादिना वा चौर्यचिह्नेन नाशदिवसादारभ्य चौर्यपदानुसारेण वा ग्राह्यः। यश्च **पूर्वकर्मापराधी** प्राक् प्रख्यातचौर्यः अशुद्धोऽप्रज्ञातो वासः स्थानं यस्यासौ **अशुद्धवासकः** सोऽपि ग्राह्यः ॥ २६६ ॥

**अन्येऽपि शङ्कया ग्राह्या जातिनामादिनिह्नवैः।** १०
**द्यूतस्त्रीपानसक्ताश्च शुष्कभिन्नमुखस्वराः ॥ २६७ ॥**
**परद्रव्यगृहाणां च पृच्छका गूढचारिणः।**
**निराया व्ययवन्तश्च विनष्टद्रव्यविक्रयाः ॥ २६८ ॥**

किंच। न केवलं पूर्वोक्ता ग्राह्याः किंत्व**न्येऽपि** वक्ष्यमाणैर्लिङ्गैः **शङ्कया ग्राह्याः**। **जातिनिह्नवेन** नाहं शूद्र इत्येवंरूपेण। **नामनिह्नवेन** नाहं लपित्थ इत्येवंरूपेण। **आदि**ग्रहणा-१५ त्स्वदेशग्रामकुलाद्यपलापेन च लक्षिता ग्राह्याः। **द्यूत**पण्याङ्गनामद्यपानादिव्यसनेष्वतिप्रसक्तास्तथा 'कुतस्त्योऽसि त्व'मिति चौरग्राहिभिः पृष्टो यदि **शुष्कमुखो भिन्नस्वरो** वा भवति तर्ह्यसावपि ग्राह्यः। बहुवचनात् स्विन्नललाटादीनां ग्रहणम् ॥

तथा ये निष्कारणं कियदस्य धनं किं वाऽस्य गृहमिति पृच्छन्ति, वेषान्तरधारणेनात्मानं गूहयित्वा ये चरन्ति, ये चायाभावेऽपि बहुव्ययकारिणः, ये च विनष्टद्रव्याणां जीर्णवस्त्रभिन्न-२० भाजनादीनामविज्ञातस्वामिकानां विक्रयकास्ते सर्वे चौरसंभावनया ग्राह्याः।

एवं नानाविधचौर्यलिङ्गान्पुरुषान् गृहीत्वा एते चौराः किंवा साधव[1] इति सम्यक्परीक्षेत न पुनर्लिङ्गदर्शनमात्रेण चौरनिर्णयं कुर्यात्। अचौरस्यापि लोप्त्रादिलिङ्गसंबन्धसंभवात्। यथाह **नारदः**। 'अन्यहस्तात्परिभ्रष्टमकामादुत्थितं भुवि। चौरेण वा परिक्षिप्तं लोप्त्रं यत्नात्परीक्षयेत्' तथा। 'असत्याः सत्यसंकाशाः सत्याश्चासत्यसन्निभाः। दृश्यन्ते विविधा भावास्तस्मादुक्तं परी-२५ क्षणमिति' ॥ २६७ ॥ २६८ ॥

एवं चौर्यशङ्कया गृहीतेनात्मा संशोधनीय इत्याह—

**गृहीतः शङ्कया चौर्ये नात्मानं चेद्विशोधयेत्।**
**दापयित्वा गतं द्रव्यं चौरदण्डेन दण्डयेत् ॥ २६९ ॥**

यदि **चौर्यशङ्कया गृहीत**स्तन्निस्तरणार्थमात्**मानं न शोधयति** तर्हि वक्ष्यमाणधनदापन-३० वधादिदण्डभाग्भवेत। अतो मानषेण तदभावे दिव्येन वा शोधनीयः ॥

[1] फ—साधवः किंवा असाधवः।

ननु नाहं चौर इति मिथ्योत्तरे कथं प्रमाणं संभवति । तस्याभावरूपत्वात् । उच्यते । दिव्यस्य तावद्भावाभावगोचरत्वं 'रुच्याऽवान्यतरः कुर्यादि' त्यत्र प्रतिपादितम् । मानुषं पुनर्यद्यपि साक्षाच्छुद्धमिथ्योत्तरे न संभवति तथापि कारणेन संसृष्टभावरूपमिथ्याकारणसाधनमुखेनाभावमपि गोचरयत्येव । यथा 'नाशापहारकाले अहं देशान्तरस्थ' इत्यभियुक्तैर्भाविते चौर्याभावस्या-
५ प्यर्थात्सिद्धेः शुद्धिर्भवत्येव ॥ २६९ ॥

**चौरं प्रदाप्यापहृतं घातयेद्विविधैर्वधैः ।**

यस्तु प्रागुक्तपरीक्षया तन्निरपेक्षं वा निश्चितचौर्यस्तं स्वामिने **अपहृतं** धनं स्वरूपेण मूल्यकल्पनया वा दापयित्वा **विविधैर्घातैर्घातयेत्** । एतच्चोत्तमसाहसदण्डप्रातियोग्योत्तमद्रव्यविषयम् । न पुनः पुष्पवस्त्रादिक्षुद्रमध्यमद्रव्यापहारविषयम् । 'साहसेषु य
चौरे दण्डमाह ।
१० एवोक्तस्त्रिषु दण्डो मनीषिभिः । स एव दण्डः स्तेयेऽपि द्रव्येषु त्रिष्वनुक्रमादिति' **नारद**वचनेन (१४–२१)। वधरूपस्योत्तमसाहसस्योत्तमद्रव्यविषये व्यवस्थापितत्वात् ॥ यत्पुनर्**वृद्धमनु**वचनम् । 'अन्यायोपात्तवित्तत्वाद्धनमेषां मलात्मकम् । अतस्तान् घातयेद्राजा नार्थदण्डेन दण्डयेदिति' तदपि महापराधविषयम् ॥

**सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत् ॥ २७० ॥**

१५ **ब्राह्मणं** पुनश्चौरं महत्यपराधेऽपि न घातयेदपि तु ललाटेऽङ्कयित्वा स्वदेशान्निष्कासयेत् । अङ्कनं च श्वपदाकारं कार्यम् । तथा च **मनुः** ( अ. ९ श्लो. २३७ ) । 'गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः । स्तेये च श्वपदं कार्यं ब्रह्महण्यशिराः पुमानिति ।' एतच्च दण्डोत्तरकालं प्रायश्चित्तमचिकीर्षतो द्रष्टव्यम् ॥ यथाह **मनुः** । ( अ. ९ श्लो. २४० ) प्रायश्चित्तं तु कुर्वाणाः सर्वे वर्णा यथोदितम् । नाङ्क्या राज्ञा ललाटे तु दाप्यास्तूत्तमसाह-
चौरविशेषेऽपवादमाह ।
२० समिति' ॥ २७० ॥

**घातितेऽपहृते दोषो ग्रामभर्तुरनिर्गते ।**
**विवीतभर्तुस्तु पथि चौरोद्धर्तुरवीतके ॥ २७१ ॥**

यदि ग्राममध्ये मनुष्यादिप्राणिवधो धनापहरणं वा जायते तदा ग्रामपतेरेव चौरोपेक्षादोषस्तत्परिहारार्थं स एव चौरं गृहीत्वा राज्ञेऽर्पयेत् । तदशक्तौ हृतं धनं धनिने दद्यात् । यदि चौरपदं स्वग्रामान्निर्गतं न दर्शयति । दर्शिते पुनस्तत्पदं यत्र प्रविशति तद्विषयाधिपतिरेव चौरं धनं चार्पयेत् । तथा च **नारदः** । 'गोचरे यस्य लुप्येत तेन चौरः प्रयत्नतः । ग्राह्यो दाप्योऽथवा शेषं पदं यदि न निर्गतम् । निर्गते पुनरेतस्मान्न चेदन्यत्र पातितम् । सामन्तान्मार्गपालांश्च दिक्पालांश्चैव दापयेदिति' (प्र. १६–१७) ॥ विवीते त्वपहारे विवीतस्वामिन एव दोषः। यदा त्वध्वन्येव तद्धृतं भवत्यवीतके वा विवीतादन्यत्र
चौरदर्शने अपहृतद्रव्यप्राप्त्युपायमाह ।
३० क्षेत्रे तदा **चौरोद्धर्तु**र्मार्गपालस्य दिक्पालस्य वा दोषः ॥ २७१ ॥

**स्वसीम्नि दद्याद्ग्रामस्तु पदं वा यत्र गच्छति ।**
**पञ्चग्रामी बहिः क्रोशाद्दशग्राम्यथवा पुनः ॥ २७२ ॥**

किंच। यदा पुनर्ग्रामाद्बहिः सीमापर्यन्ते क्षेत्रे मोषादिकं भवति तदा तद्ग्रामवासिन एव दद्युः। यदि सीम्नो बहिश्चौरपदं न निर्गतम्। निर्गते पुनर्यत्र ग्रामादिके चौरपदं प्रविशति स एव चौरार्पणादिकं कुर्यात्। यदा त्वनेकग्राममध्ये क्रोशमात्राद्बहिः प्रदेशे घातितो मुषितो वा चौरपदं च जनसंमर्दादिना मग्नं तदा पञ्चानां ग्रामाणां समाहारः पञ्चग्रामी दशग्रामसमाहारो दशग्रामी वा दद्यात्। विकल्पवचनं तु यथा तत्प्रत्यासत्त्यपहृतधनप्रत्यर्पणादिकं कुर्यादित्येवमर्थम्। ५

यदा त्वन्यतोऽपहृतं द्रव्यं दापयितुं न शक्नोति तदा स्वकोशादेव राजा दद्यात्। 'चौरहृतमवजित्य यथास्थानं गमयेत्स्वकोशाद्वा दद्यादिति' **गौतम**स्मरणात् ( ) ॥ मुषितामुषितसन्देहे मानुषेण दिव्येन वा निर्णयः कार्यः।'यदि तस्मिन् दाप्यमाने भवेन्मोषे तु संशयः। मुषितः शपथं दाप्यो बन्धुभिर्वाऽपि साधयेदिति' **वृद्धमनु**स्मरणात् ॥ २७२ ॥

**बन्दिग्राहांस्तथा वाजिकुञ्जराणां च हारिणः। १०**
**प्रसह्य घातिनश्चैव शूलानारोपयेन्नरान् ॥ २७३ ॥**

**बन्दिग्राहा**दीन् बलावष्टम्भेन घातकांश्च **नरान् शूलानारोपयेत्**। अयं च वधप्रकारविशेषोपदेशः।'कोष्ठागारायुधागारदेवतागारभेदकान्। हस्त्यश्वरथहर्तृंश्च हन्यादेवाविचारयन्निति' **मनु**स्मरणम् ( अ. ९ श्लो. ३८० )

अपराधविशेषेण दण्डविशेषमाह।

**उत्क्षेपकग्रन्थिभेदौ करसन्दंशहीनकौ। १५**
**कार्यौ द्वितीयापराधे करपादैकहीनकौ ॥ २७४ ॥**

किंच। वस्त्राद्युत्क्षिपत्यपहरतीत्यु**त्क्षेपकः**। वस्त्रादिबद्धं स्वर्णादिकं विस्रस्योत्कृत्य वा योऽपहरत्यसौ **ग्रन्थिभेदकः**। तौ यथाक्रमं **करेण सन्दंश**सदृशेन तर्जन्याङ्गुष्ठेन च **हीनौ कार्यौ**। **द्वितीयापराधे** पुनः, करश्च पादश्च करपादं तच्च तदेकं च करपादैकं तद्धीनं ययोस्तौ **करपादैकहीनकौ कार्यौ**। उत्क्षेपकग्रन्थिभेदकयोरेकमेकं करं पादं च छिन्द्यादित्यर्थः। २०

एतदप्युत्तमसाहसप्राप्तियोग्यद्रव्यविषयम्।'तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहस' इति **नारद**वचनात् (१४-८)। तृतीयापराधे तु वध एव। तथा च **मनुः**। 'अङ्गुलीर्ग्रन्थिभेदस्य छेदयेत्प्रथमे ग्रहे। द्वितीये हस्तचरणौ तृतीये वधमर्हतीति' (अ. ९ श्लो. २७७)। जातिद्रव्यपरिमाणतो मूल्याद्यनुसारतो दण्डः कल्पनीय इति ॥ २७४ ॥

जातिद्रव्यपरिमाणपरिग्रहविनियोगवयःशक्तिगुणदेशकालादीनां दण्डगुरुलघुभावकारणानामानन्त्यात्प्रतिद्रव्यं वक्तुमशक्तेः सामान्येन दण्डकल्पनोपायमाह— २५

**क्षुद्रमध्यमहाद्रव्यहरणे सारतो दमः।**
**देशकालवयःशक्ति सञ्चिन्त्यं दण्डकर्मणि ॥ २७५ ॥**

**क्षुद्राणां मध्यमा**नामुत्तमानां च **द्रव्याणां हरणे सारतो** मूल्याद्यनुसारतो **दण्डः** कल्पनीयः। क्षुद्रादिद्रव्यस्वरूपं च **नारदे**नोक्तम्। 'मृद्भाण्डासनखट्वास्थिदारुचर्मतृणादि यत्। शमीधान्यं कृतान्नं च **क्षुद्रं द्रव्यमुदाहृतम्** ॥ वासः कौशेयवर्ज्यं च गोवर्ज्यं पशवस्तथा। हिरण्यवर्ज्यं

लोहं च **मध्यं** व्रीहियवा अपि ॥ हिरण्यरत्नकौशेयं स्त्रीपुङ्गो गजवाजिनः । देवब्राह्मणराज्ञां च द्रव्यं विज्ञेय**मुत्तमम्**' ( अ. १४ श्लो. १४-१६ ) ।

त्रिप्रकारेष्वपि द्रव्येष्वौत्सर्गिकः प्रथममध्यमोत्तमसाहसरूपो दण्डनियम**स्तेनैव** दर्शितः । 'साहसेषु य एवोक्तस्त्रिषु दण्डो मनीषिभिः । स एव दण्डः स्तेयेऽपि द्रव्येषु त्रिष्वनुक्रमा-
५ दिति' ॥ मृन्मयेषु मणिकमल्लिकादिषु गोवाजिव्यतिरिक्तेषु च महिषमेषादिपशुषु ब्राह्मणसंबन्धिषु च कनकधान्यादिषु तरतमभावोऽस्तीति उच्चावचदण्डविशेषाकाङ्क्षायां मूल्याद्यनुसारेण दण्डः कल्पनीयः ।

तत्र च **दण्डकर्मणि** दण्डकल्पनायां तद्धेतुभूतं **देशकालवयःशक्ती**ति सम्यक् चिन्तनीयम् । एतच्च जातिद्रव्यपरिणामपरिग्रहादीनामुपलक्षणम् । तथाहि । 'अष्टपाद्यं स्तेयकिल्बिषं शूद्रस्य
१० द्विगुणोत्तराणीतरेषां प्रतिवर्णं विदुषोऽतिक्रमे दण्डभूयस्त्वमिति' । अयमर्थः । किल्बिषशब्देनात्र दण्डो लक्ष्यते । यस्मिन्नपहारे यो दण्ड उक्तः स विद्वच्छूद्रकर्तृकेऽपहारे अष्टगुण आपादनीयः । इतरेषां पुनर्विट्क्षत्रब्राह्मणादीनां विदुषां द्विगुणोत्तराणि किल्बिषाणि षोडशद्वात्रिंशन्न तु षष्टिगुणा दण्डा आपादनीयाः । यस्माद्विद्वच्छूद्रकर्तृकेऽपहारे दण्डभूयस्त्वम् । **मनुना**ऽप्ययमेवार्थो दर्शितः ( अ. ८ श्लो. ३३७।३३८ ) । "अष्टापाद्यं तु शूद्रस्य स्तेये भवति किल्बिषम् । षोडशैव तु
१५ वैश्यस्य द्वात्रिंशत्क्षत्रियस्य तु ॥ ब्राह्मणस्य चतुःषष्टिः पूर्णं वाऽपि शतं भवेत् । द्विगुणा या चतुःषष्टिस्तद्दोषगुणवेदिन' इति ॥ तथा परिणामकृतमपि दण्डगुरुत्वं दृश्यते । यथाह **मनुः** ( अ. ८ श्लो ३२० ) 'धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं वधः । शेषेष्वेकादशगुणं दाप्यस्तस्य च तद्धनमिति' ॥ विंशतिद्रोणकः कुम्भः ।

हर्तुर्ह्रियमाणस्वामिगुणापेक्षया सुभिक्षदुर्भिक्षकालाद्यपेक्षया ताडनाङ्गच्छेदनवधरूपा दण्डा
२० योज्याः ॥ तथा संख्याविशेषादपि दण्डविशेषो रत्नादिषु । 'सुवर्णरजतादीनामुत्तमानां च वाससाम् । रत्नानां चैव सर्वेषां शतादभ्यधिके वधः । पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते । शेषेष्वेकादशगुणं मूल्याद्दण्डं प्रकल्पयेदिति' ( **मनुः**, अ. ८ श्लो. ३२१।३२२ )। तथा द्रव्यविशेषादपि। 'पुरुषाणां कुलीनानां नारीणां वा विशेषतः । रत्नानां चैव सर्वेषां हरणे वधमर्हति ।' (**मनुः** अ.८श्लो.३२३)। अकुलीनानां तु दण्डान्तरम्। 'पुरुषं हरतो दण्ड उक्त उत्तमसाहसः ।
२५ स्त्र्यपराधे तु सर्वस्वं कन्यां तु हरतो वध' इति ॥ क्षुद्रद्रव्याणां तु, 'माषतो न्यूनमूल्यानां मूल्यात्पञ्चगुणो दमः । काष्ठभाण्डतृणादीनां मृन्मयानां तथैव च ॥ वेणुवैणवभाण्डानां तथा स्नाय्वस्थिचर्मणाम् ॥ शाकानामार्द्रमूलानां हरणे फलमूलयोः । गोरसेक्षुविकाराणां तथा लवणतैलयोः । पक्वान्नानां कृतान्नानां मत्स्यानामामिषस्य च । सर्वेषां मूल्यभूतानां मूल्यात्पञ्चगुणो दम' इति **नारदस्मरणात्** (प्र. २२-२४) ॥

३० यः पुनः प्रथमसाहसः क्षुद्रद्रव्येषु शतावरः पञ्चाशत्पर्यन्तोऽसौ माषमूल्ये तदधिकमूल्ये वा यथायोग्यं व्यवस्थापनीयः ॥ यत् **पुनर्मानवं** क्षुद्रद्रव्यगोचरवचनं 'तन्मूल्याद्द्विगुणो दम' इति तदल्पप्रयोजनशरावादिविषयम् । तथाऽपराधगुरुत्वादपि दण्डगुरुत्वम् । 'संधिं छित्वा तु ये चौर्यं

रात्रौ कुर्वन्ति तस्कराः । तेषां छित्वा नृपो हस्तौ तीक्ष्णशूले निवेशयेत्' । इत्येवं सर्वेषामानन्त्यात्प्रतिद्रव्यं वक्तुमशक्तेर्जातिपरिमाणादिभिः कारणैर्दण्डगुरुलघुभावः कल्पनीयः ।

पथिकादीनां पुनरल्पापराधे न दण्डः । यथाह **मनुः** । 'द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके । आददानः परक्षेत्रान्न दण्डं दातुमर्हति' (अ. ८श्लो.३४१) । तथा । 'चणकव्रीहिगोधूमयवानां मुद्गमाषयोः । अनिषिद्धैर्ग्रहीतव्यो मुष्टिरेकः पथि स्थितैः ॥ तथैव सप्तमे भक्ते भक्तानि षडनश्नता । अश्वस्तनविधानेन हर्तव्यं हीनकर्मण' इति (**मनुः** ११-१६) ॥ २७५ ॥

अचौरस्यापि चौरोपकारिणो दण्डमाह—

**भक्तावकाशाग्न्युदकमन्त्रोपकरणव्ययान् ।**
**दत्त्वा चौरस्य वा हन्तुर्जानतो दम उत्तमः ॥ २७६ ॥**

**भक्तमशनम्** । **अवकाशो** निवासस्थानम् । **अग्निश्चौरस्य** शीतापनोदाद्यर्थः । **उदकं** तृषितस्य । **मन्त्रश्चौर्य**प्रकारोपदेशः । **उपकरणं** चौर्यसाधनम् । **व्ययः** अपहारार्थं देशान्तरं गच्छतः पाथेयम् । एतानि **चौरस्य हन्तुर्वा** दुष्टत्वं **जानन्नपि** यः प्रयच्छति तस्यो**त्तमसाहसो** दण्डः । चौरोपेक्षिणामपि दोषः । 'शक्ताश्च य उपेक्षन्ते तेऽपि तद्दोषभागिन' इति **नारद**स्मरणात् (१४-१९) ॥ २७६ ॥

**शस्त्रावपाते गर्भस्य पातने चोत्तमो दमः ।**
**उत्तमो वाऽधमो वाऽपि पुरुषस्त्रीप्रमापणे ॥ २७७ ॥**

किंच । परगात्रेषु **शस्त्रस्यावपातने** दासीब्राह्मणगर्भव्यतिरेकेण **गर्भस्य पातने चोत्तमो दमः** दण्डः । दासीगर्भनिपातने तु 'दासीगर्भविनाशकृदि'त्यादिना शतदण्डोऽभिहितः । ब्राह्मणगर्भे तु 'हत्वा गर्भमविज्ञातमि'त्यत्र ब्रह्महत्यातिदेशं वक्ष्यति । **पुरुषस्य स्त्रियाश्च प्रमापणे** शीलवृत्ताद्यपेक्षयोत्तमो वाऽधमो वा दण्डो व्यवस्थितो वेदितव्यः ॥ २७७ ॥

**विप्रदुष्टां स्त्रियं चैव पुरुषघ्नीमगर्भिणीम् ।**
**सेतुभेदकरीं चाप्सु शिलां बद्ध्वा प्रवेशयेत् ॥ २७८ ॥**

अपि च । विशेषेण प्रदुष्टा **विप्रदुष्टा** भ्रूणघ्नी स्वगर्भपातिनी च या च **पुरुषस्य** हन्त्री सेतूनां भेत्री च एता गर्भरहिताः स्त्रीर्गले **शिलां बद्ध्वा अप्सु प्रवेशयेत्** यथा न प्लवन्ति ॥ २७८ ॥

**विषाग्निदां पतिगुरुनिजापत्यप्रमापणीम् ।**
**विकर्णकरनासौष्ठीं कृत्वा गोभिः प्रमापयेत् ॥ २७९ ॥**

किंच । अगर्भिणीमित्यनुवर्तते । या च परवधार्थमन्नपानादिषु विषं ददाति क्षिपति । या च दाहार्थं ग्रामादिष्वग्निं ददाति । तथा या च निजपतिगुर्वपत्यानि मारयति तां छिन्नकर्णकरनासौष्ठीं कृत्वा अदान्तैर्दुष्टबलीवर्दैः प्रवाह्य मारयेत् । स्तेयप्रकरणे यदेतत्साहसिकस्य दण्डविधानं तत्प्रासङ्गिकमिति मन्तव्यम् ॥ २७९ ॥

१ ख—काल्पीयः ।

अविज्ञातकर्तृके हनने हन्तृज्ञानोपायमाह—

**अविज्ञातहतस्याशु कलहं सुतबान्धवाः ।**
**प्रष्टव्या योषितश्चास्य परपुंसि रताः पृथक् ॥ २८० ॥**

अविज्ञातपुरुषेण घातितस्य संबन्धिनः **सुताः** प्रत्यासन्नाश्च **बान्धवाः** केनास्य कलहो जात ५इति **कलहमाशु प्रष्टव्याः** । तथा मृतस्य संबन्धिन्यो **योषितो** याश्च **परपुंसि रता** व्यभिचारिण्यस्ता अपि द्रष्टव्याः ॥ २८० ॥

**स्त्रीद्रव्यवृत्तिकामो वा केन वाऽयं गतः सह ।**
**मृत्युदेशसमासन्नं पृच्छेद्वाऽपि जनं शनैः ॥ २८१ ॥**

किमयं **स्त्री**कामो **द्रव्य**कामो **वृत्तिकामो** वा तथा कस्यां किंसंबन्धिन्यां वा स्त्रियामस्य रतिरासीत् । कस्मिन् वा द्रव्ये प्रीतिः । कुतो वा वृत्तिकामः । **केन वा सह** देशान्तरं **गत** इति नानाप्रकारं व्यभिचारिण्यो योषितः पृथक्पृथक् विश्वास्य प्रष्टव्याः । तथा मरणदेशनिकटवर्तिनो गोपाटविकाद्या ये जनास्तेऽपि विश्वासपूर्वकं प्रष्टव्याः । एवं नानाप्रकारैः प्रश्नैर्हन्तारं निश्चित्य तदुचितो दण्डो विधातव्यः ॥ २८१ ॥

१० कथं प्रष्टव्या इत्यत आह ।

**क्षेत्रवेश्मवनग्रामविवीतखलदाहकाः ।**
१५ **राजपत्न्यभिगामी च दग्धव्यास्तु कटाग्निना ॥ २८२ ॥**

किंच । **क्षेत्रं** पक्वफलसस्योपेतम् । **वेश्म** गृहम् । **वनमटवीं** क्रीडावनं वा । **ग्रामम्** । **विवीतमुक्तलक्षणम्** । **खलं** वा ये दहन्ति यश्च राजपत्नीमभिगच्छति तान्सर्वान् कटैर्वीरणमयैर्वेष्टयित्वा दहेत् । क्षेत्रादेर्दाहकानां मारणदण्डप्रसंगाद्दण्डविधानम् ॥ २८२ ॥

इति स्तेयप्रकरणम् ॥

२०

## अथ स्त्रीसंग्रहणप्रकरणम् २४

स्त्रीसंग्रहणाख्यं विवादपदं व्याख्यायते । प्रथमसाहसादिदण्डप्राप्त्यर्थं त्रेधा तत्स्वरूपं **व्यासेन** विवृतम् । त्रिविधं तत्समाख्यातं प्रथमं मध्यमोत्तमम् । अदेशकालभाषाभिर्निर्जने च परस्त्रियाः ॥ कटाक्षावेक्षणं हास्यं **प्रथमं** साहसं स्मृतम् । प्रेषणं गन्धमाल्यानां धूपभूषणवाससाम् । प्रलोभनं चान्नपानैर्**मध्यमं** साहसं स्मृतम् । सहासनं विविक्तेषु परस्परमुपाश्रयः ॥ केशाकेशिग्रहं चैव सम्यक् २५ संग्रहणं स्मृतम्' ॥ स्त्रीपुंसयोर्मिथुनीभावः **संग्रहणम्** ॥

संग्रहणज्ञानपूर्वकत्वात्तत्कर्तुर्दण्डविधानं तज्ज्ञानोपायं तावदाह—

**पुमान्संग्रहणे ग्राह्यः केशाकेशि परस्त्रियाः ।**
**सद्यो वा कामजैश्चिह्नैः प्रतिपत्तौ द्वयोस्तथा ॥ २८३ ॥**

---

१ ङ–संग्रहम् ।

**संग्रहणे** प्रवृत्तः **पुमान् केशाके**श्यादिभिर्लिङ्गैर्ज्ञात्वा ग्रहीतव्यः। परस्परं केशग्रहणपूर्विका क्रीडा **केशाकेशि**। 'तत्र तेनेदमिति सरूप' (व्या.सू.२-२-२७) इति बहुव्रीहौ सति **'इच्कर्म-व्यतिहार'** (व्या.सू.५-४-१२) इति समासांत इच्प्रत्ययः। अव्ययत्वाच्च लुप्ततृतीया विभक्तिः॥ ततश्चायमर्थः परभार्यया सह केशाकेशिक्रीडनेनाभिनवैः कररुहदशनादिकृतव्रणैः रागकृतैर्लि-ङ्गैर्द्वयोः **संप्रतिपत्त्या** वा ज्ञात्वा संग्रहणे प्रवृत्तो ग्रहीतव्यः। परस्त्रीग्रहणं नियुक्तावरुद्धादिव्युदा-५ सार्थम्॥ २८३॥

**नीवीस्तनप्रावरणसक्थिकेशावमर्शनम्।**
**अदेशकालसंभाषं सहैकासनमेव च॥ २८४॥**

किंच। यः पुनः परदारपरिधानग्रन्थिप्रदेशकुचप्रावरणजघनमूर्धरुहादिस्पर्शनं साभिलाष इवा-चरति। तथा **अदेशे** निर्जने जनताकीर्णे वांऽधकाराकुले संलापनं करोति। परभार्यया वा **सहै-**१० कमञ्चकादौ रिरंसयेवावतिष्ठते सोऽपि संग्रहणे प्रवृत्तो ग्राह्यः।

एतच्च शंक्यमानदोषपुरुषविषयमितरस्य तु न दोषः। यथाह **मनुः**। **'यस्त्वनाक्षारितः पूर्वमभिभाषेत** कारणात्। न दोषं प्राप्नुयात्किञ्चिन्नहि तस्य व्यतिक्रम' (अ.८श्लो.३५५)। इति॥ यः परस्त्रिया स्पृष्टः क्षमते असावपि ग्राह्यः इति **तेनै**वोक्तम्। (अ. ८ श्लो. ३५८)। 'स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत्तथा। परस्परस्यानुमते सर्वं संग्रहणं स्मृतमिति'। यश्च ममेयं १५ विदग्धाऽसकृद्रमितेति श्लाघया भुजंगजनसमक्षं ख्यापयत्यसावपि ग्राह्य इति **तेनै**वोक्तम्। 'दर्पाद्वा यदि वा मोहाच्छ्लाघया वा स्वयं वदेत्। पूर्वं ममेयं भुक्तेति तच्च संग्रहणं स्मृतमिति'॥ २८४॥

प्रतिषिद्धयोः स्त्रीपुंसयोः पुनः सँल्लापादिकरणे दण्डमाह—

**स्त्री[1] निषेधे शतं दद्याद्द्विशतं तु दमं पुमान्।**
**प्रतिषेधे तयोर्दण्डो यथा संग्रहणे तथा॥ २८५॥** २०

प्रतिषिद्ध्यत इति **प्रतिषेधः** पतिपित्रादिभिर्येन सह संभाषणादिकं निषिद्धं तत्र प्रवर्तमाना **स्त्री शत**पणं दण्डं दद्यात्। पुरुषः पुनरेवं निषिद्धे प्रवर्तमानो **द्विशतं दद्यात्**। द्वयोस्तु स्त्रीपुं-सयोः प्रतिषिद्धे प्रवर्तमानयोः **संग्रहणे** संभोगे वर्णानुसारेण यो दण्डो वक्ष्यते स एव विज्ञेयः। एतच्च चारणादिभार्याव्यतिरेकेण। 'नैष चारणदारेषु विधिर्नात्मोपजीविषु। सज्जयन्ति हि ते नारीं निगूढाश्चारयन्ति चेति' **मनु**स्मरणात् (अ. ८ श्लो. ३६२)॥ २८५॥— २५

**सजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः।**
**प्रातिलोम्ये वधः पुंसो नार्याः कर्णादिकर्तनम्॥ २८६॥**

चतुर्णामपि वर्णानां बलात्कारेण **सजातीय**गुप्तपरदाराभिगमने साशीतिपणसहस्रं दण्डनीयः। यदा **त्वानुलोम्येन** हीनवर्णो स्त्रियमगुप्तामभिगच्छति तदा मध्यमसाहसं दण्डनीयः। यदा पुनः सवर्णामगुप्तामानुलोम्येन गुप्तां वा व्रजति तदा **मानवे** विशेष **उक्तः** (अ. ८ श्लो. ३७८।३८३)। 'सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद्व्रजन्। श-

तदिदानीं संग्रहणे दण्डमाह

१ स्त्री निषेधे शतं दण्ड्या द्विशतं तु दमः पुमान् इति मयूखे पाठान्तरम्।

तानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह संगतः ॥ सहस्रं ब्राह्मणो दण्डं दाप्यो गुप्ते तु ते व्रजन्। शूद्रायां क्षत्रियविशोः सहस्रं तु भवेद्दम' इति ॥

एतच्च गुरुसखिभार्याव्यतिरेकेण द्रष्टव्यम्। 'माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा। पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा ॥ दुहिताचार्यभार्या च सगोत्रा शरणागता। राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या ॥ आसामन्यतमां गच्छन् गुरुतल्पग उच्यते। शिश्नस्योत्कर्तनात्तत्र नान्यो दण्डो विधीयत' इति **नारद**स्मरणात् ॥

प्रातिलोम्ये उत्कृष्टवर्णस्त्रीगमने क्षत्रियादेः पुरुषस्य वधः। एतच्च गुप्ताविषयमन्यत्र तु धनदण्डः। 'उभावपि हि तावेव ब्राह्मण्या गुप्तया सह। विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना ॥ ब्राह्मणीं यद्यगुप्तां तु सेवेतां वैश्यपार्थिवौ ॥ वैश्यं पञ्चशतं कुर्यात्क्षत्रियं तु सहस्रिणमिति' **मनु**स्मरणात् (अ. ८ श्लो. ३७६। ३७७)। शूद्रस्य पुनरगुप्तामुत्कृष्टवर्णां स्त्रियं व्रजतो लिङ्गच्छेदनसर्वस्वापहारौ। गुप्तां तु व्रजतस्तस्य वधसर्वस्वापहाराविति **तेनैवोक्तम्** ॥ (अ. ८ श्लो. ३७३)। 'शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमावसन्। अगुप्तमङ्गसर्वस्वैर्गुप्तं सर्वेण हीयत' इति। **नार्याः** पुनर्हीनवर्णं व्रजन्त्याः कर्णयोरादिग्रहणान्नासादेश्च कर्तनम्। आनुलोम्ये सवर्णं वा व्रजन्त्या दण्डः कल्प्यः ॥

अयं च वधाद्युपदेशो राज्ञ एव तस्यैव पालनाधिकारान्न द्विजातिमात्रस्य। तस्य 'ब्राह्मणः परीक्षार्थमपि शस्त्रं नाददीतेति' शस्त्रग्रहणनिषेधात्। यदा तु राज्ञो निवेदने कालविलम्बनेन कार्यातिपातशङ्का तदा स्वयमेव जारादीन् हन्यात्। (**मनु**. अ. ८ श्लो. ३४८)। 'शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते'। तथा (**मनु**. अ. ८ श्लो. ३५१) 'नाततायिवधे दोषो हन्तुर्भवति कश्चन। प्रकाशं वाप्रकाशं वा मन्युस्तं मन्युमृच्छतीति' शस्त्रग्रहणाभ्यनुज्ञानाच्च ॥

तथा क्षत्रियवैश्ययोरन्योन्यस्त्र्यभिगमने यथाक्रमं सहस्रशतपणात्मकौ दण्डौ वेदितव्यौ। तदाह **मनुः**। (अ. ८ श्लो. ३८२)। 'वैश्यश्चेत्क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत्। यो ब्राह्मण्यामगुप्तायां तावुभौ दण्डमर्हत' इति ॥ २८६ ॥

पारदार्यप्रसङ्गात् कन्यायामपि दण्डमाह।

**अलङ्कृतां हरेत्कन्यामुत्तमं ह्यन्यथाऽधमम्।**
**दण्डं दद्यात्सवर्णासु प्रातिलोम्ये वधः स्मृतः ॥ २८७ ॥**

विवाहाभिमुखीभूतामलङ्कृतां **सवर्णां** कन्यामपहरन्नुत्तमसाहसं दण्डनीयः। तदनभिमुखीं सवर्णां हरन् प्रथमसाहसम्। उत्कृष्टवर्णजां कन्यामपहरतः पुनः क्षत्रियादेर्वध एव ॥ दण्डविधानाच्चापहर्तृसकाशादाच्छिद्यान्यस्मै देयेति गम्यते ॥ २८७ ॥

**सकामास्वनुलोमासु न दोषस्त्वन्यथा दमः।**

'आनुलोम्यापहरणे दण्डमाह।

यदि सानुरागां हीनवर्णां कन्यामपहरति तदा दोषाभावान्न दण्डः। **अन्यथा** त्वनिच्छन्तीमपहरतः प्रथमसाहसो दण्डः ॥

**दूषणे तु करच्छेद उत्तमायां वधस्तथा ॥ २८८ ॥**

अनुलोमास्वित्यनुवर्तते। यद्यकामां कन्यां बलात्कारेण नखक्षतादिना दूषयति तदा तस्य करश्छेत्तव्यः, यदा पुनस्तामेवाङ्गुलिप्रक्षेपेण योनिक्षतं कुर्वन्दूषयति तदा **मनूक्त**षट्शतसहितोऽङ्गुलिच्छेदः। (अ. ८ श्लो. ३६७) 'अविषह्य तु यः कन्यां कुर्याद्दर्पेण मानवः। तस्याशु कर्त्ये अङ्गुल्यौ दण्डं चार्हति षट्शतमिति' यदा पुनः सानुरागां पूर्ववद्दूषयति तदाऽपि **तेनैव** विशेष उक्तः (अ. ८ श्लो. ३६८)। 'सकामां दूषयंस्तुल्यो नाङ्गुलिच्छेदमर्हति। द्विशतं तु दमं दाप्यः प्रसङ्गविनिवृत्तये' इति॥

कन्यादूषणे दण्डमाह।

यदा तु कन्यैव कन्यां दूषयति विदग्धा वा तत्रापि विशेषस्तेनैवोक्तः। (अ. ८ श्लो. ३६९) 'कन्यैव कन्यां या कुर्यात्तस्यास्तु द्विशतो दमः। या तु कन्यां प्रकुर्यात् स्त्री सा सद्यो मौण्ड्यमर्हति॥ अङ्गुल्योरेव च च्छेदं खरेणोद्वहनं तथेति'। कन्यां कुर्यादिति कन्यां योनिक्षतवतीं कुर्यादित्यर्थः॥

यदा पुनरुत्कृष्टजातीयां कन्यामविशेषात्सकामामकामां वाऽभिगच्छति तदा हीनस्य क्षत्रियादेर्वध एव। (अ. ८ श्लो. ३६६)। 'उत्तमां सेवमानस्तु जघन्यो वधमर्हतीति' **मनु**स्मरणात्॥ यदा सवर्णां सकामामभिगच्छति तदा गोमिथुनं शुल्कं तत्पित्रे दद्यात् यदीच्छति॥ पितरि तु शुल्कमनिच्छति दण्डरूपेण तदेव राज्ञे दद्यात्। सवर्णामकामां तु गच्छतो वध एव। यथाह **मनुः**। 'शुल्कं दद्यात्सेवमानः समामिच्छेत्पिता यदि'। (अ. ८ श्लो. ३६६)। 'योऽकामां दूषयेत्कन्यां स सद्यो वधमर्हति। सकामां दूषयंस्तुल्यो न वधं प्राप्नुयान्नर' इति (अ. ८ श्लो. ३६४)॥ २८८॥

**शतं स्त्रीदूषणे दद्याद्द्वे तु मिथ्याभिशंसने।**
**पशून् गच्छन् शतं दाप्यो हीनां स्त्रीं गां च मध्यमम्॥ २८९॥**

किंच। स्त्रीशब्देनात्र प्रकृतत्वात्कन्याऽवमृश्यते। तस्या यदि कश्चिद्विद्यमानानेवापस्माराराजयक्ष्मादिदीर्घकुत्सितरोगसंसृष्टमैथुनत्वादिदोषान्प्रकाश्येयमकन्येति दूषयत्यसौ **शतं** दाप्यः। **मिथ्याभिशंसने** तु पुनरविद्यमानदोषाविष्कारेण दूषणे द्वे शते दापनीयः। गोव्यतिरिक्तपशुगमने तु **शतं दाप्यः**। यः पुनर्**हीनां स्त्रि**यमन्त्यावसायिनीमविशेषात्सकामामकामां वा **गां** चाभिगच्छत्यसौ **मध्यम**साहसं दण्डनीयः॥ २८९॥

**अवरुद्धासु दासीषु भुजिष्यासु तथैव च।**
**गम्यास्वपि पुमान्दाप्यः पञ्चाशत्पणिकं दमम्॥ २९०॥**

गच्छन्नित्यनुवर्तते। उक्तलक्षणा वर्णस्त्रियो दास्यस्ता एव स्वामिना शुश्रूषाहानिव्युदासार्थं गृह एव स्थातव्यमित्येवं पुरुषान्तरोपभोगतो निरुद्धा **अवरुद्धाः**। पुरुषनियतपरिग्रहाः **भुजिष्याः**। यदा दास्योऽवरुद्धा भुजिष्या वा भवेयुस्तदा तासु, तथा चशब्दाद्वेश्यास्वैरिणीनामपि साधारणस्त्रीणां भुजिष्याणां च ग्रहणम् तासु च सर्वपुरुषसाधारणतया **गम्यास्वपि** गच्छन् **पञ्चाशत्पणान्** दण्डनीयः। परपरिगृहीतत्वेन तासां परदारतुल्यत्वात्। एतच्च स्पष्टमुक्तं **नारदेन**। "स्वैरिण्यब्राह्मणी वेश्या दासी निष्कासनी च या। गम्याः स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः॥ आस्वेव तु भुजिष्यासु दोषः

साधारणस्त्रीगमने दण्डमाह।

स्यात्परदारवत्। गम्यास्वपि हि नोपेयाद्यत्ताः परपरिग्रहा' इति (१२-७८-७९)॥ निष्कासिनी स्वाम्यनवरुद्धा दासी।

ननु च स्वैरिण्यादीनां साधारणतया गम्यत्वाभिधानमयुक्तम्। न हि जातितः शास्त्रतो वा काश्चन लोके साधारणाः स्त्रिय उपलभ्यन्ते। तथाहि। स्वैरिण्यो दास्यश्च तावद्वर्णस्त्रिय एव। ५ 'स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत्। वर्णानामानुलोम्येन दास्यं न प्रतिलोमत' इति मनुस्मरणात्॥ न च वर्णस्त्रीणां पत्यौ जीवति मृते वा पुरुषान्तरोपभोगो घटते। 'दुःशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः। परिचर्यः स्त्रिया साध्व्या सततं देववत्पतिः॥ कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः। न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य त्विति' (मनु-स्मृ. अ. ५ श्लोक. १५४।१५७) निषेधस्मरणात्॥

१० नापि कन्यावस्थायाः साधारणत्वम्। पित्रादिपरिरक्षितायाः कन्याया एव दानोपदेशात्। दात्रभावेऽपि तथाविधाया एव स्वयंवरोपदेशात्। न च दासीभावात्स्वधर्माधिकारच्युतिः। पारतन्त्र्यं हि दास्यं न स्वधर्मपरित्यागः। नापि वेश्या साधारणी वर्णानुलोमजव्यतिरेकेण गम्यजात्यन्तरासंभवात्। तदन्तःपातित्वे च पूर्ववदेवागम्यत्वम्। प्रतिलोमजत्वे तु तासां नितरामगम्यत्वम्। अतः पुरुषान्तरोपभोगे तासां निन्दितकर्माभ्यासेन पातित्यात्। पतितसंसर्गस्य १५ निषिद्धत्वाच्च न सकलपुरुषोपभोगयोग्यत्वम्। सत्यमेवम्। किं त्वत्र स्वैरिण्याद्युपभोगे पित्रादिरक्षकराजदण्डभयादिदृष्टदोषाभावाद्गम्यत्ववाचोयुक्तिः। दण्डाभावश्चावरुद्धासु दासीष्विति नियतपुरुषपरिग्रहोपाधितो दण्डविधानात्तदुपाधिरहितास्वर्थादवगम्यते। स्वैरिण्याद्यानां पुनर्दण्डाभावो विधानाभावात्॥ 'कन्यां भजन्तीमुत्कृष्टं[1] न किंचिदपि दापयेदिति' (मनुस्मृ. ८-३६५) लिङ्गनिदर्शनाच्चावगम्यते। प्रायश्चित्तं तु स्वधर्मस्खलननिमित्तं गम्यानां गन्तॄणां चाविशे- २० षाद्भवत्येव।

यत्पुनर्वेश्यानां जात्यन्तरासंभवेन वर्णान्तःपातित्वमनुमानादुक्तम्। वेश्या वर्णानुलोमाद्यन्तःपातिन्यो मनुष्यजात्याश्रयत्वात्। ब्राह्मणादिवदिति। तन्न। तत्र कुण्डगोलकादिभिरनैकान्तिकत्वात्। अतो वेश्याख्या काचिज्जातिरनादिर्वेश्यायामुत्कृष्टजातेः समानजातेर्वा पुरुषादुत्पन्ना पुरुषसंभोगवृत्तिर्वेश्येति ब्राह्मण्यादिवल्लोकप्रसिद्धिबलादभ्युपगमनीयम्। न च निर्मूलेयं २५ प्रसिद्धिः। स्मर्यते हि स्कन्दपुराणे। 'पञ्चचूडा नाम काञ्चनाप्सरसस्तत्सन्ततिर्वेश्याख्या पञ्चमी जातिरिति[2]'। अतस्तासां नियतपुरुषपरिणयनविधिविधुरतया समानोत्कृष्टजातिपुरुषा-

---

१ ग-उत्कृष्टां।

२ "वेश्याख्या जातिरुद्दिष्टा पूर्वा नाधुनिका द्विजाः। समानजातेर्वा श्रेष्ठाज्जाता पुंभोगवृत्तिका॥ १॥
पंचचूडा ह्यप्सरसश्चासन्देवपुरे पुरा। ननृतुर्देवराजाग्रे कदाचिद्गानपूर्वकम्॥ २॥
तासां नृत्येन गानेन हृष्टः साध्विति चाब्रवीत्। शिवांशः कोपनो वाग्मी दुर्वासा मुनिपुंगवः॥ ३॥
मुहुः साध्विति सानंदो वाचमुच्चैर्जगौ मुनिः। तद्दृष्ट्वा महदाश्चर्यं जहसुस्ताः स्त्रियः खलाः॥ ४॥
अस्माकं गानचातुर्यं वेत्ति किं वेदपाठकः। इत्यनालोकितो भावैर्ऋषिः क्रोधसमाकुलः॥ ५॥
शशाप यात भूलोकं नार्यो यूयं सुरेषु च। ततो भीताश्चाप्सरसो रुरुदुर्नतिपूर्वकं॥ ६॥

भिगमनेनादृष्टदोषो नापि दण्डस्तासु चानवरुद्धासु गच्छतां पुरुषाणां । यद्यपि न दण्डस्तथाऽप्यदृष्टदोषोऽस्त्येव 'स्वदारनियतः सदेति' नियमात् । 'पशुवेश्याभिगमने प्राजापत्यं विधीयत' इति प्रायश्चित्तस्मरणाच्चेति निरवद्यम् ॥ २९० ॥

अवरुद्धासु दासीष्वित्यनेन दासीस्वैरिण्यादिभुजिष्याभिगमने दण्डं विदधतस्तास्वभुजिष्यासु दण्डो नास्तीत्यर्थादुक्तं तदपवादमाह ।—

**प्रसह्य दास्यभिगमे दण्डो दशपणः स्मृतः ।**
**बहूनां यद्यकामाऽसौ चतुर्विंशतिकः पृथक् ॥ २९१ ॥**

पुरुषसंभोगजीविकासु **दासी**स्वैरिण्यादिषु शुल्कदानविरहेण **प्रसह्य** बलात्कारेणाभिगच्छतो **दशपणो दण्डः** । यदि बहव एकामनिच्छन्तीमपि बलात्कारेणाभिगच्छन्ति तर्हि प्रत्येकं **चतुर्विंशति**पणपरिमितं दण्डं दण्डनीयाः । यदा पुनस्तदिच्छया भाटिं दत्वा पश्चादनिच्छन्तीमपि बलाद्व्रजन्ति तदा तेषामदोषः । यदि व्याध्याद्यभिभवस्तस्या न स्यात् । 'व्याधिता सश्रमा व्यग्रा राजकर्मपरायणा । आमन्त्रिता चेन्नागच्छेदवध्या वडवा स्मृतेति' **नारद**वचनात् ॥२९१॥

**गृहीतवेतना वेश्या नेच्छन्ती द्विगुणं वहेत् ।**
**अगृहीते समं दाप्यः पुमानप्येवमेव च ॥ २९२ ॥**

यदा शुल्कं गृहीत्वा स्वस्थाऽपि अर्थपतिं **नेच्छति** तदा **द्विगुणं** शुल्कं दद्यात् । तथा शुल्कं दत्वा स्वयमनिच्छतः स्वस्थस्य पुंसः शुल्कहानिरेव । 'शुल्कं गृहीत्वा पण्यस्त्री नेच्छन्ती द्विगुणं वहेत् । अनिच्छन्दत्तशुल्कोऽपि शुल्कहानिमवाप्नुयादिति' ( नारदस्मृ. अ. ६ श्लो. १८ ) **तेनैवोक्तम्** । तथाऽन्योऽपि विशेष**स्तेनैव** दर्शितः (श्लो. १९) । 'अप्रयच्छंस्तथा शुल्कमनुभूय पुमान् स्त्रियम् । आक्रमेण च संगच्छन् घातदन्तनखादिभिः ॥ अयोनौ वाऽभिगच्छेद्यो बहुभिर्वाऽपि वासयेत् । शुल्कमष्टगुणं दाप्यो विनयं तावदेव तु ॥ वेश्या प्रधाना यास्तत्र कामुकास्तद्गृहोषिताः । तत्समुत्थेषु कार्येषु निर्णयं संशये विदुरिति' ॥ २९२ ॥

त्राह्यस्मान् दीननाथेति प्रार्थनां चक्रुरादरात् । ततः प्रसन्नो भगवान्नष्टकोपः परंतपः ॥ ७ ॥
उश्शापवचनं चैतदब्रवीच्छक्रसंनिधौ । चातुर्वर्ण्यादासु जातिर्वेश्याख्या पंचमी भवेत् ॥ ८ ॥
तदा मुक्तिर्भवेदासां नान्यथा निर्जराः क्वचित् ॥ ९ ॥
ताश्च भूलोकमासाद्य स्वैरिण्यः कामलंपटाः । द्विजादिवर्णजातीनां दास्यं चक्रुर्मुदा परम् ॥ १० ॥
तेभ्यो जाता संततिर्या सा वेश्या परिकीर्तिता । तासां भेदं प्रवक्ष्यामि गुणभेदात्तु पंचधा ॥ ११ ॥
वेश्या कलावती रंभा नायिका च उलूखली । वेश्यासु चित्रवेषाढ्या नायिका रूपशालिनी ॥ १२ ॥
कलावती रतिकला गानशास्त्रकृतश्रमा । रंभा रूपकलावेषकुशला परिकीर्तिता ॥ १३ ॥
नित्यं द्वित्रीणि षट्कं वा नराणामुपभोगिनी । कलारूपविहीना च नारी प्रोक्ता उलूखली ॥ १४ ॥
स्वैरिणी या पतिं हित्वा सवर्णं कामतश्चरेत् । वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः ॥ १५ ॥
वाग्यता नियतं श्रेष्ठं पुरुषं चोपभोगिनी । धर्मपत्नीव सा प्रोक्ता वेश्यास्वपि पतिव्रता ॥ १६ ॥
शुल्कं गृहीत्वा चैकस्य रूपकं यदि वा बहु । परं त्रिलोकदातारं साक्षादिदं न कांक्षति ॥ १७ ॥
वेश्याऽपि सा सती ज्ञेया धर्मपत्नीव सेवते ॥"

**अयोनौ गच्छतो योषां पुरुषं वाऽपि मेहतः ।**
**चतुर्विंशतिको दण्डस्तथा प्रव्रजितागमे ॥ २९३ ॥**

किंच । यस्तु स्वयोषां मुखादावभिगच्छति पुरुषं वाऽभिमुखो मेहति तथा **प्रव्रजितां** वा गच्छत्यसौ **चतुर्विंशति**पणान्दण्डनीयः ॥ २९३ ॥

५ **अन्त्याभिगमने त्वङ्क्यः कुबन्धेन प्रवासयेत् ।**
**शूद्रस्तथाऽन्त्य एव स्यादन्त्यस्यार्यागमे वधः ॥ २९४ ॥**

किंच । **अन्त्या** चाण्डाली तद्गमने त्रैवर्णिकान्प्रायश्चित्तानभिमुखान् 'सहस्रं त्वन्त्यजस्त्रिय' मिति **मनु**वचनात्पणसहस्रं दण्डयित्वा **कुबन्धेन** कुत्सितबन्धेन भगाकारेणाङ्कयित्वा स्वराष्ट्रान्निर्वासयेत् । प्रायश्चित्ताभिमुखस्य पुनर्दण्डनमेव । शूद्रः पुनश्चाण्डाल्यभिगमे**ऽन्त्य एव**
१० चाण्डाल एव भवति । अन्त्यजस्य पुनश्चाण्डालादेरुत्कृष्टजातिस्त्र्यभिगमे **वध** एव ॥ २९४ ॥

इति स्त्रीसंग्रहणप्रकरणम् ॥

---

व्यवहारप्रकरणमध्ये **स्त्रीपुंसयोगाख्यम**प्यपरं विवादपरं **मनुनारदाभ्यां** विवृतम् । तत्र **नारदः** । 'विवाहादिविधिः स्त्रीणां यत्र पुसां च कीर्त्यते । स्त्रीपुंसयोगसंज्ञं तद्विवादपदमुच्यत' इति ( १२ १ ) ॥ **मनु**रप्याह । 'अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम् । विषयेषु
१५ च सज्जन्त्यः स स्थाप्या ह्यात्मनो वश' इत्यादि ( अ. ९ श्लो. २) ॥ यद्यपि स्त्रीपुंसयोः परस्परमर्थिप्रत्यर्थितया नृपसमक्षं व्यवहारो निषिद्धस्तथाऽपि प्रत्यक्षेण कर्णपरम्परया वा विदिते तयोः परस्परातिचारे दण्डादिना दम्पती निजधर्ममार्गे राज्ञा स्थापनीयौ । इतरथा दोषभाग्भवतीति व्यवहारप्रकरणे राजधर्ममध्ये अस्य स्त्रीपुंसधर्मजातस्योपदेशः । एतच्च विवाहप्रकरण एव सप्रपञ्चं प्रतिपादितमिति **योगीश्वरेण** न पुनरत्रोक्तम् ॥

## २० अथ प्रकीर्णकप्रकरणम् २५

सांप्रतं **प्रकीर्णकाख्यं** व्यवहारपदं प्रस्तूयते । तल्लक्षणं च कथितं **नारदेन**—

प्रकीर्णके पुनर्ज्ञेया व्यवहारा नृपाश्रयाः । राज्ञामाज्ञाप्रतीघातस्तत्कर्मकरणं तथा ॥
पुरः प्रदानं[1] संभेदः प्रकृतीनां तथैव च । पाखण्डि[2]नैगमश्रेणीगणधर्मविपर्ययाः ॥
पितापुत्रविवादश्च प्रायश्चित्तव्यतिक्रमः । प्रतिग्रहविलोपश्च कोप आश्रमिणामपि ॥
२५ वर्णसंकरदोषश्च तद्वृत्तिनियमस्तथा । न दृष्टं यच्च पूर्वेषु सर्वं तत्स्यात्प्रकीर्णके' ॥

इति ( अ. १७ श्लो. १–४ )

प्रकीर्णके विवादपदे ये विवादा राजाज्ञोल्लङ्घनतदाज्ञाकरणादिविषयास्ते नृपसमवायिनः । नृप एव तत्र स्मृत्याचारव्यपेतमार्गे वर्तमानानां प्रतिकूलतामास्थाय व्यवहारनिर्णयं कुर्यात् । एवं च वदता 'यो नृपाश्रयो व्यवहार'स्तत्**प्रकीर्णकमि**त्यर्थाल्लक्षितं भवति ॥

१ 'पुरप्रदानं' । २ पाषण्ड क पत:प्रदान ।

तत्रापराधविशेषेण दण्डविशेषमाह—

**ऊनं वाऽभ्यधिकं वाऽपि लिखेद्यो राजशासनम्।**
**पारदारिकचौरं वा मुञ्चतो दण्ड उत्तमः॥ २९५॥**

राजदत्तभूमेर्निबन्धस्य वा परिमाणान्न्यूनत्वमाधिक्यं वा प्रकाशयन् **राजशासनं यो** लिखति यश्च **पारदारिकं चौरं** वा गृहीत्वा राज्ञेऽनर्पयित्वा मुञ्चति तावुभावुत्तमसाहसं दण्ड्यौ॥२९५॥ ५

प्रसंगान्नृपाश्रयव्यतिरिक्तव्यवहारविषयमपि दण्डमाह—

**अभक्ष्येण द्विजं दूष्य दण्ड उत्तमसाहसम्।**
**मध्यमं क्षत्रियं वैश्यं प्रथमं शूद्रमर्धिकम्॥ २९६॥**

मूत्रपुरीषादिना **अभक्ष्येण** भक्ष्यानर्हेणान्नपानादिमिश्रणेन द्रव्यरूपेण वा ब्राह्मणं दूषयित्वा खादयित्वोत्तमसाहसं दण्ड्यो भवति। **क्षत्रियं** पुनरेवं दूषयित्वा **मध्यमम्**। **वैश्यं** दूष- १० यित्वा **प्रथमम्**। शूद्रं दूषयित्वा प्रथमसाहसस्यार्धं दण्ड्यो भवतीति संबन्धः। लशुनाद्यभक्ष्यदूषणे तु दोषतारतम्याद्दण्डतारतम्यमूहनीयम्॥ २९६॥

**कूटस्वर्णव्यवहारी विमांसस्य च विक्रयी।**
**अङ्गहीनस्तु कर्तव्यो दाप्यश्चोत्तमसाहसम्॥ २९७॥**

किंच रसवेधाद्यापादितवर्णोत्कर्षैः कूटैः स्वर्णैर्व्यवहारशीलः यः स्वर्णकारादिः, यश्च **विमां**- १५ **सस्य** कुत्सितमांसस्य श्वादिसंबद्धस्य विक्रयशीलः सौनिकादिः। चशब्दात्कूटरजतादि**व्यवहारी** च। ते सर्वे प्रत्येकं नासाकर्णकरैस्त्रिभिरङ्गैर्हीनाः कार्याः। चशब्दादङ्गच्छेदेन समुचितमुत्तमसाहसं दण्डं दाप्याः। यत्पुनर्मनुनोक्तम् (अ. ९ श्लो. २९२)। 'सर्वकण्टकपापिष्ठं हेमकारं तु पार्थिवः॥ प्रवर्तमानमन्याये छेदयेल्लवशः क्षुरैरिति' तद्देवब्राह्मणराजस्वर्णविषयम्॥ २९७॥

**चतुष्पादकृतो दोषो नापेहीति प्रजल्पतः।** २०
**काष्ठलोष्टेषु पाषाणबाहुयुग्यकृतस्तथा॥ २९८॥**

**चतुष्पादै**र्गोगजादिभिः **कृतो** यो दोषो मनुष्यमारणादिरूपोऽसौ गवादिस्वामिनो न भवति अपसरेति प्रकर्षेणोच्चैर्भाषमाणस्य। तथा लकुटलोष्टसायकपाषाणोत्क्षेपणेन बाहुना युग्येन च युगं वहताऽश्वादिना कृतो यः पूर्वोक्तो दोषः सोऽपि काष्ठादीन्प्रास्यतो न भवत्यपसरेति प्रजल्पतः। काष्ठाद्युत्क्षेपणेन हिंसायां दोषाभावकथनं दण्डाभावप्रतिपादनार्थम्। प्रायश्चित्तं पुनरबुद्धिकरणनि- २५ मित्तमस्त्येव। काष्ठादिग्रहणं च शक्तितोमरादेरुपलक्षणार्थम्॥ २९८॥

**छिन्ननस्येन यानेन तथा भग्नयुगादिना।**
**पश्चाच्चैवापसरता हिंसने स्वाम्यदोषभाक्॥ २९९॥**

किंच। नसि भवा रज्जुर्नस्या छिन्ना शकटादियुक्तबलीवर्दनस्य रज्जुर्यस्मिन् तत् **छिन्ननस्यं** शकटादि तेन। तथा **भग्नयुगेन**। आदिग्रहणाद्भग्नाक्षचक्रादिना च। **यानेन पश्चात्**पृष्ठतोऽप- ३० **सरता**। चशब्दात्तिर्यगपगच्छता प्रतिमुखं चागच्छता च। मनुष्यादि**हिंसने स्वामी** प्राजको वा

**दोषभाङ् न** भवति अतत्प्रयत्नजनितत्वाद्धिंसनस्य। तथा च **मनुः** (अ. ९ श्लो. २९१।२९२)। 'छिन्ननस्ये भग्नयुगे तिर्यक्प्रतिमुखागते। अक्षभङ्गे च यानस्य चक्रभङ्गे तथैव च। छेदने चैव यन्त्राणां योक्त्ररश्म्योस्तथैव च। आक्रन्दे सत्यपैहीति न दण्डं **मनु**रब्रवीदिति' ॥ २९९ ॥

**शक्तोऽप्यमोक्षयन्स्वामी दंष्ट्रिणां शृङ्गिणां तथा।**
५ **प्रथमं साहसं दद्याद्विक्रुष्टे द्विगुणं तथा ॥ ३०० ॥**

अप्रवीणप्राजकप्रेरितैर्दंष्ट्रिभिर्गजादिभिः शृङ्गिभिर्गवादिभिर्वध्यमानं समर्थोऽपि स्वामी यद्य-**मोक्षयन्** उपेक्षते तदा अकुशलप्राजकनियोजननिमित्तं **प्रथमसाहसं** दण्डं **दद्यात्**। यदा तु मारितोऽहमिति **विक्रुष्टे**ऽपि न मोक्षयति तदा **द्विगुणम्**।

उपेक्षायां स्वामिनो दण्डमाह।

१० यदा पुनः प्रवीणमेव प्राजकं प्रेरयति तदा प्राजक एव दण्ड्यो न स्वामी। यथाह **मनुः**। (अ. ८ श्लो. २९४)। 'प्राजकश्चेद्भवेदाप्तः प्राजको दण्डमर्हतीति' ॥ प्राजको यन्ता। आप्तोऽभियुक्तः। प्राणिविशेषाच्च दण्डविशेषः कल्पनीयः। यथाह **मनुः** (अ. ८ श्लो. २९६।९७९८)।

'मनुष्यमारणे क्षिप्रं चौरवत्किल्बिषी भवेत्। प्राणभृत्सु महत्स्वर्धं गोगजोष्ट्रहयादिषु ॥
क्षुद्राणां च पशूनां तु हिंसायां द्विशतो दमः। पञ्चाशत्तु भवेद्दण्डः शुभेषु मृगपक्षिषु ॥
१५ गर्दभाजाविकानां तु दण्डः स्यात्पञ्चमाषकः[1]। माषकस्तु भवेद्दण्डः श्वशूकरनिपातन' ॥
इति ॥ ३०० ॥

**जारं चौरेत्यभिवदन् दाप्यः पञ्चशतं दमम्।**
**उपजीव्य धनं मुञ्चंस्तदेवाष्टगुणीकृतम् ॥ ३०१ ॥**

किंच। स्ववंशकलङ्कभयाज्**जारं** पारदारिकं **चौरं** निर्गच्छेत्यभिवदन् पञ्चशतं पणानां पञ्चश-
२० तानि यस्मिन् दमे स तथोक्तस्तं **दमं** दाप्यः। यः पुनर्जारहस्ताद्**धनमुपजीव्य** उत्कोचरूपेण गृहीत्वा जारं **मुञ्चत्य**सौ यावद्गृहीतं तावदष्टगुणीकृतं दण्डं दाप्यः ॥ ३०१ ॥

**राज्ञोऽनिष्टप्रवक्तारं तस्यैवाक्रोशकारिणम्।**
**तन्मन्त्रस्य च भेत्तारं छित्त्वा जिह्वां प्रवासयेत् ॥ ३०२ ॥**

किंच। **राज्ञोऽनिष्टस्या**नभिमतस्यामित्रस्तोत्रादेः **प्र**कर्षेण भूयोभूयो **वक्तारं, तस्यैव** राज्ञ
२५ **आक्रोशकारिणं** निन्दाकरणशीलं, तदीयस्य च **मन्त्रस्य** स्वराष्ट्रविवृद्धिहेतोः परराष्ट्रापक्षयकरस्य वा **भेत्तारं** अमित्रकर्णेषु जपन्तं तस्य **जिह्वामु**त्कृत्य स्वराष्ट्रान्निष्कासयेत्। कोशापहरणादौ पुनर्वध एव। 'राज्ञः कोशापहर्तॄंश्च[2] प्रतिकूलेषु च स्थितान्। घातयेद्विविधैर्दण्डैररीणां चोपकारकानिति[3]' **मनुस्मरणात्** (अ. ९ श्लो. २७५)। विविधैः सर्वस्वापहाराङ्गच्छेदवधरूपैरित्यर्थः ॥

सर्वस्वापहारेऽपि यद्यस्य जीवनोपकरणं तन्नापहर्तव्यम् चौर्योपकरणं विना। यथाह **नारदः**।
३० 'आयुधान्यायुधीयानां वाद्यादीन्वाद्यजीविनाम्। वेश्यास्त्रीणामलङ्कारान् वाद्यतोद्यादि तद्विदाम्। यच्च यस्योपकरणं येन जीवन्ति कारुकाः। सर्वस्वहरणेऽप्येतन्न राजा हर्तुमर्हतीति' (अ. १७

---

१ 'पञ्चमाषिकः' इत्यमरः पाठः। २ कोशापहर्तुश्च इत्यमरः पाठः। ३ क-चोपतापकान् फ-चोपजीपकान्। ४ ककारवः। ५ एताम्।

श्लो. १० ११)॥ 'ब्राह्मणस्य पुनर्न शारीरो दण्ड' इति निषेधाद्वधस्थाने शिरोमुण्डनादिकं कर्तव्यम्। 'ब्राह्मणस्य वधो मौण्ड्यं पुरान्निर्वासनाङ्कने। ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेन त्विति' मनुस्मरणात्॥ ३०२॥

**मृताङ्गलग्नविक्रेतुर्गुरोस्ताडयितुस्तथा।**
**राजयानासनारोढुर्दण्ड उत्तमसाहसः॥ ३०३॥**

किंच। मृतशरीरसंबन्धिनो वस्त्रपुष्पादेर्**विक्रेतुः**, **गुरोः** पित्राचार्यादे**स्ताडयितुः**, **तथा** राजानुमतिं विना तद्**यानं** गजाश्वादि **आसनं** सिंहासनादि आरोहतश्चो**त्तमसाहसो दण्डः**॥३०३

**द्विनेत्रभेदिनो राजद्विष्टादेशकृतस्तथा।**
**विप्रत्वेन च शूद्रस्य जीवतोऽष्टशतो दमः॥ ३०४॥**

किंच। यः पुनः क्रोधादिना परस्य नेत्रद्वयं भिनत्ति। यश्च ज्योतिःशास्त्रवित् गुर्वादिहितेऽप्सु-१० व्यतिरिक्तो राज्ञो द्विष्टमनिष्टं 'संवत्सरान्ते तव राज्यच्युतिर्भविष्यती'त्यादिरूपमादेशं करोति। तथा यः शूद्रो भोजनार्थं यज्ञोपवीतादिब्राह्मणलिङ्गानि दर्शयति तेषा**मष्टशतो दमः**। अष्टौ पणशतानि यस्मिन्दमे स तथोक्तः। 'श्राद्धभोजनार्थं पुनः, शूद्रस्य विप्रवेषधारिणः तप्तशलाकया यज्ञोपवीतवद्वपुष्यालिखेदिति' स्मृत्यन्तरोक्तं द्रष्टव्यम्। वृत्त्यर्थं यज्ञोपवीतादिब्राह्मणलिङ्गधारिणो वध एव। 'द्विजातिलिङ्गिनः शूद्रान्घातयेदिति' स्मरणात्॥ ३०४॥ १५

रागलोभादिनाऽन्यथा व्यवहारदर्शने दण्डमाह—

**दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु।**
**सभ्याः सजयिनो दण्ड्या विवादाद्द्विगुणं दमम्॥ ३०५॥**

**दुर्दृष्टान्**स्मृत्याचारप्राप्तधर्मोल्लङ्घनेन रागलोभादिभिरसम्यग्विचारितत्वेनाशङ्क्यमानान् **व्यवहारान्पुनः** स्वयं राजा सम्यग्विचार्य निश्चितदोषाः पूर्व**सभ्याः सजयिनः** प्रत्येकं विवादपदे२० यो दमः पराजितस्य तद्द्विगुणं दाप्याः। अप्राप्तजेतृदण्डविधिपरत्वाद्वचनस्य 'रागाल्लोभादित्यादिना' (व्य. अ. ४) श्लोकेनापौनरुक्त्यम्।

यदा पुनः साक्षिदोषेण व्यवहारस्य दुर्दृष्टता तदा साक्षिण एव दण्ड्या न जयी नापि सभ्याः। यदा तु राजानुमत्या व्यवहारस्य दुर्दृष्टत्वं तदा सर्व एव राजसहिताः सभ्यादयो दण्डनीयाः। पादो गच्छति कर्तारं पादः साक्षिणमृच्छति। पादः सभा[illegible]दः सर्वान् पादो राजानमृच्छतीति'२५ वचनात् (नारद ३-१२)। एतच्च प्रत्येकं राजादीनां दोषप्रतिपादनपरं न पुनरेकैकस्यैव पापापूर्वस्य विभागाय। यथोक्तम्। 'कर्तृसमवायिफलजननस्वभावत्वाद[illegible]स्य'॥ ३०५॥

न्यायतो निर्णीतव्यवहारस्य प्रत्यावर्तयितुर्दण्डमाह—

**यो मन्येताजितोऽस्मीति न्यायेनापि पराजितः।**
**तमायान्तं पुनर्जित्वा दापयेद्द्विगुणं दमम्॥ ३०६॥**

यः पुनर्न्**याय**मार्गेण **पराजितोऽपि** औद्धत्यान्नाहं पराजितोऽस्मीति मन्यते **तमायान्तं** कूटलेख्याद्युपन्यासेन **पुन**र्धर्माधिकरणमधितिष्ठन्तं धर्मेण पुनः पराजयं नीत्वा **द्विगुणं** दण्डं दाप-

येत् ॥ नारदेनाप्युक्तम्। 'तीरितं चानुशिष्टं वा यो मन्येत विधर्मतः। द्विगुणं दण्डमास्थाय तत्कार्यं पुनरुद्धरेदिति' (१-६५)। तीरितं साक्षिलेख्यादिनिर्णीतमनुद्धृतदण्डम्। अनुशिष्टमुद्धृतदण्डं दण्डपर्यन्तं नीतमिति यावत् ॥ यत्पुनर्मनुवचनम् (अ. ९ श्लो. २३३)। 'तीरितं चानुशिष्टं च यत्र क्व च न विद्यते। कृतं तद्धर्मतो ज्ञेयं न तत्प्राज्ञो निवर्तयेदिति'। तदर्थिप्रत्यर्थिनोरन्यतरवचनाद्व्यवहारस्याधर्मतो वृत्तत्वाशङ्कायां पुनर्द्विगुणं दण्डं प्रतिज्ञापूर्वकं व्यवहारं प्रवर्तयेत्। न पुनर्धर्मतो वृत्तत्वनिश्चयेऽपि राज्ञा लोभादिना प्रवर्तयितव्य इत्येवं परम्। यत्पुनर्नृपान्तरेणापि न्यायापेतं कार्यं निवर्तितं तदपि सम्यक्परीक्षणेन धर्म्ये पथि स्थापनीयम्। 'न्यायापेतं यदन्येन राज्ञा ज्ञानकृतं भवेत्। तदप्यन्यायविहितं पुनर्न्याये निवेशयेदिति' स्मरणात् ॥ ३०६ ॥

**राज्ञाऽन्यायेन यो दण्डो गृहीतो वरुणाय तम्।**
**निवेद्य दद्याद्विप्रेभ्यः स्वयं त्रिंशद्गुणीकृतम् ॥ ३०७ ॥**

**अन्यायेन यो दण्डो राज्ञा** लोभाद्गृहीतस्तं **त्रिंशद्गुणीकृतं 'वरुणायेद'मिति'** संकल्प्य ब्राह्मणेभ्यः **स्वयं** दद्यात्। यस्माद्दण्डरूपेण यावद्गृहीतमन्यायेन तावत्तस्मै प्रतिदेयमितरथाऽपहारदोषप्रसङ्गात्। अन्यायदण्डग्रहणे पूर्वस्वामिनः स्वत्वविच्छेदाभावाच्चेति ॥ ३०७ ॥

अन्यायगृहीतदण्डधनस्य गतिमाह।

उत्तमोपपदस्येयं शिष्यस्य कृतिरात्मनः।
धर्मशास्त्रस्य विवृतिर्विज्ञानेश्वरयोगिनः ॥ १ ॥
इति याज्ञवल्क्यमुनिशास्त्रगतव्यवहारकाण्डविवृत्तिर्विहिता।
ऋजुसंमिताक्षरपदग्रन्थनामधुना गभीरविवतार्थवती ॥ २ ॥
गंभीराभिः प्रसन्नाभिर्वाग्भिर्नाम्ना मिताक्षरा।
अन्वर्थाऽल्पाभिरल्पाभिर्विवृतिर्विहिता मया ॥ ३ ॥
इति याज्ञवल्क्यमुनिशास्त्रगता विवृतिर्न कस्य विहिता विदुषः।
प्रमिताक्षराऽपि विपुलार्थवती परिषिंचति श्रवणयोरमृतं ॥ ४ ॥

इति श्रीमत्पद्मनाभभट्टोपाध्यायात्मजस्य श्रीमत्परमहंसपरिव्राजकाचार्य**विज्ञानेश्वर**भट्टारकस्य कृतौ ऋजुमिताक्षराख्यायां **याज्ञवल्कीय**धर्मशास्त्रविवृतौ द्वितीयोऽध्यायो व्यवहाराख्यः समाप्तिमगात् ॥



१ च। २ यद्भवेत्।

# श्रीयाज्ञवल्क्यस्मृतिः।

## श्रीविज्ञानेश्वरकृतमिताक्षराव्याख्यासंवलिता।

### ॥ अथ आचाराध्यायः ॥

#### उपोद्घातप्रकरणम् १

**श्रीगणेशाय नमः। श्रीसरस्वत्यै नमः। श्रीगुरुभ्यो नमः।** ५

धर्माधर्मौ तद्विपाकास्त्रयोऽपि क्लेशाः पञ्च प्राणिनामायतन्ते।
यस्मिन्नेतैर्नो परामृष्ट ईशो यस्तं वन्दे विष्णुमोङ्कारवाच्यम् ॥ १ ॥
**याज्ञवल्क्य**मुनिभाषितं मुहु**र्विश्वरूप**विकटोक्तिविस्तृतम्।
धर्मशास्त्रमृजुभिर्मिताक्षरैर्बालबोधविधये विविच्यते ॥ २ ॥

याज्ञवल्क्यशिष्यः कश्चित्प्रश्नोत्तररूपं याज्ञवल्क्यप्रणीतं धर्मशास्त्रं संक्षिप्य कथयामास। यथा १० **मनु**नोक्तं **भृगुः**। तस्य चायमाद्यश्लोकः।

**योगीश्वरं याज्ञवल्क्यं संपूज्य मुनयोऽब्रुवन्।**
**वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषतः ॥ १ ॥**

**योगिनां** सनकादीना**मीश्वरः** श्रेष्ठस्तं **याज्ञवल्क्यं संपूज्य** मनोवाक्कायकर्मभिः पूजयित्वा **मुनयः सामश्रवः**प्रभृतयः श्रवणधारणयोग्या **अब्रुवन्** उक्तवन्तः **धर्मा-** १५ **न्नो**ऽस्मभ्यं **ब्रूहि**ति। कथं? **अशेषतः** कार्त्स्न्येन। केषां? **वर्णाश्रमेतराणाम्**। **वर्णा** ब्राह्मणादयः। **आश्रमा** ब्रह्मचारिप्रभृतयः। **इतरे** अनुलोमप्रतिलोमजाता मूर्धावसिक्तादयः। इतरशब्दस्य 'द्वन्द्वे चेति' (व्या. सू. १-१-३१) सर्वनामसंज्ञाप्रतिषेधः।

ग्रन्थोपोद्घातः।

अत्र च धर्मशब्दः षड्विधस्मार्तधर्मविषयः। तद्यथा वर्णधर्मः आश्रमधर्मः वर्णाश्रमधर्मः गुणधर्मः निमित्तधर्मः साधारणधर्मश्चेति। तत्र **वर्णधर्मो** 'नित्यं मद्यं ब्राह्मणो वर्जयेदि' त्यादिः। **आश्रम-** २० **धर्मो**ऽग्नीन्धनभैक्षचर्यादिः। **वर्णाश्रमधर्मः** 'पालाशो दण्डो ब्राह्मणस्येत्ये'वमादिः। **गुणधर्मः** शास्त्रीयाभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनादिः। **निमित्तधर्मो** विहिताकरणप्रतिषिद्धसेवननिमित्तं प्रायश्चित्तम्। **साधारणो धर्मः** अहिंसादिः 'न हिंस्यात्सर्वभूतानी' त्याचाण्डालं साधारणो धर्मः।

'श्रुत्युक्तशौचाचारांश्च शिक्षयेदि' त्याचार्यकरणविधिप्रयुक्तत्वाद्धर्मशास्त्राध्ययनस्य प्रयोजनादिकथनं नातीवोपयुज्यते। तत्र चायं क्रमः। प्रागुपनयनात्कामचारकामवादकामभक्षाः। ऊर्ध्वमुपनयनात्प्राग्वेदाध्ययनोपक्रमाद्धर्मशास्त्राध्ययनं, ततो धर्मशास्त्रविहितयमनियमोपेतस्य वेदाध्ययनं, ततस्तदर्थजिज्ञासा, ततस्तदनुष्ठानमिति। तत्र यद्यपि धर्मार्थकाममोक्षाः शास्त्रेणानेन प्रतिपाद्यन्ते ५ तथापि धर्मस्य प्राधान्याद्धर्मग्रहणम्। प्राधान्यं च धर्ममूलत्वादितरेषाम्। न च वक्तव्यं धर्ममूलोऽर्थोऽर्थमूलो धर्म इति अविशेष इति। यतोऽर्थमन्तरेणापि जपतपस्तीर्थयात्रादिना धर्मनिष्पत्तिः। अर्थलेशोऽपि न धर्ममन्तरेणेति। एवं काममोक्षावपीति॥ १॥

**मिथिलास्थः स योगीन्द्रः क्षणं ध्यात्वाऽब्रवीन्मुनीन्।**
**यस्मिन्देशे मृगः कृष्णस्तस्मिन्धर्मान्निबोधत॥ २॥**

१० एवं पृष्टः **मिथिला** नाम नगरी तत्र स्थितः **स याज्ञवल्क्यो** योगीश्वरः **क्षणं ध्यात्वा** कश्चित्कालं मनः समाधाय 'एते श्रवणाधिकारिणो विनयेन पृच्छन्तीति युक्तमेतेभ्यो वक्तुमि' त्युक्त्वा**न्मुनीन्।** किं? 'यस्मिन्देशे मृगः कृष्णस्तस्मिन्धर्मान्निबोधतेति'। कृष्णसारो मृगो यस्मिन्देशे स्वच्छन्दं विहरति तस्मिन्देशे वक्ष्यमाणलक्षणा धर्मा अनुष्ठेया नान्यत्रेत्यभिप्रायः॥ २॥

'शौचाचारांश्च शिक्षयेदि' त्याचार्यस्य धर्मशास्त्राध्यापनविधिः शिष्येण तदध्ययनं
१५ कर्तव्यमिति कुतोऽवगम्यत इत्यत आह

**पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।**
**वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥ ३॥**

**पुराणं** ब्राह्मादि। **न्याय**स्तर्कविद्या। **मीमांसा** वेदवाक्यविचारः। **धर्मशास्त्रं** मानवादि। **अङ्गानि** व्याकरणादीनि षट्। एतैरुपेताश्चत्वारो **वेदाः। विद्याः** पुरुषार्थसाधनज्ञानानि। तासां **स्थानानि च चतुर्दश। धर्मस्य च** चतुर्दश **स्थानानि** हेतवः।

धर्मस्य चतुर्दश स्थानानि।

२० एतानि च त्रैवर्णिकैरध्येतव्यानि। तदन्तर्भूतत्वाद्धर्मशास्त्रमप्यध्येतव्यम्। तत्रैतानि ब्राह्मणेन विद्याप्राप्तये धर्मानुष्ठानाय चाधिगन्तव्यानि। क्षत्रियवैश्याभ्यां धर्मानुष्ठानाय। तथा च **शङ्खेन** विद्यास्थानान्यनुक्रम्योक्तम्। 'एतानि ब्राह्मणोऽधिकुरुते स च वृत्तिं दर्शयतीतरेषामिति'[1]। **मनु**रपि (अ. २ श्लो. १६)। द्विजातीनां धर्मशास्त्राध्ययनेऽधिकारो ब्राह्मणस्य प्रवचने २५ नान्यस्येति दर्शयति। 'निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः। तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयो नान्यस्य कस्यचित्। विदुषा ब्राह्मणेनेदमध्येतव्यं प्रयत्नतः। शिष्येभ्यश्च प्रवक्तव्यं सम्यङ्नान्येन केनचिदिति' (अ. १. श्लो. १०३)॥ ३॥

अस्तु धर्मशास्त्रमध्येतव्यं; याज्ञवल्क्यप्रणीतस्यास्य शास्त्रस्य किमायातमित्यत आह

**मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः।**
३० **यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती॥ ४॥**
**पराशरव्यासशङ्खलिखिता दक्षगौतमौ।**
**शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः॥ ५॥**

१ गौतमीयधर्मशास्त्रे अ. २. सू. १.

उशनःशब्दपर्यन्तो द्वन्द्वैकवद्भावः । **याज्ञवल्क्य**प्रणीतामिदं धर्मशास्त्रमध्येतव्यमित्यभिप्रायः । नेयं परिसंख्या किंतु प्रदर्शनार्थमेतत् । अतो **बौधायना**देरपि धर्मशास्त्रत्वमविरुद्धम् । एतेषां प्रत्येकं प्रामाण्येऽपि साकाङ्क्षाणामाकाङ्क्षापरिपूरणमन्यतः क्रियते । विरोधे तु विकल्पः ॥ ४ ॥ ५ ॥

इदानीं धर्मस्य कारकहेतूनाह

**देशे काल उपायेन द्रव्यं श्रद्धासमन्वितम् ।**
**पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम् ॥ ६ ॥**

**देशो** 'यस्मिन्देशे मृगः कृष्ण' इत्युक्तलक्षणः । **कालः** संक्रान्त्यादिः । **उपायः** शास्त्रोक्तेतिकर्तव्यताकलापः । **द्रव्यं** प्रतिग्रहादिलब्धं गवादि । **श्रद्धा** आस्तिक्यबुद्धिः । तदन्वितं यथा भवति तथा । **पात्रं** 'न विद्ययेत्येवमादि' वक्ष्यमाणलक्षणम् । **प्रदीयते** । यथा न प्रत्यावर्तते तथा परस्वत्वापत्त्यावसानं त्यज्यते । एतद्धर्मस्योत्पादकम् । किमेतावदेव नेत्याह सकलमिति । अन्यदपि शास्त्रोक्तं जातिगुणयागहोमादि **तत्सकलं** धर्मस्य कारकं जातिगुणद्रव्यक्रियाभावार्थात्मकं चतुर्विधं धर्मस्य कारकमित्युक्तं भवति । तच्च समस्तं व्यस्तं वा यथाशास्त्रं द्रष्टव्यम् । श्रद्धा सर्वत्रानुवर्तत एव ॥ ६ ॥

इदानीं धर्मस्य ज्ञापकहेतूनाह

**श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।**
**सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम् ॥ ७ ॥**

**श्रुति**र्वेदः **स्मृति**र्धर्मशास्त्रम् । तथा च **मनुः** । (अ. २ श्लो. १०) 'श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिरिति' । **सदाचारः** सतां शिष्टानामाचारः अनुष्ठानं, नाशिष्टानाम् । **स्वस्य चात्मनः प्रियं** वैकल्पिके विषये यथा 'गर्भाष्टमेऽष्टमे वाब्दे' इत्यादिष्वात्मेच्छैव नियामिका । **सम्यक्संकल्पाज्जातः** शास्त्राविरुद्धः **कामः** । यथा 'मया भोजनव्यतिरेकेणोदकं न पातव्यमिति' । एते **धर्मस्य मूलं** प्रमाणम् । एतेषां विरोधे पूर्वपूर्वस्य बलीयस्त्वम् ॥ ७ ॥

देशादिकारक हेतूनामपवादमाह

**इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् ।**
**अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥ ८ ॥**

**इज्यादीनां कर्मणां** अयमेव परमो धर्मः **यद्योगेन** बाह्यचित्तवृत्तिनिरोधेना**त्मनो दर्शनं** याथातथ्यज्ञानम् । योगेनात्मज्ञाने देशादिनियमो नास्तीत्यर्थः । तदुक्तम् । 'यत्रैकाग्रता तत्राविशेषादिति' ॥ ८ ॥

कारकहेतुषु ज्ञापकहेतुषु वा संदेहे निर्णयहेतुमाह

**चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा ।**
**सा ब्रूते यं स धर्मः स्यादेको वाऽध्यात्मवित्तमः ॥ ९ ॥**

१ प्रवर्तका इति पाठान्तरम् । २ अस्मिन्नेवाध्याये दानप्रकरणे २०० श्लोके । ३ ब्रह्मचारिप्र० १४ श्लो. । ४ यो. पा. १. सू. २. । ५ पातञ्जलीये ।

**चत्वारो** ब्राह्मणाः **वेदशास्त्रधर्मज्ञाः पर्षत्** । तिस्रो विद्या अधीयन्त इति त्रैविद्याः तेषां समूहस्**त्रैविद्यं** धर्मशास्त्रज्ञत्वमत्राप्यनुवर्तते तद्वा पर्षत् । **सा** पूर्वोक्ता पर्षत् **यं ब्रूते स धर्मः** । अध्यात्मज्ञानेषु निपुणतमो वेदधर्मशास्त्रज्ञश्च **एकोऽपि वा** यं ब्रूते सोऽपि धर्मः ॥ ९ ॥

इत्युपोद्धातप्रकरणम् ।

## अथ ब्रह्मचारप्रकरणम् २

एतैर्नवभिः श्लोकैः सकलशास्त्रोपोद्धातमुक्त्वा इदानीं वर्णादीनां धर्मान्वक्तुं प्रथमं तावद्वर्णानाह

**ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः ।**
**निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ॥ १० ॥**

**ब्राह्मणक्षत्रियवैश्यशूद्रा**श्चत्वारो वर्णा वक्ष्यमाणलक्षणास्तेषा**माद्यास्त्रयो** ब्राह्मणक्षत्रियवैश्या **द्विजाः** । द्विर्जायन्त इति द्विजाः । **तेषां** द्विजानां **वै** एव न शूद्रस्य । **निषेकाद्याः** निषेको गर्भाधानमाद्यो यासां तास्तथोक्ताः । श्मशानं पितृवनं तत्संबन्धि कर्म अन्तो यासां ताः क्रियाः मन्त्रैर्भवन्ति ॥ १० ॥

इदानीं ताः क्रिया अनुक्रामति

**गर्भाधानमृतौ पुंसः सवनं स्यन्दनात्पुरा ।**
**षष्ठेऽष्टमे वा सीमन्तो मास्येते जातकर्म च ॥ ११ ॥**
**अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः ।**
**षष्ठेऽन्नप्राशनं मासि चूडा कार्या यथाकुलम् ॥ १२ ॥**

**गर्भाधान**मित्यनुगतार्थं कर्मनामधेयं एवं वक्ष्यमाणान्यपि । तद्गर्भाधानमृतौ ऋतुकाले वक्ष्यमाण-लक्षणे । पुंसवनाख्यं कर्म गर्भचलनात्पूर्वम् । **षष्ठेऽष्टमे वा मासि** सीमन्तोन्नयनम् । एते च द्वे पुंसव-नसीमन्तोन्नयने क्षेत्रसंस्कारकर्मत्वात्सकृदेव कार्ये न प्रतिगर्भम् । यथाह **देवलः** । 'सकृत्सुसंस्कृता नारी सर्वगर्भेषु संस्कृतेति' । **एते** आ इते आगते गर्भकोशात्कुमारे जाते **जातकर्म** । **एकादशेऽहनि नाम**करणं । तच्च पितामहमातामहादिसंबद्धं कुलदेवतासंबद्धं वा । यथाह **शङ्खः** । 'कुलदेवतासंबद्धं पिता नाम कुर्यादिति' । **चतुर्थे मासि निष्क्र**मलक्षणं कर्म सूर्यावेक्षणं कर्म । **षष्ठे मास्यन्नप्राशनं** कर्म । **चूडा**करणं तु **यथाकुलं** कार्यमिति प्रत्येकं संबध्यते ॥ ११ ॥ १२ ॥

एतेषां नित्यत्वेऽप्यानुषंगिकं फलमाह

**एवमेनः शमं याति बीजगर्भसमुद्भवम् ।**
**तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः ॥ १३ ॥**

एवमुक्तेन प्रकारेण गर्भाधानादिभिः संस्कारकर्मभिः **कृतैरेनः** पापं **शमं याति** । किंभूतं? **बीजगर्भसमुद्भवं** शुक्रशोणितसंबद्धं गात्रव्याधिसंक्रान्तिनिमित्तं न तु पतितोत्पन्नत्वादि । स्त्रीणां विशेषमाह । **एता** जातकर्मादिक्रियाः **स्त्रीणां** तूष्णीं विनैव मन्त्रैर्यथाकालं **कार्याः** । **विवाहः** पुनः **समन्त्रकः** ॥ १३ ॥

**गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम् ।**
**राज्ञामेकादशे सैके विशामेके यथाकुलम् ॥ १४ ॥**

गर्भाधानमवधिं कृत्वा जन्मनो वाऽष्टमे वर्षे **ब्राह्मणस्योपनयनं** । उपनयनमेवोपनायनं । स्वार्थे अण् । वृत्तानुसारात् । आर्षं वा दीर्घत्वं । अत्रेच्छया विकल्पः । **राज्ञामेकादशे** । वैश्यस्य **सैके** एकादशे । द्वादश इत्यर्थः । गर्भग्रहणं सर्वत्रानुवर्तते । समासे गुणभूतस्यापि गर्भशब्दस्य बुद्ध्या विभज्योभयत्राप्यनुवर्तनं कार्यम् । 'गर्भादेकादशे राज्ञो गर्भाद्धि द्वादशे विश ' इति **स्मृत्यन्तर**वचनात् । यथा अथ शब्दानुशासनं केषां शब्दानां लौकिकानां वैदिकानामिति । अत्रापि कार्यमित्यनुवर्तते । कुलस्थित्या केचिदुपनयनमिच्छन्ति ॥ १४ ॥

उपनयनकालः ।

**उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् ।**
**वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ॥ १५ ॥**

स्वगृह्योक्तविधिना **उपनीय शिष्यं गुरुः महाव्याहृतिपूर्वकं वेदमध्यापयेत्** । महाव्याहृतयश्च भूरादिसत्यान्ताः सप्त । पञ्च वा **गौतमा**भिप्रायेण । किं च **शौचाचारांश्च** वक्ष्यमाणलक्षणान् **शिक्षयेत्** । उपनीय शौचाचारांश्च शिक्षयेदित्यनेन प्रागुपनयनात्कामचारो दर्शितः । वर्णधर्मान्वर्जयित्वा स्त्रीणामप्येतत्समानं विवाहादर्वाक् उपनयनस्थानीयत्वाद्विवाहस्य ॥ १५ ॥

गुरुधर्माः ।

शौचाचारानाह

**दिवा संध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ।**
**कुर्यान्मूत्रपुरीषे च रात्रौ चेद्दक्षिणामुखः ॥ १६ ॥**

कर्णस्थं ब्रह्मसूत्रं यस्य तथोक्तः । कर्णश्च दक्षिणः । 'पवित्रं दक्षिणे कर्णे कृत्वा विण्मूत्रमुत्सृजेदिति ' **लिङ्गात्** । असावहनि संध्ययोश्च **उदङ्मुखो मूत्रपुरीषे कुर्यात्** । चकाराद्भस्मादिरहिते देशे । **रात्रौ** तु **दक्षिणामुखः** ॥ १६ ॥

**गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ।**
**गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥ १७ ॥**

किंच अनन्तरं शिश्नं गृहीत्वा उत्थाय उद्धृताभिरद्भिर्वक्ष्यमाणलक्षणाभिर्मृद्भिश्च गन्धलेपयोः क्षयकरं शौचं कुर्यात् । **अतन्द्रितः** अनलसः । ' उद्धृताभिरिति ' जलान्तः शौचनिषेधः । अत्र 'गन्धलेपक्षयकरमिति ' सर्वाश्रमिणां साधारणं शौचमिदम् । मृत्संख्यानियमस्त्वदृष्टार्थः ॥ १७ ॥

१ मनुस्मृतौ अ. १ श्लो. १६. २ गौतमधर्मसू. १२–१.

**अन्तर्जानुः शुचौ देश उपविष्ट उदङ्मुखः ।**
**प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥ १८ ॥**

**शुचौ** अशुचिद्रव्यासंस्पृष्टे । **देश** इत्युपादानादुपानच्छयनासनादिनिषेधः । **उपविष्टः** न स्थितः न शयानः प्रह्वो गच्छन्वा । **उदङ्मुखः प्राङ्मुखो** वेति दिगन्तरनिवृत्तिः । 'शुचौ देश' इत्येतस्मा-
५ त्पादक्षालनप्राप्तिः । **ब्राह्मेण तीर्थेन** वक्ष्यमाणलक्षणेन । **द्विजो** न शूद्रादिः । **नित्यं** सर्वकालम् । आश्र-
मान्तरगतोऽप्युपस्पृशेत् आचामेत् । कथमन्तर्जानुः जानुनोर्मध्ये हस्तौ कृत्वा दक्षिणेन
हस्तेनेति ॥ १८ ॥

**कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ।**
**प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥ १९ ॥**

तीर्थान्याह ।
१० कनिष्ठायास्तर्जन्या अङ्गुष्ठस्य मूलानि करस्याग्रं च प्रजापतिपितृब्रह्मदेवतीर्थानि यथाक्रम वेदितव्यानि ॥ १९ ॥

**त्रिः प्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत् ।**
**अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ॥ २० ॥**

आचमनम् ।
वारत्रयमपः पीत्वा मुखमङ्गुष्ठमूलेन **द्विरुन्मृज्य खानि** छिद्राणि ऊर्ध्वकायगतानि घ्राणादीनि
१५ **अद्भिरुपस्पृशेत्** अद्भिर्द्रव्यान्तरासंसृष्टाभिः । पुनरद्भिरित्यब्ग्रहणं प्रतिच्छिद्र-
मुदकस्पर्शनार्थम् । पुनस्ता एव विशिनष्टि । **प्रकृतिस्थाभिः** गन्धरूपरसस्पर्शा-
न्तरमप्राप्ताभिः । फेनबुद्बुदरहिताभिः । तुशब्दाद्वर्षधारागतानां शूद्रावर्जितानां च निषेधः ॥ २० ॥

**हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः ।**
**शुद्ध्येरन्स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ॥ २१ ॥**

२० **हृत्कण्ठतालुगाभिरद्भिर्यथाक्रमेण द्विजातयः** शुद्ध्यन्ति । **स्त्री च शूद्रश्च अन्ततः**
अन्तेन तालुना स्पृष्टाभिरपि । सकृदिति वैश्याद्विशेषः । चशब्दादनुपनीतोऽपि ॥ २१ ॥

**स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः ।**
**सूर्यस्य चाप्युपस्थानं गायत्र्याः प्रत्यहं जपः ॥ २२ ॥**

प्रातःस्नानं यथाशास्त्रम**ब्दैवतैर्मन्त्रैः** 'आपोहिष्ठेत्येवमादिभिः' मार्जनम् । **प्राणसंयमः** प्राणा-
२५ यामः वक्ष्यमाणलक्षणः । ततः **सूर्यस्य चाप्युपस्थानं** सौरेण मन्त्रेण । **गायत्र्या** 'स्तत्सवितुर्व-
रेण्यमि' त्यादेः प्रतिदिवसं **जपः** कार्यः । कार्यशब्दो यथालिङ्गं प्रत्येकमभिसंबध्यते ॥ २२ ॥

**गायत्रीं शिरसा सार्धं जपेद्व्याहृतिपूर्विकाम् ।**
**प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः ॥ २३ ॥**

---

१ १९ श्लोके. २ अग्रे २३ श्लोके.

**गायत्रीं** पूर्वोक्तां 'आपोज्योतिरि'त्यादिना **शिरसा** संयुक्तां उक्तव्याहृतिपूर्विकां प्रतिव्याहृतिप्रणवेन संयुक्तां 'ॐभूः ॐभुवः ॐस्वरिति' त्रीन् वारान् मुखनासिकासंचारिवायुं निरुन्धन्मनसा जपेदित्ययं सर्वत्र प्राणायामः ॥ २३ ॥

प्राणायामः ।

**प्राणानायम्य संप्रोक्ष्य त्र्यृचेनाब्दैवतेन तु ।**
**जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् ॥ २४ ॥** ५
**संध्यां प्राक्प्रातरेवं हि तिष्ठेदासूर्यदर्शनात् ।**

प्राणायामं पूर्वोक्तं कृत्वा **त्र्यृचेनाब्दैवतेन** पूर्वोक्तेनात्मानमद्भिः प्रोक्ष्य **सावित्रीं** जपन्**प्रत्य**क्संध्या**मासीत** अर्थात्प्रत्यङ्मुख इति लभ्यते । **आतारकोदयात्** तारकोदयावधि **प्राक्संध्यां** प्रातःसमये । एवं पूर्वोक्तविधिमाचरन् प्राङ्मुखः **सूर्यो**दयावधि तिष्ठेत् । अहोरात्रयोः संधौ या क्रिया विधीयते सा **संध्या** । तत्र अहः संपूर्णादित्यमण्डलदर्शनयोग्यः **कालः** । तद्विपरीता **रात्रिः** । यस्मिन्काले खण्डमण्डलस्योपलब्धिः स **संधिः** ॥ २४ ॥ १०

सावित्रीजपः ।

**अग्निकार्यं ततः कुर्यात्संध्ययोरुभयोरपि ॥ २५ ॥**

**ततः** संध्योपासनानन्तरं द्वयोः संध्ययो**रग्निकार्यं** अग्नौ कार्यं समित्प्रक्षेपादि यत्तत्**कुर्यात्** स्वगृह्योक्तेन विधिना ॥ २५ ॥

**ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुवन् ।** १५

तदनन्तरं **वृद्धान्**गुरुप्रभृतीन**भिवादयेत्**। कथं ? **असौ** देवदत्तशर्मा**हमिति** स्वनाम कीर्तयन् ।

**गुरुं चैवाप्युपासीत स्वाध्यायार्थं समाहितः ॥ २६ ॥**
**आहूतश्चाप्यधीयीत लब्धं तस्मै निवेदयेत् ।**
**हितं तस्याचरेन्नित्यं मनोवाक्कायकर्मभिः ॥ २७ ॥**

तथा **गुरुं** वक्ष्यमाणलक्षण**मुपासीत** तत्परिचर्यापरस्तदधीनस्तिष्ठेत् । **स्वाध्यायार्थ**मध्ययनसिद्धये **समाहितो**ऽविक्षिप्तचित्तो भवेत् । **आहूतश्चाप्यधीयीत** गुर्वाहूत एवाधीयीत न स्वयं गुरुं प्रेरयेत् । यच्च **लब्धं** तत्सर्वं गुरवे **निवेदयेत्** । तथा **तस्य** गुरो**र्हितमाचरेत्**। **नित्यं** सदा **मनोवाक्कायकर्मभिः** । न प्रतिकूलं कुर्यात् । अपिशब्दाद्गुरुदर्शने **गौतमोक्तं**[1] कण्ठप्रावृतादि वर्जयेत् ॥ २६ ॥ २७ ॥ २०

अध्याप्यानाह २५

**कृतज्ञाद्रोहिमेधाविशुचिकल्यानसूयकाः ।**
**अध्याप्या धर्मतः साधुशक्ताप्तज्ञानवित्तदाः ॥ २८ ॥**

१ अ. २-१४-१९.

कृतमुपकारं न विस्मरतीति **कृतज्ञः** । **अद्रोही** दयावान् । **मेधावी** ग्रन्थग्रहणधारणशक्तः । **शुचिः** बाह्याभ्यन्तरशौचवान् । **कल्पः** आधिव्याधिरहितः । **अनसूयको** दोषानाविष्करणेन गुणाविष्करणशीलः । **साधुः** वृत्तवान् । **शक्तः** शुश्रूषायाम् । **आप्तो** बन्धुः । **ज्ञानदः** विद्याप्रदः । **वित्तदः** अर्पणपूर्वकमर्थप्रदाता । एते गुणाः समस्ता व्यस्ताश्च यथासंभवं द्रष्टव्याः । एते च **धर्मतः** ५ **शास्त्रानुसारेणाध्याप्याः** ॥ २८ ॥

**दण्डाजिनोपवीतानि मेखलां चैव धारयेत् ।**
**ब्राह्मणेषु चरेद्भैक्षमनिन्द्येष्वात्मवृत्तये ॥ २९ ॥**
**आदिमध्यावसानेषु भवच्छब्दोपलक्षिता ।**
**ब्राह्मणक्षत्रियविशां भैक्षचर्या यथाक्रमम् ॥ ३० ॥**

तथा स्मृत्यन्तरप्रसिद्धं पालाशादिदण्डं अजिनं च कार्ष्णाजिनादि उपवीतं कार्पासादिनिर्मितं मेखलां च मुञ्जादिनिर्मितां ब्राह्मणादिर्ब्रह्मचारी धारयेत् ।

दण्डादिधारणम् ।

पूर्वोक्तदण्डादियुक्तो ब्रह्मचारी **ब्राह्मणेष्वनिन्द्येषु** अभिशस्तादिदोषरहितेषु स्वकर्मनिरतेषु **भैक्षं चरेत्** । **आत्मवृत्तये** आत्मनो जीवनाय न परार्थं आचार्यतद्भार्यापुत्रव्यतिरेकेण । "निवेद्य गुरवे तदनुज्ञातो भुञ्जीत । तदभावे तत्पुत्रादाविति" नियमात् १५ अत्र च ब्राह्मणग्रहणं संभवे सति न नियमार्थम् । यत्तु सार्ववर्णिकं भैक्षाचरणमिति तत् त्रैवर्णिकप्राप्त्यर्थम् । यच्च चातुर्वर्ण्यं चरेद्भैक्षमिति तदापद्विषयम् । कथं भैक्षचर्या कार्या ? **आदिमध्यावसानेषु भवच्छब्दोपलक्षिता** । भवति भिक्षां देहि । भिक्षां भवति देहि । भिक्षां देहि भवति । इत्येवं वर्णक्रमेण भैक्षचर्या कार्या ॥ २९ ॥ ३० ॥

भैक्षचर्या ।

**कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया ।**
**अपोशनक्रियापूर्वं सत्कृत्यान्नमकुत्सयन् ॥ ३१ ॥**

पूर्वोक्तेन विधिना भिक्षामाहृत्य गुरवे निवेद्य तदनुज्ञया **कृताग्निकार्यो वाग्यतो** मौनी **अन्नं सत्कृत्य** संपूज्य **अकुत्सयन्**अनिन्दन् **अपोशनक्रियापूर्वं** 'अमृतोपस्तरणमसी' त्यादिकं पूर्वं कृत्वा **भुञ्जीत** । अत्र पुनरग्निकार्यग्रहणं संध्याकाले कथंचिदकृताग्निकार्यस्य कालान्तरविधानार्थं न पुनस्तृतीयप्राप्त्यर्थम् ॥ ३१ ॥

भोजनादि ।

२५ **ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि ।**
**ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन् ॥ ३२ ॥**

**ब्रह्मचर्ये स्थितः** एकान्नं नाद्यादनापदि व्याध्याद्यभावे । **ब्राह्मणः** पुनः श्राद्धेऽभ्यर्थितः सन् **काममश्नीयात्** । **व्रतमपीडयन्** मधुमांसपरिहारेण । अत्र ब्राह्मणग्रहणं क्षत्रियादेः श्राद्धभोजनव्युदासार्थम् । 'राजन्यवैश्ययोश्चैव नैतत्कर्म प्रचक्षते' इति स्मरणात् (**मनुस्मृ**. अ. २ श्लो. १९०) ॥३२॥

गौतम सू. २-४५-४६. २ क—भैक्ष्यमिति.

**मधुमांसाञ्जनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम्।**
**भास्करालोकनाश्लीलपरिवादादि वर्जयेत् ॥ ३३ ॥**

**मधु** क्षौद्रं न मद्यं तस्य 'नित्यं ब्राह्मणो मद्यं वर्जयेदिति' निषेधात्। **मांसं** छागादेरपि। **अञ्जनं** घृतादिना गात्रस्य कज्जलादिना चाक्ष्णोः। **उच्छिष्टं** गुरोः। **शुक्तं** निष्ठुरवाक्यं नान्नरसः तस्याभक्ष्यप्रकरणे निषेधात्। **स्त्रियमुपभोगे। प्राणिहिंसनं** जीववधः। **भास्कर**स्योदयास्तमयाव**लोकनम्**। **अश्लील**मसत्यभाषणम्। **परिवादः** सदसद्रूपस्य परदोषस्य ख्यापनम्। **आदि**शब्दात्स्मृत्यन्तरोक्तं गन्धमाल्यादि गृह्यते एतानि ब्रह्मचारी **वर्जयेत्** ॥ ३३ ॥

मधुमांसादिवर्जनम्।

**स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति।**
**उपनीय ददद्वेदमाचार्यः स उदाहृतः ॥ ३४ ॥**

योऽसौ गर्भाधानाद्या उपनयनान्ताः क्रिया यथाविधि कृत्वा **वेदमस्मै** ब्रह्मचारिणे **प्रयच्छति स गुरुः**। यः पुनरुपनयनमात्रं कृत्वा वेदं ददाति स **आचार्यः** ॥ ३४ ॥

गुर्वाचार्यलक्षणम्।

**एकदेशमुपाध्याय ऋत्विग्यज्ञकृदुच्यते।**
**एते मान्या यथापूर्वमेभ्यो माता गरीयसी ॥ ३५ ॥**

**वेदस्यैकदेशं** मन्त्रब्राह्मणयोरेकं अङ्गानि वा योऽध्यापयति स **उपाध्यायः**। यः पुनः १५ पाकयज्ञादिकं वृतः करोति स **ऋत्विक्**। **एते** च गुर्वाचार्योपाध्यायर्त्विजो **यथापूर्वं** यथाक्रमेण **मान्याः** पूज्याः। **एभ्यः** सर्वेभ्यो **माता गरीयसी** पूज्यतमा ॥ ३५ ॥

उपाध्यायर्त्विग्लक्षणम्।

वेदग्रहणार्थं ब्रह्मचर्यावधिमाह

**प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा।**
**ग्रहणान्तिकमित्येके केशान्तश्चैव षोडशे ॥ ३६ ॥**

यदा विवाहासंभवेन वेदानधीत्य वेदौ वा वेदं वेति प्रवर्तते तदा **प्रतिवेदं** वेदंवेदं प्रति **ब्रह्मचर्यं** पूर्वोक्तं द्वादशवर्षाणि कार्यम्। अशक्तौ **पञ्च**। ग्रहणान्तिकमित्येके वर्णयन्ति। **केशान्तः** पुनः गोदानाख्यं कर्म गर्भादारभ्य षोडशे वर्षे ब्राह्मणस्य कार्यम्। एतच्च द्वादशवार्षिके वेदव्रते बोद्धव्यं। उत्तरस्मिन्पक्षे यथासंभवं द्रष्टव्यम्। राजन्यवैश्ययोस्तूपनयनकालवत् द्वाविंशे चतुर्विंशे वा यथासंभवं द्रष्टव्यम् ॥ ३६ ॥

**आषोडशादाद्वाविंशाच्चतुर्विंशाच्च वत्सरात्।**
**ब्रह्मक्षत्रविशां काल औपनायनिकः परः ॥ ३७ ॥**
**अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः।**
**सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥ ३८ ॥**

आषोडशाद्वर्षात्षोडशवर्षं यावत् आद्वाविंशादाचतुर्विंशाद्वर्षाद्ब्राह्मणक्षत्रियविशां **औपनायनिकः** उपनयनसंबन्धी **परः कालः** । नातःपरमुपनयनकालोऽस्ति, किंतु **अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः** । सर्वधर्मेष्वनधिकारिणो भवन्ति । **सावित्रीपतिताः** पतितसावित्रीका भवन्ति । सावित्रीदानयोग्या न भवन्ति । **व्रात्याः** संस्काररहीनाश्च व्रात्यस्तोमात्क्रतोर्विना । कृते तु तस्मिन् उपनयनाधिकारिणो भवन्ति ॥३७॥३८॥

उपनयनकालस्य परमावधिमाह ।

'आद्यास्त्रयो द्विजा' इत्युक्तं तत्र हेतुमाह

**मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जीबन्धनात् ।**
**ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः ॥ ३९ ॥**

मातुः सकाशात्प्रथमं **जायन्ते, मौञ्जीबन्धनात् द्वितीयं** जन्म यस्मात्**तस्मादेते ब्राह्मणक्षत्रियवैश्या द्विजा** उच्यन्ते ॥ ३९ ॥

वेदग्रहणाध्ययनफलमाह

**यज्ञानां तपसां चैव शुभानां चैव कर्मणाम् ।**
**वेद एव द्विजातीनां निःश्रेयसकरः परः ॥ ४० ॥**

**यज्ञानां** श्रौतस्मार्तानां **तपसां** कायसन्तापरूपाणां चान्द्रायणादीनां **शुभानां च कर्मणां** उपनयनादिसंस्काराणां अवबोधकत्वेन **वेद एव द्विजातीनां परो निःश्रेयसकरः** मोक्षकरो नान्यः । '**वेद एवेति**' तन्मूलत्वेन स्मृतेरप्युपलक्षणार्थः ॥ ४० ॥

ग्रहणाध्ययनफलमुक्त्वेदानीं काम्यब्रह्मयज्ञाध्ययनफलमाह

**मधुना पयसा चैव स देवांस्तर्पयेद्द्विजः ।**
**पितॄन्मधुघृताभ्यां च ऋचोऽधीते च योऽन्वहम् ॥ ४१ ॥**
**यजूंषि शक्तितोऽधीते योऽन्वहं स घृतामृतैः ।**
**प्रीणाति देवानाज्येन मधुना च पितॄंस्तथा ॥ ४२ ॥**
**स तु सोमघृतैर्देवांस्तर्पयेद्योऽन्वहं पठेत् ।**
**सामानि तृप्तिं कुर्याच्च पितॄणां मधुसर्पिषा ॥ ४३ ॥**

**योऽन्वहं ऋचोऽधीते** स मधुना पयसा च देवान् पितॄंश्च मधुघृताभ्यां तर्पयति । यः पुनः शक्तितोऽन्वहं यजूंष्यधीते स घृतामृतैर्देवान्पितॄंश्च मधुघृताभ्यां तर्पयति । यस्तु सामान्यन्वहमधीते स सोमघृतैर्देवान् पितॄंश्च मधुसर्पिर्भ्यां प्रीणाति । ऋगादिग्रहणं सामान्येन ऋगादिमन्त्रप्राप्त्यर्थम् ॥ ४१ ॥ ४२ ॥ ४३ ॥

काम्यब्रह्मयज्ञाध्ययनफलम् ।

**मदसा तर्पयेद्देवानथर्वाङ्गिरसः पठन् ।**
**पितॄंश्च मधुसर्पिर्भ्यामन्वहं शक्तितो द्विजः ॥ ४४ ॥**

**वाकोवाक्यं पुराणं च नाराशंसीश्च गाथिकाः ।**
**इतिहासांस्तथा विद्याः शक्त्याधीते हि योऽन्वहम् ॥ ४५ ॥**
**मांसक्षीरौदनमधुतर्पणं स दिवौकसाम् ।**
**करोति तृप्तिं कुर्याच्च पितृणां मधुसर्पिषा ॥ ४६ ॥**

यः पुनः **शक्तितोऽन्वहं अथर्वाङ्गिरसोऽधीते** स देवान्मेदसा पितॄंश्च मधुसर्पिर्भ्यां तर्पयति । यस्तु **वाकोवाक्यं** प्रश्नोत्तररूपवेदवाक्यं । **पुराणं** ब्राह्मादि । चकारान्मानवादिधर्मशास्त्रम् । **नाराशंसीश्च** रुद्रदैवत्यान्मन्त्रान् । **गाथाश्च** यज्ञगाथा इन्द्रगाथाद्याः । **इतिहासान्महाभारतादीन्** । **विद्याश्च** वारुणाद्या विद्याः । **शक्तितोऽन्वहमधीते** स मांसक्षीरौदनमधुसर्पिर्भिर्देवान् पितॄंश्च मधुसर्पिर्भ्यां तर्पयति ॥ ४४ ॥ ४५ ॥ ४६ ॥

**ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः ।**
**यं यं क्रतुमधीतेऽसौ तस्य तस्याप्नुयात्फलम् ॥ ४७ ॥**
**त्रिर्वित्तपूर्णपृथिवीदानस्य फलमश्नुते ।**
**तपसो यत्परस्येह नित्यं स्वाध्यायवान् द्विजः ॥ ४८ ॥**

अध्ययनप्रशंसा ।

ते पुनस्तृप्ताः सन्तो देवाः पितरश्च एवं स्वाध्यायकारिणं सर्वकामफलैः शुभैरनन्योपघातलक्षणैस्तर्पयन्ति । प्रशंसार्थमाह । यस्य यस्य क्रतोः प्रतिपादकं वेदैकदेशमन्वहमधीते तस्य तस्य क्रतोः फलमाप्नोति । तथा वित्तपूर्णायाः पृथिव्याः त्रिः त्रिवारं **दानस्य** यत्फलं **परस्य तपसश्चान्द्रायणादेर्यत्फलं** तदपि **नित्यं स्वाध्यायवान्** प्राप्नोति । **नित्य**ग्रहणं काम्यस्यापि सतो नित्यत्वज्ञापनार्थम् ॥ ४७ ॥ ४८ ॥

एवं सामान्येन ब्रह्मचारिधर्मानभिधायाधुना नैष्ठिकस्य विशेषमाह

**नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसन्निधौ ।**
**तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा ॥ ४९ ॥**
**अनेन विधिना देहं साधयन्विजितेन्द्रियः ।**
**ब्रह्मलोकमवाप्नोति न चेह जायते पुनः ॥ ५० ॥**

नैष्ठिकब्रह्मचारिविशेषः ।

अनेनोक्तप्रकारेणात्मानं निष्ठां उत्क्रान्तिकालं नयतीति **नैष्ठिकः** । स यावज्जीवमाचार्यसमीपे वसेत् । न वेदग्रहणकालोत्तरं स्वतन्त्रो भवेत् । **तदभावे** तत्पुत्रसमीपे तदभावे तद्भार्यासमीपे तदभावे वैश्वानरेऽपि । **अनेनोक्तविधिना देहं साधयन्** क्षपयन् **विजितेन्द्रियः** इन्द्रियजये विशेषप्रयत्नवान् । ब्रह्मचारी ब्रह्मलोकममृतत्वमाप्नोति । **कदाचिदिह न पुनर्जायते** ॥ ४९ ॥ ५० ॥

इति ब्रह्मचारिप्रकरणम्

# अथ विवाहप्रकरणम् ३

यः पुनर्विवाहस्तस्य विवाहार्थं स्नानमाह

**गुरवे तु वरं दत्वा स्नायीत तदनुज्ञया ।**
**वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥ ५१ ॥**

पूर्वोक्तेन प्रकारेण **वेदं** मन्त्रब्राह्मणात्मकम् । **व्रतानि** ब्रह्मचारिधर्मान् । अनुत्क्रान्तान्वा । **उभयं वा । पारं नीत्वा** समाप्य **गुरवे** पूर्वोक्ताय **वरम**भिलषितं यथाशक्ति **दत्वा** स्नायात् । अशक्तौ तदनुज्ञया अदत्तवरोऽपि । एषां च पक्षाणां शक्तिकालाद्यपेक्षया व्यवस्था ॥ ५१ ॥

स्नानानन्तरं किं कुर्यादत आह

**अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।**
**अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ॥ ५२ ॥**

**अविप्लुतब्रह्मचर्यः** अस्खलितब्रह्मचर्यः । **लक्षण्यां** बाह्याभ्यन्तरलक्षणैर्युक्ताम् । बाह्यानि 'तनुलोमकेशदशनादीनि' **मनु**नोक्तानि ( अ. ३ श्लो. १० ) । आभ्यन्तराणि 'अष्टौ पिण्डान्कृत्वेत्या'**श्वलायनो**क्तविधिना ज्ञातव्यानि । तानि च पूर्वस्यां रात्रौ गोष्ठवल्मीककितवस्थानह्रदेरिणक्षेत्रचतुष्पथश्मशानेभ्यो मृत्तिकां गृहीत्वा पिण्डाष्टकं कर्तव्यम् ।

स्त्रीलक्षणानि च ।

तत्रानुक्रमेण प्रथमे पिण्डे स्पृष्टे धान्यवती भवेत् । द्वितीये स्पृष्टे पशुमती भवेत् । तृतीयेऽग्निहोत्रशुश्रूषणपरा भवति । चतुर्थे विवेकिनी चतुरा सर्वजनार्जनपरा भवति । पञ्चमे रोगिणी । षष्ठे वन्ध्या । सप्तमे व्यभिचारिणी । अष्टमे विधवा भवेदि**त्याश्वलायन**स्मरणात् **स्त्रियं** नपुंसकत्वनिवृत्तये स्त्रीत्वेन परीक्षिताम् । **अनन्यपूर्विकां** दानेनोपभोगेन वा पुरुषान्तरापरिगृहीताम् । **कान्तां** कमनीयां वोढुर्मनोनयनानन्दकारिणीम् । 'यस्यां मनश्चक्षुषोर्निर्बन्धस्तस्यामृद्धिरि'त्या **पस्तम्ब**स्मरणात् । एतच्च न्यूनाधिकाङ्गादिबाह्यदोषाभावे ।

**असपिण्डां** समान एकः पिण्डो देहो यस्याः सा सपिण्डा न सपिण्डा असपिण्डा ताम् । सपिण्डता च एकशरीरावयवान्वयेन भवति । तथाहि पुत्रस्य पितृशरीरावयवान्वयेन पित्रा सह सापिण्ड्यम् । एवं पितामहादिभिरपि पितृद्वारेण तच्छरीरावयवान्वयात् । एवं मातृशरीरावयवान्वयेन मात्रा । तथा मातामहादिभिरपि मातृद्वारेण । तथा मातृष्वसृमातुलादिभिरपि एकशरीरावयवान्वयात् । तथा पितृव्यपितृष्वस्रादिभिरपि । तथा पत्या सह पत्न्या एकशरीरारम्भकतया । एवं भ्रातृभार्याणामपि परस्परमेकशरीरारब्धैः सहैकशरीरारम्भकत्वेन । एवं यत्र यत्र सपिण्डशब्दस्तत्र तत्र साक्षात्परम्परया वा एकशरीरावयवान्वयो वेदितव्यः ।

यद्येवं मातामहादीनामपि ' दशाहं शावमाशौचं सपिण्डेषु विधीयत ' इत्यविशेषेण प्राप्नोति । स्यादेतत् । यदि तत्र 'प्रत्तानामितरे कुर्युरि'त्यादिविशेषवचनं न स्यात् । अतश्च सपिण्डेषु यत्र विशेषवचनं नास्ति ' तत्र दशाहमि ' त्येतद्वचनमवतिष्ठते ।

१ गृह्यसूत्रे १-५-५.

अवश्यं चैकशरीरावयवान्वयेन सापिण्ड्यं वर्णनीयम् । 'आत्मा हि जज्ञे आत्मन' इत्यादिश्रुतेः। तथा 'प्रजामनु प्रजायस' इति च । ' स एवायं विरूढः प्रत्यक्षेणोपलभ्यत ' इत्याद्यापस्तम्बवचनाच्च । सापिण्ड्यनिर्णयः । तथा **गर्भोपनिषदि** । ' एतत् षाट्कौशिकं शरीरं, त्रीणि पितृतस्त्रीणि मातृतः ।अस्थिस्नायुमज्जानः पितृतः त्वङ्मांसरुधिराणि मातृत ' इति । तत्रतत्रावयवान्वयप्रतिपादनात् ।

निर्वाप्यसपिण्डान्वयेन तु सापिण्डे मातृसंताने भ्रातृपुत्रादिषु च सापिण्ड्यं न स्यात् । समुदायशक्त्यङ्गीकारेण रूढिपरिग्रहे अवयवशक्तिस्तत्रतत्रावगम्यमाना परित्यक्ता स्यात् । परम्परयैकशरीरावयवान्वयेन सापिण्ड्ये यथा नातिप्रसंगस्तथा वक्ष्यामः । ५

**यवीयसीं** वयसा प्रमाणतश्च न्यूनामुद्वहेत् परिणयेत् स्वगृह्योक्तविधिना ॥ ५२ ॥

विशेषान्तरमप्याह

## अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् । १०

**अरोगिणीं** अचिकित्सनीयव्याध्यनुपसृष्टाम् । **भ्रातृमतीं** पुत्रिकाकरणशङ्कानिवृत्तये । अनेनापरिभाषिताऽपि पुत्रिका भवतीति गम्यते । **असमानार्षगोत्रजां** ऋषेरिदमार्षं नाम प्रवर इत्यर्थः। **गोत्रं** वंशपरम्पराप्रसिद्धं । **आर्षं** च गोत्रं च आर्षगोत्रे । समाने आर्षगोत्रे यस्य असौ समानार्षगोत्रस्तस्माज्जाता समानार्षगोत्रजा । न समानार्षगोत्रजा ताम् । गोत्रप्रवरौ च पृथक्पृथक्पर्युदासे निमित्तं । तेनासमानगोत्रजां असमानार्षजामित्यर्थः । १५

तथा ' चासमानप्रवरैर्विवाह ' इति **गौतमः** (अ. ४—सू. २)। तथा च ' असपिण्डा च या मातुरसपिण्डा च या पितुरिति' **मनुः**(अ. ३ श्लो. ५) । तथा मातृगोत्रामप्यपरिणेयां केचिदिच्छन्ति। 'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेदिति ' प्रायश्चित्तस्मरणात् ।

अत्र ' चासपिण्डामि ' त्यनेन पितृष्वसृमातृष्वस्रादिदुहितृनिषेधः । तथा ' असगोत्रामि'त्यनेनासपिण्डाया अपि भिन्नसन्तानजायाः समानगोत्राया निषेधः।'असमानप्रवरामि'त्यनेनाप्यसपिण्डाया असगोत्राया अपि समानप्रवराया निषेधः । २०

तथा ' असपिण्डामि ' त्येतत्सार्ववर्णिकम् । सर्वत्र सापिण्ड्यसद्भावात् । ' असमानार्षगोत्रजामि ' त्येतत्त्रैवर्णिकविषयम् । यद्यपि राजन्यविशां प्रातिस्विकगोत्राभावस्तथापि पुरोहितगोत्रप्रवरौ वेदितव्यौ । तथा च ' यजमानस्यार्षेयान् प्रवृणीत ' इत्युक्त्वा ' पौरोहित्यान् राजविशां प्रवृणीते ' इत्याहाश्वलायनः । सपिण्डासु समानगोत्रासु समानप्रवरासु भार्यात्वमेव नोत्पद्यते । रोगिण्यादिषु तु भार्यात्वे उत्पन्नेऽपि दृष्टविरोध एव । २५

'असपिण्डामि' त्यत्रैकशरीरान्वयद्वारेण साक्षात्परम्परया वा सापिण्ड्यमुक्तं; तच्च सर्वत्र सर्वस्य यथाकथंचिदनादौ संसारे भवतीत्यतिप्रसंग इत्यत आह

## पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ॥ ५३ ॥

**मातृतो** मातुः सन्ताने **पञ्चमादूर्ध्वं, पितृतः** पितुः संताने **सप्तमादूर्ध्वं,** सापिण्ड्यं निवर्तत इति शेषः ।

अतश्चायं सपिण्डशब्दोऽवयवशक्त्या सर्वत्र प्रवर्तमानोऽपि निर्मन्थ्य पङ्कजादिशब्दवन्नियतविषय एव।

तथा च पित्रादयः षट् सपिण्डाः, पुत्रादयश्च षट्, आत्मा च सप्तमः सन्तानभेदेऽपि यतः सन्तानभेदस्तमादाय गणयेद्यावत्सप्तम इति सर्वत्र योजनीयम्। तथा च मातरमारभ्य तत्पितृपितामहा-
५ दिगणनायां पञ्चमी पुरुषवर्तिनी मातृतः पञ्चमीत्युपचर्यते। एवं पितरमारभ्य तत्पित्रादिगणनायां सप्तमपुरुषसन्तानवर्तिनी पितृतः सप्तमीति। तथा च, 'भगिन्योर्भगिनीभ्रात्रोर्भ्रातृपुत्रीपितृव्ययोः। विवाहे द्व्यादिभूतत्वाच्छाखाभेदोऽवगण्यते'। यदपि **वसिष्ठेनो**क्तम्। 'पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथेति'। 'त्रीनतीत्य मातृतः पञ्चातीत्य च पितृतः' इति च **पैठीन**सिना, तदप्यर्वाङ्निषेधार्थं न पुनस्तत्प्राप्त्यर्थमिति सर्वस्मृतीनामविरोधः।

१० एतच्च समानजातीये द्रष्टव्यम्। विजातीये तु विशेषः। यथाह **शङ्खः**। 'यद्येकजाता बहवः पृथक्क्षेत्राः पृथक्जनाः। एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्तते त्रिषु'। एकस्मात् ब्राह्मणादेर्जाताः एकजाताः। पृथक्क्षेत्राः भिन्नजातीयासु स्त्रीषु जाताः। पृथक्जनाः समानजातीयासु भिन्नासु स्त्रीषु जाताः ते एकपिण्डाः सपिण्डाः किंतु पृथक्शौचाः। पृथक्शौचमाशौचप्रकरणे वक्ष्यामः। पिण्डस्त्वावर्तते त्रिषु त्रिपुरुषमेव सापिण्ड्यमिति ॥ ५३ ॥

१५ एवं सर्वतः प्राप्तौ सत्यामपवादमाह

**दशपूरुषविख्याताच्छ्रोत्रियाणां महाकुलात्।**
**स्फीतादपि न संचारिरोगदोषसमन्वितात् ॥ ५४ ॥**

पुरुषा एव पूरुषाः दशभिः पुरुषैः मातृतः पञ्चभिः पितृतः पञ्चभिर्विख्यातं यत्कुलं तस्मात्। **श्रोत्रियाणाम**धीतवेदानाम्। अध्ययनमुपलक्षणं श्रुताध्ययनसंपन्नानाम्। महच्च तत्कुलं च महाकुलं
२० पुत्रपौत्रपशुदासीग्रामादिसमृद्धं तस्मात्कन्या आहर्तव्येति नियम्यते। संचारिणो रोगाः कुष्ठापस्मारप्रभृतयः शुक्रशोणितद्वारेणानुप्रविशन्तो दोषाः। पुनः हीनक्रियानिःपुरुषत्वादयो **मनु**नोक्ताः। एतैः समन्वितात् **स्फीतादपि** पूर्वोक्तान्महाकुलादपि नाहर्तव्या ॥ ५४ ॥

एवं कन्याग्रहणनियममुक्त्वा कन्यादाने वरनियममाह

**एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः।**
२५ **यत्नात्परीक्षितः पुंस्त्वे युवा धीमान् जनप्रियः ॥ ५५ ॥**

**एतैरेव** पूर्वोक्तै**र्गुणैर्युक्तो** दोषैश्च वर्जितो **वरो** भवति। तस्यायमपरो विशेषः। **सवर्ण** उत्कृष्टो वा न हीनवर्णः। **श्रोत्रियः** स्वयं च श्रुताध्ययनसंपन्नः। **यत्नात्**प्रयत्नेन पुंस्त्वे **परीक्षितः**। परीक्षोपायश्च **नारदेन** दर्शितः। 'यस्याप्सु प्लवते बीजं ह्रादि मूत्रं च फेनिलम्। पुमान्स्याल्लक्षणैरेतैर्विपरीतैस्तु षण्ढक' इति। **युवा** न वृद्धः। **धीमान्** लौकिकवैदिकव्यवहारेषु निपुणमतिः। **जनप्रियः** स्मितपूर्वमृदुभिभाषणादिभिरनुरक्तजनः ॥ ५५ ॥
३०

रतिपुत्रधर्मार्थत्वेन विवाहस्त्रिविधः । तत्र पुत्रार्थो द्विविधः । नित्यः काम्यश्च । तत्र नित्ये प्रजार्थे 'सवर्णः श्रोत्रियो वर' इत्यनेन सवर्णा मुख्या दर्शिता । इदानीं काम्ये नित्यसंयोगे चानुकल्पो वक्तव्य इत्याह

**यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः ।**
**नैतन्मम मतं यस्मात्तत्रायं जायते स्वयम् ॥ ५६ ॥** ५

**यदुच्यते** 'कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वरा' इत्युपक्रम्य 'ब्राह्मणस्य चतस्रो भार्याः । क्षत्रियस्य तिस्रः वैश्यस्य द्वे' इति 'द्विजातीनां शूद्रावेदनमिति' **नैतद्याज्ञवल्क्यस्य मतं । यस्मादयं** द्विजातिस्**तत्र स्वयं जायते** । 'तज्जाया जाया भवति यदस्यां जायते पुनरिति' **श्रुतेः** । अत्र च तत्रायं जायते स्वयमिति हेतुं वदता नैत्यकपुत्रोत्पादनाय वा प्रवृत्तस्य शूद्रापरिणयननिषेधं कुर्वता नैत्यकपुत्रोत्पादनानुकल्पे काम्ये पुत्रोत्पादने ब्राह्मणस्य क्षत्रियस्य च वैश्याभ्यनुज्ञाता भवति ॥ ५६ ॥ १०

इदानीं रतिकामस्योत्पन्नपुत्रस्य वा विनष्टभार्यस्याश्रमान्तरानधिकारिणो गृहस्थाश्रमावस्थानमात्राभिकाङ्क्षिणः परिणयनक्रममाह

**तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम् ।**
**ब्राह्मणक्षत्रियविशां भार्या स्वा शूद्रजन्मनः ॥ ५७ ॥** १५

वर्णक्रमेण ब्राह्मणस्य **तिस्रः** । क्षत्रियस्य **द्वे** । वैश्य**स्यैका** । शूद्रस्य तु **स्वै**व भार्या भवति । सवर्णा पुनः सर्वेषां मुख्या स्थितैव । पूर्वस्याः पूर्वस्या अभावे उत्तरोत्तरा भवति । अयमेव च क्रमो नैत्यकानुकल्पे काम्ये च पुत्रोत्पादनविधौ । अतश्च यच्छूद्रापुत्रस्य पुत्रमध्ये परिगणनं विभागसंकीर्तनं च यथा 'विप्रान्मूर्धावसिक्तो ही'त्युपक्रम्य 'विन्नास्वेष विधिः स्मृत' इति च तद्रतिकामस्याश्रममात्राभिकांक्षिणो वा नान्तरीयकतयोत्पन्नस्य ॥ ५७ ॥ २०

विवाहानाह

**ब्राह्मो विवाह आहूय दीयते शक्त्यलंकृता ।**
**तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥ ५८ ॥**

स **ब्राह्मा**भिधानो **विवाहः** यस्मिन्नुक्तलक्षणाय वराया**हूय** यथा**शक्त्यलंकृता** कन्या **दीयते** उदकपूर्वकं । तस्यां जातः पुत्रः **उभयतः** पित्रादीन्दश पुत्रादींश्च दश २५ आत्मानं **चैकविंशं पुना**ति सद्वृत्तश्चेत् ॥ ५८ ॥

ब्राह्मविवाहलक्षणम् ।

**यज्ञस्थऋत्विजे दैव आदायार्षस्तु गोद्वयम् ।**
**चतुर्दश प्रथमजः पुनात्युत्तरजश्च षट् ॥ ५९ ॥**

स **दैवो** विवाहः यस्मिन्यज्ञानुष्ठाने वितते ऋत्विजे शक्त्यलंकृता कन्या दीयते । यत्र पुनर्गोमिथुनमादाय कन्या दीयते स **आर्षः** । **प्रथमजो** दैवविवाहजः चतुर्दश पुनाति सप्तावरान् ३० सप्तपरान् । **उत्तरज** आर्षविवाहजः **षट्** पुनाति त्रीन्पूर्वान् त्रीन्परान् ॥ ५९ ॥

दैवार्षविवाहौ ।

**इत्युक्त्वा 'चरतां धर्मं सह' या दीयतेऽर्थिने ।**
**स कायः पावयेत्तज्जः षट् षट् वंश्यान्सहात्मना ॥ ६० ॥**

प्राजापत्यविवाहलक्षणम् ।

'सह धर्मं चरतामिति' परिभाष्य कन्यादानं **प्राजापत्यः** । तज्जः षट् पूर्वान्षट् परान् आत्मना सहेत्येवं त्रयोदश पुनाति ॥ ६० ॥

५

**आसुरो द्रविणादानाद्गान्धर्वः समयान्मिथः ।**
**राक्षसो युद्धहरणात्पैशाचः कन्यकाछलात् ॥ ६१ ॥**

**आसुरः** पुनर्द्रविणादानात् । **गान्धर्वस्तु** परस्परानुरागेण भवति । **राक्षसो** युद्धेनापहरणात् । **पैशाचस्तु** कन्यकाछलात् । छलेन छद्मना स्वापाद्यवस्थास्वपहरणात् ॥ ६१ ॥

आसुरगान्धर्वादिविवाहलक्षणानि ।

१०

सवर्णादिपरिणयने विशेषमाह

**पाणिर्ग्राह्यः सवर्णासु गृह्णीयात्क्षत्रिया शरम् ।**
**वैश्या प्रतोदमादद्याद्वेदने त्वग्रजन्मनः ॥ ६२ ॥**

**सवर्णासु** विवाहे स्वगृह्योक्तेन विधिना **पाणिरेव ग्राह्यः** । **क्षत्रिय**कन्या तु **शरं गृह्णीयात्** । **वैश्या प्रतोदमादद्यादु**त्कृष्टवेदने । शूद्रा पुनर्वसनस्य दशाम् । यथाह **मनुः** (अ. ३ १५ श्लो. ४४ ) । 'वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने' इति ॥ ६२ ॥

कन्यादानृक्रममाह

**पिता पितामहो भ्राता सकुल्यो जननी तथा ।**
**कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥ ६३ ॥**
**अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ ।**
२० **गम्यं त्वभावे दातॄणां कन्या कुर्यात्स्वयं वरम् ॥ ६४ ॥**

एतेषां पित्रादीनां पूर्वपूर्वाभावे परः परः कन्याप्रदः प्रकृतिस्थश्चेत् यद्युन्मादादिदोषवान्न भवति । अतो यस्याधिकारः सोऽ**प्रयच्छन् भ्रूणहत्यामृतावृतावाप्नोति** । एतच्चोक्तलक्षणवरसंभवे वेदितव्यं । यदा पुनर्दातॄणामभावस्तदा **कन्येयं गम्यं** गमनार्हमुक्तलक्षणं **वरं स्वयमेव** वरयेत् ॥ ६३ ॥ ६४ ॥

**सकृत्प्रदीयते कन्या हरंस्तां चोरदण्डभाक् ।**
२५ **दत्तामपि हरेत्पूर्वाच्छ्रेयांश्चेद्वर आव्रजेत् ॥ ६५ ॥**

'**सकृदेव कन्या प्रदीयत**' इति शास्त्रनियमः अतस्तां दत्वा अपहरन् चोरवद्दण्ड्यः । एवं सर्वत्र प्रतिषेधे प्राप्ते अपवादमाह । यदि पूर्वस्माद्वरात् श्रेयान् विद्याभिजनाद्यतिशययुक्तो वर आगच्छति पूर्वस्य च पातकयोगो दुर्वृत्तत्वं वा तदा दत्तामपि हरेत् । एतच्च सप्तमपदात् प्राक् द्रष्टव्यम् ॥ ६५ ॥

कन्याहरणे दण्डः ।

**अनाख्याय ददद्दोषं दण्ड्य उत्तमसाहसम् ।**
**अदुष्टां तु त्यजन्दण्ड्यो दूषयंस्तु मृषा शतम् ॥ ६६ ॥**

यः पुनश्चक्षुर्ग्राह्यं **दोषमनाख्याय** कन्यां प्रयच्छति असावु**त्तमसाहसं** दण्ड्यः । उत्तम-साहसं **वक्ष्यते**[1] । **अदुष्टां** तु प्रतिगृह्य **त्यजन्नु**त्तमसाहसमेव दण्ड्यः । यः पुनर्विवाहात्प्रागेव द्वेषादिना असद्भिः दोषैर्दीर्घरोगादिभिः कन्यां दूषयति स पणानां वक्ष्यमाणलक्षणानां शतं दण्ड्यः ॥६६॥ ५

'अनन्यपूर्विकामि'त्यत्रानन्यपूर्वा परिणेयोक्ता; तत्रान्यपूर्वा कीदृशीत्याह

**अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः ।**
**स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत् ॥ ६७ ॥**

अन्यपूर्वा द्विविधा पुनर्भूः स्वैरिणी चेति । पुनर्भूरपि द्विविधा क्षता चाक्षता च । तत्र क्षता संस्कारात्प्रागेव पुरुषसंबन्धदूषिता । अक्षता पुनः संस्कारदूषिता । या पुनः कौमारे पतिं त्यक्त्वा कामतः सवर्णमाश्रयति सा स्वैरिणीति ॥ ६७ ॥ १०

अन्यपूर्वालक्षणम् ।

एवं सर्वप्रकारेणान्यपूर्वापर्युदासे प्राप्ते विशेषमाह

**अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया ।**
**सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात् ॥ ६८ ॥**
**आगर्भसंभवाद्गच्छेत्पतितस्त्वन्यथा भवेत् ।** १५
**अनेन विधिना जातः क्षेत्रजोऽस्य भवेत्सुतः ॥ ६९ ॥**

**अपुत्रा**मलब्धपुत्रां पित्रादिभिः पुत्रार्थमनु**ज्ञातो देवरो** भर्तुः कनीयान् भ्राता, **सपिण्डो वा** उक्तलक्षणः **सगोत्रो वा** । एतेषां पूर्वस्य पूर्वस्याभावे परः परः **घृताभ्यक्त**सर्वाङ्गः **ऋता**वेव वक्ष्यमाणलक्षणे **इयाद्गच्छेत्** आगर्भोत्पत्तेः । ऊर्ध्वं पुनर्गच्छन् अन्येन वा प्रकारेण पतितो भवति । **अनेन विधिनो**त्पन्नः पूर्वपरिणेतुः क्षेत्रजः पुत्रो भवेत् । २० एतच्च वाग्दत्ताविषयमित्या**चार्याः**[2] । 'यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः । तामनेन विधानेन निजो विन्देत देवर' इति **मनु**स्मरणात् ( अ. ९ श्लो. ६९ ) ॥ ६८ ॥ ६९ ॥

नियोगविधिः ।

व्यभिचारिणीं प्रत्याह

**हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् ।**
**परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम् ॥ ७० ॥** २५

या व्यभिचरति तां **हृताधिकारां** भृत्यभरणाद्यधिकाररहिताम् । **मलिनां** अञ्जनाभ्यञ्जनशुभ्रवस्त्राभरणशून्याम् । **पिण्डमात्रोपजीविनीं** प्राणयात्रामात्रभोजनाम् । धिक्कारादिभिः **परिभूतां**

१ अग्रे याज्ञवल्कीयव्यवहाराध्याये १५५ श्लोकस्यविवृत्तौ 'वधः सर्वस्वहरण' मित्यमित्र. २ अग्रे व्यवहाराध्याये ३४ पृष्ठे पं. १२—२४.

भूतलशायिनीं स्ववेश्मन्येव **वासयेत्** । वैराग्यजननार्थं न पुनः शुद्ध्यर्थम् । 'यत्पुंसः परदारेषु तच्चैनां चारयेद्व्रतमिति' पृथक्प्रायश्चित्तोपदेशात् ॥ ७० ॥

तस्या अल्पप्रायश्चित्तार्थमर्थवादमाह

**सोमः शौचं ददावासां गन्धर्वश्च शुभां गिरम् ।**
**पावकः सर्वमेध्यत्वं मेध्या वै योषितो ह्यतः ॥ ७१ ॥**

परिणयनात्पूर्वं सोमगन्धर्ववह्नयः स्त्रीर्भुक्त्वा यथाक्रमं तासां शौचमधुरवचनसर्वमेध्यत्वानि दत्तवन्तः । तस्मात्स्त्रियः सर्वत्र स्पर्शनालिङ्गनादिषु मेध्याः शुद्धाः स्मृताः ॥ ७१ ॥

न च तस्यास्तर्हि दोषो नास्तीत्याशङ्कनीयमित्याह

**व्यभिचारादृतौ शुद्धिर्गर्भे त्यागो विधीयते ।**
१० **गर्भभर्तृवधादौ च तथा महति पातके ॥ ७२ ॥**

अप्रकाशितान्मनो**व्यभिचारात्** पुरुषान्तरसंभोगसंकल्पात् यदपुण्यं तस्य **ऋतौ** रजोदर्शने **शुद्धिः** । शूद्रकृते तु **गर्भे त्यागः** । 'ब्राह्मणक्षत्रियविशां भार्याः शूद्रेण संगताः । अप्रजाता विशुद्ध्यन्ति प्रायश्चित्तेन नेतरा' इति स्मरणात् । तथा गर्भवधे भर्तृवधे महापातके च ब्रह्महत्यादौ, आदिग्रहणाच्छिष्यादिगमने च त्यागः । 'चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या । पतिघ्नी च १५ विशेषेण जुङ्गितोपगता च या'ति **व्यास**स्मरणात् । जुङ्गितः प्रतिलोमजश्चर्मकारादिः । त्यागश्चोपभोगधर्मकार्ययोः न तु निष्कासनं गृहात्तस्याः । 'निरुन्ध्यादेकवेश्मनीति' नियमात् ॥ ७२ ॥

द्वितीयपरिणयने हेतूनाह

**सुरापी व्याधिता धूर्ता वन्ध्याऽर्थघ्न्यप्रियंवदा ।**
**स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ॥ ७३ ॥**

२० सुरां पिबतीति **सुरापी** शूद्राऽपि । 'पतत्यर्धं शरीरस्य यस्य भार्या सुरां पिबेदिति' सामान्येन प्रतिषेधात् । **व्याधिता** दीर्घरोगग्रस्ता । **धूर्ता** विसंवादिनी । **वन्ध्या** निष्फला । **अर्थघ्नी** अर्थनाशिनी । **अप्रियंवदा** निष्ठुरभाषिणी । **स्त्रीप्रसूः** स्त्रीजननी । **पुरुषद्वेषिणी** सर्वत्राहितकारिणी **अधिवेत्तव्ये**ति प्रत्येकमभिसंबध्यते । अधिवेदनं भार्यान्तरपरिग्रहः ॥ ७३ ॥

**अधिविन्ना तु भर्तव्या महदेनोऽन्यथा भवेत् ।**
२५ **यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्धते ॥ ७४ ॥**

किंच **साऽधिविन्ना** पूर्ववदेव दानमानसत्कारै**र्भर्तव्या** । **अन्यथा**ऽभरणे महदपुण्यं वक्ष्यमाणो दण्डश्च । न च भरणे सति केवलमपुण्यपरिहारः । यतः यत्र दम्पत्योरानुकूल्यं चित्तैक्यं तत्र धर्मार्थकामानां प्रतिदिनमभिवृद्धिः ॥ ७४ ॥

१ अग्रे ७६ श्लोके.

स्त्रियं प्रत्याह

**मृते जीवति वा पत्यौ या नान्यमुपगच्छति ।**
**सेह कीर्तिमवाप्नोति मोदते चोमया सह ॥ ७५ ॥**

भर्तरि **जीवति मृते वा** या चापल्यादन्यं पुरुषं नैवोपगच्छति **सेह** लोके विपुलां **कीर्तिमवाप्नोति । उमया** च **सह** क्रीडति पुण्यप्रभावात् ॥ ७५ ॥ ५

अधिवेदनकारणाभावे अधिवेत्तारं प्रत्याह

**आज्ञासंपादिनीं दक्षां वीरसूं प्रियवादिनीम् ।**
**त्यजन्दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः ॥ ७६ ॥**

**आज्ञासंपादिनीमा**देशसंपादिनीम् । **दक्षां** शीघ्रकारिणीम् । **वीरसूं** पुत्रवतीम् । **प्रियवादिनीं** मधुरभाषिणीं । यस्त्य**जति** अधिविन्दति स राज्ञा धनस्य **तृतीयांशं दाप्यः** । निर्धनस्तु १० **भरणं** ग्रासाच्छादनादि दाप्यः ॥ ७६ ॥

स्त्रीधर्मानाह

**स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परः स्त्रियाः ।**
**आशुद्धेः संप्रतीक्ष्यो हि महापातकदूषितः ॥ ७७ ॥**

**स्त्रीभिः** सदा **भर्तृवचनं कार्यं** । यस्मादयमेव स्त्रिया उत्कृष्टो धर्मः स्त्रीणां स्वर्गहेतुत्वात् । १५ यदा तु **महापातकदूषितस्त**दा **आशुद्धेः संप्रतीक्ष्यः** । न तत्पारतन्त्र्यम् । उत्तरकालं तु पूर्ववदेव तत्पारतन्त्र्यम् ॥ ७७ ॥

शास्त्रीयदारसंग्रहस्य फलमाह

**लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः ।**
**यस्मात्तस्मात्स्त्रियः सेव्याः कर्तव्याश्च सुरक्षिताः ॥ ७८ ॥** २०

**लोकानन्त्यं** वंशस्याविच्छेदः **दिवः प्राप्तिश्च** दारसंग्रहस्य प्रयोजनं । कथमित्याह । **पुत्रपौत्रप्रपौत्रकैः** लोकानन्त्यमग्निहोत्रादिभिश्च स्वर्गप्राप्तिरित्यन्वयः । **यस्मात्**स्त्रीभ्य एतद्द्वयं भवति **तस्मात् स्त्रियः सेव्या** उपभोग्याः प्रजार्थम् । रक्षितव्याश्च धर्मार्थम् । तथा **चापस्तम्बेन** धर्मप्रजासंपत्तिः प्रयोजनं दारसंग्रहस्योक्तम् 'धर्मप्रजासंपन्नेषु दारेषु नान्यां कुर्वीतेति' वदता । रतिफलं तु लौकिकमेव ॥ ७८ ॥ २५

पुत्रोत्पत्त्यर्थं स्त्रियः सेव्या इत्युक्तं । तत्र विशेषमाह

**षोडशर्तुनिशाः स्त्रीणां तस्मिन्युग्मासु संविशेत् ।**
**ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत् ॥ ७९ ॥**

स्त्रीणां गर्भधारणयोग्यावस्थोपलक्षितः कालः **ऋतुः** । स च रजोदर्शनदिवसादारभ्य षोडशाहोरात्र**स्तस्मिन्** ऋतौ **युग्मासु** समासु रात्रिषु । रात्रिग्रहणाद्दिवसप्रतिषेधः । **संविशेत्** गच्छेत्पुत्रार्थम् । ३०

युग्मासु इति **बहुवचनं** समुच्चयार्थं । अतश्चैकस्मिन्नपि ऋतौ अप्रतिषिद्धासु युग्मासु सर्वासु रात्रिषु गच्छेत् । एवं गच्छन्**ब्रह्मचार्येव** भवति । अतो यत्र ब्रह्मचर्यं श्राद्धादौ चोदितं तत्र गच्छतोऽपि न ब्रह्मचर्यस्खलनदोषोऽस्ति । किं च **पर्वाण्याद्याश्चतस्रस्तु वर्जयेत्** । पर्वाणीति बहुवचनादाद्यर्थावगमादष्टमीचतुर्दश्योर्ग्रहणम् । यथाह **मनुः** । ( अ. ४ श्लो. १२८ ) 'अमावास्यामष्टमीं च पौर्णमासीं ५ चतुर्दशीम् । ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विज' इति । अतोऽमावास्यादीनि रजोदर्शनादारभ्य चतस्रो रात्रीश्च वर्जयेत् ॥ ७९ ॥

**एवं गच्छन् स्त्रियं क्षामां मघां मूलं च वर्जयेत् ।**
**सुस्थ इंदौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमान् ॥ ८० ॥**

किं च । **एवमुक्तेन** प्रकारेण **स्त्रियं गच्छन् क्षामां गच्छेत्** । क्षामता च तस्मिन्काले १० रजस्वलाव्रतेनैव भवति । अथ चेन्न भवति तदा कर्तव्या क्षामता पुत्रोत्पत्त्यर्थं अल्पस्निग्धभोजनादिना । 'पुमान्पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियः' इति वचनात् । यदा युग्मायामपि रात्रौ शोणिताधिक्यं तदा स्त्र्येव भवति पुरुषाकृतिः । अयुग्मायामपि शुक्राधिक्ये पुमानेव भवति स्त्र्याकृतिः । कालस्य निमित्तत्वात् । शुक्रशोणितयोश्चोपादानकारणत्वेन प्राबल्यात् । तस्मात्क्षामा कर्तव्या । मघामूलनक्षत्रे वर्जयेत् । चन्द्रे चैकादशादिशुभस्थानगते चकारात्पुंनक्षत्रशुभयोगलग्नादिसंपत्तौ सकृदेकस्यां रात्रौ न १५ द्विस्त्रिर्वा । ततो लक्षणैर्युक्तं पुत्रं जनयति । पुमानप्रतिहतपुंस्त्वः ॥ ८० ॥

एवमृतौ नियममुक्त्वा इदानीमनृतौ नियममाह ।

**यथाकामी भवेद्वाऽपि स्त्रीणां वरमनुस्मरन् ।**
**स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः ॥ ८१ ॥**

भार्याया इच्छानतिक्रमेण प्रवृत्तिरस्यास्तीति **यथाकामी भवेत्** । वाशब्दो नियमान्तरपरि- २० ग्रहार्थः । न पूर्वनियमनिवृत्त्यर्थः । **स्त्रीणां वर**मिन्द्रदत्त**मनुस्मरन्** 'भवतीनां कामविहन्ता पातकी स्यादिति' । "यथा ता अब्रुवन् वरं वृणीमहे, ऋत्वियात् प्रजां विन्दामहे, काममाविजनिनोः संभवामेति । तस्मादृत्वियात् स्त्रियः प्रजां विन्दन्ते काममाविजनिनोः संभवन्ति वरं वृतं तासामिति ।"

अपि च स्वदारेष्वेव निरतः नितरां तन्मनस्को भवेदित्यनुषज्यते । एवकारेण स्त्र्यन्तरगमनं निवर्तयति प्रायश्चित्तस्मरणात् । उभयत्रापि दृष्टप्रयोजनमाह । 'स्त्रियो रक्ष्या यतः स्मृता' इति । यस्मा- २५ त्स्त्रियो रक्ष्याः स्मृता उक्ताः । 'कर्तव्याश्च सुरक्षिता' इति । तत्र सुरक्षितत्वं यथाकामित्वेन स्त्र्यन्तरागमनेन भवतीत्यत्राह । 'तस्मिन्युग्मासु संविशेदिति' ।

किमयं **विधिर्नियमः परिसंख्या** वा । उच्यते । न तावद्विधिः प्राप्तार्थत्वात् । नापि परिसंख्या दोषत्रयसमासक्तेः । अतो नियमं प्रतिपेदिरे न्यायविदः । कः पुनरेषां भेदः ? अत्यन्ताप्राप्तप्रापणं **विधिः** । यथा 'अग्निहोत्रं जुहुयादष्टकाः कर्तव्या' इति । पक्षे प्राप्तस्याप्राप्तपक्षान्तरप्रापणं **नियमः** ।

१ कालस्यानियतत्वादिति पुस्तकान्तरे दृश्यते. २ विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र वा प्राप्तौ परिसंख्या निगद्यते.

यथा 'समे देशे यजेतेति' । 'दर्शपूर्णमासाभ्यां यजेतेति' यागः कर्तव्यतया विहितः स च देश-मन्तरेण कर्तुमशक्य इत्यर्थाद्देशः प्राप्तः । स च समो विषमश्चेति द्विविधः । यदा यजमानः समे यियक्ष्यते तदा समे यजेतेति वचनमुदास्ते स्वार्थस्य प्राप्तार्थत्वात् । यदा तु विषमे देशे यियक्ष्यते तदा समे यजेतेति स्वार्थं विधत्ते स्वार्थस्य तदानीमप्राप्तत्वात् । विषमदेशनिवृत्तिस्त्वार्थिकी चोदितदेशेनैव यागनिष्पत्तेः । अचोदितदेशोपादानेन यथाशास्त्रं यागो नानुष्ठितः स्यादिति । तथा 'प्राङ्मुखोऽन्नानि भुञ्जीतेति' । इदमपि स्मार्तमुदाहरणं पूर्वेण व्याख्यातम् ।

एकस्यानेकत्र प्राप्तस्यान्यतो निवृत्त्यर्थमेकत्र पुनर्वचनं **परिसंख्या** । तद्यथा । 'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त' इत्ययं मन्त्रः स्वसामर्थ्यादश्वाभिधान्या गर्दभाभिधान्याश्च रशनाया ग्रहणे विनियुक्तः 'पुनरश्वाभिधानीमादत्त' इत्यनेनाश्वाभिधान्यां विनियुज्यमानो गर्दभाभिधान्या निवर्तते । तथा 'पञ्च पञ्चनखा भक्ष्या' इत्यत्र हि यदृच्छया श्वादिषु शशादिषु च भक्षणं प्राप्तं पुनः शशादिषु श्रूयमाणं श्वादिभ्यो निवर्तयति ।

किंपुनरत्र युक्तं परिसंख्येत्याह । तथाहि कृतदारसंग्रहस्य स्वेच्छयैवर्तौ गमनं प्राप्तमिति न विधेरयं विषयः नापि नियमस्य । गृह्यस्मृतिविरोधात् । एवं हि स्मरन्ति **गृह्यकाराः** । 'दारसंग्रहानन्तरं त्रिरात्रं द्वादशरात्रं संवत्सरं वा ब्रह्मचारी स्यादिति' । तत्र द्वादशरात्रात्संवत्सराद्वा पूर्वमेव ऋतुसंभवे ऋतौ गच्छेदेवेति नियमाद्ब्रह्मचर्यस्मरणं बाध्येत । अपि च प्राप्ते भावार्थे वचनं विशेषणपरं युक्तं प्राप्तं चर्तौ भार्यागमनमिच्छयैवातो यदि गच्छेदृतावेवेति वचनव्यक्तिर्युक्ता । किं च नैयमिकात्पुत्रोत्पत्तिविधेरेव ऋतौ गमनं नित्यं प्राप्तमेवेति ऋतौ गच्छेदेवेति नियमोऽनर्थकः स्यात् ।

नियमे चादृष्टं कल्पनीयम् । किं च । ऋतौ गन्तव्यमेवेति नियमे असंनिहितस्य व्याध्यादिना असमर्थस्यानिच्छोश्चाशक्योऽर्थ उपदिष्टः स्यात् । विध्यनुवादविरोधश्च नियमे । तथा 'श्लोकः शब्दः सकृदुच्चरितस्तमेवार्थं पक्षे अनुवदति पक्षे तु विधत्ते चेति' । तस्मादृतावेव गच्छेन्नान्यत्रेति परिसंख्यैव युक्ता । तदिदं **भारुचिविश्वरूपादयो** नानुमन्यन्ते यतो नियम एव युक्तः । पक्षे स्वार्थविधिसंभवात् अगमने दोषश्रवणाच्च । 'ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति । घोरायां भ्रूणहत्यायां युज्यते नात्र संशय' इति ।

न च विध्यनुवादविरोधः अनुवादाभावाद्विध्यर्थत्वाच्च वचनस्य । तत्र हि विध्यनुवादविरोधः यत्र विधेयावधितया तदेवानुवेदितव्यमप्राप्ततयाऽन्योद्देशेन विधातव्यं च । यथा वाजपेयाधिकरणपूर्वपक्षे 'वाजपेयेन स्वाराज्यकामो यजेतेति' वाजपेयलक्षणगुणविधानावधित्वेन यागोऽनुवेदितव्यः । स एव स्वाराज्यलक्षणफलोद्देशेन विधातव्यश्चेति ।

न चानुवादेन कृत्यमस्ति । यत्तु नियमे दृष्टं कल्प्यमित्युक्तं तत्परिसंख्यायामपि समानम् । अनृतौ गच्छतो दोषकल्पनात् ।

यत्तु नैयमिकपुत्रोत्पादनविध्याक्षेपेणैव ऋतौ नित्यगमनप्राप्तेर्न नियम इति तदसत् । स एवायं नैयमिकपुत्रोत्पादनविधिः स्यान्नतम् । 'एवं गच्छन् स्त्रियं क्षामां लक्षण्यं पुत्रं जनयेदिति' स्त्र्यभिगमनातिरिक्तः पुत्रोत्पादनविधिरिति तन्न । गमनकरणिकाया भावनाया एव पुत्रोत्पत्तिकर्मता प्रदृश्यते ।

एवं गच्छन् लक्षण्यं पुत्रं जनयेदित्यनेन यथा 'अग्निहोत्रं जुह्वन् स्वर्गं भावयेदिति'। न चासन्निहितादेरश-क्यार्थविधिप्रसंगः । सन्निहितशक्तयोरेवोपदेशात् 'ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छतीति'। 'यः स्वदारानृतुस्नातान्स्वस्थः सन्नोपगच्छतीति' विशेषोपादानात् । अनिच्छानिवृत्तिस्तु नियमविधाना-देव । न च विशेषणपरताऽपि पक्षे भावार्थविधिसंभवात्। नापि गृह्यस्मृतिविरोधः । संवत्सरात्पूर्वमेव ऋतु-
५ दर्शने संविशतो न ब्रह्मचर्यस्खलनदोषः श्राद्धादिषु ।

तस्मात्स्वार्थहानिपरार्थकल्पनाप्राप्तबाधलक्षणदोषत्रयवती परिसंख्या न युक्ता । 'पञ्च पञ्चनखा भक्ष्या' इत्यत्र यद्यपि शशादिषु भक्षणस्य पक्षे प्राप्तेर्नियमः । शशादिषु श्वादिषु च प्राप्तेः परिसंख्ये-त्युभयसंभवः । तथाऽपि नियमपक्षे शशाद्यभक्षणे दोषप्रसंगः, श्वादिभक्षणे चादोषप्रसंगेन प्रायश्चित्त-स्मृतिविरोध इति परिसंख्यैवाश्रिता । एतेन 'सायंप्रातर्द्विजातीनामशनं स्मृतिनोदितमि'त्यत्रापि नियमो
१० व्याख्यातः । 'नान्तरा भोजनं कुर्यादिति' च पुनरुक्तं स्यात्परिसंख्यायाम् । एवं च नियमे सति ऋतावृताविति वीप्सा लभ्यते 'निमित्तावृतौ नैमित्तिकमप्यावर्तते' इति न्यायात् । 'यथाकामी भवेदि'त्यापि नियम एव । 'अनृतावपि स्त्रीकामनायां सत्यां स्त्रियमभिरमयेदेवेति' । 'ऋतावुपेयात्सर्वत्र वा प्रतिषिद्धवर्ज्य-मि'त्येतदपि **गौतमीयसूत्र**द्वयं नियमपरमेव । ऋतावुपेयादनृतावपि स्त्रीकामनायां प्रतिषिद्धवर्ज्य-मुपेयादेवेत्यलमतिप्रसंगेन ॥ ८१ ॥

१५ **भर्तृभ्रातृपितृज्ञातिश्वश्रूश्वशुरदेवरैः ।**
**बन्धुभिश्च स्त्रियः पूज्या भूषणाच्छादनाशनैः ॥ ८२ ॥**

किंच । भर्तृप्रभृतिभिः पूर्वोक्ताः साध्व्यः स्त्रियो यथाशक्त्यलङ्कारवसनभोजनपुष्पादिभिः संमान-नीयाः । यस्मात्ताः पूजिताः धर्मार्थकामान्संवर्धयन्ति ॥ ८२ ॥

तथा पुनः समर्पितगृहव्यापारया किंभूतया भवितव्यमित्याह

**संयतोपस्करा दक्षा हृष्टा व्ययपराङ्मुखी ।**
**कुर्याच्छ्वशुरयोः पादवन्दनं भर्तृतत्परा ॥ ८३ ॥**

**संयतः** स्वस्थाननिवेशितः **उपस्करो** गृहोपकरणवर्गो यया सा तथोक्ता । यथोलूखलमुसल-शूर्पादेः कण्डनस्थाने । दृषदुपलयोरवियोगेन पेषणस्थान इत्यादि । **दक्षा** गृहव्यापारकुशला । **हृष्टा** सदैव प्रहसितानना । **व्ययपराङ्मुखी** । न व्ययशीला स्यादिति सर्वत्र शेषः । किं च । श्वश्रूश्च श्वशुरश्च **श्वशुरौ** । श्वशुरः श्वश्र्वेत्येकशेषः । तयोः **पादवन्दनं** नित्यं **कुर्यात्** । श्वशुरग्रहणं मान्यान्तरोप-
२५ लक्षणार्थम् । **भर्तृतत्परा** भर्तृवशवर्तिनी सती पूर्वोक्तं कुर्यात् ॥ ८३ ॥

भर्तृसन्निधावुक्तं । प्रोषिते भर्तरि तया किं कर्तव्यमित्याह

**क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् ।**
**हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका ॥ ८४ ॥**

३० देशान्तरगतभर्तृका, **क्रीडां** कन्दुकादिभिः **शरीरसंस्कार**मुद्वर्तनादिभिः **समाजो** जन-समूहः **उत्सवो** विवाहादिः तयोर्दर्शनं । **हास्यं** विजृम्भणं परगृहगमनं त्यजे-दिति प्रत्येकं संबध्यते ॥ ८४ ॥

प्रोषितभर्तृका-नियमाः ।

**रक्षेत्कन्यां पिता विन्नां पतिः पुत्रास्तु वार्धके ।**
**अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित्स्त्रियाः ॥ ८५ ॥**

किं च । पाणिग्रहणात्प्राक् **पिता कन्याम**कार्यकरणाद्**रक्षेत्** । तत ऊर्ध्वं भर्ता । तदभावे पुत्राः । वृद्धाभावे च **तेषा**मुक्तानाम**भावे ज्ञातयः** । ज्ञातीनामभावे राजा । 'पक्षद्वयावसाने तु राजा भर्ता प्रभुः स्त्रिया' इति वचनात् । अतः क्वचिदपि स्त्रीणां नैव स्वातन्त्र्यम् ॥ ८५ ॥ ५

**पितृमातृसुतभ्रातृश्वश्रूश्वशुरमातुलैः ।**
**हीना न स्याद्विना भर्त्रा गर्हणीयाऽन्यथा भवेत् ॥ ८६ ॥**

किं च **भर्त्रा विना** भर्तृरहिता पित्रादिरहिता वा **न स्यात्** । यस्मात्तद्रहिता **गर्हणीया** निन्द्या **भवेत्** । एतच्च ब्रह्मचर्यपक्षे । 'भर्तरि प्रेते ब्रह्मचर्यं तदन्वारोहणं वेति' **विष्णु**स्मरणात् । अन्वारोहणे महाभ्युदयः । १०

तथा च **व्यासः** कपोतिकाख्यानव्याजेन दर्शितवान्

'पतिव्रता संप्रदीप्तं प्रविवेश हुताशनम् । तत्र चित्राङ्गदधरं भर्तारं साऽन्वपद्यत ।
ततः स्वर्गं गतः पक्षी भार्यया सह संगतः । कर्मणा पूजितस्तत्र रेमे च सह भार्ययेति' ॥

तथा च **शङ्खाङ्गिरसौ**—

'तिस्रः कोट्योऽर्धकोटी च यानि लोमानि मानुषे । तावत्कालं वसेत्स्वर्गे भर्तारं याऽनुगच्छतीति' १५
प्रतिपाद्य तयोरवियोगं दर्शयतः ।

'व्यालग्राही यथा सर्पं बलादुद्धरते बिलात् । तद्वदुद्धृत्य सा नारी सह तेनैव मोदते ॥
तत्र सा भर्तृपरमा स्तूयमानाऽप्सरोगणैः । क्रीडते पतिना सार्धं यावदिन्द्राश्चतुर्दशेति' ॥

तथा

'ब्रह्मघ्नो वाऽथ मित्रघ्नः कृतघ्नो वा भवेत्पतिः । पुनात्यविधवा नारी तमादाय मृता तु या ॥ २० मृते भर्तरि या नारी समारोहेद्धुताशनम् । साऽरुन्धतीसमाचारा स्वर्गलोके महीयते ॥
यावच्चाग्नौ मृते पत्यौ स्त्री नात्मानं प्रदाहयेत् । तावन्न मुच्यते सा हि स्त्रीशरीरात्कथंचनेति' ॥

**हारीतोऽपि**

"मातृकं पैतृकं चापि यत्र चैव प्रदीयते । कुलत्रयं पुनात्येषा भर्तारं याऽनुगच्छतीति" ॥

तथा २५

"आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा । मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रतेति" ॥

अयं सर्वासां स्त्रीणामगर्भिणीनामबालापत्यानां आचाण्डालानां साधारणो धर्मः । 'भर्तारं या तु गच्छतीत्य'विशेषोपादानात् । यानि च ब्राह्मण्यनुगमननिषेधपराणि वाक्यानि ।

'मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात् । इतरेषु तु वर्णेषु तपः परममुच्यते ॥
जीवन्ती तद्धितं कुर्यान्मरणादात्मघातिनी । या स्त्री ब्राह्मणजातीया मृतं पतिमनुव्रजेत् ॥ ३०
सा स्वर्गमात्मघातेन नात्मानं न पतिं नयेत् ।'

इत्येवमादीनि तानि पृथक्चित्यांऽधरोहणविषयाणि। 'पृथक्चितिं समारुह्य न विप्रा गन्तुमर्हतीति' विशेषस्मरणात्। अनेन क्षत्रियादिस्त्रीणां पृथक्चित्यनुभ्यज्ञा गम्यते।

यत्तु कैश्चिदुक्तं पुरुषाणामिव स्त्रीणामप्यात्महननस्य प्रतिषिद्धत्वादतिप्रवृद्धस्वर्गाभिलाषायाः प्रतिषेधशास्त्रमतिक्रामन्त्या अयमनुगमनोपदेशः श्येनवत्। यथा 'श्येनेनाभिचरन् यजेतेति' तीव्रक्रोधा-
५ क्रान्तस्वान्तस्य प्रतिषेधशास्त्रमतिक्रामतः श्येनोपदेश इति तदयुक्तं। ये तावत् श्येनकरणिकायां भावनायां भाव्यभूतहिंसायां विधिसंस्पर्शाभावेन प्रतिषेधसंस्पर्शात् फलद्वारेण श्येनस्यानर्थत्वं वर्णयन्ति तेषां मते हिंसाया एव स्वर्गार्थतया अनुगमनशास्त्रेण विधीयमानत्वात्प्रतिषेधसंस्पर्शाभावादग्नीषोमीयवत्स्पष्टमेवानुगमनस्य श्येनवैषम्यम्।

यत्तु मतं हिंसा नाम मरणानुकूलो व्यापारः। श्येनश्च परमरणानुकूलव्यापाररूपत्वाद्धिंसैव। कामा-
१० धिकारे च करणांशे रागतः प्रवृत्तिसंभवेन विधेरप्रवर्तकत्वात्। रागप्रयुक्तहिंसारूपत्वात् श्येनः प्रतिषिद्धः स्वरूपेणैवानर्थ इति, तत्राप्यनुगमनशास्त्रेण मरणस्यैव स्वर्गसाधनतया विधानान्मरणे यद्यपि रागतः प्रवृत्तिस्तथापि मरणानुकूले व्यापारे अग्निप्रवेशादाविति कर्तव्यतारूपं विधित एव प्रवृत्तिरिति न निषेधस्यावकाशः। 'वायव्यं श्वेतमालभेत भूतिकाम' इतिवत्। तस्मात्स्पष्टमेवानुगमनस्य श्येनवैषम्यम्।

१५ यत्तु 'तस्मादुह न पुरायुषः स्वः कामी प्रेयादिति' श्रुतिविरोधादनुगमनमयुक्तमिति। तदुह नः स्वःकाम्यायुषः प्राक् न प्रेयादिति स्वर्गफलोद्देशेनायुषः प्रागायुर्व्ययो न कर्तव्यो मोक्षार्थिना यस्मादायुषः शेषे सति नित्यनैमित्तिककर्मानुष्ठानक्षपितान्तःकरणकलङ्कस्य श्रवणमनननिदिध्यासनसंपत्तौ सत्यात्मज्ञानेन नित्यानिरतिशयानन्दब्रह्मप्राप्तिलक्षणमक्षसंभवः। तस्मादनित्याल्पसुखरूपस्वर्गार्थमायुर्व्ययो न कर्तव्य इत्यर्थः। अतश्च मोक्षमनिच्छन्त्या अनित्याल्पसुखरूपस्वर्गार्थिन्या अनुगमनं युक्तं इतरकाम्या-
२० नुष्ठानवदिति सर्वमनवद्यम्॥ ८६॥

**पतिप्रियहिते युक्ता स्वाचारा विजितेन्द्रिया।**
**सेह कीर्तिमवाप्नोति प्रेत्य चानुत्तमां गतिम्॥ ८७॥**

किं च। प्रियमनवद्यत्वेन मनोनुकूलमायत्यां च यच्छ्रेयस्करं तद्धितं। प्रियं च हितं च प्रियहितं। पत्युः प्रियहितं तस्मिन् युक्ता निरता। **स्वाचारा** शोभनः आचारो यस्याः सा तथोक्ता।
२५ शोभनश्चाचारो दर्शितः शङ्खेन:—'नानुक्त्वा गृहान्निर्गच्छेत्। नानुत्तरीया न त्वरितं व्रजेत्। न परपुरुषं भाषेताऽन्यत्र वणिक्प्रव्रजितवृद्धवैद्येभ्यः। न नाभिं दर्शयेत्। आगुल्फाद्वासः परिदध्यात्। न स्तनौ विवृतौ कुर्यात्। न हसेदप्रावृता। भर्तारं तद्बन्धून् वा न द्विष्यात्। न गणिकाधूर्ताऽभिसारिणीप्रव्रजिताप्रेक्षणिकामायामूलकुहककारिकादुःशीलादिभिः सहैकत्र तिष्ठेत्। संसर्गेण हि चारित्रं दुष्यतीति।' **विजितेन्द्रिया** विजितानि संयमितानि इन्द्रियाणि श्रोत्रादीनि वागादीनि च मनःसहितानि यया **सा**।
३० **इह लोके कीर्तिं** प्रख्यातिं परलोके चोत्तमां गतिं प्राप्नोति।

अयं च सकल एव स्त्रीधर्मो विवाहादूर्ध्वं वेदितव्यः। 'प्रागुपनयनात्कामचारकामवादकामभक्षा' इति स्मरणात्। 'वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृत' इति॥ ८७॥

१ गौतमीये अ. २. सू. १.

अनेकभार्यं प्रत्याह

**सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत् ।**
**सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतरा ॥ ८८ ॥**

**सवर्णायां** सत्यां **अन्याम**सवर्णां नैव **धर्मकार्यं कारयेत् । सवर्णास्वपि** बह्वीषु **धर्म्ये विधौ** धर्मानुष्ठाने **ज्येष्ठया विना** ज्येष्ठां मुक्त्वा **इतरा** मध्यमा कनिष्ठा वा न नियोक्तव्या ॥ ८८ ॥ ५

प्रमीतपतिकाया विधिमुक्त्वा इदानीं प्रमीतभार्यं प्रत्याह

**दाहयित्वाऽग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः ।**
**आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन् ॥ ८९ ॥**

पूर्वोक्त**वृत्तवतीं** आचारवतीं विपन्नां **स्त्रियमग्निहोत्रेण** श्रौतेनाग्निना तदभावे स्मार्तेन **दाहयित्वा, पतिः** भर्ता अनुत्पादितपुत्रोऽनिष्टयज्ञो वा आश्रमान्तरेष्वनधिकृतो वा स्त्र्यन्तराभावे **पुनर्दारान् अग्नींश्च विधिवदाहरेत् । अविलम्बयन्** शीघ्रमेव । 'अनाश्रमी न तिष्ठेत दिनमेकमपि द्विज' इति **दक्ष**स्मरणात् । १०

एतच्चाधानेन सहाधिकृताया एव नान्यस्याः । यत्तु 'द्वितीयां चैव यो भार्यां दहेद्वैतानिकाग्निभिः । जीवत्यां प्रथमायां तु सुरापानसमं हि तदिति', तथा 'मृतायां तु द्वितीयायां योऽग्निहोत्रं समुत्सृजेत् । ब्रह्मघ्नं तं विजानीयाद्यश्च कामात्समुत्सृजेदिति', एवमादि तदाधानेन सहानधिकृताया अग्निदाने वेदितव्यम् ॥ ८९ ॥ १५

इति विवाहप्रकरणम्

## अथ वर्णजातिविवेकप्रकरणम् ४

ब्राह्मणस्य चतस्रो भार्या भवन्ति, क्षत्रियस्य तिस्रो, वैश्यस्य द्वे, शूद्रस्यैकेत्युक्त्वा तासु च पुत्रा उत्पादयितव्या इत्युक्तं । इदानीं कस्यां कस्मात् कः पुत्रो भवतीति विवेकमाह २०

**सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ।**
**अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्धनाः ॥ ९० ॥**

**सवर्णेभ्यो** ब्राह्मणादिभ्यः **सवर्णासु** ब्राह्मण्यादिषु **सजातयो** मातृपितृसमानजातीयाः पुत्रा भवन्ति । 'विन्नास्वेष विधिः स्मृत' इति सर्वशेषत्वेनोपसंहारात् । विन्नासु सवर्णास्विति संबध्यते । विन्नाशब्दस्य संबन्धिशब्दत्वाद्वेत्तृभ्यः सवर्णेभ्य इति लभ्यते । २५

एकः सवर्णशब्दः स्पष्टार्थः अतश्चायमर्थः संवृत्तः । उक्तेन विधिना ऊढायां सवर्णायां वोढुः सवर्णादुत्पन्नास्तस्मात्समानजातीया भवन्ति । अतश्च कुण्डगोलककानीनसहोढजादीनामसवर्णत्वमुक्तं भवति। ते च सवर्णेभ्योऽनुलोमप्रतिलोमेभ्यश्च भिद्यमानाः साधारणधर्मैरहिंसादिभिरधिक्रियन्ते । 'शूद्राणां

तु सधर्माणः सर्वेऽपध्वंसजाः स्मृता'' इति स्मरणात् ('मनुस्मृ. अ. १० श्लो. ४१ )। अपध्वंसजाः व्यभिचारजाताः । शूद्रधर्मैरपि द्विजशुश्रूषादिभिरधिक्रियन्ते ।

ननु कुण्डगोलकयोरब्राह्मणत्वे श्राद्धे प्रतिषेधोऽनुपपन्नः न्यायविरोधश्च । 'यो यज्जातीयात् यज्जातीयायामुत्पन्नः स तज्जातीय एव भवति'। यथा गोर्गवि गौः अश्वाद्वडवायामश्वः । तस्माद्ब्राह्मणाद्ब्राह्मण्यामुत्पन्नो ब्राह्मण इति न विरुद्धम् । तथा कानीनपौनर्भवादीननुक्रम्य 'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिरिति ' वचनविरोधश्च । नैतत्सारं ब्राह्मणेन ब्राह्मण्यामुत्पन्नो ब्राह्मण इति भ्रमनिवृत्त्यर्थः श्राद्धे प्रतिषेधः । यथाऽत्यन्तमप्राप्तस्य पतितस्य श्राद्धे प्रतिषेधः । न च न्यायविरोधः यत्र प्रत्यक्षगम्या जातिर्भवति तत्र तथा । ब्राह्मणादिजातिस्तु स्मृतिलक्षणा यथास्मरणं भवति । यथा 'समानेऽपि ब्राह्मण्ये कुण्डिनो वसिष्ठोऽत्रिर्गौतम इति स्मरणलक्षणं गोत्रम् ' तथा मनुष्यत्वे समानेऽपि ब्राह्मण्यादिजातिः स्मरणलक्षणा । मातापित्रोश्चैतदेव जातिलक्षणं । न चानवस्था । अनादित्वात्संसारस्य शब्दार्थव्यवहारवत् । 'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिरिति ' तूक्तानुवादत्वाद्यथासंभवं व्याख्यास्यते । क्षेत्रजस्तु मातृसमानजातीयो नियोगस्मरणात् शिष्टसमाचाराच्च । यथा धृतराष्ट्रपाण्डुविदुराः क्षेत्रजाः सन्तो मातृसमानजातीया इत्यलमतिप्रसंगेन ।

किंच । **अनिन्द्येषु** ब्राह्मादि**विवाहेषु पुत्राः सन्तानवर्धनाः** अरोगिणो दीर्घायुषो धर्मप्रजासंपन्ना भवन्ति ॥ ९० ॥

वर्णानुक्त्वा इदानीमनुलोमानाह

**विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम् ।**
**अम्बष्ठः शूद्र्यां निषादो जातः पारसवोऽपि वा ॥ ९१ ॥**

ब्राह्मणात्क्षत्रियायां विन्नायामुत्पन्नो **मूर्धावसिक्तो** नाम पुत्रो भवति । वैश्यकन्यकायां विन्नायाम**म्बष्ठो** नाम भवति । शूद्रायां **निषादो** नाम पुत्रो भवति । निषादो नाम कश्चिन्मत्स्यघातजीवी प्रतिलोमजः स माभूदिति **पारसवो**ऽयं निषाद इति संज्ञाविकल्पः । विप्रादिति सर्वत्रानुवर्तते ।

यत्तु 'ब्राह्मणेन क्षत्रियायामुत्पादितः क्षत्रिय एव भवति । क्षत्रियेण वैश्यायामुत्पादितो वैश्य एव भवति । वैश्येन शूद्रायामुत्पादितः शूद्र एव भवतीति' शङ्खस्मरणं तत्क्षत्रियादिधर्मप्राप्त्यर्थं न पुनर्मूर्धावसिक्तादिजातिनिराकरणार्थम् क्षत्रियादिजातिप्राप्त्यर्थं वा । अतश्च मूर्धावसिक्तादीनां क्षत्रियादेरुक्तैरेव दण्डाजिनोपवीतादिभिरुपनयनादि कार्यम् । 'प्रागुपनयनात्कामचारादि' पूर्ववदेव वेदितव्यम् ॥ ९१ ॥

**वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ ।**
**वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः ॥ ९२ ॥**

वैश्यायां शूद्रायां च विन्नायां **राजन्यान्माहिष्योग्रौ** यथाक्रमं पुत्रौ संभवतः । वैश्येन शूद्रायां विन्नायां **करणो** नाम पुत्रो भवति । **एष** सवर्णमूर्धावसिक्तादिसंज्ञा**विधिः विन्नासूढासु स्मृत** उक्तो वेदितव्यः । एते मूर्धावसिक्ताम्बष्ठनिषादमाहिष्योग्रकरणाः षडनुलोमजाः पुत्रा वेदितव्याः ॥ ९२ ॥

प्रतिलोमजानाह

**ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहिकस्तथा ।**
**शूद्राज्जातस्तु चाण्डालः सर्वधर्मबहिष्कृतः ॥ ९३ ॥**

**ब्राह्मण्यां** क्षत्रियवैश्यशूद्रैरुत्पादिता यथाक्रमं **सूतवैदेहिकचाण्डालाख्याः** पुत्रा भवन्ति । तत्र **चाण्डालः सर्वधर्मबहिष्कृतः** ॥ ९३ ॥　५

**क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च ।**
**शूद्रादायोगवं वैश्या जनयामास वै सुतम् ॥ ९४ ॥**

किंच । **क्षत्रिया** योषिद्वैश्यान्मागधं नाम पुत्रं जनयति । सैव **शूद्रात्क्षत्तारं** । वैश्ययोषिच्छूद्रादायोगवं पुत्रं जनयति । एते च सूतवैदेहिकचाण्डालमागधक्षत्त्रायोगवाः षट् प्रतिलोमजाः । एतेषां च वृत्तयः **औशनसे मानवे** ( १० अध्याये ) च द्रष्टव्याः ॥ ९४ ॥　१०

संकीर्णसंकरे जात्यन्तरमाह

**माहिष्येण करण्यां तु रथकारः प्रजायते ।**
**असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः ॥ ९५ ॥**

क्षत्रियेण वैश्यायामुत्पादितो माहिष्यः । वैश्येन शूद्रायामुत्पादिता करणी । तस्यां **माहिष्येणो**त्पादितो **रथकारो** नाम जात्या भवति । तस्य चोपनयनादि सर्वं कार्यं, वचनात् । यथाह **शङ्खः** ।　१५
' क्षत्रियवैश्यानुलोमान्तरोत्पन्नजो रथकारस्तस्येज्यादानोपनयनसंस्कारक्रिया अश्वप्रतिष्ठारथसूत्रवास्तुविद्याध्ययनवृत्तिता चेति ' । एवं ब्राह्मणक्षत्रियोत्पन्नमूर्धावसिक्तमाहिष्याद्यनुलोमसंकरे जात्यन्तरतोपनयनादिप्राप्तिश्च वेदितव्या तयोर्द्विजातित्वात् । संज्ञास्तु स्मृत्यन्तरोक्ता द्रष्टव्याः ।

एतच्च प्रदर्शनमात्रमुक्तं । संकीर्णसंकरजातीनामानन्त्याद्वक्तुमशक्यत्वादत एतावदत्र विवक्षितम् । असन्तः प्रतिलोमजाः सन्तश्चानुलोमजा ज्ञातव्या इति ॥ ९५ ॥　२०

' सवर्णेभ्यः सवर्णासु जायन्त ' इत्यादिना वर्णप्राप्तौ कारणमुक्तमिदानीं कारणान्तरमाह

**जात्युत्कर्षो युगे ज्ञेयः पञ्चमे सप्तमेऽपि वा ।**
**व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम् ॥ ९६ ॥**

जातयो मूर्धावसिक्ताद्यास्तासामुत्कर्षो ब्राह्मणत्वादिजातिप्राप्ति**र्जात्युत्कर्षो युगे** जन्मनि **सप्तमे पञ्चमे** अपिशब्दात्षष्ठे बोद्धव्यः । व्यवस्थितश्चायं विकल्पः । व्यवस्था च, ब्राह्मणेन शूद्रायामुत्पादिता निषादी सा ब्राह्मणेनोढा दुहितरं कांचिज्जनयति; साऽपि ब्राह्मणेनोढा अन्यामित्यनेन प्रकारेण षष्ठी सप्तमं ब्राह्मणं जनयति । ब्राह्मणेन वैश्यायामुत्पादिता अम्बष्ठा साऽप्यनेन प्रकारेण पञ्चमी षष्ठं ब्राह्मणं जनयति । मूर्धावसिक्ताऽपि अनेन प्रकारेण चतुर्थी पञ्चमं ब्राह्मणमेव जनयति । एवमुग्रा क्षत्रियेणोढा माहिष्या च यथाक्रमं क्षत्रियं षष्ठं पञ्चमं जनयति । तथा करणी वैश्योढा पञ्चमं वैश्यमित्येवमन्यत्राप्यूहनीयम् ।　२५

किंच **कर्मणां व्यत्यये** वृत्त्यर्थानां कर्मणां विपर्यासे यथा ब्राह्मणो मुख्यवृत्त्या अजीवन् क्षात्रेण कर्मणा जीवेदित्यनुकल्पः । तेनाप्यजीवन् वैश्यवृत्त्या तयाऽप्यजीवन् शूद्रवृत्त्या । क्षत्रियोऽपि

स्वकर्मणा जीवनार्थेनाजीवन् व्यत्ययें वैश्यवृत्त्या शूद्रवृत्त्या वा । वैश्योऽपि स्ववृत्त्या अजीवन् शूद्रवृत्त्येति कर्मणां व्यत्ययः । तस्मिन् व्यत्यये सति यद्यापद्विमोक्षेऽपि तां वृत्तिं न परित्यजति तदा पञ्चमे षष्ठे सप्तमे वा जन्मनि साम्यम् । यस्य हीनवर्णस्य कर्मणा जीवति तत्समानजातित्वं भवति । तद्यथा । ब्राह्मणः शूद्रवृत्त्या जीवन् तामपरित्यजन् यं पुत्रमुत्पादयति सोऽपि तयैव वृत्त्या जीवन्पुनरप्येवं परम्परया सप्तमे ५ जन्मनि शूद्रमेव जनयति । वैश्यवृत्त्या जीवन् षष्ठे वैश्यम् । क्षत्रियवृत्त्या जीवन् पञ्चमे क्षत्रियम् । क्षत्रियोऽपि शूद्रवृत्त्या जीवन् षष्ठे शूद्रम्, वैश्यवृत्त्या जीवन् पञ्चमे वैश्यम् । वैश्योऽपि शूद्रवृत्त्या जीवन् तामपरित्यजन्पुत्रपरम्परया पञ्चमे जन्मनि शूद्रं जनयति ।

**पूर्ववच्चाधरोत्तरम्** । अस्यार्थः । वर्णसंकरे अनुलोमजाश्च दर्शिताः । संकीर्णसंकरजाताश्च रथकारनिदर्शनेन दर्शिताः । इदानीं वर्णसंकरजाताः प्रदर्श्यन्ते । अधरे च उत्तरं च अधरोत्तरं यथा १० मूर्धावसिक्तायां क्षत्रियवैश्यशूद्रैरुत्पादितास्तथाऽम्बष्ठायां वैश्यशूद्राभ्यां निषाद्यां शूद्रेणोत्पादिता अधराः प्रतिलोमजास्तथा मूर्धावसिक्ताम्बष्ठानिषादीषु ब्राह्मणोत्पादिताः माहिष्योग्रयोर्ब्राह्मणेन क्षत्रियेण चोत्पादिताः । करण्यां ब्राह्मणेन क्षत्रियेण वैश्येन चोत्पादिताः उत्तरे अनुलोमजाः । एवमन्यत्राप्यूहनीयम् । एतदधरोत्तरं पूर्ववदसत्सदिति बोद्धव्यम् ॥ ९६ ॥

इति वर्णजातिविवेकप्रकरणम्

## १५ अथ गृहस्थधर्मप्रकरणम् ५

श्रौतस्मार्तानि कर्माणि अग्निसाध्यानि दर्शयिष्यन् कस्मिन्नग्नौ किं कर्तव्यमित्याह

**कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही ।**
**दायकालाहृते वाऽपि श्रौतं वैतानिकाग्निषु ॥ ९७ ॥**

स्मृत्युक्तं वैश्वदेवादिकं कर्म लौकिकं च यत्प्रतिदिनं पाकलक्षणं तदपि गृहस्थो **विवाहाग्नौ** २० विवाहसंस्कृते **कुर्वीत** विभागकालाहृते वा । 'वैश्यकुलादग्निमानीये'त्यादिनोक्तसंस्कारसंस्कृते । अपिशब्दात्प्रेते वा गृहपतावाहृते संस्कृत एव । ततश्च कालत्रयातिक्रमे प्रायश्चित्तीयते । श्रुत्युक्तमग्निहोत्रादिकं कर्म वैतानिकाग्निषु आहवनीयादिषु कुर्वीत ॥ ९७ ॥

**शरीरचिन्तां निर्वर्त्य कृतशौचविधिर्द्विजः ।**
**प्रातःसंध्यामुपासीत दन्तधावनपूर्वकम् ॥ ९८ ॥**

२५ **शरीरचिन्तां** आवश्यकां 'दिवासंध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुख' इत्याद्युक्तविधिना **निर्वर्त्य** 'गन्धलेपक्षयकरमि'त्यादिनोक्तेन विधिना, **कृतशौचविधिर्द्विजः** **दन्तधावनपूर्वकं प्रातःसंध्यामुपासीत** ।

गृहस्थधर्मानाह ।

**दन्तधावनविधिश्च** 'कण्टकक्षीरवृक्षोत्थं द्वादशाङ्गुलसंमितम् । कनिष्ठिकाग्रवत्स्थूलं पूर्वार्धकृतकूर्चकम् । दन्तधावनमुद्दिष्टं जिह्वोल्लेखनिका तथेति' । अत्र 'वृक्षोत्थमि'त्यनेन तृणलोष्ठाङ्गुल्यादि-

निषेधः । पलाशाश्वत्थादिनिषेधश्च स्मृत्यन्तरोक्तो द्रष्टव्यः । **दन्तधावनमन्त्रश्च** । 'आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च । ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते' इति । ब्रह्मचारिप्रकरणोक्तस्यापि संध्यावन्दनस्य पुनर्वचनं दन्तधावनपूर्वकत्वप्रतिपादनार्थम् । 'दन्तधावननृत्यगीतादि ब्रह्मचारी वर्जयेदिति' तन्निषेधात् ॥ ९८ ॥

**हुत्वाऽग्नीन्सूर्यदैवत्यान् जपेन्मन्त्रान्समाहितः ।**
**वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च ॥ ९९ ॥**

प्रातःसंध्यावन्दनानन्तरं **अग्नीना**हवनीयादीन् यथोक्तेन विधिना **हुत्वा** औपासनाग्निं वा । तदनन्तरं सूर्यदैवत्यान् 'उदुत्यं जातवेदसमि'त्यादी**न्मन्त्रान्जपेत्समाहितः** अविक्षिप्तचित्तः । तदनन्तरं **वेदार्थान्नि**रुक्तव्याकरणादिश्रवणे**नाधिगच्छे**ज्जानीयात् **च**कारादधीत चाभ्यसेत् । **विविधानि च शास्त्राणि** मीमांसाप्रभृतीनि धर्मार्थारोग्यप्रतिपादकान्यधिगच्छेत् ॥ ९९ ॥

**उपेयादीश्वरं चैव योगक्षेमार्थसिद्धये ।**
**स्नात्वा देवान्पितॄंश्चैव तर्पयेदर्चयेत्तथा ॥ १०० ॥**

तदनन्तर**मीश्वर**मभिषेकादिगुणयुक्तमन्यं वा श्रीमन्तं अकुत्सितं योगक्षेमार्थं । अलब्धलाभो **योगः** लब्धपरिपालनं **क्षेम** तदर्थ**मुपेयादु**पासीत । उपेयादित्यनेन सेवां प्रतिषेधयति । वेतनग्रहणेनाज्ञाकरणं **सेवा** तस्याः श्ववृत्तित्वेन निषेधात् । ततो मध्यान्हे शास्त्रोक्तेन विधिना नद्यादिषु **स्नात्वा देवान्स्व**गृह्योक्तान् **पितॄंश्च** चकारादृषींश्च देवादितीर्थेन **तर्पयेत्** । तदनन्तरं गन्धपुष्पाक्षतैः हरिहरहिरण्यगर्भप्रभृतीनामन्यतमं यथावासनं ऋग्यजुःसाममन्त्रैस्तत्प्रकाशकैः स्वनामभिर्वा चतुर्थ्यन्तैर्नमस्कारयुक्तैराराधयेत् यथोक्तविधिना ॥ १०० ॥

**वेदाथर्वपुराणानि सेतिहासानि शक्तितः ।**
**जपयज्ञप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत् ॥ १०१ ॥**

तदनन्तरं वेदाथर्वेतिहासपुराणानि समस्तानि व्यस्तानि वा **आध्यात्मिकीं च विद्यां** जपयज्ञसिद्ध्यर्थं यथोक्तेन विधिना यथाशक्ति **जपेत्** ॥ १०१ ॥

**बलिकर्मस्वधाहोमस्वाध्यायातिथिसत्क्रियाः ।**
**भूतपित्रमरब्रह्ममनुष्याणां महामखाः ॥ १०२ ॥**

**बलिकर्म** भूतयज्ञः । **स्वधा** पितृयज्ञः । **होमो** देवयज्ञः । **स्वाध्यायो** ब्रह्मयज्ञः । **अतिथिसत्क्रिया** मनुष्ययज्ञः । एते पञ्च महायज्ञा अहरहः कर्तव्याः नित्यत्वात् । यत्पुनरेषां फलश्रवणं तदेषां पावनत्वख्यापनार्थं न काम्यप्रतिपादनाय ॥ १०२ ॥

**देवेभ्यश्च हुतादन्नाच्छेषाद्भूतबलिं हरेत् ।**
**अन्नं भूमौ श्वचाण्डालवायसेभ्यश्च निक्षिपेत् ॥ १०३ ॥**

स्वगृह्योक्तेन विधिना वैश्वदेवहोमं कृत्वा तदवशिष्टेनान्नेन भूतेभ्यो **बलिं हरेत्** । अन्नग्रहणम-पक्वव्युदासार्थम् । तदनन्तरं यथाशक्ति **भूमावन्नं श्वचाण्डालवायसेभ्यो निक्षिपेत्** । चशब्दा-त्कृमिपापिरोगिपतितेभ्यः । यथाह **मनुः** । (अ. ३ श्लो. ९२) 'शुनां च पतितानां च श्वपचां पापरो-गिणाम् । वायसानां कृमीणां च शनकैर्निक्षिपेद्भुवीति' । एतच्च सायंप्रातः कर्तव्यम् । 'अथ सायंप्रातः ५ सिद्धस्य हविष्यस्य जुहुयादि'**त्याश्वलायन**स्मरणात् ।

इह केचिद्वैश्वदेवाख्यस्य कर्मणः पुरुषार्थत्वमन्नसंस्कारकर्मत्वं चेच्छन्ति । 'अथ सायंप्रातः सिद्धस्य हविष्यस्य जुहुयादि'त्यन्नसंस्कारकर्मता प्रतीयते । 'अथातः पञ्च महायज्ञा' इत्युपक्रम्य 'तानेतानहरहः कुर्वीतेति' नित्यत्वाभिधानात्पुरुषार्थत्वं चावगम्यत इति तदयुक्तम् । पुरुषार्थत्वेऽन्न-संस्कारकर्मत्वानुपपत्तेः । तथा हि । द्रव्यसंस्कारकर्मत्वपक्षेऽन्नार्थता वैश्वदेवकर्मणः । पुरुषार्थत्वे वैश्व-१० देवकर्मार्थता द्रव्यस्येति परस्परविरोधात्पुरुषार्थत्वमेव युक्तम् । 'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुरिति' । तथा 'वैश्वदेवे निवृत्ते तु यद्यन्योऽतिथिराव्रजेत् । तस्मा अन्नं यथाशक्ति प्रदद्यान्न बलिं हरेदिति' **मनु**स्मरणात् (अ. ३ श्लो. १०८) । पुरुषार्थत्वे वैश्वदेवाख्यं कर्म न प्रतिपाकमावर्त-नीयम् । तस्मा'दथ सायं प्रातरि'त्यादिनोत्पत्तिप्रयोगौ दर्शितौ । तानेतान्यज्ञानहरहरः कुर्वीतेति अधिकारविधिरिति सर्वमनवद्यम् ॥ १०३ ॥

१५ **अन्नं पितृमनुष्येभ्यो देयमप्यन्वहं जलम् ।**
**स्वाध्यायं चान्वहं कुर्यान्न पचेदन्नमात्मने ॥ १०४ ॥**

प्रत्यह**मन्नं पितृभ्यो मनुष्येभ्यश्च** यथाशक्ति **देयम्**। अन्नाभावे कन्दमूलफलादि । तस्याप्य-भावे **जलं** देयम् । अपिशब्दात् **स्वाध्यायं** सततं **कुर्यात्** अविस्मरणार्थम् । **न पचेदन्नमात्मा-र्थम्**। अन्नग्रहणं सकलादनीयद्रव्यप्रदर्शनार्थम् । कथं तर्हि देवताद्युद्देशेनैव ॥ १०४ ॥

२० **बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः ।**
**संभोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम् ॥ १०५ ॥**

परिणीता पितृगृहे स्थिता **स्ववासिनी** । शेषाः प्रसिद्धाः । बालादी**नतिथिभृत्यांश्च संभोज्य** भोजयित्वा **दम्पत्योः शेषभोजनं** कर्तव्यम् ॥ १०५ ॥

**आपोशनेनोपरिष्टादधस्तादश्नता तथा ।**
२५ **अनग्नममृतं चैव कार्यमन्नं द्विजन्मना ॥ १०६ ॥**

भुञ्जानेन द्विजन्मना **उपरिष्टादधस्ताच्चापोशनाख्येन** कर्मणा**ऽन्नमनग्नममृतं च कार्यम्**। द्विजन्मग्रहणमुपनयनप्रभृति सर्वाश्रमसाधारणार्थम् ॥ १०६ ॥

**अतिथित्वेन वर्णानां देयं शक्त्याऽनुपूर्वशः ।**
**अप्रणोद्योऽतिथिः सायमपि वाग्भूतृणोदकैः ॥ १०७ ॥**

वैश्वदेवानन्तरं **वर्णानां** ब्राह्मणादीनां **अतिथित्वेन** युगपत्प्राप्तानां ब्राह्मणाद्यानुपूर्व्येण यथाशक्ति **देयम् । सायं**कालेऽपि यद्यतिथिरागच्छति तदा असाव**प्रणोद्यः** अप्रत्याख्याय एव। तथाह **मनुः** ( अ. ३ श्लो. १०१ )। " तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता । एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचनेति "। यद्यप्यदनीयं किमपि नास्ति तथापि **वाग्भूतृणोदकैरपि** सत्कारं कुर्यात् ॥ १०७ ॥

**सत्कृत्य भिक्षवे भिक्षा दातव्या सुव्रताय च ।** ५
**भोजयेच्चागतान्काले सखिसंबन्धिबान्धवान् ॥ १०८ ॥**

**भिक्षवे** सामान्येन **भिक्षा दातव्या । सुव्रताय** ब्रह्मचारिणे यतये च **सत्कृत्य** स्वस्तिवाच्य ' भिक्षादानमपूर्वमि'त्यनेन विधिना भिक्षा दातव्या । भिक्षा च ग्राससंमिता । ग्रासश्च मयूराण्डपरिमाणः । ' ग्रासमात्रा भवेद्भिक्षा पुष्कलं तच्चतुर्गुणम् । हंतस्तु तैश्चतुर्भिः स्यादग्रं तत्त्रिगुणं भवेदिति ' **शातातप**स्मरणात् । भोजनकाले चागता**न्सखिसंबन्धिबान्धवान् भोजयेत् ।** सखायो मित्राणि । १० संबन्धिनो येभ्यः कन्या गृहीता दत्ता वा । मातृपितृसंबन्धिनो बान्धवाः ॥ १०८ ॥

**महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत् ।**
**सत्क्रियान्वासनं स्वादु भोजनं सूनृतं वचः ॥ १०९ ॥**

महान्तमुक्षाणं धौरेयं **महाजं** वा **श्रोत्रियायो**क्तलक्षणा**योपकल्पयेत् ।** ' भवदर्थमयमस्माभिः परिकल्पित ' इति त्वत्प्रीत्यर्थं न तु दानाय व्यापादनाय वा । यथा 'सर्वमेतद्भवदीयमिति' । प्रतिश्रोत्रि- १५ यमुक्षासंभवात्, ' अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न त्विति ' निषेधाच्च । तस्मात्सत्क्रिया कर्तव्या । **सत्क्रिया** स्वागतवचनासनपाद्यार्घ्याचमनादिदानम् । तस्मिन्नुपविष्टे पश्चादुपवेशन**मन्वासनम् । स्वादु भोजनं** मिष्टमशनम् । **सूनृतं वचः** । 'धन्या वयमद्य भवदागमनादि'त्येवमादि । 'अश्रोत्रिये पुनरश्रोत्रियस्योदकासने ' इति **गौतमोक्तं** ( अ. ५ सू. २९ ) वेदितव्यम् ॥ १०९ ॥

**प्रतिसंवत्सरं त्वर्घ्याः स्नातकाचार्यपार्थिवाः ।** २०
**प्रियो विवाह्यश्च तथा यज्ञं प्रत्यृत्विजः पुनः ॥ ११० ॥**

**स्नातको** विद्यास्नातकः व्रतस्नातकः विद्याव्रतस्नातक इति । समाप्य वेदमसमाप्य व्रतं यः समावर्तते स **विद्यास्नातकः** । समाप्य व्रतमसमाप्य वेदं यः समावर्तते स **व्रतस्नातकः** । उभयं समाप्य यः समावर्तते स **विद्याव्रतस्नातकः । आचार्य** उक्तलक्षणः । वक्ष्यमाणलक्षणः **पार्थिवः । प्रियो** मित्रः । **विवाह्यो** जामाता । **च**कारात् श्वशुरपितृव्यमातुलादीनां ग्रहणम् । ' ऋत्विजो वृत्वा मधुपर्क- २५ माहरेत्स्नातकायोपस्थिताय राज्ञे चाचार्याय च श्वशुरपितृव्यमातुलानां चे'**त्याश्वलायन**स्मरणात् । एते स्नातकादयः **प्रतिसंवत्सरं** गृहमागता अर्च्याः मधुपर्केण संपूज्याः वन्दितव्याः । अर्घशब्दो मधुपर्कं लक्षयति । ऋत्विजश्चोक्तलक्षणाः संवत्सरादर्वागपि प्रतियज्ञं मधुपर्केण संपूज्याः ॥ ११० ॥

**अध्वनीनोऽतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः ।**
**मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः ॥ १११ ॥** ३०

अध्वनि वर्तमानो**ऽतिथिर्वे**दितव्यः । श्रोत्रियवेदपारगावध्वनि वर्तमानौ ब्रह्मलोकमभीप्सतो गृहस्थस्य **मान्यावतिथी** वेदितव्यौ । यद्यप्यध्ययनमात्रेण श्रोत्रियस्तथापि 'श्रुताध्ययनसंपन्नो'ऽत्र श्रोत्रियोऽभिधीयते । एकशाखाध्ययनक्षमो **वेदपारगः** ॥ १११ ॥

**परपाकरुचिर्न स्यादनिन्द्यामन्त्रणादृते ।**
**वाक्पाणिपादचापल्यं वर्जयेच्चातिभोजनम् ॥ ११२ ॥**

परपाके रुचिर्यस्यासौ स **परपाकरुचिः । नैव** परपाकरुचिः स्यात् । अनिन्द्येनामन्त्रणं विना । 'अनिन्द्येनामन्त्रितो नापक्रामेदिति' स्मरणात् । **वाक्पाणिपादचापल्यं** वाक्च पाणी च पादौ च वाक्पाणिपादं तस्य चापल्यं **वर्जयेत्** । वाक्चापल्यं असभ्यानृतादिभाषणम् । पाणिचापल्यं पल्याणास्फोटनादि । पादचापल्यं लङ्घनोत्प्लवनादि । चकारान्नेत्रादिचापल्यं वर्जयेत् । 'न शिश्नोदरपाणिपादचक्षुर्वाक्चापलानि कुर्यादिति' **गौतम**स्मरणात् ( अ. ९ सू. ५० ) । अतिभोजनं च वर्जयेत् । अनारोग्यहेतुत्वात् ॥ ११२ ॥

**अतिथिं श्रोत्रियं तृप्तमासीमान्तमनुव्रजेत् ।**
**अहःशेषं समासीत शिष्टैरिष्टैश्च बन्धुभिः ॥ ११३ ॥**

पूर्वोक्तं **श्रोत्रियातिथिं** वेदपारगातिथिं च भोजनादिना **तृप्तं सीमान्तं** यावद**नुव्रजेत्** । ततो भोजनानन्तरमहःशेषं **शिष्टै**रितिहासपुराणादिवेदिभिः **इष्टैश्च** काव्यकथाप्रपञ्चचतुरैः **बन्धुभिश्चा**नुकूलालापकुशलैः सहासीत ॥ ११३ ॥

**उपास्य पश्चिमां संध्यां हुत्वाऽग्नींस्तानुपास्य च ।**
**भृत्यैः परिवृतो भुक्त्वा नातितृप्याथ संविशेत् ॥ ११४ ॥**

ततः पूर्वोक्तेन विधिना **पश्चिमां संध्यामुपास्य अग्नि**मग्नीन्वा **हुत्वा तानुपास्यो**पस्थाय **भृत्यैः** पूर्वोक्तैः स्ववासिन्यादिभिः **परिवृतो नातितृप्य भुक्त्वा** चकारादायव्ययादिगृहचिन्तां निर्वर्त्यानन्तरं संविशेत् स्वप्यात् ॥ ११४ ॥

**ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हितम् ।**
**धर्मार्थकामान्स्वे काले यथाशक्ति न हापयेत् ॥ ११५ ॥**

ततो **ब्राह्मे मुहूर्ते उत्थाय** पश्चिमेऽर्धप्रहरे प्रबुद्ध्य**आत्मनो हितं** कृतं करिष्यमाणं च वेदार्थसंशयांश्च **चिन्तयेत्** । तदानीं चित्तस्याव्याकुलत्वेन तत्त्वप्रतिभासयोग्यत्वात् । ततो **धर्मार्थकामान्स्वो**चितकाले **यथाशक्ति न** परित्यजेत् यथासंभवं सेवेतेत्यर्थः । पुरुषार्थत्वात् । यथाह **गौतमः** ( अ. ९ सू. ४६।४७ )। 'न पूर्वाह्णमध्यन्दिनापराह्णानफलान्कुर्यात् धर्मार्थकामेभ्यस्तेषु धर्मोत्तरः स्यादिति' । अत्र यद्यप्येतेषां सामान्येन सेवनमुक्तं तथाऽपि कामार्थयोर्धर्माविरोधेनानुष्ठानं तयोर्धर्ममूलत्वादेवं प्रतिदिनमनुष्ठेयम् ॥ ११५ ॥

**विद्याकर्मवयोबन्धुवित्तैर्मान्या यथाक्रमम् ।**
**एतैः प्रभूतैः शूद्रोऽपि वार्धके मानमर्हति ॥ ११६ ॥**

**विद्या** पूर्वोक्ता । **कर्म** श्रौतं स्मार्तं । **वयः** आत्मनोऽतिरिक्तं सप्तत्या वा ऊर्ध्वं । **बन्धुः** स्वजनसंपत्तिः । **वित्तं** ग्रामरत्नादिकं । एतैर्युक्ताः क्रमेण **मान्याः** पूजनीयाः । **एतै**र्विद्याकर्मबन्धुवित्तैः **प्रभूतैः** प्रवृद्धैः समस्तैर्व्यस्तैर्वा युक्तः **शूद्रोऽपि वार्धके** अशीतेरूर्ध्वं **मानमर्हति** । ' शूद्रोऽप्यशीतिको वर ' इति **गौतम**स्मरणात् ॥ ११६ ॥

**वृद्धभारिनृपस्नातस्त्रीरोगिवरचक्रिणाम् ।**
**पन्था देयो नृपस्तेषां मान्यः स्नातश्च भूपतेः ॥ ११७ ॥**

**वृद्धः** पक्वशरीरः प्रसिद्धः । **भारी** भाराक्रान्तः । **नृपो** भूपतिर्न क्षत्रियमात्रं । **स्नातो** विद्याव्रतोभयस्नातः । **स्त्री** प्रसिद्धा । **रोगी** व्याधितः । **वरो** विवाहोद्यतः । **चक्री** शाकटिकः । चकारान्मत्तोन्मत्तादीनां ग्रहणम् । ' बालवृद्धमत्तोन्मत्तोपहतदेहभाराक्रान्तस्त्रीस्नातकप्रव्रजितेभ्य ' इति **शङ्ख**स्मरणात् । एभ्यः **पन्था देयः** । एतेष्वाभिमुख्यागतेषु स्वयं पथोपक्रामेत् ।

वृद्धादीनां राज्ञा सह पथि समवाये राजा मान्य इति तस्मै पन्था देयः । भूपतेरपि स्नातको मान्यः । स्नातकग्रहणं स्नातकमात्रप्राप्त्यर्थं न ब्राह्मणाभिप्रायेण, तस्य सदैव गुरुत्वात् । यथाह **शङ्खः** । 'अथ ब्राह्मणायाग्रे पन्था देयो राज्ञ इत्येके । तच्चानिष्टं गुरुर्ज्येष्ठश्च ब्राह्मणो राजानमतिशेते तस्मै पन्था इति ' । वृद्धादीनां पथि परस्परसमवाये वृद्धतराद्यपेक्षया विद्यादिभिर्वा विशेषो द्रष्टव्यः ॥ ११७ ॥

**इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च ।**
**प्रतिग्रहोऽधिका विप्रे याजनाध्यापने तथा ॥ ११८ ॥**

**वैश्यस्य क्षत्रियस्य च** चकाराद्ब्राह्मणस्य द्विजानुलोमानां च **यागाध्ययनदानानि** साधारणानि कर्माणि ब्राह्मणस्याधिकानि प्रतिग्रहयाजनाध्यापनानि तथेति स्मृत्यन्तरोक्तवृत्त्युपसंग्रहः । यथाह **गौतमः** (अ. १० सू. ५-६) । 'कृषिवाणिज्ये वा स्वयंकृते । कुसीदं चेति' । अध्यापनं तु क्षत्रियवैश्ययोर्ब्राह्मणप्रेरितयोर्भवति । न स्वेच्छया । 'आपत्काले ब्राह्मणस्याब्राह्मणाद्विद्योपयोगोऽनुगमनं शुश्रूषा समाप्ते ब्राह्मणो गुरुरिति ' **गौतम**स्मरणात् (अ. ७ सू. १।३) । एतान्यनापदि ब्राह्मणस्य षट् कर्माणि । तत्र त्रीणीज्यादीनि धर्मार्थानि प्रतिग्रहादीनि वृत्त्यर्थानि । ' षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका । याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रह ' इति **मनु**स्मरणात् (अ. १० श्लो. ७६) । अत इज्यादीन्यवश्यं कर्तव्यानि न प्रतिग्रहादीनि । ' द्विजातीनामध्ययनमिज्या दानं । ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः । पूर्वेषु नियम ' इति **गौतम**स्मरणात् ( अ. १० सू. १।३ ) ॥ ११८ ॥

**प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम् ।**
**कुसीदकृषिवाणिज्यपाशुपाल्यं विशः स्मृतम् ॥ ११९ ॥**

**क्षत्रियस्य** प्रजापालनं **प्रधानं कर्म** धर्मार्थं वृत्त्यर्थं च । **वैश्यस्य कुसीदकृषिवाणिज्यपशुपालनानि** वृत्त्यर्थानि कर्माणि । **कुसीदं** वृद्ध्यर्थं द्रव्यप्रयोगः । लाभार्थं क्रयविक्रयौ **वाणिज्यं** । **शेषं** प्रसिद्धम् । 'शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्पशुकृषी विशः । आजीवनार्थं धर्मस्तु दानमध्ययनं यजिरिति ' **मनु**स्मरणात् ( अ. १० श्लो. ७९ ) ॥ ११९ ॥

**शूद्रस्य द्विजशुश्रूषा तयाऽजीवन्वणिग्भवेत् ।**
**शिल्पैर्वा विविधैर्जीवेद्द्विजातिहितमाचरन् ॥ १२० ॥**

**शूद्रस्य द्विजशुश्रूषा** प्रधानं कर्म । धर्मार्थं वृत्त्यर्थं च । तत्र ब्राह्मणशुश्रूषा परमो धर्मः । ' विप्रसेवैव शूद्रस्य विशिष्टं कर्म कीर्त्यते ' इति **मनु**स्मरणात् ( अ. १० श्लो. १२३ ) । यदा पुनर्द्विजशुश्रूषया जीवितुं न शक्नोति तदा **वणिग्**वृत्त्या जीवेत् । नानाविधैर्वा **शिल्पैर्द्वि**जातीनां हितं कुर्वन् यादृशैः कर्मभिः द्विजातिशुश्रूषायामयोग्यो न भवति तादृशानि कर्माणि कुर्वन्नित्यर्थः । तानि च **देवलो**कानि । ' **शूद्रधर्मो** द्विजातिशुश्रूषा पापवर्जनं कलत्रादिपोषणं कर्षणपशुपालनभारोद्वहनपण्यव्यवहारचित्रकर्मनृत्यगीतवेणुवीणामुरजमृदङ्गवादनादीनि ' ॥ १२० ॥

**भार्यारतिः शुचिर्भृत्यभर्ता श्राद्धक्रियापरः ।**
**नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत् ॥ १२१ ॥**

किंच **भार्या**यामेव न साधारणस्त्रीषु परस्त्रीषु वा **रति**रभिगमनं यस्य स तथोक्तः । **शुचिः** बाह्याभ्यन्तरशौचयुक्तः । द्विजवत् भृत्यादिभर्ता । **श्राद्धक्रियारतः** । श्राद्धानि नित्यनैमित्तिककाम्यानि च क्रियाः स्नातकव्रतानि अविरुद्धानि तेषु रतः । 'नम' इत्यनेन मन्त्रेण पूर्वोक्तान्**पञ्चमहायज्ञान**हरहर्न **हापयेत्** अनुतिष्ठेत् । नमस्कारमन्त्रं च केचित् । ' देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वाहायै स्वधायै नित्यमेव नमोनमः ' इति वर्णयन्ति । ' नम ' इत्यन्ये । ' तत्र वैश्वदेवं लौकिकेऽग्नौ कर्तव्यं न वैवाहिकेऽग्नावि'**त्याचार्याः** ॥ १२१ ॥

इदानीं साधारणधर्मानाह

**अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।**
**दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम् ॥ १२२ ॥**

हिंसा प्राणिपीडा तस्या अकरण**महिंसा** । **सत्यम**प्राणिपीडाकरं यथार्थवचनम् । **अस्तेयम**दत्तानुपादानम् । **शौचं** बाह्यमाभ्यन्तरं च । बुद्धिकर्मेन्द्रियाणां नियतविषयवृत्तिता **इन्द्रियनिग्रहः** । यथाशक्ति प्राणिनामन्नोदकादिदानेनार्तिपरिहारो **दानम्** । अन्तःकरणसंयमो **दमः** । आपन्नरक्षणं **दया** । अपकारेऽपि चित्तस्याविकारः **क्षान्तिः** । एते **सर्वेषां** पुरुषाणां ब्राह्मणाद्याचाण्डालान्तं **धर्मसाधनम्** ॥ १२२ ॥

**वयोबुद्ध्यर्थवाग्वेषश्रुताभिजनकर्मणाम् ।**
**आचरेत्सदृशीं वृत्तिमजिह्मामशठां तथा ॥ १२३ ॥**

**वयो** बाल्ययौवनादि । **बुद्धि**र्नैसर्गिकी लौकिकवैदिकव्यवहारेषु । **अर्थो** वित्तं गृहक्षेत्रादि । **वाक्** कथनं । **वेषो** वस्त्रमाल्यादिविन्यासः । **श्रुतं** पुरुषार्थशास्त्रश्रवणम् । **अभिजनः** कुलम् । **कर्म** वृत्त्यर्थं प्रतिग्रहादि । एतेषां वयःप्रभृतानां **सदृशी**मुचितां **वृत्ति**माचरणं **आचरे**त्स्वीकुर्यात् । यथा वृद्धः स्वोचितां न यौवनोचिताम् । एवं बुद्ध्यादिष्वपि योज्यम् । **अजिह्याम**वक्रां **अशठाम**मत्सराम् ॥ १२३ ॥

एवं स्मार्तानि कर्माण्यनुक्रम्येदानीं श्रौतानि कर्माण्यनुक्रामति

**त्रैवार्षिकाधिकान्नो यः स हि सोमं पिबेद्द्विजः ।**
**प्राक्सौमिकीः क्रियाः कुर्याद्यस्यान्नं वार्षिकं भवेत् ॥ १२४ ॥**

त्रिवर्षजीवनपर्याप्तं **त्रैवार्षिकं अधिकं** वा **अन्नं** यस्य स एव सोमपानं कुर्यात् नातोल्पधनः । ‘ अतस्त्वल्पीयसि द्रव्ये यः सोमं पिबति द्विजः । स पीतसोमपूर्वोऽपि न तस्याप्नोति तत्फलमिति ’ दोषश्रवणात् । एतच्च काम्याभिप्रायेण । नित्यस्य चावश्यकर्तव्यत्वान्न नियमः । यस्य जीवनपर्याप्तमन्नं भवति स **प्राक्सौमिकीः** सोमात्प्राक् प्राक्सोमं प्राक्सोमंभवाः प्राक्सौमिक्यः, कास्ताः अग्निहोत्रदर्शपूर्णमासपशुचातुर्मास्यानि कर्माणि तद्विकाराश्चैताः **क्रियाः कुर्यात्** ॥ १२४ ॥

एवं काम्यानि श्रौतानि कर्माण्यभिधायेदानीं नित्यान्याह

**प्रतिसंवत्सरं सोमः पशुः प्रत्ययनं तथा ।**
**कर्तव्याग्रयणेष्टिश्च चातुर्मास्यानि चैव हि ॥ १२५ ॥**

संवत्सरे संवत्सरे सोमयागः कार्यः । **पशुः प्रत्ययनं** अयने अयने दक्षिणोत्तरसंज्ञिते निरूढपशुयागः कार्यः । तथा प्रतिसंवत्सरं वा । ‘ पशुना संवत्सरे संवत्सरे यजेत षट्सु षट्सु वा मासेष्वित्येके ’ इति स्मरणात् । **आग्रयणेष्टिश्च** सस्योत्पत्तौ **कर्तव्या । चातुर्मास्यानि** च प्रतिसंवत्सरं कर्तव्यानि ॥ १२५ ॥

**एषामसंभवे कुर्यादिष्टिं वैश्वानरीं द्विजः ।**
**हीनकल्पं न कुर्वीत सति द्रव्ये फलप्रदम् ॥ १२६ ॥**

**एषां** सोमप्रभृतीनां पूर्वोक्तानां नित्यानां कथंचिद**संभवे** तत्काले **वैश्वानरीमिष्टिं कुर्यात्** । किंच योऽयं हीनकल्प उक्तः **सति द्रव्ये**ऽसौ न कर्तव्यः । यच्च **फलप्रदं** काम्यं **तद्धीनकल्पं न कुर्वीत** न कर्तव्यमिति ॥ १२६ ॥

**चाण्डालो जायते यज्ञकरणाच्छूद्रभिक्षितात् ।**
**यज्ञार्थं लब्धमददद्भासः काकोऽपि वा भवेत् ॥ १२७ ॥**

१ मनुस्मृतौ अ. ११ श्लो. ८०.

यज्ञार्थं शूद्रधनयाचनेन च जन्मान्तरे **चाण्डालो जायते**। यः पुनर्**यज्ञार्थं** याचितं सर्वं न प्रयच्छति न त्यजति स **भासः काको** वा वर्षशतं भवेत्। यथाह **मनुः** (अ. ११ श्लो. २५)। ' यज्ञार्थमर्थं भिक्षित्वा यः सर्वं न प्रयच्छति। स याति भासतां विप्रः काकतां वा शतं समा ' इति। **भासः** शकुन्तः। **काकः** प्रसिद्धः॥ १२७॥

५ कुशूलधान्यादिसंचयोपायमाह

## कुशूलकुम्भीधान्यो वा त्र्याहिकोऽश्वस्तनोऽपि वा।

कुशूलं कोष्टकं कुम्भी उष्ट्रिका। कुशूलं च कुम्भी च कुशूलकुम्भ्यौ ताभ्यां परिमितं धान्यं यस्य स तथोक्तः **कुशूलधान्यः** स्यात्**कुम्भीधान्यो** वा। तत्र स्वकुटुम्बपोषणे द्वादशाहमात्र-पर्याप्तं धान्यं यस्यास्ति स **कुशूलधान्यः। कुम्भीधान्यस्तु** स्वकुटुम्बपोषणे षडहमात्रपर्याप्तधान्यः।
१० त्र्यहःपर्याप्तं धान्यमस्यास्तीति **त्र्याहिकः**। श्वो भवं धान्यमस्यास्तीति श्वस्तनः। न विद्यते श्वस्तनं यस्य सोऽ**श्वस्तनः**॥

## जीवेद्वाऽपि शिलोञ्छेन श्रेयानेषा परः परः॥ १२८॥

शाल्यादिनिपतितपरित्यक्तवल्लरीग्रहणं **शिलं**। एकैकस्य परित्यक्तस्य कणस्योपादान**मुञ्छः**। शिलं चोञ्छश्च शिलोञ्छं तेन **शिलोञ्छेन** वा। कुशूलधान्यादिश्चतुर्विधो गृहस्थो **जीवेत्। एषां**
१५ कुशूलधान्यादीनां ब्राह्मणानां चतुर्णां **परः परः** पश्चात्पश्चात्पठितः **श्रेयान्**उत्कृष्टतमः प्रशस्यतमः।

एतच्च यद्यपि द्विजः प्रकृतस्तथाऽपि ब्राह्मणस्यैव भवितुमर्हतीति विधोपशमनादियोगात्। तथा च **मनुः** (अ. ४ श्लो. २) ' अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः। या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदीति '। विप्रमेव प्रस्तुत्य ' कुशूलधान्यको वा स्यात्कुम्भीधान्यक एव वा ' इत्याद्यभिहितत्वात् (अ. ४ श्लो. ७)।

एतच्चातिसंपन्नं संयतं यायावरं प्रत्युच्यते न विप्रमात्राभिप्रायेण। तथा सति ' त्रैवार्षिकाधिकान्नो
२० यः स हि सोमं पिबेद्द्विज ' इत्यनेन विरोधः। तथा च गृहस्थानां द्वैविध्यं तत्र तत्रोक्तम्। यथाह **देवलः**। ' द्विविधो गृहस्थो यायावरः शालीनश्च। तयोर्यायावरः प्रवरः याजनाध्यापनप्रतिग्रहरिक्थ-संचयवर्जनात्। षट्कर्माधिष्ठितः प्रेष्यचतुष्पदगृहग्रामधनधान्ययुक्तो लोकानुवर्ती शालीन इति '।

शालीनोऽपि चतुर्विधः याजनाध्यापनप्रतिग्रहकृषिवाणिज्यपाशुपाल्यैः षड्भिर्जीवत्येकः। याजना-दिभिस्त्रिभिरन्यः। याजनाध्यापनाभ्यामपरः। चतुर्थस्त्वध्यापनेनैव। तथाह **मनुः** (अ. ४ श्लो. ९)।
२५ 'षट्कर्मैको भवत्येषां त्रिभिरन्यः प्रवर्तते। द्वाभ्यामेकश्चतुर्थश्च ब्रह्मसत्रेण जीवतीति '। अत्र च ' प्रतिग्र-होऽधिको विप्र '[1] इत्यादिना शालीनस्य वृत्तयो दर्शिताः। यायावरस्य ' जीवेद्वाऽपि शिलोञ्छेनेति '॥ १२८॥

इति गृहस्थधर्मप्रकरणम्

१ याज्ञवल्कीये आचाराध्ये १२४ श्लोकः

## अथ स्नातकधर्मप्रकरणम् ६

एवं श्रौतस्मार्तानि कर्माणि गृहस्थस्याभिधायेदानीं स्नानादारभ्य ब्राह्मणस्यावश्यकर्तव्यानि विधिप्रतिषेधात्मकानि मानससंकल्परूपाणि स्नातकव्रतान्याह

**न स्वाध्यायविरोध्यर्थमीहेत न यतस्ततः ।**
**न विरुद्धप्रसंगेन संतोषी च भवेत्सदा ॥ १२९ ॥**

ब्राह्मणस्य प्रतिग्रहादयोऽर्थप्राप्त्युपायां दर्शिताः तत्र विशेष उच्यते । **स्वाध्यायविरोधि**न**मर्थं अप्रतिषिद्धमपि **नेहेत** नान्विच्छेत । **न यतस्ततः** कुतश्चिदविदिताचारात् । **न विरुद्धप्रसंगेन** विरुद्धमयाज्ययाजनादिप्रसंगो नृत्यगीतादिर्विरुद्धं च प्रसंगश्च विरुद्धप्रसंगं तेन नार्थमीहेतेति संबध्यते । नञ आवृत्तिः प्रत्येकं पर्युदासार्था । सर्वत्राप्यस्मिन्स्नातकप्रकरणे नञ्शब्दः पर्युदासार्थ एव । किंच । अर्थालाभेऽपि **संतोषी** परितृप्तो **भवेत्** । चकारात्संयतश्च । 'संतोषं परमास्थाय सुखार्थी संयतो भवेदिति' **मनुस्मरणात्** ( अ. ४ श्लो. १२ ) ॥ १२९ ॥

ब्राह्मणस्यावश्यकर्तव्यानि स्नातकव्रतानि ।

१०

कुतस्तर्हि धनमन्विच्छेदित्याह

**राजान्तेवासियाजेभ्यः सीदन्निच्छेद्धनं क्षुधा ।**
**दम्भिहैतुकपाखण्डिबकवृत्तींश्च वर्जयेत् ॥ १३० ॥**

१५

**क्षुधा सीदन्**पीड्यमानः स्नातकः **राज्ञो** विदितवृत्तान्तात्, **अन्तेवासिनो** वक्ष्यमालक्षणात्, **याज्यात्** याजनार्हाच्च धनमाददीत । क्षुधा सीदन्नित्यनेन विभागादिप्राप्तकुटुम्बपोषणपर्याप्तधनो न कुतश्चिदर्थमन्विच्छेदिति गम्यते । किंच **दम्भिहैतुकादीन्**सर्वकार्येषु लौकिकवैदिकशास्त्रीयेषु **वर्जयेत्** । **च**काराद्विकर्मस्थबैडालवृत्तिकान् शठान् । यथाह **मनुः** ( अ. ४ श्लो. ३० ) । 'पाखण्डिनो विकर्मस्थान्बैडालव्रतिकान् शठान् । हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेदिति' । लोकरञ्जनार्थमेव कर्मानुष्ठायी **दम्भी** । युक्तिबलेन सर्वत्र संशयकारी **हैतुकः** । त्रैविद्यविरुद्धपरिगृहीताश्रमिणः **पाखण्डिनः** । बकवदस्य वर्तनमिति **बकवृत्तिः** । यथाह **मनुः** (अ. ४ श्लो. १९६) । 'अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः । शठो मिथ्याविनीतश्च बकवृत्तिरुदाहृत' इति । प्रतिषिद्धसेविनो विकर्मस्थाः । बिडालो मार्जारस्तस्य व्रतं स्वभावो यस्यासौ बिडालव्रतिकः । तस्य लक्षणमाह । **मनुः** (अ. ४ श्लो. १९५) । 'धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदाम्भिकः । बैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसंधिक' इति । शठः सर्वत्र वक्रः । एतैः संसर्गनिषेधादेव स्वयमेवंविधो न भवेदिति गम्यते ॥ १३० ॥

२०

२५

**शुक्लाम्बरधरो नीचकेशश्मश्रुनखः शुचिः ।**
**न भार्यादर्शनेऽश्नीयान्नैकवासा न संस्थितः ॥ १३१ ॥**

किंच । शुक्ले धौते अम्बरे वाससी धरतीति **शुक्लाम्बरधरः** । केशाश्च श्मश्रूणि च नखाश्च केशश्मश्रुनखं **नीचं** निकृत्तं **केशश्मश्रुनखं** यस्यासौ तथोक्तः । **शुचिरन्तर्बहिश्च** स्नानानुलेपनधूपस्रगादिभिः सुगंधी च भवेत् । यथाह **गौतमः** (अ. ९ सू. २।३ )। 'स्नातको नित्यं शुचिः। सुगन्धिः स्नानशील' इति । सुगन्धित्वविधानादेव निर्गन्धमाल्यस्य निषेधः । तथा च **गोभिलः** ।
५ 'नागन्धां स्रजं धारयेदन्यत्र हिरण्यरत्नस्रज' इति । सदा स्नातक एवंभूतो भवेत् । एतच्च सति संभवे । 'न जीर्णमलवद्वासा भवेच्च विभवे सतीति' स्मरणात् । **न च भार्याया दर्शने** तस्यां पुरतोऽवस्थितायाम**श्नीयात्** । अवीर्यवदपत्योत्पत्तिभयात् । तथा च **श्रुतिः** । 'जायाया अन्ते नाश्नीयादवीर्यवदपायं भवतीति' । अतस्तया सह भोजनं दूरादेव निरस्तम् । **न चैकवासाः न संस्थितः** उत्थित अश्नीयादिति संबध्यते ॥ १३१ ॥

१० **न संशयं प्रपद्येत नाकस्मादप्रियं वदेत् ।**
**नाहितं नानृतं चैव न स्तेनः स्यान्न वार्धुषी ॥ १३२ ॥**

किंच । कदाचिदपि **संशयं** प्राणविपत्तिसंशयावहं कर्म **न प्रपद्येत** न कुर्यात् । यथा व्याघ्रचौराद्युपहितदेशाक्रमणादि । **अकस्मान्निष्कारणं** किंचिदपि परुष**मप्रियं** उद्वेगकरं वाक्यं **न वदेत् । न चाहितं नानृतं** वा प्रियमपि । चकारादसभ्यं । बीभत्सकरं चाकस्मान्न वदेदिति
१५ संबध्यते । एतच्च परिहासादिव्यतिरेकेण । 'गुरुणाऽपि समं हास्यं कर्तव्यं कुटिलं विनेति' स्मरणात् । **न च स्तेनः** अन्यदीयस्यादत्तस्य ग्रहीता न स्यात् । प्रतिषिद्धवृद्ध्युपजीवी वार्धुषी । **न वार्धुषी** स्यात् ॥ १३२ ॥

**दाक्षायणी ब्रह्मसूत्री वेणुमान्सकमण्डलुः ।**
**कुर्यात्प्रदक्षिणं देवमृद्गोविप्रवनस्पतीन् ॥ १३३ ॥**

२० किंच दाक्षायणं सुवर्णं तदस्यास्तीति **दाक्षायणी** । ब्रह्मसूत्रं यज्ञोपवीतं तदस्यास्तीति **ब्रह्मसूत्री** । वैणवयष्टिमान् कमण्डलुमान्स्यादिति सर्वत्र संबन्धनीयम् । अत्र ब्रह्मचारिप्रकरणोक्तस्यापि यज्ञोपवीतस्य पुनर्वचनं द्वितीयप्राप्त्यर्थम् । यथाह **वसिष्ठः** (अ.१२।१४) । 'स्नातकानां तु नित्यं स्यादन्तेवासस्तथोत्तरम् । यज्ञोपवीते द्वे यष्टिः सोदकश्च कमण्डलुरिति' । अत्र च दाक्षायणीति सामान्याभिधानेऽपि कुण्डलधारणमेव कार्यम् । 'वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम् । यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले' इति **मनुस्मरणात्** (अ. ४ श्लो. ३६ )। तथा **देवं** देवतार्चां
२५ तीर्थात् **मृदमुद्धृतां, गां** ब्राह्मणं, **वनस्पतींश्च** अश्वत्थादीन् **प्रदक्षिणं कुर्यात्** । एतान्प्रदक्षिणतः कृत्वा व्रजेत् । एवं चतुष्पथादीनपि । 'मृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम् । प्रदक्षिणानि कुर्वीत प्रज्ञातांश्च वनस्पतीनिति' **मनुस्मरणात्** ( अ. ४ श्लो. ३९ ) ॥ १३३ ॥

**न तु मेहेन्नदीछायावर्त्मगोष्ठाम्बुभस्मसु ।**
३० **न प्रत्यग्न्यर्कगोसोमसंध्याम्बुस्त्रीद्विजन्मनः ॥ १३४ ॥**

**नद्यादिषु न मेहेत्** न मूत्रपुरीषोत्सर्गं कुर्यात् । एवं श्मशानादावपि । यथाह **शङ्खः** । ' न गोमयकृष्टोप्तशाद्वलचितिश्मशानवर्त्मखलपर्वतपुलिनेषु मेहेत् । भूताधारत्वादिति ' । तथाऽग्न्यादीन्प्रति अग्न्यादीनामभिमुखं न मेहेत् । नाप्येतान्पश्यन् । यथाह **गौतमः** (अ. ९ सू. १३।१४ ) । ' न वाय्वग्निविप्रादित्यापोदेवतागाश्च प्रतिपश्यन्वा मूत्रपुरीषामेध्यान्युदस्येत् । ' देवताः प्रति पादौ प्रसारयेत्[1] । एतद्देशव्यतिरेकेण भूमिमयज्ञियैस्तृणैरन्तर्धाय मूत्रपुरीषे कुर्यादिति । यथाह **वसिष्ठः** (अ. १२।१३)। ५ ' परिवेष्टितशिरा भूमिमयज्ञियैस्तृणैरन्तर्धाय मूत्रपुरीषे कुर्यादिति ' ॥ १३४ ॥

**नेक्षेतार्कं न नग्नां स्त्रीं न च संसृष्टमैथुनाम् ।**
**न च मूत्रं पुरीषं वा नाशुची राहुतारकाः ॥ १३५ ॥**

नैवार्कमीक्षेत । यद्यपि सामान्येनोक्तं तथाऽपि उदयास्तमयराहुग्रस्तोदकप्रतिबिम्बमध्याह्नवर्तिन एवादित्यस्यावेक्षणं निषिध्यते न सर्वदा । यथोक्तं **मनुना** (अ. ४ श्लो. ३७) । नेक्षेतोद्यन्तमादित्यं १० नास्तं यान्तं कदाचन । नोपसृष्टं न वारिस्थं न मध्यं नभसो गतमिति ' । उपभोगादन्यत्र नग्नां स्त्रियं नेक्षेत । ' अन्यत्र मैथुनादि'त्या**श्वलायनः** । **संसृष्टमैथुनां** कृतोपभोगां उपभोगान्ते अनग्नामपि नेक्षेत । **च**काराद्भोजनादिकमाचरन्तीम् । तथाच **मनुः** । (अ. ४ श्लो. ४३।४४) 'नाश्नीयाद्भार्यया सार्धं नैनामीक्षेत चाश्नतीम् । क्षुवतीं जृम्भमाणां च न चासीनां यथासुखम् ॥ नाञ्जयन्तीं स्वके नेत्रे न चाभ्यक्तामनावृताम् । न पश्येत्प्रसवन्तीं च श्रेयस्कामो द्विजोत्तम ' इति । **मूत्रपुरीषे च न** पश्येत् । १५ तथा **अशुचिः** सन् **राहुतारका**श्च न पश्येत् । चकारादुदके स्वप्रतिबिम्बं न पश्येत् ' न चोदके निरीक्षेत स्वरूपमिति धारणे'ति वचनात् ॥ १३५ ॥

**अयं मे वज्र इत्येवं सर्वं मन्त्रमुदीरयेत् ।**
**वर्षत्यप्रावृतो गच्छेत्स्वपेत्प्रत्यक्शिरा न च ॥ १३६ ॥**

**वर्षति** सति ' **अयं मे वज्रः** पाप्मानमपहन्त्विति ' **मन्त्र**मुच्चारयेत् । **अप्रावृतो गच्छेत्** २० अनाच्छादित इयात् । ' न प्रधावेच्च वर्षतीति ' प्रतिषेधात् । **न च प्रत्यक्शिराः स्वप्यात्** । **च**कारान्नग्नो न शयीत । ' एकश्च शून्यगृहे । न च नग्नः शयीतेति ' । ' नैकः स्वप्याच्छून्यगृहे ' इति च **मनु**स्मरणात् ( अ. ४ श्लो. ५७ ) ॥ १३६ ॥

**ष्ठीवनासृक्शकृन्मूत्ररेतांस्यप्सु न निक्षिपेत् ।**
**पादौ प्रतापयेन्नाग्नौ न चैनमभिलङ्घयेत् ॥ १३७ ॥**

**ष्ठीवन**मुद्गिरणं **असृ**ग्रक्तं **शकृत्** पुरीषं शेषं प्रसिद्धं । एता**न्यप्सु न निक्षिपेत्** । एवं तुषादीनपि । यथाह **शङ्खः** । ' तुषकेशपुरीषभस्मास्थिश्लेष्मनखलोमान्यप्सु न निक्षिपेत् । पादेन पाणिना वा जलं नाभिहन्यादिति ' । **अग्नौ** च **पादौ न प्रतापयेत्** । **नाप्यग्निं लङ्घयेत्** ।

---

[1] ' नैतान्प्रतिपादौ प्रसारणं ' इत्यपरः पाठः ।

**चकारात्** ष्ठीवनादीन्यग्नौ न क्षिपेत्। मुखोपधमनादि चाग्नेर्न कुर्यात्। तथाच **मनुः**। (अ. ४ श्लो. ५३।५४)। 'नाग्निं मुखेनोपधमेन्नग्नां नेक्षेत च स्त्रियम्। नामेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत्॥ अधस्तान्नोपदध्याच्च न चैनमभिलङ्घयेत्। न चैनं पादतः कुर्यान्न प्राणाबाधमाचरेदिति'॥ १३७॥

५ **जलं पिबेन्नाञ्जलिना न शयानं प्रबोधयेत्।**
**नाक्षैः क्रीडेन्न धर्मघ्नैर्व्याधितैर्वा न संविशेत्॥ १३८॥**

**जलमञ्जलिना** संहताभ्यां हस्ताभ्यां **न पिबेत्**। जलग्रहणं पेयमात्रोपलक्षणम्। विद्यादिभिरात्मनोऽधिकं **शयानं न प्रबोधयेत्** नोत्थापयेत्। 'श्रेयांसं न प्रबोधयेदिति' विशेषात्। **अक्षादिभिर्न क्रीडेत्। धर्मघ्नैः** पशुलम्भनादिभिर्न क्रीडेत्। **व्याधितै**र्ज्वराद्यभिभूतैरेकत्र **न संविशेत्** १० न शयीत॥ १३८॥

**विरुद्धं वर्जयेत्कर्म प्रेतधूमं नदीतरम्।**
**केशभस्मतुषाङ्गारकपालेषु च संस्थितिम्॥ १३९॥**

जनपदग्रामकुलाचारा**विरुद्धं कर्म वर्जयेत्। प्रेतधूमं** च। बाहुभ्यां नदीतरणं वर्जयेदिति संबध्यते। **केशादिषु संस्थितिं** वर्जयेत्। चकारादस्थिकार्पासामेध्येषु॥ १३९॥

१५ **नाचक्षीत धयन्तीं गां नाद्वारेण विशेत्क्वचित्।**
**न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः॥ १४०॥**

परस्य क्षीरादिपिबन्तीं गां परस्मै **नाचक्षीत** न च निवर्तयेत्। **अद्वारेण** कुपथेन **क्वचि**दपि नगरे ग्रामे मन्दिरे वा न **प्रविशेत्। न** च कृपणस्य शास्त्रातिक्रमकारिणो **राज्ञः** सकाशा**त्प्रतिगृह्णीयात्**॥ १४०॥

२० **प्रतिग्रहे सूनिचक्रिध्वजिवेश्या नराधिपाः।**
**दुष्टा दशगुणं पूर्वात्पूर्वादेते यथाक्रमम्॥ १४१॥**

**प्रतिग्रहेषु** साध्येषु च सून्यादयः पञ्च **पूर्वस्मात्पूर्वस्मा**त्परः परो **दशगुणं दुष्टः**। सूना प्राणिहिंसा साऽस्यातीति **सूनी** प्राणिहिंसापरः। **चक्री** तैलिकः। **ध्वजी** सुराविक्रयी। **वेश्या** पण्यस्त्री। **नराधिपः** अनन्तरोक्तः॥ १४१॥

अथाध्ययनधर्मानाह

२५ **अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा।**
**हस्ते नौषधिभावे वा पञ्चम्यां श्रावणस्य तु॥ १४२॥**

अधीयन्त **इत्यध्याया** वेदास्तेषा**मुपाकर्म** उपक्रममोषधीनां प्रादुर्भावे सति श्रावणमासस्य **पौर्णमास्यां, श्रवण**नक्षत्रयुते वा दिने, हस्तेन युतायां पञ्चम्यां वा स्वगृह्योक्तविधिना कुर्यात्।

यदा तु श्रावणमासे ओषधयो न प्रादुर्भवन्ति तदा भाद्रपदे मासे श्रवणनक्षत्रे कुर्यात् । तत ऊर्ध्वं सार्धचतुरो मासान्वेदानधीयीत । तथा च **मनुः** । ( अ. ४ श्लो. ९६ ) 'श्रावण्यां प्रौष्ठपद्यां वाऽप्युपाकृत्य यथाविधि । युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमानिति' ॥ १४२ ॥

**पौषमासस्य रोहिण्यामष्टकायामथापि वा ।**
**जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिः ॥ १४३ ॥**

**पौषमासस्य रोहिण्यामष्टकायां वा** ग्रामात् **बहिर्जल**समीपं **छन्दसां** वेदानां स्वगृह्योक्त-विधिनोत्सर्गं **कुर्यात्** ।

यदा पुनर्भाद्रपदे मासे उपाकर्म तदा माघशुक्लप्रथमदिवसे उत्सर्गं कुर्यात् । यथोक्तं **मनुना** । ( अ. ४ श्लो. ९६ ) । 'पौषे तु छन्दसां कुर्याद्बहिरुत्सर्जनं बुधः । माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनीति' । तदनन्तरं पक्षिणीमहोरात्रं वा विरम्य शुक्लपक्षेषु वेदान् कृष्णपक्षेष्वङ्गान्यधीयीत । यथाह **मनुः** । (अ. ४ श्लो. ९७।९८ ) 'यथाशास्त्रं तु कृत्वैवमुत्सर्गं छन्दसां बहिः । विरमेत्पक्षिणीं रात्रिं यद्वाऽप्येकमहर्निशम् । अत ऊर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत् । वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु संपठेदिति' ॥ १४३ ॥

उत्सर्जन-संस्कारकालः ।

अनध्यायानाह

**त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु ।**
**उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये तथा ॥ १४४ ॥**

उक्तेन मार्गेणाधीयानस्य **शिष्यर्त्विग्गुरुबन्धुषु प्रेतेषु** मृतेषु **त्र्यहमनध्यायः** । त्रीन-होरात्रानध्ययनं वर्जयेत् । **उपाकर्मणि उत्सर्गा**ख्ये कर्मणि कृते त्र्यहमनध्यायः । उत्सर्गे तु **मनू**क्तपक्षिण्यहोरात्राभ्यां सहास्य विकल्पः । **स्वशाखाश्रोत्रिये** स्वशाखाध्यायिनि प्रेते च त्र्यह-मनध्यायः ॥ १४४ ॥

**संध्यागर्जितनिर्घातभूकम्पोल्कानिपातने ।**
**समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥ १४५ ॥**

संध्यायां मेघध्वनौ निर्घाते आकाशे उत्पातध्वनौ भूमिचलने उल्कापतने मन्त्रस्य ब्राह्मणस्य वा समाप्तौ आरण्यकाध्ययने च **द्युनिशम**होरात्रमनध्यायः ॥ १४५ ॥

**पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके ।**
**ऋतुसंधिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य च ॥ १४६ ॥**

**पञ्चदश्याम**मावास्यायां पूर्णिमायां **चतुर्दश्यामष्टम्यां राहुसूतके** चन्द्रसूर्योपरागे च द्युनि-शमनध्यायः । यत्तु 'त्र्यहं न कीर्तयेद्ब्रह्म राज्ञो राहोश्च सूतके' इति । (**मनु**स्मृ. ४।११०) । तद्ग्रस्तास्त-विषयम् । ऋतुसंधिगतासु च प्रतिपत्सु श्राद्धिकभोजने तत्प्रतिग्रहे च द्युनिशमनध्यायः । एतच्चैको-

दिष्टव्यतिरिक्तविषयम् । तत्र तु त्रिरात्रम् । 'प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य केतनम् । त्र्यहं न कीर्तयेद्ब्रह्मेति' स्मरणात् ( मनुस्मृ. ४।११० ) ॥ १४६ ॥

**पशुमण्डूकनकुलश्वाहिमार्जारमूषकैः ।**
**कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये ॥ १४७ ॥**

५ अध्येतॄणां **पश्वादिभिरन्तरागमने** कृते **शक्र**ध्वजस्यावरोपणादिवसे **उच्छ्रय**दिवसे **चाहोरात्रमनध्यायः** । द्युनिशमिति प्रकृते पुनरहोरात्रग्रहणं संध्यावर्जितानिर्घातभूकम्पोल्कानिपातेष्वाकालिकत्वज्ञापनार्थम् । 'आकालिका निर्घातभूकम्पराहुदर्शनोल्का' इति **गौतम**वचनात् (अ. १६ सू. २२)। निमित्तकालादारभ्यापरेद्युर्यावत्स एव कालस्तावत्कालः अकालः तत्र भव आकालिकोऽनध्यायः ।

एतच्च प्रातःसंध्यास्तनिते । रात्रिसंध्यास्तनिते तु रात्रिमेव । 'सायंसंध्यास्तनिते रात्रिः प्रातः-
१० संध्यामहोरात्रमिति' **हारीत**स्मरणात् । यत्पुन**र्गौतमे**नोक्तं । (अ. २ सू. ६०) 'श्वनकुलसर्पमण्डूकमार्जाराणां त्र्यहमुपवासो विप्रवासश्चेति' तत्प्रथमाध्ययनविषय एव ॥ १४७ ॥

**श्वक्रोष्टृगर्दभोलूकसामबाणार्तनिःस्वने ।**
**अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके ॥ १४८ ॥**

श्वा कुक्कुरः । **क्रोष्टा** सृगालः । **गर्दभो** रासभः । **उलूको** घूकः । **साम** सामानि । **बाणो**
१५ वंशः । **आर्तो** दुःखितः । **एषां** श्वादीनां **निःस्वने** तावत्कालमनध्यायः । वीणादिस्वनेऽपि । 'वेणुवीणाभेरीमृदङ्गगन्त्र्यार्तशब्देष्विति' **गौतम**वचनात् (अ. १६।७) । गन्त्री शकटम् । **अमेध्यादीनां संनिधाने** तावत्कालिकोऽनध्यायः ॥ १४८ ॥

**देशेऽशुचावात्मनि च विद्युत्स्तानितसंप्लवे ।**
**भुक्त्वाऽऽर्द्रपाणिरम्भोन्तरर्धरात्रेऽतिमारुते ॥ १४९ ॥**

२० **अशुचौ देशे**ऽशुचावा**त्मनि च** । तथा **विद्युत्स्तनितसंप्लवे** पुनःपुनर्विद्योतमानायां विद्युति स्तनितसंप्लवे पुनःपुनर्मेघघोषे तावत्कालिकोऽनध्यायः । **भुक्त्वाऽऽर्द्रपाणिर्ना**धीयीत । जलमध्येऽ**र्धरात्रे** महानिशाख्ये मध्यमप्रहरद्वये **अतिमारुते** अहन्यपि तावत्कालं नाधीयीत ॥ १४९ ॥

**पांसुप्रवर्षे दिग्दाहे संध्यानीहारभीतिषु ।**
**धावतः पूतिगन्धे च शिष्टे च गृहमागते ॥ १५० ॥**

२५ औत्पातिके रजोवर्षे, **दिग्दाहे** यत्र ज्वलिता इव दिशो दृश्यन्ते । **संध्ययोर्नीहारे** धूमिकायां **भीतिषु** चौरराजादिकृतासु तावत्कालमनध्यायः । **धावत**स्त्वरितं गच्छतोऽनध्यायः । **पूतिगन्धे** कुत्सितगन्धे च अमेध्यमद्यादिगन्धे । **शिष्टे** च श्रोत्रियादौ गृहं प्राप्ते तदनुज्ञावधिरनध्यायः ॥ १५० ॥

**खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे ।**
**सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्विदुः ॥ १५१ ॥**

**यानं** रथादि । **इरिणमू**षरं मरुभूमिर्वा । खरादीनामारोहणे तावत्कालमनध्यायः । **एवं श्वक्रो**ष्टृगर्दभेत्यस्मादारभ्य **सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्नि**मित्तसमकालान्**विदुरनध्याय**विधिज्ञाः । विदुरित्यनेन स्मृत्यन्तरोक्तानन्यानपि संगृह्णाति । यथाह **मनुः** ( अ. ४ श्लो. ११२ ) । 'शयानः प्रौढपादश्च कृत्वा चैवावसक्थिकाम् । नाधीयीतामिषं जग्ध्वा सूतकान्नाद्यमेव च' इत्यादि॥१५१॥

एवमनध्यायानुक्त्वा प्रकृतानि स्नातकव्रतान्याह ५

**देवर्त्विक्स्नातकाचार्यराज्ञां छायां परस्त्रियाः ।**
**नाक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्तनादि च ॥ १५२ ॥**

स्नातकव्रतानि ।

**देवानां** देवार्चानाम**त्विक्स्नातकाचार्यराज्ञां परस्त्रियाश्च छायां नाक्रमेन्नाधि**तिष्ठेन्न लङ्घयेत् बुद्धिपूर्वः । यथाह **मनुः** ( अ. ४ श्लो. १३० ) । 'देवतानां गुरो राज्ञः स्नातकाचार्ययोरपि । नाक्रामेत्कामतश्छायां बभ्रुणो दीक्षितस्य १० चेति' । बभ्रुणो नकुलवर्णस्य यस्य कस्यचित् गोरश्वस्य वा सोमादेः । बभ्रुण इति नपुंसकलिङ्गनिर्देशात् । **रक्तादीनि च** नाधितिष्ठेत । आदिग्रहणात्स्नानोदकादेर्ग्रहणम् । 'उद्वर्तनमपस्नाने विण्मूत्रे रक्तमेव च । श्लेष्मनिष्ठ्यूतवान्तानि नाधितिष्ठेत कामत' इति ( अ. ४ श्लो. १३२ ) ॥ १५२ ॥

**विप्राहिक्षत्रियात्मानो नावज्ञेयाः कदाचन ।**
**आमृत्योः श्रियमाकांक्षेन्न कश्चिन्मर्मणि स्पृशेत् ॥ १५३ ॥** १५

**विप्रो** बहुश्रुतो ब्राह्मणः। **अहिः**सर्पः । **क्षत्रियो** नृपतिः ।एते कदाचिदपि नावमन्तव्याः । **आत्मा** च स्वयं नावमन्तव्यः। **आमृत्यो**र्यावज्जीवं **श्रिय**मिच्छेत् । **न कश्चिन्मर्मणि स्पृशेत्** । कस्यचिदपि मर्म दुश्चरितं न प्रकाशयेत् ॥ १५३ ॥

**दूरादुच्छिष्टविण्मूत्रपादाम्भांसि समुत्सृजेत् ।**
**श्रुतिस्मृत्युदितं सम्यक् नित्यमाचारमाचरेत् ॥ १५४ ॥** २०

भोजनाद्**युच्छिष्टं विण्मूत्रे** पादप्रक्षालनोदकं च गृहा**द्दूरात् समुत्सृजेत्** । श्रौतं स्मार्तं **चाचारं नित्यं सम्यग**नुतिष्ठेत् ॥ १५४ ॥

**गोब्राह्मणानलान्नानि नोच्छिष्टो न पदा स्पृशेत् ।**
**न निन्दाताडने कुर्यात्पुत्रं शिष्यं च ताडयेत् ॥ १५५ ॥**

**गां ब्राह्मणमग्निं अन्न**मदनीयं विशेषतः पक्कमशुचिर्न स्पृशेत् । पादेन त्वनुच्छिष्टोऽपि । २५ यदा पुनः प्रमादात्स्पृशति तदा आचमनोत्तरकालम् । 'स्पृष्ट्वैतानशुचिर्नित्यमद्भिः प्राणानुपस्पृशेत् । गात्राणि चैव सर्वाणि नाभिं पाणितलेन त्विति' **मनूक्तं** ( अ. ४ श्लो. १४३ ) कार्यम् । एवं प्राणादीनुपस्पृशेत् । कस्यचिदपि **निन्दाताडने न कुर्यात्**। एतच्चानपकारिणि। 'अयुध्यमानस्योत्पाद्य ब्राह्मणस्यासृजं ततः । दुःखं सुमहदाप्नोति प्रेत्याप्राज्ञतया नरः' इति (मनुः अ. ४ श्लो. १६७)

पुत्रशिष्यौ शिक्षार्थमेव ताडयेत्। चकाराद्दासादीनपि। ताडनं च रज्ज्वादिनोत्तमाङ्गव्यतिरेकेण कार्यम्। 'शिष्यशिष्टिरवधेन। अशक्तौ रज्जुवेणुविदलाभ्यां तनुभ्याम्। अन्येन घ्नन् राज्ञा शास्यः' इति गौतमवचनात् (अ. ३ सू. ४८।४९।५०)। 'पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथंचनेति' मनुवचनात् (अ. ८ श्लो. ३००)॥ १५५॥

५ **कर्मणा मनसा वाचा यत्नाद्धर्मं समाचरेत्।**
**अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु॥ १५६॥**

**कर्मणा** कायेन यथाशक्ति धर्ममनुतिष्ठेत्तमेव **मनसा** ध्यायेत् **वाचा** वदेत्। **धर्म्यं** विहितमपि **लोकविद्विष्टं** लोकाभिशस्तिजननं मधुपर्के गोवधादिकं **नाचरेत्**। यस्मादस्वर्ग्यमग्निष्टोमीयवत्स्वर्गसाधनं न भवति॥ १५६॥

१० **मातृपित्रतिथिभ्रातृजामिसंबन्धिमातुलैः।**
**वृद्धबालातुराचार्यवैद्यसंश्रितबान्धवैः॥ १५७॥**
**ऋत्विक्पुरोहितापत्यभार्यादाससनाभिभिः।**
**विवादं वर्जयित्वा तु सर्वाँल्लोकान् जयेद्गृही॥ १५८॥**

**माता** जननी। **पिता** जनकः। **अतिथि**रध्वनीनः। **भ्रातरो** भिन्नोदरा अपि। **जामयो** विद्य-
१५ मानभर्तृकाः स्त्रियः। **संबन्धिनो** वैवाह्याः। **मातुलो** मातुर्भ्राता। **वृद्धः** सप्तत्युत्तरवयस्कः। **बाल** 'आषोडशाद्वर्षात्'। **आतुरो** रोगी। **आचार्य** उपनेता। **वैद्यो** विद्वान् भिषग्वा। **संश्रितः** उपजीवी। **बान्धवाः** पितृपक्ष्या मातृपक्ष्याश्च। मातुलस्य पृथगुपादानमादरार्थं। **ऋत्विग्**याजकः। **पुरोहितः** शान्त्यादेः कर्ता। **अपत्यं** पुत्रादि। **भार्या** सहधर्मचारिणी। **दासः** कर्मकरः। **सनाभयः** सोदराः। भ्रातृभ्यः पृथगुपादानमजामिभगिनीप्राप्त्यर्थं। एतैर्मात्रादिभिः सह वाक्कलहं परित्यज्य **सर्वा**न्प्राजापत्यादीन्
२० **लोका**न्प्राप्नोति॥ १५७॥ १५८॥

**पञ्च पिण्डाननुद्धृत्य न स्नायात्परवारिषु।**
**स्नायान्नदीदेवखातह्रदप्रस्रवणेषु च॥ १५९॥**

**परवारिषु** परसंबन्धिषु सर्वसत्वोद्देशेनात्यक्तेषु तडागादिषु **पञ्च पिण्डाननुद्धृत्य न स्नायात्**। अनेनात्मीयोत्सृष्टाभ्यनुज्ञातेषु पिण्डोद्धारमन्तराऽपि स्नानमभ्यनुज्ञातम्। नद्यादिषु कथं
२५ तर्हीत्याह। **स्नायान्नदी**ति। साक्षात्परम्परया वा समुद्रगाः स्रवन्त्यो नद्यः। **देवखातं** देवनिर्मितं पुष्करादि। उदकप्रवाहाभिघातकृतसजलोमहानिम्नप्रदेशो **ह्रदः**। पर्वताद्युच्चप्रदेशात्प्रसृतमुदकं **प्रस्रवणं**। एतेषु पञ्च पिण्डानुद्धरणेनैव स्नायात्।

एतच्च नित्यस्नानविषयं सति संभवे। 'नदीषु देवखातेषु तडागेषु सरःसु च। स्नानं समाचरेन्नित्यं गर्तप्रस्रवणादिष्विति' नित्यग्रहणात्। (मनु अ. ४ श्लो. २०३) शौचाद्यर्थं च यथासंभवं
३० परवारिषु पञ्च पिण्डानुद्धरणेऽपि सर्वस्य न निषेधः॥ १५९॥

**परशय्यासनोद्यानगृहयानानि वर्जयेत् ।**
**अदत्तान्यग्निहीनस्य नान्नमद्यादनापदि ॥ १६० ॥**

**शय्या** कशिपुः । **आसनं** पीठादि । **उद्यान**माम्रादिवनं । **गृहं** प्रसिद्धं । **यानं** रथादि । परसंबन्धीन्येतान्य**दत्तान्य**ननुज्ञातानि **वर्जयेत्** नोपभुञ्जीत । अभोज्यान्नान्याह । **अग्निहीनस्येति** । अग्निहीनस्य श्रौतस्मार्ताग्न्यधिकाररहितस्य शूद्रस्य प्रतिलोमस्य चाधिकारवतोऽप्यग्निरहितस्या**न्नमनापदि** ५ न भुञ्जीत । न प्रतिगृह्णीयाच्च । 'तस्मात्प्रशस्तानां स्वकर्मणा शुद्धजातीनां ब्राह्मणो भुञ्जीत गृह्णीयाच्चेति' **गौतम**वचनात् ( अ. १७ सू. १।२ ) ॥ १६० ॥

**कदर्यबद्धचौराणां क्लीबरङ्गावतारिणाम् ।**
**वैणाभिशस्तवार्धुष्यगणिकागणदीक्षिणाम् ॥ १६१ ॥**

**कदर्यो** लुब्धः । 'आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयेत् । लोभाद्यः पितरौ भृत्यान्स १० कदर्य इति स्मृत' इत्युक्तः । **बद्धो** निगडादिना । वाचा संनिरुद्धश्च । **चौरः** ब्राह्मणसुवर्णव्यतिरिक्तपरस्वापहारी । **क्लीबो** नपुंसकः । **रङ्गावतारी** नटचारणमल्लादिः । वेणुच्छेदजीवी **वैणः** । **अभिशस्तः** पतनीयैः कर्मभिर्युक्तः । **वार्धुष्यो** निषिद्धवृद्ध्युपजीवी । **गणिका** पण्यस्त्री । **गणदीक्षी** बहुयाजकः । एतेषामन्नं नाश्नीयादित्यनुवर्तते ॥ १६१ ॥

**चिकित्सकातुरक्रुद्धपुंश्चलीमत्तविद्विषाम् ।** १५
**क्रूरोग्रपतितव्रात्यदाम्भिकोच्छिष्टभोजिनाम् ॥ १६२ ॥**

**चिकित्सको** भिषग्वृत्त्युपजीवी । **आतुरो** महारोगोपसृष्टः । 'वातव्याध्यश्मरीकुष्ठमेहोदरभगन्दराः । अर्शांसि ग्रहणीत्यष्टौ महारोगाः प्रकीर्तिता' इति । **क्रुद्धः** कुपितः । **पुंश्चली** व्यभिचारिणी । **मत्तो** विद्यादिना गर्वितः । **विद्विट्** शत्रुः । **क्रूरो** दृढाभ्यन्तरकोपः । वाक्कायव्यापारेण उद्वेजक **उग्रः** । **पतितो** ब्रह्महादिः । **व्रात्यः** पतितसावित्रीकः । **दाम्भिको** वञ्चकः । २० **उच्छिष्टभोजी** परभुक्तोज्झिताशी । एतेषां चिकित्सकादीनामन्नं नाश्नीयात् ॥ १६२ ॥

**अवीरास्त्रीस्वर्णकारस्त्रीजितग्रामयाजिनाम् ।**
**शस्त्रविक्रयकर्मारतन्तुवायश्ववृत्तिनाम् ॥ १६३ ॥**

**अवीरा स्त्री** स्वतन्त्रा व्यभिचारमन्तरेणापि पतिपुत्ररहितेत्यर्थः । **स्वर्णकारः** स्वर्णस्य विकारान्तरकृत् । **स्त्रीजितः** सर्वत्र स्त्रीवशवर्ती । **ग्रामयाजी** ग्रामस्य शान्त्यादिकर्ता, बहूनामुपनेता २५ वा । **शस्त्रविक्रयी** शस्त्रविक्रयोपजीवी । **कर्मारो** लोहकारः तक्षादिश्च । **तन्तुवायः** सूचीशिल्पोपजीवी । श्वभिर्वृत्तिर्वर्तनं जीवनमस्यास्तीति **श्ववृत्ती** । एतेषामन्नं नाश्नीयात् ॥ १६३ ॥

**नृशंसराजरजककृतघ्नवधजीविनाम् ।**
**चैलधावसुराजीवसहोपपतिवेश्मनाम् ॥ १६४ ॥**

**पिशुनानृतिनोश्चैव तथा चाक्रिकबन्दिनाम्।**
**एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा ॥ १६५ ॥**

**नृशंसो** निर्दयः। **राजा** भूपतिः, तत्साहचर्यात्पुरोहितश्च। यथाह **शङ्खः**। 'भीतावगीतरुदिताक्रन्दितावघुष्टक्षुधितपरिभुक्तविस्मितोन्मत्तावधूतराजपुरोहितान्नानि वर्जयेदिति'। **रजको** वस्त्रादीनां नीलादिरागकारकः। **कृतघ्न** उपकृतस्य हन्ता। **वधजीवी** प्राणिनां वधेन वर्तकः। **चैलधावः** वस्त्रनिर्णेजनकृत्। **सुराजीवी** मद्यविक्रयजीवी। उपपतिर्जारः सहोपपतिना वेश्म यस्यासौ **सहोपपतिवेश्मा** ॥ १६४ ॥ **पिशुनः** परदोषस्य ख्यापकः। **अनृती** मिथ्यावादी। **चाक्रिकस्तैलिकः** शाकटिकश्चेत्येके। अभिशस्तः पतितश्चाक्रिकस्तैलिक इति भेदेनाभिधानात्। **बन्दिनः** स्तावकाः। **सोमविक्रयी** सोमलतायाः विक्रेता। एतेषामन्नं न भोक्तव्यम्। सर्वे चैते कदर्यादयो द्विजा एव कदर्यत्वादिदोषदुष्टा अभोज्यान्नाः। इतरेषां प्राप्त्यभावात्प्राप्तिपूर्वकत्वाच्च निषेधस्य ॥ १६५ ॥

अग्निहीनस्य 'नान्नमद्यादनापदी'त्यत्र शूद्रस्याभोज्यान्नत्वमुक्तं; तत्र प्रतिप्रसवमाह

**शूद्रेषु दासगोपालकुलमित्रार्धसीरिणः।**
**भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत् ॥ १६६ ॥**

**दासा** गर्भदासादयः। **गोपालो** गवां पालकः; गवां पालनेन यो जीवति। **कुलमित्रं** पितृपितामहादिक्रमायातः। **अर्धसीरी** हलपर्यायसीरोपलक्षितकृषिफलभागग्राही। **नापितो** गृहव्यापारकारयिता नापितश्च। **यश्च** वाङ्मनःकायकर्मभि**रात्मानं निवेदयति** तवाहमिति। एते दासादयः शूद्राणां मध्ये **भोज्यान्नाः**। चकारात्कुम्भकारश्च। 'गोपनापितकुम्भकारकुलमित्रार्धिकनिवेदितात्मानो भोज्यान्ना' इति वचनात् ॥ १६६ ॥

इति स्नातकव्रतप्रकरणम्

## अथ भक्ष्याभक्ष्यप्रकरणम् ७



'न स्वाध्यायविरोध्यर्थमि'त्यत आरभ्य ब्राह्मणस्य स्नातकव्रतान्यभिधायेदानीं द्विजातिधर्मानाह

**अनर्चितं वृथामांसं केशकीटसमन्वितम्।**
**शुक्तं पर्युषितोच्छिष्टं श्वस्पृष्टं पतितेक्षितम् ॥ १६७ ॥**
**उदक्यास्पृष्टसंघुष्टं पर्यायान्नं च वर्जयेत्।**
**गोघ्रातं शकुनोच्छिष्टं पदा स्पृष्टं च कामतः ॥ १६८ ॥**

**अनर्चितं** अर्चार्हाय यदवज्ञया दीयते। **वृथामांसं** वक्ष्यमाणप्राणात्ययादिव्यतिरेकेण देवाद्यर्चनावशिष्टं यन्न भवति आत्मार्थमेव यत्साधितं। **केशकीटादिभिश्च समन्वितं** संयुक्तं। यत्स्वयमनम्लं केवलकालपरिवासेन द्रव्यान्तरसंसर्गकालपरिवासाभ्यां वाऽऽम्लीभवति **तच्छुक्तं** दध्यादिव्यतिरेकेण। 'न पापीयसोऽन्नमश्नीयात् न द्विःपक्कं न शुक्तं न पर्युषितं अन्यत्र रागखाण्डवचुकदधिगुडगोधूमयवपिष्टविकारेभ्य' इति **शङ्ख**स्मरणात्। **पर्युषितं** रात्र्यन्तरितं **उच्छिष्टं** भुक्तोज्झितं। **श्वस्पृष्टं** शुना स्पृष्टं। **पतितेक्षितं** पतितादिभिरीक्षितं। **उदक्या** रजस्वला तया **स्पृष्टम्**। उदक्या ग्रहणं चाण्डालाद्युपलक्षणार्थम्। 'अमेध्यपतितचाण्डालपुल्कसरजस्वलाकुनखिकुष्ठिसंस्पृष्टान्नं वर्जयेदिति' **शङ्ख**स्मरणात्। को भुंक्त इति यदाघुष्य दीयते **तत्संघुष्टान्नं**। अन्यसंबन्ध्यान्यव्यपदेशेन यद्दीयते **तत्पर्यायान्नं**। यथा 'ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददत्। उभावेतावभोज्यान्नौ भुक्त्वा चान्द्रायणं चरेदिति'। 'पर्याचान्तमिति' पाठे परिगतमाचान्तं गंडूषग्रहणं यस्मिन् तत्पर्याचान्तं तत्र भोक्तव्यम्। एतदुक्तं भवति। गण्डूषग्रहणादूर्ध्वं आचमनात्प्राक् न भोक्तव्यम्। 'पार्श्वाचान्तमिति' पाठे एकस्यां पंक्तौ पार्श्वस्थे आचान्ते न भोक्तव्यम् भस्मोदकादिविच्छेदेन विना। वर्जयेदिति प्रत्येकं संबध्यते। तथा **गोघ्रातं** गवा आघ्रातं शकुनेन। काकादिना भुक्तमास्वादितं **शकुनोच्छिष्टं**। **पदा स्पृष्टं** बुद्धिपूर्वं पादेन स्पृष्टं वर्जयेत्॥ १६७॥ १६८॥

पर्युषितस्य प्रतिप्रसवमाह

**अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम्।**
**अस्नेहा अपि गोधूमयवगोरसविक्रियाः॥ १६९॥**

**अन्न**मदनीयं। **पर्युषितं** घृतादिस्नेहसंयुक्तं चिरकालसंस्थितमपि **भोज्यम्**। **गोधूमयवगोरसविक्रियाः** मण्डकसक्तुकिलाटकूर्चिकादयः **अस्नेहा** अपि चिरकालसंस्थिता भोज्याः। यदि विकारान्तरमनापन्नाः। 'अपूपधानाकरम्भसक्तुपाचकतैलपायसशाकानि शुक्तानि वर्जयेदिति' **वसिष्ठ**स्मरणात् (अ. १४ सू. ३७)॥ १६९॥

**संधिन्यनिर्दशावत्सागोपयः परिवर्जयेत्।**
**औष्ट्रमैकशफं स्त्रैणमारण्यकमथाविकम्॥ १७०॥**

गौर्या वृषेण संधीयते सा च **संधिनी**। 'वशां वंध्यां विजानीयाद्वृषाक्रान्ता च संधिनीमिति' **त्रिकाण्डी**स्मरणात्। या चैकां वेलामतिक्रम्य दुह्यते या च वत्सान्तरेण संधीयते सापि संधिनी प्रसूता अनतिक्रान्तदशाहा **अनिर्दशा**। मृतवत्सा **अवत्सा** संधिनी च अनिर्दशा च अवत्सा च **संधिन्यनिर्दशावत्सा**स्ताश्च **गाव**श्च तासां **पयः** क्षीरं **परिवर्जयेत्**। संधिनीग्रहणं संधिनीयमस्वोरुपलक्षणार्थम्। यथाह **गौतमः** (अ. १७ सू. २५)। 'स्यान्दिनीयमसूसंधिनीनां चेति'। स्रवत्पयस्तनी स्यान्दिनी यमसूर्यमप्रसविनी। एवजामहिष्योश्चानिर्दशयोः पयो वर्जयेत्। 'गोमहिष्यजानामनिर्दशाहानामिति' **वसिष्ठ**स्मरणात् (अ. १४ सू. ३५) पयोग्रहणात्त-

द्विकाराणामपि दध्यादीनां निषेधः । न हि मांसनिषेधे तद्विकाराणामनिषेधो युक्तः । विकारनिषेधे तु प्रकृतेरनिषेधो युक्तः । पयोनिषेधात् शकृन्मूत्रादेरनिषेधः ।

उष्ट्राज्जात**मौष्ट्रं** पयोमूत्रादि । एकशफा वडवादयः तत्प्रभव**मैकशफं** । स्त्रीभवं **स्त्रैणं** । स्त्री-स्त्रीग्रहणमजाव्यतिरिक्तसकलद्विस्तनीनामुपलक्षणार्थम् । 'सर्वासां द्विस्तनीनां क्षीरमभोज्यमजावर्ज्यमिति' ५ **शङ्ख**स्मरणात् । अरण्ये भवा आरण्यकास्तदीय**मारण्यकं** क्षीरं माहिषव्यतिरेकेण । 'आरण्यानां च सर्वेषां मृगाणां माहिषं विनेति' वचनात् (**मनुः** अ. ५ श्लो. ९) । अवेर्जात**माविकं** । वर्जयेदिति प्रत्येकं संबध्यते । औष्ट्रमित्यादिविकारप्रत्ययनिर्देशाद्विकारमात्रस्य पयोमूत्रादेः सर्वदा निषेधः । 'नित्यमाविकमपेयमौष्ट्रमैकशफं चेति' **गौतम**स्मरणात् ( अ. १७ सू. २४ ) ॥ १७० ॥

**देवतार्थं हविः शिग्रुं लोहितान्व्रश्चनांस्तथा ।**
१० **अनुपाकृतमांसानि विड्जानि कवकानि च ॥ १७१ ॥**

**देवतार्थं** बल्युपहारनिमित्तं साधितं । **हविः** हवनार्थं सिद्धं प्राक् होमात् । **शिग्रुः** सौभाञ्जनः **लोहितान्** वृक्षनिर्यासान् । **व्रश्चन**प्रभवान् वृक्षच्छेदनजातान् अलोहितानपि । यथाह **मनुः** (अ. ५ श्लो. ६ ) 'लोहितान्वृक्षनिर्यासान्व्रश्चनप्रभवांस्तथेति' । लोहितग्रहणात् हिङ्गुकर्पूरादीनामनिषेधः । **अनुपाकृतमांसानि** यज्ञे अहुतस्य पशोर्मांसानि **विड्जानि** मनुष्यादिजग्धबीजपुरीषोत्पन्नानि[1] च १५ तन्दुलीयकप्रभृतीनि च । **कवकानि** छत्राकानि । वर्जयेदिति प्रत्येकमभिसंबध्यते ॥ १७१ ॥

**क्रव्यादपक्षिदात्यूहशुकप्रतुदटिट्टिभान् ।**
**सारसैकशफान्हंसान्सर्वांश्च ग्रामवासिनः ॥ १७२ ॥**

**क्रव्यादा** आममांसादनशीलाः । **पक्षिणो** गृध्रादयः । **दात्यूह**श्चातकः । **शुकः** कीरः । चञ्च्वा प्रतुद्य भक्षयन्तीति **प्रतुदाः** श्येनादयः । **टिट्टिभ**स्तच्छब्दानुकारी । **सारसो** लक्ष्मणः । २० **एकशफा** अश्वादयः । **हंसाः** प्रसिद्धाः । **ग्रामवासिनः** पारावतप्रभृतयः । एतान्क्रव्यादादी-न्वर्जयेत् ॥ १७२ ॥

**कोयष्टिप्लवचक्राह्वबलाकाबकविष्किरान् ।**
**वृथाकृसरसंयावपायसापूपशष्कुलीः ॥ १७३ ॥**

**कोयष्टिकः** क्रौञ्चः । **प्लवो** जलकुक्कुटः । **चक्राह्व**श्चक्रवाकः । **बलाकाबकौ** प्रसिद्धौ । २५ नखैर्विकीर्य भक्षयन्तीति **विष्किरा**श्चकोरादय एव गृह्यन्ते । लावकमयूरादीनां भक्ष्यत्वात् ग्राम कुक्कुटस्य ग्रामवासित्वादेव निषेधाच्च । एतान्कोयष्ट्यादीन्वर्जयेत् । **वृथा** देवताद्युद्देशमन्तरेण साधिता **कृसरसंयावपायसाऽपूपशष्कुली**र्वर्जयेत् । **कृसरं** तिलमुद्गसिद्ध ओदनः । **संयावः** क्षीरगुड-घृतादिकृतः उत्करिकाख्यः । **पायसं** पयसा शृतमन्नं । **अपूपः** स्नेहपक्वगोधूमविकारः । **शष्कुली**

१ फ. पुरीषस्थाने उत्पन्नानीति.

स्नेहपक्वगोधूमविकारः । ' न पचेदन्नमात्मने ' इति कृसरादीनां निषेधे सिद्धे पुनरभिधानं प्रायश्चित्त-गौरवार्थम् ॥ १७३ ॥

**कलविंकं सकाकोलं कुररं रज्जुदालकम् ।**
**जालपादान्खञ्जरीटानज्ञातांश्च मृगद्विजान् ॥ १७४ ॥**

**कलविङ्को** ग्रामचटकः । ग्रामनिवासित्वेन प्रतिषेधे सिद्धे सत्युभयपरत्वात्पुनर्वचनम् । **काकोलो** द्रोणकाकः । **कुररः** उत्क्रोशः । **रज्जुदालको** वृक्षकुक्कुटः । **जालपादः** जालाकारपादः । अ-जालपादा अपि हंसाः सन्तीति हंसानां पुनर्वचनम् । **खञ्जरीटः** खञ्जनः । जातितो ये **अज्ञाता मृगाः** पक्षिणश्च । एतान्कलविङ्कादीन्वर्जयेत् ॥ १७४ ॥

**चाषांश्च रक्तपादांश्च सौनं वल्लूरमेव च ।**
**मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत् ॥ १७५ ॥**

**चाषाः** किकीदिवयः । **रक्तपादाः** कादम्बप्रभृतयः **सौनं** घातस्थानभवं मांसं भक्ष्याणामपि । **वल्लूरं** शुष्कमांसं । **मत्स्या** मीनाः । एतांश्चाषादीन्वर्जयेत् । चकारान्नालिकाशणकुसुम्भादीन् । 'नालिकाशणछत्राककुसुम्भालाबुविड्भवान् । कुम्भीकन्दुकवृन्ताककोविदारांश्च वर्जयेदिति ' । तथा काल-प्ररूढानि पुष्पाणि च फलानि च । विकारवच्च यत्किंचित्प्रयत्नेन विवर्जयेत् । ' तथा वटप्लक्षाश्वत्थ-कपित्थनीपमातुलिङ्गफलानि वर्जयेदिति ' स्मरणात् । एतान्संधिनीक्षीरप्रभृतीननुक्रान्तान् **कामतो** भक्ष-यित्वा त्रिरात्रमुपवसेत् । अकामतस्त्वहोरात्रम् । 'शेषेषूपवसेदहरिति' **मनुस्मरणात्** (अ. ५ श्लो. २०.) यत्पुनः **शङ्खेनोक्तम्** । ' बकबलाकाहंसप्लवचक्रवाककारण्डवगृहचटककपोतपारावतपाण्डुशुकसारिका-सारसटिट्टिभोलूककङ्करक्तपादचाषभासवायसकोकिलशाङ्गलिकुक्कुटहारीतभक्षणे द्वादशरात्रमनाहार पिबे-द्गोमूत्रयावकमिति ' तद्बहुकालाभ्यासे मतिपूर्वे समस्तभक्षणे वा वेदितव्यम् ॥ १७५ ॥

**पलाण्डुं विड्वराहं च छत्राकं ग्रामकुक्कुटम् ।**
**लशुनं गृञ्जनं चैव जग्ध्वा चान्द्रायणं चरेत् ॥ १७६ ॥**

**पलाण्डुः** स्थूलकन्दनालो लशुनानुकारी । **विड्वराहो** ग्रामसूकरः । **छत्राकं** सर्पच्छत्रम् । **ग्रामकुक्कुटः** प्रसिद्धः । **लशुनं** रसोनं सूक्ष्मश्वेतकन्दनालम् । **गृञ्जनं** लशुनानुकारिलोहितसूक्ष्मकन्दं । एतानि षट् सकृत्कामतो **जग्ध्वा** भक्षयित्वा **चान्द्रायणं** वक्ष्यमाणलक्षणं **चरेत्** ।

ग्रामकुक्कुटछत्राकयोः पूर्वप्रतिषेधितयोरिहाभिधानं पलाण्ड्वादिसमानप्रायश्चित्तार्थम् । मतिपूर्वे चिरतराभ्यासे तु । ' छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम् । पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद्द्विज ' इति **मनूक्तम्** ( अ. ५ श्लो. १९ ) । अमतिपूर्वाभ्यासे । ' अमत्यैतानि षट् जग्ध्वा कृच्छ्रं सान्तपनं चरेत् ' ( मनुः अ. ५ श्लो. २० ) । तृतीयाध्याये वक्ष्यमाणं यतिचान्द्रायणं वाऽपीति द्रष्टव्यम् । अमतिपूर्वाभ्यासे तु **शङ्खोक्तं** ' लशुनपलाण्डुगृञ्जनविड्वराहग्रामकुक्कुटकुम्भीकभक्षणे द्वाद-शरात्रं पयः पिबेदिति ' ॥

१ ज उभयचारित्वात् । उभयचरत्वात् । २ ज सूनिनात्यक्तं मांसं सौनं ।

**भक्ष्याः पञ्चनखाः सेधागोधाकच्छपशल्लकाः।**
**शशश्च मत्स्येष्वपि हि सिंहतुण्डकरोहिताः॥ १७७॥**
**तथा पाठीनराजीवसशल्काश्च द्विजातिभिः।**

**सेधा** श्वावित्। **गोधा** कृकलासानुकारिणी महती। **कच्छपः** कूर्मः। **शल्लकः** शल्लकी। ५ **शशः** प्रसिद्धः। पञ्चनखादीनां श्वमार्जारवानरादीनां मध्ये सेधादयो भक्ष्याः। **च**कारात्खड्गोऽपि। यथाह **गौतमः**। 'पञ्चनखाः शशशल्लकश्वाविद्गोधाखड्गकच्छपा' इति। **मनु**रपि। 'श्वाविधं शल्लकं गोधां खड्गकूर्मशशांस्तथा। भक्ष्यान्पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदत' इति (अ. ५ श्लो. १८)। यत्पुन**र्वसिष्ठेन** 'खड्गे तु विवदन्त' इत्यभक्ष्यत्वमुक्तं (अ. १४ सू. ४७) तच्छ्राद्धादन्यत्र। 'खड्गमांसैर्भवेद्दत्तमक्षय्यं पितृकर्मणीति' श्राद्धे फलश्रुतिदर्शनात्। तथा **मत्स्या**नां मध्ये **सिंहतु-** १० **ण्डादयो** भक्ष्याः। **सिंहतुण्डः** सिंहमुखः। **रोहितो** लोहितवर्णः। **पाठीन**श्चन्द्रकाख्यः **राजीवः** पद्मवर्णः। सहशल्कैः शुक्त्याकारैर्वर्तत इति **सशल्कः**। एते च सिंहतुण्डादयो नियुक्ता एव भक्ष्याः। 'पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः। राजीवान् सिंहतुण्डांश्च सशल्कांश्चैव सर्वश' इति **मनु**स्मरणात् (अ. ५ श्लो. १६)। द्विजातिग्रहणं शूद्रव्युदासार्थम्।

'अनर्चितं वृथामांसमि'त्यारभ्य द्विजातिधर्मानुक्त्वेदानीं चातुर्वर्ण्यधर्मानाह

१५ **अतः शृणुध्वं मांसस्य विधिं भक्षणवर्जने॥ १७८॥**

**मांसस्य** प्रोक्षितादेर्भक्षणे तद्व्यतिरिक्तस्य वा निषिद्धस्य वर्जने 'प्रोक्षितादिव्यतिरेकेण मांसं न भक्षयामी'त्येवं संकल्परूपेण विधिं सामश्रवःप्रभृतयः हे मुनयः शृणुध्वम्॥ १७७॥ १७८॥

तत्र भक्षणे विधिं दर्शयति

**प्राणात्यये तथा श्राद्धे प्रोक्षितं द्विजकाम्यया।**
२० **देवान्पितॄन्समभ्यर्च्य खादन्मांसं न दोषभाक्॥ १७९॥**

अन्नाभावेन व्याध्यभिभवेन वा मांसभक्षणमन्तरेण यदा प्राणबाधा भवति तदा मांसं नियमेन भक्षयेत्। 'सर्वत एवात्मानं गोपायेदि'त्यात्मरक्षणविधानात्। 'तस्मादुह न पुरायुषः स्वःकामी प्रेयादिति' मरणनिषेधाच्च। तथा **श्राद्धे** मांसं निमन्त्रितो नियमेन भक्षयेत्। अभक्षणे दोषश्रवणात्। 'यथाविधि नियुक्तस्तु यो मांसं नात्ति मानवः। स प्रेत्य पशुतां याति संभवानेकविंशतिमिति' **मनुस्म-** २५ **रणात्**। प्रोक्षणाख्यश्रौतसंस्कारसंस्कृतस्य पशोर्यागार्थस्याग्नीषोमीयादेर्हुतावशिष्टं मांसं **प्रोक्षितं** तद्भक्षयेत्। अभक्षणाद्यागानिष्पत्तेः। **द्विजकाम्यया** ब्राह्मणभोजनार्थं देवपित्रर्थं च यत्साधितं तेन तानभ्यर्च्या- वशिष्टं भक्षयन्न दोषभाग्भवति। एवं भृत्यभरणार्थावशिष्टमपि। 'यज्ञार्थं ब्राह्मणैर्वध्याः प्रशस्ता मृगपक्षिणः। भृत्यानां चैव वृत्त्यर्थमगस्त्यो ह्याचरत्तथेति' **मनु**स्मरणात् (अ. ५ श्लो. २२) न दोषभागिति। दोषाभावमात्रं वदता अतिथ्याद्यर्चनावशिष्टस्याभ्यनुज्ञामात्रं न प्रोक्षितादिवन्नियम इति दर्शितम्। ३० एवमप्रतिषिद्धानामपि शशादीनां प्राणात्ययादिव्यतिरेकेणाभक्ष्यत्वावगमात् शूद्रस्यापि मांसप्रतिबद्धः सर्वविधिनिषेधाधिकारोऽवगम्यते॥ १७९॥

इदानीं प्रोक्षितादिव्यतिरिक्तस्य वृथामांसमित्यनेन प्रतिषिद्धस्य भक्षणे निन्दार्थवादमाह

**वसेत्स नरके घोरे दिनानि पशुरोमभिः ।**
**संमितानि दुराचारो यो हन्त्यविधिना पशून् ॥ १८० ॥**

**अविधिना** देवाद्युद्देशमन्तरेण **यः पशून्हन्ति स** तस्य पशोर्यावन्ति रोमाणि तावन्ति **दिनानि घोरे नरके वसेत्** । हन्तीत्यष्टविधोऽपि घातको गृह्यते । यथाह **मनुः** ( अ. ५ श्लो. ५१ ) । 'अनुमन्ता विशसिता निहन्ता क्रयविक्रयी । संस्कर्ता चोपहर्ता च खादकश्चेति घातका' इति ॥ १८० ॥

वृथामांसभक्षणे निन्दा ।

५

इदानीं वर्जने विधिमाह

**सर्वान्कामानवाप्नोति हयमेधफलं तथा ।**
**गृहेऽपि निवसन्विप्रो मुनिर्मांसविवर्जनात् ॥ १८१ ॥**

१०

यः प्रोक्षितादिव्यतिरेकेण मया मांसं न भक्षितव्यमिति सत्यसंकल्पो भवति स **सर्वान्कामान्** तत्साधने प्रवृत्तो निर्विघ्नं **प्राप्नोति** । विशुद्धाशयत्वात् । यथाह **मनुः** ( अ. ५ श्लो. ४७ ) । 'यद्ध्यायते यत्कुरुते रतिं बध्नाति यत्र च । तदवाप्नोत्यविघ्नेन यो हिनस्ति न किंचनेति' । एतच्चानुषङ्गिकं फलम् । मुख्यं फलमाह । **हयमेधफलं तथेति** । एतच्च सांवत्सरिकसंकल्पस्य । 'वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः । मांसानि च न खादेद्यस्तयोः पुण्यफलं सममिति' **मनुस्मरणात्** ( अ ५. श्लो. ५३ ) । तथा गृहेऽपि निवसन् ब्राह्मणादिश्चातुर्वर्णिको मुनिवन्माननीयो भवति मांसत्यागात् । एतच्च न प्रतिषिद्धमांसविषयं नापि प्रोक्षितादिविषयम् । पारिशेष्यादातिथ्याद्यर्चनावशिष्टाभ्यनुज्ञातविषयमिति ॥ १८१ ॥

१५

इति भक्ष्याभक्ष्यप्रकरणम्

## अथ द्रव्यशुद्धिप्रकरणम् ८

२०

इदानीं द्रव्यशुद्धिमाह

**सौवर्णराजताब्जानामूर्ध्वपात्रग्रहाश्मनाम् ।**
**शाकरज्जुमूलफलवासोविदलचर्मणाम् ॥ १८२ ॥**
**पात्राणां चमसानां च वारिणा शुद्धिरिष्यते ।**
**चरुस्रुक्स्रुवसस्नेहपात्राण्युष्णेन वारिणा ॥ १८३ ॥**

२५

**सौवर्णं** सुवर्णकृतं । **राजतं** राजतकृतं । **अब्जं** मुक्ताफलशङ्खशुक्त्यादि । **ऊर्ध्वपात्रं** यज्ञियोलूखलादिं ग्रहादिसाहचार्यात् । **ग्रहाः** षोडशिप्रभृतयः । **अश्मा** दृषदादिः । **शाकं** वास्तुकादि । **रज्जुः** बल्वजादिनिर्मिता । **मूलमार्द्रकादि** । **फलमाम्रादि** । **वासो** वस्त्रम् । **विदलं** वैणवादि ।

१ "मोळ, लङ्खाळे, लवा" इति ख्याताः

**चर्म** अजादीनाम् । विदलचर्मणोर्ग्रहणं तद्विकाराणां छत्रवस्त्रादीनामुपलक्षणार्थम् । **पात्राणि** प्रोक्षणीपात्रप्रभृतीनि । **चमसाः** होतृचमसादयः । एतेषां सौवर्णादीनां लेपरहितानामुच्छिष्टस्पर्शमात्रे **वारिणा** प्रक्षालनेन **शुद्धिः** । **चरुः** चरुस्थाली । **स्रुक्स्रुवौ** प्रसिद्धौ । **सस्नेहानि** पात्राणि प्राशित्र-हरणादीनि । एतानि च लेपरहितान्य**ुष्णेन वारिणा** शुद्ध्यन्ति । ' निर्लेपं काञ्चनं भाण्डमद्भिरेव
५ विशुध्यति । अब्जमश्ममयं चैव राजतं चानुपस्कृतमिति ' **मनु**स्मरणात् ( अ. ५ श्लो. ११२ )। अनुपस्कृतमखातपूरितं । सलेपानां तु । ' तैजासानां मणीनां च सर्वस्याश्ममयस्य च । भस्मनाऽद्भि-र्मृदा चैव शुद्धिरुक्ता मनीषिभिरिति ' **मनूक्तं** द्रष्टव्यम् ( अ. ५ श्लो. १११ ) । मृद्भस्मनोरेक-कार्यत्वाद्विकल्पः । आपस्तु समुच्चीयन्ते । काकादिमुखोपघाते तु कृष्णशकुनिमुखावमृष्टं पात्रं निर्लि-खेत् । श्वापदमुखावमृष्टं पात्रं न प्रयुञ्जीतेति द्रष्टव्यम् । एतच्च मार्जारादन्यत्र । ' मार्जारश्चैव दर्वी च
१० मारुतश्च सदा शुचिरिति ' **मनु**स्मरणात् ॥ १८२ ॥ १८३ ॥

**स्फ्यशूर्पाऽजिनधान्यानां मुसलोलूखलाऽनसाम् ।**
**प्रोक्षणं संहतानां च बहूनां धान्यवाससाम् ॥ १८४ ॥**

**स्फ्यो** वज्रः यज्ञांगं । **अनः** शकटं । शेषं प्रसिद्धं । एतेषामुष्णेन वारिणा शुद्धिः । पुन-राजिनग्रहणं यज्ञाङ्गाजिनप्राप्त्यर्थम् । **संहतानाम**ुक्तशुद्धिद्रव्याणां **बहूनां** धा-न्यानां वाससां च । वासोग्रहणमुक्तशुद्धीनामुपलक्षणार्थम् । उक्तशुद्धीनां धान्य-वासःप्रभृतीनां बहूनां राशीकृतानां प्रोक्षणेनैव शुद्धिः । बहुत्वं च स्पृष्टापेक्षया ।

(यज्ञपात्रादीनां प्रोक्षणेन शुद्धिः। — १५)

एतदुक्तं भवति । यदा धान्यानि वस्त्रादीनि वा राशीकृतानि तत्र चाण्डालादिस्पृष्टान्यल्पानि बहूनि अस्पृष्टानि तत्र स्पृष्टानामुक्तैव शुद्धिरितरेषां प्रोक्षणमिति । तथा च **स्मृत्यन्तरम्** । ' वस्त्र-धान्यादिराशीनामेकदेशस्य दूषणात् । तावन्मात्रं समुद्धृत्य शेषं प्रोक्षणमर्हतीति ' । यदा पुनः स्पृष्टानां
२० बहुत्वं अस्पृष्टानां चाल्पत्वं तदा सर्वेषामेव क्षालनम् । यथाह **मनुः** ( अ. ५ श्लो. ११८ ) " अद्भिस्तु प्रोक्षणं चैवं बहूनां धान्यवाससाम् । प्रक्षालनेन त्वल्पानामद्भिः शौचं विधियत " इति । स्पृष्टानामस्पृष्टानां समत्वेऽपि प्रोक्षणमेव । बहूनां प्रोक्षणविधानेनाल्पानां क्षालनेन शुद्धिः । पुनरल्पानां क्षालनवचनस्य समेषु क्षालनवचननिवृत्त्यर्थत्वात् । इयत्स्पृष्टमियदस्पृष्टमित्यविवेके तु क्षालनमेव । पाक्षिकस्यापि दोषस्य परिहर्तव्यत्वात् । अनेकपुरुषैर्धार्यमाणानां तु धान्यवासःप्रभृतीनां स्पृष्टानामस्पृ-
२५ ष्टानां च प्रोक्षणमेवेति निबन्धकृतः ॥ १८४ ॥

निर्लेपानां स्पर्शमात्रदुष्टानां शुद्धिमुक्त्वेदानीं सलेपानां शुद्धिमाह

**तक्षणं दारुशृङ्गास्थ्नां गोवालैः फलसंभवाम् ।**
**मार्जनं यज्ञपात्राणां पाणिना यज्ञकर्मणि ॥ १८५ ॥**

**दारूणां** मेषमहिषादिशृ**ङ्गाणां** करिवाराहशङ्खाद्य**स्थ्नां** । अस्थिग्रहणेन दन्तानामपि ग्रहणम् । उच्छिष्टस्नेहादिभिर्लिप्तानां मृद्भस्मोदकादिभिरनपगतलेपानां । "यावन्नापैत्यमेध्यानां गन्धो लेपश्च तत्कृतः । तावन्मृद्वारि वा देयं सर्वासु द्रव्यशुद्धिष्विति" सामान्यतः

(३० सलेपानां शुद्धौ विशेषः ।)

**शुद्धि**विधानात् ( मनुः अ. ५ श्लो. १२६ ) । **तक्षणं** तावन्मात्रावयवापनयनं शुद्धिः । **फलसंभवां**

बिल्वालाबुनारिकेलादिफलसंभूतानां **गोवालैरु**द्धर्षणाच्छुद्धिः । **यज्ञपात्राणां** स्रुक्स्रुवादीनां यज्ञकर्मणि प्रयुज्यमानानां दक्षिणेन हस्तेन दर्भैर्दशापवित्रेण वा यथाशास्त्रं कर्माङ्गतया **मार्जनं** कर्तव्यम् । एतच्च **श्रौतमु**दाहरणम् अन्येषामपि सौवर्णादीनां पात्राणां स्मार्तलौकिककर्मसु कृतशौचानामेवाङ्गत्वमिति दर्शयितुं । यज्ञाङ्गानां पुनः कृतशौचानामिदं दशापवित्रादिमार्जनं संस्कारार्थमिति शेषः ॥ १८५ ॥

इदानीं सलेपानामेव केशांचिल्लेपापकर्षणे विशेषहेतुनाह

**सोषैरुदकगोमूत्रैः शुद्ध्यत्याविककौशिकम् ।**
**सश्रीफलैरंशुपट्टं सारिष्टैः कुतपं तथा ॥ १८६ ॥**

उखरमृत्तिकासहितेन गोमूत्रेणोदकेन वा लेपापेक्षया । **आविक**मूर्णामयं **कौशिकं** कोशप्रभवं तसरीपट्टादि प्रक्षालितं शुद्ध्यति । उदकगोमूत्रैरिति बहुवचनं पश्चादुदकप्राप्त्यर्थम् । **अंशुपट्टं** वल्कलतन्तुकृतम् । **सश्रीफलैः** बिल्वफलसहितैः । **कुपतः** पार्वतीयछागरोमनिर्मितकम्बलः । अरिष्टफलसहितैः उदकगोमूत्रैः शुद्ध्यतीत्यनुवर्तते ।

एतच्चोच्छिष्टस्नेहादियोगे सति वेदितव्यम् । अल्पोपघाते तु प्रोक्षणादि क्षालनासहत्वात् । सर्वत्र द्रव्याविनाशेनैव शुद्धेरिष्टत्वात् । तथा च **देवलः** । 'ऊर्णाकौशेयकुतपपट्टक्षौमदुकूलजाः । अल्पशौचा भवन्त्येते शोषणप्रोक्षणादिभिरित्य'भिधायाह । 'तान्येवामेध्ययुक्तानि क्षालयेच्छोधनैः स्वकैः । धान्यकल्कैस्तु फलजै रसैः क्षारानुगैरपीति ' क्षौमवदेव शाणस्य समानयोगत्वात् ।

ऊर्णादिग्रहणं तदारब्धतूलिकादिप्राप्त्यर्थम् । अथ तस्याल्पोपघातेनैव क्षालनं कार्यम् । अमेध्यलेपादन्यत्र । 'तूलिकामुपधानं च पुष्परक्ताम्बरं तथा । शोषयित्वाऽऽतपे किंचित्करैः संमार्जयेन्मुहुः। पश्चाच्च वारिणा प्रोक्ष्य विनियुञ्जीत कर्मणि । तान्यप्यतिमलिप्तानि यथावत्परिशोधयेदिति ' **देवल**स्मरणात् । पुष्परक्तानि कुङ्कुमकुसुम्भादिरक्तानि । पुष्परक्तग्रहणमन्यस्यापि हरिद्रादिरक्तस्य क्षालनासहस्य प्राप्त्यर्थम् । न मञ्जिष्ठादेः तस्य क्षालनसहत्वात् । **शङ्खे**नाप्युक्तम् । 'रागद्रव्याणि प्रोक्षितानि शुचीनीति '॥ १८६ ॥

**सगौरसर्षपैः क्षौमं पुनः पाकान्महीमयम् ।**
**कारुहस्तः शुचिः पण्यं भैक्षं योषिन्मुखं तथा ॥ १८७ ॥**

**गौरसर्षपसहितै**रुदकगोमूत्रैः **क्षौमं** क्षुमा अतसी तत्सूत्रनिर्मितं क्षौमं शुद्ध्यति । **पुनः** पाकेन मृन्मयं घटादि । एतच्चोच्छिष्टस्नेहलेपे वेदितव्यम् । 'मद्यमूत्रपुरीषैश्च श्लेष्मपूयाश्रुशोणितैः । संस्पृष्टं नैव शुद्ध्येत पुनः पाकेन मृन्मयमिति[1] ' स्मरणात् । चाण्डालाद्युपघाते तु त्याग एव । यथाह **पराशरः** 'चाण्डालाद्यैस्तु संस्पृष्टं धान्यं वस्त्रमथापि वा । प्रक्षालनेन शुद्ध्येत परित्यागान्महीमयमिति ' । **कारवो** रजकश्चैलधावकसूपकाराद्यास्तेषां हस्तः सदा शुचिः । शुचित्वं तत्साध्ये कर्मणि वस्त्रधावनादौ सूतकादिसंभवेऽपि । तथा च **स्मृत्यन्तरे** । 'कारवः शिल्पिनो वैद्या दासीदासास्तथैव च । राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्तिता ' इति । **पण्यं** पणार्हं **विक्रेयं**

१ मनु स्मृ. अ. ५ श्लो. १२३.

यवव्रीह्यादि । अनेककेतृजनकरपरिघट्टितमप्यप्रयतं न भवति । सूतकादिनिमित्तेन च वणिजाम् । भिक्षाणां समूहो **भैक्षं** तद्ब्रह्मचर्यादिहस्तगतं अनाचान्तस्त्रीप्रदानादिनाऽशुचिरथ्यादिक्रमणादिनाऽपि न दुष्यति । तथा **योषिन्मुखं** संयोगकाले शुचि । 'स्त्रियश्च रतिसंसर्गे ' इति स्मरणात् ॥ १८७ ॥

इदानीं भूशुद्धिमाह

५ **भूशुद्धिर्मार्जनाद्दाहात्कालाद्गोक्रमणात्तथा ।**
**सेकादुल्लेखनाल्लेपाद्गृहं मार्जनलेपनात् ॥ १८८ ॥**

**मार्जन्या** पांसुतृणादीनां प्रोत्सारणं मार्जनम् । **दाहस्तृ**णकाष्ठाद्यैः । **कालो** यावता कालेन लेपादिक्षयो भवति तावान् । **गोक्रमणं** गवां पादपरिघट्टनं । **सेकः** क्षीरगोमूत्रगोमयवारिभिः प्रवर्षणं वा । **उल्लेखनं** तक्षणं खननं वा । **लेपो** गोमयादिभिः । एतैः समस्तैर्व्यस्तैर्वा मार्जनादिभिरमेध्या १० दुष्टा मलिना च भूमिः शुद्ध्यति ।

तथा च **देवलः** । 'यत्र प्रसूयते नारी म्रियते दह्यतेऽपि वा । चाण्डालाध्युषितं यत्र यत्र विष्ठादिसंगतिः[1] ॥ एवं कश्मलभूयिष्ठा भूरमेध्या प्रकीर्तिता । श्वसूकरखरोष्ट्रादिसंस्पृष्टा दुष्टतां व्रजेत् ॥ अङ्गारतुषकेशास्थिभस्माद्यैर्मलिना भवेदिति' अमेध्या दुष्टा मलिनेति शोध्यभूमेस्त्रैविध्यमभिधाय शुद्धिविभागं दर्शयति । 'पञ्चधा वा चतुर्धा वा भूरमेध्याऽपि शुद्ध्यति । दुष्टान्विता त्रिधा द्वेधा शुद्ध्यते १५ मलिनैकधेति '। यत्र मनुष्या दह्यन्ते यत्र चाण्डालैरध्युषितं तयो पञ्चभिः दहनकालगोक्रमणसेकोल्लेखनैः शुद्धिः । यत्र मनुष्या जायन्ते यत्र च म्रियन्ते यत्र चात्यन्तं विष्ठादिसंगतिः तासां दाहवर्जितैस्तैरेव चतुर्भिः । श्वसूकरखरैश्चिरकालमध्युषितायाः गोक्रमणसेकोल्लेखनैस्त्रिभिः । उष्ट्रग्रामकुक्कुटादिभिश्चिरकाल-मधिवासितायाः सेकोल्लेखनाभ्यां शुद्धिः । अङ्गारतुषादिभिश्चिरकालमधिवासिताया उल्लेखनेन शुद्धिः । मार्जनानुलेपने तु सर्वत्र समुच्चीयेते । एवं गृहं मार्जनलेपनाभ्यां शुद्ध्यति । गृहस्य पृथगुपादानं संमार्ज-२० नलेपयोः प्रतिदिवसप्राप्त्यर्थम् ॥ १८८ ॥

**गोघ्रातेऽन्ने तथा केशमक्षिकाकीटदूषिते ।**
**सलिलं भस्म मृद्वाऽपि प्रक्षेप्तव्यं विशुद्धये ॥ १८९ ॥**

**गोघ्राते** गोनिःश्वासोपहतेऽ**न्ने** अदनीयमात्रे । तथा **केशमक्षिकाकीटदूषिते** । केशग्रहणं लोमादिप्राप्त्यर्थम् । **कीटाः** पिपीलिकादयः । उदकं **भस्म मृद्वा** यथासंभवं **प्रक्षेप्तव्यं** शुद्ध्यर्थं । २५ यत्तु **गौतमेनोक्तम्** ( अ. १७ सू. ८।९ ) । 'नित्यमभोज्यं । केशकीटावपन्नमिति' तत्केशकी-टादिभिः सह यत्पक्वं तद्विषयम् ॥ १८९ ॥

**त्रपुसीसकताम्राणां क्षाराम्लोदकवारिभिः ।**
**भस्माद्भिः कांस्यलोहानां शुद्धिः प्लावो द्रवस्य तु ॥ १९० ॥**

---

[1] ग–' संहतिः '.

**त्रपुप्र**भृतीनि प्रसिद्धानि। तेषां **क्षारोदके**नाम्लो**दकेन** वारिणा चोपघातापेक्षया समस्तैर्व्यस्तैर्वा शुद्धिः कार्या। **कांस्यलोहानां** भस्मोदकेन। ताम्रग्रहणाद्रीतिकापित्तलयोर्ग्रहणम्। एकयोनित्वात्। एतच्च ताम्रादीनामम्लोदकादिभिः शुद्ध्यभिधानं न नियमार्थम्। 'मलसंयोगजं तज्जं यस्य येनोपहन्यते। तस्य तच्छोधनं प्रोक्तं सामान्यं द्रव्यशुद्धिकृदि'त्यविशेषेण स्मरणात्। अतो न ताम्रादेरुच्छिष्टोदकादिलेपस्यान्येनापगमसंभवे नियमेनाम्लोदकादिना शुद्धिः कार्या। अत एव **मनु**ना सामान्येनोक्तम् ५ (अ. ५ श्लो. ११४)। 'ताम्रायःकांस्यरैत्यानां त्रपुणः सीसकस्य च। शौचं यथार्हं कर्तव्यं क्षाराम्लोदकवारिभिरिति'। यत्तु 'भस्मना शुद्ध्यते कांस्यं ताम्रमम्लेन शुद्ध्यतीति' तत्ताम्रादेः शौचस्य परां काष्ठां प्रतिपादयितुं नान्यस्य निषेधाय। यदा तूपघातातिशयस्तदाऽम्लोदकादीनामावृत्तिः। 'गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि च। शुद्ध्यन्ति दशभिः क्षारैः श्वकाकोपहतानि चेति' स्मरणात्। **शुद्धिः प्लावो द्रव्यस्य त्विति। द्रवस्य** द्रवद्रव्यस्य घृतादेः प्रस्थप्रमाणाधिकस्य १० श्वकाकाद्युपहतस्य अमेध्यसंस्पृष्टस्य च **प्लावः** प्लावनं समानजातीयेन द्रवद्रव्येण भाण्डस्यातिपूरणं यावन्निःसरणं **शुद्धि**रित्यनुवर्तते। ततोऽल्पस्य त्यागः। बह्वल्पत्वं च देशाद्यपेक्षया कालाद्यपेक्षयाऽपि वेदितव्यम्। यथाह **बौधायनः** (१।५।५३)। 'देशं कालं तथाऽऽत्मानं द्रव्यं द्रव्यप्रयोजनम्। उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पयेदिति'। कीटाद्युपहतस्य तु उत्पवनम्। यथाह **मनुः** (अ. ५ श्लो. ११५)। 'द्रवाणां चैव सर्वेषां शुद्धिरुत्पवनं स्मृतमिति'। उत्पवनं चात्र १५ वस्त्रान्तरिते पात्रे प्रक्षेपः। अन्यथा कीटाद्युपगमस्यासंभवात्। शूद्रभाण्डस्थितस्य मधूदकादेः पात्रान्तरानयनाच्छुद्धिः। 'मधूदके पयस्तद्विकाराश्च पात्रात्पात्रान्तरानयने शुद्धा' इति **बौधायनस्मरणात्**। मधुघृतादेर्वर्णापसदहस्तात्प्राप्तस्य पात्रान्तरानयनं पुनः पचनं कार्यम्। यथाह **शङ्खः**। 'अभ्यवहार्याणां घृतेनाभिघारितानां पुनः पचनम्। एवं स्नेहानां स्नेहवद्रसानामिति'॥ १९०॥

एवं सौवर्णराजतादीनां एतत्प्रकरणप्रतिपादितानां सर्वेषामुच्छिष्टस्नेहाद्युपघाते शुद्धिमुक्त्वेदानीं तेषाममेध्यापहतानां शुद्धिमाह २०

**अमेध्याक्तस्य मृत्तोयैः शुद्धिर्गन्धादिकर्षणात्।**
**वाक्शस्तमम्बुनिर्णिक्तमज्ञातं च सदा शुचि॥ १९१॥**

**अमेध्या** शरीरजा मला वसाशुक्रादयः। 'वसा शुक्रमसृङ्मज्जामूत्रविट्कर्णविण्नखाः। श्लेष्माश्रुदूषिका स्वेदो द्वादशैते नृणां मलाः' (अ. ५ श्लो. १३५)। तथा 'मानुष्यास्थि शवं विष्ठा रेतो २५ मूत्रार्तवं वसा। स्वेदोऽश्रुदूषिका श्लेष्म मद्यं चामेध्यमुच्यते' इति **मनुदेवलादि**भिः प्रतिपादिताः तैर्वसादिभि**रक्तं** लिप्तं **अमेध्याक्तं** तस्य मृदा तोयेन च शुद्धिः कर्तव्या गन्धापकर्षणेन। आदिग्रहणाल्लेपस्यापि ग्रहणम्। यथाह **गौतमः** (अ. १ सू. ४५)। 'लेपगन्धापकर्षणैः शौचममेध्यलिप्तस्येति'। सर्वशुद्धिषु च प्रथमं मृत्तोयैरेव लेपगन्धापकर्षणं कार्यम्। अशक्तावन्येन। 'तदद्भिः पूर्वं मृदा चेति' (अ. १ सू. ४६) **गौतम**स्मरणात्। वसादिग्रहणं च सर्वेषाममेध्यत्वं ३० प्रतिपादयितुं न समानोपघाताय। 'मद्यैर्मूत्रपुरीषैश्च श्लेष्मपूयाश्रुशोणितैः। संस्पृष्टं नैव शुद्ध्येत पुनःपाकेन मृन्मयमि'त्युपघाते विशेषाभिधानात् (**मनुः** अ. ५ श्लो. १२३)। 'अमेध्यत्वं चैवमेषां देहाच्चैव मलाश्च्युताः' इति वचनाद्देहच्युतानामेव न स्वस्थानावस्थितानाम्। पुरुषस्य नाभेरूर्ध्वं करव्यतिरिक्ताङ्गानामन्यामे-

ध्यस्पर्शे स्नानम् । यथाह देवलः । 'मानुषास्थि वसां विष्ठामार्तवं मूत्ररेतसी । मज्जानं शोणितं स्पृष्ट्वा परस्य स्नानमाचरेदिति' । तान्येव स्वानि संस्पृश्य प्रक्षाल्याचम्य शुद्ध्यतीति । तथा 'ऊर्ध्वं नाभेः करौ मुक्त्वा यदङ्गमुपहन्यते । तत्र स्नानमधस्तात्तु प्रक्षाल्याचम्य शुद्ध्यतीति' । कृतेऽपि यथोक्तशौचे मनसोऽपरितोषायत्र शुद्धिसंदेहो भवति तद्वाक्शस्तं शुचि । शुद्धमेतदस्त्विति ब्राह्मणवचनेन शुद्धं ५ भवतीत्यर्थः । अम्बुनिर्णिक्तं यत्र प्रतिपादिता शुद्धिर्नास्ति तस्य प्रक्षालनेन शुद्धिः । प्रक्षालनासहस्य प्रोक्षणेन । अज्ञातं च सदा यत्काकाद्युपहतमुपभुक्तं न कदाचिदपि ज्ञायते तच्छुचि । तदुपयोगाददृष्टदोषो नास्तीत्यर्थः । न तु तद्विरुध्यते । 'संवत्सरस्यैकमपि चरेत्कृच्छ्रं द्विजोत्तमः । अज्ञातभुक्तशुद्ध्यर्थं ज्ञातस्य तु विशेषत' इत्यदृष्टदोषेऽपि प्रायश्चित्तप्रतिपादनात् । नैतत्प्रायश्चित्तस्य जग्धिविषयत्वाद् दोषाभावस्य चान्योपयोगविषयत्वात् ॥ १९१ ॥

१० **शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम् ।**
**तथा मांसं श्वचाण्डालक्रव्यादादिनिपातितम् ॥ १९२ ॥**

**महीगतं** भूमिस्थमुदकं एकगवीतृप्तिजननसमर्थं चाण्डालादिभिरस्पृष्टं । **प्रकृतिस्थं** रूपरसगन्धस्पर्शान्तरमनापन्नं । **शुचि** आचमनादियोग्यं भवति । महीगतमित्यशुद्धभूगतस्याशुचित्वनिषेधार्थं न त्वान्तरिक्षोदकस्य शुद्धत्वव्यावृत्त्यर्थं । नाप्युद्धृतस्य । 'उद्धृताश्चापि शुद्ध्यन्ति शुद्धैः पात्रैः समुद्धृताः । १५ एकरात्रोषिता आपस्त्याज्याः शुद्धा अपि स्वयमिति' **देवल**वचनात् । तथा चाण्डालादिकृते तडागादौ न दोषः । 'अन्त्यैरपि कृते कूपे सेतौ वाप्यादिके तथा । तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते' इति **शातातप**स्मरणात् । **तथा मांसं श्वचाण्डालक्रव्यादादिभिर्निपातितं** शुचि । आदिग्रहणात्पुल्कसादेरपि ग्रहणम् । निपातितमिति ग्रहणं भक्षितस्य निराकरणार्थम् ॥ १९२ ॥

**रश्मिरग्नी रजश्छाया गौरश्वो वसुधाऽनिलः ।**
२० **विप्रुषो मक्षिकाः स्पर्शे वत्सः प्रस्रवने शुचिः ॥ १९३ ॥**

**रश्मयः** सूर्यादेः प्रकाशकद्रव्यस्य । **अग्निः** प्रसिद्धः । **रजः** अजादिसंबन्धव्यतिरेकेण । तत्र 'श्वकाकोष्ट्रखरोलूकसूकरग्राम्यपक्षिणाम् । अजाविरेणुसंस्पर्शादायुर्लक्ष्मीश्च हीयते' इति दोषश्रवणात् । संमार्जनादि कार्यम् । **छाया** वृक्षादेः । **गौः** । **अश्वः** । **वसुधा** भूमिः । **अनिलो** वायुः । **विप्रुषो**ऽवश्यायबिन्दवः मुखजानां वक्ष्यमाणत्वात् । **मक्षिकाश्च** । एते चाण्डालादिस्पृष्टा अपि **स्पर्शे** शुचयः । **वत्सः** २५ **प्रस्रवने** ऊधोगतदुग्धापकर्षणे **शुचिः** । वत्सग्रहणं बालस्योपलक्षणार्थम् । 'बालैरनुपरिक्रान्तं स्त्रीभिराचरितं च यत् । अविज्ञातं च यत्किंचिन्नित्यं मेध्यमिति स्थितिरिति' वचनात् ॥ १९३ ॥

**अजाश्वयोर्मुखं मेध्यं न गोर्न नरजा मलाः ।**
**पन्थानश्च विशुध्यन्ति सोमसूर्यांशुमारुतैः ॥ १९४ ॥**

**अजाश्वयोर्मुखं मेध्यं** । **न गोः** । **न नरजा मलाः** । नरशब्दो लक्षणया देहमभिधत्ते ३० तज्जा मला वसादयो न मेध्या भवन्ति । **पन्थानो** मार्गाश्चाण्डालादिभिः स्पृष्टा अपि रात्रौ **सोमांशुभिर्मारुतेन** च शुध्यन्ति । दिवा **सूर्यांशुभिर्मारुतेन** च ॥ १९४ ॥

---

१ ज्ञ–घ्रषित.

**मुखजा विप्रुषो मेध्यास्तथाचमनबिन्दवः ।**
**श्मश्रु चास्यगतं दन्तसक्तं त्यक्त्वा ततः शुचिः ॥ १९५ ॥**

**मुखे** जाता मुखजाः । श्लेष्म**विप्रुषो मेध्या** नोच्छिष्टं कुर्वन्ति अनिपातिताश्चेदङ्गे । 'न मुख्या विप्रुष उच्छिष्टं कुर्वन्ति न चेदङ्गे निपतन्तीति' **गौतम**वचनात् ( अ. १ सू. ४४ )। तथापि ये आचमनतोयबिन्दवः पादौ स्पृशन्ति ते मेध्याः । **श्मश्रु चास्यगतं** मुखप्रविष्टं उच्छिष्टं न करोति । **दन्तसक्तं** चान्नादिकं स्वयमेव च्युतं **त्यक्त्वा शुचिर्**भवति । अच्युतं दन्तसमम् । तथा च **गौतमः** (अ १ सू. ४१।४२।४३) । 'दन्तश्लिष्टं तु दन्तवदन्यत्र जिह्वाभिमर्शनात् प्राक् च्युतेरित्येके । च्युतेष्वास्रावविद्यान्निगरन्नेव तच्छुचिरिति' । निगरणं पुनरनेन **याज्ञवल्क्यो**क्तेन त्यागेन विकल्प्यते । निगरन्नेवेत्येवकारः । 'चर्वणे त्वाचमेन्नित्यं भुक्त्वा ताम्बूलचर्वणम् । ओष्ठौ विलोमकौ स्पृष्ट्वा वासो विपरिधाय चेति' **विष्णू**क्ताचमननिषेधार्थः । ताम्बूलग्रहणं फलाद्युपलक्षणार्थम् । यथाह **शातातपः** । 'ताम्बूले च फले चैव भुक्ते स्नेहावशिष्टके । दन्तलग्नस्य संस्पर्शे नोच्छिष्टो भवति द्विज' इति ॥ १९५ ॥

**स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्यापसर्पणे ।**
**आचान्तः पुनराचामेद्वासो विपरिधाय च ॥ १९६ ॥**

स्नानपानक्षुतस्वप्नभोजनरथ्यापसर्पणवासोविपरिधानेषु कृतेष्वाचान्तः पुनराचामेत् । द्विराचामेदित्यर्थः । चकाराद्रोदनाध्ययनारम्भालापानृतोक्त्यादिषु । तथा च **वसिष्ठः** ( अ. ३ सू. ३८ )। 'सुप्त्वा भुक्त्वा क्षुत्वा स्नात्वा पीत्वा रुदित्वा चाचान्तः पुनराचामेदिति' । **मनुर**पि ( अ. ५ श्लो. १४५ ) । 'सुप्त्वा क्षुत्वा च भुक्त्वा च ष्ठीवित्वोक्त्वानृतं वचः । पीत्वापोऽध्येष्यमाणश्च आचामेत्प्रयतोऽपि सन्निति' । भोजने त्वादावपि द्विराचमनम् । भोक्ष्यमाणस्तु प्रयतोऽपि द्विराचामेदि'त्यापस्तम्बस्मरणात् ( १-५-१६-१ ) । स्नानपानयोरादौ सकृत् । अध्ययने त्वारम्भे द्विः । शेषेष्वन्त एव यथोक्तं द्विराचमनम् ॥ १९६ ॥

**रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः ।**
**मारुतेनैव शुद्ध्यन्ति पक्वेष्टकचितानि च ॥ १९७ ॥**

**रथ्या** मार्गमात्रं । **कर्दमः** पङ्कः । **तोयमु**दकं । रथ्यास्थितानि कर्दमतोयानि **अन्त्यैश्**चाण्डालादिभिः **श्वभिर्वायसैश्च स्पृष्टानि । मारुतेनैव शुद्ध्यन्ति** शुद्धिमुपयान्ति । बहुवचनं तद्गतगोमयशर्करादिप्राप्त्यर्थम् । **पक्वेष्टिकादिभिश्चितानि** धवलगृहादीनि चाण्डालादिस्पृष्टानि मारुतेनैव शुद्ध्यन्ति । एतच्च 'प्रोक्षणं संहतानामि'त्युक्तप्रोक्षणनिषेधार्थं । तृणकाष्ठपर्णादिमयानां तु प्रोक्षणमेवेति ॥ १९७ ॥

इति द्रव्यशुद्धिप्रकरणम्

## अथ दानप्रकरणम् ९

इदानीं दानधर्मं प्रतिपादयिष्यंस्तदङ्गभूतपात्रप्रतिपादनार्थं तत्प्रशंसामाह

**तपस्तप्त्वाऽसृजद्ब्रह्मा ब्राह्मणान्वेदगुप्तये ।**
**तृप्त्यर्थं पितृदेवानां धर्मसंरक्षणाय च ॥ १९८ ॥**

ब्राह्मणप्रशंसा ।

५ **ब्रह्मा** हिरण्यगर्भः । कल्पादौ **तपस्तप्त्वा** ध्यानं कृत्वा 'कान्मुख्यान्सृजामीति' पूर्वं **ब्राह्मणान्** सृष्टवान् । किमर्थम्? **वेदगुप्तये** वेदरक्षणार्थम् । **पितॄणां देवतानां** च **तृप्त्यर्थम्** । अनुष्ठानोपदेशद्वारेण **धर्मसंरक्षणार्थं च** । अतस्तेभ्यो दत्तमक्षय्यफलं भवतीत्यभिप्रायः ॥ १९८ ॥

**सर्वस्य प्रभवो विप्राः श्रुताध्ययनशीलिनः ।**
१० **तेभ्यः क्रियापराः श्रेष्ठास्तेभ्योऽप्यध्यात्मवित्तमाः ॥ १९९ ॥**

**सर्वस्य** क्षत्रियादेर्**विप्राः प्रभवः श्रेष्ठा** जात्या कर्मणा च । ब्राह्मणेष्वपि **श्रुताध्ययनशीलिनः** श्रुताध्ययनसंपन्ना उत्कृष्टाः । **तेभ्यो**ऽपि **क्रियापराः** विहितानुष्ठानशीलाः । **तेभ्योऽप्यध्यात्मवित्तमाः** वक्ष्यमाणमार्गेण शमदमादियोगेनात्मतत्त्वज्ञाननिरताः श्रेष्ठा इत्यनुषज्यते ॥ १९९ ॥

एवं जातिविद्यानुष्ठानतपसां प्रशंसामुखेनैकैकयोगेन पात्रतामभिधायाधुना तेषां
१५ समुच्चयं संपूर्णपात्रतामाह

**न विद्यया केवलया तपसा वाऽपि पात्रता ।**
**यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥ २०० ॥**

सत्पात्रब्राह्मणलक्षणम् ।

**केवलया विद्यया** श्रुताध्ययनसंपत्त्या **नैव** संपूर्णपात्रत्वम् । **नापि** केवलेन **तपसा** शमदमादिना । अपिशब्दात्केवलेनानुष्ठानेन केवलया जात्या वा नैव संपूर्णमात्रता । कथं
२० तर्हि? **यत्र** पुरुषे **वृत्तम**नुष्ठानं **इमे चोभे** विद्यातपसी स्तः चशब्दाद्ब्राह्मणजातिश्च **तदेव मन्वादि**भिः संपूर्ण**पात्रं प्रकीर्तितं** । **हि** यस्मादतः परमुत्कृष्टं पात्रं नास्ति । अत्र जातिविद्यानुष्ठानतपःसमुच्चयानामुत्तरोत्तरप्राशस्त्येन फलतारतम्यं द्रष्टव्यम् ॥ २०० ॥

**गोभूतिलहिरण्यादि पात्रे दातव्यमर्चितम् ।**
**नापात्रे विदुषा किंचिदात्मनः श्रेय इच्छता ॥ २०१ ॥**

सत्पात्रे गवादिदानं देयम् ।

२५ पूर्वोक्ते **पात्रे** गवादिकम**र्चितं** शास्त्रोक्तोदकदानादीतिकर्तव्यतासहितं देयम् । **अपात्रे** क्षत्रियादौ ब्राह्मणे च पतितादौ **विदुषा** पात्रविशेषेण फलविशेषं जानता **श्रेयः**संपूर्णफलमिच्छता **किंचिद**ल्पमपि **न दातव्यम्** । श्रेयोग्रहणादपात्रदानेऽपि किमपि तामसं फलमस्तीति सूचितम् । यथाह **कृष्णद्वैपायनः** ( भ. गी. अ. १७।३२ )। 'अदेश

काले यद्दानमपात्रेभ्यश्च दीयते । असत्कृतमवज्ञातं तत्तामसमुदाहृतमिति ?। अपात्रे न दातव्यमिति वदता विशिष्टदेशकालद्रव्यसन्निधौ पात्रस्यासन्निधाने द्रव्यस्य वा तदुद्देशेन त्यागं तस्मै प्रतिश्रवणं वा कृत्वा समर्पयेत् । नापात्रे दातव्यमिति सूचितम् । तथा प्रतिश्रुतमपि पश्चात्पातकादिसंयोगे ज्ञाते न देयम् । ' प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यादिति ' निषेधात् (**गौतमीये** अ. ५ सू. २१)॥२०१॥

अपात्रे दातुर्निषेधमुक्त्वा प्रतिग्रहीतारं प्रत्याह ५

**विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः ।**
**गृह्णन्प्रदातारमधो नयत्यात्मानमेव च ॥ २०२ ॥**

प्रतिग्रहनिषेधः । **विद्यातपोभ्यां हीनेन प्रतिग्रहः** सुवर्णादिर्न **ग्राह्यः** । यस्माद्विद्यादिहीनः प्रति**गृह्णन् दातारमात्मानं चाधो नरकं नयति** प्रापयतीति ॥ २०२ ॥

गवादि पात्रे दातव्यमित्युक्तं ; तत्र विशेषमाह १०

**दातव्यं प्रत्यहं पात्रे निमित्ते तु विशेषतः ।**
**याचितेनापि दातव्यं श्रद्धापूतं तु शक्तितः ॥ २०३ ॥**

प्रतिदिवसं शक्त्यनुसारेण यथोक्तविधिना **पात्रे** गवादिकं स्वं कुटुम्बाविरोधेन दातव्यम् । **निमित्ते**षु चन्द्रोपरागादिषु **विशेषतो**ऽधिकं यत्नेन दातव्यम् । **याचितेनापि श्रद्धापूतं** अनसूयापवित्रीकृतं शक्त्या **दातव्यम्** । ' याचितेनापि दातव्यमिति ' १५ वदता यथोक्तं पात्रं स्वयमेव गत्वा आहूय वा यद्दानं तन्महाफलमुक्तम् । तथा च स्मरणम् । "गत्वा यद्दीयते दानं तदनन्तफलं स्मृतम् । सहस्रगुणमाहूय याचिते तु तदर्धकमिति " ॥ २०३ ॥

दाने विशेषः ।

गवादिकं देयमित्युक्तं; तत्र गोदाने विशेषमाह

**हेमशृङ्गी शफै रौप्यैः सुशीला वस्त्रसंयुता ।**
**सकांस्यपात्रा दातव्या क्षीरिणी गौः सदक्षिणा ॥ २०४ ॥** २०

गोदाने विशेषः । हेममये शृङ्गे यस्याः सा **हेमशृङ्गी** शफैः **रौप्यैः** राजतैः **खुरैः** संयुता वस्त्रेण च संयुता कांस्यपात्रसहिता बहुक्षीरा **गौ**र्यथाशक्ति दक्षिणासहिता **दातव्या** ॥२०४॥

**दाताऽस्याः स्वर्गमाप्नोति वत्सरान् रोमसंमितान् ।**
**कपिला चेत्तारयति भूयश्चासप्तमं कुलम् ॥ २०५ ॥**

**अस्या गोः रोमसंमितान्** रोमसंख्याकान् **वत्सरान् स्वर्गमाप्नोति दाता** । सा यदि २५ **कपिला** तदा न केवलं दातारं **तारयति** किंतु **कुल**मपि **आसप्तमं** सप्तममभिव्याप्य पित्रादीन्षट् आत्मानं च सप्तमम् । अप्यर्थे **भूयः** शब्दः ॥ २०५ ॥

गोदाने फलम् ।

**सवत्सारोमतुल्यानि युगान्युभयतोमुखीम् ।**
**दाताऽस्याः स्वर्गमाप्नोति पूर्वेण विधिना ददत् ॥ २०६ ॥**

**सवत्सारोमतुल्यानि** वत्सेन सह वर्तत इति सवत्सा तस्या रोमतुल्यानि वत्सस्य गोश्च यावन्ति रोमाणि तावत्संख्याकानि **युगानि** कृतत्रेतादीनि **उभयतोमुखीं ददत्स्वर्गमाप्नोति पूर्वेण विधिना** चेत् ॥ २०६ ॥

उभयतोमुखी दान-फलम् ।

का पुनरुभयतोमुखी कथं तावत्तद्दानं महाफलमित्यत आह

५ **यावद्वत्सस्य पादौ द्वौ मुखं योन्यां च दृश्यते ।**
**तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति ॥ २०७ ॥**

गर्भान्निर्गच्छतो **वत्सस्य द्वौ पादौ मुखं च यावत्कालं योन्यां दृश्यते** तावत्कालं उभयतोमुखमस्या अस्तीत्युभयतोमुखी । **यावत्कालं गर्भं न मुञ्चति तावत्सा गौः पृथिवी**समा **ज्ञेया** । अतः फलातिशयो युक्तः ॥ २०७ ॥

उभयतोमुखी लक्षणं तद्दाने फलं च ।

१० **यथाकथंचिद्दत्वा गां धेनुं वाऽधेनुमेव वा ।**
**अरोगामपरिक्लिष्टां दाता स्वर्गे महीयते ॥ २०८ ॥**

**यथाकथंचिद्**वेमशृङ्गाद्यभावेऽपि यथासंभवं पूर्वोक्तविधिना **धेनुं** दोग्ध्रीं **अधेनुं** वा अवन्ध्यां **अरोगां** रोगरहितां **अपरिक्लिष्टां** अत्यन्तादुर्बलां गां दत्वा **दाता स्वर्गे महीयते** पूज्यते ॥ २०८ ॥

सामान्यगोदाने फलम् ।

१५　गोदानसमान्याह

**श्रान्तसंवाहनं रोगिपरिचर्या सुरार्चनम् ।**
**पादशौचं द्विजोच्छिष्टमार्जनं गोप्रदानवत् ॥ २०९ ॥**

श्रान्तस्यासनशयनादिदानेन श्रमापनयनं **श्रान्तसंवाहनम्** । **रोगिणां परिचर्या** यथाशक्त्यौषधादिदानेन । **सुरार्चनं** हरिहरहिरण्यगर्भादीनां गन्धमाल्यादिभिराराधानम् । **पादशौचं**
२० **द्विजानाम्** समानानामधिकानां च । तेषामेवोच्छिष्टस्य संमार्जनं । एतान्यनन्तरोक्तेन गोदानेन समानि ॥ २०९ ॥

**भूदीपांश्चान्नवस्त्राम्भस्तिलसर्पिःप्रतिश्रयान् ।**
**नैवेशिकं स्वर्णधुर्यं दत्वा स्वर्गे महीयते ॥ २१० ॥**

**भूः** फलप्रदा । **दीपा** देवायतनादिषु । **प्रतिश्रयः** प्रवासिनामाश्रयः । निवेशनार्थं गार्हस्थ्यार्थं
२५ यत्कन्या दीयते तन्**नैवेशिकं** । **स्वर्णं** सुवर्णं । **धुर्यो** भारसहो बलीवर्दः । शेषं प्रसिद्धं । एतान् भूदीपादीन् दत्वा स्वर्गलोके **महीयते** पूज्यते । स्वर्गफलं च भूमिदानादीनां न फलान्तरव्युदासार्थम् । 'यत्किंचित्कुरुते पापं ज्ञानतोऽज्ञानतोऽपि वा । अपि गोचर्ममात्रेण भूमिदानेन शुद्ध्यति' । तथा 'वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः । तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् । वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः' इत्यादिफलान्तरश्रवणात् (**मनुः** अ. ४ श्लो. २२९।२३१)। गोचर्मलक्षणं च **बृहस्प**-

**तिना** दर्शितम् । 'सप्तहस्तेन दण्डेन त्रिंशद्दंडं निवर्तनम् । दश तान्येव गोचर्म दत्वा स्वर्गे महीयते' ॥ २१० ॥

**गृहधान्याभयोपानच्छात्रमाल्यानुलेपनम् ।**
**यानं वृक्षं प्रियं शय्यां दत्वाऽत्यन्तं सुखी भवेत् ॥ २११ ॥**

**गृहं** प्रसिद्धं । **धान्यानि** च शालिगोधूमादीनि । **अभयं** भीतत्राणं । **उपानहौ** । **छत्रं** । ५ **माल्यं** मल्लिकादेः । **अनुलेपनं** कुङ्कुमचन्दनादि । **यानं** रथादि । **वृक्षमु**पजीव्यमाम्रादिकं । **प्रियं** यद्यस्य प्रियं धर्मादिकं । **शय्यां** च **दत्वाऽत्यन्तं** अतिशयेन **सुखी** भवति । न च हिरण्यादिवद्धस्ते दातुमशक्यत्वाद्धर्मादीनामसंभवः । भूमिदानादावपि समानत्वात् । स्मृत्यन्तरेऽपि धर्मदानश्रवणात् । 'देवतानां गुरूणां च मातापित्रोस्तथैव च । पुण्यं देयं प्रयत्नेन नापुण्यं चोदितं क्वचित्' ।

अपुण्यदाने तदेव वर्धते प्रतिग्रहीतुरपि लोभादिना प्रवृत्तस्य । 'यः पाप्मबलं ज्ञात्वा प्रति- १० गृह्णाति दुर्मतिः । गर्हिताचरणात्तस्य पापं तावत्समाश्रयेत् । समं द्विगुणसाहस्रमानन्त्यं च प्रदातृष्विति' स्मरणात् । इह च सर्वत्र देशकालपात्रविशेषादेयविशेषाद्दातृविशेषा'द्दाने फलं मया प्रोक्तं हिंसायां तद्वदेव हीति' प्रतिग्रहीतृवृत्तिविशेषाच्च दातृप्रतिग्रहीत्रोः फलतारतम्यं द्रष्टव्यम् ॥ २११ ॥

दानात्फलमुक्तम् । इदानीं दानव्यतिरेकेणापि दानफलावाप्तिहेतुमाह

**सर्वधर्ममयं ब्रह्म प्रदानेभ्योऽधिकं यतः ।** १५
**तद्ददत्समवाप्नोति ब्रह्मलोकमविच्युतम् ॥ २१२ ॥**

यस्मा**त्सर्वधर्ममयं ब्रह्म** अवबोधकत्वेन तस्मात्तद्दानं सर्व **दानेभ्योऽप्यधिकं** अत**स्तद्द**दध्यापनादिद्वारेण **ब्रह्मलोकमवाप्नोति अविच्युतं** च्युतिर्यथा न भवति । आ भूतसप्लवं ब्रह्मलोकेऽवतिष्ठत इत्यर्थः । अत्र च अन्नदाने परस्वत्वापादनमात्रं दानं, स्वत्वानिवृत्तेः कर्तुमशक्यत्वात् ॥ २१२ ॥ २०

**प्रतिग्रहसमर्थोऽपि नादत्ते यः प्रतिग्रहम् ।**
**ये लोका दानशीलानां स तानाप्नोति पुष्कलान् ॥ २१३ ॥**

दानं विनाऽपि दानफलावाप्तिः ।

यः पात्रभूतोऽपि प्राप्तं प्रतिग्रहं सुवर्णादिकं नादत्ते न स्वीकरोति असौ यद्यत्याप्तं नोपादत्ते तत्तद्दानशीलानां ये लोकाः तान्समग्रानाप्नोति ॥ २१३ ॥

इदानीं सर्वप्रतिग्रहनिवृत्तिप्रसंगेऽपवादमाह २५

**कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः ।**
**मांसं शय्याऽऽसनं धानाः प्रत्याख्येयं न वारि च ॥ २१४ ॥**

**धानाः** भ्रष्टा यवाः । **क्षिति**र्मृत्तिका । शेषं प्रसिद्धं । एतत्कुशादिकं स्वयमुपानीतं **न प्रत्याख्येयं । च**कारादृहादि । 'शय्यां गृहान्कुशान्गन्धानपः पुष्पं मणीन्दधि । मत्स्यान्धानाः पयो मांसं

शाकं चैव न निर्णुदेत् ' ( अ॰ ४ श्लो. २५० )। तथा । ' एधोदकं मूलफलमन्नमभ्युद्यतं च यत् । सर्वतः प्रतिगृह्णीयान्मध्वथाभयदक्षिणामिति ' **मनु**स्मरणात् (अ. ४ श्लो. २४७) ॥ २१४ ॥

किमिति न प्रत्याख्येयमित्याह

**अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः ।**
**अन्यत्र कुलटाषण्ढपतितेभ्यस्तथा द्विषः ॥ २१५ ॥**

यद्यस्मादयाचितमेतत्कुशाद्याहृतं दुष्कृतकारिणोऽपि संबन्धि ग्राह्यं किमुत यथोक्तकारिणः। तस्मान्न प्रत्याख्येयम् । **अन्यत्र कुलटाषण्ढपतितेभ्यः** शत्रोश्च । कुलात्कुलमटन्तीति कुलटाः स्वैरिण्यादिकाः । षण्ढस्तृतीयाप्रकृतिः ॥ २१५ ॥

**देवातिथ्यर्चनकृते गुरुभृत्यार्थमेव च ।**
**सर्वतः प्रतिगृह्णीयादात्मवृत्त्यर्थमेव च ॥ २१६ ॥**

देवतातिथ्यर्चनादेरावश्यकत्वात्तदर्थमनात्मकारणात् पतिताद्यत्यन्तं कुत्सितवर्ज्यं सर्वतः प्रतिगृह्णीयात् । गुरवो मातापित्रादयः । भृत्या भरणीया भार्यापुत्रादयः ॥ २१६ ॥

प्रतिग्रहनिवृत्तेरपवादान्तरमाह ।

इति दानधर्मप्रकरणम्

## अथ श्राद्धप्रकरणम् १०

इदानीं श्राद्धप्रकरणमारभ्यते । **श्राद्धं** नामादनीयस्य तत्स्थानीयस्य वा द्रव्यस्य प्रेतोद्देशेन श्रद्धया त्यागः । तच्च **द्विविधं पार्वणमेकोद्दिष्ट**मिति । तत्र त्रिपुरुषोद्देशेन यत्क्रियते **तत्पार्वणम्।** एकपुरुषोद्देशेन क्रियमाण**मेकोद्दिष्टम् । पुनश्च** **त्रिविधं। नित्यं नैमित्तिकं काम्यं** चेति । तत्र **नित्यं** नियतनिमित्तोपाधौ चोदितमहरहमावास्याष्टकादिषु । अनियतनिमित्तोपाधौ चोदितं **नैमित्तिकं,** यथा पुत्रजन्मादिषु । फलकामनोपाधौ विहितं **काम्यं,** यथा स्वर्गादिकामनायां कृत्तिकादिनक्षत्रेषु । पुनश्च **पञ्चविधं। अहरहःश्राद्धं पार्वणं वृद्धिश्राद्धमेकोद्दिष्टं सपिण्डीकरणं** चेति । तत्रा**हरहः श्राद्धं ।** ' अन्नं पितृमनुष्येभ्यः ' इत्यादिनोक्तम् । तथा च **मनुः** । ' दद्यादहरहः श्राद्धमन्नाद्येनोदकेन वा । पयोमूलफलैर्वाऽपि पितृभ्यः प्रीतिमक्षयामिति ' ॥

अधुना पार्वणं वृद्धिश्राद्धं च दर्शयिष्यंस्तयोः कालानाह

**अमावास्याऽष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम् ।**
**द्रव्यं ब्राह्मणसंपत्तिर्विषुवत्सूर्यसंक्रमः ॥ २१७ ॥**

**व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः ।**
**श्राद्धं प्रतिरुचिश्चैव श्राद्धकालाः प्रकीर्तिताः ॥ २१८ ॥**

यत्र दिने चन्द्रमा न दृश्यते सा **अमावास्या** तस्यामहर्द्वयव्यापिन्यामपराह्णव्यापिनी ग्राह्या । 'अपराह्णः पितॄणामिति' वचनात् । अपराह्णश्च पञ्चधाविभक्ते दिने चतुर्थो भागस्त्रिमुहूर्तः । **अष्टकाश्च**तस्रः 'हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका' इत्या**श्वलायनोक्ताः** । **वृद्धिः** ५ पुत्रजन्मादि । **कृष्णपक्षो**ऽपरपक्षः । **अयनद्वयं** दक्षिणोत्तरसंज्ञकम् । **द्रव्यं** कृशरमांसादिकं । **ब्राह्मणसंपत्ति**र्वक्ष्यमाणा । **विषुवद्द्वयं** मेषतुलयोः सूर्यगमनं । **सूर्यसंक्रमः** आदित्यस्य राशेः राश्यन्तरगमनं । अयनविषुवतोः संक्रान्तित्वे सिद्धेऽपि पृथगुपादानं फलातिशयप्रतिपादनार्थम् । **व्यतीपातो** योगविशेषः । **गजच्छाया** । 'यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः । याम्या तिथिर्भवेत्सा हि गजच्छाया प्रकीर्तितेति' परिभाषिता । हस्तिच्छायेति केचित् । सेह न गृह्यते १० कालप्रकमात् । **ग्रहणं** सोमसूर्ययोरुपरागः । यदा च कर्तुः **श्राद्धं प्रति रुचि**र्भवति तदाऽपि । चशब्दाद्युगादिप्रभृतयः । एते **श्राद्धकालाः** । यद्यपि 'चन्द्रसूर्यग्रहे नाद्यादिति' ग्रहणे भोजननिषेधस्तथाऽपि भोक्तुर्दोषो दातुरभ्युदयः ॥ २१७ ॥ २१८ ॥

अहरहःश्राद्धव्यतिरिक्तवक्ष्यमाणचतुर्विधश्राद्धेषु ब्राह्मणसंपत्तिमाह

**अग्र्याः सर्वेषु वेदेषु श्रोत्रियो ब्रह्मविद्युवा ।** १५
**वेदार्थविज्ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णिकः ॥ २१९ ॥**

**सर्वेषु वेदेषु** ऋग्वेदादिषु अनन्यमनस्कतयाऽप्यस्खलिताध्ययनक्षमा **अग्र्याः** । **श्रोत्रियः** श्रुताध्ययनसंपन्नः । वक्ष्यमाणं ब्रह्म यो वेत्ति असौ **ब्रह्मवित्** । **युवा** मध्यमवयस्कः । सर्वस्येदं विशेषणं । 'मन्त्रब्राह्मणयोरर्थं वेत्तीति' **वेदार्थवित्** ।

श्राद्धे ब्राह्मणादयः ।

**ज्येष्ठसामेति** सामविशेषस्तदध्ययनाङ्गव्रतं च तद्व्रताचरणेन यस्तदधीते स **ज्येष्ठसामा** । त्रिमधुः २० ऋग्वेदैकदेशस्तद्व्रतं च तद्व्रताचरणेन तदधीते इति **त्रिमधुः** । त्रिसुपर्णं ऋग्यजुषोरेकदेशस्तद्व्रतं च तद्व्रताचरणेन यस्तदधीते स **त्रिसुपर्णिकः** । एते ब्राह्मणाः श्राद्धसंपद इति वक्ष्यमाणक्रियासंबन्धः ॥ २१९ ॥

**स्वस्रीयऋत्विग्जामातृयाज्यश्वशुरमातुलाः ।**
**त्रिणाचिकेतदौहित्रशिष्यसंबन्धिबान्धवाः ॥ २२० ॥** २५

**स्वस्रीयो** भागिनेयः । **ऋत्विगु**क्तलक्षणः । **जामाता** दुहितुर्भर्ता । त्रिणाचिकेतं यजुर्वेदैकदेशः तद्व्रतं च तद्व्रताचरणेन यस्तदध्यायी स **त्रिणाचिकेतः** । अन्यत्प्रसिद्धं । एते च पूर्वोक्ताग्र्यश्रोत्रियाद्यभावे वेदितव्याः । 'एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः । अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरगर्हित' (अ. ३ श्लो. १४७) इत्यभिधाय **मनुना** स्वस्रीयादीनामभिहितत्वात् ॥ २२० ॥

**कर्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निर्ब्रह्मचारिणः ।**
**पितृमातृपराश्चैव ब्राह्मणाः श्राद्धसंपदः ॥ २२१ ॥**

**कर्मनिष्ठा** विहितानुष्ठानतत्पराः। **तपोनिष्ठास्त**पःशीलाः । सभ्यावसथ्यौ त्रेताग्नयश्च यस्य सन्ति स **पञ्चाग्निः** पञ्चाग्निविद्याध्यायी च । **ब्रह्मचारी** उपकुर्वाणको नैष्ठिकश्च । **पितृमातृपरास्त**त्पूजापराः। **च**कारात् ज्ञाननिष्ठादयः । **ब्राह्मणाः** न क्षत्रियादयः । **श्राद्धसंपदः** श्राद्धेष्वक्षय्यफलसंपत्तिहेतवः ॥ २२१ ॥

**रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा ।**
**अवकीर्णी कुण्डगोलौ कुनखी श्यावदन्तकः ॥ २२२ ॥**

वर्ज्यानाह ।

**रोगी** महारोगोपसृष्टः । हीनमतिरिक्तं वाऽङ्गं यस्यासौ **हीनातिरिक्ताङ्गः** । एकेनाक्ष्णा यः पश्यति स **काणः** । एतस्मादेवान्धबधिरवृद्धप्रजननखलतिदुश्चर्मप्रभृतयो निरस्ताः । पुनर्भूरुक्तलक्षणा तस्यां जातः **पौनर्भवः** । **अवकीर्णी** ब्रह्मचर्ये एव स्खलितब्रह्मचर्यः । कुण्डगोलौ ' परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ । पत्यौ जीवति कुण्डस्तु मृते भर्तरि गोलकः' इत्येवमुक्तलक्षणकौ (**मनुः** अ. ३ श्लो. १७४)। **कुनखी** संकुचितनखः । **श्यावदन्तकः** स्वभावात्कृष्णदशनः। एते श्राद्धे निन्दिता इति वक्ष्यमाणेन संबन्धः ॥ २२२ ॥

**भृतकध्यापकः क्लीबः कन्यादूष्यभिशस्तकः ।**
**मित्रध्रुक् पिशुनः सोमविक्रयी परिविन्दकः ॥ २२३ ॥**

वेतनग्रहणेन योऽध्यापयति स **भृतकाध्यापकः** । वेतनदानेन च नोऽधीते सोऽपि । **क्लीबो** नपुंसकः । असद्भिः सद्भिर्वा दोषैर्यः कन्यां दूषयति स **कन्यादूषी** । सताऽसता वा ब्रह्महत्यादिनाभियुक्तो**ऽभिशस्तः** । **मित्रध्रुक्** मित्रद्रोही । परदोषसंकीर्तनशीलः **पिशुनः** । **सोमविक्रयी** यज्ञे सोमस्य विक्रेता । **परिविन्दकः** परिवेत्ता । ज्येष्ठे अकृतदारे अकृताग्निपरिग्रहे वा यः कनीयान् दारपरिग्रहमग्निपरिग्रहं वा कुर्यात्स परिवेत्ता । ज्येष्ठस्तु परिवित्तिः । यथाह **मनुः** (अ. ३ श्लो. १७) १। 'दाराग्निहोत्रसंयोगं यः करोत्यग्रजे स्थिते । परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वज इति।' एवं दातृयाजकावपि । ' परिवित्तिः परिवेत्ता च यया परिविद्यते । सर्वे ते नरकं यान्ति दातृयाजकपञ्चमा ' इति ( अ. ३ श्लो.१७२ ) ॥ २२३ ॥

**मातापितृगुरुत्यागी कुण्डाशी वृषलात्मजः ।**
**परपूर्वापतिः स्तेनः कर्मदुष्टाश्च निन्दिताः ॥ २२४ ॥**

विनाकारणेन मातापितृगुरूंस्त्यजति स **मातापितृगुरुत्यागी** । एवं भार्यापुत्रत्याग्यपि। 'वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः । अप्यकार्यशतं कृत्वा भर्तव्या **मनु**रब्रवीदिति ' समान-

१ खलतिर्निष्केशशिराः खल्वाटः ।

निर्देशात् । कुण्डास्यान्नं योऽश्नात्यसौ **कुण्डाशी**। एवं गोलकस्यापि।[1] 'यस्तयोरन्नमश्नाति स कुण्डाशी प्रकीर्तितः' इति वचनात् । वृषलो निर्धर्मस्तत्सुतो **वृषलात्मजः । परपूर्वा** पुनर्भूः तस्याः **पतिः ।** अदत्तादायी **स्तेनः । कर्मदुष्टाः** शास्त्रविरुद्धकारिणः । चक्रांगत्किंतवदेवलकप्रभृतयः । एते श्राद्धे **निन्दिताः** प्रतिषिद्धाः । 'अग्र्याः सर्वेषु वेदेष्वित्यादिना' श्राद्धयोग्यब्राह्मणप्रतिपादनेनैव तद्व्यतिरिक्तानामयोग्यत्वे सिद्धेऽपि पुनः केषांचिद्रोग्यादीनां प्रतिषेधवचनं उक्तलक्षणब्राह्मणासंभवे प्रतिषेधरहितानां प्राप्त्यर्थम् ॥ २२४ ॥ ५

एवं श्राद्धकालान् ब्राह्मणांश्चोक्त्वाऽधुना पार्वणप्रयोगमाह

**निमन्त्रयेत पूर्वेद्युर्ब्राह्मणानात्मवान् शुचिः ।**
**तैश्चापि संयतैर्भाव्यं मनोवाक्कायकर्मभिः ॥ २२५ ॥**

पार्वणश्राद्धप्रयोगः ।

पूर्वोक्तान्**ब्राह्मणान्** 'श्राद्धे क्षणः क्रियतामिति' **पूर्वेद्युर्निमन्त्रयेत** प्रार्थनया क्षणमभ्युपगमयेत् । अपरेद्युर्वा । 'पूर्वेद्युरपरेद्युर्वा श्राद्धकर्मण्यवस्थिते । निमन्त्रयेत त्र्यवरान् सम्यग्विप्रान् यथोदितानिति' **मनु**स्मरणात् (अ. ३ श्लो. १८७) । **आत्मवान्** शोकोन्मादादिरहितः सन् दोषवान्न भवति । यद्वा आत्मवान् नियतेन्द्रियो भवेत् । **शुचिः** प्रयतश्च । **तैर**पि निमन्त्रितैर्ब्राह्मणै**र्मनोवाक्कायव्या**पारैः **संयतै**र्नियतैर्भवितव्यम् ॥ २२५ ॥ १०

**अपराह्णे समभ्यर्च्य स्वागतेनागतांस्तु तान् ।**
**पवित्रपाणिराचान्तानासनेषूपवेशयेत् ॥ २२६ ॥** १५

**अपराह्णे** तूक्तलक्षणे **तान्नि**मन्त्रितान्ब्राह्मणानाहूय स्वागतवचनेन पूजयित्वा कृतपादधावनानाचान्तान् कृतेष्वासनेषु **पवित्रपाणिः** पवित्रपाणीनु**पवेशयेत् ।** यद्यपि सामान्येनापराह्ण इत्युक्तं तथापि कुतपे प्रारभ्य तदादिपञ्चसु मुहूर्तेषु परिसमापनं श्रेयस्करम् । 'अह्नो मुहूर्ता विख्याता दश पञ्च च सर्वदा । तत्राष्टमो मुहूर्तो यः स कालः कुतपः स्मृतः ॥ मध्याह्ने सर्वदा यस्मान्मन्दीभवति भास्करः । तस्मादनन्तफलदस्तत्रारम्भो विशिष्यते ॥ ऊर्ध्वं मुहूर्तात्कुतपाद्यन्मुहूर्तचतुष्टयम् । मुहूर्तपञ्चकं ह्येतत्स्वधाभवनमिष्यते ॥' इति वचनात् । तथाऽन्यदपि श्राद्धोपयोगि कुतपसंज्ञकमुक्तम् । 'मध्याह्नः खड्गपात्रं च तथा नेपालकम्बलः । रौप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः । पापं कुत्सितमित्याहुस्तस्य संतापकारिणः । अष्टावेते यतस्तस्मात्कुतपा इति विश्रुता' इति ॥ २२६ ॥ २०

**युग्मान्दैवे यथाशक्ति पित्र्येऽयुग्मांस्तथैव च ।**
**परिस्तृते शुचौ देशे दक्षिणाप्रवणे तथा ॥ २२७ ॥** २५

**दैवे** आभ्युदयिके श्राद्धे **युग्मान्** समान् ब्राह्मणान् उपवेशयेत् । कथं ? **यथाशक्ति** शक्तिमनतिक्रम्य । तत्र वैश्वदेवे द्वौ द्वौ मात्रादीनां तिसृणामेकैकस्या द्वौ द्वौ तिसृणां वा द्वौ एवं पित्रादीना-

[1] श्लो. २१९

**मेकैकस्य द्वौद्वौ** त्रयाणां वा द्वौ । एवं मातामहादीनां च वर्गत्रयेऽपि वैश्वदेवं पृथक् तन्त्रं वा । **पित्र्ये** पार्वणश्राद्धे **अयुग्मान्विष**मानुपवेशयेदिति संबध्यते । एतच्च **परिस्तृते** सर्वतः प्रच्छादिते **शुचौ** गोमयादिनोपलिप्ते **दक्षिणाप्रवणे** दक्षिणतोऽवनते **देशे** कार्यम् ॥ २२७ ॥

अयुग्मान्पित्र्य इति पार्वणश्राद्धाङ्गभूते वैश्वदेवेऽप्ययुग्मप्रसंगे इदमारभ्यते

५ **द्वौ दैवे प्राक् त्रयः पित्र्ये उदगेकैकमेव वा ।**
**मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम् ॥ २२८ ॥**

**द्वौ दैव इति । दैवे** वैश्वदेवे **द्वौ** ब्राह्मणौ **प्राङ्मुखा**वुपवेश्यौ । पित्र्ये अयुग्मानित्यविशेषप्रसंगे विशेष उच्यते । त्रयः पित्र्ये इति । **पित्र्ये** पित्रादिस्थाने **त्रय उदङ्मुखा** उपवेश्याः । पक्षान्तरमाह । **एकैकमेव वा ।** वैश्वदेवे पित्र्ये च एकमेकमुपवेशयेत् । संभवतो विकल्पः । **माता-**
१० **महानामप्येवं** श्राद्धे निमन्त्रणादि द्वौ दैवे प्राक् त्रयः पित्र्ये उदगेकैकमेव वेत्येव मतं पितृश्राद्धवत्कर्तव्यम् । पितृश्राद्धे मातामहश्राद्धे च **वैश्वदेविकं** पृथक् तन्त्रेण **वा** कर्तव्यम् । तन्त्रशब्दः समुदायवाचक इति । यदा तु द्वावेव ब्राह्मणौ लब्धौ तदा तु वैश्वदेवे पात्रं प्रकल्प्य उभयत्रैकैकं ब्राह्मणं नियुञ्ज्यात् । यथाह **वसिष्ठः** ( अ. ८ श्लो. ३०–३१ ) । ' यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत् । अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य तु ॥ देवतायतने कृत्वा ततः श्राद्धं प्रवर्तयेत् ।
१५ प्रास्येदन्नं तदग्नौ तु दद्याद्वा ब्रह्मचारिण इति ' ॥ २२८ ॥

**पाणिप्रक्षालनं दत्वा विष्टरार्थं कुशानपि ।**
**आवाहयेदनुज्ञातो ' विश्वे देवास ' इत्यृचा ॥ २२९ ॥**

तदनन्तरं वैश्वदेवार्थं ब्राह्मणहस्ते जलं **दत्वा विष्टरार्थं कुशांश्च** युग्मान् द्विगुणितानासने दक्षिणतो दत्वा ' विश्वान्देवानावाहयिष्ये ' इति ब्राह्मणान् पृष्ट्वा तै'रावाहये'त्यनुज्ञातो ' विश्वे देवास
२० आगते ' त्यनया ऋचा ' आगच्छन्तु महाभागा ' इत्यनेन च स्मार्तेन मन्त्रेण तानावाहयेत् । एतच्च यज्ञोपवीतिना प्रदक्षिणं च कार्यम् । ' अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणमिति ' पित्र्ये विशेषस्मरणात् ॥ २२९ ॥

**यवैरन्ववकीर्याथ भाजने सपवित्रके ।**
**'शन्नो देव्या' पयः क्षिप्त्वा 'यवोऽसीति' यवांस्तथा ॥ २३० ॥**
१५ **'या दिव्या' इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत् ।**

ततो विश्वेदेवार्थं ब्राह्मणसमीपे भूमिं प्रादक्षिण्येन **यवैरन्ववकीर्य** अनन्तरं तैजसादि**भाजने सपवित्रके** कुशयुग्मान्तर्हिते ' शन्नो देवीरभिष्टय ' इत्यनयर्चाऽऽपः क्षिप्त्वा ' यवोऽसि धान्यराजो वे'त्यादिना मन्त्रेन **यवान्** । ततो गन्धपुष्पाणि च क्षिप्त्वाऽनन्तरमर्घ्यपात्रपवित्रान्तर्हितेषु ब्राह्मण**हस्तेषु** ' या दिव्या आपः पयसे'त्यादिना मन्त्रेण ' विश्वेदेवा इदं वोऽर्घ्यं ' इत्यर्घ्योदकं **विनि-**
३० **क्षिपेत्** ॥ २३० ॥

**दत्वोदकं गन्धमाल्यं धूपदानं सदीपकम् ॥ २३१ ॥**
**तथाऽऽच्छादनदानं च करशौचार्थमम्बु च ।**
**अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम् ॥ २३२ ॥**

अथ **करशौचार्थमुदकं दत्वा** यथाक्रमं गन्धपुष्पं धूपदीपदानं कुर्यात् । **तथाऽऽच्छादनदानं च** ।गन्धादीनां स्मृत्यन्तरोक्तो विशेषो द्रष्टव्यः । 'चन्दनकुङ्कुमकर्पूरागरुपद्मकान्युपलेपनार्थमिति' ५ **विष्णु**नोक्तम् । पुष्पाणि च । 'श्राद्धे जात्यः प्रशस्ताः स्युर्मल्लिका श्वेतयूथिका । जलोद्भवानि सर्वाणि कुसुमानि च चम्पकमि'त्युक्तानि । **वर्ज्यानि** च । 'उग्रगन्धीन्यगन्धीनि चैत्यवृक्षोद्भवानि च । पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि च' । न कण्टकिजं अकण्टकिजमपि शुक्लं सुगन्धि यत्तद्दद्यात् । न रक्तं रक्तमपि कुंकुमं जलजं च दद्यादित्यादीनि द्रष्टव्यानि । धूपे च विशेषो **विष्णु**नोक्तः । 'प्राण्यङ्गं सर्वं धूपार्थं न दद्यात् । घृतमधुसंयुक्तं गुग्गुलं श्रीखण्डागरुदेवदारुसरलादि दद्यादिति' । १० दीपे च विशेषः **शङ्ख**नोक्तः । 'घृतेन दीपो दातव्यस्तिलतैलेन वा पुनः । वसामेदोद्भवं दीपं प्रयत्नेन विवर्जयेत्' । आच्छादनं च 'शुभ्रं नवमहतं सदृशं दद्यादिति' । एतच्च सर्वं वैश्वदेवानुष्ठानकाण्डमुदङ्मुखः कुर्यात् । पित्र्यं काण्डं दक्षिणामुखः । यथाह **वृद्धशातातपः** । 'उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः । प्रदद्यात्पार्वणे सर्वं देवपूर्वं विधानत' इति ॥ २३१ ॥ २३२ ॥

**द्विगुणास्तु कुशान्दत्वा 'ह्युशन्तस्त्वे'त्यृचा पितॄन् ।** १५
**आवाह्य तदनुज्ञातो जपे'दायन्तु न'स्ततः ॥ २३३ ॥**

**ततो** वैश्वदेवकाण्डानन्तरमपसव्यं यज्ञोपवीतं प्राचीनावीतं कृत्वा । अत्र तत इति वदता काण्डानुसमयो दर्शितः । पित्रादीनां त्रयाणां अयुग्मा**न्कुशा**न्द्विगुणभुग्नान् । अप्रदक्षिणं वामतो विष्टरार्थमासनेषूदकपूर्वकं **दत्वा** पुनरुदकं दद्यात् । 'अपः प्रदाय द्विगुणभुग्नान्कुशान्दत्वाऽऽपः प्रदाये'त्या**श्वलायन**स्मरणात् । एतच्चाद्यन्तयोरुदकदानं वैश्वदेवे पित्र्ये च प्रति पदार्थप्रतिपादनार्थं २० द्रष्टव्यम् । 'अथ पितॄन् पितामहान् प्रपितामहानावाहयिष्य' इति ब्राह्मणान्पृष्ट्वा 'आवाहयेति' तैरनुज्ञातः 'उशन्तस्त्वा निधीमही'त्यनया ऋचा पित्रादीनावाह्य 'आयन्तु नः पितर' इत्यादिना मन्त्रेणोपतिष्ठेत् ॥ २३३ ॥

**'अपहता' इति तिलान्विकीर्य च समन्ततः ।**
**यवार्थास्तु तिलैः कार्याः कुर्यादर्घ्यादि पूर्ववत् ॥ २३४ ॥** २५
**दत्वाऽर्घ्यं संस्रवांस्तेषां पात्रे कृत्वा विधानतः ।**
**पितृभ्यः 'स्थानमसीति' न्युब्जं पात्रं करोत्यधः ॥ २३५ ॥**

**यवार्था** यवसाध्यानि कार्याणि अवकिरणादीनि **तिलैः** कर्तव्यानि । ततोऽर्घ्यपात्रासादनाच्छादनान्तं पूर्ववत्कुर्यात् । तत्रायं विशेषः । तिलान् अपहताऽऽसुरा रक्षांसीत्यादिना मन्त्रेण ब्राह्मणान्परितोऽप्रदक्षिणमन्ववकीर्य राजतादिपात्रेषु त्रिष्वयुग्मकुशनिर्मितकूर्चान्तर्हितेषु 'शन्नोदेवीरिति' मन्त्रेणापः ३०

क्षिप्त्वा 'तिलोऽसि सोमदैवत्य०' इत्यादिमन्त्रेण तिलान्पुष्पगन्धानि च क्षिप्त्वा 'स्वधार्घ्या' इति ब्राह्मणानां पुरतोऽर्घ्यपात्राणि स्थापयित्वा 'या दिव्या' इति मन्त्रान्ते 'पितरिदन्तेऽर्घ्यं पितामहेदन्तेऽर्घ्यं प्रपितामहेदन्तेऽर्घ्यमिति' ब्राह्मणानां हस्तेष्वर्घ्यं दद्यात् । एकैकमुभयत्र वेत्यस्मिन्नपि पक्षे पात्रत्रयं कार्यम् । एवमर्घ्यं दत्वा तेषामर्घ्याणां संस्रवान् ब्राह्मणहस्तगलितार्घोदकानि पितृपात्रे गृहीत्वा ५ दक्षिणाग्रं कुशस्तम्बं भूमौ निधाय तस्योपरि 'पितृभ्यः स्थानमसी'त्यनेन मन्त्रेण तत्पात्रं न्युब्जमधोमुखं कुर्यात् । तस्योपरि अर्घ्यपात्रपवित्राणि निदध्यात् । अनन्तरं गन्धपुष्पधूपदीपाच्छादनानि 'पितरयन्ते गन्धः पितरिदं ते पुष्पमित्यादिना' प्रयोगेण दद्यात् ॥ २३४ ॥ २३५ ॥

**अग्नौ करिष्यन्नादाय पृच्छत्यन्नं घृतप्लुतम् ।**
**'कुरुष्वे'त्यभ्यनुज्ञातो हुत्वाऽग्नौ पितृयज्ञवत् ॥ २३६ ॥**
१० **हुतशेषं प्रदद्यात्तु भाजनेषु समाहितः ।**
**यथालाभोपपन्नेषु रौप्येषु च विशेषतः ॥ २३७ ॥**

अनन्तर**मग्नौ करिष्यन्घृतप्लुतं** घृताक्तमन्न**मादाय** ब्राह्मणान् पृच्छेत् 'अग्नौ करिष्ये' इति । घृतग्रहणं सूपशाकादिनिवृत्त्यर्थम् । ततस्तैः 'कुरुष्वे'त्य**भ्यनुज्ञातः** प्राचीनावीत्यग्निमुपसमाधाय मेक्षणेनादायावदानसंपदा जुहुयात् । 'सोमाय पितृमते स्वधा १५ नमः । अग्नये कव्यवाहनाय स्वधा नम' इति पिण्डपितृयज्ञकल्पेनाग्नौ हुत्वा मेक्षणमनुप्रहृत्य **हुतशेषं** मृन्मयवर्ज्यं **यथालाभोपपन्नेषु** विशेषतो रौप्येषु पित्रादि**भाजनेषु दद्यात्** । न वैश्वदेवभाजनेषु । **समाहितो**ऽनन्यमनस्कः ।

अग्नौकरणम् ।

अत्र यद्यप्यग्नावित्यविशेषेणोक्तं तथाप्याहिताग्नेः सर्वाधानपक्षे औपासनाग्नेरभावात् पिण्डपितृयज्ञान्तरभाविनि पार्वणश्राद्धे विहितदक्षिणाग्नेः सन्निधानाद्दक्षिणाग्नौ होमः । 'कर्म स्मार्तं विवाहाग्नावि'- २० त्यस्यापवाददर्शनात् । यथाह **मार्कण्डेयः** । 'आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समाहितः । अनाहिताग्निस्त्वौपसद अग्न्यभावे द्विजेऽप्सु वेति' । अर्धाधानपक्षे त्वौपासनाग्निसद्भावादाहिताग्नेरनाहिताग्नेरप्यौपासनाग्नावेवाग्नौकरणहोमः । एवमन्वष्टकादिषु त्रिष्वपि पिण्डपितृयज्ञकल्पातिदेशात् । काम्यादिषु चतुर्षु ब्राह्मणपाणावेव होमः । यथाहु**र्गृह्यकाराः** । 'अन्वष्टक्यं च पूर्वेद्युर्मासि मास्यथ पार्वणम् । काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्टमम् । चतुर्वाद्येषु साग्नीनां वह्नौ होमो विधीयते । पित्र्यब्राह्मणहस्ते २५ स्यादुत्तरेषु चतुर्ष्वपि' । अस्यार्थः । 'हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका' इत्यष्टका विहिताः । तत्र नवम्यां यत्क्रियते तदन्वष्टक्यम् । सप्तम्यां क्रियमाणं पूर्वेद्युः ॥ मासि मासि कृष्णपक्षे पञ्चमीप्रभृतिषु यस्यां कस्यांचित्तिथावन्वष्टक्यातिदेशेन यद्विहितं अमावास्यायां पिण्डपितृयज्ञानन्तरं यद्विहितं तत्पार्वणम् । स्वर्गादिकामनायां कृत्तिकादिनक्षत्रेषु यद्विहितं तत्काम्यम् । अभ्युदयेषु पुत्रोत्पत्त्यादिषु तडागारामदेवताप्रतिष्ठादिषु च यद्विहितम् । अष्टम्यां या अष्टका विहिता । एकोद्दिष्टं । अत्रै- ३० कोद्दिष्टशब्देन सपिण्डीकरणं लक्षयति तत्रैकोद्दिष्टस्यापि सद्भावात् । न केवलं पार्वणस्य साक्षादेकोद्दिष्टे तदभावात् । अथवा गृह्यभाष्यकारमतेन साक्षादेकोद्दिष्टेऽपि पाणिहोमस्य सद्भावात्साक्षादेकोद्दिष्टमेव । एतेषामष्टानामाद्येषु चतुर्षु साग्निकस्याग्नौ होमः । उत्तरेषु चतुर्षु पित्र्यब्राह्मणहस्ते निरग्निकस्यापि प्रमीत-

पितृकस्य द्विजस्य पार्वणं नित्यमिति तस्यापि पाणावेव होमः । 'न निर्वपति यः श्राद्धं प्रमीतपितृको द्विजः । इन्दुक्षये मासि मासि प्रायश्चित्तीयते तु स' इति वचनात् । एवं काम्याभ्युदयिकाष्टकैकोद्दिष्टेषु पाणावेव । 'अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेदिति' **मनु**स्मरणात् । (अ. ३. श्लो. २१२) पाणिदत्तस्य पृथग्ग्रासप्रतिषेध उच्यते । यथाहु**र्गृह्यकाराः**। 'अन्नं पाणितले दत्तं पृथगश्नन्त्यबुद्धयः। पितरस्तेन तृप्यन्ति शेषान्नं न लभन्ति ते । यच्च पाणितले दत्तं यच्चान्यदुपकल्पितम् । एकीभावेन भोक्तव्यं पृथग्भावो न विद्यत' इति ॥ २३६ ॥ २३७ ॥

**दत्वाऽन्नं 'पृथिवी पात्रमिति' पात्राभिमन्त्रणम् ।**
**कृ'त्वेदं विष्णुरि'त्यन्ने द्विजाङ्गुष्ठं निवेशयेत् ॥ २३८ ॥**

**अन्न**मोदनसूपपायसघृतादिकं भाजनेषु **दत्वा** 'पृथिवी ते पात्रमि'त्यादिना मन्त्रेण **पात्राभिमन्त्रणं कृत्वा** 'इदं विष्णुर्विचक्रमे' इत्यनया ऋचा **अन्ने द्विजाङ्गुष्ठं निवेशयेत्** । तत्र च वैश्वदेवे यज्ञोपवीती 'विष्णो हव्यं रक्षेति' । पित्र्ये प्राचीनावीती 'विष्णो कव्यं रक्षेति' । 'विष्णो हव्यं च कव्यं च ब्रूयाद्रक्षेति वै क्रमादिति' **मनु**स्मरणात् ॥ २३८ ॥

अन्ननिवेदनम् ।

**सव्याहृतिकां गायत्रीं 'मधु वाता' इति तृचम् ।**
**जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः ॥ २३९ ॥**

अनन्तरं 'विश्वेभ्यो देवेभ्य इदमन्नं परिविष्टं परिवेक्ष्यमाणं चातृप्तेरिति' यवोदकेन दैवे निवेद्य तथा पित्रे अमुकगोत्रायामुकशर्मणे 'इदमन्नं परिविष्टं परिवेक्ष्यमाणं चातृप्तेरिति' तिलोदकप्रदानेन पित्रे निवेद्य एवं पितामहाय प्रपितामहाय च निवेद्यानन्तरमापोशनं दत्वा पूर्वोक्ताभिर्व्याहृतिभिः सहितां गायत्रीं 'मधु वाता' इति तृचं 'मधुमधुमध्विति' त्रिवारं जप्त्वा 'यथासुखं जुषध्वमिति' ब्रूयात् । 'संकल्प्य पितृदेवेभ्यः सावित्रीं मधुमज्जपः । श्राद्धं निवेद्यापोशनं जुषप्रैषोऽथ भोजनम् । तथा गायत्रीं त्रिःसकृद्वाऽपि जपेद्व्याहृतिपूर्विकाम् । 'मधु वाता' इति तृचं मध्वित्येतत्त्रिकं तथेति' **पारस्करादि**वचनात् । **भुञ्जीरंस्तेऽपि वाग्यताः** । तेऽपि ब्राह्मणा वाग्यता मौनिनो भुञ्जीरन् ॥ २३९ ॥

**अन्नमिष्टं हविष्यं च दद्यादक्रोधनोऽत्वरः ।**
**आतृप्तेस्तु पवित्राणि जप्त्वा पूर्वजपं तथा ॥ २४० ॥**

**अन्नं** भक्ष्यभोज्यलेह्यचोष्यपेयात्मकं पञ्चविधं, **इष्टं** यद्ब्राह्मणाय प्रेताय कर्त्रे वा रोचते, **हविष्यं** श्राद्धहविर्योग्यं 'व्रीहिशालियवगोधूममुद्गमाषमुन्यन्नकालशाकमहाशल्कैलाशुण्ठीमरीचहिङ्गुगुडशर्कराकर्पूरसैन्धवसांभरपनसनालिकेरकदलीबदरगव्यपयोदधिघृतपायसमधुमांसप्रभृति' **स्मृत्यन्तरप्रसिद्धं** वेदितव्यम् । हविष्यमित्यनेनैवायोग्यस्य स्मृत्यन्तरप्रतिषिद्धस्य कोद्रवमसूरचणककुलित्थपुलाकनिष्पावराजमाषकूष्माण्डवार्ताकबृहतीद्वयोपोदकीवंशाङ्कुरपिप्पलीवचाशतपुष्पोषरबिडलवणमाहिषचामरक्षीरदधिघृतपायसादीनां निवृत्तिः । **अक्रोधनः** क्रोधहेतुसंभवेऽपि । **अत्वरो**ऽव्यग्रः । **आतृप्ते**र्दद्यादिति संबन्धः ।

**तु**शब्दाद्यथा किंचिदुच्छिष्यते तथा दद्यात् । उच्छेषणस्य दासवर्गभागधेयत्वात् । 'उच्छेषणं भूमिगतमजिह्मस्याशठस्य च । दासवर्गस्य तत्पित्र्ये भागधेयं प्रचक्षते ' इति **मनुस्मरणात्** (अ. ३ श्लो. २४६) । तथा **आतृतेः पवित्राणि** पुरुषसूक्तपावमानीप्रभृतीनि **जप्त्वा तृप्तान्** ज्ञात्वा पूर्वोक्तं **जपं च** सव्याहृतिकामित्युक्तं जपेत् ॥ २४० ॥

**अन्नमादाय 'तृप्ताः स्थ' शेषं चैवानुमान्य च ।**
**तदन्नं विकिरेद्भूमौ दद्याच्चापः सकृत्सकृत् ॥ २४१ ॥**

अनन्तरं सर्व**मन्नमादाय** 'तृप्ताः स्थेति ' तान्पृष्ट्वा 'तृप्ताः स्म ' इति तैरुक्तः 'शेषमप्यास्ति किं क्रियतामिति ' पृष्ट्वा 'इष्टैः सहोपभुज्यता'मित्यभ्यनुगम्य तदन्नं पितृस्थानब्राह्मणस्य पुरस्तादुच्छिष्टसन्निधौ दक्षिणाग्रदर्भान्तरितायां भूमौ तिलोदकप्रक्षेपपूर्वकं 'ये अग्निदग्धा ' इत्यनया ऋचा निक्षिप्य पुनस्तिलोदकं प्रक्षिपेत् । तदनन्तरं ब्राह्मणहस्तेषु गण्डूषार्थं सकृत्सकृदपो दद्यात् ॥ २४१ ॥

**सर्वमन्नमुपादाय सतिलं दक्षिणामुखः ।**
**उच्छिष्टसन्निधौ पिण्डान्दद्याद्वै पितृयज्ञवत् ॥ २४२ ॥**

पिण्डप्रदानम् ।

पिण्डपितृयज्ञकल्पातिदेशेन चरुश्रपणसद्भावे अग्नौकरणशिष्टचरुशेषेण सह **सर्वमन्नमुपादाया**ग्निसन्निधौ **पिण्डान् दद्यात्** । तदभावे ब्राह्मणार्थं कृत**मन्नं** सर्व**मुपादाय सतिलं** तिलमिश्रं, **दक्षिणामुखः उच्छिष्टसन्निधौ** पिण्डपितृयज्ञकल्पेन **पिण्डान्दद्यात्** ॥ २४२ ॥

**मातामहानामप्येवं दद्यादाचमनं ततः ।**
**स्वस्ति वाच्यं ततः कुर्यादक्षय्योदकमेव च ॥ २४३ ॥**

अक्षय्योदकदानम् ।

**मातामहानामपि** विश्वेदेवावाहनादिपिण्डप्रदानपर्यन्तं कर्म एवमेव कर्तव्यम् । अनन्तरं ब्राह्मणाना**माचमनं दद्यात्** । **स्वस्ति वाच्यं ततः कुर्यात्** । 'स्वस्ति ब्रूतेति ' ब्राह्मणान् स्वस्ति वाचयेत् । तैश्च स्वस्तीत्युक्ते 'अक्षय्यमस्त्विति ब्रूतेति ' ब्राह्मणहस्ते उदकदानं कुर्यात् । तैश्चा'क्षय्यमस्त्विति ' वक्तव्यम् ॥ २४३ ॥

**दत्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरेत् ।**
**'वाच्यतामि'त्यनुज्ञातः प्रकृतेभ्यः स्वधोच्यताम् ॥ २४४ ॥**

स्वधावाचनम् ।

अनन्तरं यथाशक्ति हिरण्यरजतादि**दक्षिणां दत्वा** 'स्वधां वाचयिष्ये ' इत्युक्त्वा तैर्ब्राह्मणैः '**वाच्यतामि**'त्यनुज्ञातः **प्रकृतेभ्यः** पित्रादिभ्यो मातामहादिभ्यश्च '**स्वधोच्यता**मिति ' स्वधाकारमुदाहरेत् ॥ २४४ ॥

**ब्रूयु'रस्तु स्वधे'त्युक्ते भूमौ सिञ्चेत्ततो जलम् ।**
**' विश्वेदेवाश्च प्रीयन्तां' विप्रैश्चोक्तमिदं जपेत् ॥ २४५ ॥**

ते च ब्राह्मणा 'अस्तु स्वधेति' **ब्रूयुः**। तैरेवमुक्ते अनन्तरं कमण्डलुना भूमौ उदकं सिञ्चेत्। 'ततो विश्वेदेवाः प्रीयन्तामिति' ब्रूयात्। ब्राह्मणैश्च 'प्रीयन्तां विश्वेदेवा' इत्युक्ते **इद**मनन्तरोच्यमानं **जपेत्** ॥ २४५ ॥

**'दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च ।**
**श्रद्धा च नो माव्यगमद्बहु देयं च नोऽस्त्विति' ॥ २४६ ॥**

ब्राह्मणप्रार्थना ।

**दातारो** हिरण्यादेः **नो**ऽस्माकं कुलेऽ**भिवर्धन्तां** बहवो भवन्तु। **वेदा**श्च वर्धन्तां अध्ययनाध्यापनतदर्थज्ञानानुष्ठानद्वारेण। **सन्तति**श्च पुत्रपौत्रादिपरम्परया। **श्रद्धा च** पित्र्यकर्मण्यास्था **नो**ऽस्माकं **मा व्यगमत्** मा गच्छतु। **देयं च** हिरण्यादि बहु अपर्यन्तं अस्माकं भवत्विति जपेदित्यर्थः ॥ २४६ ॥

**इत्युक्तोक्त्वा प्रिया वाचः प्रणिपत्य विसर्जयेत् ।**
**'वाजे वाज' इति प्रीतः पितृपूर्वं विसर्जनम् ॥ २४७ ॥**　　१०

एवं पूर्वोक्तं प्रार्थनामन्त्रं जप्त्वा उक्त्वा च **प्रिया वाचः** 'धन्या वयं भवच्चरणयुगलरजःपवित्रीकृतमस्मन्मन्दिरं शाकाद्यशनक्लेशमविगणय्य भवद्भिरनुगृहीता वयमि'त्येवंरूपाः। **प्रणिपत्य** प्रदक्षिणापूर्वं नमस्कृत्य **विसर्जयेत्**। कथं विसर्जयेदित्याह। 'वाजे वाजे वत वाजिनो न' इत्यनया ऋचा **पितृपूर्वं** प्रपितामहादि विश्वेदेवान्तं दर्भान्वारम्भेण 'उत्तिष्ठत पितर' इति **प्रीतः** सुप्रीतमना **विसर्जनं** कुर्यात् ॥ २४७ ॥　　१५

**यस्मिंस्ते संस्रवाः पूर्वमर्घ्यपात्रे निवेशिताः ।**
**पितृपात्रं तदुत्तानं कृत्वा विप्रान्विसर्जयेत् ॥ २४८ ॥**

**यस्मिन्नर्घ्यपात्रे पूर्व**मर्घ्यदानान्ते **संस्रवा** ब्राह्मणहस्तगलितार्घ्योदकानि **निवेशिताः** स्थापिताः **तत्पितृपात्रं** न्युब्जं सदु**त्तानम्**ूर्ध्वमुखं **कृत्वा विप्रान्विसर्जयेत्**। एतच्चाशीर्मन्त्रजपादूर्ध्वं 'वाजे वाजे' इत्यतः प्राक् द्रष्टव्यम्। 'कृत्वा विसर्जयेदिति' क्त्वाप्रत्ययश्रवणात् ॥ २४८ ॥　　२०

**प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम् ।**
**ब्रह्मचारी भवेत्तां तु रजनीं ब्राह्मणैः सह ॥ २४९ ॥**

अनन्तरमासीमान्तं ब्राह्मणा**ननुव्रज्य** तै'रास्यतामि'त्यनुज्ञातः तान्प्रदक्षिणीकृत्य प्रतिनिवृत्तः **पितृसेवितं** श्राद्धशिष्टमिष्टैः सह **भुञ्जीत**। नियम एवायं न परिसंख्या। मांसे तु 'यथारुचीति' 'द्विजकाम्यये'त्यत्रोक्तम्। यस्मिन्दिने श्राद्धं कृतं तत्संबन्धिनीं रात्रिं भोक्तृभिर्ब्राह्मणैः सह कर्ता ब्रह्मचारी भवेत्। **तु**शब्दात्पुनर्भोजनादिरहितोऽपि भवेत्। 'दन्तधावनताम्बूलं स्निग्धस्नानमभोजनम्। रत्यौषधपरान्नानि श्राद्धकृत्सप्त वर्जयेत्। पुनर्भोजनमध्वानं भाराध्ययनमैथुनम्। दानं प्रतिग्रहं होमं श्राद्धभुक्त्वष्ट वर्जयेदिति' वचनात् ॥ २४९ ॥　　२५

एवं पार्वणं श्राद्धमुक्त्वेदानीं वृद्धिश्राद्धमाह

**एवं प्रदक्षिणावृत्को वृद्धौ नान्दीमुखान्पितॄन् ।**
**यजेत दधिकर्कन्धूमिश्रान्पिण्डान्यवैः क्रियाः ॥ २५० ॥**

वृद्धिश्राद्धम् ।

**वृद्धौ** पुत्रजन्मादिनिमित्ते श्राद्धे **एवमु**क्तेन प्रकारेण **पितॄन्यजेत्** पूजयेत् । तत्र विशेषमाह । **प्रदक्षिणावृत्क इति** । प्रदक्षिणा आवृत् अनुष्ठानपद्धतिर्यस्यासौ प्रदक्षिणावृत्कः । प्रदक्षिणप्रचार इति यावत् । **नान्दीमुखानिति** पितॄणां विशेषणम् । अतश्चावाहनादौ 'नान्दीमुखान्पितॄनावाहयिष्ये नान्दीमुखान् । पितामहानि'त्यादिप्रयोगो द्रष्टव्यः । कथं यजेतेत्याह । **दधिकर्कन्धूमिश्रान्** । कर्कन्धूर्बदरीफलं । दध्ना बदरीफलैश्च मिश्रान् पिण्डान्दत्वा यजेतेति संबध्यते । तिलसाध्याः सर्वाः क्रिया **यवैः कर्तव्याः** ।

अत्र च ब्राह्मणसंख्या दर्शितैव 'युग्मान्दैवे यथाशक्तीति' । अत्र प्रदक्षिणावृत्कादिपरिगणनमन्येषामपि स्मृत्यन्तरोक्तानां विशेषधर्माणां प्रदर्शनार्थम् । यथाहा**श्वलायनः** । 'अथाभ्युदयिके युग्मा ब्राह्मणाः अमूला दर्भाः प्राङ्मुखा यज्ञोपवीती स्यात्प्रदक्षिणमुपचारो यवैस्तिलार्थो गन्धादिदानं द्विर्द्विः ऋजुदर्भानासने दद्यात्'। 'यवोऽसि सोमदेवत्यो गोसवे देवनिर्मितः'। प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दीमुखान् पितॄनिमाँल्लोकान्प्रीणयाहि नः स्वाहेति यवावपनम् । विश्वेदेवा इदं वोऽर्घ्यं नान्दीमुखाः पितर इदं वोऽर्घ्यमिति यथालिङ्गमर्घ्यदानम् । पाणौ होमो'ऽग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहेति' 'मधु वाता ऋतायत' इति तृचः स्थाने 'उपास्मै गायतेति' पञ्च मधुमतीः श्रावयेत् । 'अक्षंनमीमदन्तेति' षष्ठीम् । आचान्तेषु भुक्ताशयान् गोमयेनोपलिप्य प्राचानाग्रान्दर्भान्संस्तीर्य तेषु पृषदाज्यमिश्रेण भुक्तशेषेणैकैकस्य द्वौद्वौ पिण्डौ दद्यादित्यादि' । यद्यपि 'पितॄन्यजतेति' सामान्येनोक्तं तथापि श्राद्धत्रयं क्रमश्च स्मृत्यन्तरादवगन्तव्यः । यथाह **शातातपः** । 'मातुः श्राद्धं तु पूर्वं स्यात्पितॄणां तदनन्तरम् । ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतामिति' ॥ २५० ॥

एकोद्दिष्टमाह

**एकोद्दिष्टं देवहीनमेकार्घ्यैकपवित्रकम् ।**
**आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ॥ २५१ ॥**

**एकोद्दिष्टं** एक उद्दिष्टो यस्मिन् श्राद्धे तदेकोद्दिष्टमिति कर्म नामधेयम् । शेषं पूर्ववदाचरेदित्युपसंहारात् । पार्वणसकलधर्मप्राप्तौ विशेषोऽभिधीयते । देवरहितं विश्वेदेवरहितं **एकार्घ्यपात्रमेकदर्भपवित्रकं** च **आवाहनाग्नौकरणहोमेन** च **रहितम्** । **अपसव्यवत्** प्राचीनावीतब्रह्मसूत्रवत् । अनेनान्तरोक्ताभ्युदयिके यज्ञोपवीतित्वं सूचयति ॥ २५१ ॥

**'उपतिष्ठतामक्षय्यस्थाने' विप्रविसर्जने ।**
**'अभिरम्यतामिति' वदेद्ब्रूयुस्ते'ऽभिरताः स्म ह' ॥ २५२ ॥**

किंच । यदुक्तं ' स्वस्ति वाच्यं ततः कुर्यादक्षय्योदकमेव चेति ' तत्रा'क्षय्यस्थाने उपतिष्ठतामिति ' वदेत् । **विप्रविसर्जने** कर्तव्ये 'वाजे वाज' इति जपानन्तरं दर्भान्वारम्भेणा'भिरम्यतामिति ' ब्रूयात् । ते ' चाभिरताः स्म ' इति **ब्रूयुः । ह्येति** प्रसिद्धम् । शेषं पूर्ववदिति यावत् ।

एतच्च मध्याह्ने कर्तव्यम् । यथाह **देवलः** । ' पूर्वाह्णे दैविकं कर्म अपराह्णे तु पैतृकम् । एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकमिति ' । 'भुञ्जीत पितृसेवितमि'त्येकोद्दिष्टविशेषे निषेधो दृश्यते । ' नवश्राद्धेषु यच्छिष्टं गृहे पर्युषितं च यत् । दम्पत्योर्भुक्तशिष्टं च न भुञ्जीत कदाचनेति ' । नवश्राद्धं तु दर्शितम् । 'प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमे तथा । नवमैकादशे चैव तन्नवश्राद्धमुच्यते' ॥ २५२॥

सपिण्डीकरणमाह

**गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् ।**
**अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसिञ्चयेत् ॥ २५३ ॥**
**' ये समाना ' इति द्वाभ्यां शेषं पूर्ववदाचरेत् ।**
**एतत्सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि ॥ २५४ ॥**

**गन्धोदकतिलैर्युक्तं पात्रचतुष्टयं** अर्घ्यसिद्ध्यर्थं पूर्वोक्तविधिना **कुर्यात्** । तिलैर्युक्तं पात्रचतुष्टयं वदता पितृवर्गे चत्वारो ब्राह्मणा दर्शिताः । वैश्वदेवे द्वौ स्थितावेव । अत्र प्रेतपात्रोदकं किंचिदवशेषं त्रिधा विभज्य पितृपात्रेषु सेचयेत् । ' ये समानाः समनस ' **इति द्वाभ्यां** मन्त्राभ्याम् । शेषं विश्वेदेवावाहनादिविसर्जनान्तं **पूर्ववत्** पार्वणव**दाचरेत्** । प्रेतार्घ्यपात्रावशिष्टोदकेन प्रेतस्थानब्राह्मणहस्तेऽर्घ्यं दत्वा शेषमेकोद्दिष्टवत्समापयेत् । पित्र्येषु त्रिषु पार्वणवत् । **एतत्सपिण्डीकरण**मन्त्रोक्त**मेकोद्दिष्टं** च ततः प्रागुक्तम् । **स्त्रिया अपि** मातुरपि कर्तव्यं ।

एवं वदता पार्वणे मातृश्राद्धं पृथक्कर्तव्यमित्युक्तं भवति । अत्र प्रेतशब्दं पितुःप्रपितामहविषयं केचिद्वर्णयन्ति । तस्य त्रिष्वन्तर्भावेन सपिण्डीकरणोत्तरकालं पिण्डदानादिनिवृत्त्युपपत्तेः । समनन्तरमृतस्योत्तरत्र पिण्डोदकदानानुवृत्तेरन्तर्भावो न युक्तः । अत एवाह **यमः** । ' यः सपिण्डीकृतं प्रेतं पृथक्पिण्डे नियोजयेत् । विधिघ्नस्तेन भवति पितृहा चोपजायत ' इति । प्रकर्षेण इतः प्रेत इति चतुर्थेऽपि प्रेतशब्दोपपत्तेः । ' प्रेतेभ्य एव निपृणीयादिति ' च प्रयोगदर्शनात् ।

अपि च ' सपिण्डीकरणं श्राद्धं देवपूर्वं नियोजयेत् । पितॄनेवाशयेत्तत्र पुनः प्रेतं न निर्दिशेदिति ' । सपिण्डीकरणोत्तरकालं प्रेतस्य श्राद्धादिप्रतिषेधो दृश्यते । स चानन्तरमृतस्य न संभवति । अमावास्यादौ श्राद्धविधानात् । ' सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ' इत्येतदपि वचनं चतुर्थस्य त्रिष्वन्तर्भाव एव घटते । चतुर्थस्य पिण्डत्रयव्यापित्वं पञ्चमस्य पिण्डद्वयव्यापित्वं षष्ठस्यैकपिण्डव्यापित्वं सप्तमे निवृत्तिरिति । 'पितृपात्रेष्वि'त्येतदपि पितृमुख्यत्वादस्मिन्नेव पक्षे घटते नान्यथा प्रपितामहप्रमुखत्वात् । तस्मात्पितृपात्रेषु तत्प्रेतपात्रं प्रसिञ्चयेदिति तदयुक्तम् ।

न ह्यत्र पिण्डसंयोजनमुत्तरत्र पिण्डदानादिनिवृत्तिप्रयोजनम् । अपि तु पितुः प्रेतत्वनिवृत्त्या पितृत्वप्राप्त्यर्थं प्रेतत्वं च क्षुत्तृष्णोपजनितात्यन्तदुःखानुभवावस्था । यथाह **मार्कण्डेयः** । ' प्रेतलोके

तु वसतिर्नृणां वर्षं प्रकीर्तिता । क्षुत्तृष्णे प्रत्यहं तत्र भवेतां भृगुनन्दनेति ' पितृत्वप्राप्तिश्च वस्वादिश्राद्ध-
देवतासंबन्धः । प्राक्तनैकोद्दिष्टसहितेन सपिण्डीकरणेन प्रेतत्वनिवृत्त्या पितृत्वं प्राप्नोतीत्यवगम्यते ।
' यस्यैतानि न दत्तानि प्रेतश्राद्धानि षोडश । प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ' । तथा ।
' चतुरो निर्वपेत्पिंडान्पूर्वं तेषु समापयेत् । ततः प्रभृति वै प्रेतः पितृसामान्यमश्नुत ' इत्यादिवचनात् ।
५ ' यः सपिण्डीकृतं प्रेतमि'त्यनेनापि पृथगेकोद्दिष्टविधानेन पिण्डदाननिषेधात्पार्वणविधानेन सह पिण्ड-
दानमवगम्यते । एतच्च सांवत्सरिकपाक्षिकैकोद्दिष्टविधानायोपपाद्यते । यदपि ' पुनः प्रेतं न निर्दिशे-
दिति ' तदपि प्रेतशब्दं नोच्चारयेत् । अपि तु पितृशब्दमेवेत्येवमर्थं । न च प्रकर्षगमनात्तत्रैव प्रेतशब्दः ।
यतो विशिष्टदुःखानुभवावस्था प्रेतशब्देन रूढ्याऽभिधीयत इत्युक्तं योऽपि प्रमीतमात्रे प्रेतशब्दप्रयोगः
सोऽपि भूतपूर्वगत्या ' सपिण्डता तु पुरुषे सप्तमे विनिवर्तत ' इति च प्रथमस्य पिंडस्य चतुर्थव्यापित्वात्
१० द्वितीयस्य पञ्चमव्यापित्वात् तृतीयस्य षष्ठव्यापित्वात् सप्तमे विनिवर्तत इति । एवमपि घटते ।

अपि च निर्वाप्य पिडान्वये न सापिंड्यं अव्यापकत्वात् । अपि त्वेकशरीरावयवान्वयेनेत्युक्तं
पितृशब्दश्च प्रेतत्वनिवृत्त्या श्राद्धदेवतात्वमुपगतेषु वर्तत इति पितृपात्रेष्वित्यविरुद्धम् । तस्मादनन्तर-
मृतपात्रोदकस्य तत्पिंडस्य च पितृपात्रेषु तत्पिण्डेषु च संसर्जनमिति स्थितम् । **आचार्यस्तु** परमत-
मेवोपन्यस्तवान् । एतच्च पितुः सपिण्डीकरणं पितामहादिषु त्रिषु प्रमीतेषु वेदितव्यम् । पितरि प्रेते
१५ पितामहे प्रपितामहे वा जीवति सपिण्डीकरणं नास्त्येव । ' व्युत्क्रमाच्च प्रमीतानां नैव कार्या सपिण्ड-
तेति ' वचनात् । यत्तु **मनु**वचनं ( अ. ३ श्लो. २२१ ) ' पिता यस्य निवृत्तः स्याज्जीवेच्चापि
पितामहः । पितुः स नाम संकीर्त्य कीर्तयेत्प्रपितामहमिति ' तदपि पितृशब्दप्रयोगनियमाय । न
पिण्डद्वयदानार्थम् । कथं ' म्रियमाणे तु पितरि पूर्वेषामेव निर्वपेत् । पिता यस्य तु वृत्तः स्याज्जीवे-
च्चापि पितामहः ' । सोऽपि पूर्वेषामेव निर्वपेदित्यन्वयः ।

२० पक्षद्वयेऽपि कथं निर्वपेदित्याह । ' पितुः स नाम संकीर्त्य कीर्तयेत्प्रपितामहमि'त्याद्यन्तग्रहणेन
सर्वत्र पितृभ्यः पितामहेभ्यः प्रपितामहेभ्य इत्येवं प्रयोगः । न पुनः कदाचिदपि पितामहस्य प्रपितामहस्य
वाऽऽदित्वं वृद्धप्रपितामहस्य तत्पितुर्वाऽन्तत्वं । अतश्च पित्रादिशब्दानां संबन्धिवचनात् । म्रियमाणे पितरि
'पितुः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्य इति ' पितामहे म्रियमाणे पितामहस्य पितृभ्यः पितां-
महेभ्यः प्रपितामहेभ्य इति । अतः पिण्डपितृयज्ञे ' शुन्धन्तां पितर ' इत्यादिमन्त्राणामूहो न भवति ।

२५ यदपि **विष्णु**वचनं 'यस्य पिता प्रेतः स्यात्स पितृपिण्डं निधाय पितामहात्पराभ्यां द्वाभ्यां
दद्यादिति ' तस्यायमर्थः । पितामहे म्रियमाणे प्रेते च पितरि पितुरेकं पिण्डमेकोद्दिष्टविधानेन निधाय
पितुर्यः पितामहस्तत्पराभ्यां द्वाभ्यां दद्यात् । पितामहस्त्वात्मनः प्रपितामहः संप्रदानभूतः स्थित
एवेति । प्रपितामहाय ततः पराभ्यां द्वाभ्यां च दद्यादिति । शब्दप्रयोगनियमस्तु पूर्वोक्त एव ।

एवं गोब्राह्मणादिहतस्यापि सपिण्डीकरणाभावो वेदितव्यः । यथाह **कात्यायनः** । ' ब्राह्मणा-
३० दिहते ताते पतिते संगवर्जिते । व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसाविति ' गोब्राह्मणहतस्य
पितुः सपिण्डीकरणसंभवे तमुल्लंघ्य पितामहादिभ्यः पार्वणविधानमुपपन्नमिति सपिण्डीकरणाभावोऽव-

गम्यते । स्मृत्यन्तरेऽपि ' ये नराः संततिच्छिन्ना नास्ति तेषां सपिण्डता । न चैतैः सह कर्तव्यान्ये-कोद्दिष्टानि षोडशेति ' ।

मातुः पिण्डदानादौ गोत्रे विप्रतिपत्तिः भर्तृगोत्रेण पितृगोत्रेण वा दातव्यमिति उभयत्र वचन-दर्शनात् । ' स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे । स्वामिगोत्रेण कर्तव्या तस्याः पिण्डोदक-क्रिये'त्यादिभर्तृगोत्रविषयं वचनम् । ' पितृगोत्रं समुत्सृज्य न कुर्याद्भर्तृगोत्रतः । जन्मन्येव विपत्तौ च नारीणां पैतृकं कुलमि'त्यादिपितृगोत्रविषयम् । एवं विप्रतिपत्तावासुरादिविवाहेषु पुत्रिकाकरणे च पितृगोत्रमेव तत्र तत्र विशेषवचनात् दानस्यानिवृत्तेश्च । ब्राह्मादिविवाहेषु व्रीहियववत् बृहद्रथन्तरसाम-वत् विकल्प एव । तत्र च ' येनास्य पितरो याता येन याताः पितामहाः । तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यतीति ' वचनात् । वंशपरम्पराया तत्समाचारेण व्यवस्था । एवंविधविषयव्यतिरेके-णास्य वचनस्य विषयान्तराभावात् । यत्र पुनः शास्त्रतो न व्यवस्था नाप्याचारतस्तत्रा'त्मनस्तुष्टिरेव वेति ' वचनादात्मनस्तुष्टिरेव व्यवस्थापिका । यथा ' गर्भाष्टमेऽष्टमे वाब्दे ' इति ।

मातुः सपिण्डीकरणेऽपि विरुद्धानीव वाक्यानि दृश्यन्ते । तत्र ' पितामह्यादिभिः सार्धं सपिण्डी-करणं स्मृतम् ' । तथा भर्त्राऽपि भार्यायाः स्वमात्रादिभिः सह सपिण्डीकरणं कर्तव्यमिति **पैठी-नसि**राह । ' अपुत्रायां मृतायां तु पतिः कुर्यात्सपिण्डताम् । श्वश्र्वादिभिः सहैवास्या सपिण्डीकरणं भवेदिति' पत्या सह सपिण्डीकरणम् । **यम** आह । ' पत्या चैकेन कर्तव्यं सपिण्डीकरणं स्त्रियाः । सा मृताऽपि हि तेनैक्यं गता मन्त्राहुतिव्रतैरिति' । **उशनसा** तु मातामहेन सह सपिण्डीकरणमुक्तम् । ' पितुः पितामहे यद्वत्पूर्णे संवत्सरे सुतैः । मातुर्मातामहे तद्वदेषा कार्या सपिण्डता ' । तथा । ' पिता पितामहे योज्यः पूर्णे संवत्सरे सुतैः । माता मातामहे तद्वदित्याह भगवाञ्शिवः ' ।

इत्येवं विविधेषु वचनेषु सत्सु अपुत्रायां भार्यायां प्रमीतायां भर्ता स्वमात्रैव साषिण्ड्यं कुर्यात् । अन्वारोहणे तु पुत्रः स्वपित्रैव मातुः साषिण्ड्यं कुर्यात् । आसुरादिविवाहोत्पन्नः पुत्रिकासुतश्च मातामहेनैव । ब्राह्मादिविवाहोत्पन्नः पित्रा मातामहेन पितामह्या वा विकल्पेन कुर्यात् ।

अत्रापि यदि नियतो वंशसमाचारस्तदानीं तथैव कुर्यात् । वंशसमाचारोऽप्यनियतश्चेत्तदा'ऽऽत्म-नस्तुष्टिरेव चेति ' यथारुचि कुर्यात् । तत्र च येन केनापि मातुः साषिण्ड्येऽपि यत्रान्वष्टकादिषु मातृ-श्राद्धं पृथग्विहितं ' अन्वष्टकासु वृद्धौ च गयायां च क्षयेऽहनि । मातुः श्राद्धं पृथक्कुर्यादन्यत्र पतिना सह ' । तत्र पितामह्यादिभिरेव पार्वणश्राद्धं कर्तव्यम् । अन्यत्र पतिना सहेति पतिसापिण्ड्ये तदंशभागित्वात् । मातामहसापिण्ड्ये तदंशभागित्वात्तेनैव सह । यथाह **शातातपः** । ' एकमूर्तित्व-मायाति सपिण्डीकरणे कृते । पत्नी पतिपितॄणां च तस्मादंशेन भागिनीति ' । एवं सति मातामहेन मातुः साषिण्ड्ये मातामहश्राद्धं पितृश्राद्धवन्नित्यमेव । पत्या पितामह्या वा मातुः साषिण्ड्ये मातामह-श्राद्धं न नित्यं । कृते अभ्युदयः अकृते न प्रत्यवाय इति निर्णयः ॥ २५३ ॥ २५४ ॥

**अर्वाक्सपिण्डीकरणं यस्य संवत्सराद्भवेत् ।**
**तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विजे ॥ २५५ ॥**

**संवत्सरादर्वाक्सपिण्डीकरणं यस्य कृतं** तस्य तदुद्देशेन प्रतिदिवसं प्रतिमासं वा यावत्संवत्सरं शक्त्यनुसारेणा**न्नमुदकुम्भसहितं ब्राह्मणाय दद्यात्**। अर्वाक्संवत्सरादिति वदता सपिण्डीकरणं संवत्सरे पूर्णे प्रागेवेति दर्शितम्। यथाह**श्वलायनः**। 'अथ सपिण्डी करणं संवत्सरान्ते द्वादशाहे वेति'। **कात्यायनो**ऽप्याह। 'ततः संवत्सरे पूर्णे सपिण्डीकरणं भवेत्। त्रिपक्षे ५ वा यदा चार्वाग्वृद्धिरापद्यते तदेति'। द्वादशाहे त्रिपक्षे वृद्धिप्राप्तौ संवत्सरे वेति चत्वारः पक्षा दर्शिताः। तत्र द्वादशाहे पितुः सपिण्डीकरणं साग्निकेन कार्यम्। सपिण्डीकरणं विना पिण्डपितृयज्ञासिद्धेः। 'साग्निकस्तु यदा कर्ता प्रेतो वाऽप्यग्निमान् भवेत्। द्वादशाहे तदा कार्यं सपिण्डीकरणं पितुरिति' वचनात्। निरग्निस्तु त्रिपक्षे वृद्धिप्राप्तौ संवत्सरे वा कुर्यात्। यदा प्राक्संवत्सरात्सपिण्डीकरणं तदा षोडशश्राद्धानि कृत्वा सपिण्डीकरणं कार्यम्। उत सपिण्डीकरणं कृत्वा स्वस्वकाले तानि कर्तव्यानीति १० संशयः। उभयथा वचनदर्शनात्। 'श्राद्धानि षोडशादत्वा नैव कुर्यात्सपिण्डताम्। श्रद्धानि षोडशापाद्य विदधीत सपिण्डतामिति'।

षोडशश्राद्धानि च। 'द्वादशाहे त्रिपक्षे च षण्मासे मासि चाब्दिके। श्राद्धानि षोडशैतानि संस्मृतानि मनीषिभिरिति' दर्शितानि। तथा। 'यस्यापि वत्सरादर्वाक्सपिण्डीकरणं भवेत्। मासिकं चोदकुम्भं च देयं तस्यापि वत्सरमिति'। तत्र सपिण्डीकरणं कृत्वा स्वकाल एवैतानि कर्तव्यानीति १५ प्रथमः कल्पः। अप्राप्तकालत्वेन प्रागनधिकारात्। यद्यपि वचनं षोडशश्राद्धानि कृत्वा सपिण्डीकरणं संवत्सरात्प्रागपि कर्तव्यमिति सोऽयमापत्कल्पः। यदा त्वापत्कल्पत्वेन प्राक्सपिण्डीकरणात् प्रेतश्राद्धानि करोति तदैकोद्दिष्टविधानेन कुर्यात्। यदा तु मुख्यकल्पेन स्वकाल एव करोति तदाब्दिकं श्राद्धं यो यथा करोति पार्वणमेकोद्दिष्टं वा तथा मासिकानि कुर्यात्। 'सपिण्डीकरणादर्वाक्कुर्वन् श्राद्धानि षोडश। एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु। सपिण्डीकरणादूर्ध्वं यदा कुर्यात्तदा पुनः। प्रत्यब्दं २० यो यथा कुर्यात्तथा कुर्यात्स तान्यपीति' स्मरणात्।

एतच्च प्रेतश्राद्धसहितं सपिण्डीकरणं संविभक्तधनेषु भ्रातृषु सत्स्वप्येकेनैव कृतेनालं न सर्वैः कर्तव्यम्। 'नवश्राद्धं सापिण्डत्व श्राद्धान्यपि च षोडश। एकेनैव तु कार्याणि संविभक्तधनेष्वपीति' स्मरणात्। इदं च प्रेतश्राद्धसहितं सपिण्डीकरणं असंन्यासिनां पुत्रादिभिर्नियमेन कर्तव्यम्। प्रेतत्वविमोक्षार्थत्वात्। संन्यासिनां तु न कर्तव्यम्। यथा**होशनाः**। 'एकोद्दिष्टं न कुर्वीत २५ यतीनां चैव सर्वदा। अहन्येकादशे प्राप्ते पार्वणं तु विधीयते। सपिण्डीकरणं तेषां न कर्तव्यं सुतादिभिः। त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायत' इति। पुत्रासंनिधाने येन सगोत्रादिना दाहसंस्कारः कृतस्तेनैवादशाहान्तं तत्प्रेतकर्म कर्तव्यम्। 'असगोत्रः सगोत्रो वा स्त्री दद्याद्यदि वा पुमान्। प्रथमेऽहनि यो दद्यात्स दशाहं समापयेदिति' स्मरणात्। शूद्राणामप्येतत्कर्तव्यममन्त्रकं द्वादशेऽह्नि। 'एवं सपिण्डीकरणं मन्त्रवर्ज्यं शूद्राणां द्वादशेऽह्नीति' **विष्णु**स्मरणात्। सपिण्डीकरणादूर्ध्वं सांव- ३० त्सरिकपार्वणादीनि पुत्रस्य नियमेनैव कार्याणि अन्येषामनियतानि॥ २५५॥

एकोद्दिष्टकालानाह

**मृतेऽहनि तु कर्तव्यं प्रतिमासं तु वत्सरम्।**
**प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि॥ २५६॥**

**मृतेऽहनि प्रतिमासं** संवत्सरं यावदेकोद्दिष्टं कार्यं । सपिण्डीकरणादूर्ध्वं **प्रतिसंवत्सरमेव** **एकोद्दिष्ट**मेव कर्तव्यं । **आद्यं** सर्वैकोद्दिष्टप्रकृतिभूतमेकोद्दिष्ट**मेकादशेऽहनि** । मृतदिवसापरिज्ञाने तच्छ्रवणदिवसे अमावास्यायां वा कार्यम् । 'अपरिज्ञाते मृतेऽहनि अमावास्यायां श्रवणदिवसे वेति' स्मरणात् । अमावास्यायामिति गमनमाससंबन्धिन्याममावास्यायामिति । 'प्रवासादिवसे देयं तन्मासेन्दुक्षयेऽपि वेति' स्मरणात् । मृतेऽहनीत्यत्राहिताग्नेर्विशेषो **जातूकर्ण्ये**नोक्तः । 'ऊर्ध्वं त्रिपक्षाद्यच्छ्राद्धं मृतेऽहन्येव तद्भवेत् । अधस्तु कारयेद्दाहादाहिताग्नेर्द्विजन्मन' इति । तत्र त्रिपक्षादर्वाग्यत्प्रेतकर्म सद्दाहदिवसादारभ्याहिताग्नेः कार्यम् । त्रिपक्षादूर्ध्वं यच्छ्राद्धं तन्मरणदिवस एवेत्यर्थः । अनाहिताग्नेस्तु सर्वं मृताह एव । **आद्यमेकादशेऽहनी**त्याशौचोपलक्षणमिति केचित् । 'शुचिना कर्म कर्तव्यं' इति शुद्धेरङ्गत्वात् 'अथाशौचापगम' इति सामान्ये सर्वेषां वर्णानामुपक्रम्यैकोद्दिष्टस्य **विष्णु**ना विहितत्वाच्च । तदयुक्तम् । 'एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम् । चतुर्णामपि वर्णानां सूतकं च पृथक्पृथगिति' **पैठीनसि**स्मरणविरोधात् । 'आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि । कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव स' इति **शंख**वचनविरोधाच्च । सामान्योपक्रमं विष्णुवचनं दशाहाशौचविषयमपि घटते. प्रतिसंवत्सरं **चैवा**मिति । प्रतिसंवत्सरं मृतेऽहनि एकोद्दिष्टमुपदिष्टं **योगीश्वरे**ण । तथा च स्मृत्यन्तरम् । 'वर्षे वर्षे तु कर्तव्या मातापित्रोस्तु सत्क्रिया । अदैवं भोजयेच्छ्राद्धं पिण्डमेकं च निर्वपेदिति' । **यमो**ऽप्याह । ''सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतः । मातापित्रोः पृथक्कुर्यादेकोद्दिष्टं मृतेऽहनीति''। **व्यास**स्तु पार्वणं प्रतिषेधयति । 'एकोद्दिष्टं परित्यज्य पार्वणं कुरुते नरः । अकृतं तद्विजानीयाद्भवेच्च पितृघातक' इति । **जमदग्नि**स्तु पार्वणमाह । 'आपाद्य च सपिण्डत्वमौरसो विधिवत्सुतः । कुर्वीत दर्शवच्छ्राद्धं मातापित्रोः क्षयेऽहनीति' । **शातातपो**ऽप्याह । 'सपिण्डीकरणं कृत्वा कुर्यात्पार्वणवत्सदा । प्रतिसंवत्सरं विद्वांश्छागलेयोदितो विधिरिति' ।

एवंवचनविप्रतिपत्तौ **दाक्षिणात्या** ह्येवं व्यवस्थामाहुः । औरसक्षेत्रजाभ्यां मातापित्रोः क्षयाहे पार्वणमेव कर्तव्यम् । दत्तकादिभिरेकोद्दिष्टमिति । **जातूकर्ण्य**वचनात् । 'प्रत्यब्दं पार्वणेनैव विधिना क्षेत्रजौरसौ । कुर्यातामितरे कुर्युरेकोद्दिष्टं सुता दशेति' तदसत् । न ह्यत्र क्षयाहवचनमस्ति अपितु प्रत्यब्दमिति । संति च क्षयाहव्यतिरिक्तानि प्रत्यब्दश्राद्धानि अक्षय्यतृतीयामाघीवैशाखीप्रभृतिषु । अतो न क्षयाहविषयपार्वणैकोद्दिष्टव्यवस्थापनयाऽलम् । यत्तु **पराशर**वचनम् । 'पितुर्गतस्य देवत्वमौरसस्य त्रिपौरुषम् । सर्वत्रानेकगोत्राणामेकस्यैव मृतेऽहनीति' तदपि न व्यवस्थापकं । यस्मादयमर्थः । देवत्वं गतस्य सपिण्डीकृतस्य पितुः सर्वत्रौरसेन त्रिपौरुषं पार्वणं कार्यम् । अनेकगोत्राणां भिन्नगोत्राणां मातुलादीनां क्षयेऽहनि यच्छ्राद्धं तदेकस्यैवैकोद्दिष्टमेवेति । किंच । 'सपिण्डीकरणादूर्ध्वमप्येकोद्दिष्टमेव कर्तव्यमौरसेनापी'त्युक्तं **पैठीनसिना** । 'एकोद्दिष्टं हि कर्तव्यमौरसेन मृतेऽहनि । सपिण्डीकरणादूर्ध्वं मातापित्रोर्न पार्वणमिति' ।

**उदीच्याः** पुनरेवं व्यवस्थापयन्ति । आमवास्यायां भाद्रपदकृष्णपक्षे वा मृताहे पार्वणमन्यत्र मृताह एकोद्दिष्टमेवेति । 'अमावास्या क्षयो यस्य प्रेतपक्षेऽथवा पुनः । पार्वणं तत्र कर्तव्यं नैकोद्दिष्टं कदाचनेति' स्मरणात् । तदपि नाद्रियन्ते **वृद्धाः** । अनिश्चितमूलेनानेन वचनेन निश्चितमूलानां बहूनां क्षयाहमात्रपार्वणाविषयाणां वचनानाममावास्याप्रेतपक्षमृताहविषयत्वेनातिसंकोचस्यायुक्तत्वात् ।

सामान्यवचनानर्थक्याच्च । तत्र हि सामान्यवचनस्य विशेषवचनेनोपसंहारः यत्र सामान्यविशेषसंबन्धशून्येन वचनद्वयमर्थवत् । यथा 'सप्तदशसामिधेनीरनुब्रूयादि'त्यनारभ्याधीतस्य विकृतिमात्रविषयस्य सप्तदशवाक्यस्य सामिधेनीलक्षणद्वारसंबन्धेनार्थवशात् मित्रविन्दादिप्रकरणपठितेन सप्तदशवाक्येन मित्रविन्दाद्यविकारात्पूर्वसंबन्धबोधेनार्थवत्ता मित्रविन्दादिप्रकरणे उपसंहारः । इह तु द्वयोर्मृताहमात्रविष-
५ यत्वान्नार्थवत्तेति । अतोऽत्र पाक्षिकैकोद्दिष्टनिवृत्तिफलकतया पार्वणनियमविधानं युक्तम् । न चैकोद्दिष्टवचनानां मातापितृक्षयाहविषयत्वेन पार्वणवचनानां च तदन्यक्षयाहविषयत्वेनव्यवस्था युक्ता । उभयत्रापि मातापितृसुतग्रहणस्य विद्यमानत्वात् । ' सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः । मातापित्रोः पृथक्कार्यमेकोद्दिष्टं मृतेऽहनीति ' । तथा ' आपाद्य सह पिण्डत्वमौरसो विधिवत्सुतः । कुर्वीत दर्शवच्छ्राद्धं मातापित्रोः क्षयेऽहनीति ' ।

१० यदपि कैश्चिदुच्यते मातापित्रोः क्षयाहे साग्निः पार्वणं कुर्यान्निरग्निरेकोद्दिष्टमिति ' वर्षे वर्षे सुतः कुर्यात्पार्वणं योऽग्निमान् द्विजः । पित्रोरनग्निमान्धीर एकोद्दिष्टं मृतेऽहनीति ' सुमन्तुस्मरणात् । तदपि सत्प्रतिपक्षत्वादुपेक्षणीयम् । ' बह्वग्रयस्तु ये विप्रा ये चैकाग्नय एव च । तेषां सपिण्डनादूर्ध्वमेकोद्दिष्टं न पार्वणमिति ' स्मरणात् ।

तत्रैवं निर्णयः । संन्यासिनां क्षयाहे सुतेन पार्वणमेव कर्तव्यम् । 'एकोद्दिष्टं यतेर्नास्ति त्रिदण्ड-
१५ ग्रहणादिह । सपिण्डीकरणाभावात्पार्वणं तस्य सर्वदेति ' प्रचेतसः स्मरणात् । अमावास्याक्षयाहे प्रेतपक्षक्षयाहे च पार्वणमेव । 'अमावास्या क्षयो यस्य प्रेतपक्षेऽथवा पुनरि'त्यादिवचनस्योक्तरीत्या नियमपरत्वात् । अन्यत्र क्षयाहे पार्वणैकोद्दिष्टयोर्व्रीहियववद्विकल्प एव । तथा वंशसमाचारव्यवस्थायां सत्यां व्यवस्थितो विकल्पः । असत्यामैच्छिक इत्यलमतिप्रसंगेन ॥ २५६ ॥

नित्यश्राद्धाव्यतिरिक्तसर्वश्राद्धशेषमिदमभिधीयते

२० **पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा ।**
**प्रक्षिपेत्सत्सु विप्रेषु द्विजोच्छिष्टं न मार्जयेत् ॥ २५७ ॥**

पूर्वदत्तानां पिण्डानां पिण्डस्य वा प्रतिपत्तिरियं । **गवे अजाय** ब्राह्मणाय वा तदर्थिने **पिण्डान्दद्यात्** । **अग्ना**वगाधे **जले वा प्रक्षिपेत्** । किंच । **सत्सु विप्रेषु** भोजनदेशावस्थितेषु **द्विजोच्छिष्टं न मार्जयेत्** नोद्वासयेत् ॥ २५७ ॥

पिण्डप्रक्षेपस्थलम् ।

२५ भोज्यविशेषेण फलविशेषमाह

**हविष्यान्नेन वै मासं पायसेन तु वत्सरम् ।**
**मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः ॥ २५८ ॥**
**ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम् ।**
**मासवृद्ध्याऽभितृप्यन्ति दत्तैरिह पितामहाः ॥ २५९ ॥**

**हविष्यं** हविर्योग्यं तिलव्रीह्यादि । यथाह **मनुः** ( अ. ३ श्लो. २६७ ) । 'हविष्यान्नेन वै मासं पायसेन तु वत्सरम्' । यवैर्माषैरद्भिर्मूलफलेन वा । दत्तेन मासं प्रीयन्ते विधिवत्पितरो नृणामिति ' । तदन्नं हविष्यान्नं तेन **मासं** पितरस्तृप्यन्तीत्यनागतेनान्वयः । **पायसेन** गव्यपयःसिद्धेन **संवत्सरम्** । ' संवत्सरं तु गव्येन पयसा पायसेन वेति ' स्मरणात् (**मनुस्मृ.** अ. ३ श्लो. २७१)। मत्स्यो भक्ष्यः पाठीनादिस्तस्येदं **मात्स्यं**। हरिणस्ताम्रमृगः एणः कृष्णः । ' एणः कृष्णमृगो ज्ञेयस्ताम्रो हरिण उच्यत ' **इत्यायुर्वेद**स्मरणात् । तस्येदं **हारिणकं** । अविः उरभ्रस्तत्संबन्धि **और**भ्रं । **शाकुनं** भक्ष्यपक्षिसंबन्धि । छागः अजस्तदीयं **छागं** । पृषच्चित्रमृगस्तन्मांसं **पार्षतं** । एणः कृष्णमृगस्तत्पिशित**मैणं** । रुरुः शंबरस्तत्प्रभवं **रौरवं** । वराहः आरण्यसूकरस्तज्जं **वाराहं** । शशस्येदं **शाशं** । एभिर्मासैः पितृभ्यो दत्तै'र्हविष्यान्नेन वै मास-मि'त्युक्तत्वात्तत ऊर्ध्वं **यथाक्रमं** एकैकमासवृद्ध्या पितरस्तृप्यन्ति ॥ २५८ ॥ २५९ ॥

**खड्गामिषं महाशल्कं मधु मुन्यन्नमेव च ।**
**लोहामिषं महाशाकं मांसं वार्ध्रीणसस्य च ॥ २६० ॥**
**यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते ।**
**तथा वर्षात्रयोदश्यां मघासु च विशेषतः ॥ २६१ ॥**

किंच । **खड्गो** गण्डकस्तस्य मांसं । **महाशल्को** मत्स्यभेदः । **मधु** माक्षिकं । **मुन्यन्नं** सर्व-मारण्यं नीवारादि । लोहो रक्तच्छागः तदामिषं **लोहामिषं** । **महाशाकं** कालशाकं । वार्ध्रीणसो वृद्धः श्वेतच्छागः । ' त्रिपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् । वार्ध्रीणसं तु तं प्राहुर्याज्ञिकाः श्राद्धकर्मणीति' । याज्ञिकः प्रसिद्धः । त्रिपिबः पिबतः कर्णौ जिह्वा च यस्य जलं स्पृशति सः त्रिभिः पिबतीति त्रिपिबः । तस्य **वार्ध्रीणसस्य मांसं यद्ददाति गयास्थश्च** यत्किंचिच्छाकादिक-मपि गयास्थो ददाति चशब्दाद्गङ्गाद्वारादिषु च । ' गङ्गाद्वारे प्रयागे च नैमिषे पुष्करेऽर्बुदे । संनि-हत्यां गयायां च श्राद्धमक्षय्यतां व्रजेत् ' । **आनन्त्यमश्नु**ते आनन्त्यफलहेतुत्वं प्राप्नोति । आन-न्त्यमश्नुते इति प्रत्येकं संबध्यते । तथा **वर्षात्रयोदश्यां** भाद्रपदकृष्णत्रयोदश्यां **विशेषतो मघा-युक्तायां** यत्किंचिद्दीयते तत्सर्वमानन्त्यमश्नुत इति गतेन संबन्धः ।

अत्र यद्यपि मुन्यन्नमांसमध्वादीनि सर्ववर्णानां सामान्येन श्राद्धे योग्यानि दर्शितानि तथापि **पुलस्त्यो**क्ता व्यवस्था आदरणीया । ' मुन्यन्नं ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः । मधुप्रदानं शू-द्रस्य सर्वेषां चाविरोधि यदिति ' । अस्यायमर्थः । मुन्यन्नं नीवारादि यच्छ्राद्धयोग्यमुक्तं तद्ब्राह्मणस्य प्रधानं समग्रफलदम् । यच्च मांसमुक्तं तत्क्षत्रियवैश्ययोः प्रधानम् । यत्क्षौद्रमुक्तं तच्छूद्रस्य । एतत्त्रि-तयव्यतिरिक्तं यदविरोधि यदप्रतिषिद्धं वास्तुकादि यच्च विहितं हविष्यं कालशाकादि तत्सर्वेषां समग्रफलदमिति ॥ २६० ॥ २६१ ॥

तिथिविशेषात्फलविशेषमाह

**कन्यां कन्यावेदिनश्च पशून्वै सत्सुतानपि ।**
**द्यूतं कृषिं च वाणिज्यं द्विशफैकशफांस्तथा ॥ २६२ ॥**

**ब्रह्मवर्चस्विनः पुत्रान्स्वर्णरूप्ये सकुप्यके ।**
**जातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा ॥ २६३ ॥**
**प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ।**
**शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते ॥ २६४ ॥**

५ **कन्यां** रूपलक्षणशीलवतीं **कन्यावेदिनो** जामातरः बुद्धिरूपलक्षणसंपन्नाः। **पशवः क्षुद्राः** अजादयः। **सत्सुताः** सन्मार्गवर्तिनः। **द्यूतं** द्यूतविजयः। **कृषिः** कृषिफलं। **वाणिज्यं** वाणिज्यलाभः। **द्विशफा** गवादयः। **एकशफा** अश्वादयः। **ब्रह्मवर्चस्विनः पुत्राः** वेदाध्ययनतदर्थानुष्ठानजनितं तेजो ब्रह्मवर्चसं तद्वन्तः। **स्वर्णरूप्ये** हेमरजते तद्व्यतिरिक्तं त्रपुसीसादि **कुप्यकं**। **जातिश्रैष्ठ्यं** जातिप्रकृष्टत्वं। **सर्वकामाः** काम्यन्त इति कामाः स्वर्गपुत्रपश्वादयः। एतानि १० कन्यादीनि चतुर्दशफलानि कृष्णप्रतिपत्प्रभृतिष्वमावास्यापर्यन्तासु चतुर्दशीवर्जितासु चतुर्दशसु तिथिषु श्राद्धदो यथाक्रममाप्नोति ।

ये केचन शस्त्रहतास्तेभ्यः कृष्णचतुर्दश्यामेकोद्दिष्टविधिना श्राद्धं दद्यात्। यदि ब्राह्मणादिहता न भवन्ति। 'समत्वमागतस्यापि पितुः शस्त्रहतस्य वै। एकोद्दिष्टं सुतैः कार्यं चतुर्दश्यां महालये' इति स्मरणात्। समत्वमागतस्य सपिण्डीकृतस्य महालये भाद्रपदकृष्णचतुर्दश्यां शस्त्रहतस्यैव श्राद्धं १५ नान्यस्येति नियम्यते। 'न पुनः शस्त्रहतस्य चतुर्दश्यामेवेति'। अतश्च क्षयाहादौ शस्त्रहतस्यापि यथाप्राप्तमेव श्राद्धं न च भाद्रपदकृष्णपक्षे एवायं विधिरिति मन्तव्यम्। 'प्रौष्ठपद्यामपरपक्षे मासि मासि चैवमिति' **शौनकस्मरणात्** ॥ २६२ ॥ २६३ ॥ २६४ ॥

नक्षत्रविशेषात्फलविशेषमाह

**स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा ।**
२० **पुत्रं श्रैष्ठ्यं च सौभाग्यं समृद्धिं मुख्यतां शुभम् ॥ २६५ ॥**
**प्रवृत्तचक्रतां चैव वाणिज्यप्रभृतीनपि ।**
**अरोगित्वं यशो वीतशोकतां परमां गतिम् ॥ २६६ ॥**
**धनं वेदान् भिषक्सिद्धिं कुप्यं गा अप्यजाविकम् ।**
**अश्वानायुश्च विधिवद्यः श्राद्धं संप्रयच्छति ॥ २६७ ॥**
**कृत्तिकादिभरण्यन्तं स कामानाप्नुयादिमान् ।**
२५ **आस्तिकः श्रद्दधानश्च व्यपेतमदमत्सरः ॥ २६८ ॥**

कृत्तिकामादिं कृत्वा भरण्यन्तं प्रतिनक्षत्रं यः श्राद्धं ददाति स यथाक्रमं स्वर्गादीनायुःपर्यन्तान्कामानवाप्नोति यद्यास्तिकः श्रद्दधानश्चेत् व्यपेतमदमत्सरो भवति। **आस्तिको** विश्वासवान्। **श्रद्दधानः** आदरातिशययुक्तः। **व्यपेतमदमत्सरः** मदो गर्वः मत्सर ईर्ष्या ताभ्यां रहितः। **स्वर्गं** निर-

किंच । यदुक्तं 'स्वस्ति वाच्यं ततः कुर्यादक्षय्योदकमेव चेति' तत्रा'क्षय्यस्थाने उपतिष्ठतामिति' वदेत् । **विप्रविसर्जने** कर्तव्ये 'वाजे वाज' इति जपानन्तरं दर्भान्वारम्भेणा'भिरम्यतामिति' ब्रूयात् । ते 'चाभिरताः स्म' इति **ब्रूयुः** । हेति प्रसिद्धम् । शेषं पूर्ववदिति यावत् ।

एतच्च मध्याह्ने कर्तव्यम् । यथाह **देवलः** । 'पूर्वाह्ने दैविकं कर्म अपराह्ने तु पैतृकम् । एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकमिति' । 'भुञ्जीत पितृसेवितमि'त्येकोद्दिष्टविशेषे निषेधो दृश्यते । 'नव- ५ श्राद्धेषु यच्छिष्टं गृहे पर्युषितं च यत् । दम्पत्योर्भुक्तशिष्टं च न भुञ्जीत कदाचनेति' । नवश्राद्धं तु दर्शितम् । 'प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमे तथा । नवमैकादशे चैव तन्नवश्राद्धमुच्यते' ॥ २५२॥

सपिण्डीकरणमाह

**गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् ।**
**अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसिञ्चयेत् ॥ २५३ ॥** १०
**'ये समाना' इति द्वाभ्यां शेषं पूर्ववदाचरेत् ।**
**एतत्सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि ॥ २५४ ॥**

**गन्धोदकतिलैर्युक्तं पात्रचतुष्टयं** अर्घ्यसिद्ध्यर्थं पूर्वोक्तविधिना **कुर्यात्** । तिलैर्युक्तं पात्रचतुष्टयं वदता पितृवर्गे चत्वारो ब्राह्मणा दर्शिताः । वैश्वदेवे द्वौ स्थितावेव । अत्र प्रेतपात्रोदकं किंचिदवशेषं त्रिधा विभज्य पितृपात्रेषु सेचयेत् । 'ये समानाः समनस' **इति द्वाभ्यां** मन्त्राभ्याम् । १५ शेषं विश्वेदेवावाहनादिविसर्जनान्तं **पूर्ववत्** पार्वणव**दाचरेत्** । प्रेतार्घ्यपात्रावशिष्टोदकेन प्रेतस्थानब्राह्मणहस्तेऽर्घ्यं दत्वा शेषमेकोद्दिष्टवत्समापयेत् । पित्र्येषु त्रिषु पार्वणवत् । **एतत्सपिण्डीकरण**मन्तरोक्त**मेकोद्दिष्टं** च ततः प्रागुक्तम् । **स्त्रिया अपि** मातुरपि कर्तव्यं ।

एवं वदता पार्वणे मातृश्राद्धं पृथक्कर्तव्यमित्युक्तं भवति । अत्र प्रेतशब्दं पितुःप्रपितामहविषयं केचिद्वर्णयन्ति । तस्य त्रिष्वन्तर्भावेन सपिण्डीकरणोत्तरकालं पिण्डदानादिनिवृत्त्युपपत्तेः । समनन्तर- २० मृतस्योत्तरत्र पिण्डोदकदानानुवृत्तेरन्तर्भावो न युक्तः । अत एवाह **यमः** । 'यः सपिण्डीकृतं प्रेतं पृथक्पिण्डे नियोजयेत् । विधिघ्नस्तेन भवति पितृहा चोपजायत' इति । प्रकर्षेण इतः प्रेत इति चतुर्थेऽपि प्रेतशब्दोपपत्तेः । 'प्रेतेभ्य एव निपृणीयादिति' च प्रयोगदर्शनात् ।

अपि च 'सपिण्डीकरणं श्राद्धं देवपूर्वं नियोजयेत् । पितॄनेवाशयेत्तत्र पुनः प्रेतं न निर्दिशेदिति' । सपिण्डीकरणोत्तरकालं प्रेतस्य श्राद्धादिप्रतिषेधो दृश्यते । स चानन्तरमृतस्य न संभवति । २५ अमावास्यादौ श्राद्धविधानात् । 'सपिण्डता तु पुरुषे सप्तमे विनिवर्तत' इत्येतदपि वचनं चतुर्थस्य त्रिष्वन्तर्भाव एव घटते । चतुर्थस्य पिण्डत्रयव्यापित्वं पञ्चमस्य पिण्डद्वयव्यापित्वं षष्ठस्यैकपिण्डव्यापित्वं सप्तमे निवृत्तिरिति । 'पितृपात्रेष्वि'त्येतदपि पितृमुख्यत्वादस्मिन्नेव पक्षे घटते नान्यथा प्रपितामहप्रमुखत्वात् । तस्मात्पितृपात्रेषु तत्प्रेतपात्रं प्रसिञ्चयेदिति तदयुक्तम् ।

न ह्यत्र पिण्डसंयोजनमुत्तरत्र पिण्डदानादिनिवृत्तिप्रयोजनम् । अपि तु पितुः प्रेतत्वनिवृत्त्या ३० पितृत्वप्राप्त्यर्थं प्रेतानां च क्षुत्तृष्णोपजनितात्यन्तदुःखानुभवावस्था । यथाह **मार्कण्डेयः** । '[illegible]

तु वसतिर्नृणां वर्षं प्रकीर्तिता । क्षुत्तृष्णे प्रत्यहं तत्र भवेतां भृगुनन्दनेति ' पितृत्वप्राप्तिश्च वस्वादिश्राद्ध-देवतासंबन्धः । प्राक्तनैकोद्दिष्टसहितेन सपिण्डीकरणेन प्रेतत्वनिवृत्त्या पितृत्वं प्राप्नोतीत्यवगम्यते । ' यस्यैतानि न दत्तानि प्रेतश्राद्धानि षोडश । प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ' । तथा । ' चतुरो निर्वपेत्पिंडान्पूर्वं तेषु समापयेत् । ततः प्रभृति वै प्रेतः पितृसामान्यमश्नुत ' इत्यादिवचनात् ।
५ ' यः सपिण्डीकृतं प्रेतमि'त्यनेनापि पृथगेकोद्दिष्टविधानेन पिण्डदाननिषेधात्पार्वणविधानेन सह पिण्ड-दानमवगम्यते । एतच्च सांवत्सरिकपाक्षिकैकोद्दिष्टविधानायोपपाद्यते । यदपि ' पुनः प्रेतं न निर्दिशे-दिति ' तदपि प्रेतशब्दं नोच्चारयेत् । अपि तु पितृशब्दमेवेत्येवमर्थं । न च प्रकर्षगमनात्तत्रैव प्रेतशब्दः । यतो विशिष्टदुःखानुभवावस्था प्रेतशब्देन रूढ्याऽभिधीयत इत्युक्तं योऽपि प्रमीतमात्रे प्रेतशब्दप्रयोगः सोऽपि भूतपूर्वगत्या ' सपिण्डता तु पुरुषे सप्तमे विनिवर्तत ' इति च प्रथमस्य पिंडस्य चतुर्थव्यापित्वात्
१० द्वितीयस्य पञ्चमव्यापित्वात् तृतीयस्य षष्ठव्यापित्वात् सप्तमे विनिवर्तत इति । एवमपि घटते ।

अपि च निर्वाप्य पिंडान्वये न सापिंड्यं अव्यापकत्वात् । अपि त्वेकशरीरावयवान्वयेनेत्युक्तं पितृशब्दश्च प्रेतत्वनिवृत्त्या श्राद्धदेवतात्वमुपगतेषु वर्तत इति पितृपात्रेष्वित्यविरुद्धम् । तस्मादनन्तर-मृतपात्रोदकस्य तत्पिंडस्य च पितृपात्रेषु तत्पिण्डेषु च संसर्जनमिति स्थितम् । **आचार्यस्तु** परमत-मेवोपन्यस्तवान् । एतच्च पितुः सपिण्डीकरणं पितामहादिषु त्रिषु प्रमीतेषु वेदितव्यम् । पितरि प्रेते
१५ पितामहे प्रपितामहे वा जीवति सपिण्डीकरणं नास्त्येव । ' व्युत्क्रमाच्च प्रमीतानां नैव कार्या सपिण्ड-तेति ' वचनात् । यत्तु **मनु**वचनं ( अ. ३ श्लो. २२१ ) ' पिता यस्य निवृत्तः स्याज्जीवेच्चापि पितामहः । पितुः स नाम संकीर्त्य कीर्तयेत्प्रपितामहमिति ' तदपि पितृशब्दप्रयोगनियमाय । न पिण्डद्वयदानार्थम् । कथं ' म्रियमाणे तु पितरि पूर्वेषामेव निर्वपेत् । पिता यस्य तु वृत्तः स्याज्जीवे-च्चापि पितामहः ' । सोऽपि पूर्वेषामेव निर्वपेदित्यन्वयः ।

२० पक्षद्वयेऽपि कथं निर्वपेदित्याह । ' पितुः स नाम संकीर्त्य कीर्तयेत्प्रपितामहमि'त्याद्यन्तग्रहणेन सर्वत्र पितृभ्यः पितामहेभ्यः प्रपितामहेभ्य इत्येवं प्रयोगः । न पुनः कदाचिदपि पितामहस्य प्रपितामहस्य वाऽऽदित्वं वृद्धप्रपितामहस्य तत्पितुर्वाऽन्तत्वं । अतश्च पित्रादिशब्दानां संबन्धिवचनात् । म्रियमाणे पितरि 'पितुः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्य इति ' पितामहे म्रियमाणे पितामहस्य पितृभ्यः पितां-महेभ्यः प्रपितामहेभ्य इति । अतः पिण्डापितृयज्ञे ' शुन्धन्तां पितर ' इत्यादिमन्त्राणामूहो न भवति ।

२५ यदपि **विष्णु**वचनं 'यस्य पिता प्रेतः स्यात्स पितृपिण्डं निधाय पितामहात्पराभ्यां द्वाभ्यां दद्यादिति ' तस्यायमर्थः । पितामहे म्रियमाणे प्रेते च पितरि पितुरेकं पिण्डमेकोद्दिष्टविधानेन निधाय पितुर्यः पितामहस्तत्पराभ्यां द्वाभ्यां दद्यात् । पितामहस्त्वात्मनः प्रपितामहः संप्रदानभूतः स्थित एवेति । प्रपितामहाय ततः पराभ्यां द्वाभ्यां च दद्यादिति । शब्दप्रयोगनियमस्तु पूर्वोक्त एव ।

एवं गोब्राह्मणादिहतस्यापि सपिण्डीकरणाभावो वेदितव्यः । यथाह **कात्यायनः** । ' ब्राह्मणा-
३० दिहते ताते पतिते संगवर्जिते । व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसाविति ' गोब्राह्मणहतस्य [ः सपिण्डीकरणसंभवे तमुल्लंघ्य पितामहादिभ्यः पार्वणविधानमुपपन्नमिति सपिण्डीकरणाभावोऽव-

गम्यते । स्मृत्यन्तरेऽपि ‘ ये नराः संततिच्छिन्ना नास्ति तेषां सपिण्डता । न चैतैः सह कर्तव्यान्ये-कोद्दिष्टानि षोडशेति ’ ।

मातुः पिण्डदानादौ गोत्रे विप्रतिपत्तिः भर्तृगोत्रेण पितृगोत्रेण वा दातव्यमिति उभयत्र वचन-दर्शनात् । ‘ स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे । स्वामिगोत्रेण कर्तव्या तस्याः पिण्डोदक-क्रिये’ त्यादिभर्तृगोत्रविषयं वचनम् । ‘ पितृगोत्रं समुत्सृज्य न कुर्याद्भर्तृगोत्रतः । जन्मन्येव विपत्तौ च नारीणां पैतृकं कुलमि’त्यादिपितृगोत्रविषयम् । एवं विप्रतिपत्तावासुरादिविवाहेषु पुत्रिकाकरणे च पितृगोत्रमेव तत्र तत्र विशेषवचनात् दानस्यानिवृत्तेश्च । ब्राह्मादिविवाहेषु व्रीहियववत् बृहद्रथन्तरसाम-वत् विकल्प एव । तत्र च ‘ येनास्य पितरो याता येन याताः पितामहाः । तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यतीति ’ वचनात् । वंशपरम्परायाततत्समाचारेणेन व्यवस्था । एवंविधविषयव्यतिरेके-णास्य वचनस्य विषयान्तराभावात् । यत्र पुनः शास्त्रतो न व्यवस्था नाप्याचारतस्तत्रा‘त्मनस्तुष्टिरेव चेति’ वचनादात्मनस्तुष्टिरेव व्यवस्थापिका । यथा ‘ गर्भाष्टमेऽष्टमे वाब्दे ’ इति ।

मातुः सपिण्डीकरणेऽपि विरुद्धानीव वाक्यानि दृश्यन्ते । तत्र ‘ पितामह्यादिभिः सार्धं सपिण्डी-करणं स्मृतम् ’ । तथा भर्त्राऽपि भार्यायाः स्वमात्रादिभिः सह सपिण्डीकरणं कर्तव्यमिति **पैठी-नसिराह** । ‘ अपुत्रायां मृतायां तु पतिः कुर्यात्सापिण्डताम् । श्वश्र्वादिभिः सहैवास्या सपिण्डीकरणं भवेदिति’ पत्या सह सपिण्डीकरणम् । **यम** आह । ‘ पत्या चैकेन कर्तव्यं सपिण्डीकरणं स्त्रियाः । सा मृताऽपि हि तेनैक्यं गता मन्त्राहुतिव्रतैरिति’ । **उशनसा** तु मातामहेन सह सपिण्डीकरणमुक्तम् । ‘ पितुः पितामहे यद्वत्पूर्णे संवत्सरे सुतैः । मातुर्मातामहे तद्वदेषा कार्या सपिण्डता ’ । तथा । ‘ पिता पितामहे योज्यः पूर्णे संवत्सरे सुतैः । माता मातामहे तद्वदित्याह भगवाञ्शिवः ’ ।

इत्येवं विविधेषु वचनेषु सत्सु अपुत्रायां भार्यायां प्रमीतायां भर्ता स्वमात्रैव सापिण्ड्यं कुर्यात् । अन्वारोहणे तु पुत्रः स्वपित्रैव मातुः सापिण्ड्यं कुर्यात् । आसुरादिविवाहोत्पन्नः पुत्रिकासुतश्च मातामहेनैव । ब्राह्मादिविवाहोत्पन्नः पित्रा मातामहेन पितामह्या वा विकल्पेन कुर्यात् ।

अत्रापि यदि नियतो वंशसमाचारस्तदानीं तथैव कुर्यात् । वंशसमाचारोऽप्यनियतश्चेत्तदा‘ऽऽत्म-नस्तुष्टिरेव चेति’ यथारुचि कुर्यात् । तत्र च येन केनापि मातुः सापिण्ड्येऽपि यत्रान्वष्टकादिषु मातृ-श्राद्धं पृथग्विहितं ‘ अन्वष्टकासु वृद्धौ च गयायां च क्षयेऽहनि । मातुः श्राद्धं पृथक्कुर्यादन्यत्र पतिना सह ’ । तत्र पितामह्यादिभिरेव पार्वणश्राद्धं कर्तव्यम् । अन्यत्र पतिना सहेति पतिसापिण्ड्ये तदंशभागित्वात् । मातामहसापिण्ड्ये तदंशभागित्वात्तेनैव सह । यथाह **शातातपः** । ‘ एकमूर्तित्व-मायाति सपिण्डीकरणे कृते । पत्नी पतिपितॄणां च तस्मादंशेन भागिनीति ’ । एवं सति मातामहेन मातुः सापिण्ड्ये मातामहश्राद्धं पितृश्राद्धवन्नित्यमेव । पत्या पितामह्या वा मातुः सापिण्ड्ये मातामह-श्राद्धं न नित्यं । कृते अभ्युदयः अकृते न प्रत्यवाय इति निर्णयः ॥ २५३ ॥ २५४ ॥

**अर्वाक्सपिण्डीकरणं यस्य संवत्सराद्भवेत् ।**
**तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विजे ॥ २५५ ॥**

सामान्यवचनानर्थक्याच्च । तत्र हि सामान्यवचनस्य विशेषवचनेनोपसंहारः यत्र सामान्यविशेषसंबन्धज्ञानेन वचनद्वयमर्थवत् । यथा 'सप्तदशसामिधेनीरनुब्रूयादि'त्यनारभ्याधीतस्य विकृतिमात्रविषयस्य सप्तदशवाक्यस्य सामिधेनीलक्षणद्वारसंबन्धेनार्थवशात् मित्रविन्दादिप्रकरणपठितेन सप्तदशवाक्येन मित्रविन्दाद्यविकारात्पूर्वसंबन्धबोधेनार्थवत्ता मित्रविन्दादिप्रकरणे उपसंहारः । इह तु द्वयोर्मृताहमात्रविषयत्वान्नार्थवत्तेति । अतोऽत्र पाक्षिकैकोद्दिष्टनिवृत्तिफलकतया पार्वणनियमविधानं युक्तम् । न चैकोद्दिष्टवचनानां मातापितृक्षयाहविषयत्वेन पार्वणवचनानां च तदन्यक्षयाहविषयत्वेनऽव्यवस्था युक्ता । उभयत्रापि मातापितृसुतग्रहणस्य विद्यमानत्वात् । 'सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः । मातापित्रोः पृथक्कार्यमेकोद्दिष्टं मृतेऽहनीति' । तथा 'आपाद्य सह पिण्डत्वमौरसो विधिवत्सुतः । कुर्वीत दर्शवच्छ्राद्धं मातापित्रोः क्षयेऽहनीति' ।

यदपि कैश्चिदुच्यते मातापित्रोः क्षयाहे साग्निः पार्वणं कुर्यान्निरग्निरेकोद्दिष्टमिति 'वर्षे वर्षे सुतः कुर्यात्पार्वणं योऽग्निमान् द्विजः । पित्रोरनग्निमान्धीर एकोद्दिष्टं मृतेऽहनीति' सुमन्तुस्मरणात् । तदपि सत्प्रतिपक्षत्वादुपेक्षणीयम् । 'बह्वग्रयस्तु ये विप्रा ये चैकाग्नय एव च । तेषां सपिण्डनादूर्ध्वमेकोद्दिष्टं न पार्वणमिति' स्मरणात् ।

तत्रैवं निर्णयः । संन्यासिनां क्षयाहे सुतेन पार्वणमेव कर्तव्यम् । 'एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह । सपिण्डीकरणाभावात्पार्वणं तस्य सर्वदेति' प्रचेतसः स्मरणात् । अमावास्याक्षयाहे प्रेतपक्षक्षयाहे च पार्वणमेव । 'अमावास्या क्षयो यस्य प्रेतपक्षेऽथवा पुनरि'त्यादिवचनस्योक्तरीत्या नियमपरत्वात् । अन्यत्र क्षयाहे पार्वणैकोद्दिष्टयोर्व्रीहियववद्विकल्प एव । तथा वंशसमाचारव्यवस्थायां सत्यां व्यवस्थितो विकल्पः । असत्यामैच्छिक इत्यलमतिप्रसंगेन ॥ २५६ ॥

नित्यश्राद्धाव्यतिरिक्तसर्वश्राद्धशेषमिदमभिधीयते

**पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा ।**
**प्रक्षिपेत्सत्सु विप्रेषु द्विजोच्छिष्टं न मार्जयेत् ॥ २५७ ॥**

पूर्वदत्तानां पिण्डानां पिण्डस्य वा प्रतिपत्तिरियं । **गवे अजाय** ब्राह्मणाय वा तदर्थिने **पिण्डान्दद्यात्** । अग्नावगाधे जले वा **प्रक्षिपेत्** । किंच । **सत्सु विप्रेषु** भोजनदेशावस्थितेषु **द्विजोच्छिष्टं न मार्जयेत्** नोद्वासयेत् ॥ २५७ ॥

पिण्डप्रक्षेपस्थलम् ।

भोज्यविशेषेण फलविशेषमाह

**हविष्यान्नेन वै मासं पायसेन तु वत्सरम् ।**
**मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः ॥ २५८ ॥**
**एणरौरववाराहशाशैर्मांसैर्यथाक्रमम् ।**
**मासवृद्ध्याऽभितृप्यन्ति दत्तैरिह पितामहाः ॥ २५९ ॥**

**हविष्यं** हविर्योग्यं तिलव्रीह्यादि । यथाह **मनुः** ( अ. ३ श्लो. २६७ ) । ‘ तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा । दत्तेन मासं प्रीयन्ते विधिवत्पितरो नृणामिति ’ । तदन्नं हविष्यान्नं तेन **मासं** पितरस्तृप्यन्तीत्यनागतेनान्वयः । **पायसेन** गव्यपयःसिद्धेन **संवत्सरम्** । ‘ संवत्सरं तु गव्येन पयसा पायसेन वेति ’ स्मरणात् (**मनुस्मृ.** अ. ३ श्लो. २७१)। मत्स्यो भक्ष्यः पाठीनादिस्तस्येदं **मात्स्यं**। हरिणस्ताम्रमृगः एणः कृष्णः । ‘ एणः कृष्णमृगो ज्ञेयस्ताम्रो हरिण उच्यत ’ **इत्यायुर्वेद**स्मरणात् । ५ तस्येदं **हारिणकं** । अविः उरभ्रस्तत्संबन्धि **औरभ्रं** । **शाकुनं** भक्ष्यपक्षिसंबन्धि । छागः अजस्तदीयं **छागं** । पृषच्चित्रमृगस्तन्मांसं **पार्षतं** । एणः कृष्णमृगस्तात्पिशित**मैणं** । रुरुः शंबरस्तत्प्रभवं **रौरवं** । वराहः आरण्यसूकरस्तज्जं **वाराहं** । शशस्येदं **शाशं** । एभिर्मांसैः पितृभ्यो दत्तैः‘हविष्यान्नेन वै मास-मि’त्युक्तत्वात्तत ऊर्ध्वं **यथाक्रमं** एकैकमासवृद्ध्या पितरस्तृप्यन्ति ॥ २५८ ॥ २५९ ॥

**खड्गामिषं महाशल्कं मधु मुन्यन्नमेव च ।** १०
**लोहामिषं महाशाकं मांसं वार्ध्रीणसस्य च ॥ २६० ॥**
**यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते ।**
**तथा वर्षात्रयोदश्यां मघासु च विशेषतः ॥ २६१ ॥**

किंच । **खड्गो** गण्डकस्तस्य मांसं । **महाशल्को** मत्स्यभेदः । **मधु** माक्षिकं । **मुन्यन्नं** सर्वमारण्यं नीवारादि । लोहो रक्तच्छागः तदामिषं **लोहामिषं** । **महाशाकं** कालशाकं । वार्ध्रीणसो १५ वृद्धः श्वेतच्छागः । ‘ त्रिपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् । वार्ध्रीणसं तु तं प्राहुर्याज्ञिकाः श्राद्धकर्मणीति’ । याज्ञिकः प्रसिद्धः । त्रिपिबः पिबतः कर्णौ जिह्वा च यस्य जलं स्पृशति सः त्रिभिः पिबतीति त्रिपिबः । तस्य **वार्ध्रीणसस्य मांसं यद्ददाति गयास्थश्च** यत्किंचिच्छाकादिकमपि गयास्थो ददाति चशब्दाद्गङ्गाद्वारादिषु च । ‘ गङ्गाद्वारे प्रयागे च नैमिषे पुष्करेऽर्बुदे । संनिहत्यां गयायां च श्राद्धमक्षय्यतां व्रजेत् ’ । **आनन्त्यमश्नुते** आनन्त्यफलहेतुत्वं प्राप्नोति । आन- २० न्त्यमश्नुते इति प्रत्येकं संबध्यते । तथा **वर्षात्रयोदश्यां** भाद्रपदकृष्णत्रयोदश्यां **विशेषतो मघायुक्तायां** यत्किंचिद्दीयते तत्सर्वमानन्त्यमश्नुत इति गतेन संबन्धः ।

अत्र यद्यपि मुन्यन्नमांसमध्वादीनि सर्ववर्णानां सामान्येन श्राद्धे योग्यानि दर्शितानि तथापि **पुलस्त्योक्ता** व्यवस्था आदरणीया । ‘ मुन्यन्नं ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः । मधुप्रदानं शूद्रस्य सर्वेषां चाविरोधि यदिति ’ । अस्यायमर्थः । मुन्यन्नं नीवारादि यच्छ्राद्धयोग्यमुक्तं तद्ब्राह्मणस्य २५ प्रधानं समग्रफलदम् । यच्च मांसमुक्तं तत्क्षत्रियवैश्ययोः प्रधानम् । यत्क्षौद्रमुक्तं तच्छूद्रस्य । एतत्त्रितयव्यतिरिक्तं यदविरोधि यदप्रतिषिद्धं वास्तुकादि यच्च विहितं हविष्यं कालशाकादि तत्सर्वेषां समग्रफलदमिति ॥ २६० ॥ २६१ ॥

तिथिविशेषात्फलविशेषमाह

**कन्यां कन्यावेदिनश्च पशून्वै सत्सुतानपि ।**
**द्यूतं कृषिं च वाणिज्यं द्विशफैकशफांस्तथा ॥ २६२ ॥**

**ब्रह्मवर्चस्विनः पुत्रान्स्वर्णरूप्ये सकुप्यके ।**
**जातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा ॥ २६३ ॥**
**प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ।**
**शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते ॥ २६४ ॥**

**कन्यां** रूपलक्षणशीलवतीं **कन्यावेदिनो** जामातरः बुद्धिरूपलक्षणसंपन्नाः। **पशवः क्षुद्राः** अजादयः । **सत्सुताः** सन्मार्गवर्तिनः । **द्यूतं** द्यूतविजयः । **कृषिः** कृषिफलं । **वाणिज्यं** वाणिज्यलाभः । **द्विशफा** गवादयः । **एकशफा** अश्वादयः । **ब्रह्मवर्चस्विनः पुत्राः** वेदाध्ययनतदर्थानुष्ठानजनितं तेजो ब्रह्मवर्चसं तद्वन्तः। **स्वर्णरूप्ये** हेमरजते तद्व्यतिरिक्तं त्रपुसीसादि **कुप्यकं**। **जातिश्रैष्ठ्यं** जातिषूत्कृष्टत्वं । **सर्वकामाः** काम्यन्त इति कामाः स्वर्गपुत्रपश्वादयः । एतानि १० कन्यादीनि चतुर्दशफलानि कृष्णप्रतिपत्प्रभृतिष्वमावास्यापर्यन्तासु चतुर्दशीवर्जितासु चतुर्दशसु तिथिषु श्राद्धदो यथाक्रममाप्नोति ।

ये केचन शस्त्रहतास्तेभ्यः कृष्णचतुर्दश्यामेकोद्दिष्टविधिना श्राद्धं दद्यात् । यदि ब्राह्मणादिहता न भवन्ति । 'समत्वमागतस्यापि पितुः शस्त्रहतस्य वै । एकोद्दिष्टं सुतैः कार्यं चतुर्दश्यां महालये' इति स्मरणात् । समत्वमागतस्य सपिण्डीकृतस्य महालये भाद्रपदकृष्णचतुर्दश्यां शस्त्रहतस्यैव श्राद्धं १५ नान्यस्येति नियम्यते । ' न पुनः शस्त्रहतस्य चतुर्दश्यामेवेति ' । अतश्च क्षयाहादौ शस्त्रहतस्यापि यथाप्राप्तमेव श्राद्धं न च भाद्रपदकृष्णपक्षे एवायं विधिरिति मन्तव्यम् । ' प्रौष्ठपद्यामपरपक्षे मासि मासि चैवमिति ' **शौनकस्मरणात्** ॥ २६२ ॥ २६३ ॥ २६४ ॥

नक्षत्रविशेषात्फलविशेषमाह

**स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा ।**
**पुत्रं श्रैष्ठ्यं च सौभाग्यं समृद्धिं मुख्यतां शुभम् ॥ २६५ ॥**
**प्रवृत्तचक्रतां चैव वाणिज्यप्रभृतीनपि ।**
**अरोगित्वं यशो वीतशोकतां परमां गतिम् ॥ २६६ ॥**
**धनं वेदान् भिषक्सिद्धिं कुप्यं गा अप्यजाविकम् ।**
**अश्वानायुश्च विधिवद्यः श्राद्धं संप्रयच्छति ॥ २६७ ॥**
**कृत्तिकादिभरण्यन्तं स कामानाप्नुयादिमान् ।**
**आस्तिकः श्रद्दधानश्च व्यपेतमदमत्सरः ॥ २६८ ॥**

कृत्तिकामादिं कृत्वा भरण्यन्तं प्रतिनक्षत्रं यः श्राद्धं ददाति स यथाक्रमं स्वर्गादीनायुःपर्यन्तान्कामानवाप्नोति यद्यास्तिकः श्रद्दधानश्चेत् व्यपेतमदमत्सरो भवति। **आस्तिको** विश्वासवान्। **श्रद्धानः** आदरातिशययुक्तः । **व्यपेतमदमत्सरः** मदो गर्वः मत्सर ईर्षा ताभ्यां रहितः । **स्वर्गं** निर-

तिशयसुखं । **अपत्यम**विशेषेण । **ओजः** आत्मशक्त्यतिशयः । **शौर्यं** निर्भयत्वं । **क्षेत्रं** फलवत् । **बलं** शारीरं । **पुत्रो** गुणवान् । **श्रैष्ठ्यं** जातिषु । **सौभाग्यं** जनप्रियता । **समृद्धि**र्धनादेः । **मुख्यता** अग्र्यता । **शुभं** सामान्येन । **प्रवृत्तचक्रता** अप्रतिहताज्ञता । **वाणिज्यप्रभृतयः** वाणिज्यकृषिकुसीदगोरक्षाः । **अरोगित्वं** अनामययोगित्वं । **यशः** प्रख्यातिः । **वीतशोकता** इष्टवियोगादिजनितदुःखाभावः । **परमा गतिः** ब्रह्मलोकप्राप्तिः । **धनं** सुवर्णादि । **वेदा** ऋग्वेदादयः । **भिषक्सिद्धिः** औषधफलावाप्तिः । **कुप्यं** सुवर्णरजतव्यतिरिक्तं ताम्रादि । **गावः** प्रसिद्धाः । **अजाश्च अवयश्च अश्वाश्च** । **आयु**र्दीर्घजीवनम् ॥ २६५ ॥ २६६ ॥ २६७ ॥ २६८ ॥ ५

'मासवृद्ध्याऽभितृप्यन्ति दत्तैरिह पितामहा' इत्यनेन पितॄणां श्राद्धेन तृप्तिर्भवतीत्युक्तं तदनुपपन्नम् ; प्रातिस्विकशुभकर्मवशेन स्वर्गनरकादिगतानां मनुष्याणां पुत्रादिभिर्दत्तैरन्नपानादिभिस्तृप्त्यसंभवात्; संभवेऽपि स्वयमात्मनाऽप्यनीशाः कथं स्वर्गादिफलं प्रयच्छन्तीत्यत आह १०

**वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः ।**
**प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेन तर्पिताः ॥ २६९ ॥**
**आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।**
**प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः ॥ २७० ॥**

न ह्यत्र देवदत्तादय एव श्राद्धकर्मणि संप्रदानभूताः पित्रादिशब्दैरुच्यन्ते किंत्वधिष्ठातृवस्वादिदेवतासहिता एव । यथा देवदत्तादिशब्दैर्न शरीरमात्रं नाप्यात्ममात्रं किंतु शरीरविशिष्टा आत्मान उच्यन्ते, एवमधिष्ठातृदेवतासहिता एव देवदत्तादयः पित्रादिशब्दैरुच्यन्ते । अतश्चाधिष्ठातृदेवता वस्वादयः पुत्रादिभिर्दत्तेनान्नपानादिना तृप्ताः सन्तस्तानपि देवदत्तादींस्तर्पयन्ति कर्तॄंश्च पुत्रादीन्फलेन संयोजयन्ति । यथा माता गर्भपोषणायान्यदत्तेन दोहदान्नपानादिना स्वयमुपभुक्तेन तृप्ता सती स्वजठरगतमप्यपत्यं तर्पयति दोहदान्नादिप्रदायिनश्च प्रत्युपकारफलेन संयोजयति तद्वद्वसवो रुद्रा अदितिसुताः आदित्या एव ये पितरः पितृपितामहप्रपितामहशब्दवाच्याः न केवलं देवदत्तादय एव श्राद्धदेवताः श्राद्धकर्मणि संप्रदानभूताः किंतु मनुष्याणां पितॄन्देवदत्तादीन्स्वयं श्राद्धेन तर्पितास्तर्पयन्ति ज्ञानशक्त्यतिशययोगेन । किंच न केवलं पितॄंस्तर्पयन्ति अपि तु श्राद्धकारिभ्यः आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च 'प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः' । चकारात्तत्र तत्र शास्त्रोक्तमन्यदपि स्वयं प्रीता पितामहा वस्वादयः प्रयच्छन्तीति ॥ २६९ ॥ २७० ॥ १५ २० २५

इति श्राद्धप्रकरणम् ।

## अथ गणपतिकल्पप्रकरणम् ११

दृष्टादृष्टफलसाधनानि कर्माण्यभिहितान्यप्यभिधास्यन्ते च ; तेषां स्वरूपनिष्पत्तिः फलसाधनत्वं चाविघ्नेन भवतीत्यविघ्नार्थं कर्म विधास्यन् विघ्नस्य कारकज्ञापकहेतुनाह

**विनायकः कर्मविघ्नसिद्ध्यर्थं विनियोजितः ।**
**गणानामाधिपत्ये च रुद्रेण ब्रह्मणा तथा ॥ २७१ ॥**

**विनायकः कर्मविघ्नसिद्ध्यर्थ**मित्यादिनोभयविधहेतुपरिज्ञानाद्विघ्नस्य प्रागभावपरिपालनायोपस्थितस्य प्रध्वंसाय वा प्रेक्षापूर्वकारिणः प्रवर्तन्ते । रोगस्यैवोभयविधहेतुपरिज्ञानात् । **विनायको** विघ्नेश्वरः पुरुषार्थसाधनानां कर्मणां **विघ्नसिद्ध्यर्थं** स्वरूपफलसाधनत्वविघातसिद्धये **विनियोजितः** नियुक्तः । **रुद्रेण ब्रह्मण** । चकाराद्विष्णुना च । **गणानां** पुष्पदन्तप्रभृतीना**माधिपत्ये** स्वाम्ये च ॥ २७१ ॥

एवं विघ्नस्य कारकहेतुमुक्त्वा ज्ञापकहेतुप्रदर्शनार्थमाह

**तेनोपसृष्टो यस्तस्य लक्षणानि निबोधत ।**
**स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति ॥ २७२ ॥**
**काषायवाससश्चैव क्रव्यादांश्चाधिरोहति ।**
**अन्त्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठते ॥ २७३ ॥**
**व्रजन्नपि तथाऽऽत्मानं मन्यतेऽनुमतं परैः ।**

**तेन** विनायकेनो**पसृष्टो** गृहीतो **यस्तस्य लक्षणानि** ज्ञापकानि **निबोधत** जानीध्वं हे मुनयः । पुनर्मुनीनां प्रत्यवमर्शः शान्तिप्रकरणप्रारम्भार्थः । **स्वप्ने** स्वप्नावस्थायां **जलमत्यर्थमवगाहते** स्रोतसा ह्रियते निमज्जति वा । मुण्डितशिरसः पुरुषान् **पश्यति** । **काषायवाससो** रक्तनीलादिवस्त्रप्रावरणांश्च **क्रव्यादा** नाम मांसाशिनः पक्षिणो गृध्रादीन्मृगांश्च व्याघ्रादीन् **अधिरोहति** । तथाऽ**न्त्यजैश्चां**डालादिभिः **गर्दभैः** खरैरु**ष्ट्रैः** क्रमेलकैः सह परिवृत्तस्तिष्ठति । **व्रजन्** गच्छ**न्नात्मानं परैः** शत्रुभिः पृष्ठतो धावद्भिरनुगतमभिभूयमानं आत्मानं **मन्यते** ॥ २७२ ॥ २७३ ॥

एवं स्वप्नदर्शनान्युक्त्वा प्रत्यक्षलिङ्गान्याह

**विमना विफलारम्भः संसीदत्यनिमित्ततः ॥ २७४ ॥**
**तेनोपसृष्टो लभते न राज्यं राजनन्दनः ।**
**कुमारी च न भर्तारमपत्यं गर्भमङ्गना ॥ २७५ ॥**
**आचार्यत्वं श्रोत्रियश्च न शिष्योऽध्ययनं तथा ।**
**वणिग्लाभं न चाऽऽप्नोति कृषिं चापि कृषीबलः ॥ २७६ ॥**

**विमना** विक्षिप्तचित्तः । **विफलारम्भः** विफला आरम्भा यस्य स तथोक्तः न क्वचित्फल-मप्नोति । **संसीदत्यनिमित्ततः** । विना कारणेन दीनमनस्को भवति । **राजनन्दनो** राजकुले जातः श्रुतशौर्यधैर्यादिगुणयुक्तोऽपि **राज्यं न लभते** । **कुमारी** रूपलक्षणाभिजनादिसंपन्नाऽपीप्सितं **भर्तारं**, **अङ्गना** गर्भिण्य**पत्यं**, ऋतुमती **गर्भं** । अध्ययनतदर्थज्ञाने सत्यपि **आचार्यत्वं** श्रोत्रियः विनया-चारयुक्तोऽपि **शिष्योऽध्ययनं** श्रवणं वा । **न लभते** इति सर्वत्र संबध्यते । **वणिक्** वाणिज्योप-　५
जीवी तत्र कुशलोऽपि धान्यादिक्रयविक्रयादिषु **लाभं** । **कृषीवलः** कर्षकः तत्राभियुक्तोऽपि **कृषिफलं नाप्नोति** । एवं यो यया वृत्त्या जीवति स तत्र निष्फलारम्भश्चेत्तेनोपसृष्टो वेदितव्यः ॥ २७४ ॥ ॥ २७५ ॥ २७६ ॥

एवं कारकज्ञापकहेतूनभिधाय विघ्नोपशान्त्यर्थं कर्मविधातुमाह

**स्नपनं तस्य कर्तव्यं पुण्येऽह्नि विधिपूर्वकम् ।**　१०

**तस्य** विनायकोपसृष्टस्याऽनागतविनायकोपसर्गपरिहारार्थिनो वा **स्नपनम**भिषेचनं **कर्तव्यम्** । **पुण्ये** स्वानुकूलनक्षत्रादियुक्तेऽ**ह्नि** दिवसे न रात्रौ **विधिपूर्वकं** शास्त्रोक्तेतिकर्तव्यतासहितम् ।

**गौरसर्षपकल्केन साज्येनोत्सादितस्य च ॥ २७७ ॥**
**सर्वौषधैः सर्वगन्धैर्विलिप्तशिरसस्तथा ।**
**भद्रासनोपविष्टस्य स्वस्तिवाच्या द्विजाः शुभाः ॥ २७८ ॥**　१५

**गौरसर्षपकल्केन** सिद्धार्थपिष्टेन **साज्येन** घृतलोलीकृते**नोत्सादितस्यो**द्वर्तिताङ्गस्य । तथा **सर्वौषधैः** प्रियङ्गुनागकेसरादिभिः **सर्वगन्धै**श्चन्दनागुरुकस्तूरिकादिभि-**र्विलिप्तशिरसो** वक्ष्यमाण**भद्रासनोपविष्टस्य द्विजा** ब्राह्मणाः **शुभाः** श्रुताध्ययनवृत्तान्तसंपन्नाः शोभनाकृतयश्चत्वारोऽस्य स्वस्ति भवन्तो ब्रुवन्त्विति वाच्याः । अस्मिन्समये गृह्योक्तमार्गेण पुण्याहवाचनं कुर्यादित्यर्थः ॥ २७७ ॥ २७८ ॥　२०

स्नपनविधिमाह ।

**अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमात् ह्रदात् ।**
**मृत्तिकां रोचनां गन्धान्गुग्गुलं चाऽप्सु निक्षिपेत् ॥ २७९ ॥**
**या आहृता ह्येकवर्णैश्चतुर्भिः कलशैर्ह्रदात् ।**
**चर्मण्यानडुहे रक्ते स्थाप्यं भद्रासनं ततः ॥ २८० ॥**

किंच । अश्वस्थानगजस्थानवल्मीकसरित्संगमाशोष्यह्रदेभ्य आहृतां पञ्चविधां मृदं **गोरोचनां**　२५
**गन्धान्** चन्दनकुङ्कुमागुरुप्रभृतीन् **गुग्गुलं** च तास्वप्सु विनिक्षिपेत् । **या** आपः **आहृता एक-वर्णैश्चतुर्भिः** कुम्भैः शुभैरव्रणास्फुटिताकालकैः **ह्रदाद**शोष्यात् संगमाद्वा । तत**श्चानडुहे चर्मणि रक्ते** लोहितवर्णे उत्तरलोमनि प्राचीनग्रीवै**र्भद्रं** मनोरम**मासनं** श्रीपर्णीनिर्मितं **स्थाप्यं** । तत उक्तोदकमृत्तिकागन्धादिसहितांश्वतादिपल्लवोपशोभितान् नानास्रग्दामवेष्टितकण्ठान् चन्दनचर्चितान्

नवाहतवस्त्रविभूषितान् चतसृषु पूर्वादिदिक्षु स्थापयित्वा शुचौ विलिप्ते स्थण्डिले रचितपञ्चवर्णस्वास्तिके लोहितमानडुहं चर्मोत्तरलोम प्राचीनग्रीवमास्तीर्य तस्योपरि श्वेतवस्त्रप्रच्छादितमासनं स्थापयेदित्येतद्भद्रासनम् । एतस्मिन्नुपविष्टस्य स्वस्तिवाच्याः द्विजाः ॥ २७९ ॥ २८० ॥

५ 'सहस्राक्षं शतधारमृषिभिः पावनं कृतम् ।
तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते' ॥ २८१ ॥

किंच । स्वस्तिवाचनानन्तरं जीवत्पतिपुत्राभि रूपगुणशालिनीभिः सुवेषाभिः कृतमङ्गलं पूर्वदिग्देशावस्थितं कलशमादायानेन मन्त्रेणाऽभिषिञ्चेद्गुरुः ' **सहस्राक्ष**मनेकशक्तिकं **शतधारं** बहुप्रवाह**मृषिभिर्मन्वा**दिभिर्यदुदकं **पावनं** पवित्रं **कृतं** उत्पादितं **तेनो**दकेन **त्वां विनायको**पसृष्टं विनायकोपसर्गशान्तये **अभिषिञ्चामि, पावमान्य**श्वेता आप**स्त्वां पुनन्तु** ॥ २८१ ॥

१० तदनन्तरं दक्षिणदेशावस्थितं द्वितीयं कलशमादायानेन मन्त्रेणाभिषिञ्चेत्

'भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः ।
भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः' ॥ २८२ ॥

**भगं** कल्याणं **ते** तुभ्यं **वरुणो** राजा **भगं सूर्यो** भगं **बृहस्पतिः** भग**मिन्द्रश्च वायुश्च भगं सप्तर्षयश्च ददु**रिति ॥ २८२ ॥

१५ ततस्तृतीयं कलशमादायानेन मन्त्रेणाभिषिञ्चेत्

'यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्धनि ।
ललाटे कर्णयोरक्ष्णोरापस्तद् घ्नन्तु सर्वदा' ॥ २८३ ॥

**ते** तव **केशेषु दौर्भाग्यं** अकल्याणं **सीमन्ते मूर्धनि च ललाटे कर्णयोरक्ष्णोश्च** तत्सर्वमापोदेव्यो **घ्नन्तु** उपशमयन्तु **सर्वदा** ॥ २८३ ॥

२० ततश्चतुर्थं कलशमादाय पूर्वोक्तैस्त्रिभिर्मन्त्रैरभिषिञ्चेत् । 'सर्वमन्त्रैश्चतुर्थमिति' मन्त्रलिङ्गात्

'स्नातस्य सार्षपं तैलं स्रुवेणौदुम्बरेण तु ।
जुहुयान्मूर्धनि कुशान्सव्येन परिगृह्य तु ॥ २८४ ॥

उक्तेन प्रकारेण कृताभिषेकस्य मूर्धनि सव्यपाणिगृहीतकुशान्तर्हिते सार्षपं तैलं उदुम्बरवृक्षोद्भवेन स्रुवेण वक्ष्यमाणैर्मन्त्रैर्जुहुयादाचार्यः ॥ २८४ ॥

२५ मितश्च संमितश्चैव तथा शालकटङ्कटौ ।

अनन्तरं किं कुर्यादित्याह

कूष्माण्डो राजपुत्रश्चेत्यन्ते स्वाहासमन्वितैः ॥ २८५ ॥
नामभिर्बलिमन्त्रैश्च नमस्कारसमन्वितैः ।
दद्याच्चतुष्पथे शूर्पे कुशानास्तीर्य सर्वतः ॥ २८६ ॥

**कृताकृतांस्तन्दुलांश्च पललौदनमेव च ।**
**मत्स्यान्पक्कांस्तथैवामान्मांसमेतावदेव तु ॥ २८७ ॥**
**पुष्पं चित्रं सुगन्धं च सुरां च त्रिविधामपि ।**
**मूलकं पूरिकापूतं तथैवोण्डेरकस्रजः ॥ २८८ ॥**
**दध्यन्नं पायसं चैव गुडपिष्टं समोदकम् ।** ५
**एतान्सर्वान्समाहृत्य भूमौ कृत्वा ततः शिरः ॥ २८९ ॥**
**विनायकस्य जननीमुपतिष्ठेत्ततोऽम्बिकाम् ।**

मितसंमितादिभिर्विनायकस्य नामभिः स्वाहाकारान्तैः प्रणवादिभिर्जुहुयादिति गतेन संबन्धः । स्वाहाकारयोगाच्चतुर्थी विभक्तिः । अतश्च ॐ मिताय स्वाहा ॐ संमिताय स्वाहा ॐ शालाय स्वाहा ॐ कटङ्कटाय स्वाहा ॐ कूष्माण्डाय स्वाहा ॐ राजपुत्राय स्वाहेति षट् मन्त्रा भवन्ति । अनन्तरं लौकिकेऽग्नौ १० स्थालीपाकविधिना चरुं श्रपयित्वा एतैरेव षड्भिर्मन्त्रैस्तस्मिन्नेवाग्नौ हुत्वा तच्छेषं बलिमन्त्रैरिन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशानब्रह्मानन्तानां नामभिश्चतुर्थ्यन्तैर्नमोन्वितैस्तेभ्यो बलिं दद्यात् ।

कृताकृताद्युपहारद्रव्यजातं विनायकस्योपाहृत्य सन्निधानाज्जनन्याश्च शिरसा भूमिं गत्वा । 'तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्ती प्रचोदयात्' । इत्यनेन मन्त्रेण विनायकं । 'सुभगायै विद्महे काममालिन्यै धीमहि । तन्नो गौरी प्रचोदयात्' । इत्यनेनाम्बिकां च नम- १५ स्कुर्यात् । तत उपहारशेषमास्तीर्णकुशे शूर्पे निधाय चतुष्पथे निदध्यात् । 'बलिं गृह्णन्त्विमे देवा आदित्या वसवस्तथा । मरुतश्चाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः । असुरा यातुधानाश्च पिशाचोरगमातरः । शाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः । जृम्भकाः सिद्धगन्धर्वा मायाविद्याधरा नराः । दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः । जगतां शान्तिकर्तारो ब्रह्माद्याश्च महर्षयः । मा विघ्नं मा च मे पापं मा सन्तु परिपन्थिनः । सौम्या भवन्तु तृप्ताश्च भूतप्रेताः सुखावहाः' इत्ये- २० तैर्मन्त्रैः **कृताकृताः** सकृदवहतास्**तन्दुलाः पललं** तिलपिष्टं तन्मिश्र ओदनः **पललौदनः** मत्स्याः पक्का अपक्काश्च मांसमेतावदेव च **पक्कमपक्कं** च **पुष्पं चित्रं** रक्तपीतादिनानावर्णं चन्दनादिसुगन्धिद्रव्यं । **सुरा** त्रिविधा गौडी माध्वी पैष्टी च । **मूलकः** मूलककन्दाकारो भक्ष्यविशेषः । **पूरिका** प्रसिद्धा । **अपूपः** स्नेहपक्को गोधूमविकारः **उण्डेरकस्रजः उण्डेरकाः** पिष्टादिमय्यस्ताः प्रोताः स्रजः **दध्यन्नं** दधिमिश्रमन्नं **पायसं** गुडापिष्टं गुडामिश्रं शाल्यादिपिष्टं **मोदकाः लड्डुकाः** २५ अनन्तरं विनायकं तज्जननीमम्बिकां वक्ष्यमाणमन्त्रेणोपतिष्ठेत् ॥२८५॥२८६॥२८७॥२८८॥२८९॥

किं कृत्वेत्याह ।

**दूर्वासर्षपपुष्पाणां दत्वाऽर्घ्यं पूर्णमञ्जलिम् ॥ २९० ॥**

स कुसुमोदकेनार्घ्यं दत्वा दूर्वासर्षपपुष्पाणां पूर्णमञ्जलिं दत्वोपतिष्ठेदिति गतेनान्वयः ॥२९०॥

उपस्थानमन्त्रमाह ३०

**'रूपं देहि यशो देहि भगं भवति देहि मे ।**
**पुत्रान्देहि धनं देहि सर्वकामांश्च देहि मे' ॥ २९१ ॥**

**ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ।**
**ब्राह्मणान्भोजयेद्दद्याद्वस्त्रयुग्मं गुरोरपि ॥ २९२ ॥**

विनायकोपस्थाने भगवान्नित्यूहः । **ततो**ऽभिषेकानन्तरं **यजमानः** शुक्लाम्बरधरः शुक्लमाल्यानुलेपनो **ब्राह्मणान्भोजयेत्** । यथाशक्ति **गुरवे** श्रुताध्ययनवृत्तसंपन्नाय विनायकस्नपनविधिज्ञाय ५ **वस्त्रयुग्मं दद्यात्** । अपिशब्दाद्यथाशक्ति दक्षिणां विनायकोद्देशेन ब्राह्मणेभ्यश्च । तत्रायं प्रयोगक्रमः । चतुर्भिर्ब्राह्मणैः सार्धमुक्तलक्षणो गुरुर्मन्त्रज्ञो भद्रासनरचनानन्तरं तत्सन्निधौ विनायकं तज्जननीं चोक्तमन्त्राभ्यां गन्धपुष्पादिभिः समभ्यर्च्य चरुं श्रपयित्वा भद्रासनोपविष्टस्य यजमानस्य पुण्याहवाचनं कृत्वा चतुर्भिः कलशैरभिषिच्य सार्षपं तैलं शिरसि हुत्वा चरुहोमं विधायाभिषेकशालायां चतुर्दिक्षु इन्द्रादिलोकपालेभ्यो बलिं दद्यात् । यजमानस्तु स्नानानन्तरं शुक्लमाल्याम्बरधरो गुरुणा १० सहितो विनायकाम्बिकाभ्यामुपहारं दत्वा शिरसा भूमिं गत्वा कुसुमोदकेनार्घ्यं दत्वा दूर्वासर्षपपुष्पाञ्जलिं च दत्वा विनायकमम्बिकां चोपतिष्ठेत् । गुरुरुपहारशेषं शूर्पे कृत्वा शिरसा भूमिं गत्वा चत्वरे निदध्यात् । अनन्तरं वस्त्रयुग्मं दक्षिणां ब्राह्मणभोजनं च दद्यादिति ॥ २९१ ॥ २९२ ॥

इति विनायकस्नपनविधिः

अस्यैव विनायकस्नपनस्य उक्तोपसंहारेण संयोगान्तरं दर्शयितुमाह

१५ **एवं विनायकं पूज्य ग्रहांश्चैव विधानतः ।**
**कर्मणां फलमाप्नोति श्रियं चाप्नोत्यनुत्तमाम् ॥ २९३ ॥**

**एव**मुक्तेन प्रकारेण **विनायकं** संपूज्य **कर्मणां फलम**विघ्नेनाप्नोतीत्युक्तोपसंहारः । संयोगान्तरमाह । **श्रियं** चोत्कृष्टतमामा**प्नोतीति** । श्रीकामश्चानेनैव विधानेन विनायकं पूजयेदित्यर्थः । आदित्यादिग्रहपीडाशान्तिकामस्य लक्ष्म्यादिकामस्य च ग्रहपूजादिकल्पं विधास्यन् ग्रहपूजामुपक्षि- २० पति । **ग्रहांश्चैव विधायत इति** । ग्रहानादित्यादीन् वक्ष्यमाणेन विधिना संपूज्य कर्मणां सिद्धिमाप्नोति श्रियं चाप्नोति ॥ २९३ ॥

नित्यकाम्यसंयोगानाह

**आदित्यस्य सदा पूजां तिलकं स्वामिनस्तथा ।**
**महागणपतेश्चैव कुर्वन्सिद्धिमवाप्नुयात् ॥ २९४ ॥**

२५ **आदित्यस्य** भगवतः **सदा** प्रतिदिवसं रक्तचन्दनकुङ्कुमकुसुमादिभिः **पूजां** कुर्वन् स्कन्दस्य **महागणपतेश्च** नित्यं पूजां **कुर्वन् सिद्धिं** मोक्षमात्मज्ञानद्वारेण प्राप्नोतीति नित्यसंयोगः । आदित्यस्कन्दगणपतीनामन्यतमस्य सर्वेषां वा तिलकं स्वर्णादिनिर्मितं वा कुर्वन् सिद्धिमभिलषितामाप्नोति । तथा चक्षुषी चेति काम्यसंयोगः ॥ २९४ ॥

इति महागणपतिकल्पः ।

# अथ ग्रहशान्तिप्रकरणम् १२

'ग्रहांश्चैव विधानतः । कर्मणां फलमाप्नोति श्रियं चाप्नोत्यनुत्तमामि'त्यनेन ग्रहपूजयाकर्मणामविघ्नेन फलसिद्धिः श्रीश्च फलमित्युक्तमिदानीं फलान्तराण्याह

**श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत् ।**
**वृष्ट्यायुःपुष्टिकामो वा तथैवाऽभिचरन्नपि ॥ २९५ ॥** ५

**श्रीकाम** इति पूर्वोक्तस्यानुवादः । **शान्तिकाम** आपदुपशान्तिकामः । सस्यादिवृद्ध्यर्थं प्रवर्षणं **वृष्टिः** । **आयुर**पमृत्युजयेन दीर्घकालजीवनं । **पुष्टिर**नवयशरीरत्वं । एताः कामयत इति **वृष्ट्यायुःपुष्टिकामः** । एते श्रीकामादयो **ग्रहयज्ञं** ग्रहपूजां समाचरेयुः । तथा**ऽभिचरन्नपि** अदृष्टोपायेन परपीडा **अभिचारः** । तत्कामश्च ग्रहयज्ञं समाचरेत् ॥ २९५ ॥

ग्रहानाह १०

**सूर्यः सोमो महीपुत्रः सोमपुत्रो बृहस्पतिः ।**
**शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः ॥ २९६ ॥**

एते सूर्यादयो नवग्रहाः ॥ २९६ ॥

ग्रहाः पूज्या इत्युक्तं किं कृत्वेत्याह

**ताम्रकात्स्फाटिकाद्रक्तचन्दनात्स्वर्णकादुभौ ।** १५
**राजतादयसः सीसात्कांस्यात्कार्या ग्रहाः क्रमात् ॥ २९७ ॥**
**स्ववर्णैर्वा पटे लेख्या गन्धैर्मण्डलकेषु वा ।**
**यथावर्णं प्रदेयानि वासांसि कुसुमानि च ॥ २९८ ॥**
**गन्धश्च बलयश्चैव धूपो देयश्च गुग्गुलुः ।**
**कर्तव्या मन्त्रवन्तश्च चरवः प्रतिदैवतम् ॥ २९९ ॥** २०

सूर्यादीनां मूर्तयस्ताम्रादिभिर्यथाक्रमं कार्याः । तदलाभे स्ववर्णैर्वर्णकैः पटे लेख्याः मण्डलकेषु वा । गन्धैः रक्तचन्दनादिभिर्यथावर्णेन लेख्या इत्यन्वयः ।

द्विभुजत्वादिविशेषस्तु **मत्स्यपुराणोक्तो** द्रष्टव्यः ।

यथा । "पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः । सप्ताश्वरथसंस्थश्च द्विभुजः स्यात्सदा **रविः** ।"

" श्वेतः श्वेताम्बरधरो दशाश्वः श्वेतभूषणः । गदापाणिर्द्विबाहुश्च कर्तव्यो वरदः **शशी** । " २५

" रक्तमाल्याम्बरधरः शक्तिशूलगदाधरः । चतुर्भुजो मेषगमो वरदः स्याद्**धरासुतः** । "

" पीतमाल्याम्बरधरः कर्णिकारसमद्युतिः । खड्गचर्मगदापाणिः सिंहस्थो वरदो **बुधः** । "

"**देवदैत्यगुरू** तद्वत्पीतश्वेतौ चतुर्भुजौ। दण्डिनौ वरदौ कार्यौ साक्षात्सूत्रकमण्डलू।"
"इन्द्रनीलद्युतिः शूली वरदो गृध्रवाहनः। बाणबाणासनधरः कर्तव्योऽ**र्कसुतः** सदा।"
"करालवदनः खड्गचर्मशूली वरप्रदः। नीलः सिंहासनस्थश्च **राहुरत्र** प्रशस्यते।"
"धूम्रा द्विबाहवः सर्वे गदिनो विकृताननाः। गृध्रासनगता नित्यं **केतवः** स्युर्वरप्रदाः।"
५ "सर्वे किरीटिनः कार्या ग्रहा लोकहितावहाः। स्वाङ्गुलेनोच्छ्रिताः सर्वे शतमष्टोत्तरं सदेति।

**एतेषां** स्थापनदेशश्च तत्रैवोक्तः।

'मध्ये तु भास्करं विद्याल्लोहितं दक्षिणेन तु। उत्तरेण गुरुं विद्याद्बुधं पूर्वोत्तरेण तु।
पूर्वेण भार्गवं विद्यात्सोमं दक्षिणपूर्वके। पश्चिमेन शनिं विद्याद्राहुं पश्चिमदक्षिणे।
पश्चिमोत्तरतः केतुं स्थाप्या वै शुक्लतण्डुलैरिति'।

१० पूजाविधिमाह। **यथावर्णं** यस्य ग्रहस्य यो वर्णः तद्वर्णानि वस्त्रगन्धपुष्पाणि देयानि। **बलयश्च धूपश्च** सर्वेभ्यो गुग्गुलुर्देयः। चरवश्च प्रतिदैवतं अग्निप्रतिष्ठापनान्वाधानादिपूर्वकं चतुरश्चतुरो मुष्टीन्निर्वप'ममुष्मै त्वा जुष्टं निर्वपामी'त्यादिविधिना कार्याः। अनन्तरं सुसमिद्धेऽग्नाविध्माधानाद्याधारान्तं कर्म कृत्वा आदित्याद्युद्देशेन यथाक्रमं वक्ष्यमाणमन्त्रैर्वक्ष्यमाणाः समिधो वक्ष्यमाणप्रकारेण हुत्वा चरवो होतव्या॥ २९७॥ २९८॥ २९९॥

१५ मन्त्रानाह

**'आकृष्णेन' 'इमं देवा' 'अग्निर्मूर्धा दिवः ककुत्'।**
**'उद्बुध्यस्वेति' च ऋचो यथासंख्यं प्रकीर्तिताः॥ ३००॥**
**'बृहस्पते अतियदर्य' स्तथैवा'न्नात्परिस्रुतः'।**
**'शन्नोदेवी'स्तथा 'काण्डा'त्केतुं कृण्वन्नि 'मां'स्तथा॥ ३०१॥**

२० आकृष्णेन रजसा वर्तमान इत्यादयो नव मन्त्राः यथाक्रममादित्यादीनां वेदितव्याः॥३००॥३०१

इदानीं समिध आह

**अर्कः पलाशः खदिर अपामार्गोऽथ पिप्पलः।**
**औदुम्बरः शमी दूर्वा कुशाश्च समिधः क्रमात् ३०२॥**

अर्कपलाशादयो यथाक्रमं सूर्यादीनां समिधो भवन्ति। ताश्च सार्द्राः अभग्नाः सत्वचः प्रादेश-
२५ मात्राः कर्तव्याः॥ ३०२॥

**एकैकस्य त्वष्टशतमष्टाविंशतिरेव च।**
**होतव्या मधुसर्पिर्भ्यां दध्ना क्षीरेण वा युताः॥ ३०३॥**

**किंच**। आदित्यादीनामेकैकस्याष्टशतसंख्या अष्टाविंशतिसंख्या वा यथासंभवं मधुना सर्पिषा दध्ना क्षीरेण वा युता आक्ताः अर्कादिसमिधो होतव्याः॥ ३०३॥

इदानीं भोजनान्याह

**गुडौदनं पायसं च हविष्यं क्षीरषाष्टिकम् ।**
**दध्योदनं हविश्चूर्णं मांसं चित्रान्नमेव च ॥ ३०४ ॥**
**दद्याद्ग्रहक्रमादेव द्विजेभ्यो भोजनं द्विजः ।**
**शक्तितो वा यथालाभं सत्कृत्य विधिपूर्वकम् ॥ ३०५ ॥** ५

गुडमिश्र ओदनो **गुडौदनः**। **पायसं हविष्यं** मुन्यन्नादि। **क्षीरषाष्टिकं** क्षीरमिश्रः षाष्टिकौदनः । दध्ना मिश्र ओदनो **दध्योदनः** । **हवि**र्घृतौदनः । **चूर्णं** तिलचूर्णमिश्र ओदनः । **मांसं** भक्ष्यमांसमिश्र ओदनः । **चित्रौदनः** नानावर्णौदनः । एतानि गुडौदनादीनि यथाक्रममादित्याद्युद्देशेन भोजनार्थं **द्विजेभ्यो** ब्राह्मणेभ्यो दद्यात् । ब्राह्मणसंख्या यथाविभवं द्रष्टव्या । गुडौदनाद्यभावे तु यथालाभमोदनादि पादप्रक्षालनादिविधिपूर्वकं सत्कृत्य संमानपुरःसरं दद्यात् ॥ ३०४ ॥ ३०५ ॥ १०

दक्षिणामाह

**धेनुः शंखस्तथाऽनड्वान्हेम वासो हयः क्रमात् ।**
**कृष्णा गौरायसं छाग एता वै दक्षिणाः स्मृताः ॥ ३०६ ॥**

**धेनुः** दोग्ध्री । **शंखः** प्रसिद्धः । **अनड्वान्**भारसहो बलीवर्दः । **हेम** सुवर्णं । **वासः** पीतं । **हयः** पाण्डुरः । **कृष्णा गौः** । **आयसं** शस्त्रादि । **छागः** प्रसिद्धः । **एता** धेन्वाद्यो यथाक्रम- १५ मादित्याद्युद्देशेन ब्राह्मणानां **दक्षिणाः स्मृता** उक्ता **मन्वा**दिभिः । एतच्च संभवे सति । असंभवे तु यथालाभं शक्तितोऽन्यदेव यत्किंचिद्देयम् ॥ ३०६ ॥

शान्तिकामेनाविशेषेण सर्वे ग्रहाः पूजयितव्या इत्युक्तं । तत्र विशेषमाह

**यस्य यस्य यदा दुःस्थः स तं यत्नेन पूजयेत् ।**
**ब्रह्मणैषां वरो ' दत्तः पूजिताः पूजयिष्यथ ' ॥ ३०७ ॥** २०

**यस्य** पुरुषस्य यो ग्रहो **यदा दुष्टो**ऽष्टमादिस्थानस्थितः **स तं** ग्रहं तदा **यत्नेन** विशेषेण **पूजयेत्** । यस्मादेषां ग्रहाणां **ब्रह्मणा** पूर्वं **वरो दत्तः** '**पूजिताः** सन्तो यूयमिष्टप्रापणेनानिष्टनिरसनेन च पूजयितारं **पूजयिष्यथेति**' ॥ ३०७ ॥

अविशेषेण द्विजानधिकृत्य शान्तिकपौष्टिकादीनि कर्माण्युक्तान्यनन्तरमभिषिक्तस्य राज्ञो विशेषणाधिकार इत्याह २५

**ग्रहाधीना नरेन्द्राणामुच्छ्रायाः पतनानि च ।**
**भावाभावौ च जगतस्तस्मात्पूज्यतमा ग्रहाः ॥ ३०८ ॥**

**नरेन्द्राणाम**भिषिक्तक्षत्रियाणां **ग्रहाः पूज्यतमाः** । अथ[1] चान्येषामपि पूज्या इति गम्यते । उभयत्र कारणमाह । प्राणिनामभ्युदयविनिपाता **ग्रहाधीनाः** यस्मात्तदधिकारिभिः पूज्याः । किंच । जगतः स्थावरजङ्गमात्मकस्य भावाभावावुत्पत्तिनिरोधौ[2] ग्रहाधीनौ । तत्र यद्येते पूजिताः तदा स्वकाल एवो- ३०

१ प—अतः. २ प—विनाशौ.

तयोस्तिनिरोधौ भवतोऽन्यथा उत्पत्तिसमये नोत्पादोऽकाले निरोधश्च । जगदीश्वरत्वाच्च नरेन्द्राणां तद्योगक्षेमकारिणां पूज्यतमा ग्रहा इति तेषां विशेषेण शान्तिकादिष्वधिकारः । तथा च **गौतमेन** (अ. ११ सू. १) । ' राजा सर्वस्येष्टे ब्राह्मणवर्ज्यमिति ' राजानमधिकृत्य ' वर्णानाश्रमांश्च न्यायतोऽभिरक्षेच्च ततश्चैतान्स्वधर्मे स्थापयेदि'त्यादीन् (अ. ११ सू. ९।१०) कांश्चिद्धर्मानुक्त्वा, 'यानि च दैवोत्पातचिन्तकाः प्रब्रूयुस्तान्याद्रियेत । तदधीनमपि ह्येके योगक्षेमं प्रतिजानते इति '(अ. ११सू. १५।१६)। शान्तिकपौष्टिकाद्यनुष्ठानेहतुमभिधाय ' शान्तिकपुण्याहस्वस्त्ययनायुष्यमङ्गलसंयुक्तान्याभ्युदयिकानि विद्वेषिणः स्तम्भनाभिचारद्विषद्वृद्धियुक्तानि च शालाग्नौ कुर्यादिति ' (अ.११ सू. १७) शान्तिकादीनि दर्शितानि॥३०८॥

इति ग्रहशान्तिप्रकरणम् ।

---

## अथ राजधर्मप्रकरणम् १३

१० साधारणान्गृहस्थधर्मानुक्त्वेदानीं राज्याभिषेकादिगुणयुक्तस्य गृहस्थस्य विशेषधर्मानाह

**महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेवकः ।**
**विनीतः सत्वसंपन्नः कुलीनः सत्यवाक्शुचिः ॥ ३०९ ॥**
**अदीर्घसूत्रः स्मृतिमानक्षुद्रोऽपरुषस्तथा ।**
**धार्मिकोऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित् ॥ ३१० ॥**
१५ **स्वरन्ध्रगोप्ताऽऽन्वीक्षिक्यां दण्डनीत्यां तथैव च ।**
**विनीतस्त्वथ वार्तायां त्रय्यां चैव नराधिपः ॥ ३११ ॥**

अथ राजधर्माः ।

पुरुषार्थसाधनकर्मारम्भाध्यवसाय उत्साहः महानुत्साहो यस्यासौ **महोत्साहः** । बहुदेयार्थदर्शी **स्थूललक्षः** । परकृतोपकारापकारौ न विस्मरतीति **कृतज्ञः** । तपोज्ञानादिवृद्धानां **सेवकः** । विनयेन युक्तो **विनीतः** । विनयशब्देनाविरुद्धः पूर्वोक्त-
२० स्नातकधर्मकलाप उच्यते । ' न संशयं प्रपद्येत नाकस्मादप्रियं वदेदि'त्यादिनोक्तेः । **सत्वसंपन्नः** संपदापदोर्हर्षविषादरहितः । मातृतः पितृतश्चाभिजनवान्**कुलीनः** । **सत्यवाक्**सत्यवचनशीलः । **शुचिर्बाह्या**भ्यन्तरशौचयुक्तः । अवश्यकार्याणां कर्मणामारम्भे प्रारब्धानां च समापने यो न विलम्बतेऽसाव**दीर्घसूत्रः** । अधिगतार्थाविस्मरणशीलः **स्मृतिमान्** । **अक्षुद्रो**ऽसद्गुणद्वेषी । **अपरुषः** परदोषाकीर्तनः । **धार्मिकः** वर्णाश्रमधर्मान्वितः । न विद्यते व्यसनानि यस्यासौ **अव्यसनः** ।

व्यसनानि चाष्टादश । यथाह **मनुः** ( अ. ७ श्लो. ४७।४८ ) । ' मृगयाऽक्षा दिवा स्वप्नः
२५ परिवादः स्त्रियो मदः । तौर्यत्रिकं वृथाट्याः कामजो दशको गणः । पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थदूषणम् । वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टक '' इति । तत्र च सप्त कष्टतमानि **यथाह मनुः** ( अ. ७ श्लो. ५०।५१ ) । 'पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् । एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे । दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे । क्रोधजेऽपि गणे विद्यात्कष्टमेतत्त्रिकं सदेति' ।

---

१ ङ-संयमन. २ उपरि तेन १३२ श्लोके ३८ पृष्ठे. ३ वृथाट्या च इत्यपरः पाठः=वृथाभ्रमणं. ४ दूषणे इत्यपरः पाठः.

**प्राज्ञो** गम्भीरार्थावधारणक्षमः। **शूरो** निर्भयः। **रहस्यवित्** गोपनीयार्थगोपनचतुरः। **स्वरन्ध्रगोप्ता** स्वस्य सप्तसु राज्याङ्गेषु यत्परप्रवेशद्वारशैथिल्यं तत्स्वरन्ध्रं तस्य गोप्ता प्रच्छादयिता। **आन्वीक्षिक्या**मात्मविद्यायां **दण्डनीत्याम**र्थयोगक्षेमोपयोगिन्यां **वार्तायां** कृषिवाणिज्यपशुपालनरूपायां धनोपचयहेतुभूतायां **त्रय्यां** ऋग्यजुःसाममय्यां च **विनीतः** तत्तद्भिज्ञैः प्रावीण्यं नीतः। यथाह **मनुः** (अ. ७ श्लो. ४३)। 'त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च तद्विदः। आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च लोकत' इति। **नराधिपो** राज्याभिषिक्तः **स्यादि**ति सर्वत्र संबन्धः॥ ३०९॥ ३१०॥ ३११॥ ५

एवमभिषेकयुक्तस्यान्तरङ्गान्धर्मानभिधायेदानीं बहिरङ्गानाह

**स मन्त्रिणः प्रकुर्वीत प्राज्ञान्मौलान् स्थिराञ्शुचीन्।**
**तैः सार्धं चिन्तयेद्राज्यं विप्रेणाथ ततः स्वयम्॥ ३१२॥** १०

महोत्साहादिगुणैर्युक्तो राजा **मन्त्रिणः कुर्वीत**। कथंभूतान्? **प्राज्ञान्** हिताहितविवेककुशलान्। **मौलान्**स्ववंशपरम्परायातान्। **स्थिरान्**महत्यपि हर्षविषादस्थाने विकाररहितान्। **शुचीन्**धर्मार्थकामभयोपधाशुद्धान्। ते च सप्ताष्टौ वा कार्याः। यथाह **मनुः** (अ. ७ श्लो. ५४) 'मौलाञ्शास्त्रविदः शूरांल्लब्धलक्षान्कुलोद्भवान्। सचिवान्सप्त चाष्टौ वा कुर्वीत सुपरीक्षितानिति'।

एवं मन्त्रिणः पूर्वं कृत्वा **तैः सार्धं राज्यं** संधिविग्रहादिलक्षणं कार्यं **चिंतयेत्** समस्तैर्व्यस्तैश्च। अनन्तरं तेषामभिप्रायं ज्ञात्वा सकलशास्त्रार्थविचारकुशलेन ब्राह्मणेन पुरोहितेन सह कार्यं विचिन्त्य **ततः स्वयं** बुद्ध्या कार्यं **चिन्तयेत्**॥ ३१२॥ १५

कीदृशं पुरोहितं कुर्यादित्याह

**पुरोहितं प्रकुर्वीत दैवज्ञमुदितोदितम्।**
**दण्डनीत्यां च कुशलमथर्वाङ्गिरसे तथा॥ ३१३॥** २०

**पुरोहितं** च सर्वेषु दृष्टादृष्टार्थेषु कर्मसु पुरतो हितं दानमानसत्कारैरात्मसंबद्धं कुर्यात्। कथंभूतं? **दैवज्ञं** ग्रहोत्पाततच्छमनादेर्वेदितारं। **उदितोदितं** विद्याभिजनानुष्ठानादिभिरुदितैः शास्त्रोक्तैः उदितं समृद्धम्। **दण्डनीत्यामर्थशास्त्रे कुशलम्। अथर्वाङ्गिरसे** च शान्त्यादिकर्मणि॥ ३१३॥

**श्रौतस्मार्तक्रियाहेतोर्वृणुयादेव चार्त्विजः।**
**यज्ञांश्चैव प्रकुर्वीत विधिवद्भूरिदक्षिणान्॥ ३१४॥** २५

श्रौताग्निहोत्रादिस्मार्तोपासनादिक्रियानुष्ठानसिद्ध्यर्थं **ऋत्विजो वृणुयात्। यज्ञांश्च** राजसूयादीन्**विधिव**द्यथाविधानं **भूरिदक्षिणान्**बहुदक्षिणानेव कुर्यात्॥ ३१४॥

**भोगांश्च दत्वा विप्रेभ्यो वसूनि विविधानि च।**
**अक्षयोऽयं निधी राज्ञां यद्विप्रेषूपपादितम्॥ ३१५॥**

१ समाख्याया.

किंच । ब्राह्मणेभ्यो **भोगान्** सुखानि तत्साधनदानद्वारेण दद्यात् । **वसूनि च** सुवर्णरूप्य-भूम्यादीनि **विविधानि** नानाप्रकाराणि । यस्मादेव **राज्ञां अक्षयो निधिः** शेवधिः यद्ब्राह्मणेभ्यो **दीयते** । साधारणधर्मत्वेन दानप्राप्तौ सत्यां राज्ञां दानप्राधान्यप्रतिपादनार्थं पुनर्वचनम् ॥ ३१५ ॥

**अस्कन्नमव्यथं चैव प्रायश्चित्तैरदूषितम् ।**
**अग्नेः सकशाद्विप्राग्नौ हुतं श्रेष्ठमिहोच्यते ॥ ३१६ ॥**

किंच । **अग्नेः सकाशाद**ग्निसाध्यात् भूरिदक्षिणात् राजसूयादेरपि **विप्राग्नौ हुतं श्रेष्ठमिहोच्यते** । यत एत**दस्कन्नं** क्षरणरहितं **अव्यथं** पशुहिंसादिरहितं **प्रायश्चित्तैरदूषितं** प्राय-श्चित्तापादकरहितम् ॥ ३१६ ॥

'अमूनि विप्रेभ्यो दद्याद्' इत्युक्तं; कया परिपाट्या दद्यादित्याह

**अलब्धमीहेद्धर्मेण लब्धं यत्नेन पालयेत् ।**
**पालितं वर्धयेन्नीत्या वृद्धं पात्रेषु निक्षिपेत् ॥ ३१७ ॥**

अलब्धलाभाय धर्मशास्त्रानुसारेण यतेत । **यत्नेन लब्धं** तत्परि**पालयेत्** । स्वयमवेक्षया रक्षेत् । पालितं तत्परतया **नीत्या** वणिक्पथादिकया वृद्धिं नयेत् । **वृद्धं च पात्रेषु** विविधेषु धर्मा-र्थकामपात्रेषु । **निक्षिपेत्** दद्यात् ॥ ३१७ ॥

पात्रे निक्षिप्य किं कुर्यादित्याह

**दत्वा भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेत् ।**
**आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः ॥ ३१८ ॥**

लेख्यकरणम् ।

यथोक्तविधिना **भूमिं दत्वा** स्वत्वनिवृत्तिं **कृत्वा निबन्धं वा** 'एकस्य भाण्डभरकस्येयंतो रूपकाः' 'एकस्य पर्णभरस्येयन्ति पर्णानीति' वा निबन्धं कृत्वा **लेख्यं कारयेत्** । किमर्थम् ? आगामिनः एष्यन्तो ये भद्राः साधवो नृपतयो भूपास्ते-षामनेन दत्तमनेन प्रतिगृहीतमिति परिज्ञानाय । **पार्थिवो** भूपतिः । अनेन भूपतेरेव भूमिदाने निबन्ध-दाने वाऽधिकारो न भोगपतेरिति दर्शितम् ॥ ३१८ ॥

'लेख्यं कारयेद्' इत्युक्तं; कथं कारयेदित्याह

**पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम् ।**
**अभिलेख्यात्मनो वंश्यानात्मानं च महीपतिः ॥ ३१९ ॥**
**प्रतिग्रहपरीमाणं दानच्छेदोपवर्णनम् ।**
**स्वहस्तकालसंपन्नं शासनं कारयेत्स्थिरम् ॥ ३२० ॥**

पटताम्रपट्टादिकरणप्रकारः ।

कार्पासिके **पटे ताम्रपट्टे** फलके वा **आत्मनो वंश्यान्प्र**पितामहपितामहपितॄन् । बहुवचन-स्यार्थवत्त्वाय वंशवीर्यश्रुतादिगुणोपवर्णनपूर्वकम**भिलेख्यात्मानं च**शब्दात्प्र-तिग्रहीतारं प्रतिग्रहपरिमाणं दानच्छेदोपवर्णनं **चाभिलेख्य** । प्रतिगृह्यत इति **प्रतिग्रहो** निबन्धस्तस्य रूपकादि**परिमाणं** । दीयते इति दानं क्षेत्रादि तस्य छेदः छिद्यते अने-

नेति छेदः नद्यावाटौ निवर्तनं तत्परिमाणं च तस्यैोपवर्णनं अमुकनद्या दक्षिणतोऽयं ग्रामः क्षेत्रं वा, पूर्वतोऽमुकग्रामस्यैतावन्निवर्तनपरिमाणं च लेख्यमेवं आवाटस्य नदीनगरवर्त्मादेः संचारित्वेन भूमेर्न्यूनाधिकभावसंभवात्तन्निवृत्त्यर्थं स्वहस्तेन स्वहस्तलिखितेन 'मतं मे अमुकनाम्नः अमुकपुत्रस्य यदत्रोपरि लेखितमि'त्यनेन संपन्नं युक्तं, कालेन च द्विविधेन शकनृपातीतरूपेण संवत्सररूपेण च कालेन, चन्द्रसूर्योपरागादिना संपन्नं, स्वमुद्रया गरुडवाराहादिरूपयोपरि बहिश्चिह्नितं अङ्कितं स्थिरं दृढं शासनं शिष्यन्ते भविष्यन्तो नृपतयः अनेन दानाच्छ्रेयोनुपालनमिति शासनं कारयेत् । महीपतिर्न भोगपतिः । संधिविग्रहादिकारिणा न येन केनचित् । 'संधिविग्रहकारी तु भवेद्यस्तस्य लेखकः । स्वयं राज्ञा समादिष्टः स लिखेद्राजशासनमिति ' स्मरणात् । दानमात्रेणैव दानफले सिद्धे शासनकारणं भोगाभिवृद्ध्या फलातिशयार्थम् ॥ ३१९ ॥ ३२० ॥

इदानीं राज्ञो निवासस्थानमाह

**रम्यं पशव्यमाजीव्यं जाङ्गलं देशमावसेत् ।**
**तत्र दुर्गाणि कुर्वीत जनकोशात्मगुप्तये ॥ ३२१ ॥**

**रम्यं** रमणीयं अशोकचम्पकादिभिः । **पशव्यं** पशुभ्यो हितं पशुवृद्धिकरम् । **आजीव्यम्**उपजीव्यं कन्दमूलफलपुष्पादिभिः । **जाङ्गलं** यद्यप्यल्पोदकतरुपर्वतो देशो जाङ्गलस्तथाऽप्यत्र सजलतरुपर्वतो देशो जाङ्गलशब्देनाभिधीयते । तं देश**मावसेत्** अधिवसेत् । **तत्रै**वंविधे देशे जनानां कोशस्य सुवर्णादेरात्मनश्च रक्षणार्थं दुर्गं कुर्वीत । तच्च षड्विधम् । यथाह **मनुः** (अ. ७ श्लो. ७०) । "धन्वदुर्गं[1] महीदुर्गम[2]ब्दुर्गं[3] वार्क्षमेव[4] च । नृदुर्गं[5] गिरिदुर्गं[6] च समाश्रित्य वसेत्पुरमिति " ॥ ३२१॥

**तत्र तत्र च निष्णातानध्यक्षान्कुशलाञ्शुचीन् ।**
**प्रकुर्यादायकर्मान्तव्ययकर्मसु चोद्यतान् ॥ ३२२ ॥**

किंच । **तत्र तत्र** धर्मार्थकामादिषु **अध्यक्षान्** योग्यानधिकारिणः **प्रकुर्या**न्नियुञ्जीत । यथाहुः । ' धर्मकृत्येषु धर्मज्ञानर्थकृत्येषु पण्डितान् । स्त्रीषु क्लीबान्नियुञ्जीत नीचान्निन्द्येषु कर्मस्विति ' । कीदृशा**न्निष्णातान्** अनन्यव्यापारान् । **कुशलान्** तत्तद्व्यापारचतुरान् । **शुचीन्** चतुर्विधोपधाशुद्धान् । **आयकर्मसु** सुवर्णाद्युत्पत्तिस्थानेषु, **व्ययकर्मसु** सुवर्णादिदानस्थानेषु । **उद्यतान्** अनलसान् । चशब्दात्प्राज्ञत्वादिगुणयुक्तान् । उक्तं च । ' प्राज्ञत्वमुपधाशुद्धिरप्रमादोऽभियुक्तता । कार्येषु व्यसनाभावः स्वामिभक्तिश्च योग्यतेति ' ॥ ३२२ ॥

' भोगांश्च दद्याद्विप्रेभ्यो वसूनि विविधानि चेति ' सामान्येन स्वस्वदानमुक्तं; इदानीं नृपाणां विक्रमार्जितस्य दाने फलातिशयमाह

**नातः परतरो धर्मो नृपाणां यद्रणार्जितम् ।**
**विप्रेभ्यो दीयते द्रव्यं प्रजाभ्यश्चाभयं सदा ॥ ३२३ ॥**

१ निरुदकेन पञ्चयोजनेन देशेन समन्ततो व्याप्तं धन्वदुर्गम् । धनुर्दुर्गमित्यपि पाठः । २ पाषाणेष्टकायुतद्वादशहस्तोच्छ्रितेन बहुविस्तृतेन युद्धार्थमुपरिभ्रमणयोग्येन साधारणगवाक्षादियुक्तेन प्राकारेण समन्ताद्वेष्टितमुद्दारं महीदुर्गम् । ३ अगाधोदकेन समन्ततो वेष्टितमब्दुर्गम् । ४ वृक्षजन्यं वार्क्षम् । ५ चतुरङ्गबलजं नृदुर्गम् । ६ गिरिणा वेष्टितं गिरिदुर्गम् ।

अस्मादुत्कृष्टतमो धर्मो नृपाणां न विद्यते '**यद्रणार्जितं द्रव्यं विप्रेभ्यो दीयते । यच्च प्रजाभ्योऽभय**दानम् ॥ ३२३ ॥

'रणार्जितं देयमि'त्युक्तं; द्रव्यार्जनाय रणे प्रवृत्तस्य विपत्तिरपि संभवतीति न धर्मो नाप्यर्थ इति ततो निवृत्तिरेव श्रेयसीत्यत आह

५ **य आहवेषु वध्यन्ते भूम्यर्थमपराङ्मुखाः ।**
**अकूटैरायुधैर्यान्ति ते स्वर्गं योगिनो यथा ॥ ३२४ ॥**

**ये भूम्याद्यर्थमाहवेषु** प्रवृत्ता **अपराङ्मुखा** अभिमुखा **वध्यन्ते** मार्यन्ते **ते स्वर्गं यान्ति** । योगाभ्यासरता यथा । **यद्यकूटैरविषदिग्धादिभिरायुधैर्योद्धारो** भवन्ति ॥ ३२४ ॥

**पदानि क्रतुतुल्यानि भग्नेष्वप्यनिवर्तिनाम् ।**
१० **राजा सुकृतमादत्ते हतानां विपलायिनाम् ॥ ३२५ ॥**

किंच । स्वबलेषु करितुरगरथपदातिषु भग्नेष्वनिवर्तिनां परबलाभिमुखयायिनां **पदानि क्रतुतुल्यानि** अश्वमेधतुल्यानि । विपर्यये दोषमाह । **विपलायिनां** पराङ्मुखानां **हतानां राजा सुकृतमादत्ते** ॥ ३२५ ॥

**तवाहंवादिनं क्लीबं निर्हेतिं परसंगतम् ।**
१५ **न हन्याद्विनिवृत्तं च युद्धप्रेक्षणकादिकम् ॥ ३२६ ॥**

अपि च । '**तवाह**मिति' यो वदति तं । **क्लीबं** नपुंसकं । **निर्हेतिं** निरायुधं । **परसंगत**मन्येन सह युद्ध्यमानं । **विनिवृत्तं** युद्धाद्विनिवृत्तं । **युद्धप्रेक्षणको** युद्धदर्शी । तमपि **न हन्या**दिति सर्वत्र संबन्धः । आदिग्रहणादश्वसारथ्यादीनां ग्रहणम् । यथाह **गौतमः** (अ.१०सू.१७।१८) । 'न दोषो हिंसायामाहवे । अन्यत्र व्यश्वसारथ्यानायुधकृताञ्जलिप्रकीर्णकेशपराङ्मुखोपविष्टस्थलवृक्षारूढदूतगो-
२० ब्राह्मणवादिभ्य इति' । **शंखो**ऽप्याह । 'न पानीयं पिबन्तं न भुञ्जानं नोपानहौ मुञ्चन्तं नावर्माणं सवर्मा न स्त्रियं न करेणुं न वाजिनं न सारथिं न दूतं न ब्राह्मणं न राजानमराजा हन्यादिति' ॥ ३२६ ॥

**कृतरक्षः समुत्थाय पश्येदायव्ययौ स्वयम् ।**
**व्यवहारांस्ततो दृष्ट्वा स्नात्वा भुञ्जीत कामतः ॥ ३२७ ॥**

**कृतरक्षः** पुरस्यात्मनश्च रक्षां विधाय प्रतिदिनं प्रातःकाल **उत्थाय स्वयमेवायव्ययौ**
२५ **पश्येत् । ततो व्यवहारान् दृष्ट्वा** मध्याह्नकाले **स्नात्वा कामतो** यथाकालं **भुञ्जीत** ॥ ३२७ ॥

**हिरण्यव्यापृतानीतं भाण्डागारेषु निक्षिपेत् ।**
**पश्येच्चारांस्ततो दूतान्प्रेषयेन्मंत्रिसंगतः ॥ ३२८ ॥**

तदनन्तरं **हिरण्यादिकं व्यापृतै**र्हिरण्याद्यानयननियुक्तै**रानीतं** स्वयमेव निरीक्ष्य **भाण्डागारेषु निक्षिपेत् । ततश्चारान्** विश्वस्तान्प्रत्यागतान्**पश्येत्** । ये परराज्ये वृत्तान्तपरिज्ञानाय परिव्राजक-
३० तापसादिरूपेण गूढचारिणः प्रेषितास्तांश्चारान्दृष्ट्वा क्वचिन्निवेशयेत् । तदनन्तरं **दूतांश्च** पश्येत् ।

दूताश्च ये प्रकटमेव राजान्तरं प्रति गतागतमाचरन्ति । ते च त्रिविधाः । निसृष्टार्थाः संदिष्टार्थाः शासनहराश्चेति । तत्र निसृष्टार्था राजकार्याणि देशकालोचितानि स्वयमेव कथयितुं क्षमाः । उक्तमात्रं ये परस्मै निवेदयन्ति ते संदिष्टार्थाः । शासनहरास्तु राजलेखहारिणः । तान्पूर्वप्रेषितानागतान्**मन्त्रिसंगतः पश्येत्** । दृष्ट्वा तद्वार्तामाकलय्य पुनः प्रेषयेत् ॥ ३२८ ॥

**ततः स्वैरविहारी स्यान्मन्त्रिभिर्वा समागतः ।** 5
**बलानां दर्शनं कृत्वा सेनान्या सह चिन्तयेत् ॥ ३२९ ॥**

तदनन्तरमपराह्णे **स्वैरं** यथेष्टमेकोऽन्तःपुर**विहारी स्यात्** । **मन्त्रिभिर्वा** विश्वासिभिः कलाकुशलैः परिहासवेदिभिः परिवृतः स्त्रीभिश्च रूपयौवनवैदग्ध्यशालिनीभिः । 'भुक्तवान्विहरेच्चैव स्त्रीभिरन्तःपुरे सह । विहृत्य तु यथाकामं पुनः कार्याणि चिन्तयेदिति' **मनु**स्मरणात् ( अ. ७ श्लो. २२१ ) । ततो विशिष्टैर्वस्त्रकुसुमविलेपनालङ्कारैरलङ्कृतः हस्त्यश्वरथपदातिबलानि दृष्ट्वा **सेनान्या** सेनापतिना 10 **सह** तद्रक्षणादिदेशकालोचितं **चिन्तयेत्** ॥ ३२९ ॥

**संध्यामुपास्य शृणुयाच्चाराणां गूढभाषितम् ।**
**गीतनृत्यैश्च भुञ्जीत पठेत्स्वाध्यायमेव च ॥ ३३० ॥**

ततः सायंकाले **संध्यामुपास्य** । सामान्येन प्राप्तस्यापि पुनर्वचनं कार्याकुलत्वादविस्मरणार्थम् । अनन्तरं ये पूर्वं प्रेषिताः क्वचित्स्थाने निवेशितास्तेषां **चाराणां गूढभाषितम**न्तर्वेश्मनि शस्त्रपाणिः **शृणुयात्** । उक्तं च (**मनु**स्मृ. अ. ७ श्लो. २२३) । 'संध्यां चोपास्य शृणुयादन्तर्वेश्मनि शस्त्रभृत् । रहस्याख्यायिनां चैव प्रणिधीनां च चेष्टितमिति' । ततो नृत्यगीतादिभिः कंचित्कालं क्रीडित्वा कक्षान्तरं प्रविश्य भुञ्जीत । 'गत्वा कक्षान्तरं त्वन्यत्समनुज्ञाप्य तं जनम् । प्रविशेद्भोजनार्थं च स्त्रीभिरन्तःपुरं सहेति' स्मरणात् (**मनु**स्मृ. अ. ७ श्लो. २२४ ) । ततोऽविस्मरणार्थं यथाशक्ति **स्वाध्यायं पठेत्** ॥३३०॥ 15

**संविशेत्तूर्यघोषेण प्रतिबुद्ध्येत्तथैव च ।** 20
**शास्त्राणि चिन्तयेद्बुद्ध्वा सर्वकर्तव्यतास्तथा ॥ ३३१ ॥**
**प्रेषयेच्च ततश्चारान्स्वेष्वन्येषु च सादरान् ।**
**ऋत्विक्पुरोहिताचार्यैराशीर्भिरभिनन्दितः ॥ ३३२ ॥**
**दृष्ट्वा ज्योतिर्विदो वैद्यान्दद्याद्गां काञ्चनं महीम् ।**
**नैवेशिकानि च ततः श्रोत्रियेभ्यो गृहाणि च ॥ ३३३ ॥** 25

तदनन्तरं **तूर्य**शंख**घोषेण संविशेत्**स्वप्यात् । **तथैव** तूर्यादिघोषेण **प्रतिबुद्ध्येत्** । प्रतिबुद्ध्य च शास्त्रविद्भिर्विश्वासिभिः सह एकाकी वा पश्चिमे यामे **शास्त्राणि चिन्तयेत्** । **सर्वकर्तव्यताश्च** सर्वकार्याणि च । एतच्च स्वस्थं प्रत्युच्यते । अस्वस्थः पुनः सर्वकार्येषु अन्यं नियोजयेत् । यथाह **मनुः** ( अ. ७ श्लो. २२६ ) । '**एतद्वृत्तं समातिष्ठेदरोगः पृथिवीपतिः । अस्वस्थः सर्वमेवैतन्मन्त्रिमुख्ये निवेशयेदिति**' ॥ ३३१ ॥ 30

अनन्तरं तत्रस्थ एव **विश्वस्तान्स्वान् चारान्** दानमानसत्कारैः पूजितान्स्वेषु सामन्ताद्यधिकारिषु अन्येषु च महीपतिषु **प्रेषयेत्** तच्चिकीर्षितपरिज्ञानाय। ततः प्रातःसंध्यामुपास्याग्निहोत्रं हुत्वा **पुरोहितर्त्विगाचार्यादिभिराशीर्भिरभिनंदितो ज्योतिर्विदो दृष्ट्वा** तेभ्यश्च ग्रहादिस्थितिं विदित्वा शान्तिकादीनि च पुरोहितानादिश्य, **वैद्यांश्च** दृष्ट्वा तेभ्यश्च स्वशरीरस्थितिं निवेद्य प्रतिविधानं चादिश्य, **गां** दोग्ध्रीं **काञ्चनं महीं** च **नैवेशिकानि** विवाहोपयोगीनि कन्यालङ्कारादीनि **गृहाणि** च सुधाधवलितादीनि **श्रोत्रियेभ्यो**ऽधीतवेदेभ्यो ब्राह्मणेभ्यो **दद्यादिति** प्रत्येकं संबध्यते ॥ ३३२ ॥ ३३३ ॥

**ब्राह्मणेषु क्षमी स्निग्धेष्वजिह्मः क्रोधनोऽरिषु।**
**स्याद्राजा भृत्यवर्गेषु प्रजासु च यथा पिता ॥ ३३४ ॥**

किंच। **ब्राह्मणे**ष्वधिक्षिपत्स्वपि **क्षमी** क्षमावान्। **स्निग्धेषु** स्नेहवत्सु मित्रादि**ष्वजिह्मः** अवक्रः। **अरिषु क्रोधनः। भृत्यवर्गेषु प्रजासु च** हिताचरणेनाहितनिवर्तनेन **च पितेव** दयावान्स्यादिति प्रत्येकं संबध्यते ॥ ३३४ ॥

प्रजापरिपालनफलमाह

**पुण्यात्षड्भागमादत्ते न्यायेन परिपालयन्।**
**सर्वदानाधिकं यस्मात्प्रजानां परिपालनम् ॥ ३३५ ॥**

**यस्मान्न्यायेन** शास्त्रोक्तमार्गेण प्रजाः **परिपालयन्** परिपालितप्रजोपचित**पुण्यात् षड्भागं** षष्ठं भाग**मादत्ते,** यस्माच्च सर्वेभ्यो भूम्यादिदानेभ्यः **प्रजानां परिपालनमधिक**फलम्। तस्मात्प्रजासु यथा पिता तथैव स्यादिति गतेन संबन्धः ॥ ३३५ ॥

**चाटतस्करदुर्वृत्तमहासाहसिकादिभिः।**
**पीड्यमानाः प्रजा रक्षेत्कायस्थैश्च विशेषतः ॥ ३३६ ॥**

**चाटाः** प्रतारकाः विश्वास्य ये परधनमपहरन्ति। प्रच्छन्नापहारिण**स्तस्कराः। दुर्वृत्ताः** इन्द्रजालिककितवादयः। सहो बलं। सहसा बलेन कृतं साहसं। महच्च तत्साहसं च महासाहसं तेन वर्तन्ते इति **महासाहसिकाः** प्रसह्यापहारिणः। आदिशब्दान्मौलिककुहकदुर्वृत्तयः। एतैः **पीड्यमानाः** बाध्यमानाः **प्रजा रक्षेत्। कायस्था** गणका लेखकाश्च तैः पीड्यमानाः **विशेषतो रक्षेत्।** तेषां राजवल्लभतयाऽतिमायावित्वाच्च दुर्निवारत्वाच्च ॥ ३३६ ॥

**अरक्ष्यमाणाः कुर्वन्ति यत्किंचित्किल्बिषं प्रजाः।**
**तस्मात्तु नृपतेरर्धं यस्माद्गृह्णात्यसौ करान् ॥ ३३७ ॥**

**अरक्ष्यमाणाः प्रजाः यत्किंचित्किल्बिषं** चौर्यपरदारगमनादि **कुर्वन्ति तस्मात्पा**पादर्धं **नृपतेर्भवति, यस्मादसौ** राजा रक्षणार्थं प्रजाभ्यः **करान् गृह्णाति** ॥ ३३७ ॥

**ये राष्ट्राधिकृतास्तेषां चारैर्ज्ञात्वा विचेष्टितम्।**
**साधून्संमानयेद्राजा विपरीतांश्च घातयेत् ॥ ३३८ ॥**

**उत्कोचजीविनो द्रव्यहीनान्कृत्वा विवासयेत् ।**
**सद्दानमानसत्कारान् श्रोत्रियान्वासयेत्सदा ॥ ३३९ ॥**

राष्ट्रे राज्ञा अधिकारेषु ये नियुक्तास्तेषां **विचेष्टितं** चरितं **चारै**रुक्तलक्षणैः सम्यक् **ज्ञात्वा साधून्** सुचरितान् **संमानयेत्** दानमानसत्कारैः पूजयेत् । **विपरीतान्**दुष्टचरित्रान्सम्यग्विदित्वा **घातयेत्** अपराधानुसारेण । ये पुन**रुत्कोचजीविन**स्तान्द्रव्यरहितान्कृत्वा स्वराष्ट्रात्प्रवासयेत् । **श्रोत्रियान्सद्दानमानसत्कारैः** सहितान्कृत्वा स्वराष्ट्रे स्वदेशे **सदैव वासयेत्** ॥३३८॥३३९॥

**अन्यायेन नृपो राष्ट्रात्स्वकोशं योऽभिवर्धयेत् ।**
**सोऽचिराद्विगतश्रीको नाशमेति सबान्धवः ॥ ३४० ॥**

**योऽसौ राजा** स्वराष्ट्रा**दन्यायेन** द्रव्यमादाय **स्वकोशं विवर्धयेत् सोऽचिरा**च्छीघ्रमेव **विगतश्रीको** विनष्टलक्ष्मीकः बन्धुभिः सह **नाशं** प्राप्नोति ॥ ३४० ॥　१०

**प्रजापीडनसंतापात्समुद्भूतो हुताशनः ।**
**राज्ञः कुलं श्रियं प्राणांश्चादग्ध्वा न निवर्तते ॥ ३४१ ॥**

**प्रजानां** तस्करादिकृत**पीडनेन** यः **संताप**स्तस्मादु**द्भूतो हुताशन** इव । संतापकारित्वादपुण्यराशिर्हुताशनशब्देनोच्यते । स **राज्ञः कुलं श्रियं प्राणांश्चादग्ध्वा** नाशमनीत्वा न **निवर्तते** नोपशाम्यति ॥ ३४१ ॥　१५

**य एव नृपतेर्धर्मः स्वराष्ट्रपरिपालने ।**
**तमेव कृत्स्नमाप्नोति परराष्ट्रं वशं नयन् ॥ ३४२ ॥**

न्यायतः स्वराष्ट्रपरिपालने राज्ञो यो धर्मस्तं सकलं वक्ष्यमाणन्यायेन **परराष्ट्रं वशं नयन्** आत्मसात्कुर्वन्प्राप्नोति धर्मषड्भागं च ॥ ३४२ ॥

**यस्मिन्देशे य आचारो व्यवहारः कुलस्थितिः ।**　२०
**तथैव परिपाल्योऽसौ यदा वशमुपागतः ॥ ३४३ ॥**

किंच यदा परदेशो वशमुपागतः तदा न स्वदेशाचारादिसंकरः कार्यः । **यस्मिन्देशे य आचारः कुलस्थितिर्व्यवहारो** वा **यथैव** प्रागासीत्तथैवासौ परिपालनीयः यदि शास्त्रविरुद्धो न भवति । 'यदा वशमुपागत' इत्यनेन वशोपगमनात्प्रागनियम इति दर्शितम् । यथोक्तम् (**मनुस्मृ.** अ. ७ श्लो. १९५)। 'उपरुध्यारिमासीत राष्ट्रं चास्योपपीडयेत् । दूषयेच्चास्य सततं यवसान्नोदकेन्धनमिति' ॥ ३४३ ॥　२५

**मन्त्रमूलं यतो राज्यं तस्मान्मन्त्रं सुरक्षितम् ।**
**कुर्याद्यथाऽस्य न विदुः कर्मणामाफलोदयात् ॥ ३४४**

यस्मा'त्तैः सार्धं चिन्तयेद्राज्यमि'त्याद्युक्तं **मन्त्रमूलं राज्यं तस्मान्मन्त्रं** यत्नेन तथा **सुरक्षितं** कुर्यात् **यथाऽस्य** राज्ञः **कर्मणां** संधिविग्रहादीनामा**फलोदया**त्फलनिष्पत्तेः' प्राग्यावदन्ये मन्त्रं न जानन्ति ॥ ३४४ ॥

**अरिर्मित्रमुदासीनोऽनंतरस्तत्परः परः।**
**क्रमशो मण्डलं चिन्त्यं सामादिभिरुपक्रमैः ॥ ३४५ ॥**

किंच। **अरिः** शत्रुः। **मित्रं** सुहृत्। उभयविलक्षण **उदासीनश्च**। ते च त्रयस्त्रिविधाः सहजाः कृत्रिमाः प्राकृताश्चेति। तत्र **सहजोऽरिः** सापत्नपितृव्यतत्पुत्रादिः। **कृत्रिमोऽरिः** यस्यापकृतं येन चापकृतम्। **प्राकृत**स्त्वनन्तरदेशाधिपतिः। **सहजं मित्रं** भागिनेयपैतृष्वस्रीयमातृष्वस्रीयादि। **कृत्रिमं मित्रं** येनोपकृतं यस्य चोपकृतम्। **प्राकृतमित्र**मेकान्तरितदेशाधिपतिः। सहजकृत्रिममित्रशत्रुलक्षणरहितो सहजकृत्रिमोदासीनो प्राकृतोदासीनो द्व्यन्तरितदेशाधिपतिः।

**अरिश्चतुर्विधः** यातव्योच्छेत्तव्यपीडनीयकर्शनीयभेदेन। तत्र **यातव्यो**ऽनन्तरभूपतिः। व्यसनी हीनबलो विरक्तप्रकृतिर्विदुर्गो मित्रहीनो दुर्बलश्चो**च्छेत्तव्यः**। **पीडनीयो** मन्त्रबलहीनः। प्रबलमित्रबलयुक्तः **कर्शनीयः**। 'निर्मूलनात्समुच्छेदं पीडनं बलनिग्रहम्। कर्शनं तु पुनः प्राहुः कोशदण्डापकर्षणादिति'।

**मित्रं द्विविधं** बृंहणीयं कर्शनीयमिति। कोशबलहीनं **बृंहणीयम्**। कोशबलाधिकं **कर्शनीयम्**। **अनन्तरस्तत्परः पर इति**। प्राकृतारिमित्रोदासीनानाह। अनन्तरः प्राकृतोऽरिः। तत्परः प्राकृतं मित्रं। तस्मात्परः प्राकृत उदासीनः। शेषाः पुनः प्रसिद्धत्वान्नोक्ताः। एतद्राज**मण्डलं क्रमशः** पूर्वादिक्रमेण **चिन्त्यं**। तेषां चेष्टितं ज्ञातव्यम्। ज्ञात्वा च **सामादिभिरुपायै**र्वक्ष्यमाणैरनुसंधेयम्।

एवं पुरतः पृष्ठतः पार्श्वतश्च 'त्रयस्त्रय आत्मा चैक' इति त्रयोदशराजकमिदं राजमण्डलं पद्माकारं पार्ष्णिग्राहाक्रन्दासाराद्यस्त्वारिमित्रोदासीनेष्वेवान्तर्भवन्ति। संज्ञाभेदमात्रं ग्रन्थान्तरे दर्शितमिति **योगीश्वरेण** न पृथगुक्ताः ॥ ३४५ ॥

सामादिभिरुपक्रमैरित्युक्तं; इदानीं तानुपायानाह

**उपायाः साम दानं च भेदो दण्डस्तथैव च।**
**सम्यक्प्रयुक्ताः सिद्ध्येयुर्दण्डस्त्वगतिका गतिः ॥ ३४६ ॥**

प्रियभाषणं। **दानं** सुवर्णादेः। **भेदो** भेदकरणम्। तत्सामन्तादीनां परस्परतो वैरस्योत्पादनम्। **दण्ड** उपांशुप्रकाशाभ्यां धनापहारादिर्वधपर्यन्तोऽपकारः। एते **सामादयः** परिपन्थ्यादिसाधनोपायाः एते च देशकालाद्यनुसारेण **सम्यक्प्रयुक्ताः सिद्ध्येयुः**। तेषां च मध्ये **दण्डस्त्वगतिका गतिः**। उपायान्तरसंभवे सति न प्रयोक्तव्यः। एतच्च पीडनीयकर्शनीयाभिप्रायेण। यातव्योच्छेत्तव्ययोर्दण्ड एव मुख्यः। एते सामाद्यो न केवलं राज्यव्यवहारविषयाः अपि तु सकललो-

कव्यवहारविषयाः । यथा । ' अधीष्व पुत्रकाधीष्वं दास्यामि तव मोदकान् । यद्वाऽन्यस्मै प्रदास्यामि कर्णमुत्पाटयामि ते ' इति ॥ ३४६ ॥

**संधिं च विग्रहं चैव यानमासनसंश्रयौ ।**
**द्वैधीभावं गुणानेतान्यथावत्परिकल्पयेत् ॥ ३४७ ॥**

किंच । **संधिर्व्य**वस्थाकरणं । **विग्रहो**ऽपकारः । **यानं** परंप्रति यात्रा । **आसनमु**पेक्षा । ५ **संश्रयो** बलवदाश्रयणं । **द्वैधीभावः** स्वबलस्य द्विधाकरणं । **एतान्**संधिप्रभृतीन् **गुणान् यथावत्** देशकालशक्तिमित्रादिवशेन **कल्पयेत्** ॥ ३४७ ॥

यानकालानाह

**यदा सस्यगुणोपेतं परराष्ट्रं तदा व्रजेत् ।**
**परश्च हीन आत्मा च हृष्टवाहनपूरुषः ॥ ३४८ ॥**　　१०

यदा **परराष्ट्रं सस्यै**र्व्रीह्यादिभि**र्गुणै**श्च समजलेन्धनतृणादिभि**रुपेतं** संपन्नं, शत्रुश्च **हीनो** बलादिभिः, **आत्मा च हृष्टवाहनपूरुषः** वाहनानि हस्त्यश्वादीनि तानि च पूरुषाश्च वाहनपूरुषाः हृष्टाः वाहनपूरुषा यस्य स तथोक्तः, **तदा परराष्ट्रमा**त्मसात्कर्तुं **व्रजेत्** ॥ ३४८ ॥

प्राणिनामभ्युदयविनिपातानां दैवायत्तत्वाद्यदि दैवमस्ति तदा स्वयमेव पराराष्ट्रादि वशीभविष्यति । अथ नास्ति कृतेऽपि पौरुषे न भविष्यति अतो व्यर्थ एवायं यात्राप्रयास इत्यत आह　　१५

**दैवे पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता ।**
**तत्र दैवमभिव्यक्तं पौरुषं पौर्वदेहिकम् ॥ ३४९ ॥**

**कर्मसिद्धिः** फलप्राप्तिः इष्टानिष्टलक्षणा सा न केवलं **दैवे** व्यवस्थिता अपि तु **पुरुषकारे**ऽपि । लोके तथादर्शनात्, चिकित्सकादिशास्त्रवैयर्थ्याच्च । अपि च पुरुषकाराभावे दैवमेव नास्तीत्याह । **तत्र दैवमिति** । यतः पूर्वदेहार्जितं पौरुषमेव दैवमुच्यते । अल्पपुरुषकारानन्तरं महाफलो- २० **दयाभिव्यक्तं पौरुषं पौर्वदेहिकं** कर्म । तस्मात्पुरुषकाराभावे न दैवमस्तीति पुरुषकारे यत्नो विधातव्यः ॥ ३४९ ॥

इदानीं मतांतराण्याह

**केचिद्दैवात्स्वभावाद्वा कालात्पुरुषकारतः ।**
**संयोगे केचिदिच्छन्ति फलं कुशलबुद्धयः ॥ ३५० ॥**　　२५

**केचिदि**ष्टानिष्टलक्षणं **फलं दैवादेवेच्छन्ति । केचित्स्वभावात्स्व**यमेव भवति न कारणमपेक्षत इति । **केचित्कालात्केचित्पुरुषकारत** एवेति । स्वमतमाह । दैवादीनां **संयोगे** समुच्चये फलं भवतीति **कुशलबुद्धयो मन्वादयो** मन्यन्ते ॥ ३५० ॥

एकैकस्मात्फलं न भवतीत्यत्र दृष्टान्तमाह

**यथा ह्येकेन चक्रेण रथस्य न गतिर्भवेत्।**
**एवं पुरुषकारेण विना दैवं न सिद्ध्यति॥ ३५१॥**

नात्र तिरोहितमस्ति॥ ३५१॥

परराष्ट्रं गन्तव्यमित्युक्तं; लाभश्च त्रिविधः हिरण्यलाभो मूललाभो मित्रलाभश्चेति; तेषु मित्रलाभो ज्यायान् ततस्तत्प्राप्त्युपाये यत्नो विधातव्यः तत्प्राप्त्युपायश्च सत्यवचनमित्याह

**हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यतः।**
**अतो यतेत तत्प्राप्त्यै रक्षेत्सत्यं समाहितः॥ ३५२॥**

यस्मात् **हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा** उत्कृष्टा तस्मात्तत्प्राप्त्यै **यतेत** यत्नं
१० कुर्यात्। सामादिभिः **सत्यं च रक्षेत्। समाहितः** सावधानः सत्यमूलत्वान्मित्रलाभस्य॥ ३५२॥

इदानीं राज्याङ्गान्याह

**स्वाम्यमात्या जनो दुर्गं कोशो दण्डस्तथैव च।**
**मित्राण्येताः प्रकृतयो राज्यं सप्ताङ्गमुच्यते॥ ३५३॥**

'महोत्साह' इत्याद्युक्तलक्षणो[1] महीपतिः **स्वामी। अमात्या** मन्त्रिपुरोहितादयः। **जनो**
१५ ब्राह्मणादिप्रजाः। **दुर्गं** धन्वदुर्गादि। **कोशः** सुवर्णादिधनराशिः। **दण्डो** हस्त्यश्वरथपत्तिलक्षणं चतुरङ्गबलं। **मित्राणि** सहजकृत्रिमप्राकृतानि। एताः स्वाम्याद्याः राज्यस्य **प्रकृतयो** मूलकारणानि। एवं **राज्यं सप्ताङ्ग**मुच्यते॥ ३५३॥

**तदवाप्य नृपो दण्डं दुर्वृत्तेषु निपातयेत्।**
**धर्मो हि दण्डरूपेण ब्रह्मणा निर्मितः पुरा॥ ३५४**

२० **तदे**वंविधं **राज्यं प्राप्य दुर्वृत्तेषु** वञ्चकशठधूर्तपरदारपरद्रव्यापहारिहिंसकादिषु **नृपो दण्डं पातयेत्** प्रयोजयेत्। हि यस्माद्धर्म एव **दण्डरूपेण** पूर्वं **ब्रह्मणा निर्मितो**ऽस्य च दण्ड इति यौगिकी संज्ञा। 'दण्डो दमनादित्याहुः तेनादान्तान्दमयेदित्यादि'गौतमस्मरणात् (अ. ११ सू. २८)॥ ३५४॥

**स नेतुं न्यायतोऽशक्यो लुब्धेनाकृतबुद्धिना।**
**सत्यसंधेन शुचिना सुसहायेन धीमता॥ ३५५॥**

२५ **स** पूर्वोक्तो दण्डो **लुब्धेन** कृपणेना**कृतबुद्धिना** चञ्चलबुद्धिना **न्यायतो** न्यायानुसारेण **नेतुं** प्रयोक्तुं शक्यो न भवति। कीदृशेन तर्हि शक्य? इत्याह। **सत्यसंधे**नाप्रतारकेण। **शुचिना**

१ अस्मिन्नेवाध्याये ३०९ श्लोकः १० पृष्ठे.

जितारिषड्वर्गेण । **सुसहायेन** पूर्वोक्तसहायसहितेन । **धीमता** नयानयकुशलेन स दण्डो न्यायतो धर्मानुसारेण नेतुं शक्यः ॥ ३५५ ॥

**यथाशास्त्रं प्रयुक्तः सन् सदेवासुरमानवम् ।**
**जगदानन्दयेत्सर्वमन्यथा तत्प्रकोपयेत् ॥ ३५६ ॥**

**स** दण्डः शास्त्रोक्तमार्गेण प्रयुज्यमानः सन् देवासुरमानवैः सहितं इदं सर्वं **जगदानन्दयेत्** ५ हर्षयेत् । **अन्यथा** शास्त्रातिक्रमेण प्रयुक्तश्चेज्जगत्**प्रकोपयेत्** ॥ ३५६ ॥

न केवलमधर्मदण्डेन जगत्प्रकोपः; अपि तु प्रयोक्तुर्दृष्टादृष्टहानिरपीत्याह

**अधर्मदण्डनं स्वर्गं कीर्तिं लोकांश्च नाशयेत् ।**
**सम्यक्तु दण्डनं राज्ञः स्वर्गकीर्तिजयावहम् ॥ ३५७ ॥**

यः पुनः शास्त्रातिक्रमेण लोभादिना दण्डः कृतः स पापहेतुत्वात्स्वर्गं कीर्तिं लोकांश्च विनाश- १० यतीति । शास्त्रोक्तमार्गेण तु कृतः धर्महेतुत्वात्स्वर्गकीर्तिजयानां हेतुर्भवति ॥ ३५७ ॥

**अपि भ्राता सुतोऽर्घ्यो वा श्वशुरो मातुलोऽपि वा ।**
**नादण्ड्यो नाम राज्ञोऽस्ति धर्माद्विचलितः स्वकात् ॥ ३५८ ॥**

**अर्घ्यो**ऽर्घार्ह आचार्यादिः । शेषः प्रसिद्धः । एते भ्रातृसुतादयोऽपि स्वधर्माच्चलिता दण्ड्याः किमुतान्ये । यतः स्वधर्माच्चलितः **अदण्ड्यो नाम** [ : कोऽपि **नास्ति** । एतच्च मातापित्रादि- १५ व्यतिरेकेण । तथा च **स्मृत्यन्तरम्** । ' अदण्ड्यौ मातापितरौ । स्नातकपरिव्राजकपुरोहितवानप्रस्थाः श्रुतशीलशौचाचारवन्तस्ते हि धर्माधिकारिण ' इति ॥ ३५८ ॥

**यो दण्ड्यान्दण्डयेद्राजा सम्यग्वध्यांश्च घातयेत् ।**
**इष्टं स्यात्क्रतुभिस्तेन समाप्तवरदक्षिणैः ॥ ३५९ ॥**

किंच । **यस्तु दण्ड्यान्स्व**धर्मचलनादिना दण्डयोग्यान्**सम्यक्** शास्त्रदृष्टेन मार्गेण धिग्धन- २० दण्डादिना **दण्डयति वध्यान्व**धार्हान् **घातयति** तेन राज्ञा भूरिदक्षिणैः **क्रतुभिरिष्टं** भवति । बहुदक्षिणक्रतुफलं प्राप्नोतीत्यर्थः । न च फलश्रवणाद्दण्डप्रणयनं काम्यमिति मन्तव्यम् । अकरणे प्राय- श्चित्तस्मरणात् । यथाह **वसिष्ठः**(अ. १९ सू. ४०।४३) । 'दण्ड्योत्सर्गे राजैकरात्रमुपवसेत् । त्रिरात्रं पुरोहितः । कृच्छ्रमदण्ड्यदण्डने पुरोहितस्त्रिरात्रं राजेति ' ॥ ३५९ ॥

' दुष्टे सम्यग्दण्डः प्रयोक्तव्य ' इत्युक्तं, दुष्टपरिज्ञानं च व्यवहारदर्शनमन्तरेण भवतीति २५ तत्परिज्ञानाय व्यवहारदर्शनमहरहः स्वयं कर्तव्यमित्याह

**इति संचिन्त्य नृपतिः क्रतुतुल्यफलं पृथक् ।**
**व्यवहारान्स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहम् ॥ ३६० ॥**

**इत्येवमुक्तप्रकारेण क्रतुतुल्यं फलं** दण्ड्यदण्डेन स्वर्गादिनाशं चादण्ड्यदण्डेन सम्यग्विचिन्त्य पृथक्पृथग्वर्णादिक्रमेण **सभ्यै**र्वक्ष्यमाणलक्षणैः **परिवृतः** प्रतिदिनं **व्यवहारान्व**क्ष्यमाणमार्गेण दुष्टादुष्टपरिज्ञानार्थं राजा **स्वयं पश्येत्** ॥ ३६० ॥

**कुलानि जातीः श्रेणीश्च गणान् जानपदानपि ।**
**स्वधर्माच्चलितान् राजा विनीय स्थापयेत्पथि ॥ ३६१ ॥**

**कुलानि** ब्राह्मणादीनां । **जातयो** मूर्धावसिक्तप्रभृतयः । **श्रेणय**स्तांबूलिकादीनां । **गणा** हेलाबुकादीनां । **जानपदाः** कारुकादयः । एतान्स्व**धर्माच्चलितान्** प्रच्युतान् **राजा** यथापराधं **विनीय** दण्डयित्वा **पथि** स्वधर्मे **स्थापयेत्** ।

'दण्डं दुर्वृत्तेषु निपातयेदि'त्युक्तं स च दण्डो द्विविधः शारीरोऽर्थदण्डश्चेति । यथाह **नारदः**
१० (परिशिष्टे श्लो. ५३।५४) । 'शारीरश्चार्थदण्डश्च दण्डस्तु द्विविधः स्मृतः । शारीरस्ताडनादिस्तु मरणान्तः प्रकीर्तितः ॥ काकिण्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव चेति' ॥ द्विविधोऽप्यपराधानुसारेणानेकधा भवति । आहस्म 'शारीरो दशधा प्रोक्तो ह्यर्थदण्डस्त्वनेकधेति' ॥ ३६१ ॥

तत्र कृष्णलमाषसुवर्णपलादिशब्दैरर्थदण्डा वक्तव्यास्ते च प्रतिदेशं भिन्नपरिमाणार्थां इत्येकरूपापराधेऽपि देशभेदेन न्यूनाधिकदण्डो माभूदिति कृष्णलादिशब्दानां नियतपरिमाणविषयत्वं दण्डव्यवहारे दर्शयितुमाह

१५ **जालसूर्यमरीचिस्थं त्रसरेणू रजः स्मृतम् ।**
**तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते ॥ ३६२ ॥**
**गौरस्तु ते त्रयः षट् ते यवो मध्यस्तु ते त्रयः ।**
**कृष्णलः पञ्च ते माषस्ते सुवर्णस्तु षोडश ॥ ३६३ ॥**
**पलं सुवर्णाश्चत्वारः पञ्च वाऽपि प्रकीर्तितम् ।**

२० जालकान्तरप्रविष्टादित्यरश्मिस्थितं यद्रजस्तत् **त्रसरेणु**रित्युक्तं **योगीश्वरादि**भिस्तत्त्वदर्शिभिः । ते च त्रसरेणवोऽष्टौ **लिक्षा** स्वदजयूकाण्डम् । ता लिक्षास्तिस्रो **राजसर्षपो** राजिका । ते राजसर्षपास्त्रयो गौरसर्षपः सिद्धार्थः । **गौर**सर्षपाः षट् **यवो मध्यः** मध्यमो न स्थूलो न सूक्ष्मः । एतेन गौरसर्षपा अपि मध्यमा इति गम्यते । तथा राजसर्षपा अपि मध्यमशब्दादेव सर्षपादिशब्दाः न केवलमुन्मानवचनाः किं तु तदुन्मितद्रव्यवचना इति गम्यते । यथा प्रस्थपरिमिता यवाः प्रस्थ उच्यते एवं सर्ष-
२५ पाद्युन्मितं द्रव्यं सर्षपादिशब्दैः । सर्षपादिशब्दानां च केवलोन्मानवचनत्वे त्रसरेणूनुपसंहृत्योन्मातुमशक्यत्वात्तद्द्वारेण कृष्णलादिव्यवहारो न स्यात् । तत्र स्थूलस्थूलतरस्थूलतमसूक्ष्मसूक्ष्मतरसूक्ष्मतममध्यसर्षपाद्युन्मानभेदेन प्रतिदेशं व्यवहारभेदे स्थिते दण्डव्यवहारे मध्य इति नियम्यते ।

ते मध्यमा यवास्त्रय एकः **कृष्णलः** । ते कृष्णलाः पञ्चैको **माषः** । ते माषाः षोडशैकः **सुवर्णः** । ते **सुवर्णाश्चत्वारः पलमि**ति संज्ञाः कथिता इति । पञ्च वाऽपि पलं **प्रकीर्तितं नारदा**दिभिः ।

तत्र स्थूलैस्त्रिभिर्यवैः कृष्णालपरिकल्पनायां व्यावहारिकनिष्कस्य षोडशांशः कृष्णलो भवति । तैः पञ्चभिर्माषः । माषैः षोडशभिः सुवर्णः । स च व्यावहारिकैः पञ्चभिर्निष्कैरेकः सुवर्णो भवति । ते चत्वारः पलमिति । निष्काणां विंशतिः पलम् । यदा तु सूक्ष्मैस्त्रिभिर्यवैः कृष्णलः परिकल्प्यते तदा व्यावहारिकनिष्कस्य द्वात्रिंशत्तमो भागः कृष्णलो भवति । तस्मिन्पक्षे सुवर्णः सार्धं निष्कद्वयं भवति । पलं च दशनिष्कम् । यदा तु मध्यमयवैः कृष्णल्परिकल्पना तदा निष्कस्य विंशतितमो भागः कृष्णलः, सुवर्णश्चतुर्निष्कः, षोडशनिष्कं पलम् । एवं पञ्चसुवर्णे पलमिति पक्षे विंशतिनिष्कं पलम् । एवमन्यदपि निष्कस्य चत्वारिंशो भागः कृष्णलः द्विनिष्कः सुवर्णोऽष्टनिष्कं पलमित्यादिलोकव्यवहारानुसारेणास्मादेव सूत्रादूहनीयम् ॥ ३६२ ॥ ३६३ ॥

एवं सुवर्णस्योन्मानं प्रतिपाद्येदानीं रजतस्याह

**द्वे कृष्णले रूप्यमाषो धरणं षोडशैव ते ॥ ३६४ ॥**
**शतमानं तु दशभिर्धरणैः पलमेव तु ।**
**निष्कं सुवर्णाश्चत्वारः**

**द्वे कृष्णले** पूर्वोक्ते **रूप्यमाषो** रूप्यसंबन्धी माषः । ते रूप्यमाषाः **षोडश धरणं** पुराण इत्यस्यैव संज्ञान्तरम् । 'ते षोडश स्याद्धरणं पुराणश्चैव राजत' इति **मनु**स्मरणात् (अ. ८ श्लो. १३६) । **दशभिर्धरणैः शतमानं पलमिति** चाभिधीयते । पूर्वोक्ताश्चत्वारः सुवर्णा एको राजतो निष्को भवति ॥ ३६४ ॥

इदानीं ताम्रस्योन्मानमाह

**कार्षिकस्ताम्रिकः पणः ॥ ३६५ ॥**

पलस्य चतुर्थोऽशः कर्ष इति लोकप्रसिद्धः । कर्षेणोन्मितः **कार्षिकः** । ताम्रस्य विकार**स्ताम्रिकः** । कर्षसंमितस्ताम्रविकारः पणसंज्ञो भवति कार्षापणसंज्ञकश्च । 'कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पण' इति **मनु**वचनात् (अ. ८ श्लो. १३६) । पञ्चसुवर्णपलपक्षे विंशतिमाषः पणो भवति । तथा सति 'माषो विंशतिमो भागः पणस्य परिकीर्तित' इत्यादिव्यवहारः सिद्धो भवति । चतुःसुवर्णपलपक्षे तु षोडशमाषः पणो भवति । अस्मिंश्च पक्षे सुवर्णकार्षापणपणशब्दानां समानार्थत्वेऽपि पणकार्षापणशब्दौ ताम्रविषयावेव । एवं तावद्धेमरूप्यताम्राणामुन्मानमुक्तम् । दण्डव्यवहारोपयोगित्वात् । कांस्यरीतिकादीनामपि लोकव्यवहाराङ्गभूतानामेवोन्मानं द्रष्टव्यम् ॥ ३६५ ॥

स्वशास्त्रपरिभाषामाह

**साशीतिपणसाहस्रो दण्ड उत्तमसाहसः ।**
**तदर्धं मध्यमः प्रोक्तस्तदर्धमधमः स्मृतः ॥ ३६६ ॥**

पणानां सहस्रं पणसहस्रं तत्परिमाणमस्येति पणसाहस्रः । अशीत्या सह वर्तत इति साशीतिः । अशीत्यधिकपणसहस्रपरिमितो यो **दण्डः** स **उत्तमसाहससं**ज्ञो वेदितव्यः । **तदर्धं मध्यमः तस्य** साशीतिपणसहस्र**स्यार्धं** चत्वारिंदशधिकपणपञ्चशतपरिमितो दण्डो मध्यमसाहससंज्ञः **तदर्धमधमः** तस्य चत्वारिंशदधिकपञ्चशतपणस्यार्धं सप्तत्यधिकपणशतद्वयपरिमितो दण्डोऽधमसाहससंज्ञः **स्मृत** उक्तो **मन्वा**दिभिः । 'यत्तु पणानां द्वे शते सार्धे प्रथमः साहसः स्मृतः । मध्यमः पञ्च विज्ञेयः

सहस्रं त्वेव चोत्तम' इति **मनुनोक्तं** (अ. ८ श्लो. १३८)। तत्पक्षान्तरममतिपूर्वापराधविषयं द्रष्टव्यम् ॥ ३६६ ॥

दण्डभेदानाह

**धिग्दण्डस्त्वथ वाग्दण्डो धनदण्डो वधस्तथा।**
**योज्या व्यस्ताः समस्ता वा ह्यपराधवशादिमे ॥ ३६७ ॥**

**धिग्दण्डो** धिक्धिगिति कुत्सनं। **वाग्दण्डस्तु** परुषशापवचनात्मकः। **धनदण्डो** धनापहारात्मकः। **वधदण्डः** 'शारीरोऽवरोधादिजीवितान्त' एते चतुर्विधा दण्डा **व्यस्ता** एकैकशः, **समस्ता** द्वित्राः त्रिचतुरो वा अपराधानुसारेण प्रयोक्तव्याः। उक्तक्रमेण पूर्वपूर्वासाध्ये उत्तर उत्तरः प्रयोक्तव्यः। **यथाह मनुः** (अ. ८ श्लो. १२९)। 'धिग्दण्डं प्रथमं कुर्याद्वाग्दण्डं तदनन्तरम्। तृतीयं १० धनदण्डं तु वधदण्डमतःपरमिति' ॥ ३६७ ॥

दण्डव्यवस्थानिमित्तान्याह

**ज्ञात्वाऽपराधं देशं च कालं बलमथापि वा।**
**वयः कर्म च वित्तं च दण्डं दण्ड्येषु पातयेत् ॥ ३६८ ॥**

यथा**ऽपराधं ज्ञात्वा** तदनुसारेण दण्डप्रणयनमेवं देशकालवयःकर्मवित्तानि ज्ञात्वा तदनुसारेण १५ **दण्ड्येषु** दण्डार्हेषु दण्डप्रणयनं कुर्यात्। तथा बुद्धिपूर्वाबुद्धिपूर्वसकृदावृत्त्यनुसारेण च।

यद्यपि राजानमधिकृत्यायं राजधर्मकलाप उक्तस्तथापि वर्णान्तरस्यापि विषयमण्डलादिपरिपालनाधिकृतस्यायं धर्मो वेदितव्यः। 'राजधर्मान्प्रवक्ष्यामि यथावृत्तो भवेन्नृप' (**मनुस्मृ.** अ. ७ श्लो. १) इत्यत्र पृथङ्नृपग्रहणात्करग्रहणस्य रक्षार्थत्वाच्च रक्षणस्य दण्डप्रणयनायत्तत्वादिति ॥ ३६८ ॥

इति श्री**पद्मनाभभट्टोपाध्याया**त्मजस्य श्रीमत्परमहंसपरिव्राजक**विज्ञानेश्वर**भट्टारकस्य कृतौ २० **ऋजुमिताक्षरायां याज्ञवल्क्य**धर्मशास्त्रविवृतौ सदाचारः प्रथमोऽध्यायः समाप्तः।

**उत्तमो**पपदस्येयं शिष्यस्य कृतिरात्मनः। धर्मशास्त्रस्य विवृति**र्विज्ञानेश्वरयोगिनः** ॥ १ ॥



**याज्ञवल्क्य**मुनिशास्त्रगता विवृतिर्न कस्य विहिता विदुषः।
प्रमिताक्षराऽपि विपुलार्थवती परिषिञ्चति श्रवणयोरमृतम् ॥ १ ॥

॥ **श्रीरस्तु** ॥

# अथ प्रायश्चित्ताध्यायः ॥

## अथाशौचप्रकरणम् १

श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः । श्रीगुरुभ्यो नमः । गृहस्थाश्रमिणां नित्यनैमित्तिका धर्मा उक्ताः । अभिषेकादिगुणयुक्तस्य गृहस्थविशेषस्य गुणधर्माश्च प्रदर्शिताः । अधुना तदधिकारसंकोचहेतुभूताशौचप्रतिपादनमुखेन तेषामपवादः प्रतिपाद्यते । आशौचशब्देन च कालः स्नानाद्यपनोद्यः ५ पिण्डोदकदानादिविधेः अध्ययनादिपर्युदासस्य च निमित्तभूतः पुरुषगतः कश्चनातिशयः कथ्यते न पुनः कर्मानधिकारमात्रम् । 'अशुद्धा बान्धवाः सर्वे' इत्यादावशुद्धत्वाभिधानात् । अत्राशुद्धशब्दस्य च व्यवहारेऽनाहिताग्निदीक्षितादावनधिकारिमात्रे प्रयोगाभावात् वृद्धव्यवहारव्युत्पत्तिनिबन्धनत्वाच्च शब्दार्थावगतेः । किंच यद्याशौचिनां दानादिनिषेधदर्शनात् तदप्ययोग्यत्वमाशौचशब्दाभिधेयं कल्प्यते तर्हि उदकदानादिविधिदर्शनात् तद्योग्यत्वमप्याभिधेयं स्यात् तत्रानेकार्थकल्पनादोषप्रसंग इत्युपेक्षणीयोऽयं १० पक्षः ॥

तत्राशौचिभिः सपिण्डाद्यैर्यत्कर्तव्यं तत्तावदाह

**ऊनद्विवर्षं निखनेन्न कुर्यादुदकं ततः ।**
**आश्मशानादनुव्रज्य इतरो ज्ञातिभिर्मृतः ॥ १ ॥**
**यमसूक्तं तथा गाथा जपद्भिर्लौकिकाग्निना ।** १५
**स दग्धव्य उपेतश्चेदाहिताग्न्यावृतार्थवत् ॥ २ ॥**

ऊने अपरिपूर्णे द्वे वर्षे यस्यासावूनद्विवर्षस्तं प्रेतं **निखनेत्** भूमाववटं कृत्वा निदध्यान्न पुनर्दहेदित्यर्थः । **न** च 'सकृत्प्रसिञ्चन्त्युदकमि'त्यादिभिः प्रेतोद्देशेन विहितमुदकदानाद्यौर्ध्वदेहिकं **कुर्यात्** । अयं च गन्धमाल्यानुलेपनादिभिरलंकृत्य शुचौ भूमौ श्मशानादन्यत्रास्थिनिचयरहितायां बहिर्ग्रामान्निखननीयः । यथाह **मनुः** (अ. ५ श्लो. ६८) । "ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा २० बहिः । अलङ्कृत्य शुचौ भूमावस्थिसंचयनादृते ॥ नास्य कार्योऽग्निसंस्कारो नास्य कार्योदकक्रिया । अरण्ये काष्ठवत्त्यक्त्वा क्षिपेयुस्त्र्यहमेव तु" ॥ अरण्ये काष्ठवत्त्यक्त्वेत्यस्यायमर्थः । यथाऽरण्ये काष्ठं त्यक्त्वोदासीनास्तद्विषये भवन्ति तथोनद्विवार्षिकमपि खातायां भूमौ परित्यज्य तद्विषये श्राद्धाद्यौर्ध्वदेहिकेषु उदासीनैर्भवितव्यमित्याचारादिप्राप्तश्राद्धाद्यभावोऽनेन दृष्टान्तेन सूच्यते । स च घृतेनाभ्यज्य यमगाथाः पठद्भिर्निधातव्यः । "ऊनद्विवार्षिकं प्रेतं घृताक्तं निखनेद्बहिः । यमगाथा गायमानो यम- २५ सूक्तमनुस्मरन्निति" यमस्मरणात् ॥

१ अ० ५ श्लोके ।

**ततस्तस्मादूनाद्द्विवार्षिकादितरः** पूर्णद्विवर्षो यो **मृतो**ऽसौ श्मशानपर्यन्तं **ज्ञातिभिः** सपिण्डैः समानोदकैश्च ज्येष्ठपुरःसरै**रनुव्रज्यो**ऽनुगन्तव्योऽस्मादेव वचनात् ऊनद्विवर्षस्यानुगमनमनियतमिति गम्यते ॥ 'अनुगम्य च परेयिवांसमित्यादि' **यमसूक्तम्**। यमदैवत्या **गाथाश्च जपद्भिर्लौकिकेना**संस्कृते**नाग्निना** दग्धव्यो यदि जाताग्निर्नास्ति। तत्सद्भावे तु तन्मथितेन दग्धव्यो न लौकि-
५ केन। तस्याग्निसंपाद्यकार्यमात्रार्थत्वेनोत्पत्तेः लौकिकाग्निश्च चाण्डालाग्न्यादिव्यतिरिक्तो ग्राह्यः। "चाण्डालाग्निरमेध्याग्निः सूतिकाग्निश्च कर्हिचित्। पतिताग्निश्चिताग्निश्च न शिष्टग्रहणोचिताः" इति **देवल**स्मरणात् ॥

**लौगाक्षिणा** चात्र विशेष उक्तः। "तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेव च। सर्वेषां कृतचूडानामन्यत्रापीच्छया द्वयमिति" ॥ अयमर्थः। चौलकर्मानन्तरकाले नियमेनाग्न्युदकदानं कार्यम्।
१० अन्यत्रापि नामकरणादूर्ध्वं अकृतचूडेऽपीच्छया प्रेताभ्युदयकामनया द्वयं अग्न्युदकदानात्मकं तूष्णीं कार्यम्। न नियमेनेति विकल्पः। **मनुना**ऽप्यत्र विशेषो दर्शितः (अ. ५ श्लो. ७०)। "नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया। जातदन्तस्य वा कुर्यान्नाम्नि वाऽपि कृते सति"। उदकग्रहणं साहचर्यादग्निसंस्कारस्याऽप्युपलक्षणार्थम्। 'नात्रिवर्षस्येति' वचनात्। कुलधर्मापेक्षया चूडोत्कर्षेऽपि वर्षत्रयादूर्ध्वमग्न्युदकदानादिनियमोऽवगम्यते। **लौगाक्षि**वचनाद्वर्षत्रयात्प्रागपि कृतचूडस्य तयोर्नियम
१५ इति विवेचनीयम्।

**उपेतश्चेद्य**द्युपनीतस्तर्हि **आहिताग्न्यावृता** आहिताग्नेर्दाहप्रक्रियया स्वगृह्यादिप्रसिद्धया लौकिकाग्निनैव दग्धव्यः। **अर्थवत्प्र**योजनवत्। अयमर्थः। यद्यस्य क्लृप्तद्वारं कार्यरूपं प्रयोजनं संभवति भूमिजोषणप्रोक्षणादि तत्तदुपादेयम्। यत्पुनर्लुप्तप्रयोजनं पात्रयोजनादि तन्निवर्तते। तथा लौकिकाग्निविधानेन उपनीतस्य अनाहिताग्नेर्गृह्याग्निना दाहविधानेन च अपहतप्रयोजनत्वादाहवनीया-
२० देरपि निवृत्तिरिति ॥ अग्न्यन्तरविधानं च **वृद्धयाज्ञवल्क्येनो**क्तम्। "आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः। अनाहिताग्निरेकेन लौकिकेनापरो जनः" इति।

न च शूद्रेण श्मशानं प्रति अग्निकाष्ठादिनयनं कार्यम्। "यस्यानयति शूद्रोऽग्निं तृणं काष्ठं हवींषि च। प्रेतत्वं हि सदा तस्य स चाधर्मेण लिप्यते" इति **यम**स्मरणात्। तथा दाहश्च स्नपनानन्तरं कार्यः। 'प्रेतं दहेच्छुभैर्गन्धैः स्नापितं स्रग्विभूषितमिति' स्मरणात्। **प्रचेतसा**ऽप्युक्तम्। "स्नानं
२५ प्रेतस्य पुत्राद्यैर्वस्त्राद्यैः पूजनं ततः। नग्नदेहं दहेन्नैव किञ्चिद्देयं परित्यजेदिति"। किञ्चिद्देयमिति शववस्त्रैकदेशं श्मशानवास्यर्थं देयं परित्यजेदित्यर्थः ॥

प्रेतनिर्हरणेऽपि **मनुना** विशेषो दर्शितः (अ. ५ श्लो. १०४)। "न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण हारयेत्। अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंपर्कदूषिता ॥" अत्र च स्वेषु तिष्ठत्सु इत्यविवक्षितम्। अस्वर्ग्यत्वादिदोषश्रवणात् ॥ "दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत्। पश्चिमोत्तरपूर्वैस्तु
३० यथासंख्या द्विजातयः" ॥ तथा **हारीतो**ऽपि। 'न ग्रामाभिमुखं प्रेतं हरेयुरिति' ॥

यदा तु प्रोषितमरणे शरीरं न लभ्यते तदाऽस्थिभिः प्रतिकृतिं कृत्वा तेषामप्यलाभे पर्णशरैः **शौनकादिगृह्यो**क्तमार्गेण प्रतिकृतिं कृत्वा संस्कारः कार्यः। आशौचं चात्र दशाहादिकमेव। "आहि-

ताग्निश्चेत्प्रवसन् म्रियेत पुनः संस्कारं कृत्वा शववदाशौचमिति " **वसिष्ठ**स्मरणात् (अ. ४ सू. ३७)॥ अनाहिताग्निस्तु त्रिरात्रं "सुपिष्टैर्जलसंमिश्रैर्दग्धव्यश्च तथाग्निना । असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा स बान्धवैः । एवं पर्णशरं दग्ध्वा त्रिरात्रमशुचिर्भवेदिति " वचनात् ॥

ततश्चायमर्थः । नामकरणादर्वाङ्निखननमेव न चोदकदानादि । तत ऊर्ध्वं यावत् त्रिवर्षं वैकल्पिकमग्न्युदकदानम् । ततः परं यावदुपनयनं तूष्णीमेवाग्न्युदकदानं नियतं वर्षत्रयात्प्रागपि ५ कृतचूडस्य उपनयनादूर्ध्वं पुनराहिताग्न्यावृता दाहं कृत्वा सर्वमौर्ध्वदेहिकं कार्यम् । अयं तु विशेषः । उपनीतस्य लौकिकाग्निना दाहः कार्यः । अनाहिताग्नेर्गृह्याग्निना दाहो यथासंभवं पात्रयोजनं च कार्यम् ॥ १ ॥ २ ॥

संस्कारानन्तरं किं कर्तव्यमित्यत आह

**सप्तमाद्दशमाद्वाऽपि ज्ञातयोऽभ्युपयन्त्यपः । १०**
**अपनःशोशुचदघमनेन पितृदिङ्मुखाः ॥ ३ ॥**

**सप्तमाद्दि**वसादर्वा**ग्दशम**दिवसाद्वा **ज्ञातयः** समानगोत्राः सपिण्डाः समानोदकाश्च ' अपनः-शोशुचदघमि'त्यनेन मन्त्रेण दक्षिणामुखाः **अपः अभ्युपयन्ति** । अभ्युपगमनेन तत्प्रयोजनभूतोदक-दानविशिष्टमभ्युपगमनं लक्ष्यते । एवं मातामहाचार्येष्वनन्तरं उदकदानस्यातिदेशदर्शनात् । एतच्चायु-ग्मासु तिथिषु कार्यम् । 'प्रथमतृतीयपञ्चमसप्तमेषूदकक्रियेति' **गौतम**स्मरणात् (अ. १४ सू. ३७)। १५ एतच्च स्नानानन्तरं कार्यम् ।'शरीरमग्नौ संयोज्यानवेक्षमाणा अपोऽभ्युपयन्तीति ' **शातातप**स्मरणात् ॥

तथा **प्रचेतसा**ऽप्यत्र विशेषो दर्शितः ' प्रेतस्य बान्धवा यथावृद्धमुदकमवतीर्य नोद्धर्षयेयुरुद-कान्ते प्रसिञ्चेयुरपसव्ययज्ञोपवीतवाससो दक्षिणाभिमुखा ब्राह्मणस्योदङ्मुखाः प्राङ्मुखाश्च राजन्यवै-श्ययोरिति ' ॥ स्मृत्यन्तरे तु यावन्त्याशौचदिनानि तावदुदकदानस्यावृत्तिरुक्ता । यथाह **विष्णुः** । ' यावदाशौचं तावत्प्रेतस्योदकं पिण्डं च दद्युरिति ' । तथा **प्रचेतसा**ऽप्युक्तम् । "दिने दिनेऽञ्जली- २० न्पूर्णान्प्रदद्यात्प्रेतकारणात् । तावद्वृद्धिः प्रकर्तव्या यावत्पिण्डः समाप्यत" इति ॥ प्रतिदिनमञ्जलीनां वृद्धिः कार्या यावद्दशमः पिण्डः समाप्यत इत्यर्थः ॥ यद्यप्यनयोर्गुरुलघुकल्पयोरन्यतरानुष्ठानेनापि शास्त्रार्थः सिद्धस्तथापि बहुक्लेशावहत्वेन गुरुतरकल्पे प्रवृत्त्यनुपपत्तेः प्रेतस्योपकारातिशया भविष्यतीति कल्पनीयम् । अन्यथा गुरुतरकल्पाम्नायस्यानर्थक्यप्रसंगात् । **वसिष्ठे**नापिविशेषोऽभिहितः । ( अ. ४ सू. १२ ) " सव्येतराभ्यां पाणिभ्यामुदकक्रियां कुर्वीरन्निति " ॥ ३ ॥ २५

वक्ष्यमाणसकृत्प्रसेकनामगोत्रादिभिर्गुणैर्विशिष्टस्योदकदानस्य समानगोत्रेषु मातामहादिष्वतिदेशमाह

**एवं मातामहाचार्यप्रेतानामुदकक्रिया ।**
**कामोदकं सखिप्रत्तास्वस्रीयश्वशुरर्त्विजाम् ॥ ४ ॥**

यथा सगोत्रसपिण्डानां प्रेतानामुदकं दीयते तथा **मातामहानामाचार्याणां च प्रेतानां** नित्य**मुदकक्रिया** कार्या। **सखा** मित्रं। **प्रत्ताः** परिणीता दुहितृभगिन्यादयः। **स्वस्रीयो** भागिनेयः। ३०

**श्वशुरः** प्रसिद्धः। **ऋत्विजो** याजकाः। एषां सख्यादीनां प्रेतानां **कामोदकं** कार्यम् । काम इच्छा। कामेनोदकदानं कामोदकं । प्रेताभ्युदयकामनायां सत्यामुदक देयमसत्यां न देयमिति अकरणे प्रत्यवायो नास्तीत्यर्थः ॥ ४ ॥

**सकृत्प्रसिञ्चन्त्युदकं नामगोत्रेण वाग्यताः ।**

५ तच्चोदकदानमित्थं कर्तव्यम् । सपिण्डाः समानोदकाश्च मौनिनो भूत्वा प्रेतस्य नामगोत्रे उच्चार्य ' अमुकनामा प्रेतोऽमुकगोत्रस्तृप्यत्विति ' **सकृदे**वोदकं प्रसिञ्चेयुः । ' त्रिर्वा त्रिः प्रत्येकं कुर्युः प्रेतस्तृप्यत्विति ' **प्रचेतः**स्मरणात् ॥ प्रतिदिनमञ्जलिवृद्धिस्तु प्रतिपादितैव ।

तथा अयमपि विशेषस्तेनैवोक्तः ।

"नदीकूलं ततो गत्वा शौचं कृत्वा यथार्थवत् । वस्त्रं संशोधयेदादौ ततः स्नानं समाचरेत् ॥

१० सचैलस्तु ततः स्नात्वा शुचिः प्रयतमानसः । पाषाणं तत आदाय विप्रे दद्याद्दशाञ्जलीन् ॥

द्वादश क्षत्रिये दद्याद्वैश्ये पञ्चदश स्मृताः । त्रिंशच्छूद्राय दातव्यास्ततः संप्रविशेद्गृहम् ॥

ततः स्नानं पुनः कार्यं गृहशौचं च कारयेदिति " ॥

सपिण्डानां मध्ये केषांचिदुदकदानप्रतिषेधमाह

**न ब्रह्मचारिणः कुर्युरुदकं पतितास्तथा ॥ ५ ॥**

१५ ज्ञातित्वे सत्यपि **ब्रह्मचारिणः** समावर्तनपर्यन्तं **पतिताश्च** प्रच्युतद्विजातिकर्माधिकारा उदकादिदानं **न कुर्युः** । ब्रह्मचर्योत्तरकालं पूर्वं मृतानां सपिण्डादीनां उदकदानमाशौचं च कुर्यादेव । यथाह **मनुः** ( अ. ५ श्लो. ८८ ) । " आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात् । समाप्ते तूदकं दत्वा त्रिरात्रमशुचिर्भवेदिति " । आदिष्टी " कस्य ब्रह्मचार्यस्यपोशान कर्म कुरु दिवा मा स्वाप्सीरि"त्यादिवचनादेशयोगाद्ब्रह्मचार्युच्यते ।

२० एतच्च मित्रादिव्यतिरेकेणेति **वक्ष्यति** । 'आचार्यपित्रुपाध्यायानि'त्यत्राचार्यः पुनरेवं मन्यते । आदिष्टीति प्रक्रान्तप्रायश्चित्तः कथ्यते । तस्यैवायमुदकदानादिनिषेधः प्रायश्चित्तरूपव्रतसमाप्त्युत्तरकालमुदकदानाशौचविधिरिति । तथा क्लीबादीनां चोदकादायित्वं निषिद्धम् । " क्लीबाद्या नोदकं कुर्युः स्तेना व्रात्या विधर्मिणः । गर्भभर्तृद्रुहश्चैव सुराप्यश्चैव योषितः " इति **वृद्धमनु**स्मरणात् ॥ ५ ॥

एवमुदकदाने कर्तृविशेषप्रतिषेधमुक्त्वा संप्रदानविशेषेण प्रतिषेधमाह

२५ **पाखण्ड्यनाश्रिताः स्तेना भर्तृघ्न्यः कामगादिकाः ।**
**सुराप्य आत्मत्यागिन्यो नाशौचोदकभाजनाः ॥ ६ ॥**

नरशिरःकपालादि श्रुतिबाह्यलिङ्गधारणं **पाखण्डं** तद्येषां ते **पाखण्डिनः** । **अनाश्रिताः** अधिकारे सत्यप्यकृताश्रमविशेषपरिग्रहाः । **स्तेनाः** सुवर्णाद्युत्तमद्रव्यहारिणः । **भर्तृघ्न्यः** पतिघातिन्यः । **कामगाः** कुलटाः । **आदि**ग्रहणात्स्वगर्भब्राह्मणघातिन्यो गृह्यन्ते । **सुराप्यो** यासां गा सुरा प्रति-

---

१ अग्रे ११ श्लोके.

षिद्वास्तत्पानरताः । **आत्मस्त्यागिन्यः** विषाग्न्युदकोद्बन्धनाद्यैरात्मानं यास्त्यजन्ति । एते पाखण्ड्या-द्यस्त्रिरात्रं दशरात्रं वेति वक्ष्यमाणस्याशौचस्योदकदानाद्यौर्ध्वदेहिकस्य च **भाजना न** भवन्ति । भाजयन्तीति भाजनाः । सपिण्डादीनामाशौचादिनिमित्तभूता न भवन्ति । अतस्तन्मरणे सपिण्डैरुद-कदानादि न कार्यमित्येतत्प्रतिपादनपरं वचनम् ।

अत्र च सुराप्य इत्यादिषु लिङ्गमविवक्षितम् । " लिङ्गं च वचनं देशः कालोऽयं कर्मणः फलम् । मीमांसा कुशलाः प्राहुरनुपादेयपञ्चकमि"त्यनुपादेयगतत्वात् । एतच्च बुद्धिपूर्वविषयम् । यथाह **गौतमः** ( अ. १४ सू. ११ ) । " प्रायोऽनाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनैश्चेच्छतामिति । " प्रायो महाप्रस्थानम् । अनाशकमनशनम् । गिरिशिखरादवपातः प्रपतनम् । अत्र चेच्छतामिति वि-शेषणोपादानात् प्रमादकृते दोषो नास्तीत्यवगन्तव्यम् । " अथ कश्चित् प्रमादेन म्रियेताग्न्युदका-दिभिः । तस्याशौचं विधातव्यं कर्तव्या चोदकक्रियेति " **अंगिरः**स्मरणात् ॥

तथा मृत्युविशेषादपि आशौचादिनिषेधः । "चाण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि । दंष्ट्रि-भ्यश्च पशुभ्यश्च मरणं पापकर्मणाम् ॥ उदकं पिण्डदानं च प्रेतेभ्यो यत्प्रदीयते । नोपतिष्ठति तत्सर्व-मन्तरिक्षे विनश्यतीति " ॥ एतदपि इच्छापूर्वमात्महननविषयम् । **गौतम**वचनेनेच्छापूर्वकमेवोदकेन हतस्याशौचनिषेधस्योक्तत्वात् । अत्रापि 'चाण्डालादुदकात्सर्पादिति' तत्साहचर्यदर्शनाद्बुद्धिपूर्वविषयत्व-निश्चयः । अतो दर्पादिना चाण्डालादीन् हन्तुं गतो यस्तैर्मारितस्तस्यायं ' सर्वत एवात्मानं गोपाये-दिति ' विध्यतिक्रमनिमित्तः पिण्डदानादिनिषेधः । एवं दुष्टदंष्ट्र्यादिग्रहणार्थमाभिमुख्येन दर्पाद्गच्छतो मरणेऽयं निषेध इति अनुसंधेयम् । अयं चाशौचप्रतिषेधो दशाहादिकालावच्छिन्नस्य । ' हतानां नृप-गोविप्रैरन्वक्षं चात्मघातिनामिति ' ( अग्रे २१ श्लोके ) सद्यःशौचस्य वक्ष्यमाणत्वात् ।

तथा दाहादिकमप्येषां न कार्यम् । " नाशौचं नोदकं नाश्रु न दाहाद्यन्त्यकर्म च । ब्रह्म-दण्डहतानां च न कुर्यात्कटधारणमिति " **यम**स्मरणात् । ब्रह्मदण्डहता ब्राह्मणदण्डहताः । प्रेतवहन साधनं खट्वादि कटशब्देनोच्यते । न चाहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेत्येतत् श्रुतिविहिताग्नि-यज्ञपात्रादिप्रतिपत्तिलोपप्रसंगात् अयं स्मार्तो दाहादिनिषेधो विप्रादिहताग्निविषयं नास्कन्दतीत्याशङ्क-नीयम् । यतश्चाण्डालादिहताहिताग्निसंबन्धिनामग्नियज्ञपात्राणां स्मृत्यन्तरे प्रतिपत्त्यन्तरं विधीयते । " वैतानं प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे । पात्राणि तु दहेदग्नौ यजमाने वृथा मृत " इति । तथा तच्छरीरस्यापि प्रतिपत्त्यन्तरमुक्तम् । " आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया । तेषामपि तथा गङ्गातोये संस्थापनं हितमिति " स्मरणात् । तस्मादविशेषेण सर्वेषां दहनादिनिषेधः । अतः स्नेहादिना निषेधातिक्रमे प्रायश्चित्तं कर्तव्यम् । " कृत्वाऽग्निमुदकं स्नानं स्पर्शनं वहनं कथाम् । रज्जुच्छेदाश्रुपातं च तप्तकृच्छ्रेण शुद्ध्यतीति " स्मरणात् । एतच्च प्रत्येकं बुद्धि-पूर्वैव वेदितव्यम् । अबुद्धिपूर्वकरणे तु " एषामन्यतमं प्रेतं यो वहेत दहेत वा । कटोदकक्रियां कृत्वा कृच्छ्रं सान्तपनं चरेदिति " **संवर्तो**क्तं द्रष्टव्यम् । यः पुन"स्तच्छवं केवलं स्पृष्टमश्रु वा पा-तितं यदि । पूर्वोक्तानामकारी चेदेकरात्रमभोजनमिति " स्पर्शाश्रुपातयोरुपवास उक्तः । असौ कृच्छ्रेष्वशक्तश्च । ' तथा बन्धनच्छेदने वा मासं भैक्षाहारस्त्रिषवणं चेति ' **सुमन्तु**ना भैक्षाशित्वमुक्तं तदप्यशक्तस्यैव । एवमन्यान्यपि तद्विषयाणि स्मृतिवाक्यानि व्यवस्थापनीयानि ।

अयं च दाहादिप्रतिषेधो नित्यकर्मानुष्ठानासमर्थजीर्णवानप्रस्थादिव्यतिरिक्तविषयः। तेषामभ्यनुज्ञादर्शनात्। " वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः। आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः॥ तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसंचयः। तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेदिति " स्मरणात्॥

५ एवं येन येनोपाधिना आत्महननं शास्त्रतोऽभ्यनुज्ञायते तत्तद्व्यतिरिक्तमार्गेणात्महनने श्राद्धाद्यौर्ध्वदेहिकेषु निषिद्धेषु किं पुनस्तेषां कार्यमित्यपेक्षायां **वृद्धयाज्ञवल्क्यछागलेया**भ्यामुक्तम्। " नारायणबलिः कार्यो लोकगर्हाभयान्नरैः। तथा तेषां भवेच्छौचं नान्यथेत्यब्रवीद्**यमः**॥ तस्मात्तेभ्योऽपि दातव्यमन्नमेव सदक्षिणमिति॥" **व्यासे**नाप्युक्तम्। "नारायणं समुद्दिश्य शिवं वा यत्प्रदीयते। तस्य शुद्धिकरं कर्म तद्भवेन्नैतदन्यथेति "॥ एवं नारायणबलिः प्रेतस्य शुद्ध्यापादनद्वारेण श्राद्धादिसंप्र-

१० दानत्वयोग्यतां जनयतीति और्ध्वदेहिकमपि सर्वं कार्यमेव। अत एव **षट्त्रिंशन्म**तेऽपि और्ध्वदेहिकस्याभ्यनुज्ञा दृश्यते। " गोब्राह्मणहतानां च पतितानां तथैव च। ऊर्ध्वं संवत्सरात्कुर्यात्सर्वमेवौर्ध्वदेहिकमि"त्येवं संवत्सरादूर्ध्वमेव नारायणबलिं कृत्वौर्ध्वदेहिकं कार्यम्॥

नारायणबलि-प्रयोगः।

**नारायणबलि**श्चेत्थं कार्यः। कस्यांचिच्छुक्लैकादश्यां विष्णुं वैवस्वतं यमं च यथावदभ्यर्च्य तत्समीपे मधुप्लुतघृतांस्तिलमिश्रान्दश पिण्डान्विष्णुरूपेण प्रेतमनुस्मरन् प्रेतनामगोत्रे उच्चार्य दक्षिणाग्रेषु दर्भेषु दक्षिणाभिमुखो दत्त्वा गन्धादिभिरभ्यर्च्य पिण्डप्रवा-

१५ हणान्तं कृत्वा नद्यां क्षिपेत् न पत्न्यादिभ्यो दद्यात्॥ ततस्तस्यामेव रात्र्यामयुग्मान्ब्राह्मणानामन्त्र्योपोषितः श्वोभूते मध्याह्ने विष्ण्वाराधनं कृत्वा एकोद्दिष्टविधिना ब्राह्मणपादप्रक्षालनादितृप्तिप्रश्नान्तं कृत्वा पिण्डपितृयज्ञावृतोल्लेखनाद्यवनेजनान्तं तूष्णीं कृत्वा विष्णवे ब्रह्मणे शिवाय यमाय च परिवारसहिताय चतुरः पिण्डान्दत्वा नामगोत्रसहितं प्रेतं संस्मृत्य विष्णोर्नाम संकीर्त्य पञ्चमं पिण्डं दद्यात्।

२० ततो विप्रानाचान्तान्दक्षिणाभिस्तोषयित्वा तन्मध्ये चैकं गुणवत्तमं प्रेतबुद्ध्या संस्मरन् गोभूहिरण्यादिभिरतिशयेन संतोष्य ततः पवित्रपाणिभिर्विप्रैः प्रेताय तिलादिसहितमुदकं दापयित्वा स्वजनैः सार्धं भुञ्जीत॥

नागबलिविधिः।

सर्पहते त्वयं विशेषः। संवत्सरं यावत्पुराणोक्तविधिना पञ्चम्यां नागपूजां विधाय पूर्णे संवत्सरे नारायणबलिं कृत्वा सौवर्णं नागं दद्यात् गां च प्रत्यक्षाम्। ततः सर्वमौर्ध्वदेहिकं कुर्यात्।

२५

विष्णुपुराणोक्तनारायणबलिः।

नारायणबलिस्वरूपं च **वैष्णवे**ऽभिहितं यथा।

एकादशीं समासाद्य शुक्लपक्षस्य वै तिथिम्। विष्णुं समर्चयेद्देवं यमं वैवस्वतं तथा॥

दश पिण्डान्घृताभ्यक्तान्दर्भेषु मधुसंयुतान्। तिलमिश्रान्प्रदद्याद्वै संयतो दक्षिणामुखः॥

विष्णुं बुद्धौ समासाद्य नद्यम्भसि ततः क्षिपेत्। नामगोत्रग्रहं तत्र पुष्पैरभ्यर्चनं तथा॥

३० धूपदीपप्रदानं च भक्ष्यं भोज्यं तथा परम्। निमन्त्रयेत विप्रान्वै पञ्च सप्त नवापि वा॥

विद्यातपःसमृद्धान्वै कुलोत्पन्नान्समाहितान्। अपरेऽहनि संप्राप्ते मध्याह्ने समुपोषितः॥

विष्णोरभ्यर्चनं कृत्वा विप्रांस्तानुपवेशयेत् । उदङ्मुखान्यथाज्येष्ठं पितृरूपमनुस्मरन् ॥
मनो निवेश्य विष्णौ वै सर्वं कुर्यादतन्द्रितः । आवाहनादि यत्प्रोक्तं देवपूर्वं तदाचरेत् ॥
तृप्तान् ज्ञात्वा ततो विप्रान् तृप्तिं दृष्ट्वा यथाविधि । हविष्यव्यञ्जनेनैव तिलादिसहितेन च ॥
पञ्च पिण्डान्प्रदद्याच्च दैवं रूपमनुस्मरन् । प्रथमं विष्णवे दद्याद्ब्रह्मणे च शिवाय च ॥
यमाय सानुचराय चतुर्थं पिण्डमुत्सृजेत् । मृतं संकीर्त्य मनसा गोत्रपूर्वमतः परम् ॥
विष्णोर्नाम गृहीत्वैवं पञ्चमं पूर्ववत्क्षिपेत् । विप्रानाचम्य विधिवद्दक्षिणाभिः समर्चयेत् ॥
एकं वृद्धतमं विप्रं हिरण्येन समर्चयेत् । गवा वस्त्रेण भूम्या च प्रेतं तं मनसा स्मरन् ॥
ततस्तिलाम्भो विप्रास्तु हस्तैर्दर्भसमन्वितैः । क्षिपेयुर्गोत्रपूर्वं तु नाम बुद्धौ निवेश्य च ॥
हविर्गन्धतिलाम्भस्तु तस्मै दद्युः समाहिताः । मित्रभृत्यजनैः सार्धं पश्चाद्भुञ्जीत वाग्यतः ॥
एवं विष्णुमते स्थित्वा यो दद्यादात्मघातिने । समुद्धरति तं क्षिप्रं नात्र कार्या विचारणा ॥ १०

सर्पदंशनिमित्तं सौवर्णं नागदानं प्रतिकृतिरूपेण **भविष्यत्पुराणे सुमन्तुना**ऽभिहितम्—

"सुवर्णभारनिष्पन्नं नागं कृत्वा तथैव गाम् । व्यासाय दत्त्वा विधिवत्पितुरानृण्यमाप्नुयात्" ॥६॥

एवमुदकदानं सापवादमभिधायानन्तरं किं कार्यमित्यत आह

**कृतोदकान्समुत्तीर्णान्मृदुशाद्वलसंस्थितान् ।**
**स्नातानपवदेयुस्तानितिहासैः पुरातनैः ॥ ७ ॥** १५

कृतमुदकदानं यैस्तान्**कृतोदकान् स्नाता**न्सम्यगुदकादुत्तीर्णान्**मृदुशाद्वले** नवोद्गततृणचयावृतभूभागे सम्यक्स्थितान्पुत्रादीन्कुलवृद्धाः **पुरातनैरितिहासै**र्वक्ष्यमाणैर**पवदेयुः** शोकनिरसनसमर्थैर्वचोभिर्बोधयेयुः ॥ ७ ॥

शोकनिरसनसमर्थेतिहासस्वरूपमाह

**मानुष्ये कदलीस्तम्भनिःसारे सारमार्गणम् ।** २०
**करोति यः स संमूढो जलबुद्बुदसन्निभे ॥ ८ ॥**

मनुष्यशब्देन जरायुजाण्डजादिचतुर्विधभूतजातं लक्ष्यते तस्य भावो **मानुष्यं** तत्र संसरणधर्मित्वेन कदलीस्तम्भवदन्तःसाररहिते **जलबुद्बुदवद**चिरविनश्वरे संसारे **सारस्य** स्थिरस्य **मार्गण**मन्वेषणं **यः करोति स संमूढः** अत्यन्तविनष्टचित्तः; तस्मात्संसारस्वरूपवेदिभिर्भवद्भिरित्थं न कार्यम् ॥ ८ ॥ २५

**पञ्चधा संभृतः कायो यदि पञ्चत्वमागतः ।**
**कर्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना ॥ ९ ॥**

किंच । जन्मान्तरात्मीयशरीरजनितैः कर्मबीजैः स्वफलोपभोगार्थं **पञ्चधा** पृथिव्यादिपञ्चभूतात्मकतया पञ्चप्रकारं **संभृतो** निर्मितः **कायः** स **यदि** फलोपभोगनिवृत्तौ **पञ्चत्वमागतः** पुनः

पृथिव्यादिरूपतां गतस्तत्र भवतां किमर्था परिदेवना । निष्प्रयोजनत्वान्नानुशोचनं कर्तव्यम् । वस्तु-स्थितेस्तथात्वात् । न हि केनचिद्वस्तुस्थितिरतिक्रमितुं शक्यते ॥ ९ ॥

**गन्त्री वसुमती नाशमुदधिर्दैवतानि च ।**
**फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति ॥ १० ॥**

अपि च । नेदमाश्चर्यं मरणं नाम । यतः पृथिव्यादीनि महान्त्यपि भूतानि नाशं गच्छन्ति । तथा समुद्रा अपि जरामरणविरहिणोऽमरा अपि प्रलयसमये अवसानं गच्छन्ति कथमिवास्थिरतया फेन-सन्निभो मरणधर्मा भूतसंघो विनाशं न यास्यति । उचितमेव हि मरणधर्मिणः प्रयाणं । अतो निष्प्रयोजनः शोकसमावेशः ॥ १० ॥

अनिष्टापादकत्वादप्यनुशोचनं न कार्यमित्याह

**श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः ।**
**अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः ॥ ११ ॥**

यस्मादनुशोचद्भिर्बान्धवैर्वदननयननिर्गमितं **श्लेष्माश्रु** वा यस्माद**वशो**ऽकामोऽपि **प्रेतो भुङ्क्ते** तस्मा**न्न रोदितव्यं** किंतु प्रेतहितेप्सुभिः स्वशक्त्यनुसारेण श्राद्धादि**क्रियाः कार्याः** ॥ ११ ॥

**इति संश्रुत्य गच्छेयुर्गृहं बालपुरःसराः ।**
**विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः ॥ १२ ॥**
**आचम्याग्न्यादि सलिलं गोमयं गौरसर्षपान् ।**
**प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः ॥ १३ ॥**

एवं कुलवृद्धवचांसि सम्यगाकर्ण्य त्यक्तशोकाः सन्तो बालानग्रतः कृत्वा **गृहं गच्छेयुः** । गत्वा च **वेश्मनो द्वारि** स्थित्वा **नियताः** संयतमनस्काः **निम्बपत्राणि विदश्य** दशनैः ख-ण्डनं कृत्वा खादित्वा वमनं कृत्वाऽग्न्युदकगोमयसर्षपानालभ्य आदिग्रहणा'दूर्वाप्रवालमग्निवृषभौ वेति' शंखोक्तो दूर्वाङ्कुरवृषभावपि स्पृष्ट्वाऽ**श्मनि च पदं** निधाय **शनै**रस्खलितं वेश्म **प्रविशेयुः** ॥

अतिदेशमाह

**प्रवेशनादिकं कर्म प्रेतसंस्पर्शिनामपि ।**
**इच्छतां तत्क्षणाच्छुद्धिः परेषां स्नानसंयमात् ॥ १४ ॥**

यदेतत्पूर्वोक्तं निम्बपत्रदशनादि वेश्मप्रवेशनान्तं कर्म तन्न केवलं ज्ञातीनामपि तु **परेषामपि** धर्मार्थं प्रेतालङ्कारनिर्हरणादिकं कुर्वतां भवति । प्रवेशनादिकमित्यत्र आदिशब्दो माङ्गलिकत्वात्प्राति-लोमक्रमाभिप्रायः । तेषां च धर्मार्थनिर्हरणादौ प्रवृत्तानां तत्क्षणाच्छुद्धिमिच्छतां असपिण्डानां स्नान-प्राणायामाभ्यामेव शुद्धिः । यथाह **पराशरः** । " अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः । पदे-पदे यज्ञफलमनुपूर्वं लभन्ति ते ॥ न तेषामशुभं किञ्चित्पापं वा शुभकर्मणाम् । जलावगाहनात्तेषां सद्यः शौचं विधीयते " इति ॥ स्नेहादिना निर्हरणे तु **मनूक्तो** विशेषः ( अ. ५

श्लो. १०१।१०२ ) । "असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् । विशुद्ध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥ यद्यन्नमत्ति तेषां तु दशाहेनैव शुद्ध्यति । अनदन्नन्नमह्नैव न चेत्तस्मिन् गृहे वसेत्" इति ॥ अत्रेयं व्यवस्था । यः स्नेहादिना शवनिर्हरणं कृत्वा तदीयमन्नमश्नाति तद्गृहे च वसति तस्य दशाहेनैव शुद्धिः, यस्तु केवलं तद्गृहे वसति न पुनस्तदन्नमश्नाति तस्य त्रिरात्रम् । यः पुनर्निर्हरणमात्र करोति न तद्गृहे वसति न च तदन्नमश्नाति तस्यैकाह इति ॥ एतत्सजातीयविषयम् । ५

विजातीयविषये पुनर्यज्जातीयं प्रेतं निर्हरति तज्जातिप्रयुक्तमाशौचं कार्यम् । यथाह **गौतमः** ( अ. १४ सू. २६ ) । " अवरश्चेद्वर्णः पूर्वं वर्णमुपस्पृशेत्पूर्वो वाऽवरं तत्र तच्छवोक्तमाशौचमिति " ॥ उपस्पर्शनं निर्हरणम् । विप्रस्य शूद्रनिर्हरणे मासमाशौचम् । शूद्रस्य तु विप्रनिर्हरणे दशरात्रमित्येवं शववदाशौचं कार्यमित्यर्थः ॥ १४ ॥

ब्रह्मचारिणं प्रत्याह १०

**आचार्यपित्रुपाध्यायान्निर्हृत्यापि व्रती व्रती ।**
**सकटान्नं च नाश्नीयान्न च तैः सह संवसेत् ॥ १५ ॥**

**आचार्य** उक्तलक्षणः । माता च पिता च **पितरौ** । **उपाध्याय**श्च पूर्वोक्तः । एता**न्निर्हृत्यापि व्रती** ब्रह्मचारी **व्रत्येव** न पुनरस्य व्रतभ्रंशः । कटशब्देनाशौचं लक्ष्यते । तत्सहचरितमन्नं **सकटान्नं** तद्ब्रह्मचारी **नाश्नीयात्** । **न** चाशौचिभिः **सह संवसेत्** । एवं वदता आचार्यादिव्यतिरिक्तप्रेतनिर्हरणे तु ब्रह्मचारिणो व्रतलोप इत्यर्थादुक्तं भवति । अत एव **वसिष्ठे**नोक्तम् (अ. २३ श्लो. ७ ) । ' ब्रह्मचारिणः शवकर्मिणो व्रतान्निवृत्तिरन्यत्र मातापित्रोरिति ' ॥ १५ ॥ १५

आशौचिनां नियमविशेषमाह

**क्रीतलब्धाशना भूमौ स्वपेयुस्ते पृथक्पृथक् ।**
**पिण्डयज्ञावृता देयं प्रेतायान्नं दिनत्रयम् ॥ १६ ॥** २०

क्रीतमयाचितं लब्धं वा अशनं येषां ते **क्रीतलब्धाशनाः** भवेयुरिति शेषः । क्रीतलब्धाशननियमात् तदलाभेऽनशनमर्थात्सिद्धं भवति । अत एव **वसिष्ठः** ( अ. ४ सू. १४।१५ ) । 'गृहान्व्रजित्वा अधःप्रस्तरे त्र्यहमनश्नन्त आसीरन् । क्रीतोत्पन्नेन वर्तेरन्निति' । अधःप्रस्तर आशौचिनां शयनासनार्थस्तृणमयः प्रस्तरः ते च सपिण्डा भूमावेव पृथक्पृथक् शयीरन् न खट्वादौ ॥ **मनुना**ऽप्यत्र विशेषो दर्शितः ( अ. ५ श्लो. ७३ ) । " अक्षारलवणान्नाः स्युर्निमज्जेयुश्च ते त्र्यहम् । मांसाशनं २५ च नाश्नीयुः शयीरंश्च पृथक् क्षिताविति " । तथा **गौतमे**नापि विशेष उक्तः । 'अधः शय्याशायिनो ब्रह्मचारिणः शवकर्मिण ' इति ।

तथा पिण्डपितृयज्ञप्रक्रियया प्राचीनावीतित्वादिरूपया प्रेताय दिनत्रयं पिण्डरूपमन्नं तूष्णीं क्षितौ **देयम्** । यथाह **मरीचः** । " प्रेतपिण्डं बहिर्दद्याद्दर्भमन्त्रविवर्जितम् । प्रागुदीच्यां चरुं कृत्वा स्नातः प्रयतमानस " इति । दर्भमन्त्रविवर्जितत्वमनुपतीतविषयम् । ' असंस्कृतानां भूमौ ३० पिण्डं दद्यात्संस्कृतानां कुशेष्विति ' **प्रचेतः**स्मरणात् । तथा कर्तृनियमश्च **गृह्यपरिशिष्टा**द्विज्ञेयः ।

१ आचारे १४ श्लो. पृ. ९. २ अशक्तौ इत्यपरः ।

'असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान् । प्रथमेऽहनि यो दद्यात्स दशाहं समापयेदिति' ॥ तथा द्रव्यविनिमयश्च **शुनःपुच्छेन** दर्शितः । "शालिना सक्तुभिर्वाऽपि शाकैर्वाऽप्यथ निर्वपेत् । प्रथमेऽहनि यद्द्रव्यं तदेव स्याद्दशाहिकम् ॥ तूर्ष्णीं प्रसेकं पुष्पं च दीपं धूपं तथैव चेति ॥"

पिण्डश्च पाषाणे देयः । 'भूमौ माल्यं पिण्डं पानीयमुपले वा दद्युरिति' **शङ्खस्मरणात्** । न च 'दद्युरिति' बहुवचनेनोदकदानवत्सर्वैः पिण्डदानं कार्यमित्याशङ्कनीयं किंतु पुत्रेणैव कार्यम् । तदभावे प्रत्यासन्नेन सपिण्डानामन्यतमेन । तदभावे मातृसपिण्डादिना कार्यम् । 'पुत्राभावे सपिण्डा मातृसपिण्डाः शिष्याश्च दद्युः तदभावे ऋत्विगाचार्याविति' **गौतमस्मरणात्** (अ. १५ सू. १३।१४) । पुत्रबहुत्वे पुनर्ज्येष्ठेनैव कार्यम् । "सर्वैरनुमतिं कृत्वा ज्येष्ठेनैव तु यत्कृतम् । द्रव्येण वा विभक्तेन सर्वैरेव कृतं भवेदिति" **मरीचिस्मरणात्** । पिण्डसंख्यानियमश्च । ब्राह्मणस्य दश पिण्डाः क्षत्रियस्य द्वादशैवेत्येवमाशौचदिवससंख्यया **विष्णुनाऽ**भिहितः । 'यावदाशौचं प्रेतस्योदकं पिण्डमेकं च दद्युरिति' ॥ तथा **स्मृत्यन्तरे**ऽपि । "नवभिर्दिवसैर्दद्यान्नव पिण्डान्समाहितः । दशमं पिण्डमुत्सृज्य रात्रिशेषे शुचिर्भवेदिति" ॥ शुचित्ववचनमपरेद्युः क्रियमाणश्राद्धार्थब्राह्मणनिमन्त्रणाभिप्रायेण । **योगीश्वरेण** तु पिण्डत्रयदानमभिहितं । अनयोश्च गुरुलघुकल्पयोरुदकदानविषयोक्ता व्यवस्था विज्ञेया ।

अत्रापरः **शातातपीयो** विशेषः । "आशौचस्य तु ह्रासेऽपि पिण्डान्दद्याद्दशैव त्विति" ॥ त्रिरात्राशौचिनां पुनः **पारस्करेण** विशेषो दर्शितः । "प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः । द्वितीये चतुरो दद्यादस्थिसंचयनं तथा ॥ त्रींस्तु दद्यात्तृतीयेऽह्नि वस्त्रादि क्षालयेत्तथेति" ॥ १६ ॥

**जलमेकाहमाकाशे स्थाप्यं क्षीरं च मृन्मये ।**

किंच । **जलं क्षीरं च मृन्मये** पात्रद्वये पृथक् पृथगाकाशे शिक्यादावेकाहं स्थापनीयम् । अत्र विशेषानुपादानात्प्रथमेऽहनि कार्यम् । तथा **पारस्कर**वचनात् । 'प्रेतात्र स्नाहीत्युदकं स्थाप्यं पिब चेदमिति क्षीरम्' ॥

तथाऽस्थिसंचयनं च प्रथमादिदिनेषु कार्यम् । तथाह **संवर्तः** । "प्रथमेऽह्नि तृतीये वा सप्तमे नवमे तथा । अस्थिसंचयनं कार्यं दिने तद्गोत्रजैः सहेति" । क्वचिद्द्वितीये त्वस्थिसंचय इत्युक्तम् । **वैष्णवे** तु 'चतुर्थे दिवसेऽस्थिसंचयनं कुर्यात् तेषां च गङ्गाम्भसि प्रक्षेप' इति । अतोऽन्यतमस्मिन्दिने स्वगृह्योक्तविधिनाऽस्थिसंचयनं कार्यम् ।

**अङ्गिरसा** चात्र विशेषो दर्शितः । "अस्थिसंचयने यागो देवानां परिकीर्तितः । प्रेतीभूतं तमुद्दिश्य यः शुचिर्न करोति चेत् ॥ देवतानां तु यजनं तं शपन्त्यथ देवताः" ॥ देवताश्चात्र श्मशानवासिन्यः । तत्र पूर्वदग्धाः 'श्मशानवासिनो देवाः शवानां परिकीर्तिता' इति तेनैवोक्तम् । अतस्तान्देवानचिरमृतं च प्रेतमुद्दिश्य धूपदीपादिभिः पिण्डरूपेण चान्नेन तत्र पूजा कार्येत्युक्तं भवति ।

तथा वपनं च दशमेऽहनि कार्यम् । "दशमेऽहनि संप्राप्ते स्नानं ग्रामाद्बहिर्भवेत् । तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि चेति" **देवलस्मरणात्** ॥ तथा **स्मृत्यन्तरे**ऽपि । "द्वितीयेऽहनि कर्तव्यं क्षुरकर्म प्रयत्नतः । तृतीये पञ्चमे वाऽपि सप्तमे वा प्रदानत" इति । श्राद्धप्रदानादर्वागनियम

इति यावत् । वपनं च केषामित्याकाङ्क्षायामापस्तम्बेनोक्तम् । 'अनुभाविनां च परिवापन-मिति' । अयमर्थः । शावं दुःखमनुभवन्तीत्यनुभाविनः सपिण्डास्तेषां चाविशेषेण वपनमुताल्पवयस्का-मित्यपेक्षायामिदमेवोपतिष्ठते । अनुभाविनां परिवापनमिति । अनु पश्चाद्भवन्तीत्यनुभाविनोऽल्पवय-स्कास्तेषां वपनमिति । अनुभाविनः पुत्रा इति केचिन्मन्यन्ते । " गङ्गायां भास्करक्षेत्रे मातापित्रोर्गु-रोर्मृतौ । आधानकाले सोमे च वपनं सप्तसु स्मृतमिति" नियमदर्शनात् ॥ ५

अशुचित्वेन सकलश्रौतस्मार्तकर्माधिकारनिवृत्तौ प्रसक्तायां केषुचिदभ्यनुज्ञानार्थमाह

**वैतानौपासनाः कार्याः क्रियाश्च श्रुतिचोदनात् ॥ १७ ॥**

वितानोऽग्नीनां विस्तारस्तत्र भवा **वैतानाः** त्रेताग्निसाध्या अग्निहोत्रदर्शपूर्णमासाद्याः क्रिया उच्यन्ते । प्रतिदिनमुपास्यत इत्युपासनो गृह्याग्निस्तत्र भवा **औपासनाः** । सायंप्रातर्होमक्रिया उच्यन्ते । ता **वैतानौपासनाः** वैदिक्यः **क्रियाः कार्याः** । कथं वैदिकत्वमिति चेत् **श्रुतिचोदनात्** । तथा १० हि । ' यावज्जीवमग्निहोत्रं जुहुयादि'त्यादिश्रुतिभिरग्निहोत्रादीनां चोदना स्पष्टैव ॥ तथा अहरहः स्वाहा कुर्यात् । अन्नाभावे केनचिदाकाष्ठादिति ' श्रुत्यौपासनहोमोऽपि चोद्यते ।

अत्र च श्रौतत्वविशेषणोपादानात्स्मार्तक्रियाणां दानादीनामननुष्ठानं गम्यते । अत एव **वैया-घ्रपादेनोक्तम्** । "स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके । श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुया-दिति" । श्रौतानां च कार्यत्वाभिधानं नित्यनैमित्तिकाभिप्रायेण । यथाह **पैठीनसिः** । 'नित्यानि विनि- १५ वर्तेरन्वैतानवर्ज्यं शालाग्नौ चैक' इति । नित्यानि विनिवर्तेरन्नित्यविशेषेण आवश्यकानां नित्यनैमि-त्तिकानां निवृत्तौ प्रसक्तायां ' वैतानवर्ज्यमि'त्यग्नित्रयसाध्यावश्यकानां पर्युदासः । 'शालाग्नौ चैक' इति भवानामप्यावश्यकानां पाक्षिकः पर्युदास उक्तः । अतस्तेष्वाशौचं नास्त्येव । काम्यानां पुनः शौचाभावादननुष्ठानम् ।

**मनुना**ऽप्येनैवाभिप्रायेणोक्तम् ( अ. ५ श्लो. ८४ ) । " प्रत्यूहन्नाग्निषु क्रिया " इति । २० अग्निषु क्रिया न प्रत्यूहेदिति अनग्निसाध्यानां पञ्चमहायज्ञादीनां निवृत्तिः । अत एव **संवर्तः** । 'होमं तत्र प्रकुर्वीत शुष्कान्नेन फलेन वा । पञ्चयज्ञविधानं तु न कुर्यान्मृत्युजन्मनोरिति' । वैश्वदेवस्याग्निसाध्य-त्वेऽपि वचनान्निवृत्तिः । ' विप्रो दशाहमासीत वैश्वदेवविवर्जित ' इति तेनैवोक्तत्वात् ॥ 'सूतके कर्मणा त्यागः संध्यादीनां विधीयत ' इति यद्यपि संध्याया विनिवृत्तिः श्रूयते, तथाऽञ्जलिप्रक्षेपादिकं कुर्यात् । ' सूतके सावित्र्या चाञ्जलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्यं ध्यायन्नमस्कुर्यादिति ' **पैठीनसि**स्मरणात् ॥ २५ यद्यपि 'वैतानौपासनाः कार्या ' इति सामान्येनोक्तं तथाऽप्यनेन कारयितव्यम् । ' अन्य एतानि कुर्यु-रिति' **पैठीनसि**स्मरणात् । **बृहस्पति**नाऽप्युक्तम् । " सूतके मृतके चैव अशक्तो श्राद्धभोजने । प्रवासादिनिमित्तेषु हावयेन्न तु हापयेदिति " । तथा स्मार्तत्वेऽपि पिण्डपितृयज्ञश्रवणाकर्माश्वयुज्या-दिकर्म नित्यहोमः कार्य एव । "सूतके तु समुत्पन्ने स्मार्तं कर्म कथं भवेत् । पिण्डयज्ञं चरुं होममसगो-त्रः" **जातूकर्ण्य**स्मरणात् । ३०

यद्यपि साङ्गे कर्मण्यकर्तृत्वं तथाऽपि स्वद्रव्यत्यागात्मकं प्रधानं स्वयं कुर्यात् । तस्यान्यन-निष्पाद्यत्वात् । अत एवोक्तम् । ' श्रौते कर्मणि तत्काल स्नातः शुद्धिमवाप्नुयादिति' । यत्पुनर्दानं

प्रतिग्रहो होमः स्वाध्यायश्च निवर्तत' इति होमप्रतिषेधः स काम्याभिप्रायो वैश्वदेवाभिप्रायो वा व्यवस्थापनीयः । तथा सूतकान्नभोजनमपि न कार्यम् । 'उभयत्र दशाहानि कुलस्यान्नं न भुज्यत' इति **यम**स्मरणात् । उभयत्र जननमरणयोः । दशाहानीत्याशौचकालोपलक्षणम् । कुलस्य सूतकयुक्तस्य संबन्ध्यन्नं असकुल्यैर्न भोक्तव्यं । सकुल्यानां पुनर्न दोषः । 'सूतके तु कुलस्यान्नमदोषं **मनु**-
५ रब्रवीदिति' **तेनै**वोक्तत्वात् ।

अयं च निषेधो दातृभोक्त्रोरन्यतरेण जनने मरणे वा ज्ञाते सति वेदितव्यः । 'उभाभ्यामपरिज्ञाते सूतकं नैव दोषकृत् । एकेनापि परिज्ञाते भोक्तुर्दोषमुपावहेदिति' **षट्त्रिंशन्मते** दर्शनात् ॥ तथा विवाहादिषु सूतकोत्पत्तेः प्राक् ब्राह्मणार्थं पृथक्कृतमन्नं भोक्तव्यमेव । 'विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके । पूर्वसंकल्पितार्थेषु न दोषः परिकीर्तित' इति **बृहस्पति**स्मरणात् । तथाऽपरोपि विशेषः
१० **षट्त्रिंशन्मते** दर्शितः । "विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके । परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः ॥ भुञ्जानेषु तु विप्रेषु त्वन्तरा मृतसूतके । अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृता" इति ॥

तथाशौचपरिग्रहत्वेऽपि केषुचिद्द्रव्येषु दोषाभावः । यथाह **मरीचिः** । 'लवणे मधुमांसे च पुष्पमूलफलेषु च । शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयेषु च ॥ तिलौषधाजिने चैव पक्कापक्के स्वयंग्रहः । पण्येषु चैव सर्वेषु नाशौचं मृतसूतके' इति । पक्कं भक्ष्यजातं मोदकादि । अपक्कं तण्डुलादि । स्वयंग्रह
१५ इति स्वयमेव स्वाम्यनुज्ञातो गृह्णीयादित्यर्थः । पक्कापक्काभ्यनुज्ञातमन्नं सत्रप्रवृत्तविषयम् । 'अन्नसत्रप्रवृत्तानामामन्नमगर्हितम् । भुक्त्वा पक्कान्नमेतेषां त्रिरात्रं तु पयः पिबेदि'**त्यङ्गिरः**स्मरणात् । अत्र पक्कशब्दो भक्ष्यव्यतिरिक्तौदनादिविषयः । शवसंसर्गनिमित्ताशौचे **त्वङ्गिरसा** विशेष उक्तः । 'आशौचं यस्य संसर्गादापतेद्गृहमेधिनः । क्रियास्तस्य न लुप्यन्ते गृह्याणां च न तद्भवेदिति' । तदाशौचं केवलं गृहमेधिन एव न पुनस्तद्गृहे भवानां भार्यादीनां तद्द्रव्याणां च भवेदित्यर्थः । अतिक्रान्ताशौचेऽप्ययमे-
२० वार्थः **स्मृत्य**न्तरे दर्शितः । 'अतिक्रान्ते दशाहे तु पश्चाज्जानाति चद्गृही । त्रिरात्रं सूतकं तस्य न तद्द्रव्यस्य कर्हिचिदिति' ॥ १७ ॥

एवमाशौचिनो विधिप्रतिषेधरूपान्धर्मानभिधायाधुना आशौचनिमित्तं कालनियमं चाह

**त्रिरात्रं दशरात्रं वा शावमाशौचमिष्यते ।**
**ऊनद्विवर्ष उभयोः सूतकं मातुरेव हि ॥ १८ ॥**

२५ **शवनिमित्तं शावम्** । सूतकशब्देन च जननवाचिना तन्निमित्तमाशौचं लक्ष्यते । एवं च वदता जननमरणयोराशौचनिमित्तत्वमुक्तं भवति । तच्च जननमरणमुत्पन्नज्ञातमेव निमित्तम् । 'निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म चे'त्यादि**लिङ्ग**दर्शनात् । तथा 'विगतं तु विदेशस्थं शृणुयायो ह्यनिर्दशम् । यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेदि'त्यादिवाक्यारम्भसामर्थ्याच्च । उत्पत्तिमात्रापेक्षत्वे ह्याशौचस्य दशाहाद्याशौचकालनियमास्तत्तत्प्रभृतिका
३० एवेति ॥ अनिर्दशज्ञातिमरणश्रवणे दशरात्रशेषमेवाशौचमर्थात्सिध्यतीति । यच्छेषं दशरात्रस्येत्यनारम्भणीयं स्यात् तस्माज्ज्ञातमेव मरणं जननं च निमित्तं तच्चोभयनिमित्तमपि आशौचं त्रिरात्रं दशरात्रं चेष्यते **मन्वा**दिभिः ॥

आशौचनिमित्तानि कालनियमांश्चाह ।

अत्राशौचप्रकरणे अहर्ग्रहणं रात्रिग्रहणं वा अहोरात्रोपलक्षणार्थम् । मन्वादिभिरिष्यत इति वचनं तदुक्तसपिण्डसमानोदकरूपविषयभेदप्रदर्शनार्थम् ॥ तथा हि । " दशाहं शावमाशौचं सपिण्डेषु विधीयते । जननेऽप्येवमेव स्यान्निपुणां शुद्धिमिच्छताम् ॥ जन्मन्येकोदकानां तु त्रिरात्राच्छुद्धिरिष्यते। शवस्पृशो विशुद्ध्यन्ति त्र्यहात्तूदकदायिन " ( वासिष्ठे ४ अ. सू. १६।२० **मनुस्मृ.** अ. ५ श्लो. ५९।६१।६४ ) इत्येतैर्वाक्यैस्त्रिरात्रदशरात्रयोः समानोदकसपिण्डविषयत्वेन व्यवस्था कृता । अतः सपिण्डानां सप्तमपुरुषावधिकानामविशेषेण दशरात्रम् । समानोदकानां त्रिरात्रमिति ॥ यत्पुनः स्मृत्यन्तरवचनम् । 'चतुर्थे दशरात्रं स्यात्षण्निशाः पुंसि पञ्चमे । षष्ठे चतुरहाच्छुद्धिः सप्तमे त्वहरेव त्विति ' तद्विगीतत्वान्नादरणीयम् । यद्यप्यविगीतं तथाऽपिमधुपर्काङ्गपश्वालम्भनवत् लोकविद्विष्टत्वान्नानुष्ठेयम् । ' अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न त्विति ' **मनु**स्मरणात् । न च सप्तमे प्रत्यासन्ने सपिण्ड एकाहो विप्रकृष्टाष्टमादिषु समानोदकेषु त्र्यहमिति युक्तम् ।

एवमविशेषेण सपिण्डानामाशौचे प्राप्ते क्वचिन्नियमार्थमाह । **ऊनद्विवर्षे** संस्थिते **उभयोरेव** मातापित्रोर्दशरात्रमाशौचं । न सर्वेषां सपिण्डानाम् । तेषां तु वक्ष्यति 'आदन्तजननात्सद्य' इति । तथा च **पैङ्ग्यः** । ' गर्भस्थे प्रेते मातुर्दशाहं जात उभयोः कृते नाम्नि सोदराणां चेति ' । अथवा अयमर्थः । ऊनद्विवर्षे संस्थिते उभयोर्मातापित्रोरेव अस्पृश्यत्वलक्षणमाशौचं न सपिण्डानाम् । तथा **स्मृत्यन्तरे** । 'ऊनद्विवर्षे प्रेते मातापित्रोरेव नेतरेषामिति' अस्पृश्यत्वलक्षणमभिप्रेतं इतरस्य पुनः कर्मण्यनधिकारलक्षणस्य । सपिण्डेष्वपि ' आदन्तजन्मनः सद्य' इत्यादिभिर्विहितत्वात् ।

अथ दृष्टान्तः । **सूतकं मातुरेव हीति** । यथा सूतकं जनननिमित्तमस्पृश्यत्वलक्षणमाशौचं । मातुरेव केवलं तथोनद्विवर्षोपरमे मातापित्रोरेवास्पृश्यत्वमिति । ऊनद्विवर्षे सपिण्डानामस्पृश्यत्वं प्रतिषेधताऽन्यत्रास्पृश्यत्वमभ्यनुज्ञातं भवति । तथा च **देवलः** । ' स्वाशौचकालाद्विज्ञेयं स्पर्शनं च त्रिभागतः । शूद्रविट्क्षत्रविप्राणां यथाशास्त्रं प्रचोदितमिति ' । एतच्चानुपनीतप्रयाणनिमित्ते अतिक्रान्ताशौचे च त्रिरात्रादौ वेदितव्यम् । उपनीतविषयेऽपि तेनैवोक्तम् । 'दशाहादित्रिभागेन कृते संचयने क्रमात् । अङ्गस्पर्शनमिच्छन्ति वर्णानां तत्त्वदर्शिनः ॥ त्रिचतुःपञ्चदशभिः स्पृश्या वर्णाः क्रमेण तु । भोज्यान्नो दशभिर्विप्रः शेषां द्वित्रिषड्डुत्तरैरिति' ॥ द्व्युत्तरैर्दशभिः त्र्युत्तरैर्द्वादशभिः षडुत्तरैः पञ्चदशभिरिति द्रष्टव्यम् ॥ १८ ॥

जनननिमित्तमस्पृश्यत्वलक्षणमाशौचमाह[1]

**पित्रोस्तु सूतकं मातुस्तदसृग्दर्शनाद्ध्रुवम् ।**
**तदहर्न प्रदुष्येत पूर्वेषां जन्मकारणात् ॥ १९ ॥**

**सूतकं** जनननिमित्तमस्पृश्यत्वलक्षणमाशौचं **पित्रो**र्मातापित्रोरेव न सर्वेषां सपिण्डानाम् । तच्चास्पृश्यत्वं **मातुर्ध्रुवं** दशाहपर्यन्तं स्थिरमित्यर्थः । कुतस्त**दसृग्दर्शनात्** । तस्याः संबन्धित्वेनासृजो दर्शनात् ॥ अत एव **वसिष्ठः** ( अ. ४ सू. २२ ) ।

जननाशौचमाह ।

१ पूर्व श्लोक १५६ आचाराध्याये पठितम् । २ अग्रे २३ श्लोके,

' नाशौचं विद्यते पुंसः संसर्गं चेन्न गच्छति । रजस्तत्राशुचि ज्ञेयं तच्च पुंसि न विद्यत इति ' । पितुस्तु ध्रुवं न भवति स्नानमात्रेणास्पृश्यत्वं निवर्तते । यथाह **संवर्तः** । 'जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते । माता शुद्ध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुरिति ' । माता शुद्ध्येद्दशाहेनेत्येतत्संव्यवहार-योग्यतामात्रम् । अदृष्टार्थेषु पुनः कर्मसु **पैठीनसिना** विशेष उक्तः । 'सूतिकां पुत्रवतीं विंशतिरात्रेण ५ कर्माणि कारयेत् । मासेन स्त्रीजननीमिति ' । **अङ्गिरसा** च सपिण्डानामस्पृश्यत्वाभावः स्पष्टीकृतः । ' सूतके सूतिकावर्ज्यं संस्पर्शो न निषिध्यते । संस्पर्शे सूतिकायास्तु स्नानमेव विधीयते " इति ।

यस्मिन्दिवसे कुमारजननं **तदहर्न प्रदुष्येत** । तन्निमित्तदानाद्यधिकारापहारकृन्न भवतीत्यर्थः । यस्मात्तस्मिन्नहनि **पूर्वेषां** पित्रादीनां पुत्ररूपेण जन्म उत्पत्तिस्तस्मात्तदहर्न प्रदुष्येत ॥ तथा च **वृद्धयाज्ञवल्क्येनो**क्तम् । " कुमारजन्मदिवसे विप्रैः कार्यः प्रतिग्रहः । हिरण्यभूगवाश्वाजवास:- १० शय्यासनादिषु ॥ तत्र सर्वं प्रतिग्राह्यं कृतान्नं न तु भक्षयेत् । भक्षयित्वा तु तन्मोहाद्द्विजश्चांद्रायणं चरे-दिति ' ॥ **व्यासे**नाप्यत्र विशेष उक्तः । "सूतिकावासनिलया जन्मदा नाम देवताः । तासां यागनिमित्तं तु शुद्धिर्जन्मनि कीर्तिता ॥ प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा । त्रिष्वेतेषु न कुर्वीत सूतकं पितृजन्मनि " ॥ **मार्कण्डेये**नाऽप्युक्तम् । " रक्षणीया तथा षष्ठी निशा तत्र विशेषतः । रात्रौ जागरणं कार्यं जन्मदानां तथा बलिः ॥ पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः । रात्रौ जागरणं कुर्युर्दशम्यां १५ चैवं सूतक " इति ॥ १९ ॥

आशौचमध्ये पुनर्जनने मरणे वा जाते ' प्रतिनिमित्तं नैमित्तिकमावर्तत ' इति न्यायेन पुनर्दशाहाद्याशौच-प्राप्तौ तदपवादमाह

## अन्तरा जन्ममरणे शेषाहोभिर्विशुद्ध्यति ।

वर्णापेक्षया वयोवस्थापेक्षया वा यस्य यावानाशौचकालस्तदन्तरा तन्मध्ये ततो न्यूनस्य वाऽऽशौचस्य निमित्तभूते जनने मरणे वा जाते पूर्वाशौचावशिष्टैरेवाहोभिर्वि-शुद्ध्यति । न पुनः पश्चादुत्पन्नजननादिनिमित्तं पृथक्पृथगाशौचं कार्यम् ॥

२० आशौचसंपाते निर्णयः ।

यदा पुनरल्पाद्वर्तमानाशौचाद्दीर्घकालमाशौचमन्तरा पतति तदा न पूर्वशेषेण शुद्धिः । यथा-**होशनाः** । "स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि । न पूर्वेण विशुद्धिः स्यात्स्वकालेनैव शुद्ध्य-तीति " । **यमो**ऽप्याह । ' अहोवृद्धिमदाशौचं पश्चिमेन समापयेदिति' ।

२५ अत्र ' चान्तरा जन्ममरणे ' इति यद्यप्यविशेषेणाभिहितं तथापि न सूतकान्तर्वर्तिनः शावस्य पूर्वाशौचशेषेण शुद्धिः । यथाहाङ्गिराः । "सूतके मृतके चेत्स्यान्मृतके त्वथ सूतकम् । तत्राधिकृत्य मृतकं शौचं कुर्यान्न सूतकमिति" । तथा **षट्त्रिंशन्मतेऽपि** । " शावाशौचे समुत्पन्ने सूतकं तु यदा भवेत् । शावेन शुद्ध्यते सूतिर्न सूतिः शावशोधिनीति " । तस्माच्च सूतकान्तःपातिनः शावस्य पूर्वशेषेण शुद्धिः । किंतु शावान्तःपातिन एव सूतकस्य । तथा सजातीयान्तःपातित्वेऽपि शावस्य कचि-३० त्पूर्वशेषेण शुद्धेरपवादः **स्मृत्यन्तरे** दर्शितः । " मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता । पितुः

१ सूतके.

शेषेण शुद्धिः स्यान्मातुः कुर्यात्तु पक्षिणीमिति ” । अयमर्थः । मातरि पूर्वं मृतायां तन्निमित्ताशौच-मध्ये यदि पितुरुपरमः स्यात्तदा न पूर्वशेषेण शुद्धिः किंतु पितुः प्रयाणनिमित्ताशौचकालेनैव शुद्धिः कार्या । तथा पितुः प्रयाणनिमित्ताशौचमध्ये मातरि स्वर्यातायामपि न पूर्वशेषमात्राच्छुद्धिः किंतु पूर्वाशौचं समाप्योपरि पक्षिणीं क्षिपेदिति ॥

तथाऽऽशौचसान्निपातकालविशेषकृतोऽप्यपवादो **गौतमेनो**क्तः ( अ. १४ सू. ६।७ )। ५
“ रात्रिशेषे सति द्वाभ्यां । प्रभाते सति तिसृभिरिति ” । अयमर्थः । रात्रिमात्रावशिष्टे पूर्वाशौचे यद्या-शौचान्तरं सन्निपतेत् तर्हि पूर्वाशौचं समाप्यानन्तरं द्वाभ्यां रात्रिभ्यां शुद्धिः । प्रभाते पुनस्तस्या रात्रेः पश्चिमे यामे जननाद्याशौचान्तरसन्निपाते सति तिसृभी रात्रिभिः शुद्धिः न पुनस्तच्छेषमात्रेण ॥ **शाता-तपेना**प्युक्तम् । ‘रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहादिति’ । प्रेतक्रिया पुनः सूतकसन्निपातेऽपि न निवर्तत इति **तेनै**वोक्तम् । “अन्तर्दशाहे जननात्पश्चात्स्यान्मरणं यदि । प्रेतमुद्दिश्य कर्तव्यं पिण्ड- १०
दानं स्वबन्धुभिः ॥ प्रारब्धे प्रेतपिण्डे तु मध्ये चेज्जननं भवेत् । तथैवाशौचपिण्डास्तु शेषान्दद्याद्य-थाविधीति” ॥

तथा शावाशौचयोः सन्निपातेऽपि प्रेतकृत्यं कार्यम् । तुल्यन्यायत्वात् । तथा जातकर्मादिक-मपि पुत्रजन्मनिमित्तं आशौचान्तरसन्निपातेऽपि कार्यमेव । तथाह प्रजापतिः । “ आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत् । कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुद्ध्यतीति ॥ ” १५

पूर्णप्रसवकालजननाशौचमभिधायाधुना अप्राप्तकालगर्भनिःसरणनिमित्तमाशौचमाह

**गर्भस्रावे मासतुल्या निशाः शुद्धेस्तु कारणम् ॥ २० ॥**

स्रवतिर्यद्यपि लोके द्रवद्रव्यकर्तृके परिस्यन्दे प्रयुज्यते तथाप्यत्र द्रवाद्रवद्रव्यसाधारणरूपेऽधः-पतने वर्तते । कुतो द्रवत्वस्य प्रथममास एव संभवात्तत्र च मासतुल्या निशा इति बहुवचनानुपपत्तेः । **गर्भस्रावे** यावन्तो गर्भग्रहणमासास्तत्समसंख्याका २०
**निशाः शुद्धेः कारणम्** ।

अकाले गर्भनिःसरणे आशौचम् ।

एतच्च स्त्रिया एव । ‘गर्भस्रावे मासतुल्या रात्रयः स्त्रीणां स्नानमात्रमेव पुरुषस्येति’ **वृद्धवसिष्ठ**-स्मरणात् । यत्पुन**र्गौतमेन** ( अ. १४ सू. १६ ) ‘ त्र्यहं वेति ’ त्रिरात्रमुक्तं तन्मासत्रया-दर्वाग्वेदितव्यम् । “ गर्भस्रुत्यां यथामासमचिरे तूत्तमे त्रयः । राजन्ये तु चतूरात्रं वैश्ये पञ्चाहमेव तु ॥ अष्टाहेन तु शूद्रस्य शुद्धिरेषा प्रकीर्तितेति ” **मरीचिस्मरणात्** । अचिरे मासत्रयादर्वाक् गर्भ- २५
स्रावे उत्तमे ब्राह्मणजातौ त्रिरात्रमित्यर्थः ।

एतच्च षण्मासपर्यन्ते द्रष्टव्यम् । सप्तमादिषु पुनः परिपूर्णमेव प्रसवाशौचं कार्यम् । तत्र परि-पूर्णाङ्गगर्भस्य जीवतो निर्गमदर्शनात् । तत्र च लोके प्रसवशब्दप्रयोगात् । “ षण्मासाभ्यन्तरे याव-द्गर्भस्रावो भवेद्यदा । तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते ॥ अत ऊर्ध्वं स्वजात्युक्तं तासामाशौच-मिष्यते । सद्यः शौचं सपिण्डानां गर्भस्य पतने सतीति ” स्मरणात् ॥ ३०

एतच्च सपिण्डानां सद्यःशौचविधानं द्रवभूतगर्भपतने वेदितव्यम् । यत्पुन**र्वसिष्ठवचनम्** (अ. ४ सू. ३४ ) । “ऊनद्विवार्षिके प्रेते गर्भस्य पतने च सपिण्डानां त्रिरात्रमिति ’ । तत्पञ्च-

मषष्ठयोः कठिनगर्भपतनविषयम्। "आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः। अत ऊर्ध्वं प्रसूतिः स्याद्दशाहं सूतकं भवेत्॥ स्रावे मातुस्त्रिरात्रं स्यात्सपिण्डाशौचवर्जनम्। पाते मातुर्यथामासं पित्रादीनां दिनत्रयमिति" **मरीचि**स्मरणात्॥ सप्तममासप्रभृतिमृतजनने जातमृते वा सपिण्डानां जननिमित्तं परिपूर्णमाशौचम्। 'जातमृते मृतजाते वा सपिण्डानां दशाहमिति' **हारीत**स्मरणात्। 'अतः ५ सूतके चेदौत्थानादाशौचं सूतकवदिति' **पारस्कर**वचनाच्च। औत्थानादासूतिकायां उत्थानाद्दशाहमिति यावत्। सूतकवदिति शिशूपरमनिमित्तोदकदानरहितमित्यर्थः। **बृहन्मनुरपि**। "दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः। शावाशौचं न कर्तव्यं सूत्याशौचं विधीयत" इति। तथा च **स्मृत्यन्तरमपि**। 'अन्तर्दशाहोपरतस्य सूतकाहोभिरेवाशौचमिति'।

एवमादिवचननिचयपर्यालोचनया सपिण्डानां जनननिमित्ताशौचसंकोचो नास्तीति गम्यते। १० यत्पुनर्**बृहद्विष्णु**वचनम्। "जाते मृते मृतजाते वा कुलस्य सद्यः शौचमिति" तच्छिशूपरमनिमित्तस्याशौचस्य स्नानाच्छुद्धिप्रतिपादनपरं न प्रसवनिमित्तस्य। तथा च **पारस्करः**। 'गर्भे यदि विपत्तिः स्याद्दशाहं सूतकं भवेत्'। सपिण्डानां प्रसवनिमित्तस्य विद्यमानत्वात्। 'जीवञ्जातो यदि प्रेयात्सद्य एव विशुद्ध्यतीति' प्रेताशौचाभिप्रायम्। तथा च **शङ्खे**नोक्तम्। 'प्राङ्नामकरणात्सद्यः शौचमिति'। यत्पुनः **कात्यायन**वचनम्। 'अनिवृत्ते दशाहे तु पञ्चत्वं यदि गच्छति। सद्य १५ एव विशुद्धिः स्यान्न प्रेतं नोदकक्रियेति'। तदपि **वैष्ण**वेन समानार्थम्। यदा तु 'न प्रेतं नैव सूतकमिति' पाठस्तदा सूतकमस्पृश्यत्वं नैव पित्रादीनां भवतीत्यर्थः। अथवाऽयमर्थः। अन्तर्दशाहे यदि शिशूपरमस्तदा न प्रेताशौचं यदि तत्र सपिण्डजननं तदा सूतकमपि नैव कार्यं किंतु पूर्वाशौचेनैव शुद्धिरिति॥

यत्तु **बृहन्मनु**वचनम्। 'जीवञ्जातो यदि ततो मृतः सूतक एव तु। सूतकं सकलं मातुः २० पित्रादीनां त्रिरात्रकमिति'। यच्च **बृहत्प्रचेतो**वचनम्। 'मुहूर्तं जीवतो बालः पञ्चत्वं यदि गच्छति। मातुः शुद्धिर्दशाहेन सद्यः शुद्धास्तु गोत्रिण' इति। तत्रेयं व्यवस्था। जननानन्तरं नाभिवर्धनात्प्राङ्मृतौ पित्रादीनां जनननिमित्तमाशौचं दिनत्रयम्। सद्यः शौचं त्वग्निहोत्राद्यर्थम्। 'अग्निहोत्रार्थं स्नानोपस्पर्शनात्तत्कालं शौचमिति' **शङ्ख**स्मरणात्। नाभिवर्धनोत्तरकालं तु शिशुप्रयाणेऽपि जनननिमित्तं संपूर्णमाशौचं सपिण्डानाम्। "यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम्। छिन्ने नाले ततः पश्चा- २५ त्सूतकं तु विधीयत" इति **जैमिनि**स्मरणात्। **मनु**नाऽप्ययमर्थो दर्शितः (अ. ५ श्लो. ६६)। "रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुद्ध्यति। रजस्युपरते साध्वी स्नानेन स्त्री रजस्वलेति" पूर्वभागस्यार्थो दर्शितः।

उत्तरस्य त्वयमर्थः। रजसि निःसरणादुपरते निवृत्ते रजस्वला स्त्री स्नानेन साध्वी दैवादिकर्मयोग्या भवति। स्पर्शनादिविषये पुनरनुपरतेऽपि रजसि चतुर्थेऽहनि स्नानाच्छुद्धा भवति। तदुक्तं ३० **वृद्धमनु**ना। 'चतुर्थेऽहनि संशुद्धा भवति व्यावहारिकीति'। तथा **स्मृत्यन्तरम्**। 'शुद्धा भर्तुश्चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला। दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुद्ध्यतीति'। पञ्चमेऽहनीति रजोनिवृत्तिकालोपलक्षणार्थम्। यदा रजोदर्शनादारभ्य पुनः सप्तदशदिनाभ्यन्तरे रजोदर्शनं तदा अशुचित्वं नास्त्येव। अष्टादशे त्वेकाहाच्छुद्धिः। एकोनविंशे द्व्यहात्। तत उत्तरेषु त्र्यहाच्छुद्धिः। यथाहात्रिः। "रजस्वला यदि स्नाता पुनरेव रजस्वला।

रजस्वलाशुद्धिविवेकः।

अष्टादशदिनादर्वागशुचित्वं न विद्यते ॥ एकोनविंशतेरर्वागेकाहं स्यात्ततो द्व्यहम् । विंशत्प्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेदिति ”। ‘ चतुर्दशदिनादर्वागशुचित्वं न विद्यत ’ इति **स्मृत्यन्तरं** । तत्र स्नान-प्रभृतित्वमभिप्रेतमतो न विरोधः । अयं चाशुचित्वप्रतिषेधो यस्या विंशतिदिनोत्तरकालमेव प्रायशो रजोदर्शनं तद्विषयः । यस्याः पुनरारूढयौवनायाः प्रागेवाष्टादशदिनात्प्राचुर्येण रजोनिर्गमस्तस्यास्त्रि-रात्रमेवाशौचम् ।

तया च यावत्त्रिरात्रं स्नानादिरहितया स्थातव्यम् । “ रजस्वला त्रिरात्रमशुचिर्भवति । सा च नाञ्जीत नाभ्यञ्जीत नाप्सु स्नायादधः शयीत न दिवा स्वप्यात् । न ग्रहान्वीक्षेत नाग्निं स्पृशेत् नाश्नीयान्न रज्जुं सृजेत् न च दन्तान्धावयेत् न हसेन्न च किञ्चिदाचरेत् । अखर्वेण पात्रेण पिबेदञ्जलिना वा पात्रेण लोहितायसेन वेति विज्ञायत ” इति **वसिष्ठ**स्मरणात् ( अ. ५ सू. ४।५ ) ।

*रजस्वलानियमाः ।*

**आङ्गिरसे**ऽपि विशेषः । ‘ हस्तेऽश्नीयान्मृन्मये वा हविर्भुक् क्षितिशायिनी । रजस्वला चतुर्थेऽह्नि स्नात्वा शुद्धिमवाप्नुयादिति ” । **पाराशरे**ऽपि विशेषः “ स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला । पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत् ॥ सिक्तगात्रा भवेदद्भिः साङ्गोपाङ्गा कथञ्चन । न वस्त्रपीडनं कुर्यान्नान्यद्वासश्च धारयेत् ” इति ॥

*रोगावस्थायां विशेषः ।*

**उशनसा**ऽप्यत्र विशेषो दर्शितः । “ ज्वराभिभूता या नारी रजसा च परिप्लुता । कथं तस्या भवेच्छौचं शुद्धिः स्यात्केन कर्मणा ? चतुर्थेऽहनि संप्राप्ते स्पृशेदन्या तु तां स्त्रियम् । सा च चैलावगाह्यापः स्नात्वा स्नात्वा पुनः स्पृशेत् ॥ दशद्वादश-कृत्वो वा आचमेच्च पुनः पुनः । अन्ते च वाससां त्यागस्ततः शुद्धा भवेच्च सा ॥ दद्याच्छक्त्या ततो दानं पुण्याहेन विशुद्ध्यतीति ” । अयं चातुरमात्रे स्नानप्रकारोऽनुसरणीयः । “ आतुरे स्नान उत्पन्ने दशकृत्वो ह्यनातुरः । स्नात्वा स्नात्वा स्पृशेदेनं ततः शुद्ध्येत्स आतुर ” इति **पराशर**स्मरणात् । ( प्रा. अ. श्लो. १९।२० )

यदा तु रजस्वलायाः सूतिकाया वा मृतिर्भवति तदाऽयं स्नानप्रकारः । “ सूतिकायां मृतायां तु कथं कुर्वन्ति याज्ञिकाः । कुम्भे सलिलमादाय पञ्चगव्यं तथैव च । पुण्यर्भिरभिमन्त्र्यापो वाचा शुद्धिं लभेत्ततः । तेनैव स्नापयित्वा तु दाहं कुर्याद्यथाविधि” ॥ रजस्वलायास्तु । “ पञ्चभिः स्नाप-यित्वा तु गव्यैः प्रेतां रजस्वलाम् । वस्त्रान्तरावृतां कृत्वा दाहयेद्विधिपूर्वकामिति” ।

*रजस्वलायाः सूतिकायाश्च मरणे विशेषः ।*

एतच्च रजोदर्शनपुत्रजन्मादि यद्युदयोत्तरकालमुत्पन्नं तदा तद्दिवसप्रभृत्याशौचाहोरात्रगणना कार्या । यदा तु रजन्यां रजोदर्शनपुत्रजन्मादि जातं तदाऽर्धरात्रात्प्राक् जनना-द्युत्पत्तौ पूर्वदिवसैकदेशव्यापित्वेऽपि आशौचस्य तत्पूर्वदिवसप्रभृत्येव गणना कार्येत्येकः कल्पः । रात्रिं त्रेधा विभज्याद्ये भागद्वये जननादौ जाते पूर्वदिनं ग्राह्यमिति द्वितीयः । प्रागुदयादित्यपरः । यथाह **कश्यपः** ।

‘ उदिते तु यदा सूर्ये नारीणां दृश्यते रजः । जननं वा विपत्तिर्वा यस्याहस्तस्य शर्वरी ॥
अर्धरात्रावधिः कालः सूतकादौ विधीयते । रात्रिं कुर्यात्त्रिभागां तु द्वौ भागौ पूर्व एव तु ॥
उत्तरांशः प्रभातेन युज्यते ऋतुसूतके । रात्रावेव समुत्पन्ने मृते रजसि सूतके ॥
पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविरिति ” ॥

एतेषां च कल्पानां देशाचारतो व्यवस्था विज्ञेया। इदं चाशौचमाहिताग्नेरुपरमे संस्कारदिवसप्रभृति कर्तव्यम्। अनाहिताग्नेस्तु मरणदिवसप्रभृति संचयनं तूभयोरिति संस्कारदिवसप्रभृतीति विवेचनीयम्। यथाहाङ्गिराः। "अनग्निमत उत्क्रान्तेः साग्नेः संस्कारकर्मणः। शुद्धिः संचयनं दाहान्मृताहस्तु यथातिथीति"॥ 'साग्नेः संस्कारकर्मण' इति श्रवणादाहि-

आहिताग्निमरणे विशेषः।

५ ताग्नौ पितरि देशान्तरमृते तत्पुत्रादीनामासंस्कारात्संध्यादिकर्मलोपो नास्तीत्यनुसंधेयम्। तथा च **पैठीनसिः**। "अनग्निमत उत्क्रान्तेराशौचं हि द्विजातिषु। दाहादग्निमतो विद्याद्विदेशस्थे मृते संतीति"॥ २०॥

सपिण्डत्वादिना दशाहादिप्राप्तौ क्वचिन्मृत्युविशेषेणापवादमाह।

**हतानां नृपगोविप्रैरन्वक्षं चात्मघातिनाम्।**

१० **नृपो**ऽभिषिक्तः क्षत्रियादिः। **गो**ग्रहणं शृङ्गिदंष्ट्र्यादितिरश्चामुपलक्षणार्थम्। **विप्र**ग्रहणमन्त्यजोपलक्षणम्। एतैर्**हतानां** संबन्धिनो ये सपिण्डास्तेषाम्। विषोद्बन्धनादिभिर्बुद्धिपूर्वमात्मानं ये व्यापादयन्ति ते **आत्मघातिनः**। आत्मघातिग्रहणं 'पाखण्ड्यनाश्रिता' इत्येकयोगोपात्तपतितमात्रोपलक्षणार्थम्। तत्संबन्धिनां **चान्वक्ष**मनुगतमक्षमन्वक्षम्। सद्यःशौचमित्यर्थः। न पुनर्दशाहादिकम्। तथा च **गौतमः** (अ. १४ सू. ८–११)। 'गोब्राह्मण-

दशाहाद्याशौचापवादः।

१५ हतानामन्वक्षम्। राजक्रोधाच्च। युद्धे। प्रायोऽनाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनैश्चेच्छतामिति'। क्रोधग्रहणं प्रमादव्यापादितनिरासार्थम्। अयुद्धग्रहणं युद्धहतस्यैकाहमाशौचमस्तीति ज्ञापनार्थम्। "ब्राह्मणार्थे विपन्नानां योषितां गोग्रहेऽपि च। आहवेऽपि हतानां च एकरात्रमशौचकमिति" स्मरणात्।

एतच्च युद्धकालक्षतेनैव कालान्तरविपन्नस्य। समरमूर्धनि हतस्य पुनः सद्यः शौचम्। यथाह **मनुः** (अ. ५ श्लो. ९८)। "उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य च। सद्यः संतिष्ठते यज्ञस्तथाऽऽ-
२० शौचमिति स्थितिरिति"॥

ज्ञातस्यैव जननादेराशौचनिमित्तत्वाज्जन्मदिनादुत्तरकालेऽपि ज्ञाते दशाहादिप्राप्तावपवादमाह

**प्रोषिते कालशेषः स्यात्पूर्णे दत्त्वोदकं शुचिः॥ २१॥**

**प्रोषिते** देशान्तरस्थे यत्रस्थेन प्रथमदिवस एव सपिण्डजननादिकं न ज्ञायते तस्मिन्सपिण्डे कालस्य दशाहाद्यवच्छिन्नस्य यः शेषोऽवशिष्टकालः स एव शुद्धिहेतुर्भवति। **पूर्णे** पुनराशौचकाले
२५ दशाहादिके प्रेताय**ोदकं दत्त्वा** शुद्धिर्भवति। उदकदानस्य स्नानपूर्वकत्वात्स्नात्वोदकं दत्वा शुचिर्भवति। तदुक्तं **मनुना** (अ. ५ श्लो. ७७)। "निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च। सवासा जलमाप्लुत्य शुद्धो भवति मानवः" इति। **पूर्णे दत्त्वोदकं शुचिरिति**। प्रेतोदकदानसहचरितस्याशौचकालस्य शुद्धिहेतुत्वविधानात् जन्मन्यतिक्रान्ताशौचं सपिण्डानां नास्तीति गम्यते। पितुस्तु निर्दशेऽपि जनने स्नानमस्त्येव। "श्रुत्वा पुत्रस्य जन्म चेति" वचनात्।

३० एतच्च पुत्रग्रहणं जन्मनि सपिण्डानामतिक्रान्ताशौचं नास्तीत्यत्र ज्ञापकम्। अन्यथा "निर्दशं ज्ञातिमरणं श्रुत्वा जन्म च निर्दशमि"त्येवावक्ष्यत्। तथा च **देवलः**। 'नाशुद्धिः प्रसवाशौचे व्यतीतेषु दिनेष्वपीति'। तस्माद्विपत्तावेवातिक्रान्ताशौचमिति स्थितिः॥

केचिदन्यथेमं श्लोकं पठन्ति । 'प्रोषिते कालशेषः स्यादशेषे त्र्यह एव तु । सर्वेषां वत्सरे पूर्णे प्रेते दत्वोदकं शुचिरिति' । प्रोषिते सर्वेषां ब्राह्मणक्षत्रियादीनामविशेषेण कालशेषः शुद्धिहेतुः । अशेषे पुनरतिक्रान्ते दशाहादौ सर्वेषां त्र्यहमेवाशौचम् । संवत्सरे पूर्णे यदि प्रोषितप्रयाणमवगतं स्यात्तदा सर्वो ब्राह्मणादिः स्नात्वोदकं दत्वा शुचिः स्यात् । तथा च **मनुः** (अ. ५ श्लो. ७६)। "संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुध्यतीति" । ५

अयं च त्र्यहो दशाहादूर्ध्वं मासत्रयादर्वाग्द्रष्टव्यः । पूर्वोक्तं सद्यः शौचं तु नवममासादूर्ध्वमर्वाक्संवत्सराद्द्रष्टव्यम् । यत्पुनर्**वासिष्ठं** वचनम् (अ. ४ सू. ३६)। 'ऊर्ध्वं दशाहाच्छ्रुत्वैकरात्रमिति ।' तदूर्ध्वं षण्मासेभ्यो यावन्नवमम्, यदपि **गौतम**वचनम् (अ. १४ सू. १७)। 'श्रुत्वा चोर्ध्वं दशम्याः पक्षिणीमिति' तन्मासत्रयादूर्ध्वमर्वाक्षष्ठात् । तथा च **वृद्धवसिष्ठः** । 'मासत्रये त्रिरात्रं स्यात्षण्मासे पक्षिणी तथा । अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुध्यतीति' । १०

एतच्च मातापितृव्यतिरिक्तविषयम् । "पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः । श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेदिति" **पैठीनसि**स्मरणात् । तथा च **स्मृत्यन्तरेऽपि** । "महागुरुनिपाते तु आर्द्रवस्त्रोपवासिना । अतीतेऽब्देऽपि कर्तव्यं प्रेतकार्यं यथाविधीति" । संवत्सरादूर्ध्वमपि प्रेतकार्यमाशौचोदकदानादिकं कार्यम् । न पुनः स्नानमात्राच्छुद्धिरित्यर्थः ।

पितृपत्न्यामपि मातृव्यतिरिक्तायां स्मृत्यन्तरे विशेषो दर्शितः । "पितृपत्न्यामपेतायां मातृवर्ज्यं द्विजोत्तमः । संवत्सरे व्यतीतेऽपि त्रिरात्रमशुचिर्भवेदिति" । यस्तु नद्यादिव्यवहिते देशान्तरे मृतस्तत्सपिण्डानां दशाहादूर्ध्वं मासत्रयादर्वागपि सद्यः शौचम् । "देशान्तरमृतं श्रुत्वा क्लीबे वैखानसे यतौ । मृते स्नानेन शुध्यन्ति गर्भस्रावे च गोत्रिणः" इति । देशान्तरलक्षणं च **बृहस्पतिनो**क्तम् । "महानद्यन्तरं यत्र गिरिर्वा व्यवधायकः । वाचो यत्र विभिद्यन्ते तद्देशान्तरमुच्यते । देशान्तरं वदन्त्येके षष्टियोजनमायतम् । चत्वारिंशद्वदन्त्यन्ये त्रिंशदन्ये तथैव चेति" । १५ २०

इदं चातिक्रान्ताशौचमुपनीतोपरमविषयम् । न पुनर्वयोवस्थाविशेषाशौचविषयमपि । तथा चोक्तं **व्याघ्रपादेन** । "तुल्यं वयसि सर्वेषामतिक्रान्ते तथैव च । उपनीते तु विषमं तस्मिन्नेवातिकालजमिति" । अयमर्थः । वयसि त्रिवर्षादिरूपे यदाशौच'मादन्तजन्मनः सद्य' इत्यादिवाक्यविहितं तत्सर्वेषां ब्राह्मणादिवर्णानां तुल्यमविशिष्टम् । अतिक्रान्ते दशाहादित्र्यहादिके यदाशौचं तदपि सर्वेषामविशिष्टम् । उपनीते पुनरुपरमे दशद्वादशपञ्चदशत्रिंशद्दिनानीत्येवंविषयमाशौचं ब्राह्मणादीनाम् । तस्मिन्नेवोपनीतोपरम एव अतिकालजमतिक्रान्ताशौचं भवति । न वयोवस्थाशौचातिक्रम इति ॥ २१ ॥ २५

क्षत्रियादिषु दशरात्रस्य सपिण्डाशौचस्यापवादमाह

**क्षत्रस्य द्वादशाहानि विशः पञ्चदशैव तु ।**
**त्रिंशद्दिनानि शूद्रस्य तदर्धं न्यायवर्तिनः ॥ २२ ॥**

क्षत्रियवैश्यशूद्राणां सपिण्डजनने तदुपरमे च यथाक्रमेण द्वादशपञ्चदशत्रिंशद्दिनान्याशौचं भवति । **न्यायवर्तिनः** पुनः **शूद्रस्य** पाकयज्ञद्विजशुश्रूषादिरतस्य **तदर्धं** तस्य मासस्यार्धं पञ्चदशरात्रमाशौचम् । एवं च 'त्रिरात्रं वे'त्येतद्दशरात्रमाशौचं पारिशेष्यात् ब्राह्मणविषये व्यवतिष्ठते । ३०

स्मृत्यन्तरेषु तु क्षत्रियादीनां दशाहादयोऽप्याशौचकल्पा दर्शिताः । यथाह **पराशरः** । "क्षत्रियस्तु दशाहेन स्वकर्मनिरतः शुचिः । तथैव द्वादशाहेन वैश्यः शुद्धिमवाप्नुयात् " ॥ तथा च **शातातपः** । "एकादशाहाद्राजन्यो वैश्यो द्वादशभिस्तथा । शूद्रो विंशतिरात्रेण शुध्येत मृतसूतके"॥ **वसिष्ठस्तु** ( अ. ४ सू. २८।२९ ) 'पञ्चदशरात्रेण राजन्यो विंशतिरात्रेण वैश्यः' इति ॥ ५ **अङ्गिरास्त्वाह** । " सर्वेषामेव वर्णानां सूतके मृतके तथा । दशाहाच्छुद्धिरेतेषामिति **शातातपोऽब्र**वीत् " । इत्येवमनेकोच्चावचाऽऽशौचकल्पा दर्शिताः । तेषां लोके समाचाराभावान्नातीव व्यवस्थाप्रदर्शनमुपयोगीति नात्र व्यवस्था प्रदर्श्यते ।

यदा पुनर्ब्राह्मणादीनां क्षत्रियादयः सपिण्डा भवन्ति तदा **हारीता**द्युक्ताशौचकल्पोऽनुसरणीयः । "दशाहाच्छुध्यते विप्रो जन्महानौ स्वयोनिषु । षड्भिस्त्रिभिरथैकेन क्षत्रविट्शूद्रयोनिष्विति" । **विष्णु**-१० **रप्याह** । " क्षत्रियस्य विट्शूद्रेषु सपिण्डेषु षड्रात्रत्रिरात्राभ्यां वैश्यस्य शूद्रे सपिण्डे षड्रात्रेण शुद्धिः । हीनवर्णानां तूत्कृष्टेषु सपिण्डेषु जातेषु मृतेषु वा तदाऽऽशौचव्यपगमे शुद्धिरिति " ॥ **बौधायनेन** ( परिशिष्टे ३ ) त्वविशेषेण दशाह इत्युक्तम् । " क्षत्रविट्शूद्रजातीया ये स्युर्विप्रस्य बान्धवाः । तेषामशौचे विप्रस्य दशाहाच्छुद्धिरिष्यते " इति ।

अनयोश्च पक्षयोरापदनापद्विषयत्वेन व्यवस्था । दास्यादीनां तु स्वाम्याशौचेन स्पृश्यत्वं । कर्मा-१५ नाधिकारस्तु मासावधिरेव । तदाह**ाङ्गिराः** । " दासी दासश्च सर्वो वै यस्य वर्णस्य यो भवेत् । तद्वर्णस्य भवेच्छौचं दास्यां मासस्तु सूतकमिति । "

प्रतिलोमानां त्वाशौचाभाव एव । 'प्रतिलोमा धर्महीना' इति स्मरणात् ( **गौतमसू**. अ. ४ सू. २० ) । केवलं मृतौ प्रसवे च मलापकर्षणार्थं मूत्रपुरीषोत्सर्गवत् शौचं भवत्येव ॥ २२ ॥

वयोवस्थाविशेषादपि दशाहाद्याशौचस्यापवादमाह

२० **आदन्तजन्मनः सद्य आचूडान्नैशिकी स्मृता ।**
**त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परम् ॥ २३ ॥**

यावता कालेन दन्तानामुत्पत्तिस्तस्मिन्कालेऽतीतस्य बालस्य तत्संबन्धिनां सद्यः शौचं चूडाकरणादर्वाङ्मृतस्य संबन्धिनां नैशिकी निशायां भवा अहोरात्रव्यापिन्यशुद्धिः । व्रतादेश उपनयनम् । ततोऽर्वाक् चूडायाश्चोर्ध्वमतीतस्य त्र्यहमशुद्धिः ।

२५ अत्र च 'आदन्तजन्मनः सद्यः' इति यद्यप्यविशेषेणाभिधानं तथाऽप्यग्निसंस्काराभावे द्रष्टव्यम् । 'अदन्तजाते बाले प्रेते सद्य एव नास्याग्निसंस्कारो नोदकक्रियेति' **वैष्णवे** अग्निसंस्काररहितस्य सद्यःशौचविधानात् । सति त्वग्निसंस्कारे 'अहस्त्वदत्तकन्यासु बालेषु चेति'[1] वक्ष्यमाण एकाहः । तथा च **यमः** । 'अदन्तजाते तनये शिशौ गर्भच्युते तथा । सपिण्डानां तु सर्वेषामहोरात्रमशौचकमिति' ।

---

१ अग्रे २४ श्लोके.

नामकरणात्प्राक्सद्यःशौचमेव नियतम् । ' प्राङ्नामकरणात्सद्यःशौचमिति ' **शङ्ख**स्मरणात् । चूडाकर्म च प्रथमे तृतीये वा वर्षे स्मर्यते । ' चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः । प्रथमेऽब्दे तृतीये वा कर्तव्यं श्रुतिचोदनादिति ' स्मरणात् (**मनु**स्मृ. अ. २ श्लो. ३२) ॥ ततश्च दन्तजननादूर्ध्वं प्रथमवार्षिकचूडापर्यन्तमेकाहः । तत्र त्वकृतचूडस्य दन्तजनने सत्यपि त्रिवर्षं यावदेकाह एव । तथा च **विष्णुः** । ' दन्तजातेऽप्यकृतचूडेऽहोरात्रेण शुद्धिरिति ' । तत ऊर्ध्वं प्रागुपनयनात् त्र्यहः । यत्तु **मनु**वचनम् (अ. ५ श्लो. ६७) । " नृणामकृतचूडानामशुद्धिर्नैशिकी स्मृता । निर्वृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यत " इति तस्याप्ययमेव विषयः । यत्तूनाद्विवर्षमधिकृत्य **तेनै**वोक्तम् (अ. ५ श्लो. ६९) । " अरण्ये काष्ठवत्त्यक्त्वा क्षिपेयुस्त्र्यहमेव त्विति " । यच्च **वसिष्ठ**वचनम् (अ. ४ सू. ३४) । ' ऊनद्विवर्षे प्रेते गर्भपतने वा सपिण्डानां त्रिरात्रमिति ' । तत्संवत्सरचूडाभिप्रायेण । यत्त्व**ङ्गिरो**वचनम् "यद्यप्यकृतचूडो वै जातदन्तश्च संस्थितः । तथाऽपि दाहयित्वैनमाशौचं त्र्यहमाचरेदिति" तद्वर्षत्रयादूर्ध्वं कुलधर्मापेक्षया चौलोत्कर्षे वेदितव्यम् । ' विप्रे न्यूनत्रिवर्षे तु मृते शुद्धिस्तु नैशिकीति ' **तेनै**वाभिहितत्वात् ।

न चायमेकाहो दन्तजननाभाव इति शङ्कनीयम् । न हि न्यूनत्रिवर्षस्य दन्तानुत्पत्तिः संभवति । तथा सत्यपि दन्तजनने अकृतचूडस्यैकाहं वदता **विष्णु**वचनेन विरोधश्च दुष्परिहरः स्यात् । तस्मात्प्राच्येव व्याख्या ज्यायसी । यत्तु **कश्यप**वचनम् । ' बालानामदन्तजातानां त्रिरात्रेण शुद्धिरिति'। तन्मातापितृविषयम् । " निरस्य तु पुमाञ्शुक्रमुपस्पर्शाद्विशुध्यति । बैजिकादभिसंबन्धादनुरुन्ध्यादघं त्र्यहम् " (**मनु**स्मृ. अ. ५. श्लो. ६३) ॥ इति जन्यजनकसंबन्धोपाधिकतया त्रिरात्रस्मरणात् ।

ततश्चायमर्थः । प्राङ्नामकरणात्सद्यः शौचम् । तदूर्ध्वं दन्तजननादर्वागग्निसंस्काराक्रियायां एकाऽहः । इतरथा सद्यः शौचम् । जातदन्तस्य च प्रथमवार्षिकाच्चौलादर्वागेकाहः । प्रथमवर्षादूर्ध्वं त्रिवर्षपर्यन्तं कृतचूडस्य त्र्यहः । इतरस्य त्वेकाहः । वर्षत्रयादूर्ध्वमकृतचूडस्यापि त्र्यहम् । उपनयनादूर्ध्वं सर्वेषां ब्राह्मणादीनां दशरात्रादिकमिति ॥ २३ ॥

इदानीं स्त्रीषु च वयोवस्थाविशेषेणापवादमाह

## अहस्त्वदत्तकन्यासु बालेषु च विशोधनम् ।

अदत्ता अपरिणीता याः कन्यास्तासु कृतचूडासु वाग्दानात्प्रागहोरात्रं विशेषेण शुद्धिकारणम् । सपिण्डानां सापिण्ड्यं च कन्यानां त्रिपुरुषपर्यन्तमेव । ' अप्रत्तानां तु स्त्रीणां त्रिपुरुषी विज्ञायते '[१] इति **वसिष्ठ**स्मरणात् (अ. ४ सू. १८) । बालेषु चानुत्पन्नदन्तेषु अग्निसंस्कारे सत्येकाहो विशोधनम् । अकृतचूडायां तु कन्यायां सद्यः शौचम् । 'अकृतचूडायां तु कन्यायां सद्यः शौचं विधीयत' इत्या**पस्तम्ब**स्मरणात् ।

वाग्दानादूर्ध्वं तु संस्कारात्प्राक्पतिपक्षे पितृपक्षे च त्रिरात्रमेव । यथाह **मनुः** (अ. ५ श्लो. ७२) । " स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुध्यन्ति बान्धवाः । यथोक्तेनैव कल्पेन शुध्यन्ति तु सना-

१ " प्रजानामिति " वासिष्ठे पाठः ।

भय ” इति । बान्धवाः पतिपक्षास्त्रिरात्रेण शुध्यन्ति । सनाभयस्तु पितृपक्षाः सपिण्डा यथोक्तेनैव कल्पेन ‘ निवृत्तचूडकानामि’त्यादिनोक्तेन त्रिरात्ररूपेण न पुनर्दशरात्ररूपेण । विवाहात्प्राक् तस्यायुक्तत्वात् । अत एव **मरीचिः** । “ वारिपूर्वं प्रदत्ता तु या नैव प्रतिपादिता । असंस्कृता तु सा ज्ञेया त्रिरात्रमुभयोः स्मृतामिति” । उभयोः पतिपितृपक्षयोः । विवाहादूर्ध्वं तु **विष्णुना** विशेषो दर्शितः । ५ ‘ संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे तत्प्रसवमरणे चेत्पितृगृहे स्यातां तदैकरात्रं त्रिरात्रं वेति ’ । तत्र प्रसवे एकाहः प्रयाणे त्रिरात्रमिति व्यवस्था ।

इदं तु वयोवस्थाशौचं सर्ववर्णसाधारणम् । क्षत्रियस्य द्वादशाहानीति तद्वर्णविशेषोपादानेनाभिधानात् । अत एव **मनु**ना अनुपात्तवर्णविशेषाशौचविधेः साधारण्यप्रतिपादनार्थं चातुर्वर्ण्याधिकारे सत्यपि पुन‘श्चतुर्णामपि वर्णानां यथावदनुपूर्वशः ’ इत्युक्तम् । तथाऽ**ङ्गिरसा**ऽप्युक्तम् । “ अविशेषेण १० वर्णानामर्वाक्संस्कारकर्मणः । त्रिरात्रात्तु भवेच्छुद्धिः कन्यास्वह्ना विधीयत ” इति । **व्याघ्र**पादवचनं च ‘ तुल्यं वयसि सर्वेषामिति ’ प्राक्प्रदर्शितम् ।

अतो यथा ‘पिण्डयज्ञावृता देयमि’त्यादिः पिण्डोदकदानविधिः सर्ववर्णसाधारणः, यथा वा समानोदकाशौचविधिः ‘ अन्तरा जन्ममरणे ’ इति संनिपाताशौचविधिश्च ‘ यदूर्ध्वं गर्भस्रावे मासतुल्या निशा’ इति, स्रावाशौचविधिः ‘प्रोषिते कालशेषः स्यादशेषे त्र्यहमेव त्विति’ विदेशस्थाशौचविधिश्च, १५ यथा वा गुर्वाद्याशौचविधिः सर्ववर्णसाधारणः, तथा वयोवस्थानिमित्तमप्याशौचं सर्ववर्णसाधारणमेव भवितुमर्हति । अत एव “ क्षत्रे षड्भिः कृते चौले वैश्ये नवभिरुच्यते । ऊर्ध्वं त्रिवर्षाच्छूद्रे तु द्वादशाहो विधीयते ” । तथा “ यत्र त्रिरात्रं विप्राणामाशौचं संप्रदृश्यते । तत्र शूद्रे द्वादशाहः षण्नव क्षत्रवैश्ययोरि”त्यादीनि **ऋष्यशृङ्गा**दिवचनानि विगीतत्वबुद्ध्याऽनाद्रियमाणै**र्धारेश्वरविश्वरूपमेधातिथि**प्रभृतिभिराचार्यैरयमेव साधारणः पक्षोऽङ्गीकृतः । अविगीतानि चार्तानार्तक्षत्रियादिविषय- २० तया व्याख्येयानि ॥

गुर्वादिष्वतिदेशमाह

## गुर्वन्तेवास्यनूचानमातुलश्रोत्रियेषु च ॥ २४ ॥

**गुरु**रुपाध्यायः । **अन्तेवासी** शिष्यः । **अनूचानो**ऽङ्गानां प्रवक्ता । **मातुल**ग्रहणेनात्मबन्धवो मातृबन्धवः पितृबन्धवश्च योनिसंबन्धा उपलक्ष्यन्ते । ते च ‘ पत्नी दुहितर ’ इत्यत्र २५ दर्शिताः । **श्रोत्रिय** एकशाखाध्यायी । ‘ एकां शाखामधीते श्रोत्रिय ’ इति **बौधायन**स्मरणात् । एषूपरतेष्वहोरात्रमाशौचम् ।

यस्तु मुख्यो गुरुः पिता तदुपरमे सपिण्डत्वाद्दशाहमेव । यस्तु पिता पुत्रानुत्पाद्य संस्कृत्य वेदानध्याप्य वेदार्थं ग्राहयित्वा वृत्तिं च विदधाति तस्य महागुरुत्वात्तदुपरमे द्वादशरात्र वा । ‘ महागुरुषु दानाध्ययने वर्जयेदि’**त्याश्वलायने**नोक्तं द्रष्टव्यम् । आचार्योपरमे तु त्रिरात्रमेव । ३० यथाह **मनुः** ( अ. ५ श्लो. ८० ) । “ त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति । तस्य पुत्रे च पत्न्यां च दिवारात्रमिति स्थितिरिति ” । यदा त्वाचार्यादेरन्त्येष्टिं करोति तदा दशरात्रमाशौचम् । ( **मनु**स्मृ. अ. ५ श्लो. ६५ ) । “ गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन् । प्रेताहारैः समं तत्र

दशाहेन विशुध्यतीति " तेनैवोक्तत्वात् । श्रोत्रियस्य तु समानग्रामीणस्य एतदाशौचम् । ' एकाहं सब्रह्मचारिणि । समानग्रामीणे च श्रोत्रिय ' इत्याश्वलायनस्मरणात् (अ. ४ कं. ४ सू. २६।२७)। एकाचार्योपनीतः सब्रह्मचारी । एतच्चासंनिधाने द्रष्टव्यम् । सन्निहिते तु शिष्यादौ त्रिरात्रादि । यथाह **मनुः** ( अ. ५ श्लो. ८१ ) । " श्रोत्रिये तूपसंपन्ने त्रिरात्रमशुचिर्भवेत् । "

" मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु चेति " । उपसंपन्ने मैत्रीप्रातिवेश्यत्वादिना संबन्धे शीलयुक्ते वा । मातुलग्रहणं मातृष्वस्रादेरुपलक्षणार्थम् । बान्धवा इत्यात्मबन्धवो मातृबन्धवः पितृबन्धवश्चोच्यन्ते । तथा च **बृहस्पतिः** । ' त्र्यहं मातामहाचार्यश्रोत्रियेष्वशुचिर्भवेदिति ' । तथा **प्रचेताः** । ' मृते चर्त्विजि याज्ये च त्रिरात्रेण विशुध्यतीति ' ॥ तथा च **वृद्धवसिष्ठः** । "संस्थिते पक्षिणीं रात्रिं दौहित्रे भगिनीसुते । संस्कृते तु त्रिरात्रं स्यादिति धर्मो व्यवस्थितः । पित्रोरुपरमे स्त्रीणामूढानां तु कथं भवेत्" । त्रिरात्रेणैव शुद्धिः स्यादित्याह भगवान्**यमः** ॥ "श्वशुरयोर्भगिन्यां च मातुलान्यां च मातुले । पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम्" ॥ तथा " मातुले श्वशुरे मित्रे गुरौ गुर्वङ्गनासु च । आशौचं पक्षिणीं रात्रिं मृता मातामही यदि "॥ तथा च **गौतमः** (अ. १४ सू. १७।१८) । 'पक्षिणीमसपिण्डे योनिसंबन्धे सहाध्यायिनि चेति ' । योनिसंबन्धा मातुलमातृष्वस्रीयपितृष्वस्रीयादयः । तथा **जाबालिः** । " एकोदकानां तु त्र्यहो गोत्रजानामहः स्मृतम् । मातृबन्धौ गुरौ मित्रे मण्डलाधिपतौ तथेति" ॥ **विष्णुः** । ' असपिण्डे स्ववेश्मनि मृत एकरात्रमिति ' । तथा **वृद्धः** ।

"भगिन्यां संस्कृतायां तु भ्रातर्यपि च संस्कृते । मित्रे जामातरि प्रेते दौहित्रे भगिनीसुते ॥

शालके तत्सुते चैव सद्यः स्नानेन शुध्यति । ग्रामेश्वरे कुलपतौ श्रोत्रिये च तपस्विनि ॥

शिष्ये पञ्चत्वमापन्ने शुचिर्नक्षत्रदर्शनात् । ग्राममध्यगतो यावच्छवस्तिष्ठति कस्यचित् ॥

ग्रामस्य तावदाशौचं निर्गते शुचितामियादि"त्यादीन्याशौचविशेषप्रतिपादकानि स्मृतिवचनान्यन्वेषणीयानि । ग्रन्थगौरवभयादत्र न लिख्यंते । एषु चैकविषयगुरुलघ्वाशौचप्रतिपादकतया परस्परविरुद्धेषु सन्निधिविदेशस्थापेक्षया व्यवस्थाऽनुसंधातव्या ॥ २४ ॥

**अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च ।**
**निवासराजनि प्रेते तदहः शुद्धिकारणम् ॥ २५ ॥**

किंच । **अह**रित्यनुवर्तते । **अनौरसाः** क्षेत्रजदत्तकादयः । तेषु जातेषूपरतेषु वाऽहोरात्रमाशौचम् । तथा **स्वभार्यास्वन्यगता**स्वन्यं प्रतिलोमव्यतिरिक्तं आश्रितासु अतीतासु । अत्राहोरात्रमेव न पुनः सत्यपि सापिण्ड्ये दशरात्रम् । प्रतिलोमाश्रितासु चाशौचाभाव एव । ' पाखण्ड्यनाश्रिता ' इत्यनेन प्रतिषेधात् । एतच्च भार्यापुत्रशब्दयोः संबन्धिशब्दत्वात् यत्प्रातियौगिकं भार्यात्वं पुत्रत्वं च तस्यैवेदमाशौचं । सपिण्डानां त्वाशौचाभावः । अत एव **प्रजापतिः** । " अन्याश्रितेषु दारेषु परपत्नीसुतेषु च । गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्पितेति " । स्वैरिण्याद्यास्तु यमाश्रितास्तस्य तु त्रिरात्रमेव । यथाह **विष्णुः** । " अनौरसेषु पुत्रेषु जातेषु च मृतेषु च । परपूर्वासु भार्यासु प्रसूतासु मृतासु चेति " त्रिरात्रमत्र प्रकृतम् ।

अनयोश्च त्रिरात्रैकरात्रयोः सन्निधिविदेशस्थापेक्षया व्यवस्था । यदा तु पितुस्त्रिरात्रं तदा सपिण्डानामेकरात्रम् । यथाह **मरीचिः** । " सूतके मृतके चैव त्रिरात्रं परपूर्वयोः । एकाहस्तु सपि-

ण्डानां त्रिरात्रं यत्र वै पितुरिति " । किंच । निवसत्यस्मिन्निति निवासः स्वदेश उच्यते । तस्य यो राजा स्वामी विषयाधिपतिः स यस्मिन्नहनि अतीतस्तदहर्मात्रं शुद्धिकारणम् । रात्रौ चेदतीतस्तदा रात्रिमात्रम् । अत एव **मनुः** ( अ. ५ श्लो. ८२ ) । " प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थित " इति ज्योतिषा सह वर्तते इति सज्योतिराशौचम् । अह्नि चेद्यावत्सूर्यदर्शनं रात्रौ चेद्याव- ५ न्नक्षत्रदर्शनमित्यर्थः ॥ २५ ॥

अनुगमनाशौचमाह

**ब्राह्मणेनानुगन्तव्यो न शूद्रो न द्विजः क्वचित् ।**
**अनुगम्याम्भसि स्नात्वा स्पृष्ट्वाऽग्निं घृतभुक्शुचिः ॥ २६ ॥**

**ब्राह्मणेन** असपिण्डेन **द्विजो** विप्रादिः **शूद्रो** वा प्रेतो **नानुगन्तव्यः** । यदि स्नेहादि- १० नाऽनुगच्छति तदाऽ**म्भसि** तडागादिस्थे **स्नात्वाऽग्निं स्पृष्ट्वा** घृतं प्राश्य शुचिर्भवेत् । अस्य च घृतप्राशनस्य भोजनकार्यविधाने प्रमाणाभावान्न भोजनप्रतिषेधः ।

**इदं च** समानोत्कृष्टजातिविषयम् । यथाह **मनुः** ( अ. ५ श्लो. १०३ ) " अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव च । स्नात्वा सचैलः स्पृष्ट्वाऽग्निं घृतं प्राश्य विशुध्यतीति " । ज्ञातयो मातृस पिण्डाः । इतरेषां तु विहितत्वान्न दोषः । निकृष्टजात्यनुगमने तु **स्मृत्यन्तरो**क्तं द्रष्टव्यम् । तत्र १५ शूद्रानुगमने "प्रेतीभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः । अनुगच्छेन्नीयमानं स त्रिरात्रेण शुध्यति । त्रिरात्रे तु ततश्चीर्णे नदीं गत्वा समुद्रगाम् । प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यतीति" **पराशरो- क्तम्** । 'क्षत्रियानुगमने त्वहोरात्रम् । मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमाशौचम् । अस्निग्धे त्वहोरात्रं शवानु- गमने चैकमिति ' **वसिष्ठोक्तम्** (अ. २३ सू. २४।२६) । वैश्यानुगमने पुनः पक्षिणी तथा क्षत्रि- यस्यानन्तरं वैश्यानुगमने अहोरात्रमेकान्तरशूद्रानुगमने पक्षिणी वैश्यस्य शूद्रानुगमने एकाह इत्यूहनी- २० यम् ॥ तथा रोदनेऽपि **पारस्करे**णोक्तम् । " मृतस्य बान्धवैः सार्धं कृत्वा तु परिदेवनम् । वर्जयेत्त- दहोरात्रं दानं श्राद्धादिकर्म चेति" । तथाऽलङ्करणमपि न कार्यम् । "कृच्छ्रपादोऽसपिण्डस्य प्रेतालङ्क- रणे कृते । अज्ञानादुपवासः स्यादशक्तौ स्नानमिष्यते " इति **शङ्खेन** प्रायश्चित्तस्याम्नातत्वात् ॥२६॥

सपिण्डाशौचे क्वचिदपवादमाह

**महीपतीनां नाशौचं हतानां विद्युता तथा ।**
२५ **गोब्राह्मणार्थे संग्रामे यस्य चेच्छति भूमिपः ॥ २७ ॥**

यद्यपि महीशब्देन कृत्स्नं भूगोलकमभिधीयत तथाऽप्यत्र सकलायाः क्षितेरेकभर्तृकत्वानुपपत्तेः महीपतीनामिति बहुवचनानुरोधाच्च तदेकदेशभूतानि मण्डलानि लक्ष्यन्ते । तत्पालनाधिकृतानां क्षत्रि- यादीनामभिषिक्तानां **नाशौचम्** । तैराशौचं न कार्यमित्यर्थः । तथा विद्युद्धतानां गोब्राह्मणरक्षणार्थं विपन्नानां च संबन्धिनो ये सपिण्डास्तैरप्याशौचं न कार्यम् । यस्य च मन्त्रिपुरोहितादेर्भूमिपतयोऽन- ३० न्यसाध्यमन्त्राभिचारादिकर्मसिद्ध्यर्थमाशौचाभावमिच्छन्ति तैरपि न कार्यम् ।

---

१ "चैवमिति" वासिष्ठे पाठः ।

अत्र च महीपतीनां यदसाधारणत्वेन विहितं प्रजापरिरक्षणं तथेन दानमानसत्कारव्यवहारदर्शनादिना विना न संभवति तत्रैवाशौचाभावो न पुनः पञ्चमहायज्ञादिष्वपि । तथा च **मनुः** ( अ. ५श्लो. ९४ )। " राज्ञो माहात्मिके स्थाने सद्यः शौचं विधीयते । प्रजानां परिरक्षार्थमासनं चात्र कारणमिति "। **गौतमेना**प्युक्तम् (अ. १४ सू. ४२)। 'राज्ञां च कार्यविघातार्थमिति' राजभृत्यादेरप्याशौचं न भवति। यथाह **प्रचेताः** । " कारवः शिल्पिनो वैद्या दासीदासास्तथैव च । राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्तिताः " इति । कारवः सूपकारादयः । शिल्पिनाश्चित्रकारचैलनिर्णेजकादयः ।

अयं चाशौचाभावः किंविषय इत्यपेक्षायां कर्मनिमित्तैः शब्दैरतत्तदसाधारणस्य कर्मणो बुद्धिस्थत्वात्तत्रैव द्रष्टव्यः । अत एव **विष्णुः** । ' न राज्ञां राजकर्मणि न व्रतिनां व्रते न सत्रिणां सत्रे न कारूणां कारुकर्मणीति ' प्रतिनियतविषयमेवाशौचाभावं दर्शयति। **शातातपीये**ऽप्युक्तम् । "मूल्यकर्मकराः शूद्रा दासीदासास्तथैव च । स्नाने शरीरसंस्कारे गृहकर्मण्यदूषिताः" इति। इयं च दासादिशुद्धिः रपरिहरणीयतया प्राप्तस्पर्शविषयेत्यनुसंधेयम् । अत एव **स्मृत्यन्तरम्** । 'सद्यः स्पृश्यो गर्भदासो भक्तदासस्त्र्यहाच्छुचिः ' । तथा । " चिकित्सको यत्कुरुते तदन्येन न शक्यते । तस्माच्चिकित्सकः स्पर्शे शुद्धो भवति नित्यशः " इति ॥ २७ ॥

**ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम् ।**
**सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥ २८ ॥**
**दाने विवाहे यज्ञे च संग्रामे देशविप्लवे ।**
**आपद्यपि हि कष्टायां सद्यः शौचं विधीयते ॥ २९ ॥**

किंच । **ऋत्विजो** वरणसम्भृताः वैतानौपासनाः कर्तृविशेषाः । दीक्षया संस्कृता **दीक्षितास्**तेषां **यज्ञियं** यज्ञे भवं **कर्म कुर्वतां सद्यः शौचं विधीयत** इति सर्वत्रानुषङ्गः । 'दीक्षितस्य वैतानौपासनाः कार्याः' इत्यनेन सिद्धेऽप्यधिकारे पुनर्वचनं यजमानेषु स्वयंकर्तृत्वविधानार्थं सद्यः स्नानेनविशुद्ध्यर्थं च । **सत्रि**ग्रहणेन सन्ततानुष्ठानतुल्यतयाऽन्नसत्रप्रवृत्ता लक्ष्यन्ते । मुख्यानां तु सत्रिणां दीक्षितग्रहणेनैव सिद्धेः । **व्रति**शब्देन कृच्छ्रचान्द्रायणादिप्रवृत्ताः स्नातकव्रतप्रायश्चित्तप्रवृत्ताश्चोच्यन्ते । तथा ब्रह्मचर्यादिव्रतयोगिनः श्राद्धकर्तुर्भोक्तुश्च ग्रहणम् ।

तथा **स्मृत्यन्तरम्** ।

"नित्यमन्नप्रदस्यापि कृच्छ्रचान्द्रायणादिषु । निर्वृत्ते कृच्छ्रहोमादौ ब्राह्मणादिषु भोजने ॥
गृहीतनियमस्यापि तस्मादन्यस्य कस्यचित् । निमंत्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि ॥
निमन्त्रितस्य विप्रस्य स्वाध्यायादिरतस्य च । देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित् ॥
प्रायश्चित्तप्रवृत्तानां दातृब्रह्मविदां तथेति " ॥

सत्रिणां व्रतिनां सत्रे व्रते च शुद्धिर्न कर्ममात्रे संव्यवहारे वा । तथा च **विष्णुः** । ' न व्रतिनां व्रते न सत्रिणां सत्रे ' इति ॥

**ब्रह्मचर्य**पकुर्वाणको नैष्ठिकश्च यस्तु नित्यं दातैव न प्रतिग्रहीता स वैखानसो **दातृ**शब्देनोच्यते । **ब्रह्मवि**द्यतिः । एतेषां च त्रयाणामाश्रमिणां सर्वत्र शुद्धिः । विशेषप्रमाणाभावात् । **दाने** च पूर्वसंकल्पितद्रव्यस्य नाशौचम् । ' पूर्वसंकल्पितं द्रव्यं दीयमानं न दुष्यतीति ' **क्रतु**स्मरणात् ।

स्मृत्यन्तरे चात्र विशेष उक्तः । ' विवाहोत्सवयज्ञादिष्वन्तरा मृतसूतके । शेषमन्नं परैर्देयं दातॄन्भोक्तॄंश्च न स्पृशेदिति ' । **यज्ञे** वृषोत्सर्गादौ । **विवाहे** च पूर्वसंभृतसंभारे ।

तथा च **स्मृत्यन्तरे** । 'यज्ञे सम्भृतसम्भारे विवाहे श्राद्धकर्मणीति ' सद्यः शौचमत्र प्रकृतम् । विवाहग्रहणं पूर्वप्रवृत्तचौलोपनयनादिसंस्कारकर्मोपलक्षणम् । यज्ञग्रहणं च पूर्वप्रवृत्तदेवप्रतिष्ठारामाद्युत्सव-५ मात्रोपलक्षकम् । ' न देवप्रतिष्ठोत्सर्गविवाहेषु न देशविभ्रमे नापद्यपि च कष्टायामाशौचमिति ' **विष्णु**स्मरणात् । **संग्रामे** युद्धे । 'संग्रामे समुपोढे राजानं संनाहयेदि'त्याश्वलायनायुक्तसंनहनविधौ (३।१२।८) प्रास्थानिकशान्तिहोमादौ च **सद्यः** शुद्धिः । देशस्य विस्फोटादिभिरुपसर्गे राजभयाद्वा विप्लवे तदुपशमनार्थे शान्तिकर्मणि सद्यः शौचम् ।

विप्लवाभावेऽपि कश्चिद्देशविशेषेण **पैठीनसिना** शुद्धिरुक्ता । " विवाहदुर्गयज्ञेषु यात्रायां तीर्थ-१० कर्मणि । न तत्र सूतकं तद्वत्कर्म यज्ञादि कारयेदिति " । तथा कष्टायामप्यापदि [illegible]न मुमूर्षावस्थायां दुरितशमनार्थे दाने तथा सङ्कुचितवृत्तेश्च क्षुत्परिश्रान्तमातापित्रादिबहुकुटुम्बस्य तद्भरणोपयोगिनि प्रतिग्रहे सद्यः शुद्धिः ।

इयं च शुद्धिर्यस्य सद्यः शौचं विनाऽऽर्त्युपशमो न भवति अश्वस्तानिकस्य तद्विषया । यस्त्वेकाहपर्याप्तसंचितधनस्तस्यैकाहः, यस्त्र्यहोपयोगिसंचयी तस्य त्र्यहः, यस्तु चतुरहार्थमापादितद्रव्यः कुम्भी-१५ धान्यस्तस्य चतुरहः, कुसूलधान्यकस्य दशाह इत्येवं यस्य यावत्कालमार्त्यभावस्तस्य तावत्कालमाशौचम् । आपदुपाधिकत्वात् आशौचसङ्कोचस्य । अत एव **मनुना** ( अ. ४ श्लो. ७ ) । " कुशूलधान्यको वा स्यात्कुम्भीधान्यक एव वा । त्र्यहैहिको वाऽपि भवेदश्वस्तनिक एव वे"त्यत्र प्रतिपादितचतुर्विधगृहस्थाभिप्रायेण । " दशाहं शावमाशौचं सपिण्डेषु विधीयते । अर्वाक्संचयनादस्थ्नां त्र्यहमेकाहमेववेति" (**मनु**स्मृतिः अ. ५ श्लो. ५९) कल्पचतुष्टयं प्रतिपादितम् । समानोदकविषयाश्च संकुचिताशौ-२० चकल्पाः पक्षिण्येकाहः सद्यःशौचरूपाः स्मृत्यन्तरे दृष्टाः वृत्तिसङ्कोचोपाधिकतया एव योज्याः ।

अयं चाशौचसङ्कोचो येनैव प्रतिग्रहादिना विनाऽऽर्तिस्तद्विषयो न सर्वत्रेत्यवगन्तव्यम् ॥ **मनुः** । " एकाहाद्ब्राह्मणः शुध्येद्योऽग्निवेदसमन्वितः । त्र्यहात्केवलवेदस्तु विहीनो दशभिर्दिनैः " इत्यादिस्मृत्यन्तरवचनपर्यालोचनयाऽध्ययनज्ञानानुष्ठानयोगिनामेकाहादिना शुद्धिरित्येवं कस्मान्नेष्यते । उच्यते । ' दशाहं शावमाशौचं सपिण्डेषु विधीयत ' इति सामान्यप्राप्तदशाहबाधपुरःसरमेव २५ ' ह्येकाहाद्ब्राह्मणः शुद्ध्येदिति ' विधायकं भवति । बाधकस्य चानुपपत्तिनिबन्धनत्वात् । यावत्यबाधितेऽनुपपत्तिप्रशमो न भवति तावद्बाधनीयम् । अतः किम्पदनेन बाध्यमित्यपेक्षायामपेक्षितविशेषसमर्पणक्षमस्या'ग्निवेदसमन्वित ' इति वाक्यविशेषस्य दर्शनादग्निवेदविषयेऽग्निहोत्रादिकर्मणि स्वाध्याये च व्यवतिष्ठते न पुनर्दानादावपि । एवं चाग्निवेदद्वयोः कार्यान्वयित्वं भवति । इतरथा येनाग्निवेदसाध्यं कर्म कृतं तस्यैकाहाच्छुद्धिरिति पुरुषविशेषोपलक्षणत्वमेव स्यात् ।

न चैतद्युक्तं । एवं च सति, ' प्रत्यूहेन्नाग्निषु क्रियाः । वैतानोपासनाः कार्याः क्रियाश्च श्रुतिचो-३० दिताः । ' तथा 'ब्राह्मणस्य ब्रह्मयज्ञ

भवति । ततः ' उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ' इति दशाहपर्यन्तं भोजनादिकं प्रतिषेध-यद्भिर्यमादिवचनैरविरोधोऽपि सिध्यति । अतः क्वचित्कर्मविशेषे इदमाशौचसंकोचविधानं न पुनः सर्व-संव्यवहारादिगोचरमित्यलमतिप्रपञ्चेन ॥

इदं च स्वाध्यायविषये सद्यःशौचविधानं बहुवेदस्य आहोज्ज्ञमताकृतायामार्तौ द्रष्टव्यम् । इतरस्य तु ' दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते ' इति प्रतिषेध एव । एवं ब्राह्मणादिमध्ये यस्य यावत्कालमाशौचमुक्तं स तस्यानन्तरं स्नात्वा शुध्येत् न तत्कालातिक्रममात्रात् । यथाह मनुः ( अ. ५ श्लो. ९९ ) । " विप्रः शुध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधम् । वैश्यः प्रतोदं रश्मीन्वा यष्टिं शूद्रः कृतक्रियः " इति । अयमर्थः । कृतक्रिय इति प्रत्येकमभिसंबध्यते । विप्रोऽनुभूताशौच-कालः कृतक्रियः कृतस्नानो हस्तेनापः स्पृष्ट्वा शुध्यति । स्पृष्ट्वेति स्पर्शनं क्रियते न स्नानमाचमनं वा । वाहनादिषु तस्यैवानुषङ्गात् । अथवा कृतक्रियो यावदाशौचं कृतोदकादिक्रियः तदनन्तरं विप्रादिरुदकादि स्पृष्ट्वा शुध्येदिति । इत्याशौचकालानन्तरं भाविस्नानप्रतिनिषिध्येनोच्यत इति । क्षत्रियादि-र्वाहनादिकं स्पृष्ट्वा शुध्येदिति ॥ २८ ॥ २९ ॥

कुलव्यापिनीं शुद्धिमभिधायेदानीं प्रसङ्गात्प्रतिपुरुषव्यापिनीं शुद्धिमाह

**उदक्याशुचिभिः स्नायात्संस्पृष्टस्तैरुपस्पृशेत् ।**
**अब्लिङ्गानि जपेच्चैव गायत्रीं मनसा सकृत् ॥ ३० ॥**

**उदक्या** रजस्वला । **अशुचयः** शवचाण्डालपतितसूतिकाद्याः शावाशौचिनश्च । एतैः **संस्पृष्टः स्नायात्** । **तैः** पुनरुदक्याशुचिसंस्पृष्टादिभिः संस्पृष्ट **उपस्पृशेत्** आचामेत् । आचम्या**ब्लिङ्गानि** आपोहिष्ठेत्येवमादीनि त्रीणि मन्त्रवाक्यानि **जपेत्** । त्रिष्वेव बहुवचनस्य चरितार्थत्वात् । तथा **गायत्रीं** च **सकृन्मनसा** जपेत् ।

ननु 'उदक्या संस्पृष्टः स्नायादि'त्येकवचननिर्दिष्टस्य कथं तैरिति बहुवचनेन परामर्शः । सत्यमेव । किंत्वत्र उदक्यादिसंस्पृष्टव्यतिरिक्तस्नानार्हमात्रस्पर्शेऽप्याचमनविधानार्थं तैरिति बहुवचननिर्देश इत्य-विरोधः । ते च स्नानार्हाः स्मृत्यन्तरेऽवगन्तव्याः । यथाह **पाराशरः** । " दुःस्वप्ने मैथुने वान्ते विरिक्ते क्षुरकर्मणि । चितियूपश्मशानस्थस्पर्शने स्नानमाचरेदिति " । तथा च **मनुः** । ( अ. ५ श्लो. १४४ ) । "वान्तो विरिक्तः स्नात्वा तु घृतप्राशनमाचरेत् । आचामेदेव भुक्त्वाऽन्नं स्नानं मैथुनिनः स्मृतमिति " । मैथुनिनः स्नानमृतुकालविषयम् । अनृतौ तु ' यदा गच्छेच्छौचं मूत्रपुरीषवदिति ' **बृहस्पति**स्मरणात् । अनृतावपि कालविशेषेण **स्मृत्यन्तरे** स्नानमुक्तम् । 'अष्टम्यां च चतुर्दश्यां दिवा पर्वणि मैथुनम् । कृत्वा सचैलं स्नात्वा च वारुणीभिश्च मार्जयेदिति ' । तथा च **यमः** । " अजीर्णे-ऽभ्युदिते वान्ते तथाऽप्यस्तमिते रवौ । दुःस्वप्ने दुर्जनस्पर्शे स्नानमात्रं विधीयते " इति । तथा **बृहस्पतिः** । ' मैथुने कटधूमे च सद्यः स्नानं विधीयते ' इत्येतदसचैलस्पर्शविषयम् । सचैले तु चित्यादिस्पर्शे सचैलमेव स्नानम् । यथाह **च्यवनः** । ' श्वानं श्वपाकं प्रेतधूमं देवद्रव्योपजीविनम् । ग्रामयाजिनं सोमविक्रयिणं यूपचितिं चितिकाष्ठं मद्यं मद्यभाण्डं सस्नेहं मानुषास्थि शवस्पृष्टं रजस्वलां

१ क्वचित्कर्मेत्यपर पाठः ।

महापातकिनं शवं स्पृष्ट्वा सचैलमम्भोऽवगाह्योत्तीर्याग्निमुपस्पृश्य गायत्रीमष्टवारं जपेत्। घृतं प्राश्य पुनः स्नात्वा त्रिराचामेदिति'।

एतच्च बुद्धिपूर्वविषयम्। अन्यत्र स्नानमात्रम्। 'शवस्पृष्टं दिवाकीर्तिं चितिं यूपं रजस्वलाम्। स्पृष्ट्वा त्वकामतो विप्रः स्नानं कृत्वा विशुध्यतीति' **बृहस्पति**स्मरणात्। एवमन्यत्राऽपि वक्ष्यमाणेषु ५ विषयसमीकरणमूहनीयम्। तथा च **कश्यपः**। 'उदयास्तमययोः स्कन्दयित्वा अक्षिस्पन्दने कर्णाक्रोशने चित्यारोहणे यूपसंस्पर्शने च सचैलं स्नानं पुनर्मन इति जपेत् महाव्याहृतिभिः सप्ताज्याहुतीर्जुहुयादिति'। तथा **स्मृत्यन्तरे**। "स्पृष्ट्वा देवलकं चैव सवासा जलमाविशेत्। देवार्चनपरो विप्रो वित्तार्थे वत्सरत्रयम्। असौ देवलको नाम हव्यकव्येषु गर्हितः"॥ तथा **ब्रह्माण्डपुराणे**। "शैवान्पाशुपतान्स्पृष्ट्वा लोकायतिकनास्तिकान्। विकर्मस्थान्द्विजाञ्शूद्रान्सवासा जलमाविशेदिति"॥ १० तथा। 'अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंपर्कदूषितेति' **लिङ्गाच्च** शूद्रस्पर्शने निषेधः॥ तथाऽ**ङ्गिराः**। "यस्तु छायां श्वपाकस्य ब्राह्मणो ह्यधिरोहति। तत्र स्नानं प्रकुर्वीत घृतं प्राश्य विशुध्यतीति"॥ तथा **व्याघ्रपादः**। "चाण्डालं पतितं चैव दूरतः परिवर्जयेत्। गोवालव्यजनादर्वाक्सवासा जलमाविशेदिति"। एतदतिसंकटस्थलविषयम्। अन्यत्र तु **बृहस्पतिनो**क्तम्। "युगं च द्वियुगं चैव त्रियुगं च चतुर्युगम्। चाण्डालसूतिकोदक्यापतितानामधः क्रमादिति"॥ तथा १५ **पैठीनसिः**। 'काकोलूकस्पर्शने सचैलं स्नानमनुदकमूत्रपुरीषकरणे सचैलं स्नानं महाव्याहृतिहोमश्च'। 'अनुदकमूत्रपुरीषकरणे' इत्येतच्चिरकालमूत्रपुरीषाशौचाकरणपरम्। तथाऽ**ङ्गिराः**। "भासवायसमार्जारखरोष्ट्रं च श्वशूकरान्। अमेध्यानि च संस्पृश्य सचैलो जलमाविशेदिति"। मार्जारस्पर्शनिमित्तं स्नानमुच्छिष्टसमयेऽनुष्ठानसमये च वेदितव्यम्। समाचारात्। अन्यदा तु 'मार्जारश्चैव दर्वी च मारुतश्च सदा शुचिरिति' स्नानाभावः। श्वस्पर्शे तु स्नानं नाभेरूर्ध्वं वेदितव्यम्। अधस्तात्तु क्षालनमेव। २० "नाभेरूर्ध्वं करौ मुक्त्वा शुना यद्युपहन्यते। तत्र स्नानमधस्ताच्चेत्प्रक्षाल्याचम्य शुध्यतीति" तेनैवोक्तत्वात्॥ तथा पक्षिस्पर्शे विशेषो **जातूकर्ण्येनो**क्तः। "ऊर्ध्वं नाभेः करौ मुक्त्वा यदङ्गं संस्पृशेत्खगः। स्नानं तत्र प्रकुर्वीत शेषं प्रक्षाल्य शुध्यतीति"॥ अमेध्यस्पर्शेऽपि **विष्णुना** विशेषो दर्शितः। 'नाभेरधस्तात्प्रबाहुषु च कायिकैर्मलैः सुराभिर्मद्यैर्वोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्याचान्तः शुध्येत्॥ अन्यत्रोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्य स्नायात्। तैरिन्द्रियेषूपहतस्तूपोष्य स्नात्वा पञ्चगव्येन २५ दशनच्छदोपहतश्चेति'।

एतच्च परकीयामेध्यस्पर्शविषयम्। आत्मीयमलस्पर्शे तु ऊर्ध्वमपि नाभेः क्षालनमेव। यथाह **देवलः**। "मानुषास्थि वसां विष्ठामार्तवं मूत्ररेतसी। मज्जानं शोणितं वाऽपि परस्य यदि संस्पृशेत्॥ स्नात्वा प्रमृज्य लेपादीनाचम्य स शुचिर्भवेत्। तान्येव स्वानि संस्पृश्य पूतः स्यात्परिमार्जनादिति"॥ तथा **शङ्खः**। "रथ्याकर्दमतोयेन ष्ठीवनाद्येन वा तथा। नाभेरूर्ध्वं नरः स्पृष्टः सद्यः स्नानेन शुध्य- ३० तीति"॥ **यमे**नाप्यत्र विशेष उक्तः। "सकर्दमं तु वर्षासु प्रविश्य ग्रामसङ्करम्। जंघयोर्मृत्तिकास्तिस्रः पादयोर्द्विगुणास्ततः" इति। ग्रामसङ्करं ग्रामसलिलप्रवाहप्रवेशं सकर्दमं प्रविश्येत्यर्थः॥ मारुतशोषिते तु कर्दमादौ न दोषः। "रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः। मारुतेनैव शुध्यन्ति पक्केष्टकचितानि चेति" प्रागुक्तत्वात् (आचारे १९७)॥

अस्थनि **मनुना** विशेष उक्तः ( अ. ५ श्लो. ८७ ) । " नारं स्पृष्ट्वाऽस्थि सस्नेहं स्नात्वा विप्रो विशुध्यति । आचम्यैव तु निःस्नेहं गां स्पृष्ट्वा वीक्ष्य वा रविमिति " । इदं द्विजातास्थिविषयम् । अन्यत्र **वसिष्ठोक्तम्** ( अ. १२ सू. २४ ) । ' मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमाशौचमस्निग्धे त्वहोरात्रम् ' । अमानुषे तु **विष्णूक्तम्** । ' भक्ष्यवर्ज्यं पञ्चनखशवं तदस्थि च सस्नेहं स्पृष्ट्वा स्नातः पूर्ववस्त्रं प्रक्षालितं बिभृयादिति ' ॥ एवमन्येऽपि स्नानार्हाः स्मृत्यन्तरतोऽवबोद्धव्याः ॥ ५

एवं स्नानार्हाणां बहुत्वात्तदभिप्रायं तैरिति बहुवचनमविरुद्धम् । 'उदक्याशुचिभिः स्नायादि'त्येतच्चाण्डालाद्यचेतनव्यवधानस्पर्शे वेदितव्यम् । चेतनव्यवधाने तु **मानवम्** ( अ. ५ श्लो. ८५ ) । " दिवाकीर्तिमुदक्यां च पतितं सूतिकां तथा । शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुध्यतीति " ॥ तृतीयस्य त्वाचमनमेव । " तमेव तु स्पृशेद्यस्तु स्नानं तस्य विधीयते । ऊर्ध्वमाचमनं प्रोक्तं द्रव्याणां प्रोक्षणं तथेति " **संवर्त**स्मरणात् । १०

एतच्चाबुद्धिपूर्वकविषयम् । मतिपूर्वे तु तृतीयस्यापि स्नानमेव । यथाह **गौतमः** ( अ. १४ सू. २७ ) । 'पतितचण्डालसूतिकोदक्याशवस्पृष्टितत्स्पृष्ट्युपस्पर्शने सचैलमुदकोपस्पर्शनाच्छुध्येदिति' । चतुर्थस्य त्वाचमनम् । " उपस्पृश्याशुचिस्पृष्टं तृतीयं वाऽपि मानवः । हस्तौ पादौ च तोयेन प्रक्षाल्याचम्य शुध्यतीति " **देवल**स्मरणात् । अशुचिना पुनरुदक्यादिस्पर्शे **देवलेन** विशेष उक्तः ।

" श्वपाकं पतितं व्यङ्गमुन्मत्तं शवहारकम् । सूतिकां साविकां नारीं रजसा च परिप्लुताम् ॥ १५
" श्वकुक्कुटवराहांश्च ग्रामान्संस्पृश्य मानवः । सचैलः सशिरः स्नात्वा तदानीमेव शुध्यति ॥

" अशुद्धान्स्वयमप्येतानशुद्धस्तु यदि स्पृशेत् । विशुध्यत्युपवासेन तथा कृच्छ्रेण वा पुनरिति" । साविका प्रसवस्य कारयित्री । कृच्छ्रः श्वपाकादिविषयः । श्वादिषु तूपवास इति व्यवस्था ॥ ३० ॥

अधुना कालशुद्धौ दृष्टान्तत्वेन द्रव्यशुद्धिप्रकरणोक्तांस्तथैवात्र प्रकरणे वक्ष्यमाणांश्च शुद्धिहेतूननुक्रामति

**कालोऽग्निः कर्म मृद्वायुर्मनो ज्ञानं तपो जलम् ।** २०
**पश्चात्तापो निराहारः सर्वेऽमी शुद्धिहेतवः ॥ ३१ ॥**

यथाऽग्न्यादयोऽमी सर्वे स्वविषये शुद्धिहेतवस्तथा **कालो**ऽपि दशरात्रादिकः । शास्त्रगम्यत्वाच्छुद्धिहेतुत्वस्य । **अग्नि**स्तावच्छुद्धिहेतुर्यथाऽ'भ्यधायि पुनः पाकान्महीमयमिति ' । **कर्म** च शुद्धिनिमित्तं यथा वक्ष्यति ' अश्वमेधावभृथस्नानादिति ' । तथा **मृदपि** शुद्धिकारणं यथा कथितम् ( आचारे १८९ श्लो. ) ' सलिलं भस्म मृदाऽपि प्रक्षेप्तव्यं विशुद्धये ' इति । **वायु**- २५ रपि शुद्धिहेतुः यथोदीरितं ( आचारे १९७ श्लो. ) ' मारुतेनैव शुध्यन्तीति ' । **मनो**ऽपि वाचःशुद्धिसाधनं यथाऽऽम्नायि " मनसा वा इषिता वाग्वदतीत्यादि " । **ज्ञानं** चाध्यात्मिकं बुद्धिशुद्धौ निदानं यथाऽभिधास्यति ( अग्रे ३४ श्लो. ) ' क्षेत्रज्ञस्येश्वरज्ञानादिति ' । **तपश्च** कृच्छ्रादि यथा वदिष्यति ( अग्रे २६० श्लो. ) ' प्राजापत्यं चरेत्कृच्छ्रं समो वा गुरुतल्पगः ' इत्यादि । तथा **जलमपि** शरीरादेः यथा जल्पिष्यति ( अग्रे ३३ श्लो. ) ' वर्ष्मणो जलमिति ' । **पश्चा**- ३०

**तापो** विशुद्धिजनकः यथा गदितं 'ख्यापनेनानुतापेनेति'। **निराहारो**ऽपि शुद्ध्युपादानं यथा व्याहरिष्यति (अग्रे ३०१ श्लो.) 'त्रिरात्रोपोषितो जप्त्वेत्यादिः' ॥ ३१ ॥

**अकार्यकारिणां दानं वेगो नद्याश्च शुद्धिकृत् ।**
**शोध्यस्य मृच्च तोयं च संन्यासो वै द्विजन्मनाम् ॥ ३२ ॥**
**तपो वेदविदां क्षान्तिर्विदुषां वर्ष्मणो जलम् ।**
**जपः प्रच्छन्नपापानां मनसः सत्यमुच्यते ॥ ३३ ॥**
**भूतात्मनस्तपोविद्ये बुद्धेर्ज्ञानं विशोधनम् ।**
**क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता ॥ ३४ ॥**

किंच । **अकार्यकारिणां** निषिद्धसेविनां **दानमेव** मुख्यं शुद्धिकारणं यथा व्याख्यास्यति (अग्रे २५० श्लो.) 'पात्रे धनं वा पर्याप्तं दत्त्वेति' । **नद्याः** निदाघादौ अल्पतोयतया अमेध्योपहततीरायाः कूलङ्कषवर्षाम्बुप्रवाहः **वेगः शुद्धिकृत्** । **शोधनीयस्य** द्रव्यस्य **मृच्च तोयं** च शुद्धिकृद्यथेह भणितम् (आचारे १९१ श्लो.)। 'अमेध्याक्तस्य मृत्तोयैः शुद्धिर्गन्धापकर्षणा-दिति'। **संन्यासः** प्रव्रज्या **द्विजन्मनां** मानसोपचारे शुद्धिकृत् ॥ ३२ ॥

**तपो** वेदाभ्यासो **वेदविदां** शुद्धिकारणम्। कृच्छ्रादि तु सर्वसाधारणं न वेदविदामेव। **क्षान्ति-**रुपशमो **विदुषां** वेदार्थविदाम्। **वर्ष्मणः** शरीरस्य **जलम्** । **प्रच्छन्नपापाना**मविख्यातदोषाणां अघमर्षणादिसूक्त**जपः** शुद्धिकारणं शुद्धिसाधनम्। **मनः** सदसत्संकल्पात्मकं तस्यासत्संकल्पत्वाद-शुद्धस्य **सत्यं** साधुसंकल्पः शोधकम् ॥ ३३ ॥

भूतशब्देन तद्विकारभूतो देहेन्द्रियसंबन्धो लक्ष्यते । तत्र स्थूलोऽहं कृशोऽहं काणोऽहं बधि-रोऽहमित्येवं तदभिमानित्वेन योऽयमात्मा वर्तते स **भूतात्मा** तस्य **तपोविद्ये** शुद्धिनिमित्ते । तपःशब्देनानेकजन्मस्वेकस्मिन्नपि वा जन्मनि जाग्रत्स्वप्नसुषुप्त्यवस्थास्वात्मनो योऽयमन्वयः शरीरादेश्च व्यतिरेकः सोऽभिधीयते । यथा 'तपसा ब्रह्म विजिज्ञासस्वेति' (भृगूपनिषदि) पञ्चकोश-व्यतिरेकप्रतिपादनपरे वाक्ये विद्याशब्देन चौपनिषदमस्थूलमनण्वह्रस्वमसङ्गो ह्ययमात्मेत्यादि त्वं-पदार्थनिरूपणविषयवाक्यजन्यज्ञानमुच्यते । एताभ्यामस्य शुद्धिः । शरीरादिव्यतिरेकबुद्धेः संशयविपर्यय-रूपत्वेनाशुद्धायाः प्रमाणरूपज्ञानं विशोधनं क्षेत्रस्य तपोविद्याविशुद्धस्य त्वंपदार्थभूतस्य 'तत्त्वमसी'-त्यादिवाक्यजन्यात्साकाररूपादीश्वरज्ञानात् परमात्मशुद्धिर्मुक्तिलक्षणा । यथा एताः शुद्धयः परमपुरु-षार्थास्तद्वदुक्तताकालशुद्धिरपीत्येवं प्रशंसार्थं भूतात्मादिविशुद्ध्यभिधानम् ॥ ३४ ॥

इत्याशौचप्रकरणम् ।

## अथापद्धर्मप्रकरणम् २

" आपद्यपि च कष्टायां सद्यः शौचं विधीयते " इत्यापदि मुख्याशौचकल्पानामनुष्ठानासंभवेन सद्यः-शौचाद्यनुकल्पमुक्त्वेदानीं तत्प्रसङ्गादापदि "प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथे"त्याद्युक्त-याजनादिमुख्यवृत्त्यसंभवेन वृत्त्यन्तरमाह

**क्षात्रेण कर्मणा जीवेद्विशां वाऽप्यापदि द्विजः ।** ५
**निस्तीर्यतामथात्मानं पावयित्वा न्यसेत्पथि ॥ ३५ ॥**

**द्विजो** विप्रो बहुकुटुम्बतया स्ववृत्त्या जीवितुमसमर्थः क्षत्रसंबन्धिना कर्मणा शस्त्रग्रहणा-दिनाऽ**पदि जीवेत्** । तेनापि जीवितुमशक्नुवन् वैश्यसंबन्धिना कर्मणा वाणिज्यादिना जीवेत् न शूद्रवृत्त्या । तथा च **मनुः** (अ. १० श्लो. ८२) । " उभाभ्यामप्यजीवंस्तु कथं स्यादिति चेद्भवेत् । कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकामिति " । १०

तथा आपद्यपि न हीनवर्णेन ब्राह्मी वृत्तिराश्रयणीया किंतु ब्राह्मणेन क्षात्री क्षत्रियेण वैश्यसंब-न्धिनी वैश्येन च शौद्रीत्येवं स्वानन्तरहीनवृत्तिरेव । ' अजीवन्तः स्वधर्मेणानन्तरां पापीयसीं वृत्तिमा-तिष्ठेरन् । न तु कदाचिज्ज्यायसीमिति ' **वसिष्ठस्मरणात्** (अ. २ सू. २२।२३) । ज्यायसी च ब्राह्मी वृत्तिः तथा च **स्मृत्यन्तरम्** । " उत्कृष्टं वाऽपकृष्टं वा तयोः कर्म न विद्यते । मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते " इति । शूद्रस्य उत्कृष्टं ब्राह्मं कर्म न विद्यते । तथा ब्राह्मणस्याप- १५ कृष्टं शौद्रं कर्म मध्यमे क्षत्रवैश्यकर्मणी पुनरापद्गतसर्ववर्णसाधारणे हि ते इति । शूद्रश्चापद्गतो वैश्यवृत्त्या शिल्पैर्वा जीवेत् । " शूद्रस्य द्विजशुश्रूषा तयाऽजीवन्वणिग्भवेत् । शिल्पैर्वा विविधैर्जीवेद्द्विजाति-हितमाचरन्निति " प्रागुक्तत्वात् (आचारे १२० श्लो.) ॥ **मनुना** चात्र विशेषो दर्शितः (अ. १० श्लो. १००) । "यैः कर्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः । तानि कारुककर्माणि शिल्पानि विविधानि चेति " । अनेनैव न्यायेनानुलोमोत्पन्नानामपि स्वानन्तरावृत्तिरूहनीया । २०

एवं स्वानन्तरहीनवर्णवृत्त्या **आपदं निस्तीर्य** प्रायश्चित्ताचरणेन**ात्मानं पावयित्वा पथि न्यसेत्** । स्ववृत्तावात्मानं स्थापयेदित्यर्थः । यद्वाऽयमर्थः । गर्हितवृत्त्याऽर्जितं धनं पथि न्यसेदुत्सृ-जेदिति । तथा च **मनुः** (अ. १० श्लो. १११) " जपहोमैरपैत्येनो याजनाध्यापनैः कृतम् । प्रतिग्रहनिमित्तं तु त्यागेन तपसैव त्विति " ॥ ३५ ॥

वैश्यवृत्त्या जीवतो ब्राह्मणस्य यदपणनीयं तदाह २५

**फलोपलक्षौमसोममनुष्यापूपवीरुधः ।**
**तिलौदनरसक्षारान्दधि क्षीरं घृतं जलम् ॥ ३६ ॥**
**शस्त्रासवमधूच्छिष्टं मधु लाक्षा च बर्हिषः ।**
**मृच्चर्मपुष्पकुतुपकेशतक्रविषक्षितीः ॥ ३७ ॥**

**कौशेयनीललवणमांसैकशफसीसकान्।**
**शाकार्द्रौषधिपिण्याकपशुगन्धांस्तथैव च ॥ ३८ ॥**
**वैश्यवृत्त्याऽपि जीवन्नो विक्रीणीत कदाचन।**

नो विक्रीणीतेति प्रत्येकमभिसंबध्यते। **फलानि** कदलीफलादीनि बदरेङ्गुदव्यतिरिक्तानि।
५ यथाह **नारदः** (अ. १ श्लो. ६५)। "स्वयंशीर्णानि पर्णानि फलानां बदरेङ्गुदे। रज्जुः कार्पासिकं सूत्रं तच्चेदविकृतं भवेदिति"। **उपलं** माणिक्याद्यश्ममात्रं **क्षौम**मतसीसूत्रमयं वस्त्रम्। क्षौमग्रहणं तान्तवादेरुपलक्षणम्। यथाह **मनुः** (अ. १० श्लो. ८७)। "सर्वं च तान्तवं रक्तं शाणक्षौमाविकानि च। अपि चेत्स्युररक्तानि फलमूले तथौषधीरिति"। **सोमो** लताविशेषः। **मनुष्य**पदेनाविशेषात् स्त्रीपुंनपुंसकानां ग्रहणम्। **अपूपं** मण्डकादिभक्ष्यमात्रम्। **वीरुधो** वेत्रा-
१० मृतादिलताः। **तिलाः** प्रसिद्धाः। **ओदन**ग्रहणं भोज्यमात्रोपलक्षणम्। **रसा** गुडेक्षुरसशर्करादयः। तथा च **मनुः** (अ. १० श्लो. ८८)। "क्षीरं क्षौद्रं दधि घृतं तैलं मधु गुडं कुशानिति"। **क्षारा** यवक्षारादयः। दधिक्षीरयोर्ग्रहणं मस्तुपिण्डकिलाटकूर्चिकादीनां तद्विकाराणामुपलक्षणम्। 'क्षीरं सविकारमिति' **गौतम**स्मरणात् (अ. ७ सू. ११)। घृतग्रहणं तैलादिस्नेहमात्रोपलक्षणम्। **जलं** प्रसिद्धम्। **शस्त्रं** खड्गादि। **आसव**ग्रहणं मद्यमात्रोपलक्षणम्। **मधूच्छिष्टं** सिक्थकं। **मधु** क्षौद्रं। **लाक्षा**
१५ जतु। **बर्हिषः** कुशाः। **मृत्** प्रसिद्धा। **चर्मा**जिनं। **पुष्पं** प्रसिद्धं। अजलोमकृतः कम्बलः **कुतुपः**। **केशाश्च**मर्यादिसम्बद्धाः। **तक्र**मुदश्वित्। **विषं** शृङ्ग्यादि। **क्षितिर्भूमिः**। 'नित्यं भूमिव्रीहियवाजाव्यश्वर्षभधेन्वनडुहश्चैक' इति **सुमन्तु**स्मरणात्। **कौशेयं** कोशप्रभवं वसनम्। **नीलं** नीलीरसम्। **लवण**ग्रहणेनैव बिडसौवर्चलसैन्धवसामुद्रसोमककृत्रिमाण्यविशेषेण गृह्यन्ते। **मांसं** प्रसिद्धम्। **एकशफा** हयादयः। **सीस**ग्रहणं लोहमात्रोपलक्षणम्। **शाकं** सर्वमविशेषात्। **ओषधयः** फलपाकान्ताः। आर्द्रौ-
२० षधय इति विशेषोपादानात् शुष्केषु न दोषः। **पिण्याकः** प्रसिद्धः। **पशव** आरण्याः "आरण्यांश्च पशून्सर्वान्दंष्ट्रिणश्च वयांसि चेति" **मनु**स्मरणात् (अ. १० श्लो. ८९)। **गन्धाश्च**न्दनागुरुप्रभृतयः। सर्वानेतान्वैश्यवृत्त्या जीवन्ब्राह्मणः कदाचिदपि न विक्रीणीत। क्षत्रियादेस्तु न दोषः। अत एव **नारदेन** (अ. १ श्लो. ६१)। "वैश्यवृत्तावविक्रेयं ब्राह्मणस्य पयो दधीति" ब्राह्मणग्रहणं कृतम् ॥ ३६ ॥ ३७ ॥ ३८ ॥

प्रतिप्रसवमाह

२५

**धर्मार्थं विक्रयं नेयास्तिला धान्येन तत्समाः ॥ ३९ ॥**

यद्यावश्यकाः पाकयज्ञादिधर्माः स्वसाधनव्रीह्यादिधान्याभावेन न निष्पद्यन्ते तर्हि **धान्येन तिला विक्रयं नेयाः। तत्समाः** द्रोणपरिमिता द्रोणपरिमितेनेत्येवं तेन धान्येन समाः। तथा च **मनुः** (अ. १० श्लो. ९०)। "काममुत्पाद्य कृष्यां तु स्वयमेव कृषीवलः। विक्रीणीत तिलान्
३० शुद्धान्धर्मार्थमचिरस्थितानिति"। धर्मग्रहणमावश्यकभेषजाद्युपलक्षणम्। अत एव **नारदः** (अ. १ श्लो. ६६)। "अशक्तौ भेषजस्यार्थे यज्ञहेतोस्तथैव च। यद्यवश्यं तु विक्रेयास्तिला धान्येन तत्समाः" इति। यद्यन्यथा विक्रीणीते तर्हि दोषः। "भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते

तिलैः । कृमिर्भूत्वा श्वविष्ठायां पितृभिः सह मज्जतीति'' मनुस्मरणात् (अ. १० श्लो. ९१)। सजातीयैः पुनर्विनिमयो भवत्येव। (मनुः अ. १० श्लो. ९४)। "रसा रसैर्निमातव्या न त्वेवं लवणं रसैः। कृतान्नं च कृतान्नेन तिला धान्येन तत्समाः" इति। कृतान्नं सिद्धान्नं तच्च कृतान्नेन परिवर्तनीयमिति यावत्। 'कृतान्नं चाकृतान्नेनेति' पाठे सिद्धमन्नमकृतान्नेन तण्डुलादिना परिवर्तनीयमिति यावत्॥ ३९॥

पूर्वोक्तनिषिद्धातिक्रमे दोषमाह

**लाक्षालवणमांसानि पतनीयानि विक्रये।**
**पयो दधि च मद्यं च हीनवर्णकराणि तु॥ ४०॥**

**लाक्षालवणमांसानि** विक्रीयमाणानि सद्यः **पतनीयानि** द्विजातिकर्महानिकराणि। पयः-प्रभृतीनि तु **हीनवर्णकराणि** शूद्रतुल्यत्वापादकानि। एतद्व्यतिरिक्तापण्यविक्रये वैश्यतुल्यता। यथाह **मनुः** (अ. १० श्लो. ९२।९३)। "सद्यः पतति मांसेन लाक्षया लवणेन च। त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात्॥ इतरेषामपण्यानां विक्रयादिह कामतः। ब्राह्मणः सप्तरात्रेण वैश्यभावं निगच्छति"॥ ४०॥

**आपद्गतः संप्रगृह्णन् भुञ्जानो वा यतस्ततः।**
**न लिप्येतैनसा विप्रो ज्वलनार्कसमो हि सः॥ ४१॥**

किंच। यस्त्वधनः अवसन्नकुटुम्बतया आपद्गतोऽपि क्षत्रवृत्तिं वैश्यवृत्तिं वा न प्रविविक्षति स यतस्ततो हीनतरस्ततो हीनतरहीनतमेभ्यः प्रतिगृह्णंस्तदन्नं भुञ्जानोऽपि वा **नैवैनसा** पापेन **लिप्यते**। यतस्तस्यामापदवस्थायामसत्प्रतिग्रहादावधिकारित्वेन **ज्वलनार्कसमः** यथा ज्वलनोऽर्कश्च हीनसंस्कारेऽपि न दुष्यति तथाऽयमापद्गतोऽपि न दुष्यतीत्येतावता तत्साम्यम्। एवं च वदता आपद्गतस्य परधर्माश्रयणाद्विगुणमपि स्वधर्मानुष्ठानमेव मुख्यमिति दर्शितं भवति। तथा च **मनुः** (अ. १० श्लो. ९७)। "वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः। परधर्माश्रयाद्विप्रः सद्यः पतति जातितः" इति॥ ४१॥

**कृषिः शिल्पं भृतिर्विद्या कुसीदं शकटं गिरिः।**
**सेवानूपं नृपो भैक्ष्यमापत्तौ जीवनानि तु॥ ४२॥**

किंच। **आपत्तौ जीवनानी**ति विशेषणात् कृष्यादीनां मध्ये अनापदवस्थायां यस्य या वृत्तिः प्रतिषिद्धा तस्य सा वृत्तिरनेनाभ्यनुज्ञायते। यथाऽऽपदि वैश्यवृत्तिः स्वयंकृता कृषिर्विप्रक्षत्रिययोरभ्यनुज्ञायते एवं शिल्पादीन्यप्यस्याभ्यनुज्ञायन्ते। **शिल्पं** सूपकरणादि। **भृतिः** प्रेष्यत्वम्। **विद्या** भृतकाध्यापकत्वाद्या। **कुसीदं** वृद्ध्यर्थं द्रव्यप्रयोगः। तत्स्वयंकृतमभ्यनुज्ञायते। **शकटं** भाटकेन धान्यादिवहनद्वारेण जीवनहेतुः। **गिरि**स्तद्गततृणेन्धनद्वारेण जीवनम्। **सेवा** परचित्तानुवर्तनम्। **अनूपं** प्रचुरतृणवृक्षजलप्रायः प्रदेशः। तथा **नृपयाचनम्**। **भैक्ष्यं** स्नातकस्यापि। एतान्यापत्तौ जीव-

नाति। तथा च **मनुः** (अ. १० श्लो. ११६)। "विद्या शिल्पं भृतिः सेवा गोरक्षा विपणिः कृषिः। गिरिर्भैक्ष्यं कुसीदं च दश जीवनहेतवः" ॥ ४२ ॥

यदा कृष्यादीनामपि जीवनहेतूनामसंभवस्तदा कथं जीवनमित्यत आह

**बुभुक्षितस्त्र्यहं स्थित्वा धान्यमब्राह्मणाद्धरेत्।**
५ **प्रतिगृह्य तदाख्येयमभियुक्तेन धर्मतः ॥ ४३ ॥**

धान्याभावेन त्रिरात्रं बुभुक्षितोऽनश्नन् **स्थित्वा अब्राह्मणाच्छू**द्रात्तदभावे वैश्यात् तदभावे क्षत्रियाद्वा हीनकर्मण एकाहपर्याप्तं **धान्यमा**हरेत्। यथाह **मनुः** (अ. ६ श्लो. ११७)। "तथैव सप्तमे भक्ते भक्तानि षडनश्नता। अधस्तनविधानेन हर्तव्यं हीनकर्मणः" इति। तथा प्रतिग्रहोत्तरकालं च यदपहृतं तद्धर्मतो यथावृत्त**माख्येयम्**। यदि नास्तिकेन स्वामिना त्वयेदं किं ममापहृतमित्य-
१० भियुज्यते। यथाह **मनुः** (अ. ११ सू. १७)। "खलात्क्षेत्रादगाराद्वा यतो वाऽप्युपलभ्यते। आख्यातव्यं तु तत्तस्मै पृच्छते यदि पृच्छतीति" ॥ ४३ ॥

इदमपरमापत्प्रसंगाद्राज्ञो विधीयते

**तस्य वृत्तं कुलं शीलं श्रुतमध्ययनं तपः।**
**ज्ञात्वा राजा कुटुम्बं च धर्म्यां वृत्तिं प्रकल्पयेत् ॥ ४४ ॥**

१५ योऽशनया परीतोऽवसीदति **तस्य वृत्त**माचारं, **कुल**माभिजात्यं, **शील**मात्मगुणं, **श्रुतं** शास्त्र-श्रवणं, **अध्ययनं** वेदाध्ययनं, **तपः** कृच्छ्रादि च परीक्ष्य **राजा** धर्मादनपेतां **वृत्तिं प्रकल्पयेत्**। अन्यथा तस्य दोषः। तथा च **मनुः** (अ. ७ श्लो. १३४)। "यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा। तस्य सीदति तद्राष्ट्रं दुर्भिक्षव्याधिपीडितमिति" ॥ ४४ ॥

इत्यापद्धर्मप्रकरणम्।

## २० अथ वानप्रस्थधर्मप्रकरणम् ३

चतुर्णामाश्रमिणां मध्ये ब्रह्मचारिगृहस्थयोर्धर्माः प्रतिपादिताः। साम्प्रतमवसरप्राप्तान्वानप्रस्थ-धर्मान्प्रतिपादयितुमाह

**सुतविन्यस्तपत्नीकस्तया वाऽनुगतो वनम्।**
**वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत् ॥ ४५ ॥**

२५ वने प्रकर्षेण नियमेन च तिष्ठति चरतीति वनप्रस्थः। वनप्रस्थ एव **वानप्रस्थः**। संज्ञायां दैर्घ्यम्। भाविनीं वृत्तिमाश्रित्य वनं प्रतिष्ठासुरिति यावत्। असौ **सुतविन्यस्तपत्नीक**स्त्वयेयं भरणीयेत्येवं सुते विन्यस्ता निक्षिप्ता पत्नी येन स तथोक्तः। यदि सा पतिपरिचर्याभिलाषेण स्वयमपि वनं जिगमिषति तदा **तयाऽनुगतो वा** सहितः। तथा **ब्रह्मचारी** ऊर्ध्वरेताः। **साग्नि**र्वैतानाग्नि-सहितः। तथा **सोपासनो** गृह्याग्निसहितश्च। **वनं व्रजेत्**। 'सुतविन्यस्तपत्नीकः' इति वदता
३० कृतगार्हस्थ्यो वानप्रस्थो वनवासेऽधिक्रियत इति दर्शितम्।

एतच्चाश्रमसमुच्चयपक्षमङ्गीकृत्योक्तम् । इतरथा 'अविप्लुतब्रह्मचर्यो यमिच्छेत्तमावसेदि'त्यकृतगार्हस्थ्योऽपि वनवासेऽधिक्रियत एव । अयं च वनप्रवेशो जराजर्जरकलेवरस्य जातपौत्रस्य वा । यथाह **मनुः** ( अ. ६ श्लो. २ ) । " गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः । अपत्यस्यैव वाऽपत्यं तदाऽऽरण्यं समाश्रयेदिति" । अयं च पुत्रेषु पत्नीनिक्षेपो विद्यमानभार्यस्य । मृतभार्यस्याप्यापस्तम्बादिभिः वनवासस्मरणात् । अतो यत् 'दाहयित्वाऽग्निहोत्रेणेति' पुनराधानविधानं तदपरिपक्वकषायविषयम् । ५ 'साग्निः सोपासनः' इत्यत्रापि यदाधानं कृतं तदा श्रौताग्निभिर्गृह्येण च सहितो वनं व्रजेत् ॥ सर्वाधाने तु श्रौतैरेव केवलम् । यदि कथंचिज्ज्येष्ठभ्रातुरनाहिताग्नित्वादिना श्रौताग्नयोऽनाहितास्तर्हि केवलं सोपासनो व्रजेदित्येवं विवेचनीयम् । अग्निनयनं च तन्निर्वर्त्याग्निहोत्रादिकर्मसिद्ध्यर्थम् । अत एव **मनुः** ( अ. ६ श्लो. ९ ) " वैतानिकं च जुहुयादग्निहोत्रं यथाविधि । दर्शमस्कन्दयन्पर्व पौर्णमासं च शक्तितः " इति ॥ १०

ननु च पुत्रनिक्षिप्तपत्नीकस्य तद्विरहिणः कथमग्निहोत्रादिकर्मानुष्ठानं घटते । 'पत्न्या सह यष्टव्यमिति' सहाधिकारनियमात् । सत्यमेवम् । किंत्वत्र पत्नीनिक्षेपविधिबलादेव तन्नैरपेक्ष्येणाधिकारः कल्प्यते । यथा हि रजस्वलायां यस्य व्रत्येऽहनि पत्न्यनालम्भुका स्यात्तामवरुध्य यजेतेत्यवरोधविधिबलात्तन्निरपेक्षता । यद्वा वनं प्रतिष्ठमानमेव पतिं पत्न्यनुमन्यत इति न विरोधः । न च यथा ब्रह्मचारिणो विधुरस्य वा वनं प्रस्थितस्याग्निहोत्रादिपरिलोपः तथा निक्षिप्तपत्नीकस्यापि अग्निहोत्राद्यभाव १५ इति शङ्कनीयम् । अपाक्षिकत्वेन श्रवणात् ।

न च ब्रह्मचारिविधुरयोरपि अग्निसाध्यकर्मसु अनधिकारः । पञ्चममासादूर्ध्वमाहितश्रावणिकाग्नेस्तदधिकारदर्शनात् । 'वानप्रस्थो जटिलश्चीराजिनवासा न फालकृष्टमधितिष्ठेत् । अकृष्टं मूलफलं संचिन्वीत । ऊर्ध्वरेताः क्ष्माशयो दद्यादेव न प्रतिगृह्णीयादूर्ध्वं पञ्चभ्यो मासेभ्यः श्रावणिकेनाग्निमाधायाहिताग्निर्वृक्षमूलको दद्यादेव पितृमनुष्येभ्यः स गच्छेत्स्वर्ममानन्त्यमिति' **वसिष्ठ**स्मरणात् २० ( अ. ९ ) । चीरं वस्त्रखण्डो वल्कलं वा । न फालकृष्टमधितिष्ठेत्कृष्टक्षेत्रस्योपरि न निवसेत् । श्रावणिकेन वैदिकेन मार्गेण न लौकिकेनेत्यर्थः ॥ ४५ ॥

साग्निः सोपासनो व्रजेदित्येतदग्निसाध्यश्रौतस्मार्तकर्मानुष्ठानार्थमित्युक्तं; तत्र गुणविधिमाह

**अफालकृष्टेनाग्नींश्च पितॄन्देवातिथीनपि ।**
**भृत्यांश्च तर्पयेत् श्मश्रुजटारोमभृदात्मवान् ॥ ४६ ॥** २५

फालग्रहणं कर्षणसाधनोपलक्षणम् । अकृष्टक्षेत्रोद्भवेन नीवारवेणुश्यामाकादिना अग्नींस्तर्पयेत् । अग्निसाध्यानि कर्माण्यनुतिष्ठेत् । चशब्दाद्भिक्षादानमपि तेनैव कुर्यात् । तथा **पितॄन्देवानतिथीन्** । **अपि**शब्दाद्भूतान्यपि तेनैव तर्पयेत् । तथा **भृत्यान्** । चशब्दादाश्रमप्राप्तानपि । तथा च **मनुः** ( अ. ६ श्लो. ७ ) । " यद्भक्ष्यं स्यात्ततो दद्याद्बलिं भिक्षां च शक्तितः । अम्मूलफलभिक्षाभिरर्चयेदाश्रमागतानिति " ॥ एवं पञ्चमहायज्ञान्कृत्वा स्वयमपि तच्छेषमेव भुञ्जीत । " देवताभ्यश्च ३०

तद्धुत्वा वन्यं मेध्यतरं हविः। शेषमात्मनि युञ्जीत लवणं च स्वयंकृतमिति " **मनु**स्मरणात् ( अ. ६ श्लो. १२ )। स्वयंकृतमूखरलवणम्। एवं भोजनार्थे यागाद्यर्थे च मुन्यन्ननियमात् ग्राम्याहारपरित्यागोऽर्थसिद्धः। अत एव **मनुः** ( अ. ६ श्लो. ३ )। " संत्यज्य ग्राम्यमाहारं सर्वं चैव परिच्छदमिति "।

५ ननु च दर्शपूर्णमासादेर्व्रीह्यादिग्राम्यद्रव्यसाध्यत्वात्कथं तत्परित्यागः। न च वचनीयमफालकृष्टेनाग्नींश्चेति विशेषवचनसामर्थ्याद्व्रीह्यादिबाध इति। विशेषविषयिण्याऽपि स्मृत्या श्रुतिबाधस्यान्याय्यत्वात्। अफालकृष्टविधेश्च स्मार्ताग्निसाध्यकर्मविषयत्वेनाप्युपपत्तेः। सत्यमेवम्। व्रीह्यादेरप्यफालकृष्टत्वसंभवान्न विरोधः। अत एव **मनुना** ( अ. ६ श्लो. ११ )। " वासन्तशारदैर्मेध्यैर्मुन्यन्नैः स्वयमाहृतैः। पुरोडाशांश्चरूंश्चैव विधिवन्निर्वपेत्पृथगिति "॥ नीवारादीनां मुन्यन्नानां स्वयमुत्पन्नानां स्वतो मेध्यत्वे १० सिद्धेऽपि पुनर्मेध्यग्रहणं यज्ञार्हव्रीह्यादिप्राप्त्यर्थं कृतम्। मेधो यज्ञस्तदर्हं मेध्यमिति। तथा **श्मश्रूणि** मुखजानि रोमाणि, **जटा**रूपांश्च शिरोरुहान्कक्षादीनि च **रोमा**णि बिभृयात्। रोमग्रहणं नखानामप्युपलक्षणम्। तथा च **मनुः** ( अ. ६ श्लो. ६ )। "जटाश्च बिभृयान्नित्यं श्मश्रुलोमनखांस्तथेति"। तथाऽऽ**त्मवानात्**मोपासनाभिरतः स्यात्॥ ४६॥

पूर्वोक्तद्रव्यसंचयनियममाह

१५ **अह्नो मासस्य षण्णां वा तथा संवत्सरस्य वा।**
**अर्थस्य संचयं कुर्यात्कृतमाश्वयुजे त्यजेत्॥ ४७॥**

एकस्या**ह्नः** संबन्धि भोजनयजनादि दृष्टादृष्टकर्मणः पर्याप्तस्या**र्थस्य संचयं कुर्यात्**। **मासस्य वा षण्णां** मासानां वा **संवत्सरस्य वा** संबन्धि कर्मपर्याप्तं संचयं कुर्यात् नाधिकम्। यद्येवंक्रियमाणमपि कथंचिदतिरिच्यते तर्हि तदतिरिक्त**माश्वयुजे** मासि **त्यजेत्**॥ ४७॥

२० **दान्तस्त्रिषवणस्नायी निवृत्तश्च प्रतिग्रहात्।**
**स्वाध्यायवान्दानशीलः सर्वसत्वहिते रतः॥ ४८॥**

किंच। **दान्तो** दर्परहितः। त्रिषु सवनेषु प्रातर्मध्यन्दिनापराह्णेषु स्नानशीलः। तथा प्रतिग्रहे पराङ्मुखः। चशब्दाद्याजनादिनिवृत्तश्च। **स्वाध्यायवान्** वेदाभ्यासरतः। तथा फलमूलभिक्षादि**दानशीलः**। **सर्व**प्राणिहिताचरणनि**रत**श्च भवेत्॥ ४८॥

२५ **दन्तोलूखलिकः कालपक्वाशी वाऽश्मकुट्टकः।**
**श्रौतं स्मार्तं फलस्नेहैः कर्म कुर्यात्तथा क्रियाः॥ ४९॥**

किंच। दन्ता एवोलूखलं निस्तुषीकरणसाधनं दन्तोलूखलं तदस्यास्ति स **दन्तोलूखलिकः**। कालेनैव पक्वं कालपक्वं नीवारवेणुश्यामाकादि बदरेङ्गुदादिफलं च तदशनशीलः **कालपक्वाशी**। ३० **वा**शब्दोऽग्निपक्वाशनो वा स्यात्। 'कालपक्वभुगेव वेति' मनूक्ताग्निपक्वाशित्वाभिप्रायः। **अश्मकुट्टको** वा भवेत्। अश्मना कुट्टनमवहननं यस्य स तथोक्तः। तथा **श्रौतं स्मार्तं** च **कर्म** दृष्टार्थाश्च

भोजनाभ्यञ्जनादि**क्रियाः** लकुचमधूकादिमेध्यतरुफलोद्भवैः **स्नेहद्रव्यैः कुर्यात्** तु घृतादिकैः। तथा च **मनुः** ( अ. ६ श्लो. १३ )। " मेध्यवृक्षोद्भवानद्यात्स्नेहांश्च फलसंभवानिति " ॥ ४९ ॥

पुरुषार्थतया विहितद्विर्भोजननिवृत्त्यर्थमाह

**चान्द्रायणैर्नयेत्कालं कृच्छ्रैर्वा वर्तयेत्सदा।**
**पक्षे गते वाऽप्यश्नीयान्मासे वाऽहनि वा गते ॥ ५० ॥** ५

**चान्द्रायणै**र्वक्ष्यमाणलक्षणैः **कालं नयेत्। कृच्छ्रैर्वा** प्राजापत्यादिभिः कालं **वर्तयेत्।** यद्वा **पक्षे** पञ्चदशादिनात्मकेऽतीतेऽ**श्नीयात्। मासे वाऽहनि गते** वा नक्तमश्नीयात्। अपिशब्दाच्चतुर्थकालिकत्वादिनाऽपि। यथाह **मनुः** ( अ. ६ श्लो. १९ )। "नक्तं वाऽन्नं समश्नीयाद्दिवा वाऽऽहृत्य शक्तितः। चतुर्थकालिको वा स्यात्स्याद्वाऽप्यष्टमकालिकः " इति। एतेषां कालनियमानां स्वशक्त्यपेक्षया विकल्पः ॥ ५० ॥ १०

**स्वप्याद्भूमौ शुची रात्रौ दिवा संप्रपदैर्नयेत्।**
**स्थानासनविहारैर्वा योगाभ्यासेन वा तथा ॥ ५१ ॥**

किंच। आहारविहारावसरवर्ज्यं **रात्रौ शुचिः** प्रयतः **स्वप्यात्।** नोपविशेन्नापि तिष्ठेत्। दिवास्वप्नस्य पुरुषमात्रार्थतया प्रतिषिद्धत्वान्न तन्निवृत्तिपरम्। तथा भूमावेव स्वप्यात्। तच्च भूमावेव, न शय्यान्तरितायां मञ्चकादौ वा। दिनं तु **संप्रपदै**रटनैर्नयेत्। **स्थानासन**रूपैर्वा **विहारैः** १५ संचारैः कंचित्कालं स्थानं कंचिच्चोपवेशनमित्येवं वा दिनं नयेत्। **योगाभ्यासेन वा।** तथा च **मनुः** (अ. ६ श्लो. २९)। "विविधाश्चौपनिषदीरात्मसंसिद्धये श्रुतीरिति "। आत्मनः संसिद्धये ब्रह्मत्वप्राप्तये। तथाशब्दात्क्षितिपरिलोडनाद्वा नयेत्॥ " भूमौ विपरिवर्तेत तिष्ठेद्वा प्रपदैर्दिनमिति " **मनु**स्मरणात् ( अ. ६ श्लो. २२ )। प्रपदैः पादाग्रैः ॥ ५१ ॥

**ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः।** २०
**आर्द्रवासास्तु हेमन्ते शक्त्या वाऽपि तपश्चरेत् ॥ ५२ ॥**

किंच। 'त्र्यृतुः संवत्सरो ग्रीष्मो वर्षा हेमन्त ' इति दर्शनात् **ग्रीष्मे** चैत्रादिमासचतुष्टये चतसृषु दिक्षु चत्वार उपरिष्टादादित्य इत्येवं पञ्चानामग्नीनां मध्ये तिष्ठेत्। तथा **वर्षासु** श्रावणादिमासचतुष्टये **स्थण्डिलेशयः।** वर्षधाराविनिवारणाविरहिणि भूतले निवसेत्। **हेमन्ते** मार्गशीर्षादिमासचतुष्टये क्लिन्नं वासो वसीत। एवंविधतपश्चरणे असमर्थः स्वशक्त्यनुरूपं वा तपश्चरेत्। यथा २५ शरीरशोषस्तथा यतेत। " तपश्चरंश्चोग्रतरं शोषयेद्देहमात्मनः " इति **मनु**स्मरणात् ( अ. ६ श्लो. २४ ) ॥ ५२ ॥

**यः कण्टकैर्वितुदति चन्दनैर्यश्च लिम्पति।**
**अक्रुद्धोऽपरितुष्टश्च समस्तस्य च तस्य च ॥ ५३ ॥**

किंच। **यः** कश्चित्कण्टकादिभिर्विविधमङ्गानि **तुदति** व्यथयति तस्मै न क्रुध्येत्। यश्चन्द- ३०

नादिभिरुप**लिम्पति** सुखयति तस्य तु न परितुष्येत् । किंतु तयोरुभयोरपि समः स्यादुदासीनो भवेत् ॥ ५३ ॥

अग्निपरिचर्याक्षमं प्रत्याह

**अग्नीन्वाऽप्यात्मसात्कृत्वा वृक्षावासोऽमिताशनः ।**
५ **वानप्रस्थगृहेष्वेव यात्रार्थं भैक्ष्यमाचरेत् ॥ ५४ ॥**

**अग्नीना**त्मनि समारोप्य । **वृक्षावासो** वृक्ष एव आवासः कुटी यस्य स तथोक्तः । **मिताशनः** स्वल्पाहारः । **अपि**शब्दात्फलमूलाशनश्च भवेत् । यथाह **मनुः** ( अ. ६ श्लो. २५ ) । " अग्नीनात्मनि वैतानान्समारोप्य यथाविधि । अनग्निरनिकेतः स्यान्मुनिर्मूलफलाशनः " इति । मुनिर्मौनव्रतयुक्तः । फलमूलासंभवे च यावत्प्राणधारणं भवति तावन्मात्रं भैक्ष्यं वानप्रस्थगृहेष्वाचरेत् ॥५४॥

१० यदा तु तदसंभवो व्याध्यभिभवो वा तदा किं कार्यमित्यत आह

**ग्रामादाहृत्य वा ग्रासानष्टौ भुञ्जीत वाग्यतः ।**

**ग्रामाद्वा** भैक्ष्य**माहृत्य वाग्यतो मौनी** भूत्वा **अष्टौ ग्रासान्भुञ्जीत** । ग्राम्यभैक्ष्यविधानान्मुन्यन्नानियमोऽर्थलुप्तः । यदा पुनरष्टभिर्ग्रासैः प्राणधारणं न संभवति तदा " अष्टौ ग्रासा मुनेर्भैक्ष्यं वानप्रस्थस्य षोडशेति " स्मृत्यन्तरोक्तं द्रष्टव्यम् ॥

१५ सकलानुष्ठानासमर्थं प्रत्याह

**वायुभक्षः प्रागुदीचीं गच्छेद्वाऽऽवर्ष्मसंक्षयात् ॥ ५५ ॥**

अथवा वायुरेव भक्षो यस्यासौ **वायुभक्षः । प्रागुदीचीं**मैशानीं दिशं **गच्छेत् । आवर्ष्मसंक्षयात्** वर्ष्म वपुस्तस्य निपातपर्यन्तमकुटिलगतिर्गच्छेत् । यथाह **मनुः** ( अ. ६ श्लो. ३१ ) । " अपराजितां वाऽस्थाय गच्छेद्दिशमजिह्मगः " इति ।

२० महाप्रस्थानेऽप्यशक्तो भृगुपतनादिकं वा कुर्यात् । 'वानप्रस्थो वीराध्वानं ज्वलनाम्बुप्रवेशनं भृगुपतनं वाऽनुतिष्ठेदिति ' स्मरणात् । स्नानाचमनादिधर्मा ब्रह्मचारिप्रकरणाद्यभिहिताश्च विरोधिनोऽस्यापि भवन्ति । " उत्तरेषां चैतदविरोधीति " **गौतम**स्मरणात् ( अ. ३ सू. ९ ) । एवं प्रागुदिचैन्दवादिदीक्षामहाप्रस्थानपर्यन्तं तनुत्यागान्तमनुतिष्ठन्ब्रह्मलोके पूज्यतां प्राप्नोति । यथाह **मनुः** ( अ. ६ श्लो. ३२ ) । " आसां महर्षिचर्याणां त्यक्त्वाऽन्यतमया तनुम् । वीतशोकभयो विप्रो २५ ब्रह्मलोके महीयते " इति । ब्रह्मलोकः स्थानविशेषो न तु नित्यं ब्रह्म । तत्र लोकशब्दस्याप्रयोगात् । तत्र तुरीयाश्रममन्तरेण मुक्त्यनङ्गीकाराच्च । न च ' योगाभ्यासेन वा पुनरिति ' ब्रह्मोपासनविध्यनुपपत्त्या तद्भावापत्तिः परिशङ्कनीया । सालोक्यादिप्राप्त्यर्थत्वेनापि तदुपपत्तेः । अत एव **श्रुतौ** ' त्रयो धर्मस्कन्धा ' इत्युपक्रम्य ' यज्ञोऽध्ययनं दानमिति ' प्रथमः ' तप एवेति ' द्वितीयः ' ब्रह्मचार्याचार्यकुलवासी ' तृतीयः । अत्यन्तमाचार्यकुल एवमात्मानमवसादयन्निति गार्हस्थ्यवानप्रस्थ्यनैष्ठिकत्व-
३० स्वरूपमभिधाय सर्वे एते पुण्यलोका भवन्तीति त्रयाणामाश्रमिणां पुण्यलोकप्राप्तिमभिधाय ब्रह्मसंस्थोऽमृतत्व

मेतीति पारिशेष्यात् परिव्राजकस्यैव ब्रह्मसंस्थस्य मुक्तिलक्षणामृतत्वप्राप्तिरभिहिता । यदपि ' श्राद्ध-कृत्सत्यवादी च गृहस्थोऽपि विमुच्यते ' इति गृहस्थस्यापि मोक्षप्रतिपादनं तज्जन्मान्तरानुभूतपारिव्रज्य-स्येत्यवगन्तव्यम् ॥ ५५ ॥

इति वानप्रस्थधर्मप्रकरणम् ।

## अथ यतिधर्मप्रकरणम् ४

वैखानसधर्माननुक्रम्य क्रमप्राप्तान्परिव्राजकधर्मान्साम्प्रतं प्रस्तौति

**वनाद्गृहाद्वा कृत्वेष्टिं सार्ववेदसदक्षिणाम् ।**
**प्राजापत्यां तदन्ते तानग्नीनारोप्य चात्मनि ॥ ५६ ॥**
**अधीतवेदो जपकृत्पुत्रवानन्नदोऽग्निमान् ।**
**शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यात्तु नान्यथा ॥ ५७ ॥** १०

यावता कालेन तीव्रतपःशोषितवपुषो विषयकषायपरिपाको भवति पुनश्च मदोद्भवाशङ्का नोद्भा-व्यते तावत्कालं वनवासं कृत्वा तत्समनन्तरं मोक्षे मनः कुर्यात् । वनगृहशब्दाभ्यां तत्संबन्ध्याश्रमो लक्ष्यते । मोक्षशब्देन च मोक्षैकफलकश्चतुर्थाश्रमः ॥ अथवा

यतिधर्मनिरूपणम् ।

**गृहाद्वा**र्हस्थ्यादनन्तरं मोक्षे मनः कुर्यात् । अनेन च पूर्वोक्तश्चतुराश्रमसमुच्चयपक्षः पाक्षिक इति द्योतयति । तथा च विकल्पो **जाबाल**श्रुतौ श्रूयते । ' ब्रह्मचर्यं परिसमाप्य गृही भवेत्, गृही भूत्वा वनी भवेत्, १५ वनी भूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वेति ' ॥ तथा गार्हस्थ्योत्तरा-श्रमबाधश्च **गौतमेन** दर्शितः ( अ. ३ सू. ३५ ) । ' ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्य-स्येति ' ।

एषां च समुच्चयविकल्पबाधपक्षाणां सर्वेषां श्रुतिमूलत्वादिच्छया विकल्पः । अतो यत्कैश्चित्प-ण्डितमन्यैरुक्तम् । 'स्मार्तत्वान्नैष्ठिकत्वादीनां गार्हस्थ्येन श्रौतेन बाधः गार्हस्थ्यानधिकृतान्धक्लीबादिविष-२० यता वेति' तत्स्वाध्यायाध्ययनवैधुर्यनिबन्धनमित्युपेक्षणीयम् । किंच । यथा विष्णुक्रमणाज्यावेक्षणाद्यक्ष-मतया पंग्वादीनां श्रौतेष्वनधिकारस्तथा स्मार्तेष्वप्युदकुम्भाहरणभिक्षाचर्यादिष्वक्षमत्वात्कथं पंग्वादि-विषयतया नैष्ठिकत्वाद्याश्रमनिर्वाहः ॥ अस्मिंश्चाश्रमे ब्राह्मणस्यैवाधिकारः । **मनुः** (अ. ६ श्लो. २५) । "आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्" तथा ( अ. ६ श्लो. ९७ ) । ' एष वोऽभिहितो धर्मो ब्राह्मणस्य चतुर्विधः ' इत्युपक्रमोपसंहाराभ्यां **मनुना** ब्राह्मणस्याधिकारप्रतिपादनात् । ' ब्राह्मणाः २५ प्रव्रजन्तीति ' श्रुतेश्चाग्रजन्मन एवाधिकारो न द्विजातिमात्रस्य । अन्ये तु त्रैवर्णिकानां प्रकृतत्वात् त्रयाणां वर्णानां ' वेदमधीत्य चत्वार आश्रमा ' इति सूत्रकारवचनाच्च द्विजातिमात्रस्याधिकारमाहुः ॥

यदा च वनाद्गृहाद्वा प्रव्रजति तदा **सार्ववेदसदक्षिणां** सार्ववेदसी सर्ववेदसंबन्धिनी दक्षिणा यस्याः सा तथोक्ता तां प्रजापतिदेवताकामिष्टिं कृत्वा **तदन्ते तान्**वैतानानग्नी**नात्मनि** श्रुत्युक्त-विधानेन **समारोप्य ।** चशब्दादुदगयने पौर्णमास्यां पुरश्चरणमादौ कृत्वा ' शुद्धेन कायेनाष्टौ ३०

श्राद्धानि निर्वपेत् द्वादश वेति ' **बौधायनाद्युक्तं** । पुरश्चरणादिकं च कृत्वा तथाऽ**धीतवेदो** जपपरायणो जातपुत्रो दीनान्धकृपणार्पितार्थो यथाशक्त्यन्नदश्च भूत्वाऽनाहिताग्निज्येष्ठत्वादिना प्रतिबन्धाभावे कृताधानो नित्यनैमित्तिकान् यज्ञान्कृत्वा **मोक्षे मनः कुर्यात्** । चतुर्थाश्रमं प्रविशे**न्नान्यथा** ।

अनेनानपाकृतर्णत्रयस्य प्रव्रज्यायामनधिकारं दर्शयति । यथाह **मनुः** ( अ. ६ श्लो. ३५ )। " ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः " इति ॥ यदा तु ब्रह्मचर्यात्प्रव्रजति तदा न प्रजोत्पादनादिनियमः । अकृतदारपरिग्रहस्य तत्रानधिकारात् । रागप्रयुक्तत्वाच्च विवाहस्य । न च ऋणत्रयापाकरणविधिरेव दारानाक्षिपतीति शङ्कनीयम् । विद्याधनार्जननियमवदन्यप्रयुक्तदारसंभवे तस्यानाक्षेपकत्वात् ।

ननु ' जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान्जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः ' इति (वासिष्ठे अ.११ सू.४८)। जातमात्रस्यैव प्रजोत्पादनादीन्यावश्यकानीति दर्शयति । नैवम् । न हि जातमात्रः अकृतदाराग्निपरिग्रहो यज्ञादिष्वधिक्रियते । तस्मादधिकारी जायमानो ब्राह्मणादिर्यज्ञादीननुतिष्ठेदिति तस्यार्थः । अतश्चोपनीतस्य वेदाध्ययनमेवावश्यकम् । कृतदाराग्निपरिग्रहस्य प्रजोत्पादनमपीति निरवद्यम् ॥ ५६ ॥ ५७ ॥

एवमधिकारिणं निरूप्य तद्धर्मानाह

**सर्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः ।**
**एकारामः परिव्रज्य भिक्षार्थी ग्राममाश्रयेत् ॥ ५८ ॥**

सर्वभूतेभ्यः प्रियाप्रियकारिभ्यो हित उदासीनो न पुनर्हिताचरणः । ' हिंसानुग्रहयोरनारम्भीति ' **गौतम**स्मरणात् ( अ. ३ सू. २३।२४ ) ।**शान्तो** बाह्यान्तःकरणोपरतः । त्रयो दण्डा अस्य सन्तीति **त्रिदण्डी** । ते च दण्डा वैणवा ग्राह्याः । ' प्राजापत्येष्ट्यनन्तरं त्रीन्वैणवान्दण्डान्मूर्धप्रमाणान्दक्षिणेन पाणिना धारयेत्सव्येन सोदकं कमण्डलुमिति ' **स्मृत्यन्तर**दर्शनात् । एकं वा दण्डं धारयेत् । ' एकदण्डी त्रिदण्डी वेति ' **बौधायन**स्मरणात् ( २।१०।४० ) " चतुर्थमाश्रमं गच्छेद्ब्रह्मविद्यापरायणः । एकदण्डी त्रिदण्डी वा सर्वसंगविवर्जितः " इति **चतुर्विंशतिमते** दर्शनाच्च । तथा शिखाधारणमपि वैकल्पिकम् । ' मुण्डः शिखी वेति ' **गौतम**स्मरणात् ( अ. ३ सू. २१ ) । 'मुण्डोऽममोऽक्रोधोऽपरिग्रहः' इति वसिष्ठस्मरणात् ( अ. १० सू. ६ ) । यज्ञोपवीतधारणमपि वैकल्पिकमेव । ' सशिखान्केशान्निकृन्त्य विसृज्य यज्ञोपवीतमिति ' **काठक**श्रुतिदर्शनात् । ' कुटुम्बं पुत्रदारांश्च वेदाङ्गानि च सर्वशः । केशान् यज्ञोपवीतं च त्यक्त्वा गूढश्चरेन्मुनिरिति ' **बाष्कल**स्मरणाच्च । ' अथ यज्ञोपवीतमप्सु जुहोति भूःस्वाहेति अथ दण्डमादत्ते सखे मां गोपायेति ' **परिशिष्ट**दर्शनाच्च । यद्यशक्तस्तदा कन्थाऽपि ग्राह्या । ' काषायी मुण्डस्त्रिदण्डी कमण्डलुपवित्रपादुकासनकन्थामात्रः ' इति **देवल**स्मरणात् । शौचार्थं कमण्डलुसहितश्च भवेत् । **एकारामः** प्रव्रजितान्तरेणासहायः संन्यासिनीभिः स्त्रीभिश्च । ' स्त्रीणां चैक ' इति **बौधायनेन** स्त्रीणामपि प्रव्रज्यास्मरणात् । तथा च **दक्षः** । ' एको भिक्षुर्यथोक्तश्च द्वावेव मिथुनं स्मृतम् । त्रयो ग्रामः

समाख्यात ऊर्ध्वं तु नगरायते ॥ राजवार्तादि तेषां तु भिक्षावार्ता परस्परम् । अपि पैशून्यमात्सर्यं सन्निकर्षान्न संशयः ' इति । **परिव्रज्य** परिपूर्वो व्रजतिस्त्यागे वर्तते । अतश्चाहंममाभिमानं तत्कृतं च लौकिकं कर्मनिचयं वैदिकं च नित्यकाम्यात्मकं संत्यजेत । **तदुक्तं मनुना** ( अ. १२ श्लो. ८८।९०।९२ ) ।

" सुखाभ्युदयिकं चैव नैश्रेयसिकमेव च । प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ॥

" इह वाऽमुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते । निष्कामं ज्ञानपूर्वं तु निवृत्तमुपदिश्यते ॥

" यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः । आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवानिति"॥ अत्र वेदाभ्यासः प्रणवाभ्यासस्तत्र यत्नवान् । भिक्षाप्रयोजनार्थं ग्राममाश्रयेत् प्रविशेत्, न पुनः सुखनिवासार्थम्। वर्षाकाले तु न दोषः । ' ऊर्ध्वं वार्षिकाभ्यां मासाभ्यां नैकस्थानवासीति ' **शङ्खस्मरणात्** । अशक्तौ पुनर्मासचतुष्टयपर्यन्तमपि स्थातव्यं न चिरमेकत्र वसेदन्यत्र वर्षाकालात् । ' श्रावणादयश्चत्वारो मासा वर्षाकालः ' इति **देवलस्मरणात्**। "एकरात्रं वसेद्ग्रामे नगरे रात्रिपञ्चकम् । वर्षाभ्योऽन्यत्र वर्षासु मासांस्तु चतुरो वसेदिति " **काण्वस्मरणात्** ॥ ५८ ॥

कथं भिक्षाटनं कार्यमित्यत आह

**अप्रमत्तश्चरेद्भैक्षं सायाह्नेऽनभिलक्षितः ।**
**रहिते भिक्षुकैर्ग्रामे यात्रामात्रमलोलुपः ॥ ५९ ॥**

**अप्रमत्तो** वाक्चक्षुरादिचापलरहितो **भैक्षं चरेत्** । **वसिष्ठेनात्र** विशेषो दर्शितः ( अ. १० सू. ७ ) । ' सप्तागाराण्यसंकल्पितानि चरेद्भैक्षमिति ' । **सायाह्ने** अह्नः पञ्चमे भागे । तथा च **मनुः** ( अ. ६ श्लो. ५६ ) । "विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने । वृत्ते शरावसंपाते नित्यं भिक्षां यतिश्चरेदिति " । तथा " एककालं चरेद्भिक्षां प्रसज्येत न तु विस्तरे । भैक्षप्रसक्तो हि यतिर्विषयेष्वपि सज्जतीति " ( अ. ६ श्लो. ५५ ) । **अनभिलक्षितः** ज्योतिर्विज्ञानोपदेशादिना अचिह्नितः । **मनुः** ( अ. ६ श्लो. ५० ) । "न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया । नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचिदिति " तेनोक्तत्वादिति ॥ यत्पुन**र्वसिष्ठ**वचनम् ( अ. १० सू. २४ ) । ' ब्राह्मणकुले वा यल्लभेत तद्भुञ्जीत सायंप्रातर्मांसवर्ज्यमिति ' तदाशक्तविषयम् ॥ **भिक्षुकै**र्भिक्षणशीलैः पाखण्ड्यादिभिर्वर्जिते ग्रामे । **मनुना**ऽत्र विशेष उक्तः ( अ. ६ श्लो. ५१ ) । " न तापसैर्ब्राह्मणैर्वा वयोभिरपि वा श्वभिः । आकीर्णं भिक्षुकैरन्यैरगारमुपसंव्रजेदिति " ॥ यावता प्राणयात्रा वर्तते तावन्मात्रं भैक्षं चरेत् । तथा च **संवर्तः** । " अष्टौ भिक्षाः समादाय मुनिः सप्त च पञ्च वा । अद्भिः प्रक्षाल्य ताः सर्वास्ततोऽश्नीयाच्च वाग्यतः " इति । **अलोलुपो** मिष्टान्नव्यञ्जनादिष्वप्रसक्तः ॥ ५९ ॥

भिक्षाचरणार्थं पात्रमाह

**यतिपात्राणि मृद्वेणुदार्वलाबुमयानि च ।**
**सलिलं शुद्धिरेतेषां गोवालैश्चावघर्षणम् ॥ ६० ॥**

मृदादिप्रकृतिकानि यतीनां पात्राणि भवेयुः । तेषां सलिलं गोवालावघर्षणं च शुद्धिसाधनम् । **इयं च** शुद्धिर्भिक्षाचरणप्रयोगाङ्गभूता नामेध्याद्युपहितविषया । तदुपघाते द्रव्यशुद्धिप्रकरणोक्ता द्रष्टव्या। **अत एव मनुना** ( अ. ६ श्लो. ५३ ) । " अतैजसानि पात्राणि तस्य स्युर्निर्व्रणानि च । तेषामद्भिः स्मृतं शौचं चमसानामिवाध्वरे " इति चमसदृष्टान्तोपादानेन प्रायोगिकी शुद्धिर्दर्शिता । पात्रान्तराभावे भोजनमपि तत्रैव कार्यम् । ' तद्भैक्ष्यं गृहीत्वैकान्ते तेन पात्रेणान्येन वा तूष्णीं मात्रया भुञ्जीतेति ' **देवल**स्मरणात् ॥ ६० ॥

एवंभूतस्य यतेरात्मोपासनाङ्गं नियमविषयमाह

**संनिरुध्येन्द्रियग्रामं रागद्वेषौ प्रहाय च ।**
**भयं हित्वा च भूतानाममृती भवति द्विजः ॥ ६१ ॥**

चक्षुरादीन्द्रियसमूहं रूपादिविषयेभ्यः **सम्यङ्निरुध्य** विनिवर्त्य **रागद्वेषौ** प्रियाप्रियविषयौ **प्रहाय** त्यक्त्वा **च**शब्दादीर्ष्यादीनपि तथा भूतानामपकारेण भयमकुर्वन् शुद्धान्तःकरणः सन्नद्वैतसाक्षात्कारेण**ामृती भवति** मुक्तो भवति ॥ ६१ ॥

**कर्तव्याशयशुद्धिस्तु भिक्षुकेण विशेषतः ।**
**ज्ञानोत्पत्तिनिमित्तत्वात्स्वातन्त्र्यकरणाय च ॥ ६२ ॥**

किंच । विषयाभिलाषजनितदोषकलुषितस्याशयस्यान्तःकरणस्य शुद्धिः कल्मषक्षयः प्राणायामैः कर्तव्या । तस्याः शुद्धेरात्माद्वैतसाक्षात्काररूपज्ञानोत्पत्तिनिमित्तत्वात् । एवं च सति विषयासक्तितज्जनितदोषात्मकप्रतिबन्धक्षये सत्यात्मध्यानधारणादौ स्वतन्त्रो भवति । तस्माद्भिक्षुकेण त्वेषा शुद्धिर्विशेषतोऽनुष्ठेया । तस्य मोक्षप्रसाधनत्वात् । मोक्षस्य च शुद्धान्तःकरणतामन्तरेण दुर्लभत्वात् । यथाह **मनुः** ( अ. ६ श्लो. ७१ ) । " दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः । तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहादिति " ॥ ६२ ॥

इन्द्रियनिरोधोपायतया संसारस्वरूपनिरूपणमाह

**आवेक्ष्या गर्भवासाश्च कर्मजा गतयस्तथा ।**
**आधयो व्याधयः क्लेशा जरा रूपविपर्ययः ॥ ६३ ॥**
**भवो जातिसहस्रेषु प्रियाप्रियविपर्ययः ।**

वैराग्यसिद्ध्यर्थं मूत्रपुरीषादिपूर्णनानाविध**गर्भवासा** आवेक्षणीयाः पर्यालोचनीयाः । चशब्दाज्जननोपरमावपि । तथा निषिद्धाचरणादिक्रियाजन्या महारौरवादिनिरयपतनरूपा **गतयः** । तथाऽऽ**धयो** मनःपीडाः, **व्याधयश्च** ज्वरातीसाराद्याः, शारीराः **क्लेशाः** अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च **जरा** वलितपलिताद्यभिभवः, **रूपविपर्ययः** खञ्जकुब्जत्वादिना प्राक्तनस्य रूपस्यान्यथाभावः तथा श्वसूकरखरोरगाद्यनेकजातिषु **भवः** उत्पत्तिः । तथा इष्टस्याप्राप्तिः अनिष्टस्य प्राप्तिरित्यादिबहुतरक्लेशात्मकं संसारस्वरूपं पर्यालोच्य तत्परिहारार्थमात्मज्ञानोपायभूतेन्द्रियजये प्रयतेत ॥ ६३ ॥

एवमवेक्ष्यानन्तरं किं कार्यमित्यत आह

**ध्यानयोगेन संपश्येत्सूक्ष्म आत्मात्मनि स्थितः ॥ ६४ ॥**

**योग**'श्चित्तवृत्तिनिरोधः' । 'आत्मैकाग्रता' **ध्यानम्** । तस्या एव बाह्यविषयत्वोपरमः ध्यानयोगेन निदिध्यासनापरपर्यायेण सूक्ष्मशरीरप्राणादिव्यतिरिक्तः क्षेत्रज्ञः **आत्मनि** ब्रह्मण्यव**स्थितः** । इत्येवं तत्त्वंपदार्थयोरभेदं सम्यक् **पश्येत्** अपरोक्षीकुर्यात् । अत एव श्रुतौ ' आत्मा वाऽरे द्रष्टव्यः ' इति साक्षात्काररूपं दर्शनमनूद्य तत्साधनत्वेन ' श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ' इति **श्रवणमनन**-निदिध्यासनानि विहितानि ॥ ६४ ॥

**नाश्रमः कारणं धर्मे क्रियमाणो भवेद्धि सः ।**
**अतो यदात्मनोऽपथ्यं परेषां न तदाचरेत् ॥ ६५ ॥**

किंच । प्राक्तनश्लोकोक्तात्मोपासनाख्ये **धर्मे नाश्रमो** दण्डकमण्डल्वादिधारणं **कारणम्** । यस्मादसौ **क्रियमाणो भवेद्**एव नातिदुष्करः । तस्माद्**यदात्मनोऽपथ्यम्**उद्वेगकरं परुषभाषणादि **तत्परेषां** न समा**चरेत्** । अनेन ज्ञानोत्पत्तिहेतुभूतान्तःकरणशुद्ध्यापादनत्वेनान्तरङ्गत्वात् रागद्वेषप्रहा-णस्य प्रधानत्वेन प्रशंसार्थमाश्रमनिराकरणम् न पुनस्तत्परित्यागाय तस्यापि विहितत्वात् । तदुक्तं **मनुना** ( अ. ६ श्लो. ६६ ) । " दूषितोऽपि चरेद्धर्मं यत्र तत्राश्रमे वसन् । समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणमिति " ॥ ६५ ॥

**सत्यमस्तेयमक्रोधो ह्रीः शौचं धीर्धृतिर्दमः ।**
**संयतेन्द्रियता विद्या धर्मः सर्व उदाहृतः ॥ ६६ ॥**

किंच । **सत्यं** यथार्थप्रियवचनम् । **अस्तेयं** परद्रव्यानपहारः । **अक्रोधो**ऽपकारिण्यपि क्रोध-स्यानुत्पादनम् । **ह्रीर्**लज्जा । **शौच**माहारादिशुद्धिः । **धी**र्हिताहितविवेकः । **धृतिर्**इष्टवियोगेऽनिष्टप्राप्तौ प्रचलितचित्तस्य यथापूर्वमवस्थापनम् । **दमो** मदत्यागः । **संयतेन्द्रियता** अप्रतिषिद्धेष्वविषयेषु अनतिसङ्गः । **विद्या** आत्मज्ञानम् । एतैः सत्यादिभिरनुष्ठितैः **सर्वो धर्मो**ऽनुष्ठितो भवति । अनेन दण्डकमण्डल्वादिधारणबाह्यलक्षणात्सत्यादीनामात्मगुणानामन्तरङ्गतां द्योतयति ॥ ६६ ॥

ननु ध्यानयोगेनात्मनि स्थितमात्मानं पश्येदित्युक्तं जीवपरमात्मनोर्भेदाभावादित्यत आह

**निःसरन्ति यथा लोहपिण्डात्तप्तात्स्फुलिङ्गकाः ।**
**सकाशादात्मनस्तद्वदात्मानः प्रभवन्ति हि ॥ ६७ ॥**

यद्यपि जीवपरमात्मनोः पारमार्थिको भेदो नास्ति तथाप्यात्मनः सकाशादविद्योपाधिभेद-भिन्नतया जीव**आत्मानः प्रभवन्ति** । **हि** यस्मात् । तस्माद्युज्यत एव जीवपरमात्मनोर्भेदव्यपदेशः । यथा हि तप्ता**ल्लोहपिण्डाद**योगोलकादि**स्फुलिङ्गका**स्तेजोवयवा **निःसरन्ति** निःसृताश्च **स्फुलिङ्ग**-व्यपदेशं लभन्ते **तद्वत्** । अत उपपन्न आत्माऽऽत्मनि स्थितो द्रष्टव्य इति ।

यद्वाऽयमर्थः । ननु सुषुप्तिसमये प्रलये च सकलक्षेत्रज्ञानां ब्रह्मणि प्रलीनत्वात् **कस्यायमात्मनो**-

पासनाविधिरित्यत आह । **निःसरन्तीत्यादि** । यद्यपि सूक्ष्मरूपेण प्रलयवेलायां प्रलीनास्तथाऽप्यात्मनः सकाशादविद्योपाधिभेदभिन्नतया जीवात्मानः प्रभवन्ति, पुनः कर्मवशात्स्थूलशरीराभिमानिनो जायन्ते । तस्मान्नोपासनाविधिविरोधः । तैजसस्य पृथग्भावसाम्याल्लोहपिण्डदृष्टान्तः ॥ ६७ ॥

ननु चानुपात्तवपुषां क्षेत्रज्ञानां निष्परिस्पन्दतया कथं तन्निबन्धनो जरायुजाण्डजादिचतुर्विध-
देहपरिग्रह इत्यत आह

**तत्रात्मा हि स्वयं किंचित्कर्म किंचित्स्वभावतः ।**
**करोति किंचिदभ्यासाद्धर्माधर्मोभयात्मकम् ॥ ६८ ॥**

यद्यपि तस्यामवस्थायां परिस्पन्दात्मकक्रियाभावस्तथापि धर्माधर्माध्यवसायात्मकं कर्म मानसं भवत्येव । तस्य च विशिष्टशरीरग्रहणहेतुत्वमस्त्येव । "वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिता-
५ मिति" **मनुस्मरणात्** (अ. १२ श्लो. ९) । एवं गृहीतवपुः स्वयमेवान्वयव्यतिरेकानिरपेक्षः स्तन्य-पानादिके कृते तृप्तिर्भवत्यकृते न भवतीत्येवंरूपौ यावन्वयव्यतिरेकौ तत्र निरपेक्षं प्राग्भवीयानुभव-भावितभावनानुभावाद्गतकार्यविबोधः **किंचित्**स्तन्यपानादिकं **करोति** । **किंचित्स्वभावतो** यदृ-च्छया प्रयोजनाभिसंधिनिरपेक्षं पिपीलिकादिभक्षणं **करोति** । किंचिद्भवान्तराभ्यासवशाद्धर्माधर्मोभयरूपं करोति । तथा च **स्मृत्यन्तरम्** । "प्रतिजन्म यदभ्यस्तं दानमध्ययनं तपः । तेनैवाभ्यासयोगेन
१० तदेवाभ्यसते पुनरिति" । एवं जीवानां कर्मवैचित्र्यं तत्कृतं जरायुजादिदेहवैचित्र्यं युज्यत एव ।६८।

नन्वेवं सति ब्रह्मण एव कथंचिज्जीवव्यपदेश्यत्वात्तस्य च नित्यत्वादिधर्मत्वात्कथं विष्णुमित्रो-
जात इति व्यवहार इत्याशंक्याह

**निमित्तमक्षरः कर्ता बोद्धा ब्रह्म गुणी वशी ।**
**अजः शरीरग्रहणात्स जात इति कीर्त्यते ॥ ६९ ॥**

सत्यमात्मा सकलजगत्प्रपञ्चाविर्भावेऽविद्यासमावेशवशात्समवाय्यसमवायिन्निमित्तमित्येवं **स्वयमेव**
१० त्रिविधमपि कारणं न पुनः कार्यकोटिनिविष्टः यस्माद**क्षरो**ऽविनश्वरः । ननु सत्वादिगुणविकारस्य सुखदुःखमोहात्मकस्य कार्यभूते जगत्प्रपञ्चे दर्शनात्तद्गुणवत्याः प्रकृतेरेव जगत्कर्तृतोचिता न पुनर्नि-र्गुणस्य ब्रह्मणः । मैवं मंस्थाः । आत्मैव **कर्ता** । यस्मादसौ जीवोपभोग्यसुखदुःखहेतुभूतादृष्टादे**र्बोद्धा** । न ह्यचेतनायाः प्रकृतेर्नामरूपव्याकृतविचित्रभोक्तृवर्गभोग्यानुकूलभोगायतनादियोगिजगत्प्रपञ्चरचना घटते ।
१५ तस्मादात्मैव कर्ता, तथा स एव **ब्रह्म** बृंहको विस्तारकः । न चासौ निर्गुणः यतस्तस्य त्रिगुणशक्तिर-विद्या प्रकृतिप्रधानाद्यपरपर्याया विद्यते । अतः स्वतो निर्गुणत्वेऽपि शक्तिमुखेन सत्वादिगुणयोगी कथ्यते । न चैतावता प्रकृतेः कारणता, यस्मादात्मैव **वशी** स्वतन्त्रो न प्रकृतिर्नाम स्वतन्त्रं तत्त्वान्तरं, तादृग्विधत्वे प्रमाणाभावात् । न च वचनीयं शक्तिरूपाऽपि सैव कर्तृभूतेति । यतः शक्तिमत्कारकं न शक्तिस्तस्मादात्मैव जगतस्त्रिविधमऽपि कारणम् । तथा **अज** उत्पत्तिरहितः । अतस्तस्य यद्यपि साक्षा-
२० ज्जननं नोपपद्यते तथाऽपि **शरीरग्रहण**मात्रेण **जात इत्यु**च्यते अवस्थान्तरयोगितयोत्पत्तेः गृहस्थो जात इतिवत् ॥६९॥

शरीरग्रहणप्रकारमाह

**सर्गादौ स यथाकाशं वायुं ज्योतिर्जलं महीम् ।**
**सृजत्येकोत्तरगुणांस्तथाऽऽदत्ते भवन्नपि ॥ ७० ॥**

सृष्टिसमये स परमात्मा यथाऽऽकाशादीन् शब्दैकगुणं गगनं शब्दस्पर्शगुणः पवनः शब्दस्पर्शरूपगुणं तेजः शब्दस्पर्शरूपरसवदुदकं शब्दस्पर्शरूपरसगन्धगुणा जगतीत्येव**मेकोत्तरगुणान् सृजति** । तथाऽऽत्मा जीवभावमापन्नो **भवन्नु**त्पद्यमानोऽपि स्वशरीरस्यारम्भकत्वे नापितानुपादत्ते गृह्णाति ॥ ७० ॥

कथं शरीरारम्भकत्वं पृथिव्यादीनामित्यत आह

**आहुत्याप्यायते सूर्यः सूर्याद्वृष्टिरथौषधिः ।**
**तदन्नं रसरूपेण शुक्रत्वमधिगच्छति ॥ ७१ ॥**

यजमानैः प्रक्षिप्तयाऽऽ**हुत्या** पुरोडाशादिरसेना**नाप्यायते सूर्यः** । **सूर्याच्च** कालवशेन परिपक्वाज्यादिहवीरसा**द्वृष्टिर्भ**वति । ततो व्रीह्याद्यौ**षधि**रूपमन्नं । **तच्चान्नं** सेवितं सत् रसरुधिरादिक्रमेण शुक्रशोणितभावमापद्यते ॥ ७१ ॥

ततः किमित्यत आह

**स्त्रीपुंसयोस्तु संयोगे विशुद्धे शुक्रशोणिते ।**
**पञ्चधातून्स्वयं षष्ठ आदत्ते युगपत्प्रभुः ॥ ७२ ॥**

ऋतुवेलायां **स्त्रीपुंसयोर्योगे** शुक्रं च शोणितं च शुक्रशोणितं तस्मिन्परस्परसंयुक्ते **विशुद्धे** 'वातपित्तश्लेष्मदुष्टग्रन्थिपूयक्षीणमूत्रपुरीषगन्धरेतांस्यबीजानीति' स्मृत्यन्तरोक्तदोषरहिते स्थित्वा **पञ्चधातून्** पृथिव्यादिपञ्चमहाभूतानि शरीरारम्भकतया **स्वयं षष्ठ**श्चिद्धातुरात्मा **प्रभुः** शरीरारम्भकरणेऽदृष्टकर्मयोगितया समर्थो **युगपदादत्ते** भोगायतनत्वेन स्वीकरोति । तथा च **शारीर**के । "स्त्रीपुंसयोः संयोगे योनौ रजसाऽभिसंसृष्टं शुक्रं तत्क्षणमेव सह भूतात्मना गुणैश्च सत्वरजस्तमोभिः सह वायुना प्रेर्यमाणं गर्भाशये तिष्ठतीति" ॥ ७२ ॥

**इन्द्रियाणि मनः प्राणो ज्ञानमायुः सुखं धृतिः ।**
**धारणा प्रेरणं दुःखमिच्छाहङ्कार एव च ॥ ७३ ॥**
**प्रयत्न आकृतिर्वर्णः स्वरद्वेषौ भवाभवौ ।**
**तस्यैतदात्मजं सर्वमनादेरादिमिच्छतः ॥ ७४ ॥**

किंच । **इन्द्रियाणि** ज्ञानकर्मेन्द्रियाणि वक्ष्यमाणानि । **मन**श्चोभयसाधारणम् । **प्राणो**ऽपानो व्यान उदानः समान इत्येवं पञ्चवृत्तिभेदाभिन्नः शारीरो वायुः प्राणः । **ज्ञान**मवगमः । **आयुः** कालविशेषावच्छिन्नं जीवनम् । **सुखं** निर्वृतिः । **धृति**श्चित्तस्थैर्यम् । **धारणा** प्रज्ञा मेधा च । **प्रेरणं**

ज्ञानकर्मेन्द्रियाणामधिष्ठातृत्वम्। **दुःख**मुद्वेगः। **इच्छा** स्पृहा। **अहङ्कारो**ऽहंकृतिः। **प्रयत्न** उद्यमः। **आकृति**राकारः। **वर्णो** गौरिमादिः। **स्वरः** षड्जगान्धारादिः। **द्वेषो** वैरम्। **भवः** पुत्रपश्वादिविभवः। **अभवस्त**द्विपर्ययः। **तस्यानादेरात्मनो नित्यस्यादिमिच्छतः शरीरं** जिघृक्षमाणस्य **सर्वमेत**दिन्द्रियादिकमात्मजनितं प्रागभवीयकर्मबीजजन्यमित्यर्थः॥ ७३॥ ७४॥

संयुक्तशुक्रशोणितस्य कार्यरूपपरिणतौ क्रममाह

**प्रथमे मासि संक्लेदभूतो धातुविमूर्छितः।**
**मास्यर्बुदं द्वितीये तु तृतीयेऽङ्गेन्द्रियैर्युतः॥ ७५॥**

असौ चेतनः षष्ठो धातुः **धातुविमूर्छितः** धातुषु पृथिव्यादिषु **विमूर्छितो** लोलीभूतः क्षीरनीरवदेकीभूत इति यावत्। **प्रथमे** गर्भमासे **संक्लेदभूतो** द्रवरूपतां प्राप्त एवावतिष्ठते। न कठिणतया परिणमते। **द्वितीये तु मास्यर्बुद**मीषत्कठिणमांसपिण्डरूपं भवति। अयमभिप्रायः। कौष्ठ्यपवनजठरदहनाभ्यां प्रतिदिनमीषदीषच्छोष्यमाणं शुक्रसंपर्कात् द्रवीभूतं भूतजातं त्रिंशद्भिर्दिनैः काठिण्यमापद्यत इति। तथा च **सुश्रुते**। "द्वितीये शीतोष्णानिलैरभिपच्यमानो भूतसंघातो घनो जायत" इति। **तृतीये** तु **मास्यङ्गैरिन्द्रियैश्च** संयुक्तो भवति॥ ७५॥

**आकाशाल्लाघवं सौक्ष्म्यं शब्दं श्रोत्रं बलादिकम्।**
**वायोश्च स्पर्शनं चेष्टां व्यूहनं रौक्ष्यमेव च॥ ७६॥**
**पित्तात्तु दर्शनं पक्तिमौष्ण्यं रूपं प्रकाशिताम्।**
**रसात्तु रसनं शैत्यं स्नेहं क्लेदं समार्दवम्॥ ७७॥**
**भूमेर्गन्धं तथा घ्राणं गौरवं मूर्तिमेव च।**
**आत्मा गृह्णात्यजः सर्वं तृतीये स्पन्दते ततः॥ ७८॥**

किंच। **आत्मा गृह्णातीति** सर्वत्र संबध्यते। गगनाल्लाघिमानं लंघनक्रियोपयोगिनम्। **सौक्ष्म्यं** सूक्ष्मेक्षित्वम्। **शब्दं** विषयम्। **श्रोत्रं** श्रवणेन्द्रियम्। **बलं** दाढर्च्यम्। **आदि**ग्रहणात्सुषिरत्वं विविक्ततां च। 'आकाशाच्छब्दं श्रोत्रं विविक्ततां सर्वच्छिद्रसमूहांश्चेति' **गर्भोपनिष**द्दर्शनात्। पवनात्स्पर्शेन्द्रियम्। **चेष्टां** गमनागमनादिकाम्। **व्यूहनमङ्गा**नां विविधं प्रसारणम्। **रौक्ष्यं** कर्कशत्वं चशब्दात्स्पर्शं च। **पित्ता**त्तेजसो **दर्शनम्**। **चक्षुरि**न्द्रियम्। **पक्तिं** भुक्तस्यान्नस्य पचनम्। **औष्ण्यमु**ष्णस्पर्शत्वमङ्गानाम्। **रूपं** श्यामिकादि। **प्रकाशितां** भ्राजिष्णुताम्। तथा संतापामर्षादि च। 'शौर्यामर्षतैक्ष्ण्यपक्त्यौष्ण्यभ्राजिष्णुतासंतापवर्णरूपेन्द्रियाणि तैजसानीति' **गर्भोपनिष**द्दर्शनात्। एवं **रसा**दुदकाद्रसनेन्द्रियम्। **शैत्यमङ्गा**नां स्निग्धताम्। मृदुत्वसहितं **क्लेद**मार्द्रताम्। तथा **भूमेर्गन्धं** घ्राणेन्द्रियम्। गरिमाणं मूर्तिं च। सर्वमेतत्परमार्थतो जन्मरहितोऽप्यात्मा तृतीये मासि गृह्णाति। **तत**श्चतुर्थे मासि **स्पन्दते** चलति। तथा **शारीरके**। 'तस्माच्चतुर्थे मासि चलनादावभिप्रायं करोतीति'॥ ७६॥ ७७॥ ७८॥

**द्वौहृदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ।**
**वैरूप्यं मरणं वाऽपि तस्मात्कार्यं प्रियं स्त्रियाः ॥ ७९ ॥**

किंच । गर्भस्यैकं हृदयं गर्भिण्याश्चापरमित्येवं द्विहृदया तस्या स्त्रिया यदभिलषितं तत् **द्वौहृदम्। तस्याप्रदानेन गर्भो** विरूपतां मरणरूपं वा दोषं प्राप्नोति । **तस्मात्त**द्दोषपरिहारार्थं च गर्भिण्याः **स्त्रियाः** यत्प्रियमभिलषितं तत्संपादनीयम् । तथा च **सुश्रुते** । ' द्विहृदयां नारीं दौहृदिनीमाचक्षते । तदभिलषितं दद्यात् । वीर्यवन्तं चिरायुषं पुत्रं जनयतीति ' । तथा च व्यायामादिकमपि गर्भग्रहणप्रभृतितया परिहरणीयम् । ' ततःप्रभृति व्यायामव्यवायातितर्पणदिवास्वप्नरात्रिजागरणशोकभययानारोहणवेगधारणकुक्कुटासनशोणितमोक्षणानि परिहरेदिति ' **तत्रै**वाभिधानात् । गर्भग्रहणं च श्रमादिभिर्लिङ्गैरवगंतव्यम् । ' सद्योगृहीतगर्भायाः श्रमो ग्लानिः पिपासा सक्थिसीदनं शुक्रशोणितयोरवबन्धः स्फुरणं च योनेरित्यादि ' **तत्रै**वोक्तम् ॥ ७९ ॥

**स्थैर्यं चतुर्थे त्वङ्गानां पञ्चमे शोणितोद्भवः ।**
**षष्ठे बलस्य वर्णस्य नखरोम्णां च संभवः ॥ ८० ॥**

किंच । तृतीये मासि प्रादुर्भूतस्याङ्गसंघस्य **चतुर्थे** मासि **स्थैर्यं** स्थेमा भवति । **पञ्चमे** लोहित**स्योद्भव** उत्पत्तिः । तथा **षष्ठे बलस्य वर्णस्य** कररुहरोम्णां **च संभवः** ॥ ८० ॥

**मनश्चैतन्ययुक्तोऽसौ नाडीस्नायुशिरायुतः ।**
**सप्तमे चाष्टमे चैव त्वङ्मांसस्मृतिमानपि ॥ ८१ ॥**

किंच । असौ पूर्वोक्तो गर्भः **सप्तमे** मासि मनसा चेतसा चेतनया च युक्तो **नाडी**भिर्वायुवाहिनीभिः **स्नायु**भिरस्थिबन्धनैः **शिरा**भिर्वातपितश्लेष्मवाहिनीभिश्च संयुतः तथाऽ**ष्टमे** मासि **त्वचा मांसेन स्मृत्या** च युक्तो भवति ॥ ८१ ॥

**पुनर्धात्रीं पुनर्गर्भमोजस्तस्य प्रधावति ।**
**अष्टमे मास्यतो गर्भो जातः प्राणैर्वियुज्यते ॥ ८२ ॥**

किंच । तस्याष्टममासिकस्य गर्भ**स्याजैः** कश्चन गुणविशेषो **धात्रीं गर्भं** च प्रति **पुनः पुन**रतितरां चञ्चलतया शीघ्रं गच्छति । **अतोऽष्टमे मासि जातो गर्भः प्राणैर्वियुज्यते** । अनेनौजःस्थितिरेव जीवनहेतुरिति दर्शयति ॥ ओजःस्वरूपं च **स्मृत्यन्तरे** दर्शितम् । " हृदि तिष्ठति यच्छुद्धमीषदुष्णं सपीतकम् । ओजःशरीरे संख्यातं तन्नाशान्नाशमृच्छतीति " ॥ ८२ ॥

**नवमे दशमे वाऽपि प्रबलैः सूतिमारुतैः ।**
**निःसार्यते बाण इव यन्त्रच्छिद्रेण सज्वरः ॥ ८३ ॥**

किंच । एवं करचरणचक्षुरादिपरिपूर्णाङ्गेन्द्रियो **नवमे दशमे** वाऽपि मासे अपिशब्दात्सप्तमेऽष्टमे वा अत्यायासादिदोषवत्प्रबलसूतिहेतुप्रभञ्जनप्रेरितः स्नाय्वस्थिचर्मविनिर्मितवपुर्यन्त्रस्य

**छिद्रेण** सूक्ष्मसुषिरेण **सज्वरो** दुःसहदुःखाभिभूयमानो **निःसार्यते** धनुर्यन्त्रेण सुधन्वप्रेरितो बाण इवातिवेगेन । निर्गमसमनन्तरं च बाह्यपवनस्पृष्टो नष्टप्राचीनस्मृतिर्भवति । ' जातः स वायुना स्पृष्टो न स्मरति पूर्वं जन्ममरणं कर्म च शुभाशुभमिति ' **निरुक्तस्याष्टादशे**ऽभिधानात् ॥ ८३ ॥

कायस्वरूपं विवृण्वन्नाह

**तस्य षोढा शरीराणि षट् त्वचो धारयन्ति च ।**
**षडङ्गानि तथाऽस्थ्नां च सह षष्ट्या शतत्रयम् ॥ ८४ ॥**

तस्यात्मनो यानि जरायुजाण्डजशरीराणि तानि प्रत्येकं **षट्**प्रकाराणि रक्तादिषड्धातुपरिपाकहेतुभूतषडग्निस्थानयोगित्वेन । तथा ह्यन्नरसो जाठराग्निना पच्यमानो रक्ततां प्रतिपद्यते । रक्तं च स्वकोशस्थेनाग्निना पच्यमानं मांसत्वम् । मांसं च स्वकोशानलपरिपक्वं मेदस्त्वम् । मेदोऽपि स्वकोश-
१० वह्निना पक्वमस्थिताम् । अस्थ्यपि स्वकोशशिखिपरिपक्वं मज्जात्वम् । मज्जाऽपि स्वकोशपावकपरिपच्यमानश्चरमधातुतया परिणमते । चरमधातोस्तु परिणतिर्नास्तीति स एवात्मनः प्रथमः कोशः । इत्येवं षट्कोशाग्नियोगित्वात् षट्प्रकारत्वं शरीराणाम् । अन्नरसरूपस्य तु प्रथमधातोरनियतत्वान्न तेन प्रकारान्तरत्वम् । तानि च शरीराणि षट् त्वचो धारयन्ति । रक्तमांसमेदोस्थिमज्जाशुक्राख्याः षट् धातव एव रम्भास्तम्भत्वगिव बाह्याभ्यन्तररूपेण स्थिताः त्वगिवाच्छादकत्वात्त्वचस्ताः षट्त्वचो धारयन्ति । तदि-
१५ दमायुर्वेदप्रसिद्धम् । **तथाऽङ्गानि च षडेव** करयुग्मं चरणयुगलमुत्तमाङ्गं गात्रमिति । **अस्थ्नां** तु षष्टिसहितं शतत्रयमुपरितनषट्श्लोक्या वक्ष्यमाणमवगन्तव्यम् ॥ ८४ ॥

**स्थालैः सह चतुःषष्टिर्दन्ता वै विंशतिर्नखाः ।**
**पाणिपादशलाकाश्च तेषां स्थानचतुष्टयम् ॥ ८५ ॥**

किंच । **स्थालानि** दन्तमूलप्रदेशस्थान्यस्थीनि द्वात्रिंशत्तैः सह द्वात्रिंशद्**दन्ताश्चतुःषष्टि-**
२० र्भवन्ति । **नखाः** करचरणरुहा **विंशतिः** हस्तपादस्थानि । **शलाका**कारण्यस्थीनि मणिबन्धस्योपरिवर्तीनि अङ्गुलिमूलस्थानि विंशतिरेव, **तेषां** नखानां शलाकास्थ्नां च **स्थानचतुष्टयं** द्वौ चरणौ करौ चेत्येवमस्थ्नां चतुरुत्तरं शतम् ॥ ८५ ॥

**षष्ट्यङ्गुलीनां द्वे पाष्ण्योर्गुल्फेषु च चतुष्टयम् ।**
**चत्वार्यरत्निकास्थीनि जङ्घयोस्तावदेव तु ॥ ८६ ॥**

२५ किंच । विंशतिरङ्गुलयस्तासां एकैकस्यास्त्रीणि त्रीणीत्येवमङ्गुलिसंबन्धीन्यस्थीनि षष्टिर्भवन्ति । पादयोः पश्चिमौ भागौ पार्ष्णी । तयोरास्थिनी द्वे एकैकस्मिन्पादे गुल्फौ द्वावित्येव चतुर्षु गुल्फेषु चत्वार्यस्थीनि बाह्वोररत्निप्रमाणानि चत्वार्यस्थीनि जंघयोस्तावदेव चत्वार्येवेत्येवं चतुःसप्ततिः ॥ ८६ ॥

**द्वे द्वे जानुकपोलोरुफलकांससमुद्भवे ।**
**अक्षतालूषकश्रोणीफलके च विनिर्दिशेत् ॥ ८७ ॥**

किंच । जङ्घोरुसन्धिर्**जानुः** । **कपोलो** गल्लः । **ऊरुः** सक्थि **तत्फलकम्** । **अंसो** भुजशिरः । **अक्षः** कर्णनेत्रयोर्मध्ये शंखादधोभागः । **तालूषकं** काकुदम् । **श्रोणी** ककुद्मती **तत्फलकम्** । तेषामेककत्रास्थीनि द्वे द्वे **विनिर्दिशेदि**त्येवं चतुर्दशास्थीनि भवन्ति ॥ ८७ ॥

**भगास्थ्येकं तथा पृष्ठे चत्वारिंशच्च पञ्च च ।**
**ग्रीवा पञ्चदशास्थी स्याज्जत्र्वेकैकं तथा हनुः ॥ ८८ ॥**　　५

किंच । गुह्यास्थ्येकं । **पृष्ठे** पश्चिमभागे **पञ्चचत्वारिंशदस्थीनि** भवन्ति । **ग्रीवा** कंधरा सा **पञ्चदशास्थी स्यात्** भवेत् । वक्षोंसयोः सन्धिर्**जत्रुः** । प्रतिजत्रु **एकैकम्** । **हनुः**श्चिबुकम् । तत्राप्येकमस्थीत्येवं चतुःषष्टिः ॥ ८८ ॥

**तन्मूले द्वे ललाटाक्षिगण्डे नासाघनास्थिका ।**
**पार्श्वकाः स्थालकैः सार्धमर्बुदैश्च द्विसप्ततिः ॥ ८९ ॥**　　१०

किंच । तस्य हनोर्मूलेऽस्थिनी **द्वे** । **ललाटं** भालं, **अक्षि** चक्षुः, **गण्डः** कपोलाक्षयोर्मध्यप्रदेशः, तेषां समाहारो ललाटाक्षिगण्डं तत्र प्रत्येकमस्थियुगुलम् । **नासा** घनसंज्ञकाऽस्थिमती । **पार्श्वकाः** कक्षाधःप्रदेशसंबन्धीन्यस्थीनि । तदाधारभूतानि स्थालकानि तैः **स्थालकैः** । **अर्बुदै**श्चास्थिविशेषैः सह पार्श्वका **द्विसप्ततिः** । पूर्वोक्तैश्च नवभिः सार्धमेकाशीतिर्भवन्ति ॥ ८९ ॥

**द्वौ शङ्खकौ कपालानि चत्वारि शिरसस्तथा ।**　　१५
**उरः सप्तदशास्थीनि पुरुषस्यास्थिसंग्रहः ॥ ९० ॥**

किंच । भ्रूकर्णयोर्मध्यप्रदेशावस्थिविशेषौ **शङ्खकौ** । **शिरसः** संबन्धीनि **चत्वारि कपालानि** । **उरो**वक्षस्तत्सप्तदशास्थिकमित्येवं त्रयोविंशतिः । पूर्वोक्तैश्च सह षष्ट्याधिकं शतत्रयमित्येवं पुरुषस्यास्थिसंग्रहः कथितः ॥ ९० ॥

सविषयाणि ज्ञानेन्द्रियाण्याह　　२०

**गन्धरूपरसस्पर्शशब्दाश्च विषयाः स्मृताः ।**
**नासिका लोचने जिह्वा त्वक् श्रोत्रं चेन्द्रियाणि च ॥ ९१ ॥**

एते गन्धादयो विषयाः पुरुषस्य बन्धनहेतवः विषयशब्दस्य 'षिञ् बन्धने' इत्यस्य धातोर्व्युत्पन्नत्वात् । एतैश्च गन्धादिभिर्बोध्यत्वेन व्यवस्थितैः स्वस्वगोचरसंवित्साधनतयाऽनुमेयानि घ्राणादिपञ्चेन्द्रियाणि भवन्ति ॥ ९१ ॥　　२५

कर्मेन्द्रियाणि दर्शयितुमाह

**हस्तौ पायुरुपस्थं च जिह्वा पादौ च पञ्च वै ।**
**कर्मेन्द्रियाणि जानीयान्मनश्चैवोभयात्मकम् ॥ ९२ ॥**

१ ग्या. सू. धा. क.

**हस्तौ** प्रसिद्धौ । **पायुर्**गुदम् । **उपस्थं** रतिसंपाद्यसुखसाधनम् । **जिह्वा** प्रसिद्धा । **पादौ** च । एतानि हस्तादीनि **पञ्च कर्मेन्द्रियाणि** आदाननिर्हारानन्दव्यवहारविहारादिकर्मसाधनानि **जानी-यात्** । **मनो**ऽन्तःकरणं युगपत् ज्ञानानुत्पत्तिगम्यम् । तच्च बुद्धिकर्मेन्द्रियसहकारितयो**भयात्मकम्** ॥ ९२॥

प्राणायतनानि दर्शयितुमाह

**नाभिरोजोगुदं शुक्रं शोणितं शङ्खकौ तथा ।**
**मूर्धांसकण्ठहृदयं प्राणस्यायतनानि च ॥ ९३ ॥**

नाभिप्रभृतीनि दश प्राणस्य स्थानानि । समाननाम्नः पवनस्य सकलाङ्गचारित्वेऽपि नाभ्यादि-स्थानविशेषवाचोयुक्तिः प्राचुर्याभिप्राया ॥ ९३ ॥

प्राणायतनानि प्रपञ्चयितुमाह

**वपा वसाऽवहननं नाभिः क्लोमा यकृत्प्लिहा ।**
**क्षुद्रान्त्रं वृक्ककौ बस्तिः पुरीषाधानमेव च ॥ ९४ ॥**
**आमाशयोऽथ हृदयं स्थूलान्त्रं गुद एव च ।**
**उदरं च गुदौ कोष्ठ्यौ विस्तारोऽयमुदाहृतः ॥ ९५ ॥**

**वपा** प्रसिद्धा । **वसा** मांसस्नेहः । **नाभिः** प्रसिद्धा । **अवहननं** फुप्फुसः । **प्लीहा** आयुर्वेद-प्रसिद्धा । तौ च मांसपिण्डाकारौ स्तः सव्यकुक्षिगतौ । **यकृत्** । कालिका **क्लोमा** मांसपिण्डस्तौ । **क्षुद्रान्त्रं** हस्त्याख्यम् । **वृक्ककौ** हृदयसमीपस्थौ मांसपिण्डौ । **बस्तिर्**मूत्राशयः । **पुरीषाधानं** पुरीषाशयः । **आमाशयो**ऽपक्वान्नस्थानम् । **हृदयं** हृत्पुण्डरीकम् । **स्थूलान्त्रगुदोदराणि** प्रसिद्धानि । बाह्याद्गुदवल-यादन्तर्गुदवलये द्वे तौ च **गुदौ** । **कोष्ठ्यौ** कोष्ठे नाभेरधः प्रदेशे भवौ । **अयं** च प्राणायत-नस्य **विस्तार** उक्तः । पूर्वश्लोके तु संक्षेपः । अत एव पूर्वश्लोकोक्तानां केषांचिदिह पाठः ॥९४॥९५॥

पुनः प्राणायतनप्रपञ्चार्थमाह

**कनीनिके चाक्षिकूटे शष्कुली कर्णपत्रकौ ।**
**कर्णौ शङ्खौ भ्रुवौ दन्तवेष्टावोष्ठौ ककुन्दरे ॥ ९६ ॥**
**वङ्क्षणौ वृषणौ वृक्कौ श्लेष्मसंघातजौ स्तनौ ।**
**उपजिह्वा स्फिजौ बाहू जङ्घोरुषु च पिण्डिका ॥ ९७ ॥**
**तालूदरं बस्तिशीर्षं चिबुके गलशुण्डिके ।**
**अवटश्चैवमेतानि स्थानान्यत्र शरीरके ॥ ९८ ॥**
**अक्षिवर्णचतुष्कं च पद्धस्तहृदयानि च ।**
**नव छिद्राणि तान्येव प्राणस्यायतनानि तु ॥ ९९ ॥**

**कनीनिके** अक्षितारे । अक्षिनासिकयोः सन्धी **अक्षिकूटे** । **शष्कुली** कर्णशष्कुली । **कर्णपत्रकौ** कर्णपाल्यौ । **कर्णौ** प्रसिद्धौ । **दन्तवेष्टौ** दन्तपाल्यौ । **ओष्ठौ** प्रसिद्धौ । **ककुन्दरे** जघनकूपकौ । **वङ्क्षणौ** जघनोरुसंधी । **वृक्कौ** पूर्वोक्तौ । **स्तनौ** च श्लेष्मसंघातजौ । **उपजिह्वा** घण्टिका । **स्फिजौ** कटिप्रोथौ । **बाहू** प्रसिद्धौ । **जङ्घोरुषु च पिण्डिका** जङ्घयोरूर्वोश्च पिण्डिका मांसलप्रदेशः । **गलशुण्डिके** हनुमूलगलयोः सन्धी । **शीर्षं** शिरः । **अवटः** शरीरे यः कश्चन निम्नो देशः कण्ठमूलकक्षादिः । ' अवटुरिति ' पाठे कृकाटिका । तथाऽक्ष्णोः कनीनिकयोः प्रत्येकं श्वेतं पार्श्वद्वयमिति वर्णचतुष्टयम् । यद्वा अक्षिपुटचतुष्टयम् । शेषं प्रसिद्धम् । एवमेतानि कुत्सिते शरीरे स्थानानि । तथाऽक्षियुगलम् । कर्णयुग्मम् । नासाविवरद्वयमास्यं पायुरुपस्थमेतानि पूर्वोक्तानि **नव च्छिद्राणि च प्राणस्यायतनान्येव** ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥

**शिराः शतानि सप्तैव नव स्नायुशतानि च ।**
**धमनीनां शते द्वे तु पञ्च पेशीशतानि च ॥ १०० ॥**

किंच । **शिरा** नाभिसंबद्धाश्चत्वारिंशत्सख्या वातपित्तश्लेष्मवाहिन्यः सकलकलेवरव्यापिन्यो नानाशाखिन्यः सत्यः **सप्तशत**संख्या भवन्ति । तथाऽङ्गप्रत्यङ्गसंधिबन्धनाः स्नायवो नवशतानि । **धमन्यो** नाम नाभेरुद्भूताश्चतुर्विंशतिसंख्या प्राणादिवायुवाहिन्यः शाखाभेदेन **द्विशतं** भवन्ति । **पेश्यः** पुनः मांसलाकारा ऊरुपिण्डिकाद्यङ्गप्रत्यङ्गसंधिन्यः **पञ्चशतानि** भवन्ति ॥ १०० ॥

पुनश्चासामेव शिरादीनां शाखाप्राचुर्येण सख्यान्तरमाह

**एकोनत्रिंशल्लक्षाणि तथा नव शतानि च ।**
**षट्पञ्चाशच्च जानीत शिरा धमनिसंज्ञिताः ॥ १०१ ॥**

शिराधमन्यो मिलिताः शाखोपशाखाभेदेन **एकोनत्रिंशल्लक्षाणि** । तथा च **नवशतानि** च । **षट्पञ्चाशच्च** भवन्तीत्येवं हे सामश्रवःप्रभृतयो मुनयो **जानीत** ॥ १०१ ॥

**त्रयो लक्षास्तु विज्ञेयाः श्मश्रुकेशाः शरीरिणाम् ।**
**सप्तोत्तरं मर्मशतं द्वे च संधिशते तथा ॥ १०२ ॥**

किंच । **शरीरिणां** श्मश्रूणि केशाश्च मिलिताः सन्त**स्त्रयो लक्षा विज्ञेयाः** । मर्माणि मरणकराणि क्लेशकराणि च स्थानानि तेषां **सप्तोत्तरं शतं** ज्ञेयम् । अस्थ्नां तु **द्वे सन्धिशते** । स्नायवः पुनरनन्ताः ॥ १०२ ॥

सकलशरीरस्थशिरादिसंख्यामाह

**रोम्णां कोट्यस्तु पञ्चाशच्चतस्रः कोट्य एव च ।**
**सप्तषष्टिस्तथा लक्षाः सार्धाः स्वेदायनैः सह ॥ १०३ ॥**

**वायवीयैर्विगण्यन्ते विभक्ताः परमाणवः।**
**यद्यप्येकोऽनुवेत्त्येषां भावानां चैव संस्थितिम्॥ १०४॥**

पूर्वोदितशिराकेशादिसहितानां रोम्णां परमाणवः सूक्ष्मसूक्ष्मतररूपा भागाः स्वेदस्रवणसुषिरैः सह **चतुःपञ्चाशत्कोट्यः**। तथा **सप्तोत्तरषष्टिलक्षाः सार्धाः** पञ्चाशत्सहस्रसहिताः **वायवीयैर्विभक्ताः** पवनपरमाणुभिः पृथक्कृता विगण्यन्ते। एतच्च शास्त्रदृष्ट्याऽभिहितम्।

चक्षुरादिकरणपथगोचरत्वाभावात् अस्यार्थस्य द्वयमतिगहनमर्थं शिरादिभावसंस्थानुरूपं हे मुनयो भवतां मध्ये यः कश्चिदनुवेत्ति सोऽपि महान् अग्र्यो बुद्धिमताम्। अतो यत्नतो बुद्धिमता बोद्धव्या भावसंस्थितिः॥ १०३॥ १०४॥

शारीररसादिपरिमाणमाह

**रसस्य नव विज्ञेया जलस्याञ्जलयो दश।**
**सप्तैव तु पुरीषस्य रक्तस्याष्टौ प्रकीर्तिताः॥ १०५॥**
**षट् श्लेष्मा पञ्च पित्तं च चत्वारो मूत्रमेव च।**
**वसा त्रयो द्वौ तु मेदो मज्जैकोर्ध्वं तु मस्तके॥ १०६॥**
**श्लेष्मौजसस्तावदेव रेतसस्तावदेव तु।**
**इत्येतदस्थिरं वर्ष्म यस्य मोक्षाय कृत्यसौ॥ १०७॥**

सम्यक् परिणताहारसारो **रसः**तस्य परिमाणं **नवाञ्जलयः**। पार्थिवपरमाणुसंश्लेषनिमित्तस्य **जलस्याञ्जलयो दश विज्ञेयाः**। **पुरीषस्य** वर्चस्कस्य **सप्तैव**। **रक्तस्य** जाठरानलपरिपाकापादितलौहित्यस्यान्नरसस्याष्टावञ्जलयः **प्रकीर्तिताः**। **श्लेष्मणः** कफस्य **षडञ्जलयः**। **पित्तस्य पञ्च**। **मूत्रो**च्चारणस्य **चत्वारः**। **वसाया** मांसस्नेहस्य **त्रयः**। **मेदसो** मांसरसस्य **द्वावञ्जली**। **मज्जा** त्वस्थिगतसुषिरगतस्त**स्यैको**ऽञ्जलिः। **मस्तके** पुनरर्धाञ्जलिः। **श्लेष्मौजसः** श्लेष्मसारस्य तथा **रेतस**श्चरमधातोस्तावदेवार्धाञ्जलिरेव। **एतच्च** समधातुपुरुषाभिप्रायेणोक्तम्। विषमधातोस्तु न नियमः। "वैलक्षण्याच्छरीराणामस्थायित्वात्तथैव च। दोषधातुमलानां च परिमाणं न विद्यते" इत्यायुर्वेदस्मरणात्॥ **इती**दृशमस्थिरमाप्याधारभूतमेतदशुचिनिधानं **वर्ष्मास्थिरमिति यस्य** बुद्धिर**सौ कृती** पण्डितो **मोक्षाय** समर्थो भवति। वैराग्यनित्यानित्यविवेकयोर्मोक्षोपायत्वात् अस्थिमूत्रपुरीषादिमात्रशरीरज्ञानस्य वैराग्यहेतुत्वात्। अत एव **व्यासः**। "सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः। शरीरकस्यापि कृते मूढाः पापानि कुर्वते॥ यदि नामास्य कायस्य यदन्तस्तद्बहिर्भवेत्। दण्डमादाय लोकोऽयं शुनः काकांश्च वारयेदिति"। तस्मादीदृशकुत्सितशरीरस्यात्यन्तिकविनिवृत्त्यर्थमात्मोपासने प्रयतितव्यम्॥ १०५॥ १०६॥ १०७॥

उपासनीयात्मस्वरूपमाह

**द्वासप्ततिसहस्राणि हृदयादभिनिःसृताः।**
**हिताहिता नाम नाड्यस्तासां मध्ये शशिप्रभम्॥ १०८॥**

**मण्डलं तस्य मध्यस्थ आत्मा दीप इवाचलः ।**
**स ज्ञेयस्तं विदित्वेह पुनराजायते न तु ॥ १०९ ॥**

**हृदयप्रदेशादभिनिःसृताः** कदम्बकुसुमकेसरवत्सर्वतो निर्गता हिताहितकरत्वेन **हिताहित-** संज्ञा **द्वासप्ततिसहस्राणि नाड्यो** भवन्ति । अपरास्तिस्रो नाड्यस्तासामिडापिङ्गलाख्ये द्वे नाड्यौ सव्यदक्षिणपार्श्वगते हृदि विपर्यस्ते नासाविवरसंबद्धे प्राणापानायतने । सुषुम्नाख्या पुनस्तृतीया दण्डवन्मध्ये ५ ब्रह्मरन्ध्रविनिर्गता । **तासां** नाडीनां **मध्ये मण्डलं** चन्द्रप्रभम् । तस्मिन्**नात्मा** निर्वातस्थ**दीप इवाचलः** प्रकाशमान आस्ते । **स** एवंभूतो ज्ञातव्यः । तत्साक्षात्कारणा**दिह** संसारे **न पुनः** संसरति अमृतत्वं प्राप्नोति ॥ १०८ ॥ १०९ ॥

**ज्ञेयं चारण्यकमहं यदादित्यादवाप्तवान् ।**
**योगशास्त्रं च मत्प्रोक्तं ज्ञेयं योगमभीप्सता ॥ ११० ॥** १०

किंच । चित्तवृत्तेर्विषयान्तरतिरस्कारेणात्मनि स्थैर्यं **योग**स्तत्प्राप्त्यर्थं **बृहदारण्यकाख्य**मादित्याद्यन्मया प्राप्तं तच्च ज्ञातव्यम् । तथा यन्मयोक्तं **योगशास्त्रं** तदपि ज्ञातव्यम् ॥ ११० ॥

कथं पुनरसावात्मा ध्यातव्य इत्यत आह

**अनन्यविषयं कृत्वा मनोबुद्धिस्मृतीन्द्रियम् ।**
**ध्येय आत्मा स्थितो योऽसौ हृदये दीपवत्प्रभुः ॥ १११ ॥** १५

आत्मव्यतिरिक्तविषयेभ्यो मनोबुद्धिस्मृतीन्द्रियाणि प्रत्याहृत्य आत्मैकविषयाणि **कृत्वा आत्मा ध्येयः** । योऽसौ **प्रभुर्नि**र्वातस्थ**प्रदीपवद्दी**प्यमानो निष्प्रकम्पो हृदि तिष्ठति । एतदेव तस्य ध्येयत्वं यच्चित्तवृत्तेर्बाहिर्विषयावभासतिरस्कारेणात्मप्रवणतानाम शरावसंपुटनिरुद्धप्रभाप्रतानप्रसरस्येव प्रदीपस्यैकनिष्ठत्वम् ॥ १११ ॥

यस्य पुनश्चित्तवृत्तिर्निराकारालम्बनतया समाधौ नाभिरमते तेन शब्दब्रह्मोपासनं कार्यमित्याह २०

**यथाविधानेन पठन्सामगायमविच्युतम् ।**
**सावधानस्तदभ्यासात्परं ब्रह्माधिगच्छति ॥ ११२ ॥**

स्वाध्यायावगतमार्गानतिक्रमेण **सामगायं** सामगानं । साम्नो गानात्मकत्वेऽपि गायमिति विशेषणं प्रगीतमन्त्रव्युदासार्थम् । **अविच्युतम**स्खलितं **सावधानः** सामध्वन्यनुस्यूतात्मैकाग्रचित्तवृत्तिः । **पठंस्तदभ्यास**वशात् तत्र निष्णातः शब्दाकारशून्योपासनेन **परं ब्रह्माधिगच्छति** । तदुक्तम् २५ ' शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छतीति ' ॥ ११२ ॥

यस्य पुनर्वैदिक्यां गीतौ चित्तं नाभिरमते तेन लौकिकगीतानुस्यूतात्मोपासनं कार्यमित्याह

**अपरान्तकमुल्लोप्यं मद्रकं प्रकरीं तथा ।**
**औवेणकं सरोबिन्दुमुत्तरं गीतकानि च ॥ ११३ ॥**

विरहितं सम्यक्परिवर्तते । इत्यनेन क्रमेणात्मनः सकाशादखिलजगदुत्पत्तिः । तत्र चात्मनः स्वकर्मानुरूपविग्रहपरिग्रहः ॥ १२१ ॥ १२२ ॥ १२३ ॥ १२४ ॥

ननु यद्यात्मनः संसरणमनाद्यन्तं तर्हि अनिर्मुक्तिप्रसङ्ग इत्यत आह

**अनादिरात्मा संभूतिर्विद्यते नान्तरात्मनः ।**
**समवायी तु पुरुषो मोहेच्छाद्वेषकर्मजः ॥ १२५ ॥**

५ यद्यप्यात्मनोऽनादित्वात्**संभूतिर्न विद्यते अन्तरात्मनः** शरीरव्यापिनः तथापि **पुरुषः** शरीरेण **समवायी** भवति । भोगायतने सुखदुःखात्मकं भोग्यजातमुपभुङ्क्ते । इत्येवंभूतेन संबन्धेन संबन्धी भवत्येव । स च समवायः **मोहेच्छाद्वेष**जनितकर्मनिमित्तो । न तु निसर्गजातः तस्य कार्यत्वेन विनाशोपपत्तेर्न निर्मुक्तिः ॥ १२५ ॥

१० आत्मनो जगज्जन्मेत्युक्तं; तत्प्रपञ्चयितुमाह

**सहस्रात्मा मया यो व आदिदेव उदाहृतः ।**
**मुखबाहूरुपज्जाः स्युस्तस्य वर्णा यथाक्रमम् ॥ १२६ ॥**
**पृथिवी पादतस्तस्य शिरसो द्यौरजायत ।**
**नस्तः प्राणा दिशः श्रोत्रात्स्पर्शाद्वायुर्मुखाच्छिखी ॥ १२७ ॥**
१५ **मनसश्चन्द्रमा जातश्चक्षुषश्च दिवाकरः ।**
**जघनादन्तरिक्षं च जगच्च सचराचरम् ॥ १२८ ॥**

योऽसौ सकलजीवात्मकतया प्रपञ्चात्मकतया च **सहस्रात्मा** बहुरूपस्तथा सकलजगद्धेतुतया **आदिदेवो मया** युष्माकम**मुदाहृतः** तस्य वदनभुजसक्थिचरणजाता यथाक्रममग्रजन्माद्यश्चत्वारो वर्णास्तथा तस्य पादाद्भूमिर्मस्तकात्सुरसद्म घ्राणात्**प्राणाः**, कर्णात्ककुभः, **स्पर्शा**त्पवनो, वदनाद्धुत-२० वहः, **मनसः** शशाङ्कः, नेत्राद्भानुः, जघनाद्गगनं, जङ्गमाजङ्गमात्मकं जगच्च ॥ १२६॥१२७॥१२८॥

अत्र चोदयन्ति

**यद्येवं स कथं ब्रह्मन्पापयोनिषु जायते ।**
**ईश्वरः स कथं भावैरनिष्टैः संप्रयुज्यते ? ॥ १२९ ॥**

हे **ब्रह्मन्** योगीश्वर । **यद्या**त्मैव जीवादिभावं भजते तर्हि **कथ**मसौ **पापयोनिषु** मृगपक्ष्या-२५ दिषु **जायते** । अथ मोहरागद्वेषादिदोषदुष्टत्वात्तत्र जन्मेत्युच्यते तच्च न । यस्मा**दीश्वर** स्वतन्त्रः । कथम**निष्टै**र्मोहरागादि**भावैः** संयुज्येत ॥ १२९ ॥

**करणेनान्वितस्यापि पूर्वं ज्ञानं कथंचन ।**
**वेत्ति सर्वगतां कस्मात्सर्वगोऽपि न वेदनाम् ? ॥ १३० ॥**

किंच । तथेदमप्यत्र दूषणम् । मनःप्रभृतिज्ञानोपायैः सहितस्यापि तस्यात्मनः **पूर्वज्ञानं** जन्मान्तरानुभूतविषयं कस्मान्नोत्पद्यते । तथा **सर्वप्राणिगतां वेदनां** सुखदुःखादिरूपां स्वयं **सर्वगोऽपि** सर्वदेहगतोऽपि **कस्मान्न वेत्ति** । तस्मा'दात्मैवेश्वरो जीवादिभावं भजत ' इत्ययुक्तम् ॥ १३० ॥

तत्र पूर्वचोद्यस्योत्तरमाह

**अन्त्यपक्षिस्तावरतां मनोवाक्कायकर्मजैः ।**
**दोषैः प्रयाति जीवोऽयं भवयोनिशतेषु च ॥ १३१ ॥** ५

यद्यपीश्वरः स्वरूपेण सत्यज्ञानानन्दलक्षणः तथाऽप्यविद्यासमावेशवशान्मोहरागादिभावैरभिभूयमानो नानाहीनयोनिजननसाधनं मानसादित्रिविधं कर्मनिचयमाचरति । तेन चान्त्यजादिहीनयोनितामापद्यते। अन्त्याश्चण्डालादयः, पक्षिणः काकादयः, स्थावरा वृक्षादयः येषां भावोऽ**न्त्यपक्षिस्थावरता** । तां यथाक्रमेण **मनोवाक्काया**रब्धकर्मदोषैः जन्मसहस्रेष्वयं जीवः प्राप्नोति ॥ १३१ ॥ १०

**अनन्ताश्च यथा भावाः शरीरेषु शरीरिणाम् ।**
**रूपाण्यपि तथैवेह सर्वयोनिषु देहिनाम् ॥ १३२ ॥**

किंच । **शरीराणां** जीवानां **शरीरेषु भावा** अभिप्रायविशेषाः सत्वाद्युद्रेकतारतम्या**द्यथाऽनन्ता**स्तथा तत्कार्याण्य**पि** कुब्जवामनत्वादीनि **रूपाणि देहिनां सर्वयोनिषु** भवन्ति ॥१३२॥

ननु यदि कर्मजन्यानि कुब्जत्वादीनि तर्हि कर्मानन्तरमेव तैर्भवितव्यमित्याशङ्क्याह १५

**विपाकः कर्मणां प्रेत्य केषांचिदिह जायते ।**
**इह वाऽमुत्र वैकेषां भावस्तत्र प्रयोजनम् ॥ १३३ ॥**

**केषांचि**ज्ज्योतिष्टोमादि**कर्मणां विपाकः** फलं **प्रेत्य** देहान्तरे भवति । केषांचित्कारीर्यादिकर्मणां वृष्ट्यादिफल**मिहैव** भवति । केषांचिच्चित्रादीनां फलं पश्वादिकमिह देहान्तरे वेत्यनियतम् । न ह्यनन्तरमेव कर्मफलेन भवितव्यमिति शास्त्रार्थः । अत्र च कर्मणां शुभाशुभफलजनकत्वे सत्त्वादिभाव एव प्रयोजकभूतस्तदायत्तत्वात्फलतारतम्यस्य ॥ १३३ ॥ २०

मनोवाक्कायकर्मजैरन्त्यादियोनीः प्राप्नोतीत्युक्तं तत्प्रपञ्चयितुमाह

**परद्रव्याण्यभिध्यायंस्तथाऽनिष्टानि चिन्तयन् ।**
**वितथाभिनिवेशी च जायतेऽन्त्यासु योनिषु ॥ १३४ ॥**

परधनानि कथमपहरेयमिति आभिमुख्येन ध्यायंस्त**थाऽनिष्टानि** ब्रह्महत्यादीनि हिंसात्मकानि करिष्यामीति **चिन्तयन्** वितथे असत्यभूते वस्तुनि अभिनिवेशः पुनः पुनः संकल्पः तद्वांश्च, श्वचण्डालाद्य**न्त्ययोनिषु जायते** ॥ १३४ ॥ २५

**पुरुषोऽनृतवादी च पिशुनः परुषस्तथा ।**
**अनिबद्धप्रलापी च मृगपक्षिषु जायते ॥ १३५ ॥**

**किंच**। यस्त्वनृतवदनशीलः पुरुषः, **पिशुनः** कर्णेजपः, **परुषः** परोद्वेगकरभाषी, **अनिबद्ध-प्रलापी** प्रकृतासङ्गतार्थवादी च बुद्धिपूर्वाबुद्धिपूर्वावृत्त्यादितारतम्याद्धीनोत्कृष्टेषु **मृगपक्षिषु जायते**॥ १३५॥

**अदत्तादाननिरतः परदारोपसेवकः।**
**हिंसकश्चाविधानेन स्थावरेष्वभिजायते॥ १३६॥**

किंच। **अदत्तादाननिरतः** अदत्त परधनापहारप्रसक्तः परदारप्रसक्तश्चाविहितमार्गेण प्राणिनां घातकश्च दोषगुरुलघुभावतारतम्यात्तरुलताप्रतानादि**स्थावरेषु जायते**॥ १३६॥

सत्वादिगुणपरिपाकमाह

**आत्मज्ञः शौचवान्दान्तस्तपस्वी विजितेन्द्रियः।**
**धर्मकृद्वेदविद्यावित्सात्त्विको देवयोनिताम्॥ १३७॥**

**आत्मज्ञो** विद्याधनाभिजनाद्यभिमानरहितः। **शौचवान्** बाह्याभ्यन्तरशौचयुक्तः। **दान्त** उपशमान्वितः। **तपस्वी** कृच्छ्रादितपोयुक्तः। तथेन्द्रियार्थेष्वप्रसक्तः नित्यनैमित्तिकधर्मानुष्ठाननिरतः वेदार्थवेदी च यः स सात्विकः स च सत्वोद्रेकतारतम्यवशादुत्कृष्टोत्कृष्टतरसुरयोनितां प्राप्नोति॥१३७॥

**असत्कार्यरतोऽधीर आरम्भी विषयी च यः।**
**स राजसो मनुष्येषु मृतो जन्माधिगच्छति॥ १३८॥**

किंच। **असत्कार्येषु** तूर्यवादित्रनृत्यादिष्वभि**रतो** यस्तथा **अधीरो** व्यग्रचित्तः **आरम्भी** सदा कार्याकुलो विषयेष्वतिप्रसक्तश्च। **स** रजोगुणयुक्तः तद्गुणतारतम्याद्धीनोत्कृष्टमनुष्यजातिषु मरणानन्तरमुत्पत्तिं प्राप्नोति॥ १३८॥

**निद्रालुः क्रूरकृल्लुब्धो नास्तिको याचकस्तथा।**
**प्रमादवान्भिन्नवृत्तो भवेत्तिर्यक्षु तामसः॥ १३९॥**

तथा यः पुनर्निद्राशीलः प्राणिपीडाकरो लोभयुक्तश्च। तथा **नास्तिको** धर्मादेर्निन्दकः। याचनशीलः। **प्रमादवान्** कार्याकार्यविवेकशून्यः। विरुद्धाचारश्च असौ तमोगुणयुक्तस्तत्तारतम्याद्धीनहीनतरपश्वादियोनिषु जायते॥ १३९॥

पूर्वोक्तमुपसंहरति

**रजसा तमसा चैवं समाविष्टो भ्रमन्निह।**
**भावैरनिष्टैः संयुक्तः संसारं प्रतिपद्यते॥ १४०॥**

एवमविद्याविद्धोऽयमात्मा रजस्तमोभ्यां सम्यगाविष्ट इह संसारे पर्यटन् नानाविधदुःखप्रदैर्भावैरभिभूतः पुनः पुनः संसारं देहग्रहणं प्राप्नोति। इतीश्वरः स कथं भावैरनिष्टैः संप्रयुज्यत इति अस्य चोद्यस्य नावकाशः॥ १४०॥

यदपि करणैरन्वितस्यापि इति द्वितीयं चोद्यं तस्योत्तरमाह

**मलिनो हि यथाऽऽदर्शो रूपालोकस्य न क्षमः ।**
**तथाऽविपक्वकरण आत्मज्ञानस्य न क्षमः ॥ १४१ ॥**

यद्यप्यात्मा अन्तःकरणादिज्ञानसाधनसंपन्नस्तथापि जन्मान्तरानुभूतार्थावबोधे न समर्थः **अविपक्वकरणो** रागादिमलाक्रान्तचित्तो यस्मात् यथा दर्पणो मलच्छन्नो रूपज्ञानोत्पादनसमर्थो न ५ भवति ॥ १४१ ॥

ननु प्राग्भवीयज्ञानस्यापि आत्मप्रकाशित्वात् तस्य च स्वतःसिद्धत्वात्नानुपलम्भो युक्त इत्याशङ्क्याह

**कट्वेर्वारौ यथाऽपक्वे मधुरः सन् रसोऽपि न ।**
**प्राप्यते ह्यात्मनि यथा नापक्वकरणे ज्ञता ॥ १४२ ॥**

**अपक्वे कट्वेर्वारौ** तिक्तकर्कटिकायां विद्यमानोऽपि **मधुरो रसः** यथा नोपलभ्यते तथाऽऽत्म- १० **न्यपक्वकरणे** विद्यमानाऽपि **ज्ञता** ज्ञातृता प्राग्भवीयवस्तुगोचरता **न प्राप्यते** ॥ १४२ ॥

'वेत्ति सर्वगतां कस्मात्सर्वगोऽपि न वेदनामिति' यदुक्तं तत्रोत्तरमाह

**सर्वाश्रयां निजे देहे देही विन्दति वेदनाम् ।**
**योगी मुक्तश्च सर्वासां योगमाप्नोति वेदनाम् ॥ १४३ ॥**

यः पुनर्**देही** देहाभिमानयुक्तः स **सर्वाश्रयामा**ध्यात्मिकादिबहुरूपां **वेदनां** स्वकर्मोपार्जित १५ एव देहे प्राप्नोति न देहान्तरगतां भोगायतनारम्भादृष्टवैलक्षण्यादेव । यस्तु **योगी मुक्तो** मुक्ताहंकारादिः सकलक्षेत्रगतानां सुखदुःखादिसंविदां वेदिता भवति परिपक्वकरणत्वात् ॥ १४३ ॥

नन्वेकस्मिन्नात्मनि सुरनरादिदेहेषु भेदप्रत्ययो न घटत इत्याशङ्क्याह

**आकाशमेकं हि यथा घटादिषु पृथग्भवेत् ।**
**तथाऽऽत्मैको ह्यनेकश्च जलाधारेष्विवांशुमान् ॥ १४४ ॥** २०

यथैकमेव गगनं कूपकुम्भाद्युपाधिभेदभिन्नं नानेवानुभूयते, यथा वा भानुरेकोऽपि भिन्नेषु जलभाजनेषु करकमणिकमल्लिकादिषु नानेवानुभूयते, **तथैकोऽप्यात्मा** अन्तःकरणोपाधिभेदेन नाना प्रतीयते । द्वितीयदृष्टान्तोपादानमात्मभेदस्यापारमार्थिकत्वद्योतनार्थम् ॥ १४४ ॥

'पञ्चधातून्स्वयं षष्ठ आदत्ते युगपत्प्रभुरि'त्याद्युक्तमर्थमुपसंहृत्याह

**ब्रह्मखानिलतेजांसि जलं भूश्चेति धातवः ।** २५
**इमे लोका एष चात्मा तस्माच्च सचराचरम् ॥ १४५ ॥**

**ब्रह्म** आत्मा । **खं** गगनं । **अनिलो** वायुः । **तेजो**ऽग्निः । **जलं** प्रसिद्धं । **भूश्चे**त्येते वातादि**धातवः** शरीरं व्याप्य धारयन्तीति धातवोऽभिधीयन्ते । तत्र खादयः पञ्च धातवो लोक्यन्ते दृश्यन्ते

**त्यागो** गृहान्निष्कासनम् । **तडागारामस्य** चोद्यानोपवनादेर्**विक्रयः** । **कन्यायाः दूषणम**ङ्गुल्यादिना योनिविदारणं न तु भोगः । तस्य 'सखिभार्याकुमारीष्विति' गुरुतल्पसमत्वस्योक्तत्वात् । **परिविन्दकयाजनं** । तस्य च **कन्याप्रदानम्** । **कौटिल्यं** गुरोरन्यत्र ।

गुरुविषयस्य तु कौटिल्यस्य सुरापानसमत्वमुक्तम् । पुनर्व्रतलोपग्रहणमशिष्टाप्रतिषिद्धेष्वपि 'श्रीहरि-
५ चरणकमलप्रेक्षणात् प्राक् ताम्बूलादिकं न भक्षयामी'त्येवंरूपेषु प्राप्त्यर्थं न तु स्नातकव्रतप्राप्त्यर्थम् । तत्र "स्नातकव्रतलोपे च प्रायश्चित्तमभोजनमिति" **मनु**ना लघुप्रायश्चित्तस्य प्रतिपादितत्वात् ॥ (अ. ११ श्लो. २०३)

तथाऽऽत्**मार्थं** च पाकलक्षण**क्रियारम्भः** । (**मनु** अ. ३ श्लो. ११८) "अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात्" इति तस्यैव प्रतिषिद्धत्वात् । क्रियामात्रविषयत्वे तु प्रतिषेधकल्पनया
१० गौरवं स्यात् । **मद्यपायाः स्त्रियाः**, जायाया अपि, **निषेवण**मुपभोगः । **स्वाध्यायत्यागो** व्याख्यातः । **अग्नीनां** श्रौतस्मार्तानां **त्यागः** । **सुतत्यागः** संस्काराद्यकरणम् । **बान्धवानां** पितृव्यमातुलादीनां **त्यागः** । सति विभवे अपरिरक्षणम् । पाकादिदृष्टप्रयोजनसिद्ध्यर्थमार्द्रद्रुमच्छेदो न त्वाहवनीयपरिरक्षणार्थमपि । स्त्रिया हिंसया औषधेन च वर्तनं जीवनं **स्त्रीहिंसौषध-जीवनम्** । तत्र स्त्रीजीवनं नाम भार्यां पण्यभावेन प्रयोज्य तल्लब्धोपजीवनम् । स्त्रीधनेनो-
१५ पजीवनं वा । हिंसया जीवनं प्राणिवधेन जीवनम् । औषधजीवनं वशीकरणादिना । **हिंस्रयन्त्रस्य** तिलेक्षुपीडाकरस्य प्रवर्तनम् । **व्यसनानि** मृगयादीन्यष्टादश । **आत्मविक्रयो** द्रव्यग्रहणेन परदास्यकरणम् । शूद्रसेवनं । हीनेषु मैत्रीकरणम् अनूढसवर्णदारस्य केवलहीनवर्णदारोपयमनं साधारणस्त्रीसंभोगश्च । अगृहीताश्रमित्वं सत्यधिकारे । **परान्नपरिपुष्टता** परपाकरतित्वम् । **असच्छास्त्रस्य** चार्वाकादिग्रन्थस्या**धिगमः** । **सर्वाकरेषु** सुवर्णाद्युत्पत्तिस्थानेषु राजाज्ञ**याऽधिकारित्वम्** ।
२० **भार्याया विक्रयः** । चशब्दान्**मन्वा**द्युक्ताभिचारामतिपूर्वलशुनादिभक्षणादेर्ग्रहणम् ।

एषां गोवधादीनां प्रत्येकमुपपातकसंज्ञा वेदितव्या । **मनुना** पुनरन्यान्यपि निमित्तानि जातिभ्रंशकरसङ्करीकरणापात्रीकरणमलिनीकरणसंज्ञानि परिगणितानि । (अ. ११ श्लो. ६७–७०)

"ब्राह्मणस्य रुजः कृत्या घ्रातिरघ्रेयमद्ययोः । जैह्म्यं च मैथुनं पुंसि जातिभ्रंशकरं स्मृतम् ॥
"खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा । सङ्करीकरणं ज्ञेयं मीनाहिमहिषस्य च ॥
२५ "निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम् । अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम् ॥
"कृमिकीटवयोहत्या मद्यानुगतभोजनम् । फलैधःकुसुमस्तेयमधैर्यं च मलावहमिति" ॥

अतोऽन्यन्निमित्तजातं प्रकीर्णकं कथ्यते ।

१ २३१ श्लोके. २ मृगयादीन्यष्टादश व्यसनानि यथा । मृगयाक्षा दिवास्वापः परिवादः स्त्रियो मदः । तौर्यत्रिकं वृथाट्या च कामजो दशको गणः ॥ पैशून्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थदूषणम् । वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥ द्वयोरप्येतयोर्मूलं यं सर्वे कवयो विदुः । तं यत्नेन जयेल्लोभं तज्जावेतावुभौ गणौ ॥ पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् । एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥ दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे । क्रोधजेऽपि गणे विद्यात्कष्टमेतत् त्रिकं सदा ॥ सप्तकस्यास्य वर्गस्य सर्वत्रैवानुषङ्गिणः । पूर्वं पूर्वं गुरुतरं विद्याद्व्यसनमात्मवान् ॥ व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते । व्यसन्यधोऽधो व्रजति स्वर्यात्यव्यसनी मृतः ॥ मनुः अ. ७ श्लो. ४७–५३.

**बृहद्विष्णुना** च समस्तानि प्रायश्चित्तनिमित्तान्युत्तरोत्तरं लघीयांसि पृथक्संज्ञाभेदभिन्नानि दर्शितानि । “ ब्रह्महत्या सुरापानं ब्राह्मणसुवर्णापहरणं गुरुदारगमनमिति महापातकानि तत्संयोगश्च ॥ मातृगमनं दुहितृगमनं स्नुषागमनमित्यतिपातकानि ॥ यागस्थक्षत्रियवधो वैश्यस्य च रजस्वलायाश्चान्तर्वत्न्याश्चात्रिगोत्राया‍श्चाविज्ञातस्य गर्भस्य शरणागतस्य च घातनं ब्रह्महत्यासमानि । कौटसाक्ष्यं सुहृद्वध इत्येतौ सुरापानसमौ ॥ ब्राह्मणस्य भूमिहरणं सुवर्णस्तेयसमम् ॥ पितृव्यमातामहमातुलनृपपत्न्याभिगमनं गुरुदारगमनसमम् ॥ पितृष्वसामातृष्वसृगमनं श्रोत्रियर्त्विगुपाध्यायमित्रपत्न्यभिगमनं च स्वसुः सख्याः सगोत्राया उत्तमवर्णाया रजस्वलायाः शरणागतायाः प्रव्रजितायाः निक्षिप्तायाश्च गमनमित्येतान्यनुपातकानि ” ॥

“ अनृतवचनं समुत्कर्षे राजगामि च पैशून्यं गुरोश्चालीकानिर्बन्धो वेदनिन्दा अधीतस्य त्यागोऽग्निपितृमातृसुतदाराणां च । अभोज्यान्नभक्षणं परस्वापहरणं परदारानुगमनमयाज्यानां च याजनम् व्रात्यताभृतकाध्यापनं भृतकाध्ययनादानं सर्वाकरेष्वधिकारो महायन्त्रप्रवर्तनं द्रुमगुल्मवल्लीलतौषधीनां हिंसया जीवनमभिचारमूलकर्मसु च प्रवृत्तिरात्मार्थक्रियारम्भः अनाहिताग्नितादेवर्षिपितृणामृणस्यानपाक्रिया असच्छास्त्राधिगमनं नास्तिकता कुशीलता मद्यपस्त्रीनिषेवणमित्युपपातकानि” ॥ ब्राह्मणस्य रुजः करणमघ्रेयमद्ययोर्घ्रातिर्जैह्म्यं पशुषु पुंसि च मैथुनाचरणमित्येतानि जातिभ्रंशकराणि ॥ ग्राम्यारण्यपशूनां हिंसनं सङ्करीकरणम् । निन्दितेभ्यो धनादानं वाणिज्यं कुसीदजीवनं असत्यभाषणं शूद्रसेवनमित्यपात्रीकरणानि ॥ पक्षिणां जलचराणां जलजानां च घातनं कृमिकीटघातनं मद्यानुगतभोजनमिति मलावहानि यदनुक्तं तत्प्रकीर्णकमिति ” ॥

**कात्यायनेन** तु महापातकसमानां **विष्णुना**ऽनुपातकत्वेनोक्तानां पातकसंज्ञा दर्शिता । “ महापापं चातिपापं तथा पातकमेव च । प्रासङ्गिकं चोपपापमित्येवं पञ्चको गणः ” इति ॥

ननूपपातकादीनां कथं पातकत्वं पतनहेतुत्वाभावात् । यदि तेषामपि पतनहेतुत्वं तर्हि मातृपित्रोर्योनिसंबन्धाङ्ग इत्यादिपरिगणनमनर्थकम् । अथैवमुच्यते । यद्यपि महापातकतत्समेष्विव सद्यः पातित्यहेतुत्वं नास्ति तथाप्यभ्यासापेक्षया पातित्यहेतुत्वमविरुद्धम् । ‘ निन्दितकर्माभ्यासी ’ **गौतमवचना**दिति ( अ. २१ सू. १ ) । मैवम् । अभ्यासस्यानिरूप्यमाणत्वात् द्विःशतकृत्वो वेति । तत्राविशेषेऽङ्गीक्रियमाणे योऽपि द्विर्दिवा स्वपिति यः शतकृत्वो वा गोवधं करोति तयोरविशेषेण पातित्यं स्यात् । अत्रोच्यते । यत्रार्थवादे प्रत्यवायविशेषः श्रूयते प्रायश्चित्तबहुत्वं वा तस्मिन्निन्दितकर्मणि यावत्यभ्यस्यमाने महापातकतुल्यत्वं भवति तावानभ्यासः पातित्यहेतुः । दिवास्वप्नादौ तु सहस्रकृत्वोऽप्यभ्यस्यमाने न महापातकतुल्यत्वं भवतीति न तत्र पातित्यमतो युक्तमुपपातकादेरभ्यासापेक्षया पतनहेतुत्वम् ॥ २३४ ॥ २३५ ॥ २३६ ॥ २३७ ॥ २३८ ॥ २३९ ॥ २४० ॥ २४१ ॥ २४२ ॥

एवं व्यवहारार्थं संज्ञाभेदसहितं प्रायश्चित्तनिमित्तपरिगणनं कृत्वा नैमित्तिकानि प्रदर्शयितुमाह

**शिरःकपाली ध्वजवान् भिक्षाशी कर्म वेदयन् ।**
**ब्रह्महा द्वादशाब्दानि मितभुक्शुद्धिमाप्नुयात् ॥ २४३ ॥**

शिरसः कपालमस्यास्तीति **शिरःकपाली** । तथा **ध्वजवान्** ( अ. ११ श्लो. ७२ ) " कृत्वा शवशिरोध्वजमिति " **मनु**स्मरणात् । अन्यच्छिरःकपालं दण्डाग्रसमारोपितं ध्वजशब्दवाच्यं गृह्णीयात् । तच्च कपालं स्वव्यापादितब्राह्मणशिरःसंबन्धि ग्राह्यम् । " ब्राह्मणो ब्राह्मणं घातयित्वा तस्यैव शिरःकपालमादाय तीर्थान्यनुसंचरेदिति " **शातातप**स्मरणात् । तदलाभेऽन्यस्य ब्राह्मणस्यैव ५ ग्राह्यम् । एतदुभयं पाणिनैव ग्राह्यम् । 'खट्वाङ्गकपालपाणिरिति' **गौतम**स्मरणात् ( अ. २२ सू. ४ )। खट्वाङ्गशब्देन दण्डारोपितशिरःकपालात्मको ध्वजो गृह्यते । न पुनः खट्वैकदेशः । तेन ' महोक्षः खट्वाङ्गं परशुरित्यादिव्यवहारेषु तत्रैव प्रसिद्धेः । एतच्च कपालधारणं चिह्नार्थं न पुनर्भोजनार्थं भिक्षार्थं वा । 'मृन्मयकपालपाणिर्भिक्षायै ग्रामं प्रविशेदिति ' **गौतम**स्मरणात् ( अ. २२ सू. ४ ) । तथा च वनवासिना तेन भवितव्यम् । ( अ. ११ श्लो. ७२ ) " ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसे- १० दिति " **मनु**स्मरणात् । ग्रामसमीपादौ वा । ( **मनु** अ. ११ श्लो. ७८ ) " कृतवापनो वा निवसेद्ग्रामान्ते गोव्रजेऽपि वा । आश्रमे वृक्षमूले वा गोब्राह्मणहिते रतः " इति तेनैवोक्तत्वात् । कृतवापनो वेति विकल्पाभिधानाज्जटी वेति लक्ष्यते । अत एव **संवर्तः** । " ब्रह्महा द्वादशाब्दानि बालवासा जटी ध्वजीति " ।

तथा भिक्षाशनशीलश्च भवेत् । भिक्षा च लोहितकेन मृन्मयखण्डशरावेण ग्राह्या । ' लोहित- १५ केन खण्डशरावेण ग्रामं भिक्षायै प्रविशेदिति ' **आपस्तम्ब**स्मरणात् ( १।९।१४ ) । सप्तागाराण्येवात्र मृष्टं लभ्यते नात्रेत्येवमसंकल्पितानि । " भिक्षार्थं प्रविशेत्सप्तागाराण्यसंकल्पितानि चरेद्भैक्ष्यमिति" **वसिष्ठ**स्मरणात् । तथा सायङ्काल एव सा ग्राह्या । ' एककालाहार ' इति **तेनै**वोक्तत्वात् । तच्च भैक्षं ब्राह्मणादिवर्णेष्वेव कार्यम् । ' चातुर्वर्ण्ये चरेद्भैक्षं खट्वाङ्गी संयतात्मवान् ' इति **संवर्त**स्मरणात् ।

२० तथा ' ब्रह्महाऽस्मीति ' **स्वकर्म** ख्यापयन् द्वारि स्थितो भिक्षां चरेत् । ' वेश्मनो द्वारि तिष्ठामि भिक्षार्थी ब्रह्मघातकः ' इति **पराशर**स्मरणात् ( प्रा. श्लो. ६७ ) । अयं च भैक्षाशित्वनियमो वन्यैर्जीवनाशक्तौ द्रष्टव्यः । ' भिक्षायै प्रविशेद्ग्रामं वन्यैर्यदि न जीवतीति ' **संवर्त**स्मरणात् ।

तथा ब्रह्मचर्यादियुक्तेन च तेन भवितव्यम् । ' खट्वाङ्गपाणिर्द्वादशवत्सरान् ब्रह्मचारी भिक्षायै ग्रामं प्रविशेत्कर्माचक्षाणः । यथोपक्रामेत्स संदर्शनादार्यस्य स्थानासनाभ्यां विहरेत्सवनेषूदकोपस्पर्शी २५ शुद्ध्येदिति ' **गौतम**स्मरणात् ( अ. २२ सू. ४ ) । ब्रह्मचारिग्रहणं च ' वर्जयेन्मधुमांसं गन्धमाल्यदिवास्वप्नाञ्जनाभ्यञ्जनोपानच्छत्रकामक्रोधलोभमोहहर्षनृत्यगीतपरिवादनभयानीति ' ब्रह्मचारिप्रकरणोक्ताविरुद्धधर्मप्राप्त्यर्थम् । अत एव **शङ्खः** । ' स्थानवीरासनी मौनी मौञ्जी दण्डकमण्डलुः । भिक्षाचर्याग्निकार्यं च कूष्माण्डीभिः सदा जपः ' इति । तस्य भवेदिति शेषः ॥

अत्र सवनेषूदकस्पर्शीति स्नानविधानात् तदङ्गभूतमन्त्रादिप्राप्तिरप्यवगम्यते । तथा ' शुचिना ३० **कर्म** कर्तव्यमि'त्यस्य सर्वकर्मसाधारणस्मरणत्वाद्व्रतचर्याङ्गभूतशौचसंपत्त्यै स्नानवत्संध्योपासनमपि कार्यम् । तस्यापि शौचापादनद्वारेण सर्वकर्मशेषत्वात् । तथा च **दक्षः** । " संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यत्किंचित्कुरुते कर्म न तस्य फलभाग्भवेदिति" । न च' द्विजातिकर्मभ्यो

१ पुष्पदंतकृतमहिम्नस्तोत्रे ६ श्लोकः २ अ. २ सू. १९.

हानिः पतनमिति ' वचनात् संध्योपासनायाश्च द्विजातिकर्मत्वादप्राप्तिरिति शङ्कनीयम् । यस्मात्पातितस्यैव व्रतचर्योपदेशात्तदङ्गतयैव संध्योपासनादिप्राप्तिरतो ' द्विजातीनामध्ययनमिज्या दानं । ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहा ' ( **गौतमीये** अ. १० सू. १।२) इत्यादीनामेव द्विजातिकर्मणां व्रतचर्याङ्गभूतानां हानिर्न सर्वेषाम् । तावन्मात्रबाधेन हानिवचनस्य चरितार्थत्वात् ।

इयं च **मनुयाज्ञवल्क्यगौतमा**दिप्रतिपादिता द्वादशवर्षव्रतचर्या एकैव न पुनर्भिन्ना । ५ परस्परसापेक्षत्वादविरोधाच्च । तथाहि 'भिक्षाशी कर्म वेदयन्नि'त्युक्ते किं भिक्षापात्रं केषां वा गृहेषु कतिषु वेत्याकाङ्क्षा जायेतैव । तत्र ' लोहितकेन खण्डशरावेणे'**त्यापस्तम्ब**वचनैः परिपूरणमविरुद्धम् । अतः सर्वैरेकैकल्पोपदेशात्कैश्चिदुक्तम् । **मनुगौतमा**द्युक्तेतिकर्तव्यतायाः परस्परसापेक्षत्वेऽपि विकल्प इति तदनिरूप्यैवोक्तमिति मन्तव्यम् । एवं द्वादशवर्षाणि व्रतचर्यामावर्त्य 'ब्रह्महा शुद्धिमाप्नुयात्' । इदं च कामकृतब्रह्मवधविषयम् । " इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् । कामतो ब्राह्मणवधे निष्कृतिर्न १० विधीयते " इति **मनु**स्मरणात् ( अ. ११ श्लो. ८९ ) ॥

अत्रेदं चिन्तनीयम् । किं तत्र द्विजब्राह्मणवधे प्रायश्चित्तस्य तन्त्रत्वमुतावृत्तिरिति । तत्र केचिन्मन्यन्ते । ब्रह्महा द्वादशाब्दानीत्यत्र ब्रह्मशब्दस्यैकस्मिन् द्वयोर्बहुषु साधारणत्वादेकस्मिन्ब्राह्मणवधे यत्प्रायश्चित्तं तदेव द्वितीये तृतीयेऽपि । तत्रैकब्राह्मणवधनिमित्तकप्रायश्चित्तानुष्ठाने सतीदं कृतमिदं नेति न शक्यते वक्तुम् । देशकालकर्तॄणां प्रयोगानुबन्धभूतानामभेदेनागृह्यमाणविशेषत्वात्तत्रानुष्ठानेनैव पापक्षय १५ लक्षणकार्यनिष्पत्तिर्युक्ता । यथा तन्त्रानुष्ठितैः प्रयाजादिभिराग्नेयादिषु तन्त्रेणैवानेकोपकारलक्षणकार्याणां निष्पत्तिः । न चैवं वाच्यम् । "द्वित्रब्राह्मणवधे पापस्य गुरुत्वादेनांसि गुरुणि गुरूणि लघुनि लघूनीति " **गौतमवचना**दावृत्तमेव प्रायश्चित्तानुष्ठानं युक्तम् । विलक्षणकार्ययोस्तन्त्रेण निष्पत्त्यनुपपत्तेरिति । यतो नेदं वचनमावृत्तिविधायकं किंतूपदिष्टानां गुरुलघुकल्पानां व्यवस्थाप्रतिपादनपरम् । न च द्वितीयब्राह्मणवधे पापस्य गुरुत्वम् प्रमाणाभावात् । यच्च **मनुदेवलाभ्या**मुक्तम् " विधे प्राथमिकादस्माद्द्वितीये २० द्विगुणं भवेत् । तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिरिति " । तदपि 'प्रतिनिमित्तं नैमित्तिकमावर्तेत ' इति न्यायेन द्वित्रब्राह्मणवधगोचरनैमित्तिकशास्त्रवृत्त्यनुवादेन चतुर्थे तदभावविधिपरम् । न पुनर्द्वितीयब्रह्मवधे प्रायश्चित्तानुष्ठानद्वैगुण्यविधिपरमिति । वाक्यभेदप्रसंगात् । तस्मात् द्वित्रब्राह्मणवधेऽपि सकृदेव द्वादशवार्षिकाद्यनुष्ठानं युक्तम् । यथा ' अग्नये कामवते पुरोडाशमष्टाकपालं निर्वपेदि'त्यादिगृहदाहादिनिमित्तेषु चोदितानां क्षामवत्यादीनां युगपदनेकेष्वपि गृहदाहादिनिमित्तेषु सकृदेवानु- २५ ष्ठानम् । अत्रोच्यते । न हि वचनविरोधे न्यायः प्रभवति । वचनं च विधेः प्राथमिकादित्यादिकं द्वित्रब्राह्मणवधे प्रायश्चित्तानुष्ठानावृत्तिविधिपरम् । एवं सति न्यायलभ्यतन्त्रानुष्ठानबाधेनावृत्तिविधाविदं वचनं प्रवृत्तिविशेषकरं स्यात् । इतरथा शास्त्रतः प्राप्त्यनुवादकत्वेनानर्थकं स्यात् ।

न च वाक्यभेदः । चतुर्थादिब्रह्मवधपर्युदासेनेतरत्रावृत्तप्रायश्चित्तविधानेनैकार्थत्वात् । किंच । ' चतुर्थे नास्ति निष्कृतिरिति ' लिङ्गदर्शनाद्धन्यमानब्राह्मणसंख्योत्कर्षे दोषगौरवं गम्यते । तथा ३० **देवला**दिवचनाच्च । " यत्स्यादनभिसंधाय पापं कर्म सकृत्कृतम् । तस्येयं निष्कृतिर्दृष्टा धर्मविद्भिर्मनीषिभिरिति " । न च विलक्षणयोर्गुरुलघुदोषयोः क्षणस्तन्त्रेण निष्पद्यते । अत एवंविधेषु दोषगुरुत्वेन कार्यवैलक्षण्यादपि प्रतिनिमित्तं नैमित्तिकस्यावृत्तिर्युक्ता । क्षामवत्यादिषु पुनः कार्यस्यावैलक्षण्याद्युक्त-

त्त्वाभाव इत्यलं प्रपञ्चेन। यच्चेदं 'चतुर्थे नास्ति निष्कृतिरिति' तदपि महापातकविषयम्। पापस्यातिगुरुत्वेन प्रायश्चित्ताभावप्रतिपादनपरत्वात्। अतः शूद्रान्नसेवनादौ बहुशोऽप्यभ्यस्ते तदनुगुणप्रायश्चित्तावृत्तिः कल्पनीया न पुनः प्रायश्चित्ताभावः। अत एवोक्तं **मनुना** (अ. ११ श्लो. १४०)। "पूर्णे चानस्यनस्थ्नां तु शूद्रहत्याव्रतं चरेदिति"।

५ इदं च द्वादशवार्षिकं व्रतं साक्षाद्धन्तुरेव। 'ब्रह्महेति' तस्यैवाभिधानात्। अनुग्राहकप्रयोजकादेस्तु तत्र दोषानुसारेण प्रायश्चित्ततारतम्यं कल्पनीयम्। तत्रानुग्राहको यत्प्रायश्चित्तभाजं पुरुषमनुगृह्णाति स तत्प्रायश्चित्तं पादोनं कुर्यात्। अतस्तस्य द्वादशवार्षिके पादोनं नववार्षिकं प्रयोजकस्त्वर्धोनं षड्वार्षिकं कुर्यात्। अनुमन्ता पुनः सार्धसादं सार्धचतुर्वार्षिकं, निमित्ती त्वेकपादं त्रिवार्षिकं। अत एव **सुमन्तुः**।

१० "तिरस्कृतो यदा विप्रो हत्वाऽऽत्मानं मृतो यदि। निर्गुणः साहसात्क्रोधाद्गृहक्षेत्रादिकारणात्॥
"त्रैवार्षिकं व्रतं कुर्यात्प्रतिलोमां सरस्वतीम्। गच्छेद्वाऽपि विशुद्ध्यर्थं तत्पापस्येति निश्चितम्॥
"अत्यर्थं निर्गुणो विप्रो ह्यत्यर्थं निर्गुणोपरि। क्रोधाद्वै म्रियते यस्तु निर्निमित्तं तु भर्त्सितः॥
"वत्सरत्रितयं कुर्यान्नरः कृच्छ्रं विशुद्धये"। इति॥

यदा पुनर्निमित्त्यत्यन्तगुणवान् आत्मघाती चात्यन्तनिर्गुणस्तदैकवर्षमेव ब्रह्महत्याव्रतं कुर्यात्।

१५ "केशश्मश्रुनखादीनां कृत्वा तु वपनं वने। ब्रह्मचर्यं चरन्विप्रो वर्षेणैकेन शुद्ध्यतीति" **तेनै**वोक्तत्वात्॥ अनयैव दिशाऽनुग्राहकप्रयोजकादीनां येऽनुग्राहकप्रयोजकादयस्तेषामपि प्रायश्चित्तं कल्प्यम्। "अस्यां च कल्पनायां प्रयोजयिताऽनुमन्ता कर्ता चेति स्वर्गनरकफलेषु कर्मसु भागिनो भूयआरभते तस्मिन्फलविशेष" **इत्यापस्तम्बीयं** वचनं मूलम्। तथा प्रोत्साहकादीनामपि दण्डप्रायश्चित्ते कल्प्ये। यथाह **पैठीनसिः**।

२० "हन्ता मन्त्रोपदेष्टा च तथा संप्रतिपादकः। प्रोत्साहकः सहायश्च तथा मार्गानुदेशकः॥
आश्रयः शस्त्रदाता च भक्तदाता विकर्मिणाम्। उपेक्षकः शक्तिमांश्चेद्दोषवक्ताऽनुमोदकः॥
अकार्यकारिणस्त्वेषां प्रायश्चित्तं प्रकल्पयेत्। यथाशक्त्यनुरूपं च दण्डं चैषां प्रकल्पयेदिति"॥

तथा बालवृद्धादीनां साक्षात्कर्तृत्वेऽप्यर्धमेव। "अशीतिर्यस्य वर्षाणि बालो वाऽप्यूनषोडशः। प्रायश्चित्तार्धमर्हन्ति स्त्रियो रोगिण एव च" **इत्यङ्गिरः**स्मरणात्॥ तथा "अर्वाक्तु द्वादशाद्वर्षादशीतेरूर्ध्वमेव वा। अर्धमेव भवेत्पुंसां तुरीयं तत्र योषितामिति"॥ तथाऽनुपनीतस्यापि बालकस्य पादमात्रमेव प्रायश्चित्तम्। "स्त्रीणामर्धं प्रदातव्यं वृद्धानां रोगिणां तथा। पादो बालेषु दातव्यः सर्वपापेष्वयं विधिरिति" **विष्णुस्मरणात्**।

२५

अतश्च यच्च**छागलेन**। "ऊनैकादशवर्षस्य पञ्चवर्षात्परस्य च। प्रायश्चित्तं चरेद्भ्राता पिता वाऽन्यः सुहृज्जनः" इति प्रतिपाद्योक्तम्। "अतो बालतरस्यास्य नापराधो न पातकम्। राजदण्डो

३० न तस्यास्ति प्रायश्चित्तं न विद्यते" इति, तदपि संपूर्णप्रायश्चित्ताभावश्च प्रतिपादनपरं न पुनः सर्वात्मना

१ ख–गुणवद्गुपार.

तदभावप्रतिपादनपरम् । आश्रमविशेषनिरपेक्षेण श्रूयमाणेषु 'ब्राह्मणो न हन्तव्यस्तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेदित्ये'वमादिष्वनपेक्षितवयोविशेषस्यैवाधिकारादतश्च तदीयमपि प्रायश्चित्तं पित्रादिभिरेवाचरणीयम् । " पुत्रानुत्पाद्य संस्कृत्य वेदमध्याप्य वृत्तिं विदध्यादिति " तस्यैव पुत्राहिताचरणे अधिकृतत्वात् ।

यत्र पुनः कस्मिंश्चिद्ब्रह्मवधे प्रयोजकभावमापन्नस्यान्यस्मिन्साक्षात्कर्तृत्वे गुरुलघुप्रायश्चित्तसन्नि- ५ पातस्तत्र द्वादशवार्षिकादिगुरुप्रायश्चित्तान्तःपातिनः प्रयोजकसंबन्धिलघुप्रायश्चित्तस्य प्रसङ्गात्कार्यसिद्धिः न चैवं सत्यविशेषाल्लघुकल्पेन महतोऽपि सिद्धिः स्यादित्याशङ्कनीयम् । अत्र ह्यन्तःपातितयाऽनुष्ठाने विशेषानवगमात्प्रसङ्गात्कार्यसिद्धिरवगम्यते । न च लघ्वन्तःपाती महाकल्प इति कुतः प्रसङ्गाशङ्का । न च चैत्रवधजनितकल्माषक्षयार्थमनुष्ठेयेन कथं विष्णुमित्रवधोत्पाद्यपापनिवृत्तिरिति वाच्यम् । चैत्राद्युद्देशस्यातन्त्रत्वात् । अतो यथा काम्यनियोगनिष्पत्त्यर्थं स्वर्गार्थं वाऽनुष्ठितैराग्नेयादिभिर्नित्यनियोगनि- १० ष्पत्तिस्तद्वल्लघुप्रायश्चित्तस्यापि कार्यसिद्धिः ।

यत्पुनर्**मध्यमाङ्गिरो**वचनम् । " गवां सहस्रं विधिवत्पात्रेभ्यः प्रतिपादयेत् । ब्रह्महा विप्रमुच्येत सर्वपापेभ्य एव चेति " तत्सवनस्थगुणवद्ब्राह्मणविषयम् । एतच्च " द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमादिशेदिति " एतद्वाक्यविहिताद्द्विगुणद्वादशवार्षिकव्रतचर्याशक्तस्य वेदितव्यम् । प्रायश्चित्तस्यातिगुरुत्वात् । न त्वनावृत्तद्वादशवार्षिकविषयम् । तत्र हि द्वादशदिनान्येकैकप्राजापत्यमिति गणनायां १५ प्राजापत्यानां षष्ट्यधिकशतत्रयं भवति ।

यद्यपि प्राजापत्यस्यान्ते त्र्यहमुपवासोऽधिकस्तथाऽप्यत्र वनवासजटाधारणवन्याहारत्वादिरूपतपोविशेषयुक्तत्वादुपवसाभावेऽप्येकैकस्य द्वादशाहस्य प्राजापत्यतुल्यत्वम् । ततश्च " प्राजापत्यक्रियाशक्तौ धेनुं दद्याद्विचक्षणः । गवामभावे दातव्यं तन्मूल्यं वा न संशय " इत्यनेन न्यायेन प्रतिप्राजापत्यमेकैकस्यां धेन्वां दीयमानायां धेनूनामपि षष्ट्यधिकं शतत्रयं भवति । न पुनः सहस्रमतो यथोक्त २० एव विषयो युक्तः । यदपि **शङ्ख**वचनम् । ' पूर्ववदमति पूर्वं चतुर्षु वर्णेषु विप्रं प्रमाप्य द्वादशवत्सरान्षट् त्रीन्सार्धसंवत्सरं च व्रतान्यादिशेत्तेषामन्ते गोसहस्रं तदर्धं तस्यार्धं तदर्धं च दद्यात्सर्वेषां वर्णानामानुपूर्व्येणेति' द्वादशवार्षिकगोसहस्रयोः समुच्चयपरं तदाचार्यादिहननविषयं द्रष्टव्यम् । तस्यातिगुरुत्वात् ।

तथा च **दक्षः** । " सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे । आचार्ये शतसाहस्रं श्रोत्रिये दत्तमक्षयमिति " प्रतिपाद्योक्तवान् । " समं द्विगुणसाहस्रमानन्त्यं च यथाक्रमम् । दाने फलविशेषः २५ स्याद्धिंसायां तद्वदेव हीति " । तथा ( १।९।२४ ) **आपस्तम्बेन** द्वादशवार्षिकमुक्त्वोक्तमस्मिन्नेव विषये । " गुरुं हत्वा श्रोत्रियं वा एतदेव व्रतमोत्तमादुच्छ्वासाच्चरेदिति " । तत्र यावज्जीवः मावर्त्यमाने व्रते यदा त्रैगुण्यं चातुर्गुण्यं वा संभाव्यते तदा तत्र समर्थस्य बहुधनस्यायं दानतपसोः समुच्चयो द्रष्टव्यः । द्वादशवार्षिकव्यतिरिक्तानां तु **सुमन्तुपराशरा**द्युक्तानां प्रायश्चित्तानामुत्तरत्र व्यवस्थां वक्ष्यामः ॥ ३०

ननु च द्वादशवार्षिकादिकल्पानां व्यवस्था कुतोऽवसिता । न तावत् द्वादशवार्षिकादिविधायक-

२ ख-संपातः.

वाधयेदिति युक्तम् । तत्राप्रतीतेः । न च वाच्यं प्रमाणावगतगुरुलघुकल्पानां बाधो मा भूदितीति व्यवस्था कल्प्यत इति । विकल्पसमुच्चयाङ्गाङ्गिभावानामन्यतमाश्रयणेनापि बाधस्य सुपरिहरत्वात् । अत्रोच्यते । न तावद्द्वादशवार्षिकसेतुदर्शनादीनां विषमकल्पानां विकल्पोऽवकल्प्यते । विकल्पाश्रयणे गुरुकल्पानामनुष्ठानासंभवेनानर्थक्यप्रसङ्गात् । न च षोडशिग्रहणाग्रहणवद्विषमयोरपि विकल्पोपपत्तिरिति वाच्यम् । यतस्तत्रापि सति संभवे ग्रहणमेवेति युक्तं कल्पयितुम् । यद्वा षोडशिग्रहणानुगृहीतेनातिरात्रेण क्षिप्रं स्वर्गादिसिद्धिरतिशयितस्य वा स्वर्गस्येति कल्पनीयम् । इतरथा ग्रहणविधेरानर्थक्यप्रसङ्गात् ।

नापि समुच्चयः । उपदेशातिदेशप्राप्तिमन्तरेण समुच्चयो न संभवति । उपदेशावगतनैरपेक्ष्यस्य बाधप्रसङ्गात् । न चाङ्गाङ्गिभावः । श्रुत्यादिविनियोजकानामभावात् । श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानानि विनियोजकानि । अतः परस्परोपमर्दपरिहारार्थं विषयव्यवस्थाकल्पनैवोचिता । सा च जातिशक्तिगुणाद्यपेक्षया कल्पनीया । " जातिशक्तिगुणापेक्षं सकृद्बुद्धिकृतं तथा । अनुबन्धादि विज्ञाय प्रायश्चित्तं प्रकल्पयेदिति " **देवलस्मरणात्** ॥ २४३ ॥

पूर्वोक्तस्य ब्रह्महत्यादिप्रायश्चित्तस्य नैमित्तिकसमाप्त्यवधिमाह

**ब्राह्मणस्य परित्राणाद्गवां द्वादशकस्य च ।**
**तथाऽश्वमेधावभृथस्नानाद्वा शुद्धिमाप्नुयात् ॥ २४४ ॥**

चोरव्याघ्रादिभिर्व्यापाद्यमानस्य **ब्राह्मणस्यै**कस्याप्यात्मप्राणानन्तरे कृत्वा प्राणत्राणं करोति **गवां द्वादशकस्य** वाऽसंपूर्णेऽपि द्वादशवार्षिके शुद्ध्येत् । यद्यपि प्राणत्राणे प्रवृत्तस्तदकृत्वैव म्रियते तथापि शुद्ध्यत्येव । अत एव **मनुना** ( अ. ११ श्लो. ७९ )। "ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान्परित्यजेत् । मुच्यते ब्रह्महत्याया गोप्ता गोर्ब्राह्मणस्य चेति " । ब्राह्मणरक्षणं तदर्थमरणं च पृथगुपात्तम् । तथा परकीयाश्वमेधावभृथाख्यकर्माङ्गभूतस्नानसमये स्वयमपि स्नात्वा ब्रह्महत्यायाः शुद्धिमाप्नुयात् । स्नानं च स्वकल्मषं विख्याप्य कुर्यात् । तथा च **मनुः** ( अ. ११ श्लो. ८२ )। " शिष्ट्वा वा भूमिदेवानां नरदेवसमागमे । स्वमेनोऽवभृथे स्नात्वा हयमेधे विमुच्यत " इति । भूमिदेव ब्राह्मणा ऋत्विजस्तेषां राज्ञा यजमानेन नरदेवेन समवाये स्वीयमेनः शिष्ट्वा विख्याप्याश्वमेधावभृथे स्नात्वा शुद्ध्येत् यदि तैरनुज्ञातो भवति । ' अश्वमेधावभृथं गत्वा तत्रानुज्ञातः स्नातः सद्यः पूतो भवतीति ' **शङ्खस्मरणात्** ।

अश्वमेधावभृथग्रहणमग्निष्टुन्मध्यानां पञ्चदशरात्रादिक्रत्वन्तराणामग्निष्टुत्समाप्तिकानां च सर्वमेधादीनामुपलक्षणम् । " अश्वमेधावभृथे वा अन्ययज्ञेऽप्यग्निष्टुदन्तश्चेति ' **गौतमस्मरणात्** ( अ. सू. ९।१० )। अयं च प्रक्रान्तद्वादशवार्षिकस्य कथंचित् ब्राह्मणप्राणत्राणादिकं कुर्वतो व्रतसमाप्त्यवधिरुच्यते । यथा ' सारस्वते सत्रे प्लाक्षं प्रस्रवणं प्राप्योत्थानमृषभैकशतानां वा गवां सहस्रस्याभावे सर्वस्वदानं गृहपतिमरणे चेति ' । न पुनः स्वतन्त्रं प्रायश्चित्तान्तरम् । तथा च **शङ्खः** । ' द्वादशो वर्षे शुद्धिं प्राप्नोत्यन्तरा वा ब्राह्मणं मोचयित्वा गवां वा द्वादशानां परित्राणात्तथा चाश्वमेधावभृथस्नानाद्वा पूतो भवति ' । अत एव **मनुना** ( अ. ११ श्लो. ७८ )। "कृतवापनो वा निवसेदिति"

प्रक्रम्य । ( अ. ११ श्लो. ७९ ) " ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान्परित्यजेत् । मुच्यते ब्रह्महत्याया गोप्ता गोर्ब्राह्मणस्य च " इत्यादिना मध्ये ब्राह्मणत्राणादिकमभिधाय ( अ, ११ श्लो. ८१ ) " एवं दृढव्रतो नित्यं ब्रह्मचारी समाहितः । समाप्ते द्वादशे वर्षे ब्रह्महत्यां व्यपोहतीति " द्वादशवार्षिकमेवोपसंहृतम् ॥

ननु ब्रह्महत्यायाः शुद्धिमाप्नुयादिति ब्राह्मणत्राणादीनां द्वादशवार्षिकेण सहैकफलत्वावगमा- ५ त्स्वातन्त्र्यमेव युक्तम् । न पुनरङ्गत्वम् । किंच प्रधानाविरोधित्वादपि नाङ्गत्वम् । प्रधानानुग्राहकं ह्यङ्गं भवति । न च प्रारब्धद्वादशवार्षिकस्येदं विधानम् । येन तत्कार्ये विधानं गम्यते । यथा ' सत्रादावगूर्य विश्वजिता यजेतेति ' सत्रप्रयोगप्रवृत्तस्य तत्परिसमापनाक्षमस्य विश्वजिद्विधानमतोऽपि स्वातन्त्र्यमेव युक्तम् । यथाग्निप्रवेशलक्ष्यभावादीनाम् । न च तेषामपि द्वादशवार्षिकोपक्रमोपसंहारमध्यपठितत्वेन तदङ्गत्वमिति शङ्कनीयम् । यतः सत्यपि मध्यपाठे निर्ज्ञातप्रयोजनत्वेन प्रयोजनाका- १० ङ्क्षाविरहान्न परस्परमङ्गाङ्गित्वं युक्तम् । यथा सामिधेनीप्रकरणमध्यवर्तिनामग्निविदामग्निसमिन्धनप्रकाशनत्वेन सामिधेनीभिः सहैककार्याणां न सामिधेन्यङ्गत्वम् । न चैकान्ततोऽग्निप्रवेशादीनां द्वादशवार्षिकमध्ये पाठः । वसिष्ठगौतमादिभिरेषां द्वादशवार्षिकप्रक्रमात्प्रागेव पठितत्वात् । इदमेव स्वातन्त्र्यं प्रकटयितुं मनुना ( अ. ११ श्लो. ७३ ) ' लक्ष्यं शस्त्रभृतां वा स्यात्प्रास्येदात्मानमग्नौ वे'ति प्रतिवाक्यं वाशब्दः पठितः । तथा प्रतिप्रायश्चित्तमेवोपसंहृतम् । ( मनुः अ. ११ श्लो. ८६ ) " अतोऽन्य- १५ तममास्थाय विधिं विप्रः समाहितः । ब्रह्महत्याकृतं पापं व्यपोहत्यात्मवत्तयेति " । अतोऽग्निप्रवेशादीनां स्वातन्त्र्यमेव युक्तम् । अतश्च ब्राह्मणत्राणादेरप्येकफलत्वान्नाङ्गत्वमिति । उच्यते ॥ परिहृतमेतदन्तरा ' ब्राह्मणं मोचयित्वे'त्यादिना शङ्खवचनेनाङ्गत्वावगमात् । अङ्गस्यैव सतः प्रधानद्वारेण फलसंबन्धः । न च प्रधानविरोधः । यतो ब्राह्मणत्राणावधिकस्यैव व्रतानुष्ठानस्य फलसाधनत्वं विधीयत इति न विरोधः ॥ २४४ ॥ २०

**दीर्घतीव्रामयग्रस्तं ब्राह्मणं गामथापि वा ।**
**दृष्ट्वा पथि निरातङ्कं कृत्वा तु ब्रह्महा शुचिः ॥ २४५ ॥**

किंच । **दीर्घेण** बहुकालव्यापिना **तीव्रेण** दुःसहेन **आमयेन** कुष्ठादिव्याधिना **ग्रस्तं** पीडितं **ब्राह्मणं गां** वा तथाविधां **पथि दृष्ट्वा निरातङ्कं** नीरुजं **कृत्वा ब्रह्महा शुचिर्भवति** । ननु 'ब्राह्मणस्य परित्राणादि'त्यत्र यदुक्तं ब्राह्मणरक्षणं तदेव किमर्थं पुनरुच्यते 'ब्राह्मणं गामथापि वेति' २५ सत्यमेवम् । किं त्वात्मप्राणपरित्यागेनाधस्तनवाक्ये ब्राह्मणरक्षणमुक्तमधुना पुनरौषधदानादिनेति । विशेषः । अमुनैवाभिप्रायेणोक्तं **मनुना** । ( अ. ११ श्लो. ८० ) ' विप्रस्य तन्निमित्ते वा प्राणालाभे विमुच्यत ' इति ॥ २४५ ॥

**आनीय विप्रसर्वस्वं हृतं घातित एव वा ।**
**तन्निमित्तं क्षतः शस्त्रैर्जीवन्नपि विशुद्ध्यति ॥ २४६ ॥** ३०

किंच । विप्रस्यापहृतसर्वस्वतयावसीदतः संबन्धि द्रव्यं भूहिरण्यादिकं चौरैर्हृतं साकल्येनानाय रक्षणं यः करोति स विशुद्ध्यति । आनयने प्रवृत्तः स्वयं चौरैर्घातितो वा यदि वा तन्निमित्तं ब्राह्मण-

सर्वस्वानयनार्थं तत्र युध्यमानः शस्त्रैः क्षतो मृतकल्पो जीवन्नपि विशुद्ध्यति । शस्त्रैरिति बहुवचनं क्षतबहुत्वप्राप्त्यर्थम् । अत एव मनुना ( अ. ११ श्लो. ८० ) । "त्रिवारं प्रतिरोद्धा वा सर्वस्वमवजित्य वेति " त्रिवारग्रहणं कृतम् । एतस्य श्लोकद्वयोक्तकल्पपञ्चकस्य ब्राह्मणरक्षणरूपकत्वे'नान्तरा वा ब्राह्मणं मोचयित्वे'त्यनेन शङ्खवचनेन क्रोडीकृतत्वात् द्वादशवार्षिकसमाप्त्यवधित्वेन विनियोगान्न ५ स्वातन्त्र्यम् ॥ २४६ ॥

**' लोमभ्यः स्वाहे'त्येवं हि लोमप्रभृति वै तनुम् ।**
**मज्जान्तां जुहुयाद्वाऽपि मन्त्रैरेभिर्यथाक्रमम् ॥ २४७ ॥**

" **लोमभ्यः स्वाहे'त्येव**मादिभिर्मन्त्रै**र्लोमप्रभृतिमज्जान्तां तनुं जुहुयात्** । इतिशब्दः करणत्वनिर्देशार्थः । एवंशब्दः प्रकारसूचनार्थः । हिशब्दः स्मृत्यन्तरप्रसिद्धत्वगादीनां प्रभृतिशब्देना-
१० क्षिप्यमाणानां द्योतनार्थः । ततो लोमादीनि होमद्रव्याणि चतुर्थ्या निर्दिश्यन्ते । स्वाहाकारं पठित्वा तैर्मन्त्रैर्जुहुयात् ।

ते च हूयमानद्रव्याणां लोमत्वग्लोहितमांसमेदःस्नाय्वस्थिमज्जानामष्टसंख्यत्वादष्टौ मन्त्रा भवन्ति । तथा च **वसिष्ठः** ( अ. २० सू. २५।२६ ) "ब्रह्महाऽग्निमुपसमाधाय जुहुयाल्लोमानि मृत्योर्जुहोमि लोमभिर्मृत्युं वाशय इति प्रथमाम् । १ । त्वचं मृत्योर्जुहोमि त्वचा मृत्युं वाशय इति द्वितीयाम् ।२।
१५ लोहितं मृत्योर्जुहोमि लोहितेन मृत्युं वाशय इति तृतीयाम् । ३ । मांसानि मृत्योर्जुहोमि मांसैर्मृत्युं वाशय इति चतुर्थीम् । ४ । मेदो मृत्योर्जुहोमि मेदसा मृत्युं वाशय इति पञ्चमीम् । ५ । स्नायूनि मृत्योर्जुहोमि स्नायुभिर्मृत्युं वाशय इति षष्ठीम् । ६ । अस्थीनि मृत्योर्जुहोमि अस्थिभिर्मृत्युं वाशय इति सप्तमीम् । ७। मज्जां मृत्योर्जुहोमि मज्जाभिर्मृत्युं वाशय इत्यष्टमीम् ।८।" इति। अत्र च लोमप्रभृति तनुं जुहुयादिति लोमादीनां होमद्रव्यत्वावगमाल्लोमभ्यः स्वाहेति सत्यपि चतुर्थीनिर्देशे लोमादीनां न देव-
२० तात्वं कल्प्यते । द्रव्यप्रकाशनेनैव मन्त्राणां होमसाधनत्वोपपत्तेः । किंतु लोमभिर्मृत्युं वाशय इत्यादि वसिष्ठमन्त्रपर्यालोचनया मृत्योरेव हविःसंबन्धावगमाद्देवतात्वं कल्प्यते । अतश्च लोमादीनि सामर्थ्यात्स्वाधितिनावदाय मृत्यूद्देशेनाष्टौ होमान्कृत्वाऽन्ते तनुं प्रक्षिपेत् । अतो यत्कैश्चिदुक्त'मनादिष्टद्रव्यत्वादाज्यहविष्का होमा ' इति तदनिरूप्यैवोक्तमित्युपेक्षणीयम् । 'जुहुयादि'त्यनेनाग्नौ सिद्धे ' भ्रूणहाऽग्निमुपसमाधायेति ' पुनरग्निग्रहणं लौकाग्निप्राप्त्यर्थम् । युक्तं चैतत् । पतिताग्नीनां प्रतिपत्तिविधानात् ।
२५ " आहिताग्निस्तु यो विप्रो महापातकभाग्भवेत् । प्रायश्चित्तैर्न शुद्ध्येत् तदग्नीनां तु का गतिः ॥ वैतानं प्रक्षिपेत्तोये शालाग्निं शमयेद्बुधः " **इत्युशनः**स्मरणात् । तथा " महापातकसंयुक्तो दैवात्स्यादग्निमान्यादि । पुत्रादिः पालयेदग्नीन् युक्तश्चादोषसंक्षयात् ॥ प्रायश्चित्तं न कुर्याद्यः कुर्वन्वा म्रियते यदि । गृह्यं निर्वापयेच्छ्रौतमप्स्वस्येत्सपरिच्छदमिति " **कात्यायन**स्मरणात् ।

तनुप्रक्षेपश्चोत्थायोत्थाय त्रिरधोमुखेन कर्तव्यः । यथाह **मनुः** । ( अ. ११ श्लो. ७३ )
३० " प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिरा " इति । **गौतमेना**प्यत्र विशेषो दर्शितः ( अ. २२

---

१ भ्रूणहाग्निमिति पाठान्तरम् ।

सू. १।२ )। ' प्रायश्चित्तमग्नौ सक्तिर्ब्रह्मघ्नस्त्रिरवस्थातस्येति '। अवस्थातस्य अनशनकर्शितकलेवरस्येत्यर्थः। तथा च **काठक**श्रुतिः 'अनशनेन कर्शितोऽग्निमारोहेदिति '।

**इदं** च मरणान्तिकं प्रायश्चित्तं कामकारविषयम्। यथाह **मध्यमाङ्गिराः**। " प्राणान्तिकं च यत्प्रोक्तं प्रायश्चित्तं मनीषिभिः। तत्कामकारविषयं विज्ञेयं नात्र संशयः "। तथा। " यः कामतो महापापं नरः कुर्यात्कथंचन। न तस्य शुद्धिर्निर्दिष्टा भृग्वग्निपतनादृते" इति।एतच्च प्रायश्चित्तं स्वतन्त्रमेव। न ब्राह्मणत्राणादिवत् द्वादशवार्षिकांतर्भूतमित्युक्तं प्राक्॥ २४७॥

**संग्रामे वा हतो लक्ष्यभूतः शुद्धिमवाप्नुयात्।**
**मृतकल्पः प्रहारार्तो जीवन्नपि विशुध्यति॥ २४८॥**

किंच। अथवा **संग्रामे** युद्धभूमावुभयदलप्रेरितशरसंपातस्थाने **लक्ष्यभूतो** मृतः **शुद्धिमवाप्नुयात्**। गाढमर्मप्रहारजनिततीव्रवेदनो **मृतकल्पो** मूर्च्छितो **जीवन्नपि विशुद्ध्यति**। १०

लक्ष्यभावश्च प्रायश्चित्त्यहमित्येवं विदुषां धनुर्विद्याविदां संग्रामे स्वेच्छया कर्तव्यो न तु राज्ञा बलात्कारयितव्यः। यथाह **मनुः** ( अ. ११ श्लो. ७३ )। " लक्ष्यं शस्त्रभृतां वा स्याद्विदुषामिच्छयात्मन " इति। इदं च मरणान्तिकत्वात् साक्षात्कर्तुः क्षत्रियस्य कामकारविषयम्। अपिशब्दादश्वमेधादिनाऽपि शुद्ध्यति। यथाह **मनुः** ( अ. ११ श्लो. ७४ )। " यजेत वाऽश्वमेधेन स्वर्जिता गोसवेन च। अभिजिद्विश्वजिद्भ्यां वा त्रिवृताऽग्निष्टुताऽपि वेति "। १५

अश्वमेधानुष्ठानं सार्वभौमक्षत्रियस्यैव। " यजेत वाऽश्वमेधेन क्षत्रियस्तु महीपतिरिति " **पराशर**स्मरणात्। ' नासार्वभौमो यजेते'त्यसार्वभौमस्य प्रतिषेधदर्शनाच्च। इदं चाश्वमेधानुष्ठानं सार्वभौमस्य कामकारकृते मरणान्तिकस्थाने द्रष्टव्यम्।"महापातककर्तारश्चत्वारो मतिपूर्वकम्।अग्निं प्रविश्य शुद्ध्यंति स्थित्वा वा महति क्रताविति " **यमेन** मरणकालाग्निप्रवेशतुल्यतया महाक्रतोरश्वमेधस्य दिष्टत्वात्। २०

स्वर्जितादयश्च त्रैवर्णिकस्याहिताग्नेरिष्टिप्रथमयज्ञस्य द्वादशवार्षिकेण सह विकल्पन्ते। न च स्वर्जिताद्यर्थमाधानं प्रथमयज्ञानुष्ठानं वा कार्यम्। पतितस्य द्विजातिकर्मस्वनधिकारात्। न च संध्योपासनवद्विरोध इति युक्तम्। आधानादेरुत्तरक्रतुशेषत्वाभावात्। ते च दक्षिणान्यूनाधिक्याश्रयणेन द्वादशवार्षिकार्यर्हेषु साक्षाद्ब्रह्मादिषु व्यवस्थापनीयाः॥ २४८॥

**अरण्ये नियतो जप्त्वा त्रिर्वै वेदस्य संहिताम्।** २५
**शुद्ध्येत वा मिताशीत्वा प्रतिस्रोतःसरस्वतीम्॥ २४९॥**

किंच। **अरण्ये** निर्जनप्रदेशे **नियतो** नियताहारो। ' जपेद्वा नियताहारः ' इति **मनु**स्मरणात् ( अ. ११ श्लो. ७७ )। **त्रिवारं** मन्त्रब्राह्मणात्मकं वेदं जपित्वा शुद्ध्यति। संहिताग्रहणं पदक्रमव्युदासार्थम्। यद्वा मिताशनो भूत्वा प्लाक्षात्प्रस्रवणादारभ्य पश्चिमोदधेः प्रतिस्रोतः स्रोतःस्रोतः

प्रति सरस्वतीं गत्वा विशुद्ध्यति । अशनं च हविष्येण कार्यम् " हविष्यभुग्वाऽनुचरेत्प्रतिस्रोतः सरस्वतीमिति " मनुस्मरणात् (अ. ११ श्लो. ७७) । अयं च वेदजपो विद्युषो हन्तुर्निर्धनस्याल्पगुणवतो निर्गुणव्यापादने प्रमादकृते द्रष्टव्यः । सरस्वतीगमनं तु तादृश एव विषये विद्याविरहिणो द्रष्टव्यम् । निमित्तिनश्च । " तिरस्कृतो यदा विप्रो निर्गुणो म्रियते यदि " इति सुमन्तुवचनस्य दार्शितत्वात् । यत्पुनर्मनुवचनम् ( अ. ११ श्लो. ७५ ) । " जपित्वाऽन्यतमं वेदं योजनानां शतं व्रजे- " तदपि 'आरण्ये नियतो जपे'त्येतस्यैव विषयेऽशक्तस्यैव द्रष्टव्यम् ॥ २४९ ॥

**पात्रे धनं वा पर्याप्तं दत्वा शुद्धिमवाप्नुयात् ।**
**आदातुश्च विशुद्ध्यर्थमिष्टिर्वैश्वानरी तथा ॥ २५० ॥**

किंच । ' न विद्यया केवलये'त्याद्युक्तलक्षणे पात्रे गोभूहिरण्यादिकं जीवनपर्याप्तं समर्थं धनं दत्वा शुद्धिमवाप्नुयात् । तद्धनं यः प्रतिगृह्णाति तस्य वैश्वानरदैवत्येष्टिः शुद्ध्यर्थं कर्तव्या । एतच्चाहिताग्निविषयम् । अनाहिताग्नेस्तु तद्देवत्यश्चरुर्भवति । ' य एवाहिताग्नेर्धर्मः स एवौपासनिकस्येति ' गृह्यकारवचनात् । वाशब्दात्सर्वस्वं सपरिच्छदं वा गृहं दद्यात् । यथाह **मनुः** ( अ. ११ श्लो. ७६ ) । " सर्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत् । धनं वा जीवनायालं गृहं वा सपरिच्छदमिति " ।

इदं च पात्रे धनदानं निर्गुणस्य धनवतो हन्तुर्निर्गुणव्यापादने द्रष्टव्यम् । तत्रैव विषये अविद्यमानान्वयस्य सर्वस्वदानं सान्वयस्य तु सोपस्करगृहदानमिति व्यवस्था । यदपि पराशरेणोक्तम् ।

"चातुर्विद्योपपन्नस्तु विधिवद्ब्रह्मघातके । समुद्रसेतुगमनं प्रायश्चित्तं विनिर्दिशेत् ॥
"सेतुबन्धपथे भिक्षां चातुर्वर्ण्यात्समाहरेत् । वर्जयित्वा विकर्मस्थाञ्छत्रोपानद्विवर्जितः ॥
"अहं दुष्कृतकर्मा वै महापातककारकः । गृहद्वारेषु तिष्ठामि भिक्षार्थी ब्रह्मघातकः ॥
"गोकुलेषु च गोष्ठेषु ग्रामेषु नगरेषु च । तपोवनेषु तीर्थेषु नदीप्रस्रवणेषु च ॥
"एतेषु ख्यापयेदेनः पुण्यं गत्वा तु सागरम् । ब्रह्महा विप्रमुच्येत स्नात्वा तस्मिन्महोदधौ ॥
"ततः पूतो गृहं प्राप्य कृत्वा ब्राह्मणभोजनम् । दत्वा वस्त्रं पवित्राणि पूतात्मा प्रविशेद्गृहम् ॥
"गवां वाऽपि शतं दद्याच्चातुर्विद्याय दक्षिणाम् । एवं शुद्धिमवाप्नोति चातुर्विद्यानुमोदितः " इति ।

तदपि ' पात्रे धनं वा पर्याप्तमि'त्यनेन समानविषयम् ।

यच्च सुमन्तुवचनम् । " ब्रह्महा संवत्सरं कृच्छ्रं चरेदधःशायी त्रिषवणी कर्माविदको भैक्षाहारो दिव्यनदीपुलिनसंगमाश्रमगोष्ठपर्वतप्रस्रवणतपोवनविहारी स्यात्स्थानवीरासनी संवत्सरे पूर्णे हिरण्यमणिगोधान्यतिलभूमिसर्पींषि ब्राह्मणेभ्यो ददन्पूतो भवति " । तदपि हन्तुर्मूर्खस्य धनवतो जातिमात्रव्यापादने द्रष्टव्यम् । यत्पुनर्वसिष्ठवचनम् । ' द्वादशरात्रमब्भक्षी द्वादशरात्रमुपवसेदिति ' । तन्मनसाऽध्यवसितब्रह्महत्यस्य स्वत एवोपरतजिघांसस्य वेदितव्यम् । यत्पुनः " षण्ढं तु ब्राह्मणं हत्वा शूद्रहत्याव्रतं चरेत् । चान्द्रायणं वा कुर्वीत पराकद्वयमेव चेति " षट्त्रिंशन्मतवचनं तदप्रत्यानेयपुंस्त्वस्य ब्राह्मणवधे द्रष्टव्यम् । अत्रैव विषये अप्रत्ययवधे बृहस्पतिराह । " अरुणायाः सरस्वत्याः संगमे लोकविश्रुते । शुध्येत्त्रिषवणस्नायी त्रिरात्रोपोषितो द्विजः " इति । एवमन्यान्यपि स्मृतिवचनान्यन्विष्य विषयव्यवस्था विज्ञेया । समानो विकल्पः ।

एतानि च द्वादशवार्षिकादिधेनुप्रदानपर्यन्तानि ब्राह्मणस्यैव। क्षत्रियादेस्तु द्विगुणादिकम्। यथाहाङ्गिराः। "पर्षद्या ब्राह्मणानां तु सा राज्ञां द्विगुणा मता। वैश्यानां त्रिगुणा प्रोक्ता पर्षद्वच्च व्रतं स्मृतमिति"॥ एवं च ब्राह्मणानां येन हन्तृहन्यमानगतगुणविशेषेण यः प्रायश्चित्तविशेषो व्यवस्थितः स एव तद्गुणविशिष्टे क्षत्रियादौ हन्तरि द्विगुणत्रिगुणो वेदितव्यः। अनयैव दिशा क्षत्रियवैश्यादावपि हीनोत्कृष्टवधे दोषगौरवात्प्रायश्चित्तस्यापि द्वैगुण्यादि कल्पनीयम्। दोषगौरवं च दण्डगौरवादवगम्यते। यथोक्तम्। "प्रतिलोमापवादेषु द्विगुणत्रिगुणो दमः। वर्णानामानुलोम्ये च तस्मादर्धार्धहानितः" इति।

यत्तु चतुर्विंशतिमतवचनम्। "प्रायश्चित्तं यदाम्नातं ब्राह्मणस्य महर्षिभिः। पादोनं क्षत्रियः कुर्यादर्धं वैश्यः समाचरेत्॥ शूद्रः समाचरेत्पादमशेषेष्वपि पाप्मस्विति" तत्प्रतिलोमाद्युचितचतुर्विधसाहसव्यतिरिक्तविषयम्। तथा मूर्धावसिक्तादीनामप्यनुलोमोत्पन्नानां दण्डवत्प्रायश्चित्तमूहनीयम्। दर्शितं दण्डतारतम्यम्। 'दण्डप्रणयनं कार्यं वर्णजात्युत्तराधरैरिति'[1]। ततश्च मूर्धावसिक्तस्य ब्राह्मणवधे ब्राह्मणाद्व्यतिरिक्तं क्षत्रियात् न्यूनमध्यर्धं द्वादशवार्षिकं भवति। अनयैव दिशा प्रतिलोमोत्पन्नानामपि प्रायश्चित्तगौरवमूहनीयम्।

तथा आश्रमिणामपि अङ्गिरसा विशेषो दर्शितः। "गृहस्थोक्तानि पापानि कुर्वन्त्याश्रमिणो यदि। शौचवच्छोधनं कुर्युरर्वाग्ब्रह्मनिदर्शनादिति"। शौचवदिति। "एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम्। त्रिगुणं तु वनस्थानां यतीनां तु चतुर्गुणमिति" वचनाद्यथा ब्रह्मचार्यादीनां शौचं द्विगुणादिक्रमेण वर्धते तथा शोधनं प्रायश्चित्तमपि भवतीत्यर्थः॥

ब्रह्मचारिणस्तु प्रायश्चित्तद्वैगुण्यं षोडशवर्षादूर्ध्वमेव। अर्वाक्तु पुन'र्बालो वाऽप्यूनषोडशः'। प्रायश्चित्तार्धमर्हन्तीति षोडशवर्षादर्वाचीनस्यार्धप्रायश्चित्ताभिधानात्। न च द्वादशवार्षिके चतुर्गुणे क्रियमाणे मध्ये विपत्तिशङ्कया समाप्त्यनुपपत्तेः प्रवृत्तिरेव नोपपद्यते इति शङ्कनीयम्। यतः प्रक्रान्तप्रायश्चित्तस्य मध्ये विपत्तावपि पापक्षयो भवत्येव। तथा हारीतः। "प्रायश्चित्ते व्यवसिते कर्ता यदि विपद्यते। पूतस्तदहरेवासाविह लोके परत्र चेति"। व्यासोऽप्याह। "धर्मार्थं यतमानस्तु न चेच्छक्नोति मानवः। प्राप्तो भवति तत्पुण्यमत्र वै नास्ति संशयः" इति॥ २५०॥

अधुना निमित्तान्तरेषु ब्रह्महत्याप्रायश्चित्तस्यातिदेशमाह

**यागस्थक्षत्रविड्घाती चरेद्ब्रह्महणि व्रतम्।**
**गर्भहा च यथावर्णं तथाऽऽत्रेयीनिषूदकः॥ २५१॥**

दीक्षणीयाद्युदवसानीयापर्यन्ते सोमयागप्रयोगे वर्तमानौ क्षत्रियवैश्यौ यो व्यापादयति असौ ब्रह्महणि पुरुषे यद्व्रतमुपदिष्टं द्वादशवार्षिकादि तच्चरेत्। यद्यपि यागशब्दः सामान्यवचनस्तथाऽप्यत्र सोमयागमभिधत्ते॥ 'सवनगतौ च राजन्यवैश्याविति' वसिष्ठेन सवनत्रयसंपाद्यस्य सोमया-

[1] व्यवहारे २७६ श्लोकः।

गस्यैव निर्दिष्टत्वात् । अत्र च गुरुलघुभूतानां द्वादशवार्षिकादिब्रह्महत्याव्रतानां जातिशक्तिगुणाद्यपेक्षया प्राग्वद्व्यवस्था वेदितव्या । एवं गर्भवधादिष्वपि । मरणान्तिकं तु नातिदिश्यते । व्रतग्रहणात् । अतः कामतो यागस्थक्षत्रियादिवधे व्रतस्यैव द्वैगुण्यम् । एतच्च व्रतं संपूर्णमेव कर्तव्यम् । 'पूर्वयोर्वर्णयोर्वेदाध्यायिनं हत्वेति' प्रक्रम्यापस्तम्बेन द्वादशवार्षिकाभिधानात् ( १।९।२४।६ ) । "गर्भं च
५ विज्ञासु संभूतं हत्वा यथावर्णं यद्वर्णपुरुषवधे यत्प्रायश्चित्तमुक्तं तद्वर्णगर्भवधे तच्चरेत् । एतच्चानुपजातस्त्रीपुन्नपुंसकव्यञ्जनगर्भविषयम् । ( अ. ११ श्लो. ८७ ) "हत्वा गर्भमविज्ञातमिति" **मानवे** विशेषदर्शनात् ।

अत्र च यद्यपि ब्राह्मणगर्भस्य ब्राह्मणत्वादेव तद्वधनिमित्तव्रतप्राप्तिस्तथापि स्त्रीत्वस्यापि संभवा- 'त्स्त्रीशूद्रविट्क्षत्रवध' इत्युपपातकत्वेन तत्प्रायश्चित्तप्राप्तिरपि स्यादतः स्त्रीपुन्नपुंसकत्वेनाविज्ञातेऽपि
१० ब्राह्मणगर्भत्वमात्रप्रयुक्तं ब्रह्महत्याव्रतं कुर्यादित्यर्थवदतिदेशवचनम् । उपजाते स्त्रीपुंसादिविशेषव्यञ्जने यथायथमेव प्रायश्चित्तम् ।

यश्चात्रेय्या निषूदको व्यापादकः सोऽपि तथा व्रतं चरेत् । हन्यमानात्रेयीवर्णानुरूपं व्रतं चरेदित्यर्थः । आत्रेयीशब्देन ऋतुमत्युच्यते । 'रजस्वलामृतुस्नातामात्रेयीमाहुरत्र ह्येतदपत्यं भवतीति' **वसिष्ठ**स्मरणात् अत्रिगोत्रजा च । 'अत्रिगोत्रां वा नारीमिति' । **विष्णु**स्मरणात् । एतदुक्तं
१५ भवति । ब्राह्मणगर्भवधे ब्राह्मण्यात्रेयीवधे च ब्रह्महत्याव्रतम् । अत्र क्षत्रियगर्भवधे क्षत्रियात्रेयीवधे च क्षत्रहत्याव्रतमेवमन्यत्रापीति ।

चशब्दात्साक्ष्ये अनृतवचनादिष्वपि । तथाह **मनुः** । ( अ. ११ श्लो. ८८ ) "उक्त्वा चैवानृतं साक्ष्ये प्रतिरभ्य गुरुं तथा । अपहृत्य च निक्षेपं कृत्वा च स्त्रीसुहृद्वधमिति" । यत्र व्यवहारे असत्यवचनेन प्राणिनां वधप्राप्तिस्तद्विषयमेतत् । प्रायश्चित्तस्यातिगुरुत्वात् । प्रतिरम्भः क्रोधावेशः ।
२० निक्षेपश्च ब्राह्मणसंबन्धी । स्त्री चाहिताग्निभार्या पतिव्रतात्वादिगुणयुक्तोच्यते सवनस्था च । यथा- **हाङ्गिराः** । "आहिताग्नेर्द्विजाग्र्यस्य हत्वा पत्नीमनिन्दिताम् । ब्रह्महत्याव्रतं कुर्यादात्रेयीघ्नस्तथैव चेति" । 'सवनस्थां स्त्रियं हत्वा ब्रह्महत्याव्रतं चरेदिति' **पराशर**स्मरणात् ॥ एवं च सवनस्थाग्निहोत्रिण्यात्रेयीवधे ब्रह्महत्याप्रायश्चित्तातिदेशात्तद्व्यतिरिक्तस्त्रीवधस्य स्त्रीशूद्रविट्क्षत्रवध इत्युपपातकमध्यपाठादुपपातकत्वमेव ॥

२५ ननु 'ब्राह्मणो न हन्तव्य' इत्यत्र निषेधेऽनुपादेयगतत्वेन लिङ्गवचनयोरविवक्षितत्वाद्ब्राह्मणजातेश्च स्त्रीपुंसयोरविशेषात्तदतिक्रमनिमित्तप्रायश्चित्तविधेर्ब्रह्महा द्वादशाब्दानीत्यस्योभयत्र प्राप्तत्वात् किमर्थं 'तथाऽऽत्रेयीनिषूदक' इत्यतिदेशवचम् । उच्यते । सत्यपि ब्राह्मणत्वे अनात्रेय्या वधस्य महापातकप्रायश्चित्तस्यैवातिदेशो न पातित्यस्य । अतः पतितत्यागादि कार्यमत्र न भवति ॥ २५१ ॥

**चरेद्व्रतमहत्वाऽपि घातार्थं चेत्समागतः ।**
**द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमादिशेत् ॥ २५२ ॥**

किंच । यथावर्णमित्यनुवर्तते । ब्राह्मणादिहनने कृतनिश्चयस्तद्व्यापादनार्थं सम्यगागत्य शस्त्रादिप्रहारे कृते कथंचित्प्रतिघातादिप्रबन्धवशादसौ न मृतस्तदा **अहत्वाऽपि** यथावर्णं ब्रह्महत्यादि

**व्रतं चरेत्** । तथा च **गौतमः** ( अ. २२ सू. ११ ) । 'सृष्टश्चेद्ब्राह्मणवधे अहत्वाऽपीति' ॥ ननु हनने तदभावे चैकप्रायश्चित्तता न युक्ता । सत्यम् । अत एवौपदेशिकेभ्यो न्यूनत्वादातिदेशिकानां पादोनान्येव ब्रह्महत्यादिव्रतानि द्वादशवार्षिकादीनि भवन्ति । एतच्च प्रपञ्चितं प्राक् । किंच । यस्तु सवनसंपाद्यं सोमयागमनुतिष्ठन्तं ब्राह्मणं व्यापादयति तस्मिन्द्वादशवार्षिकादिव्रतं द्विगुणं समादिशेत् । तेषां च व्रतानां गुरुलघुभूतानां जातिशक्तिगुणाद्यपेक्षया सत्यपि सवनस्थत्वस्याविशेषे पूर्ववदेव व्यवस्थाऽवगन्तव्या । ब्रह्महत्यासमानां तु गुर्वधिक्षेपादीनामातिदेशिकेभ्योऽपि न्यूनत्वादर्धो न द्वादशवार्षिकादिप्रायश्चित्तमित्युक्तम् ॥ २५२ ॥

इति ब्रह्महत्याप्रायश्चित्तप्रकरणम् ।

अथ क्रमप्राप्तं सुरापानप्रायश्चित्तं प्रक्रमते ।

**सुराम्बुघृतगोमूत्रपयसामग्निसन्निभम् ।**
**सुरापोऽन्यतमं पीत्वा मरणाच्छुद्धिमृच्छति ॥ २५३ ॥**　१०

सुरादीनां मध्येऽ**न्यतममग्निसन्निभं** क्वाथापादिताग्निस्पर्शदाहशक्तिकं कृत्वा **पीत्वा सुरापो मरणाच्छुद्धिं** प्राप्नोति । गोमूत्रसाहचर्याद्द्रव्ये एव घृतपयसी ग्राह्ये । घृतपयःसाहचर्याच्च स्त्रैणमेव गोमूत्रम् । एतच्चार्द्रवाससा कार्यम् । 'सुराप आर्द्रवासाश्च अग्निवर्णां सुरां पिबेदिति' **पैठीनसिस्मरणात्** । तथा 'लौहेन पात्रेण सुरापोऽग्निवर्णां सुरामायसेन पात्रेण ताम्रेण वा पिबेदिति' १५ **प्रचेतःस्मरणात्** । एतच्च सकृत्पानमात्रे । "सुरापानं सकृत्कृत्वाऽप्यग्निवर्णां सुरां पिबेद्" इ**त्यङ्गिरः**स्मरणात् । यत्तु **वसिष्ठ**वचनम् ( अ. २० सू. २२ ) । 'अभ्यासे तु सुरायाश्च त्वग्निवर्णां सुरां पिबेद्द्विज' इति तत्सुराव्यतिरिक्तमद्यपानविषयम् । एतच्च कामकारविषयम् । "सुरापाने कामकृते ज्वलन्तीं तां विनिक्षिपेत् । मुखे तया विनिर्दग्धे मृतः शुद्धिमवाप्नुयादिति ॥" **बृहस्पति**स्मरणात् । यत्तु ( अ. ११ श्लो. ९० ) "सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेदिति" **मनुना** मोहग्रहणं २० कृतं तच्छास्त्रार्थापरिज्ञानाभिप्रायेण ॥

अत्रेदं चिन्तनीयम् । किं सुराशब्दो मद्यपात्रे रूढ उत तिसृष्वेव गौडीमाध्वीपैष्टीष्वाहोस्वित्पैष्ट्यामेवेति । तत्र केचिन्मद्यमात्रे रूढ इति वर्णयन्ति । 'अभ्यासे तु सुराया' इति **वासिष्ठे** ( अ. २० सू. २२ ) पैष्ट्यादित्रयव्यतिरिक्तेऽपि मद्यमात्रे सुराशब्दप्रयोगदर्शनात् । न चासौ गौणः प्रयोग इति शङ्कनीयम् । मदजननशक्तिमत्त्वोपाधिकतया सर्वत्र मुख्यत्वोपाधिकतया सर्वत्र २५ मुख्यत्वोपपत्तौ गौणत्वकल्पनाया अन्याय्यत्वादिति । तदयुक्तम् । 'पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम् । मधूत्थं सैरमारिष्टं मैरेयं नालिकेरजम् ॥ समानानि विजानीयान्मद्यान्येकादशैव तु । द्वादशं तु सुरामद्यं सर्वेषामधमं स्मृतमिति" **पुलस्त्येन** मद्यविशेषत्वेन सुराया निर्दिष्टत्वात् । अतश्च मद्यमात्रे सुराशब्दप्रयोगो गौणः । अन्ये पुनः पैष्ट्यादिषु तिसृषु सुराशब्दस्य रूढिं मन्यन्ते । तथा हि । यद्यप्यनेकत्र सुराशब्दप्रयोगो दृश्यते तथापि कुत्रानादित्वमिति संदेहे ( अ. ११ श्लो. ९४ ) ३० "गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरेति"

निर्धारणात्तत्रैव मुख्यत्वं युक्तम् । न चानेकत्र शक्तिकल्पना दोषः । मदशक्तेरुपाधित्वाश्रयणेन तस्य सुपरिहरत्वात् । न च तालादिरसेष्वप्युपाधेर्विद्यमानत्वादतिप्रसङ्गः । पङ्कजादिशब्दवद्योगरूढत्वाश्रयणात् । अतश्च । 'यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैरिति ' तिसृणां सुराणां समानदोषत्वप्रतिपादनपरम् । न पुनरनयोर्गौडीमाध्व्योः पैष्टीसुरासमत्वप्रतिपादनपरम् ।

५ द्विजोत्तमग्रहणं द्विजात्युपलक्षणम् । एतदप्ययुक्तम् । ' द्वादशं तु सुरामद्यं सर्वेषामधमं स्मृतमिति ' **पुलस्त्य**वचने गौडीमाध्वीभ्यामपि सुरामद्यस्यातिरेकदर्शनात् । तथा । ( **मनुः** अ. ११ श्लो. ९३ ) " सुरा वै मलमन्नानां पाप्मा च मलमुच्यते " इति । अन्नविकारस्यैव सुरात्वनिर्देशादन्नशब्दस्य च । 'अन्नेन व्यञ्जनमि'त्यादिषु व्रीह्यादिविकार एव प्रयोगदर्शनात् । गुडमधुनोश्च रसरूपत्वात्तथा सौत्रामणीग्रहेषु चान्नविकार एव सुराशब्दस्य श्रुतत्वात् पैष्ट्येव सुरा मुख्योच्यते । इतर-
१० योस्तु सुराशब्दो गौणः । यत्तूक्तम् । ' गौडी माध्वीति ' **मनु**वचनात्तिसृष्वप्यौत्पत्तिकत्वनिर्धारणेति तदप्ययुक्तम् । यतो नेदं शब्दानुशासनवच्छब्दार्थसंबन्धानादित्वप्रतिपादनपरं किंतु कार्यप्रतिपादनपरं । अतो गुरुप्रायश्चित्तनिमित्ततया गौडीमाध्व्योर्गौणः सुराशब्दप्रयोगः ।

एवं च नानेकशक्तिकल्पनादोषो नाप्युपाध्याश्रयणं कृतम् । न चात्र द्विजोत्तमग्रहणस्योपलक्षणत्वम् । अतश्च ( **मनुः** अ. ११ श्लो. ९३ ) " सुरा वै मलमन्नानां पाप्मा च मलमुच्यते ।
१५ तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेदिति " पैष्ट्या एव वर्णत्रयसंबन्धित्वेन निषेधः । गौड्यादीनां तु मद्यानां ब्राह्मणसंबन्धित्वेनैव निषेधो न क्षत्रियवैश्ययोः । ( अ. ११ श्लो. ९५ ) " यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम् । तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविरिति " **मानवे** ब्राह्मणेनेति विशेषोपादानात् । **बृहद्विष्णु**नाऽपि ब्राह्मणस्यैव मद्यप्रतिषेधो दर्शितः । " माधूकमैक्षवं तैरं तालं खार्जूरपानसम् । मधूत्थं चैव माध्वीकं मैरेयं नालिकेरजम् । अमेध्यानि दशैतानि मद्यानि
२० ब्राह्मणस्य त्विति " ॥ **बृहद्याज्ञवल्क्ये**नापि क्षत्रियवैश्ययोर्दोषाभावो दर्शितः । " कामादपि हि राजन्यो वैश्यो वाऽपि कथंचन । मद्यमेव सुरां पीत्वा न दोषं प्रतिपद्यते " इति ॥ **व्यासे**नापि तयोर्माध्वीपानमनुज्ञातम् । " उभौ मध्वासवक्षीबौ उभौ चन्दनचर्चितौ । एकपर्यङ्करथिनौ दृष्टौ मे केशवार्जुनाविति " । एवं ब्राह्मणसंबन्धित्वेन मद्यमात्रनिषेधे सत्यपि " गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा । यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैरिति " गौडीमाध्व्योः पृथङ्निषेध-
२५ वचनं ( **मनुः** अ. ११ श्लो. ९४) दोषगुरुत्वेन सुरासमत्वप्रतिपादनपरम् ।

अयं च सुरानिषेधोऽनुपनीतस्यानूढायाश्च कन्याया भवत्येव । ( मनुः अ. ११ श्लो. ९३ ) । " तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेदिति " जातिमात्रावच्छेदेन निषेधात् । अतश्च ( अ. ११ श्लो. ९० ) ' सुरां पीत्वा द्विजो मोहादिति ' प्रायश्चित्तविधिवाक्ये **मनुना** यत् द्विजग्रहणं कृतं तद्वर्णत्रयोपलक्षणार्थम् । निमित्तभूतनिषेधसापेक्षत्वान्नैमित्तिकविधेर्निषेधे च वर्णमात्रस्यावच्छेदक-
३० त्वात् । यथा 'यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेती'ति निमित्तवाक्ये हविर्मात्राभ्युदयस्य निमित्तत्वावगतौ तत्सापेक्षनैमित्तिकवाक्ये श्रूयमाणमपि 'त्रेधा तन्दुलान्विभजेदिति' तन्दुलग्रहणं तन्दुलादिस्वरूपहविर्मात्रोपलक्षणम् । इयांस्तु विशेषः । ' पादो बालेषु दातव्यः सर्वपापेष्वयं विधिरिति ' वचनात्काम-
कारेऽपि न [illegible] किंतु पादमेव द्विगुणीकृत्य [illegible] देयम् । विहितं [illegible] कामा[illegible]-

द्विगुणं चरेदि'त्याङ्गिरःस्मरणात् । एवं वृद्धातुरादिष्वपि योज्यम् । तथा ( **मनुः** अ. ११ श्लो. ९५ ) ' तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविरिति ' मद्यस्यापि जातिमात्रावच्छेदेन निषिद्धत्वादनुपनीतेनापि न पेयम् ॥

ननु कथमनुपनीतस्य दोषः । 'प्रागुपनयनात्कामचारकामवादकामभक्षा ' इति **गौतम**वचनात् ( अ. २ सू. १ ) । तथा । " मद्यमूत्रपुरीषाणां भक्षणे नास्ति कश्चन । दोषस्त्वा पञ्चमाद्वर्षादूर्ध्वं पित्रोः सुहृद्गुरोरि'ति " **कुमार**वचनाच्च दोषाभावावगतेः । उच्यते । सुरामद्ययोर्निषेधवाक्ये जातिमात्रत्वावच्छेदकत्वश्रवणादप्रतिहतैव निषेधप्रवृत्तिः । अत एव स्मृत्यन्तरे निषेधवचनम् । 'सुरापाननिषेधस्तु जात्याश्रय इति स्थिति'रिति । अतः "पादो बालेषु दातव्यः सर्वपापेष्वयं विधिरिति" । सर्वपापेषु सुरापानादिष्विति वचनात्पाद एव सुरापाने प्रायश्चित्तम् । तथा **जातूकर्ण्येन** मद्यपानेऽपि प्रायश्चित्तमुक्तम् । " अनुपेतस्तु यो बालो मद्यं मोहात्पिबेद्यदि । तस्य कृच्छ्रत्रयं कुर्यान्माता भ्राता तथा पितेति" । अतो **गौतम**वचनं सुरादिव्यतिरिक्तशुक्तपर्युषितादिविषयम् । **कुमार**वचनं तु स्वल्पदोषख्यापनपरम् । अत एव प्रागुपनयनात्कृतदोषस्योपनयनमेव प्रायश्चित्तमित्युक्तं **मनुना** । ( अ. २ श्लो. २७ ) "गार्भैर्होमैर्जातकर्मचूडामौञ्जीनिबन्धनैः । बैजिकं गार्भिकं चैनो द्विजानामपमृज्यत" इति ।

अयमत्रार्थः । त्रैवर्णिकानामुत्पत्तिप्रभृति पैष्टीप्रतिषेधः । ब्राह्मणस्य तु मद्यमात्रनिषेधोऽप्युत्पत्तिप्रभृत्येव । राजन्यवैश्ययोस्तु न कदाचिदपि गौड्यादिमद्यप्रतिषेधः । शूद्रस्य न सुराप्रतिषेधो नापि मद्यमात्रप्रतिषेधः ॥ २५३ ॥

प्रायश्चित्तान्तरमाह

**वालवासा जटी वाऽपि ब्रह्महत्याव्रतं चरेत् ।**
**पिण्याकं वा कणान्वाऽपि भक्षयेत्त्रिसमा निशि ॥ २५४ ॥**

गोच्छागादिलोमनिर्मितवस्त्रप्रावृतो **वालवासाः** । वालवासोग्रहणं चीरवल्कलयोरुपलक्षणार्थम् । ' सुरापगुरुतल्पगौ चीरवल्कलवाससौ ब्रह्महत्याव्रतं चरेयातामिति ' **प्रचेतः**स्मरणात् । **जटि**ग्रहणं मुण्डत्वनिराकरणार्थम् । **ब्रह्महत्याव्रतं चरे**दित्यनेनैव सिद्धे यद्वालवसनादिग्रहणं तदन्यत्र संभवे स्वयंधारितशिरःकपालादिनिवृत्त्यर्थम् । इदमकामतो जलबुद्ध्या यः सुरां पिबति तद्विषयम् । ( **मनुः** अ. ११ श्लो. ८९ ) "इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजमि"त्यकामोपाधित्वेन विहितस्यैव द्वादशवार्षिकातिदेशात् । अत्र च सुरापानस्य महापातकत्वात्तत्यप्यातिदेशिकत्वे संपूर्णमेव द्वादशवार्षिकं कुर्यात् न पादोनम् । अत एव **वृद्धहारीतः** । ' द्वादशभिर्वर्षैर्महापातकिनः पूयन्ते' इति ।

अथवा **पिण्याकं** पिण्डितं त्रिसमाः वर्षत्रयपर्यन्तं रात्रौ भक्षयेत् । **कणास्तन्दुलवास्तान्वा** पूर्ववद्**भक्षयेत्** । एतच्च सकृदेव कार्यम् । ( अ. ११ श्लो. ९२ ) ' कणान्वा भक्षयेदब्दं पिण्याकं वा सकृन्निशीति ' **मनु**स्मरणात् । अस्य च पिण्याकादिभक्षणस्य भोजनकार्ये विहितत्वादशनान्तरपरित्यागः । एतच्चोदकबुद्ध्या सुरापाने छर्दनोत्तरकाले वेदितव्यम् । " एतदेव व्रतं कुर्यान्मद्यपश्छर्दने कृते । पञ्चगव्यं तु तस्योक्तं प्रत्यहं कायशोधनमिति " **व्यास**वचनात् । न च सुरासंसृष्टे यदुपलभ्य-

१ क-चोक्तम्.

मानतद्गन्धरसोदकपानविषयमिदमिति सुन्दरम्। संसर्गेऽपि सुरात्वस्यानपायात्। यथाऽऽज्यत्वस्य पृष-दाज्ये अत एव "आज्यपा इति निगमाः कार्याः न पृषदाज्यपा" इत्येवमुक्तं न्यायविद्भिः।

यत्पुनर**आपस्तम्ब**वचनम्। (१।२५।११) 'स्तेयं कृत्वा सुरां पीत्वा गुरुदारान्गत्वा ब्रह्म-हत्यां च कृत्वा चतुर्थं कालं मितभोजनो योऽभ्युपेयात्सवनानुकल्पं स्थानासनाभ्यां विहरंस्त्रिभिर्वर्षैः पापं ५ व्यपनुदतीति'। यत्**वङ्गिरो**वचनम्। 'महापातकसंयुक्ता वर्षैः शुध्यन्ति ते त्रिभिरिति'। तदुभयमपि 'पिण्याकं वा कणान्वे'त्यनेनैकविषयम्। यदपि **यमेन** प्रायश्चित्तद्वयमुक्तम्। "बृहस्पतिसवेनेष्ट्वा सुरापो ब्राह्मणः पुनः। समत्वं ब्राह्मणैर्गच्छेदित्येषा वैदिकी श्रुतिः॥ भूमिप्रदानं यः कुर्यात्सुरां पीत्वा द्विजो-त्तमः। पुनर्न च पिबेत्तां तु संस्कृतः स विशुध्यतीति" तदुभयं पूर्वेण सहैकविषयम्॥ यद्वा अतिरिक्त-दक्षिणाकल्पाश्रयणाद्द्वादशवार्षिकेण सह विकल्पते। अत्रापि बालवृद्धादीनां 'सार्धैकवर्षीयमनुपनीतानां १० तु नवमासिकमि'त्येवं कल्पना कार्या। यत्तु **मनु**वचनम् (अ. ११ श्लो. ९२)। "कणान्वा भक्ष-येदब्दं पिण्याकं व सकृन्निशि। सुरापानापनुत्त्यर्थं वालवासा जटी ध्वजीति" तत्तालुमात्रसंयोगे सुराया अबुद्धिपूर्वे द्रष्टव्यम्॥

ननु च द्रवद्रव्यस्याभ्यवहरणं पानमित्युच्यते। अभ्यवहरणं च कण्ठादधोनयनं न तात्वादि-संयोगमात्रमतः कथं तत्र पाननिमित्तं प्रायश्चित्तम्। उच्यते। येन तात्वादिसंयोगेन विना पानक्रिया न १५ निवर्तते सोऽपि पानक्रियाप्रतिषेधेन प्रतिषिद्धः। अतो यद्यपि मुख्यपानाभावान्न महापातकत्वं तथापि तत्प्रतिषेधेन तदङ्गभूताव्यभिचारितात्वादिसंयोगस्यापि प्रतिषिद्धत्वेन दोषस्य विद्यमानत्वाद्भवत्येव प्राय-श्चित्तम्। 'चरेद्व्रतमहत्वापि घातार्थं चेत्समागतः' इति। यथा हननप्रतिषेधेन तदङ्गभूताध्यवसायादेरपि प्रतिषिद्धत्वात्प्रायश्चित्तविधानम्।

यत्तु **बौधायनीयम्** (२।१।१८)। 'त्रैमासिकममत्या सुरापाने कृच्छ्राब्दपादं चरित्वा पुन-२० रुपनयनमिति'। यच्च **याम्यम्**। 'सुरां पीत्वा द्विजं हत्वा रुक्मं हृत्वा द्विजन्मनः। संयोगं पतितै-र्गत्वा द्विजश्चान्द्रायणं चरेदिति'। यदपि **बार्हस्पत्यम्**। 'गौडीमाध्व्यौ सुरां पैष्टीं पीत्वा विप्रः समाचरेत्। तप्तकृच्छ्रं पराकं च चान्द्रायणमनुक्रमादिति'। तत्त्रितयमप्यनन्यौषधसाध्यव्याध्युप-शमार्थे पाने वेदितव्यम्। प्रायश्चित्तस्याल्पत्वात्।

यदा तु सुरासंसृष्टं शुष्करसमेवान्नं भक्षयति तदा पुनरुपनयनम्। यथाह **मनुः**। (अ. ११ २५ श्लो. १५०) "अज्ञानात्प्राश्य विण्मूत्रं सुरासंसृष्टमेव च। पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजा-तय" इति॥ यदा च शुष्कसुराभाण्डस्थोदकं पिबति तदा **शातातपोक्तं** कुर्यात्। 'सुराभा-ण्डोदकपाने छर्दनं घृतप्राशनमहोरात्रोपवासश्चेति'॥ यत्तु **बौधायनीयम्**। (२।१।२१) 'सुरापानस्य यो भाण्डेष्वपः पर्युषिताः पिबेत्। शङ्खपुष्पीविपक्वं तु क्षीरं सर्पिः पिबेत्त्र्यहमिति' तत्पर्यु-षितत्वादधिकम्। अकामतोऽभ्यासे पुनर्मनुनोक्तम्। (अ. ११ श्लो. १४७) "अपः सुराभाज-३० नस्था मद्यभाण्डस्थितास्तथा। पञ्चरात्रं पिबेत्पीत्वा शङ्खपुष्पीशृतं पयः" इति॥ यत्तु **विष्णूक्तम्**। 'अपः सुराभाजनस्थाः पीत्वा सप्तरात्रं शङ्खपुष्पीशृतं पयः पिबेदिति' तन्मतिपूर्वकपाने। ज्ञानतो-ऽभ्यासे तु **बृहद्यम** आह। "सुराभाण्डस्थितं तोयं यदि कश्चित्पिबेद्द्विजः। स द्वादशाहं क्षीरेण पिबेद्ब्राह्मीं सुवर्चलामिति"॥ सुरापस्य मुखगन्धाघ्राणे तु **मानवम्**। (अ. ११ श्लो. १४९)

"ब्राह्मणस्तु सुरापस्य गन्धमाघ्राय सोमपः । प्राणानप्सु त्रिरायम्य घृतं प्राश्य विशुध्यतीति" तत्सोम-याजिन एवामतिपूर्वे । मतिपूर्वे तु द्विगुणम् । अपीतसोमस्य तु कल्प्यम् । साक्षात्सुरागन्धघ्राणस्य तु 'घ्रातिरघ्रेयमद्ययोरिति' जातिभ्रंशकरत्वात् । (अ. ११ श्लो. १२४ ) । " जातिभ्रंशकरं कर्म कृत्वाऽन्यतममिच्छया । चरेत्सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छयेति " **मनूक्तं** द्रष्टव्यम् ॥ २५४ ॥

एवं मुख्यसुरापाने प्रायश्चित्तमुक्त्वा मद्यपाने प्रायश्चित्तमाह

**अज्ञानात्तु सुरां पीत्वा रेतोविण्मूत्रमेव च ।**
**पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ २५५ ॥**

यः पुनरज्ञानादुदकबुद्ध्या **सुरां** मद्यं ब्राह्मणः पिबति, ये च ब्राह्मणादयो **रेतोविण्मूत्राणि** प्राश्नन्ति ते **त्रयो**ऽपि **द्विजातयो वर्णा**स्तप्तकृच्छ्रपूर्वकं पुनरुपनयनप्रायश्चित्तमर्हन्ति ।

अत्र मद्यपाने योऽयं पुनः संस्कारः स ब्राह्मणस्यैव । क्षत्रियविशोस्तदभ्यनुज्ञानस्य दर्शितत्वात् । सुराशब्दश्चात्र मद्यपरः । प्रायश्चित्तस्यातिलघुत्वात् । अज्ञानतो मुख्यसुरापाने द्वादशवार्षिकस्य विहितत्वाच्च । अत एव **गौतमे**नात्र मद्यशब्दः प्रयुक्तः ( अ. २३ सू. २।३ ) । ' अमत्या मद्यपाने पयोघृतमुदकं वायुं प्रतित्र्यहं तप्तानि पिबेत्स तप्तकृच्छ्रस्ततोऽस्य संस्कारः । मूत्रपुरीषकुणपरेतसां प्राशने चेति ' । यदप्यस्मिन्नेव विषये **मनुनो**क्तम् । ( अ. ११ श्लो. १४६ ) । 'अज्ञानाद्वारुणीं पीत्वा संस्कारेण विशुद्ध्यतीति ' तदपि तप्तकृच्छ्रपूर्वकमेव । **गौतमवाक्या**नुरोधात् । पुनः संस्कारश्च पुनरुपनयनम् । **तच्चाश्वलायना**द्युक्तक्रमेण कर्तव्यम् । यथोक्तम् । ( १।२२।२२–२६ ) 'अथोपेतपूर्वस्य कृताकृतं केशवपनं मेधाजननं च । निरुक्तं अपरिदानं । कालश्च । तत्सवितुर्वृणीमह इति सावित्रीमिति ' ।

मतिपूर्वमद्यपाने **वसिष्ठोक्तं** द्रष्टव्यम् ( अ. २० सू. १९ ) । " मत्या मद्यपाने त्वसुरायाः सुरायाश्चाज्ञाने कृच्छ्रातिकृच्छ्रौ घृतप्राशनं पुनः संस्कारश्चेति" । चान्द्रायणं वा **शङ्खो**क्तम् । 'असुरामद्यपायी चान्द्रायणं चरेदिति' । मुखमात्रप्रवेशे तु मद्यस्या**पस्तम्बीयं** षड्रात्रम् ।

"अभक्ष्याणामपेयानामलेह्यानां च भक्षणे । रेतोमूत्रपुरीषाणां प्रायश्चित्तं कथं भवेत् ॥
"पद्मोदुम्बराबिल्वानां पलाशस्य कुशस्य च । एतेषामुदकं पीत्वा षड्रात्रेण विशुद्ध्यतीति " ।

एतच्च तालादिमद्यविषयम् । गौडीमाध्व्योः पुनरज्ञतया पाने 'असुरायाः सुरायाश्चाज्ञानतः' इति **वसिष्ठो**क्तः ( अ. २० सू. १९ ) 'कृच्छ्रातिकृच्छ्रसहितः पुनः संस्कारो घृतप्राशश्च' द्रष्टव्यः । तयोर्मतिपूर्वपाने तु पिण्याकं वा कणान्वेति त्रैवार्षिकम् । 'कामतस्तु तत्पानाभ्यासे अभ्यासे तु सुराया अग्निवर्णां सुरां पिबेन्मरणात्पूतो भवतीति ' **वासिष्ठं** ( अ. २० सू. २२ ) मरणान्तिकं द्रष्टव्यम् । अत्र सुराशब्दः पैष्ट्याभिप्रायः । तस्याः सकृत्पानेऽपि मरणान्तिकस्य दर्शितत्वात् ॥ मद्यवासितशुष्कभाण्डोदकस्याज्ञानतः पाने **बृहद्यमो**क्तम् ' मद्यभाण्डस्थितं तोयं यदि कश्चित्पिबेद्विजः । क्षीरेण वर्तयेदिति ' ॥

एतच्च सकृत्करणविषयम् । उपपातकप्रायश्चित्तान्यभ्यासविषयाणि । यच्च शङ्खेनोक्तम् । "नास्तिको नास्तिकवृत्तिः कृतघ्नः कूटव्यवहारी मिथ्याभिशंसी इत्येते पञ्चसंवत्सरं ब्राह्मणगृहे भैक्षं चरेयुरिति" । यच्च हारीतेन 'नास्तिको नास्तिकवृत्तिरिति' प्रक्रम्य 'पञ्चतापोऽभ्रावकाशजलशयनान्यनुतिष्ठेयुर्ग्रीष्मवर्षाहेमन्तेष्विति' । तदुभयमप्यत्यन्ताभिनिवेशेन बहुकालाभ्यासविषयम् ॥ २७९ ॥

नास्तिक्यानन्तरं व्रतलोपश्चेत्युक्तं; तत्रावकीर्णस्याप्रसिद्धत्वात्तल्लक्षणकथनपूर्वकं प्रायश्चित्तमाह

**अवकीर्णी भवेद्गत्वा ब्रह्मचारी तु योषितम् ।**
**गर्दभं पशुमालभ्य नैर्ऋतं स विशुध्यति ॥ २८० ॥**

**ब्रह्मचार्युप**कुर्वाणको नैष्ठिकश्चासौ **योषितं गत्वाऽवकीर्णी** भवति । चरमधातोर्विसर्गोऽवकीर्णं । तदस्यास्तीति सोऽवकीर्णी । स निर्ऋतिदैवत्येन गर्दभपशुना यागं कृत्वा विशुध्यति ।

गर्दभस्य पशुत्वे सिद्धेऽपि पुनः पशुग्रहणम् 'अथ पशुकल्प' इत्याश्वलायनादिगृह्योक्तपशुप्राप्त्यर्थम् । एतच्चारण्ये चतुष्पथे लौकिकेऽग्नौ कार्यम् । 'ब्रह्मचारी चेत्स्त्रियमुपेयादरण्ये चतुष्पथे लौकिकेऽग्नौ रक्षोदैवतं गर्दभं पशुमालभेतेति' **वसिष्ठ**स्मरणात् ( अ. २३ सू. १ ) ॥ तथा रात्रावेकाक्षिविकलेन यष्टव्यम् । तथा च **मनुः** । ( अ. ११ श्लो. ११८ ) "अवकीर्णी तु काणेन रासभेन चतुष्पथे । पाकयज्ञविधानेन यजेत निर्ऋतिं निशीति" । पशोरभावे चरुणा यष्टव्यम् । 'निर्ऋतिं वा चरुं निर्वपेत् । तस्य जुहुयात् कामाय स्वाहा कामकामाय स्वाहा निर्ऋत्यै स्वाहा रक्षोदेवताभ्यः स्वाहेति' **वसिष्ठ**स्मरणात् । ( अ. २३ सू. २।३ ) । एतच्चाशक्तविषयम् । शक्तस्य पुनर्'गर्दभेनावकीर्णी निर्ऋतिं चतुष्पथे यजेत् । तस्याजिनमूर्ध्ववालं परिधाय लोहितपात्रः सप्तगृहान् भैक्षं चरेत् कर्माचक्षाणः । संवत्सरेण शुध्यतीति' **गौतमो**क्तो ( अ. २३ सू. १७–१९ ) वार्षिकतपः समुच्चितः पशुयागश्चरुर्वा द्रष्टव्यः । तथा । त्रिषवणस्नानमेककालभोजनं च द्रष्टव्यम् । "एतस्मिन्नेनसि प्राप्ते वसित्वा गर्दभाजिनम् । सप्तागारं चरेद्भैक्षं स्वकर्म परिकीर्तयन् ॥ तेभ्यो लब्धेन भैक्ष्येण वर्तयन्नेककालिकम् । उपस्पृशंस्त्रिषवणमब्देन स विशुध्यतीति" **मनु**स्मरणात् ( अ. ११ श्लो. १२२।१२३ ) ॥

इदं च वार्षिकमश्रोत्रियब्राह्मणपत्न्यां वैश्यायां श्रोत्रियपत्न्यां च द्रष्टव्यम् ॥ यदा तु गुणवत्योर्ब्राह्मणीक्षत्रिययोः श्रोत्रियभार्ययोरवकिरति तदा त्रिवार्षिकं द्विवार्षिकं च क्रमेण द्रष्टव्यम् ॥ यथाऽऽहतुः **शङ्खलिखितौ** । 'गुप्तायां वैश्यायामवकीर्णः संवत्सरं त्रिषवणमनुतिष्ठेत् । क्षत्रियायां तु द्वे वर्षे ब्राह्मण्यां त्रीणी वर्षाणीति' । यत्त्व**ङ्गिरो**वचनम् । 'अवकीर्णनिमित्तं तु ब्रह्महत्याव्रतं चरेत् । चीरवासास्तु षण्मासांस्तथा मुच्येत किल्बिषात्' इति तदकामतो मानवाब्दिकविषयमीषद्व्यभिचारिणीविषयं वा ॥ 'अत्यन्तव्यभिचारितासु पुनः स्वैरिण्यां वृषल्यामवकीर्णः सचैलं स्नात उदकुम्भं दद्याद्ब्राह्मणाय । वैश्यायां चतुर्थकालाहारो ब्राह्मणान्भोजयेत् । यवसभारं च गोभ्यो दद्यात् । क्षत्रियायां त्रिरात्रमुपोषितो घृतपात्रं दद्यात् । ब्राह्मण्यां षड्रात्रमुपोषितो गां च दद्यात् । गोष्ववकीर्णः प्राजापत्यं चरेत् । षण्ढायामवकीर्णः पलालभारं सीसमाषकं च दद्यात्' इति **शङ्खलिखितो**दितं वेदितव्यम् । एतच्चावकीर्णिप्रायश्चित्तं त्रैवार्णिकस्यापि ब्रह्मचारिणः समानम् । "अवकीर्णी द्विजो राजा वैश्यश्चापि स्वरेण तु । इष्ट्वा भैक्षाशिनो नित्यं शुद्ध्यन्त्यब्दात्समाहिताः' इति **शाण्डिल्य**स्मरणात् ।

यदा स्त्रीसंभोगमन्तरेण कामतश्चरमधातुं विसृजति दिवा च स्वप्ने वा विसृजति तदा नैर्ऋत-यागमात्रं द्रष्टव्यम्। 'एतदेव रेतसः प्रयत्नोत्सर्गे दिवा स्वप्ने चेति' **वसिष्ठेन** (अ. २३ सू. ४) यागमात्रस्यातिदिष्टत्वात्। व्रतान्तरेषु कृच्छ्रचान्द्रायणादिष्वतिदिष्टब्रह्मचर्येषु स्कन्दने सत्येतदेव याग-मात्रम्। 'व्रतान्तरेषु चैवमिति' **तेनै**वातिदिष्टत्वात् (अ. २३ सू. ४)। स्वप्नस्कन्दने तु **मनूक्तं** द्रष्टव्यम् (अ. २ श्लो. १८१) "स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः। स्नात्वाऽर्कमर्च-यित्वा त्रिः 'पुनर्मामि'त्यृचं जपेदिति"।

वानप्रस्थादीनां चेदमेव ब्रह्मचर्यखण्डने अवकीर्णिव्रतं कृच्छ्रत्रयाधिकं भवति। "वानप्रस्थो यतिश्चैव स्कन्दने सति कामतः। पराकत्रयसंयुक्तमवकीर्णिव्रतं चरेदिति" **शाण्डिल्य**स्मरणात्॥ यदा गार्हस्थ्यपरिग्रहेण संन्यासात्प्रच्युतो भवति तदा संवर्तोक्तं द्रष्टव्यम्। "संन्यस्य दुर्मतिः कश्चि-१० त्प्रत्यापत्तिं व्रजेद्यदि। स कुर्यात्कृच्छ्रमश्रान्तः षण्मासात्प्रत्यनन्तरामिति"। प्रत्यापत्तिर्गार्हस्थ्यपरिग्रहः। अत एव **वसिष्ठः**। 'यस्तु प्रव्रजितो भूत्वा पुनः सेवेत मैथुनम्। षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिरिति'। तथा च **पराशरः**। "यः प्रत्यवसितो विप्रो प्रव्रज्यातो विनिर्गतः। अनाशक-निवृत्तश्च गार्हस्थ्यं चेच्चिकीर्षति॥ स चरेत्त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि च। जातकर्मादिभिः सर्वैः संस्कृतः शुद्धिमाप्नुयात्॥" तत्र ब्राह्मणस्य षाण्मासिकः कृच्छ्रः पुनः संन्याससंस्कारश्च। १५ क्षत्रियस्य चान्द्रायणत्रयम्। वैश्यस्य कृच्छ्रत्रयमिति व्यवस्था। अथवा ब्राह्मणस्यैव शक्तिसकृत-भ्यासाद्यपेक्षया व्यवस्थितं प्रायश्चित्तत्रयं द्रष्टव्यम्॥

तथा मरणसंन्यासिनामपि **यमेन** प्रायश्चित्तमुक्तम्। 'जलाग्न्युद्बन्धनभ्रष्टाः प्रव्रज्यानाशक-च्युताः। विषप्रपतनप्रायशस्त्रघाताच्युताश्च ये॥ नैव ते प्रत्यवसिताः सर्वलोकबहिष्कृताः। चान्द्राय-णेन शुद्ध्यन्ति तप्तकृच्छ्रद्वयेन वेति"॥ इदं च चान्द्रायणतप्तकृच्छ्रद्वयात्मकं प्रायश्चित्तद्वयं शक्त्या-२० द्यपेक्षया व्यवस्थितं विज्ञेयम्। यदा तु 'शस्त्रघातहताश्चेति' पाठः तदाऽऽत्मत्यागाद्यशास्त्रीयमरण-निमित्तस्तत्पुत्रादेरुपदेशो द्रष्टव्यः॥ यत्पुन**र्वसिष्ठे**नोक्तम् (अ. २३ सू. १९)। 'जीवन्नात्मत्यागी कृच्छ्रं द्वादशरात्रं चरेत् त्रिरात्रं चोपवसेदिति' तदप्यध्यवसिताशास्त्रीयमरणस्यैव कथंचिज्जीवनशक्त्य-पेक्षया द्रष्टव्यम्। अथवाऽध्यवसायमात्रे त्रिरात्रं शस्त्रादिक्षतस्य द्वादशरात्रमिति व्यवस्था।

इदं चावकीर्णिप्रायश्चित्तं गुरुदारतत्समव्यतिरिक्तागम्यागमनविषयम्। तत्र गुरुतरप्रायश्चित्तस्य २५ दर्शितत्वात्। न च लघुनाऽवकीर्णिव्रतेन द्वादशवार्षिकाद्यपनोद्यमहापातकदोषनिबर्हणमुचितम्। न च ब्रह्मचारित्वोपाधिकं लघुप्रायश्चित्तविधानामिति युक्तम्। आश्रमान्तराणां द्वैगुण्यादिवृद्धेर्ब्रह्महत्याप्रकरणे दर्शितत्वात्। न चात्रागम्यागमनप्रायश्चित्तं पृथक्कर्तव्यम्। ब्रह्मचारिणो योषिति ब्रह्मचर्यस्खलनस्यागम्या-गमनेनान्तरीयकत्वात्। अतोऽन्यत्रापि यस्मिन्निमित्ते यन्निमित्तान्तरं समं न्यूनं वाऽवश्यंभाविनस्तत्र पृथक् नैमित्तिकं प्रयुङ्क्ते। यथा। (**मनुः** अ. ११ श्लो. २०८) "अवगूर्य चरेत्कृच्छ्रमतिकृच्छ्रं ३० निपातने। कृच्छ्रातिकृच्छ्रोऽसृक्पाते कृच्छ्रोऽभ्यन्तरशोणिते" इत्यत्र शोणितोत्पादने निमित्तेऽवगूरण-निपातलक्षणं निमित्तद्वयमवश्यंभावित्वेन स्वनैमित्तिकं कृच्छ्रमतिकृच्छ्रं च न प्रयुंक्ते अत एवमन्यत्राप्यू-हनीयम्। यत्र पुनर्निमित्तानामन्तर्भावनियमो नास्ति तत्र पुनर्नैमित्तिकानि पृथक्प्रयुज्यन्ते। निमित्तानि यथा। 'यदा पर्वणि परभार्यां रजस्वलां तैलाभ्यक्तो दिवा जले गच्छतीति'॥

ननु ब्रह्मचारिणो योषिति ब्रह्मचर्यस्खलनस्यागम्यागमनान्तरीयकत्वं नास्त्येव। पुत्रिकागमनेऽगम्यागमनदोषाभावात् । तथा हि न तावत्पुत्रिका कन्या अक्षतयोनित्वात् , नापि परभार्या प्रदानाभावात् , नापि वेश्या अतद्वृत्तित्वात् , नापि विधवा भर्तृमरणाभावात् । अतः पुत्रिकायाः क्वाप्यनन्तर्भावादप्रतिषिद्धेति तत्रैव विप्लुतस्य केवलमवकीर्णिव्रतम् । अन्यविप्लुतस्य तु निमित्तान्तरसंनिपातादवकीर्णिव्रतं नैमित्तिकान्तरमपि प्रयोक्तव्यमिति तदसत् । पुत्रिकाया अपि परभार्यास्वन्तर्भावात् । प्रदानाभावेऽपि विवाहसंस्कारेण संस्कृतत्वात् गान्धर्वादिविवाहपरिणीतावत् ।

न च "यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता । नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कयेति" प्रतिषेधात्सगोत्रास्विव भार्यात्वं नोत्पद्यते इति वाच्यम् । दृष्टार्थत्वात्प्रतिषेधस्य व्यंग्यांग्यादिप्रतिषेधवत् । दृष्टार्थत्वं च पुत्रिकाधर्मशङ्कयेति हेतूपादानात् ।

न च पुत्रार्थमेव परिणयनं, अपि तु धर्मार्थमपि । अतश्चोत्पादितपुत्रस्य मृतभार्यस्य धर्मार्थं को विरोधः । प्रपञ्चितं चैतत्पुरस्तादित्यलमतिप्रसङ्गेन । तस्माद्ब्रह्मचारिणो योषिति ब्रह्मचर्यस्खलनस्यागम्यागमनानन्तरीयकत्वान्न पृथङ्नैमित्तिकं प्रयोक्तव्यमिति सुष्ठूक्तम् ॥ २८० ॥

ब्रह्मचारिप्रायश्चित्तप्रसङ्गादन्यदप्यनुपातकप्रायश्चित्तमाह

**भैक्षाग्निकार्ये त्यक्त्वा तु सप्तरात्रमनातुरः ।**
**'कामावकीर्ण' इत्याभ्यां जुहुयादाहुतिद्वयम् ॥ २८१ ॥**
**उपस्थानं ततः कुर्यात्समासिञ्चन्त्वनेन तु ।**

यस्त्व**नातुर** एव ब्रह्मचारी निरन्तरं **सप्तरात्रं भैक्षमग्निकार्यं** वा त्यजति असौ "कामावकीर्णोऽस्म्यवकीर्णोऽस्मि कामकामाय स्वाहा । कामावपन्नोऽस्म्यवपन्नोऽस्मि कामकामाय स्वाहा" । इत्येताभ्यां मन्त्राभ्यामाहुतीर्हुत्वा 'समासिञ्चन्तु मरुतः समिन्द्रः संबृहस्पतिः । समायमग्निः सिञ्चन्तां यशसा ब्रह्मवर्चसेनेत्यनेन' मन्त्रेणाग्निमुपतिष्ठेत् ॥ एतच्च गुरुपरिचर्यादिगुरुतरकार्यव्यग्रतया अकरणे द्रष्टव्यम् । यदा त्वव्यग्र एवोभे भैक्षाग्निकार्ये त्यजति तदा "अकृत्वा भैक्षचरणमसमिध्य च पावकम्। अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेदिति" **मानवं** (अ. २ श्लो. १८७) द्रष्टव्यम् ॥

यज्ञोपवीतविनाशे तु **हारीतेन** प्रायश्चित्तमुक्तम् । "मनोव्रतपतीभिश्चतस्र आज्याहुतीर्हुत्वा पुनर्यथार्थं प्रतीयादसद्भैक्षभोजनेऽभ्युदितेऽभिनिर्मुक्ते वान्ते दिवा स्वप्ने नग्नस्त्रीदर्शने नग्नस्वापे श्मशानमाक्रम्य हयादीनारुह्य पूज्यातिक्रमे चैताभिरेव जुहुयादग्निसमिन्धने स्थावरसरीसृपादीनां वधे 'यद्देवा देवहेडनमिति' कूष्माण्डीभिराज्यं जुहुयात् । मणिवासो गवादीनां प्रतिग्रहे सावित्र्यष्टसहस्रं जपेदिति" । मनोव्रतपतीभिरिति 'मनोज्योतिरि'त्यादिमनोलिङ्गाभिः 'त्वमग्ने व्रतपा असी'त्यादिव्रतलिङ्गाभिरित्यर्थः । यथार्थं प्रतीयादिति उपनयनोक्तमार्गेण समन्त्रकं गृह्णीयादित्यर्थः । यज्ञोपवीतं विना भोजनादिकरणे तु । "ब्रह्मसूत्रं विना भुङ्क्ते विण्मूत्रं कुरुतेऽथवा । गायत्र्यष्टसहस्रेण प्राणायामेन शुद्ध्यतीति" **मरीच्युक्तं** द्रष्टव्यम् ॥ २८१ ॥

१ मनुस्मृ. अ. २ श्लो. ११.

**मधुमांसाशने कार्यः कृच्छ्रः शेषव्रतानि च ॥ २८२ ॥**
**प्रतिकूलं गुरोः कृत्वा प्रसाद्यैव विशुध्यति ।**

किंच । ब्रह्मचारिणा अमत्या **मधुमांसभक्षणे कृच्छ्रः कार्यः** । तदनन्तरमवशिष्टानि व्रतानि समापयेत् । एतच्च शिष्टभोजनार्हशशादिमांसभक्षणविषयम् । 'ब्रह्मचारी चेन्मांसमश्नीयाच्छिष्टभोजनीयं कृच्छ्रं द्वादशरात्रं चरित्वा व्रतशेषं समापयेदिति' **वसिष्ठ**स्मरणात् ( अ. २३ सू. ११ )। द्वादशरात्रग्रहणं तु मतिपूर्वाभ्यासापेक्षयाऽतिकृच्छ्रपराकादेरपि प्राप्त्यर्थम् । यदा तु मांसैकापनोद्यव्याध्याभिभूतस्तदा मांसं गुरोरुच्छिष्टं कृत्वा भक्षणीयम् । 'स चेद्व्याधितः कामं गुरोरुच्छिष्टं भैषज्यार्थं सर्वं प्राश्नीयादिति' **तेनै**वोक्तत्वात् ( अ. २३ सू. ९ )। सर्वग्रहणं मांसलशुनाद्यभक्ष्यमात्रसङ्ग्रहार्थम् । तद्भक्षणेन चापगतव्याधिरादित्यमुपतिष्ठेत । तथा च **बौधायनः** (२।१।२६–२७)। "येनेच्छेतु चिकित्सितुं स यदाऽगदो भवति तदोत्थायादित्यमुपतिष्ठेत"[2] 'हंसःशुचिषदिति'। मधुनोऽप्यज्ञानतः प्राशनोपपत्तौ न दोषः । 'अकामोपनतं मधु वाजसनेयके न दुष्यतीति' **वसिष्ठ**स्मरणात् ( अ. २३ सू. १३ )। अन्यसूनकाद्यादिभक्षणप्रायश्चित्तं त्वभक्ष्यप्रायश्चित्तप्रकरणे वक्ष्यामः[3] । आज्ञाप्रतिघातादिना गुरोः प्रतिकूलमाचरन् पादप्रणिपातादिना गुरुं प्रसाद्य विशुध्यति ॥ २८२ ॥

ब्रह्मचारिप्रायश्चित्तप्रसङ्गाद्गुरोरपि प्रायश्चित्तमाह

**कृच्छ्रत्रयं गुरुः कुर्यान्म्रियते प्रहितो यदि ॥ २८३ ॥**

यस्तु गुरुश्चौरोरगव्याघ्रादिभयाकुलप्रदेशे सान्द्रतरान्धकाराकुलितनिशीथावसरे कार्यार्थं शिष्यं प्रेरयति स च गुरुणा प्रेरितो दैवान्मृतस्तदा स गुरुः कृच्छ्राणां प्राजापत्यादीनां त्रयं कुर्यात् । न पुनस्त्रयः प्राजापत्याः । तथा सति पृथक्त्वनिवेशिनी संख्याऽनुपपन्ना स्यात् । न च 'एकादश प्रयाजान्यजती'तिवदावृत्त्यपेक्षा संख्येति चतुरस्रम् । स्वरूपपृथक्त्वे संभवत्यावृत्त्यपेक्षाया अन्याय्यत्वात् । यदियमुत्पन्नगता संख्या स्यात्तदा स्यादपि कथंचिदावृत्त्यपेक्षा 'किंतूत्पत्तिगतेयं । अतस्तिस्र आज्याहुतीर्जुहोतीति'वत्स्वरूपपृथक्त्वापेक्षयैव त्रित्वसंख्याघटना युक्ता ॥ २८३ ॥

सकलहिंसाप्रायश्चित्तापवादमाह

**क्रियमाणोपकारे तु मृते विप्रे न पातकम् ।**
**विपाके गोवृषाणां च भेषजाग्निक्रियासु च ॥ २८४ ॥**

आयुर्वेदोपदेशानुसारेणौषधपथ्यान्नप्रदानादिभिश्चिकित्सादिना क्रियमाण उपकारो यस्य ब्राह्मणादेस्तस्मिन् दैवात् कथंचिन्मृतेऽपि पातकं नैव भवति । विप्रग्रहणं प्राणिमात्रोपलक्षणार्थम् ।

१ 'व्याधीयत' इति वासिष्ठे पाठः । २ 'येनेच्छेत्तेन चिकित्सेत । स यदाऽगदी स्यात् । इति बौधायनीये पाठः । ३ अग्रे २८९ श्लोकस्य विवृतौ । पृ. ३०५.

अत एव "यन्त्रणे गोश्चिकित्सार्थे गूढगर्भविमोचने । यत्ने कृते विपत्तिः स्यान्न स पापेन लिप्यत" इत्यादि **संवर्ता**दिभिरुक्तम् । एतच्च प्रपञ्चितं प्राक्[1] ॥ २८४ ॥

मिथ्याभिशंसिनः प्रायश्चित्तविवक्षया तदुपयोग्यर्थवादं तावदाह

**मिथ्याभिशंसिनो दोषो द्विः समो भूतवादिनः ।**
**मिथ्याभिशस्तदोषं च समादत्ते मृषा वदन् ॥ २८५ ॥**

यस्तु परोत्कर्षेर्ष्याजनितरोषकलुषितान्तःकरणो जनसमक्षं मिथ्यैवाभिशापं 'ब्रह्महत्यादिकमनेन कृतमिति' आरोपयति तस्य तदेव द्विगुणं भवति । यस्तु विद्यमानमेव दोषमलोकविदितं जनसमक्षं प्रकाशयति तस्यापि तत्पातकिसमदोषभावत्वम् । तथा चा**पस्तम्बः** (१।२१।२०)। 'दोषं बुध्वा न पूर्वः परेभ्यः पतितस्य समाख्याता स्यात् परिहरेत्त्वेनं धर्मेष्विति' न केवलं मिथ्याभिशंसी द्विगुणदोषभाक् । अपि तु मिथ्याभिशस्तस्य यदन्यद्दुरितजातं तदपि समादत्त इति वक्ष्यमाणप्रायश्चित्तेऽर्थवादः । न पुनः पापद्वैगुण्यादिप्रतिपादनमत्र विवक्षितम् । निमित्तस्य लघुत्वाल्लघुप्रायश्चित्तस्योपदेक्ष्यमाणत्वात् कृतनाशाकृताभ्यागमप्रसङ्गाच्च ॥ २८५ ॥

तत्र प्रायश्चित्तमाह

**महापापोपपापाभ्यां योऽभिशंसेन्मृषा परम् ।**
**अब्भक्षो मासमासीत स जापी नियतेन्द्रियः ॥ २८६ ॥**

यस्तु महापापेन ब्रह्महत्यादिना गोवधाद्युपपापेन वा मृषैव परमभिशंसति स मासं यावज्जलाशनो जपशीलो जितेन्द्रियश्च भवेत् । जपश्च शुद्धवतीनां कार्यः । 'ब्राह्मणमनृतेनाभिशस्य पतनीयेनोपपातकेन वा मासमब्भक्षः शुद्धवतीरावर्तयेदश्वमेधावभृथं वा गच्छेदिति' **वसिष्ठ**स्मरणात् (अ. २३ सू. ३९।४०) । महापापोपपापग्रहणमन्येषामप्यतिपातकादीनामुपलक्षणम् । एतच्च ब्राह्मणस्यैव ब्राह्मणेनाभिशंसने कृते द्रष्टव्यम् । यदा तु ब्राह्मणः क्षत्रियादेरभिशंसनं करोति क्षत्रियादिर्वा ब्राह्मणस्य तदा, "प्रतिलोमापवादेषु द्विगुणस्त्रिगुणो दमः । वर्णानामानुलोम्येन तस्मादर्धार्धहानितः" इति दण्डानुसारेण प्रायश्चित्तस्य वृद्धिह्रासौ कल्पनीयौ । भूताभिशंसिनस्तु पूर्वोक्तार्थवादानुसारेण दण्डानुसारेण च तदर्धं कल्पनीयम् । तथाऽतिपातकाभिशंसिन एतदेव व्रतं पादोनम् । पातकाभिशंसिनस्त्वर्धम् । उपपातकाभिशंसिनस्तु पादः । (**मनुः** अ. ११ श्लो. १२६) "तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतः" इत्युपपातकभूतक्षत्रियादिवधे महापातकप्रायश्चित्ततुरीयांशस्य दर्शनात् । एवं प्रकीर्णाभिशंसिनोऽपि उपपातकात् न्यूनं कल्पनीयम् । 'शक्तिं चावेक्ष्य पापं च प्रायश्चित्तं प्रकल्पयेदिति' स्मरणात् । यत्तु **शङ्खलिखिता**भ्यां 'नास्तिकः कृतघ्नः कूटव्यवहारी ब्राह्मणवृत्तिघ्नो मिथ्याभिशंसी चेत्येते षड्वर्षाणि ब्राह्मणगृहेषु भैक्षं चरेयुः संवत्सरं धौतभैक्षमश्नीयुः षण्मासान्वा गा अनुगच्छेयुरिति' गुरुप्रायश्चित्तमुक्तं तदभ्यासतारतम्यापेक्षया योजनीयम् ॥ २८६ ॥

[1] पृ. २८१ पं. २-३.

अभिशंसिप्रायश्चित्तप्रसङ्गादभिशस्तप्रायश्चित्तमाह

**अभिशस्तो मृषा कृच्छ्रं चरेदाग्नेयमेव वा।**
**निर्वपेत्तु पुरोडाशं वायव्यं पशुमेव वा॥ २८७॥**

यः पुनर्मिथ्याऽभिशस्तः स कृच्छ्रं प्राजापत्यं चरेत्। अग्निदैवत्येन वा पुरोडाशेन यजेत।
५ वायुदैवत्येन वा पुरोडाशेन यजेत। वायुदैवत्येन वा पशुना। एषां च पक्षाणां शक्तिसंभवापेक्षया व्यवस्था। यत्तु **वसिष्ठेन** मासमब्भक्षणमुक्तम् 'एतेनैवाभिशस्तो व्याख्यातः' इति (अ. २३ सू. ३७)। तदभिशस्तस्यैव किंचित्कालमकृतप्रायश्चित्तस्य सतो द्रष्टव्यम्। 'संवत्सराभिशस्तस्य दुष्टस्य द्विगुणो दमः' इति दण्डातिरेकदर्शनात्। यत्तु **पैठीनसि**नोक्तम्। 'अनृतेनाभिशस्यमानः कृच्छ्रं चरेन्मासं पातकेषु महापातकेषु द्विमासमिति' तदपि **वासिष्ठेन** समानविषयम्। यत्तु **बौधायनो**क्तम्
१० (२।१।६०-६१)। 'पातकाभिशंसिने कृच्छ्रस्तदर्धमभिशस्तस्येति[1]' तदुपपातकादिविषयं अशक्तविषयं वा।

एवमन्येषामप्युच्चावचप्रायश्चित्तानामभिशस्तविषयाणां कालशक्त्याद्यपेक्षया व्यवस्था विज्ञेया। यथाह **मनुः**। (अ. ११ श्लो. २००) "षष्ठान्नकालता मासं संहिताजप एव वा। होमाश्च शाकला[2] नित्यमपाङ्क्तानां विशोधनमिति"। अपाङ्क्तानां मध्ये अभिशस्तादयः पठिताः। यद्यप्यत्रा-
१५ भिशस्तस्य निषिद्धाचरणं नोपलभ्यते तथाऽपि मिथ्याभिशस्तत्वलिङ्गानुमितप्राग्भवीयनिषिद्धाचरणापूर्वनिबन्धनमिदं प्रायश्चित्तं कृमिदष्टानामिवेति न विरोधः॥ २८७॥

**अनियुक्तो भ्रातृजायां गच्छंश्चान्द्रायणं चरेत्।**

किंच। यस्तु नियोगं विना भ्रातुर्ज्येष्ठस्य कनिष्ठस्य वा भार्यां गच्छति स चान्द्रायणं चरेत्। एतच्च सकृदमतिपूर्वविषयं द्रष्टव्यम्। यत्तु **शङ्ख**वचनम्। 'परिवित्तिः परिवेत्ता च संवत्सरं ब्राह्मण-
२० गृहेषु भैक्षं चरेयातां ज्येष्ठभार्यामनियुक्तो गच्छंस्तदेव कनिष्ठभार्यां चेति' तत्कामकारविषयम्॥

**त्रिरात्रान्ते घृतं प्राश्य गत्वोदक्यां विशुध्यति॥ २८८॥**

किंचाह। यः पुनरु**दक्यां** रजस्वलां स्वभार्यामपि गच्छति स त्रिरात्रमुपोष्यान्ते घृतं प्राश्य विशुध्यति। इदमकामतः सकृद्गमनविषयम्। तत्रैवाभ्यासे 'रजस्वलागमने सप्तरात्रमिति' **शातातपेनो**क्तं द्रष्टव्यम्। कामतः सकृद्गमनेऽप्येतदेव। यत्तु **बृहत्संवर्तेनो**क्तम्। 'रजस्वलां तु यो
२ गच्छेद्गर्भिणीं पतितां तथा। तस्य पापविशुद्ध्यर्थमतिकृच्छ्रं विशोधनमिति' तत्कामतोऽभ्यासविषयम्। यत्पुनः **शङ्खेन** त्रिवार्षिकमुक्तम्। 'पादस्तु शूद्रहत्यायामुदक्यागमने तथेति' तत्कामतोऽत्यन्तानवच्छिन्नाभ्यासविषयम्।

१ "तदर्धोऽभिशंसितुः" इति बौधायनीये पाठः। २ 'देवकृतस्यैनसोऽवयजनमसी'त्यादिकं शाकलशाखायां सूक्तं प्रोक्तं तेन मासपर्यन्तं होमः कार्यः।

रजस्वलायास्तु रजस्वलादिस्पर्शे प्रायश्चित्तं स्मृत्यन्तरोक्तं द्रष्टव्यम् । तथा च **बृहद्वसिष्ठः** । " स्पृष्टे रजस्वलेऽन्योन्यं सवर्णे त्वेकभर्तृके । कामादकामतो वाऽपि सद्यः स्नानेन शुध्यतः " इति । असपत्न्योस्तु सवर्णयोरकामतः स्नानमात्रम् । "उदक्या तु सवर्णा या स्पृष्टा चेत्स्यादुदक्यया । तस्मिन्नेवाहनि स्नात्वा शुद्धिमाप्नोत्यसंशयमिति" **मार्कण्डेय**स्मरणात् ॥ यत्तु **कश्यप**वचनम् । "रजस्वला तु संस्पृष्टा ब्राह्मण्या ब्राह्मणी यदि । एकरात्रं निराहारा पञ्चगव्येन शुध्यतीति " । तत्कामकारविषयम् ।  ५

असवर्णास्पर्शे तु **बृहद्वसिष्ठेन** विशेषो दर्शितः । " स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी शूद्रजाऽपि च । कृच्छ्रेण शुध्यते पूर्वा शूद्री दानेन शुध्यति " । दानेनेति पादकृच्छ्रप्रत्याम्नायभूतनिष्कचतुर्थांशदानेन शुध्यतीति ।

"स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी वैश्यजाऽपि च । पादहीनं चरेत्पूर्वा पादकृच्छ्रं तथोत्तरा ॥  १०

"स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी क्षत्रिया तथा । कृच्छ्रार्धाच्छुध्यते पूर्वा तूत्तरा च तदर्धतः ॥

"स्पृष्ट्वा रजस्वलाऽन्योन्यं क्षत्रिया शूद्रजाऽपि च । उपवासैस्त्रिभिः पूर्वा त्वहोरात्रेण चोत्तरा ॥

"स्पृष्ट्वा रजस्वलाऽन्योन्यं क्षत्रिया वैश्यजाऽपि च । त्रिरात्राच्छुध्यते पूर्वा त्वहोरात्रेण चोत्तरा॥

"स्पृष्ट्वा रजस्वलाऽन्योन्यं वैश्या शूद्री तथैव च । त्रिरात्राच्छुध्यते पूर्वा तूत्तरा च दिनद्वयात् ॥

"वर्णानां कामतः स्पर्शे शुद्धिरेषा पुरातनीति " । अकामतस्तु **बृहद्विष्णु**नोक्तं स्नानमात्रम् । १५ 'रजस्वलां हीनवर्णां रजस्वला स्पृष्ट्वा न तावदश्नीयाद्यावन्न शुद्धा स्यात् , सवर्णामधिकवर्णां वा स्पृष्ट्वा सद्यः स्नात्वा विशुध्यतीति ' ॥ चाण्डालादिस्पर्शे तु **बृहद्वसिष्ठेन** विशेष उक्तः ।

"पतितान्त्यश्वपाकेन संस्पृष्टा चेद्रजस्वला । तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत् ॥
"प्रथमेऽह्नि त्रिरात्रं स्याद्द्वितीये द्व्यहमेव तु । अहोरात्रं तृतीयेऽह्नि परतो नक्तमाचरेत् ॥"

"शूद्रयोच्छिष्टया स्पृष्टा शुना चेत् द्व्यहमाचरेदिति" । तान्यहानि व्यतिक्रम्य अनाशकेन २० नीत्वेति यावत् ।

एतत्कामतः स्पर्शविषयम् । अकामतस्तु । " रजस्वला तु संस्पृष्टा चाण्डालान्त्यश्ववायसैः । तावत्तिष्ठेन्निराहारा यावत्कालेन शुध्यतीति " **बौधायन**नोक्तं द्रष्टव्यम् ॥ यत्पुन**स्तेनै**वोक्तम् । " रजस्वला तु संस्पृष्टा ग्रामकुक्कुटसूकरैः । श्वभिः स्नात्वा क्षिपेत्तावद्यावच्चन्द्रस्य दर्शनमिति " तदशक्तविषयम् ॥ यदा तु भुञ्जानायाः श्वादिस्पर्शो भवति तदा **स्मृत्यन्तरे** विशेष उक्तः । २५ " रजस्वला तु भुञ्जाना श्वान्त्यजादीन्स्पृशेद्यदि । गोमूत्रयावकाहारा षड्रात्रेण विशुध्यति । अशक्तौ काञ्चनं दद्याद्विप्रेभ्यो वाऽपि भोजनमिति " ॥

यदा तूच्छिष्टयोः परस्परस्पर्शनं भवति, तदा "उच्छिष्टोच्छिष्टया स्पृष्टा कदाचित्स्त्री रजस्वला । कृच्छ्रेण शुध्यते पूर्वा शूद्रा दानैरुपोषिते"**त्यत्रिणोक्तं** द्रष्टव्यम् ॥ यदा तूच्छिष्टान् द्विजान् रजस्वला स्पृशति तदा । "द्विजान्कथञ्चिदुच्छिष्टान् रजःस्था यदि संस्पृशेत् । अधोच्छिष्टे त्वहोरात्रमूर्ध्वोच्छिष्टे त्र्यहं क्षिपेदिति " **मार्कण्डेयो**क्तं द्रष्टव्यम् ॥ ३०

एवमवकीर्णिप्रायश्चित्तप्रसङ्गात्कानिचिदनुपातकप्रायश्चित्तान्यपि व्याख्याय प्रकृतमनुसरामः ।

तत्रावकीर्णानन्तरं 'सुतानां चैव विक्रयः' इत्युक्तं तत्र **मनुयोगीश्वरो**क्तानि त्रैमासिकादीनि कामाकामजातिशक्त्याद्यपेक्षया पूर्ववद्व्यवस्थापनीयानि ॥ यत्तु **शङ्ख**वचनम्, 'देवगृहप्रतिश्रयोद्यानाराम-सभाप्रपातडागपुण्यसेतुसुताविक्रयं कृत्वा तप्तकृच्छ्रं चरेदिति', यच्च **पराशरेणो**क्तम्। 'विक्रीय कन्यकां गां च कृच्छ्रं सान्तपनं चरेदिति '। तदुभयमप्यापद्यकामतो द्रष्टव्यम् ॥ कामतस्तु । " नारीणां विक्रयं कृत्वा चरेच्चान्द्रायणव्रतम् । द्विगुणं पुरुषस्यैव व्रतमाहुर्मनीषिणः " इति **चतुर्विंशतिमतो**क्तं द्रष्टव्यम् । यत्तु **पैठीनसिनो**क्तम् । ' आरामतडागोदपानपुष्करिणीसुकृतसुताविक्रये त्रिषवणस्नाय्यधः-शायी चतुर्थकालाहारः संवत्सरेण पूतो भवति ' तदेकपुत्रविषयम् । तदनन्तरं 'धान्यकुप्यपशुस्तेयमि'-त्युक्तं तत्प्रायश्चित्तानि च स्तेयप्रकरणे प्रपञ्चितानि ॥ २८८ ॥

१० अनन्तरमयाज्यानां च याजनमित्युक्तं; तत्र प्रायश्चित्तमाह

**त्रीन्कृच्छ्रानाचरेद्व्रात्ययाजकोऽभिचरन्नपि ।**
**वेदप्लावी यवाश्यब्दं त्यक्त्वा च शरणागतम् ॥ २८९ ॥**

यस्तु सावित्रीपतितानां याजनं करोति स प्राजापत्यप्रभृतींस्त्रीन्कृच्छ्रानाचरेत् । तेषां च गुरु-लघुभूतानां कृच्छ्राणां चित्वं निमित्तगुरुलघुभावेन कल्पनीयम् ॥ तथा **अभिचरन्न**पीदमेव प्रायश्चित्तं १५ कुर्यात् । एतच्चाग्निदाद्याततायिव्यतिरेकेण । 'षट्स्वभिचरन्न पततीति ' **वसिष्ठ**स्मरणात् ॥ अपिशब्दो हीनयाजकान्त्येष्टियाजकयोः संग्रहार्थः । अत एवोक्तं **मनुना** । ( अ. ११ श्लो. १९७) " व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च । अभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहतीति " । परेषामन्त्यकर्मेत्यत्यन्ताभ्यासविषयं शूद्रान्त्यकर्मविषयं वा । प्रायश्चित्तस्य गुरुत्वात् । अहीनो द्विरात्रादिर्द्वादशाहपर्यन्तोऽहर्गणयागः । यत्तु **शातातपे**नोक्तम् । ' पतितसावित्रीकान्नोपनयेत् २० नाध्यापयेन्न याजयेत् । य एतानुपनयेदध्यापयेद्याजयेद्वा स उद्दालकव्रतं चरेदिति' तत्कामकारविषयम् । उद्दालकव्रतं च प्राग्दर्शितम् । एतच्च कृच्छ्रत्रयं साधारणोपपातकप्रायश्चित्तस्यापवादकम् । अत उप-पातकसाधारणप्रायश्चित्तं शूद्राद्ययाज्ययाजने व्यवतिष्ठते । तत्र कामतस्त्रैमासिकम् । अकामतस्तु **योगीश्वरो**क्तं मासव्रतादि । यत्तु **प्रचेतसा** शूद्रयाजकादीन् पठित्वोक्तम् । ' एते पञ्चतपोभ्याव-काशजलशयनान्यनुतिष्ठेयुः । क्रमेण ग्रीष्मवर्षाहेमन्तेषु मासं गोमूत्रयावकमश्नीयुरिति ' तत्कामतोऽभ्या-२५ सविषयम् । यत्तु **यमे**नोक्तम् । " पुरोधाः शूद्रवर्णस्य ब्राह्मणो यः प्रवर्तते । स्नेहादर्थप्रसंगाद्वा तस्य कृच्छ्रो विशोधनमिति " तदशक्तविषयम् । यच्च **पैठीनसिनो**क्तम् ' शूद्रयाजकः सर्वद्रव्यपरित्यागा-त्पूतो भवति प्राणायामसहस्रेषु दशकृत्वाभ्यस्तेष्विति ' तदप्यकामतोऽभ्यासविषयम् । यत्तु **गौतमेनो**-क्तम् । ' निषिद्धमन्त्रप्रयोगे सहस्रवाक्पुनरतिष्ठेदिति ' निषिद्धानां पतितादीनां याजनाध्यापनात्मके मन्त्रप्रयोगे बहुशोऽभ्यस्ते प्राकृतं ब्रह्मचर्यमुपदिष्टं तत्कामतोऽभ्यासविषयम् । यः स्ववेदं विप्लावयति ३० यश्च रक्षणे क्षमोऽपि तस्कराद्यतिरिक्तं शरणागतमुपेक्षते सोऽपि संवत्सरं यवोदनं भुञ्जानः शुध्यति । तत्र विप्लवो नाम पर्वचाण्डालश्रोत्रावकाशादानध्यायेष्वध्ययनम् । उत्कर्षहेतोरधीयानस्य

१. २५७ श्लोक विवृतौ. २ पृ. २८१ पं. २४–२६.

'किं पठसि नाशितं त्वये'त्येवं पर्यनुयोगदानं वा विप्लावनमुच्यते । अत एवोक्तं **स्मृत्यन्तरे** । 'वृत्तानुयोगानध्येतुः पतितान्मनुरब्रवीदिति '। यत्तु **वसिष्ठेनो**क्तम् ( अ. २३ सू. ३४–३७ ) । ' पतितचाण्डालरावश्रावणे त्रिरात्रं वाग्यता अनश्नन्त आसीरन् । सहस्रपरमं वा तदभ्यस्यन्तः पूता भवन्तीति विज्ञायत' इति । 'एतेनैव गर्हिताध्यापकयाजका व्याख्याताः। दक्षिणात्यागाच्च पूता भवन्तीति विज्ञायत ' इति तद्बुद्धिपूर्वविषयम् । यत्तु **षट्त्रिंशन्मते**ऽभिहितम् । 'चाण्डालश्रोत्रावकाशे श्रुतिस्मृतिपाठे एकरात्रमभोजनमिति ' तद्बुद्धिपूर्वविषयम् ॥

यदा सर्पाद्यन्तरागमनमात्रं भवति न पुनस्तत्राधीते तदाऽपि प्रायश्चित्तं **यमेनो**क्तम् । " सर्पस्य नकुलस्याथ अजमार्जारयोस्तथा । मूषकस्य तथोष्ट्रस्य मण्डूकस्य च योषितः ॥ पुरुषस्यैडकस्यापि शुनोऽश्वस्य खरस्य च । अन्तरागमने सद्यः प्रायश्चित्तमिदं शृणु ॥ त्रिरात्रमुपवासश्च त्रिरह्नश्चाभिषेचनम् । ग्रामान्तरं वा गन्तव्यं जानुभ्यां नात्र संशयः " इति ॥ पितृमातृसुतत्यागतडागारामविक्रयेषु १० मनुयोगीश्वरोक्तोपपातकसाधारणप्रायश्चित्तानि पूर्ववज्जातिशक्तिगुणाद्यपेक्षया योज्यानि । तत्र पितृमात्रादित्यागस्य 'अकारणे परित्यक्ता मातापित्रोर्गुरोस्तथे'त्यपाङ्क्तमध्यपाठात्तन्निमित्तमपि प्रायश्चित्तं भवति । यथाह **मनुः** । ( अ. ११ श्लो. २०७ ) " षष्ठान्नकालता मासं संहिताजप एव वा । होमाश्च शाकला नित्यमपाङ्क्तानां विशोधनमिति"। अपाङ्क्ताश्च श्राद्धकाण्डे 'ये स्तेनपतितक्लीबा' इत्यादिवाक्यैर्दर्शिताः । १५

तडागारामविक्रयेषु च कतिचिद्विशेषप्रायश्चित्तानि सविषयाणि सुतविक्रयप्रायश्चित्तकथनावसरे कथितानि ॥ ' अनन्तरं कन्याया दूषणमि'त्युक्तं । तत्र च त्रैमासिकद्वैमासिकचान्द्रायणादीनि वर्णानां सवर्णाविषये योज्यानि । आनुलोम्ये पुनर्मासिकपयोशनं प्राजापत्यं वा । ' सकामास्वनुलोमासु न दोषस्त्वन्यथा दमः ' इति दण्डाल्पत्वदर्शनात् ॥ यत्तु **शङ्खेनो**क्तम् ॥ 'कन्यादोषी सोमविक्रयी च कृच्छ्रमब्भक्षं चरेयातामिति' । यच्च **हारीत**वचनम् । 'कन्यादूषी सोमविक्रयी वृषलीपतिः कौमारदारत्यागी २० सुरामद्यपः शूद्रयाजको गुरोः प्रतिहन्ता नास्तिको नास्तिकवृत्तिः कृतघ्नः कूटव्यवहारी ब्राह्मणवृत्तिघ्नो मिथ्याभिशंसी पतितसंव्यवहारी मित्रध्रुक् शरणागतघाती प्रतिरूपकवृत्तिरित्येते पंचतपोभ्रावकाशजलशयनान्यनुतिष्ठेयुर्ग्रीष्मवर्षाहेमन्तेषु मासं गोमूत्रयावकमश्नीयुरिति ' । तदुभयमपि क्षत्रियवैश्ययोः प्रातिलोम्येन दूषणे योज्यम् । शूद्रस्य तु वध एव । ' दूषणे तु करच्छेद उत्तमायां वधस्तथेति ' वधदर्शनात् । परिनिन्दकस्य याजनकन्याप्रदानयोः कौटिल्ये शिष्टाप्रतिषिद्धव्रतलोपे आत्मार्थपाक- २५ क्रियारम्भे मद्यपस्त्रीनिषेवणे च साधारणोपपातकप्रायश्चित्तं प्राग्वद्व्यवस्थापनीयम् । आद्ययोस्तु विशेषप्रायश्चित्तानि परिवेदनायाज्ययाजनप्रायश्चित्तकथनप्रस्तावे दर्शितानि। अनन्तरं 'स्वाध्यायत्याग' इत्युक्तं। तत्र व्यसनासक्तत्यागे 'अधीतस्य च नाशनमिति' ब्रह्महत्यासमप्रायश्चित्तमुक्तम् । शास्त्रश्रवणाद्याकुलतया त्यागे तु त्रैमासिकाद्युपपातकप्रायश्चित्तानि जातिशक्त्यपेक्षया योज्यानि ।

यत्तु **वसिष्ठेनो**क्तम् ( अ. २० सू. १२ ) । 'ब्रह्मोज्झः कृच्छ्रं द्वादशरात्रं चरित्वा पुन- ३० रुपयुञ्जीत वेदनाचार्यादिति' तदत्यन्तापद्विषयम् । अग्नित्यागेऽपि **तेनैव** विशेषो दर्शितः ( अ. २१ सू. २७ ) । 'योऽग्नीनपविध्येत्स कृच्छ्रं द्वादशरात्रं चरित्वा पुनराधेयं कारयेदिति' । द्वादशरात्रग्रहणमुत्सन्नकालापेक्षया प्राजापत्यादि[illegible]च्छ्राणां प्राप्त्यर्थम् । तत्र मासद्वये प्राजापत्यं मास-

चतुष्टयेऽतिकृच्छ्रः । षण्मासोच्छिन्ने पराकः । षण्मासादूर्ध्वं योगीश्वरोक्तान्युपपातकसामान्यप्रायश्चित्तानि कालाद्यपेक्षया योज्यानि । संवत्सरादूर्ध्वं तु मानवं त्रैमासिकं द्वैमासिकमिति व्यवस्था । एतच्च नास्तिक्येन त्यागविषयम् । तथा च **व्याघ्रः** । ‘ योऽग्निं त्यजति नास्तिक्यात्प्राजापत्यं चरेद्द्विजः ’ इति ।

यदा तु प्रमादात्त्यजति तदा **भारद्वजगृह्ये** विशेष उक्तः । ‘प्राणायामशतमा त्रिरात्रादुपवासः स्याद्वाविंशतिरात्रात् अत ऊर्ध्वमा षष्टिरात्रात्तिस्रो रात्रीरुपवसेदत ऊर्ध्वमा संवत्सरात् प्राजापत्यं चरेत् । अत ऊर्ध्वं कालबहुत्वे दोषगुरुत्वमिति ’ । यदा त्वालस्यादिना त्यजति तदाऽपि **तेनैव** विशेष उक्तः । ‘ द्वादशाहातिक्रमे त्र्यहमुपवासो मासातिक्रमे द्वादशाहमुपवासः संवत्सरातिक्रमे मासोपवासः पयोभक्षणं वेति ’ । संवत्सरादूर्ध्वं तु **वृद्धहारीतेन** विशेष उक्तः । ‘ संवत्सरोत्सन्नेऽग्निहोत्रे चान्द्रायणं कृत्वा पुनरादध्यात् । द्विवर्षोत्सन्ने चान्द्रायणं सोमायनं च कुर्यात् । त्रिवर्षोत्सन्ने संवत्सरं कृच्छ्रमभ्यस्य पुनरादध्यादिति ’ । सोमायनं च कृच्छ्रकाण्डे वक्ष्यते । **शङ्खे**नापि विशेष उक्तः । ‘अग्न्युत्सादी संवत्सरं प्राजापत्यं चरेद्गां च दद्यादिति ’ ॥ सुतत्यागे बन्धुत्यागे च त्रैमासिकं गोवध व्रतं कामतः । अकामतस्तु **योगीश्वरोक्तं** व्रतचतुष्टयं शक्त्याद्यपेक्षया योज्यम् ॥ द्रुमच्छेदे प्रायश्चित्तं प्रागुक्तम् । स्त्रीप्राणिबधवशीकरणादिभिर्जीवने तिलेक्षुयन्त्रप्रवर्तने च तान्येव प्रायश्चित्तानि तथैव योज्यानि । व्यसनेषु च द्यूतमृगयादिषु तान्येव व्रतानि तथैव योज्यानि । यत्तु **बौधायनेन** ( २।१।४६–४८ ) । “ अथाशुचिकराणि द्यूतमभिचारोऽनाहिताग्नेरुञ्छवृत्तिः समावृत्तस्य भैक्षचर्या तस्य च गुरुकुले वास ऊर्ध्वं चतुर्भ्यो मासेभ्यो यश्च तमध्यापयति नक्षत्रनिर्देशनं चेति । द्वादशमासान्द्वादशार्धमासान्द्वादशाहान्द्वादशषडहान्द्वादशत्र्यहांश्च त्र्यहमेकाहमित्यशुचिकरनिर्देश’ इति द्यूते वार्षिकव्रतमुक्तं तदभ्यासविषयम् । यत्तु **प्रचेतसोक्तम्** “ अनृतवाक् तस्करो राजभृत्यो वृक्षारोपकवृत्तिर्गरदोऽग्निदोऽश्वरथगजारोहणवृत्ती रङ्गोपजीवी श्वागणिकः शूद्रोपाध्यायो वृषलीपतिर्भाण्डिको नक्षत्रोपजीवी श्ववृत्तिर्ब्रह्मजीवी चिकित्सको देवलकः पुरोहितः कितवो मद्यपः कूटकारकोऽपत्यविक्रयी मनुष्यपशुविक्रेता चेति तानुद्धरेत्समेत्य न्यायतो ब्राह्मणव्यवस्थया सर्वद्रव्यत्यागे चतुर्थकालाहाराः संवत्सरं त्रिषवणमुपस्पृशेयुस्तस्यान्ते देवपितृतर्पणं गवाह्निकं चेत्येवं व्यवहार्या ” इति तदपि **बौधायनीयेन** समानविषयम् । श्वागणिको यः श्वगणेन जीवति । भाण्डिको बन्दिव्यतिरिक्तो राज्ञां तूर्यादिस्वनैः प्रबोधयिता बन्दिनः पृथगुपादानात् । श्ववृत्तिः सेवकः । ब्रह्मजीवी ब्राह्मणकार्येषु मूल्येन परिचारकः ।

**मनूक्ता**न्यप्यपाङ्क्तेयप्रायश्चित्तानि ‘षष्ठान्नकालता मासमि’त्यादीनि जात्याद्यपेक्षया योज्यानि । तदुक्तपाङ्क्त्यमध्येऽपि कितवादिव्यसनिनां पठितत्वात् । आत्मविक्रये शूद्रसेवायां च सामान्यप्रायश्चित्तानि प्राग्वदेव योज्यानि ॥ यत्तु **बौधायने**नोक्तम् ( २।१।४१–४८ ) । ‘समुद्रयानं । ब्राह्मणस्य न्यासापहरणं । सर्वपण्यैर्व्यवहरणं । भूम्यनृतं । शूद्रसेवा । यश्च शूद्रायामभिजायते । तदपत्यं च भवति तेषां तु निर्वेशश्चतुर्थकालं मितभोजिनः स्युरपोऽभ्युपेयुः सवनानुकल्पं । स्थानासनाभ्यां विहरन्त

१. अग्रे १२२ श्लोके।

एतैस्त्रिवर्षैस्तदपघ्नन्ति पापमिति ' तद्बहुकालसेवाविषयम् ॥ हीनजातिभिः सख्ये तु उपपातकसामान्य-प्रायश्चित्तान्येव ॥ यत्तु **प्रचेतसोक्तम्** ॥ 'मित्रभेदकरणादहोरात्रमनश्नन् हुत्वा पयः पिबेदिति' तदहीन-सख्यभेदनविषयम् ॥ हीनयोनिनिषेवणेऽप्युपपातकसामान्यप्रायश्चित्तानि योज्यानि ॥ यत्तु **शातातपेनोक्तम्** ॥ 'ब्राह्मणो राजकन्यापूर्वी कृच्छ्रं द्वादशरात्रं चरित्वा निविशेत्तां तु चोपयच्छेद्वैश्यापूर्वी तु तप्तकृच्छ्रं शूद्रापूर्वी तु कृच्छ्रातिकृच्छ्रं; राजन्यश्चेद्वैश्यापूर्वी कृच्छ्रं द्वादशरात्रं चरित्वा निविशेत्तां चोपयच्छेच्छूद्रापूर्वी त्वतिकृच्छ्रं; वैश्यश्चेच्छूद्रापूर्वी त्वतिकृच्छ्रं द्वादशरात्रं चरित्वा तां चोपयच्छेदिति ' तत्र निवेशात्तां चोपयच्छेदिति कृच्छ्रानुष्ठानोत्तरकालं सवर्णपरिणयनादूर्ध्वं तां च राजन्यादिकामुपयच्छेदित्यर्थः।

इदं चाज्ञानविषयम्। ज्ञानतस्तूपपातकसामान्यप्रायश्चित्तं व्यवस्थितमेव द्रष्टव्यम्। साधारणस्त्रीसंभोगे च हीनयोनिनिषेवणमित्युक्तं। तत्रापि ' पशुवेश्याभिगमने प्राजापत्यं विधीयत ' इति **संवर्तोक्त**मकामतो द्रष्टव्यम्। कामतस्तु **यमेनो**क्तं द्रष्टव्यम्। " वैश्यागमनजं पापं व्यपोहन्ति द्विजातयः। पीत्वा सकृत्सकृत्तप्तं सप्तरात्रं कुशोदकमिति "। उपपातकसामान्यप्रायश्चित्तानि च कामाकामतोऽभ्यासापेक्षया योज्यानि। तत्र मत्याभ्यासे तु ' प्रतिनिमित्तं नैमित्तिकमावर्तते ' इति न्यायात् प्रतिनिमित्तं नैमित्तिकावृत्तौ प्रसक्तायां **लौगाक्षिणा** विशेष उक्तः। " अभ्यासेऽहर्गुणा वृद्धिर्मासादर्वाक् विधीयते। ततो मासगुणा वृद्धिर्यावत्संवत्सरं भवेत् ॥ ततः संवत्सरगुणा यावत्पापं समाचरेदिति"। इदं मतिपूर्वविषयम्। अमतिपूर्वावृत्तौ **चतुर्विंशतिमते** विशेष उक्तः। ""सकृत्कृते तु यत्प्रोक्तं त्रिगुणं तत्त्रिभिर्दिनैः। मासात्पञ्चगुणं प्रोक्तं षण्मासाद्दशधा भवेत् ॥ संवत्सरात्पञ्चदशं त्र्यब्दाद्विंशगुणं भवेत्। ततोऽप्येवं प्रकल्प्यं स्या**च्छातातप**वचो यथेति" ॥ यत्पुन"र्विधेः प्राथमिकादस्मात् द्वितीये द्विगुणं चरेदिति" प्रतिनिमित्तमावृत्तिविधायकं तन्महापातकविषयमित्युक्तं प्राक्। यत्तु **यमेन** साधारणस्त्रीगमनमधिकृत्य गुरुतल्पव्रतमतिदिष्टम्। " गुरुतल्पव्रतं केचित्केचिच्चान्द्रायणव्रतम्। गोघ्नस्येच्छन्ति केचिच्च केचिदेवावकीर्णिनः " इति।

एतच्च जन्मप्रभृतिसानुबन्धानवच्छिन्नाभ्यासविषयम्। अनन्तरं तथैवानाश्रमे वास इत्युक्तं। तत्र **हारीतेन** विशेष उक्तः। 'अनाश्रमी संवत्सरं प्राजापत्यं कृच्छ्रं चरित्वाऽऽश्रममुपेयात्। द्वितीयेऽतिकृच्छ्रं तृतीये कृच्छ्रातिकृच्छ्रमत ऊर्ध्वं चान्द्रायणमिति '। एतदसंभवविषयम्। संभवे तु सामान्येनोपपातकप्रायश्चित्तानि कामाकामतो व्यवस्थापनीयानि। परपाकरुचित्वासच्छास्त्राधिगमनाकराधिकारभार्याविक्रयेषु च **मनुयोगीश्वर**प्रतिपादितोपपातकसामान्यप्रायश्चित्तानि जातिशक्तिगुणाद्यपेक्षया व्यवस्थापनीयानि ॥ २८९ ॥

भार्याया विक्रयश्चैषामि'त्यत्र चशब्दो मन्त्रावृत्त्यासत्प्रतिग्रहनिन्दिताध्यापनादीनामुपलक्षणार्थ इत्युक्तम्;
तत्रासत्प्रतिग्रहे प्रायश्चित्तविशेषमाह

**गोष्ठे वसन्ब्रह्मचारी मासमेकं पयोव्रतः।**
**गायत्रीजाप्यनिरतः शुध्यतेऽसत्प्रतिग्रहात् ॥ २९० ॥**

यस्त्वसत्प्रतिग्रहं निषिद्धप्रतिग्रहं करोति स ब्रह्मचर्ययुक्तो गोष्ठे वसन् गायत्रीजपशीलो मासं पयोव्रतेन शुध्यतीति ।

प्रतिग्रहस्य चासत्त्वं दातुर्जातिकर्मनिबन्धनम् । यथा चाण्डालादेः पतितादेश्च । तथा देश-कालानबन्धनं च । यथा कुरुक्षेत्रोपरागादौ । तथा प्रतिग्राह्यद्रव्यनिबन्धनं च । यथा सुरामेषीमृत-शय्योभयतोमुख्यादेः ॥ यदा तु पतितादेर्मेष्यादिकं प्रतिगृह्णाति तदैतद्गुरुप्रायश्चित्तं द्रष्टव्यम् । व्यति-क्रमद्वयदर्शनेन निमित्तस्य गुरुत्वात् ।

तत्र जपे **मनुना** संख्याविशेष उक्तः । ( अ. ११ श्लो. १९४ ) "जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहितः । मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहादिति ॥" प्रत्यहं त्रिसहस्रजपो द्रष्टव्यः । मासमिति द्वितीयया त्रिसहस्रसंख्याकस्य जपस्य प्रतिदिवसव्यापित्वावगमनात् ।

१० यदा तु न्यायवर्तिब्राह्मणादेः सकाशान्निषिद्धं मेषादिकं गृह्णाति पतितादेर्वा भूम्यादिकमनिषिद्धं तदा **षट्त्रिंशन्मतोक्तं** द्रष्टव्यम् । " पवित्रेष्ट्या विशुध्यन्ति सर्वे घोराः प्रतिग्रहाः । ऐन्दवेन मृगारेष्ट्या कदाचिन्मित्रविन्दया ॥ देव्या लक्षजपेनैव शुध्यन्ते दुष्प्रतिग्रहात् " ॥ इति

यत्तु **बृहद्धारीत**वचनम् । " राज्ञः प्रतिग्रहं कृत्वा मासमप्सु सदा वसेत् । षष्ठे काले पयो-भक्षः पूर्णे मासे विशुध्यति ॥ तर्पयित्वा द्विजान्कामैः सततं नियतव्रतः " इति तत्पूर्वोक्तविषयेऽभ्यासे १५ द्रष्टव्यम् । अथवा पतितादेः कुरुक्षेत्रोपरागादौ कृष्णाजिनादिप्रतिग्रहविषयम् । तथा प्रतिग्राह्यद्रव्या-ल्पतया प्रायश्चित्ताल्पत्वम् । यथाह **हारीतः** । ' मणिवासोगवादीनां प्रतिग्रहे सावित्र्यष्टसहस्रं जपे-दिति ' । तथा **षट्त्रिंशन्मतेऽपि** । 'भिक्षामात्रं गृहीत्वा तु पुण्यं मन्त्रमुदीरयेत् । प्रतिग्रहेषु सर्वेषु षष्ठमंशं प्रकल्पयेत् ' ॥ इतीदं च प्रायश्चित्तजातं द्रव्यत्यागोत्तरकालं द्रष्टव्यम् । "यद्गर्हितेनार्जयन्ति ब्राह्मणाः कर्मणा धनम् । तस्योत्सर्गेण शुध्यन्ति जप्येन तपसैव चेति " **मनु**स्मरणात् ( अ. ११ २० श्लो. १९३ ) । एवमन्यान्यपि स्मृतिवाक्यानि द्रव्यसाराल्पत्वमहत्त्वाभ्यां विषयेषु व्यवस्थापनीयानि ॥

इत्युपपातकप्रायश्चित्तप्रकरणम् ।

"जात्याश्रयादिदोषेण निन्द्यान्नादेश्च शब्दतः । **योगीन्द्रो**क्तव्रतव्रातं साम्प्रतं तु प्रतन्यते" ॥

तत्र जातिदुष्टपलाण्ड्वादिभक्षणे कामतः सकृत्कृते ' पलाण्डुं विड्वराहं चे'त्यादिना चान्द्रायणमुक्तम् । कामतोऽभ्यासे तु ' निषिद्धभक्षणे जैह्म्यमि'त्यादिनोक्तं सुरापानसम-२५ प्रायश्चित्तम् । अकामतः सकृद्भक्षणे सान्तपनम् । तत्रैवाभ्यासे यतिचान्द्रायणम् । " अमत्यैतानि षट् जग्ध्वा कृच्छ्रं सान्तपनं चरेत् । यतिचान्द्रायणं वाऽपि शेषेषूपवसेदहरिति " **मनुस्मरणात्** ( अ. ५ श्लो. २० ) । यत्तु **बृहद्यमेनोक्तम्** । ' खट्वार्ताककुम्भीकब्रश्चनप्रभवाणि च । भूतृणं शिग्रुकं चैव खुलण्डं कवकानि च ॥ एतेषां भक्षणं कृत्वा प्राजापत्यं चरेत् द्विजः " इति तत्कामतोऽभ्यासविषयम् । " मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं क्षिपेदिति " **योगीश्वरेण** कामतः सकृद्भक्षणे त्र्यहस्योक्तत्वात् । खट्वाख्यः पक्षी । कुसुम्भमित्यन्ये । कवकं राजसर्षपाख्यं शाकम् । ३०

१ [illegible] २ [illegible] ३ [illegible]

खुलण्डं वशिशेषो गोबलीवर्दन्यायेन निर्दिष्टः । यत्तु यमेनोक्तम् । " तन्दुलीयककुम्भीकव्रश्चन-प्रभवांस्तथा । नालिकां नालिकेरीं च श्लेष्मातकफलानि च ॥ भूतृणं शिग्रुकं चैव खट्वाख्यं कवकं तथा । एतेषां भक्षणं कृत्वा प्राजापत्यं व्रतं चरेदिति " तदपि मतिपूर्वाभ्यासविषयम् । नालिका नालिकेरी शाकविशेषौ च । खट्वाख्यश्च । अकामतः सकृद्भक्षणे 'शेषेपूवसेदहरिति' मनूक्तं (अ. ५।२०) द्रष्टव्यम् । तत्रैवाभ्यासे त्वावृत्तिः कल्प्या । अत्यन्ताभ्यासे तु " संसर्गदुष्टं यच्चान्नं क्रियादुष्टमकामतः । भुक्त्वा स्वभावदुष्टं च तप्तकृच्छ्रं समाचरेदिति " प्रचेतोभिहितं द्रष्टव्यम् । 5

नील्यास्त्वकामतः सकृद्भक्षणे चान्द्रायणम् । " भक्षयेद्यदि नीलीं तु प्रमदाद्ब्राह्मणः क्वचित् । चान्द्रायणेन शुद्धिः स्यादापस्तम्बोऽब्रवीन्मुनिरिति " आपस्तम्बस्मरणात् ॥ कामतोऽभ्यासे चावृत्तिः कल्प्या ॥ यदपि षट्त्रिंशन्मतेऽभिहितम् । " शणपुष्पं शाल्मलं च करनिर्मथितं दधि । बहिर्वेदिपुरोडाशं जग्ध्वा नाद्यादहर्निशमिति" तदप्यकामविषयम् । यत्तु सुमन्तुनोक्तम् । 'लशुनपलाण्डुगृञ्जनकवकभक्षणे सावित्र्यष्टसहस्रेण मूर्ध्नि संतापान्नयेदिति' तद्बलात्कारेणानिच्छतो भक्षणाविषयम् । तदेकसाध्युपव्याध्युपशमार्थे वा भक्षणे द्रष्टव्यम् । अत एवानन्तरं तेनैवोक्तम् । 'एतान्येव व्याधितस्य भिषक्क्रियायामप्रतिषिद्धानि भवन्ति । यानि चैवंप्रकाराणि तेष्वपि न दोषः ' इति । संपातान्नयेदुदकबिन्दून्प्रक्षिपेत् ॥ 10

अथ जातिदुष्टसंधिन्यादिक्षीरपाने प्रायश्चित्तम् । 15

तत्र चाकामतः सकृत्पाने

"अनिर्दशाया गोः क्षीरमौष्ट्रमेकशफं तथा । आविकं संधिनीक्षिरं विवत्सायाश्च गोः पयः ॥

"आरण्यानां च सर्वेषां मृगाणां महिषीं विना । स्त्रीक्षीरं चैव वर्ज्यानि सर्वशुक्तानि चैव हीति ॥

"दधि भक्ष्यं च शुक्तेषु सर्वं च दधिसंभवमि"त्युक्त्वा (अ.५श्लो.८।१०) ।'शेषेषूपवसेदहरिति' मनूक्तः(अ.५।२०) उपवासो द्रष्टव्यः ॥ कामतस्तु योगीश्वरोक्तस्त्रिरात्रोपवासो द्रष्टव्यः ॥ यत्तु पैठीनसिनोक्तम् । 'अविखरोष्ट्रमानुषीक्षीरप्राशने तप्तकृच्छ्रः पुनरुपनयनं च अनिर्दशाहगोमहिषीक्षीरप्राशने-षड्रात्रमभोजनम् । सर्वासां द्विस्तनीनां क्षीरपानेऽप्यजावर्ज्यमेतदेवेति' । यच्च शङ्खेन । "क्षीराणि चान्यभक्ष्याणि तद्विकाराशने बुधः । सप्तरात्रव्रतं कुर्यात्प्रयत्नेन समाहितः " इति यावकव्रतमुक्तं तदुभयमपि कामतोऽभ्यासविषयम् । यत्तु शङ्खेन संधिन्यमेध्यभक्षयोः क्षीरप्राशने पक्षव्रतमुक्तम् 'संधिन्यमेध्यभक्षयोर्भुक्त्वा पक्षव्रतं चरेदिति ' तदभ्यासविषयम् । 'सकृत्पाने गोऽजामहिषीवर्ज्यं सर्वाणि पयांसि प्राश्योपवसेत् । अनिर्दशाहं तान्यपि संधिनीयमसूस्यन्दिनीविवत्साक्षीरं चामेध्यभुजश्चेति' विष्णुनोपवासस्योक्तत्वात् । तथा वर्णनिबन्धनश्च प्रतिषेधः । " क्षत्रियश्चापि वृत्तस्थो वैश्यः शूद्रोऽथवा पुनः । यः पिबेत्कपिलाक्षीरं न ततोऽन्योऽस्त्यपुण्यकृदिति " । एवमादौ च यत्र प्रतिपदोक्तं प्रायश्चित्तं न दृश्यते तत्र ' शेषेषूपवसेदहरिति ' साधारणप्रायश्चित्तं मनूक्तं ( म. ५।२० ) द्रष्टव्यम् ॥ 20 25

अथ स्वभावदुष्टमांसादिभक्षणे प्रायश्चित्तमुक्तम् । तत्र कामतः सकृद्भक्षणे ' शेषेषूपवसेदहरिति' मनूक्तं साधारणं प्रायश्चित्तं द्रष्टव्यम् । कामतस्तु "चाषांश्च रक्तपादांश्च सौनं वल्लूरमेव च । मत्स्यांश्च [illegible] ॥" योगीश्वरोक्तं ( आचारे १७५ श्लो. ) द्रष्टव्यम् । काम- 30

तोऽभ्यासे तु "जग्ध्वा मांसमभक्ष्यं तु सप्तरात्रं यवान् पिबेदिति" मनूक्तं (अ. ११ श्लो. १५२) द्रष्टव्यम् । इदं विट्सूकरादिमांसव्यतिरिक्तविषयम् । "क्रव्याद्विट्सूकरोष्ट्राणां कुक्कुटानां च भक्षणे । नरकाकखराणां च तप्तकृच्छ्रं विशोधनमिति" मनुना जातिविशेषेण प्रायश्चित्तविशेषस्योक्तत्वात् (अ. ११ श्लो. १५६) । एतन्मूत्रपुरीषप्राशनेऽप्येतदेव ।

५ "वराहैकशफानां तु काककुक्कुटयोस्तथा ॥ क्रव्यादानां च सर्वेषामभक्ष्या ये च कीर्तिताः ॥

"मांसमूत्रपुरीषाणि प्राश्य गोमांसमेव च । श्वगोमायुकपीनां च तप्तकृच्छ्रं विधीयते ॥

"उपोष्य वा द्वादशाहं कूष्माण्डैर्जुहुयाद्घृतमिति" बृहद्यमस्मरणात् । तत्र कामतस्तप्तकृच्छ्रः अभ्यासे तु कूष्माण्डसहितः पराकः इति व्यवस्था ॥ प्रचेतसाऽप्युक्तम् । 'श्वसृगालकाककुक्कुटपार्षतवानरचित्रकचाषकक्रव्यादखरोष्ट्रगजवाजिविड्वराहगोमानुषमांसभक्षणे तप्तकृच्छ्रमादिशेदेषां मूत्रपुरीषभक्षणे त्वतिकृच्छ्रमिति' । इदं च कामकारविषयम् । यत्तूशनसो वचनम् । "नरमांसं श्वमांसं वा
१० गोमांसं चाश्वमेव च । भुक्त्वा पञ्चनखानां च महासान्तपनं चरेदिति" तदकामविषयम् ॥ यत्त्वङ्गिरोवचनम् । "बलाकाभासगृध्राखुखरवानरसूकरान् । दृष्ट्वा चैषाममेध्यानि स्पृष्ट्वाऽऽचम्य विशुध्यति ॥ इच्छयैषाममेध्यानि भक्षयित्वा द्विजातयः । कुर्युः सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छयेति" तद्भक्षितोद्गारितविषयम् । सान्तपनशब्देन चात्र महासान्तपनमुच्यते । अकामतः प्राजापत्यविधानात् ।
१५ यत्पुनरङ्गिरोवचनम् । "नरकाकखराश्वानां जग्ध्वा मांसं गजस्य च । एषां मूत्रपुरीषाणि द्विजश्चान्द्रायणं चरेत्" इति । यच्च बृहद्यमेनोक्तम् । "शुष्कमांसाशने विप्रो व्रतं चान्द्रायणं चरेदिति" । तदुभयमपि कामतोऽभ्यासविषयम् । यत्पुनः शङ्खेनोक्तम् । "भुक्त्वा चोभयतो दंतांस्तथा चैकशफानपि । औष्ट्रं गव्यं तथा जग्ध्वा षण्मासान्व्रतमाचरेदिति" तत्कामतोऽत्यन्ताभ्यासविषयम् । यत्तु स्मृत्यन्तरोक्तम् । "जग्ध्वा मांसं नराणां च विड्वराहं खरं तथा । गवाश्वकुञ्जरोष्ट्राणां सर्वं पाञ्चनखं
२० तथा ॥ क्रव्यादं कुक्कुटं ग्राम्यं कुर्यात्संवत्सरव्रतामिति" तदत्यन्तानवच्छिन्नाभ्यासविषयम् ।

अत्र प्रकरणे मूत्रपुरीषग्रहणं वसाशुक्रासृङ्मज्जानामुपलक्षणम् । कर्णविट्प्रभृतिमलषट्के स्वयं कल्पनीयम् । केशादिषु पुनः षट्त्रिंशन्मते विशेष उक्तः । 'अजाविमहिषमृगाणां आममांसभक्षणे केशनखरुधिरप्राशने शुद्धिपूर्वं त्रिरात्रमशनादुपवासः' इति । यत्तु प्रचेतसोक्तम् । 'नखकेशमृल्लोष्टभक्षणेऽहोरात्रभोजनाच्छुद्धिरिति' तदप्यकामतः सकृत्प्राशनविषयम् । यत्तु स्मृत्यन्तरवचनम् ।
२५ "केशकीटनखं प्राश्य मत्स्यकण्टकमेव च । हेमतप्तं घृतं पीत्वा तत्क्षणादेव शुध्यतीति" तन्मुखमात्रप्रवेशविषयम् । यदा तु भाजनस्थमन्नं केशादिदूषितं भवति तदा "अन्ने भोजनकाले तु मक्षिकाकेशदूषिते । अनन्तरं स्पृशेदापस्तच्चान्नं भस्मना स्पृशेदिति" प्रचेतसाऽभिहितं वेदितव्यम् । प्रासङ्गिकोऽयं श्लोकः ॥ सूक्ष्मतरकृमिकीटास्थिभक्षणे पुनर्हारीतेन विशेष उक्तः । 'कृमिकीटपिपीलिकाजलौकःपतङ्गास्थिप्राशने गोमूत्रगोमयाहारस्त्रिरात्रेण विशुध्यतीति' । जलौको मत्स्यादिः । एवं च
३० पशुपतत्रिजलचरमांसादिप्राशने संक्षेपतः प्रायश्चित्तानि प्रदर्शितानि ग्रन्थगौरवभयात्प्रतिव्यक्ति न लिख्यते ॥

अथानुषङ्गिकं दुष्टान्नभक्षणे प्रायश्चित्तं । तत्र तावदुच्छिष्टान्नभक्षणे कथ्यते । तत्र मनुः । (अ. ११ श्लो. १५९) "बिडालकाकाखूच्छिष्टं जग्ध्वा श्वनकुलस्य च । केशकीटावपन्नं च पिबेद्ब्रह्मसुवर्चलाम्

सुवर्चलामिति" कालविशेषानुपादानादेकरात्रं । इदं च कामतो द्रष्टव्यम् । यत्तु विष्णुनोक्तम् । "पक्षिजग्धगवाघ्रातावधूतावक्षुतदूषितानि च ......" [illegible] । संस्काररहितस्यापि भोजने कृच्छ्रपादकमिति" । तत्कामकारविषयम् । 'संस्कारश्च देवद्रोण्यामि'त्यादिना द्रव्यशुद्धिप्रकरणोक्तो द्रष्टव्यः । यत्तु शातातपेनोक्तम् । 'श्वकाकाद्यवलीढशूद्रोच्छिष्टभोजने त्वतिकृच्छ्रमिति' । तदकामतोऽभ्यासविषयम् । यत्तु शङ्खेन । 'शुनामुच्छिष्टकं भुक्त्वा मासमेकं व्रती भवेत् । काकोच्छिष्टं गवा घ्रातं भुक्त्वा पक्षं व्रती भवेदिति' यावकव्रतमुक्तं तत्कामतोऽभ्यासविषयम् । ब्राह्मणाद्युच्छिष्टभोजने तु बृहद्विष्णुनोक्तम् । 'ब्राह्मणः शूद्रोच्छिष्टाशने सप्तरात्रं पञ्चगव्यं पिबेत्, वैश्योच्छिष्टाशने पञ्चरात्रं, राजन्योच्छिष्टाशने त्रिरात्रं, ब्राह्मणोच्छिष्टाशने त्वेकाहमिति' तत्कामकारविषयम् । यत्तु यमवचनम् । "भुक्त्वा सह ब्राह्मणेन प्राजापत्येन शुध्यति । भूभुजा सह भुक्त्वाऽन्नं तप्तकृच्छ्रेण शुध्यति ॥ वैश्येन सह भुक्त्वाऽन्नमतिकृच्छ्रेण शुध्यति । शूद्रेण सह भुक्त्वाऽन्नं चान्द्रायणमथाचरेदिति" तत्कामतोऽभ्यासविषयम् ॥ यत्पुनः शङ्खवचनम् । 'ब्राह्मणोच्छिष्टाशने महाव्याहृतिभिरभिमन्त्र्यापः पिबेत्क्षत्रियोच्छिष्टाशने ब्राह्मीरसविपक्केन त्र्यहं क्षीरेण वर्तयेत् । वैश्योच्छिष्टाशने त्रिरात्रोपोषितो ब्राह्मीं सुवर्चलां पिबेत् । शूद्रोच्छिष्टभोजने षड्रात्रभोजनमिति' तदकामविषयम् । तत्राभ्यासे द्वैगुण्यादिकं कल्प्यम् । एतच्च पित्रादिव्यतिरेकेण । 'पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोज्यमि'त्यापस्तम्बस्मरणात् (१।४।११) । यत्तु बृहद्व्यासवचनम् । "माता वा भगिनी वाऽपि भार्या वाऽन्याश्च योषितः । न ताभिः सह भोक्तव्यं भुक्त्वा चान्द्रायणं चरेदिति" । तत्सहभोजनविषयम् । 'उच्छिष्टमात्रभोजने तु शूद्रोच्छिष्टभोजने सप्तरात्रमभोजनं स्त्रीणां च'त्यापस्तम्बोक्तं द्रष्टव्यम् । यत्त्वङ्गिरोवचनम् । "ब्राह्मण्या सह योऽश्नीयादुच्छिष्टं वा कदाचन । तत्र दोषं न मन्यन्ते सर्व एव मनीषिणः" इति तद्विवाहविषयमापद्विषयं वा । अन्त्योच्छिष्टभोजने तु "अन्त्यानां भुक्तशेषं तु भक्षयित्वा द्विजातयः । चान्द्रं कृच्छ्रं तदर्धं च ब्रह्मक्षत्रविशां विधिरि"त्यापस्तम्बोक्तं द्रष्टव्यम् । अत्र चान्द्रं चान्द्रायणम् । अन्त्यावसाय्युच्छिष्टभोजने तु चाण्डालपतितादीनामुच्छिष्टान्नस्य भक्षणे । "चान्द्रायणं चरेद्विप्रः क्षत्रः सान्तपनं चरेत् । षड्रात्रं च त्रिरात्रं च वर्णयोरनुपूर्वशः" इत्यङ्गिरोऽभिहितं । सान्तपनमत्र महासान्तपनं द्रष्टव्यम् । आपदि तु । "आपत्काले तु विप्रेण भुक्तं शूद्रगृहे यदि । मनस्तापेन शुध्येत्तु द्रुपदानां शतं जपेदिति" पराशरोक्तं वेदितव्यम् ॥ यत्तु बृहच्छातातपेनोक्तम् । "पीतशेषं तु यत्किंचिद्भाजने मुखनिःसृतम् । अभोज्यं तद्विजानीयाद्भुक्त्वा चान्द्रायणं चरेदिति' तदभ्यासविषयं ज्ञेयम् । निमित्तस्यातिलघुत्वात् । "पीतोच्छिष्टं च पानीयं पीत्वा तु ब्राह्मणः क्वचित् । त्रिरात्रं तु व्रतं कुर्याद्वामहस्तेन वा पुनरिति" । एतद्बुद्धिपूर्वविषयम् । अकामतस्त्वर्धं कल्प्यमिति । दीपोच्छिष्टे तु । "दीपोच्छिष्टं तु यत्तैलं रात्रौ रथ्याहृतं तु यत् । अभ्यङ्गाच्चैव यच्छिष्टं भुक्त्वा नक्तेन शुध्यतीति" षट्त्रिंशन्मतोक्तं द्रष्टव्यम् ॥

अथाशुचिद्रव्यसंस्पृष्टभक्षणे प्रायश्चित्तम् । तत्राह संवर्तः । 'केशकीटावपन्नं तु नीलीलाक्षोपघातितम् । स्नाय्वस्थिचर्मसंस्पृष्टं भुक्त्वा तूपवसेदहरिति' । तथाह शातातपः । 'केशकीटावपन्नं च रुधिरमांसास्पृश्यस्पृष्टभ्रूणघ्नावेक्षितपतत्र्यवलीढश्वसूकरगवाघ्रातशुक्तपर्युषितवृथापक्वदेवान्नहविषां भोजने उपवासः पञ्चगव्याशनं चेति' । एतच्चोभयमपि अकामविषयम् । कामतस्तु । "भृङ्गारिकुसुमक्षीरं पलाण्डुं लशुनं तथा ...... कृच्छ्रपादं समाचरेत् ॥ सचित्ते [illegible] स्यात्कृच्छ्रः स्यात्पुनः [illegible]

शोधनमिति" **विष्णूक्तं** वेदितव्यम्। अल्पसंसर्गे पादो महासंसर्गेऽर्धकृच्छ्रः इति व्यवस्था। यत्तु **व्यासे**नोक्तम्। "संसर्गदुष्टं यच्चान्नं क्रियादुष्टं च कामतः। भुक्त्वा स्वभावदुष्टं च तप्तकृच्छ्रं समाचरेदिति"। एतच्चासंसृष्टमेध्यादिरसोपलब्धौ वेदितव्यम्। रजस्वलादिस्पर्शे तु **शङ्खो**क्तम्। 'अमेध्यपतितचाण्डालपुल्कसरजस्वलावधूतकुणिकुष्ठिकुनखिसंस्पृष्टानि भुक्त्वा कृच्छ्रं चरेदिति'। कुणिर्हस्तवि-
५ कलः। एतत्कामकारविषयम्। अकामतोऽर्धम्। "भुक्त्वाऽस्पृश्यैस्तथाऽशौचिकेशकीटैश्च दूषितम्। कुशोदुम्बरबिल्वाद्यैः पनसाम्बुजपत्रकैः। शङ्खपुष्पीसुवर्चादिक्वाथं पीत्वा विशुध्यतीति" यद्विष्णुनोक्तं तदशक्तविषयं रजकादिस्पृष्टविषयं वा। शूद्राद्युपहते तु **हारीतो**क्तं विज्ञेयम्। "शूद्रेणोपहतं भोज्यं कीटैर्वाऽमेध्यसेविभिः। भुञ्जानेषु तु वा यत्र शूद्र उपस्पृशेत् अनर्हत्वात्स पङ्क्तौ तु भुञ्जानेषु वा यत्रोत्थायोच्छिष्टं प्रयच्छेद्वाचामेद्वा कुत्सित्वा वा यत्रान्नं दद्युस्तत्र प्रायश्चित्तमहोरात्रमिति।"

१० उच्छिष्टपङ्क्तिभोजनेऽप्येतदेव। "यस्तु भुङ्क्ते द्विजः पङ्क्त्यामुच्छिष्टायां कदाचन। अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यतीति" **क्रतु**स्मरणात्। वामकरनिर्मुक्तान्नभोजने तु "समुत्थितस्तु यो भुङ्क्ते यो भुङ्क्ते मुक्तभाजने। एवं वैवस्वतः प्राह भुक्त्वा सान्तपनं चरेदिति" **षट्त्रिंशन्मतो**क्तं वेदितव्यम्॥ तथा **पराशरेणा**प्यत्रोक्तम्। "एकपङ्क्त्युपविष्टानां विप्राणां सह भोजने। यद्येकोऽपि त्यजेत्पात्रं शेषमन्नं न भोजयेत्॥ मोहाद्भुञ्जीत यस्तत्र पङ्क्त्यामुच्छिष्टभोजनः। प्रायश्चित्तं चरेद्विप्रः
१५ कृच्छ्रं सान्तपनं तथेति"॥

शवादिसंपृक्तकूपाद्युदकपाने तु **विष्णु**राह। 'मृतपञ्चनखात्कूपादत्यन्तोपहताद्वोदकं पीत्वा ब्राह्मणस्त्र्यहमुपवसेत् द्व्यहं राजन्य एकाहं वैश्यः शूद्रो नक्तं सर्वे चान्ते पञ्चगव्यं पिबेयुरिति' अत्यन्तोपहताद्वेति मूत्रपुरीषादिभिर्वेत्यभिहितम्। यदा तु तत्रैव शवमुच्छूनतया भिन्नं भवति तदा **हारीतो** विशेषमाह। "क्लिन्ने भिन्ने शवे तोयं तत्रस्थं यदि तत्पिबेत्। शुध्यै चान्द्रायणं कुर्यात्तप्तकृच्छ्रमथापि
२० वा॥ यदि कश्चित्ततः स्नायात्प्रमादेन द्विजोत्तमः। जपंस्त्रिषवणस्नायी अहोरात्रेण शुध्यतीति"। इदं चान्द्रायणं कामतो मानुषशवोपहतकूपजलपानविषयम्। अकामतस्तु षड्रात्रम्। "क्लिन्नं भिन्नं शवं चैव कूपस्थं यदि जायते। पयः पिबेत्त्रिरात्रेण मानुषे द्विगुणं स्मृतमिति" **देवल**स्मरणात्॥

यदा चाण्डालकूपादिगतं जलं पिबति तदा**ऽऽपस्तम्बो**क्तं द्रष्टव्यम्। "चाण्डालकूपभाण्डस्थं नरः कामाज्जलं पिबेत्। प्रायश्चित्तं कथं तत्र वर्णे वर्णे विनिर्दिशेत्॥ चरेत्सान्तपनं विप्रः प्राजापत्यं
२५ च भूमिपः। तदर्धं तु चरेद्वैश्यः शूद्रे पादं विनिर्दिशेदिति"। इदं च कामकारविषयम्। अकामतस्तु। "चाण्डलकूपभाण्डस्थमज्ञानादुदकं पिबेत्। स तु त्र्यहेण शुध्येत शूद्रस्त्वेकेन शुध्यतीति" **देवलोक्तं** द्रष्टव्यम्॥

चाण्डालादिसंबद्धाल्पजलाशयेष्वपि कूपवच्छुद्धिः। "जलाशयेष्वथाल्पेषु स्थावरेषु महीतले। कूपवत्कथिता शुद्धिर्महत्सु तु न दूषणमिति" **विष्णु**स्मरणात्। पुष्करिण्यादिषु पुनः। "म्लेच्छा-
३० दीनां जलं पीत्वा पुष्करिण्यां ह्रदेऽपि वा। जानुदघ्नं शुचि ज्ञेयमधस्तादशुचि स्मृतम्॥ तत्तोयं यः पिबेद्विप्रः कामतोऽकामतोऽपि वा। अकामान्नक्तभुञ्जी स्यादहोरात्रं तु कामतः"। **इत्यापस्तम्बो**क्तं

द्रष्टव्यम् ॥ रजकादिभाण्डस्थतोये तु "भाण्डस्थमन्त्यजानां तु जलं दधि पयः पिबेत् । ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव प्रमादतः ॥ ब्रह्मकूर्चोपवासेन द्विजातीनां तु निष्कृतिः ॥ शूद्रस्य चोपवासेन तथा दानेन शक्तितः" इति । **पराशरो**क्तं वेदितव्यम् । कामातस्तु द्विगुणम् । "अन्त्यजैः खानिताः कूपास्तडागो वाप्य एव वा । एषु स्नात्वा च पीत्वा च प्राजापत्येन शुध्यतीति" **आपस्तम्बोक्त**मभ्यासविषयं वेदितव्यम् । **यत्त्वापस्तम्बेन** चाण्डालकूपादिजलपानं पञ्चगव्यमात्रमुक्तम् "प्रपास्वरण्ये ५ घटके च संरे द्रोण्यां जलं कोशाविनिर्गतं च । श्वपाकचाण्डालपरिग्रहेषु पीत्वा जलं पञ्चगव्येन शुध्येदिति" ॥ तदशक्तविषयम् । "प्रपां गतो विना तोयं शरीरं यो निषिञ्चति । एकाहक्षपणं कृत्वा सचैलं स्नानमाचरेत् ॥ सुराघटप्रपातोये पीत्वा नाद्यं जलं तथा । अहोरात्रोषितो भूत्वा पञ्चगव्यं जलं पिबेत्" ॥ इति ।

अथ भावदुष्टभक्षणे प्रायश्चित्तम् । भावदुष्टं च यद्वर्णत आकारतो वा विसदृशतया जुगुप्सित- १० शारीरमलादिवासनां जनयति तदुच्यते । अरिप्रयुक्तगरलादिशङ्कां वा । तत्र **पराशरः** । "वाग्दुष्टं भावदुष्टं च भाजने भावदूषिते । भुक्त्वाऽन्नं ब्राह्मणः पश्चात्त्रिरात्रेण विशुध्यतीति" । एतत्कामकारविषयम् । यत्तु **गौतमेन** भावदुष्टं केवलमित्यादि प्राक्पञ्चनखेभ्यः पठितत्वात्प्रायश्चित्तमुक्तम् ( अ. २३ सू. २६ ) । 'प्राक् पञ्चनखेभ्यश्छर्दनं घृतप्राशनं चेति' तदकामविषयम् ॥ **शङ्कायां** तु ।

"शङ्कास्थाने समुत्पन्ने अभोज्याभक्ष्यसंज्ञिते । आहारशुद्धिं वक्ष्यामि तन्मे निगदतः शृणु । १५

"अक्षारलवणां रूक्षां पिबेद्ब्राह्मीं सुवर्चलाम् । त्रिरात्रं शङ्खपुष्पीं वा ब्राह्मणः पयसा सह ॥

"पलाशबिल्वपत्राणि कुशान्पद्ममुदुम्बरम् । अपः पिबेत्क्वाथयित्वा त्रिरात्रेण विशुध्यतीति"

**वसिष्ठोक्तं** ( अ. २७।१०–१२ ) द्रष्टव्यम् । **मनुना**ऽप्यभोज्यभोजनशङ्कायामुक्तम् । ( अ. ५ श्लो. २१ ) "संवत्सरस्यैकमपि चरेत्कृच्छ्रं द्विजोत्तमः । अज्ञातभुक्तशुद्ध्यर्थं ज्ञातस्य तु विशेषतः" इति ॥ २०

अथ कालदुष्टभक्षणे प्रायश्चित्तम् । कालदुष्टं च पर्युषितानिर्दशगोक्षीरादि । तत्र चाकामतः 'शेषेषूपवसेदहरिति' **मनूक्तं** ( अ ५।२० ) वेदितव्यम् । कामतस्तु । "केवलानि च शुक्तानि तथा पर्युषितं च यत् । ऋजीषपक्वं भुक्त्वा च त्रिरात्रं तु व्रती भवेदिति" **शङ्खोक्तं** वेदितव्यम् । केवलान्यस्नेहाक्तानि । अनिर्दशगोक्षीरादिषु प्रायश्चित्तं प्राक् प्रदर्शितम् । नवोदकपाने तु पञ्चगव्यप्राशनम् । "शृङ्गास्थिदन्तजैः पात्रैः शङ्खशुक्तिकपर्दकैः । पीत्वा नवोदकं चैव पञ्चगव्येन शुध्यतीति" **बृहद्या- २५ ज्ञवल्क्य**स्मरणात् ॥ कामतस्तूपवासः कर्तव्यः । "काले नवोदकं शुद्धं न पिबेच्च त्र्यहं हि तत् । अकाले तु दशाहं स्यात्पीत्वा नाद्यादहर्निशमिति" **स्मृत्यन्तर**दर्शनात् । ग्रहणकालभोजने तु चान्द्रायणम् । 'नवश्राद्धं ग्रामयाजकान्नं संग्रहभोजनम् । नारीणां प्रथमे गर्भे भुक्त्वा चान्द्रायणं चरे-' **शातातप**स्मरणात् ॥ यदा तु संग्रहादन्यत्र निषिद्धकाले भुंक्ते,—यथाह **मार्कण्डेयः**—

"चन्द्रस्य यदि वा भानोर्यस्मिन्नहनि भार्गव । ग्रहणं तु भवेत्तस्मिन्न पूर्वं भोजनक्रिया ॥ ३०

"नाचरेत्सग्रहे चैव तथैवास्तमुपागते । यावत्स्यान्नोदयस्तस्य नाश्नीयात्तावदेव तु ॥"

तथा । "ग्रहणं तु भवेदिन्दोः प्रथमादधियामतः । भुञ्जीतावर्तनात्पूर्वं प्रथमे प्रथमादधः ॥"

तथा। "अपराह्णे न मध्याह्ने सायाह्ने न तु सङ्गवे। भुञ्जीत सङ्गवे चेत्स्यान्न पूर्वं भोजनक्रियेति"। यच्च **मनु**नोक्तम्। " नाश्नीयात्संधिवेलायां नातिप्रगे नातिसायमित्येवमादि" यच्च **बृहच्छातातपे**नोक्तम्। "धाना दधि च सक्तूंश्च श्रीकामो वर्जयेन्निशि। भोजनं तिलसंबद्धं स्नानं चैव विचक्षणः" इति। एवमादिष्वनादिष्टप्रायश्चित्तेषु " प्राणायामशतं कार्यं सर्वपापापनुत्तये। उपपातक-५ जातानामनादिष्टस्य चैवहीति" **योगीश्वरोक्तं** (अग्रे ३०६ श्लो.) प्राणायामशतं द्रष्टव्यम्॥ अकामतस्तु 'शेषेषूपवसेदहरिति' **मनू**क्तोपवासो द्रष्टव्यः॥

अथ गुणदुष्टशुक्तादिभक्षणे प्रायश्चित्तम्। तत्र च **मनुः** (अ. ११ श्लो. १५३) " शुक्तानि च कषायांश्च पीत्वाऽमेध्यान्यपि द्विजः। तावद्भवत्यप्रयतो यावत्तन्न व्रजत्यधः" इति। अत्राकामतः 'शेषेषूपवसेदहरि'त्युपवासो द्रष्टव्यः। कामतस्तु " केवलानि च शुक्तानि तथा पर्यु-१० षितं च यत्। ऋचीषपक्वं भुक्त्वा च त्रिरात्रं तु व्रती भवेदि"ति **शङ्ख**स्मरणात्। एतच्चामलकादि-फलयुक्तकाञ्जिकादिव्यतिरेकेण द्रष्टव्यम्। " कुण्डिका सफला येषु गृहेषु स्थापिता भवेत्। तस्यास्तु काञ्जिका ग्राह्या नेतरस्याः कदाचनेति" स्मरणात्॥ उद्धृतस्नेहादिषु तु 'उद्धृतस्नेहाविलयनपिण्याक-माथितप्रभृतीनि चात्तवीर्याणि नाश्नीयादि'त्युक्त्वा, 'प्राक्पञ्चनखेभ्यश्छर्दनं घृतप्राशनं चेति' **गौतमो**क्तं (अ. २३ सू. २६) द्रष्टव्यम्। विलयनं घृतादिमलम्। अहुताद्यन्नभोजने तु **लिखित**

१५ आह। " यस्य चाग्नौ न क्रियते यस्य चान्नं न दीयते। न तद्भोज्यं द्विजातीनां भुक्त्वा चोपवसेदहः॥ वृथाकृसरसंयावपायसापूपशष्कुलीः। आहिताग्निर्द्विजो भुक्त्वा प्राजापत्यं समाचरेदिति"॥ अनाहिताग्नेस्तु 'शेषेषूपवसेदहरि'त्युपवासो द्रष्टव्यः॥ भिन्नभाजनादिषु भोजने **संवर्ते**नोक्तम्। " शूद्राणां भाजने भुक्त्वा भुक्त्वा वा भिन्नभाजने। अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यतीति"॥ तथा **स्मृत्यन्तरे**ऽप्युक्तम्। " वटार्काश्वत्थपत्रेषु कुम्भीतिन्दुकपत्रयोः। कोविदारकदम्बेषु भुक्त्वा २० चान्द्रायणं चरेदिति"। तथा। " पलाशपद्मपत्रेषु गृही भुक्त्वैन्दवं चरेत्। वानप्रस्थो यतिश्चैव लभते चान्द्रिकं फलमिति"॥

अथ हस्तदानादिक्रियादुष्टाभोज्यभक्षणे प्रायश्चित्तम्। तत्र **पराशरः**। " माक्षिकं फाणितं शाकं गोरसं लवणं घृतम्। हस्तदत्तानि भुक्त्वा तु दिनमेकमभोजनमिति"। कामतस्तु। 'हस्तदत्त-भोजने अब्राह्मणसमीपे भोजने दुष्टपङ्क्तिभोजने पङ्क्त्यग्रतो भोजनेऽभ्यक्तमूत्रपुरीषकरणे मृतसूतकशूद्रान्न-२५ भोजने शूद्रैः सह स्वप्ने त्रिरात्रमभोजनमिति' **हारीतो**क्तं विज्ञेयम्। पर्यायाचदानदुष्टे तु 'ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददत्। द्वयमेतदभोज्यं स्याद्भुक्त्वा तूपवसेदहरिति' **वृद्धयाज्ञवल्क्यो**-क्तमवगन्तव्यम्। शूद्रहस्तभोजने तु। "शूद्रहस्तेन यो भुङ्क्ते पानीयं वा पिबेत्कचित्। अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यतीति" **क्रतू**क्तं विज्ञेयम्। धमनदुष्टेऽपि। " आसनारूढपादो वा वस्त्रार्ध-प्रावृतोऽपि वा। मुखेन धमितं भुक्त्वा कृच्छ्रं सान्तपनं चरेदिति" **तेनै**वोक्तम्। पित्राद्युद्देशेन ३० त्यक्तान्नभोजने तु।

"भुङ्क्ते चेत्पार्वणश्राद्धे प्राणायामान्षडाचरेत्। उपवासस्त्रिमासादिवत्सरान्तं प्रकीर्तितः॥
"प्राणायामत्रयं वृद्धावहोरात्रं सपिण्डने। असरूपे स्मृतं नक्तं व्रतपारणके तथा॥
"द्विगुणं क्षत्रियस्यैतत्रिगुणं वैश्यभोजने। साक्षाच्चतुर्गुणं ह्येतत्स्मृतं शूद्रस्य भोजने॥

"अतिथौ तिष्ठति द्वारि ह्यपः प्राश्नन्ति ये द्विजाः । रुधिरं तद्भवेद्वारि भुक्त्वा चान्द्रायणं चरेदिति" **भारद्वाज**ोक्तमवगन्तव्यम् । **हारीते**नाप्युक्तम् । "एकादशाहे भुक्त्वाऽन्नं भुक्त्वा संचयने तथा । उपोष्य विधिवत्स्नात्वा कूष्माण्डैर्जुहुयाद्घृतमिति" । **विष्णु**नाऽप्युक्तम् । "प्राजापत्यं नवश्राद्धे पादोनं चाद्यमासिके । त्रैपक्षिके तदर्धं तु पञ्चगव्यं द्विमासके" इति । इदं चापद्विषयम् ॥ अनापदि तु । "चान्द्रायणं नवश्राद्धे प्राजापत्यं तु मिश्रके । एकाहस्तु पुराणेषु प्राजापत्यं विधीयते" इति **हारीत**ोक्तं द्रष्टव्यम् । 'प्राजापत्यं तु मिश्रके' इत्येतदाद्यमासिकविषयं द्रष्टव्यम् । द्वितीयादिषु तु । "प्राजापत्यं नवश्राद्धे पादोनं चाद्यमासिके । त्रैपक्षिके तदर्धं स्यात्पादो द्वैमासिके तथा ॥ पादोनकृच्छ्रं निर्दिष्टं षण्मासे च तथाब्दिके । त्रिरात्रं चान्यमासेषु प्रत्यहं चेदहः स्मृतमिति" **षट्त्रिंशन्मत**ोक्तं द्रष्टव्यम् ॥ क्षत्रियादिश्राद्धभोजने त्वनापदि तत्रैव विशेष उक्तः ।

"चान्द्रायणं नवश्राद्धे पराको मासिके स्मृतः । त्रैपक्षिके सान्तपनं कृच्छ्रो मासद्वये स्मृतः ॥
"क्षत्रियस्य नवश्राद्धे व्रतमेतदुदाहृतम् । वैश्यस्यार्धाधिकं प्रोक्तं क्षत्रियात्तु मनीषिभिः ॥
"शूद्रस्य तु नवश्राद्धे चरेच्चान्द्रायणद्वयम् । सार्धं चान्द्रायणं मासे त्रिपक्षे त्वैन्दवव्रतम् ॥
"मासद्वये पराकः स्यादूर्ध्वं सान्तपनं स्मृतम् ॥"

यत्तु **शङ्ख**वचनम् । "चान्द्रायणं नवश्राद्धे पराको मासिके स्मृतः । पक्षत्रयेऽतिकृच्छ्रः स्यात्षण्मासे कृच्छ्र एव तु ॥ आब्दिके पादकृच्छ्रः स्यादेकाहः पुनराब्दिके । अत ऊर्ध्वं न दोषः स्याच्छङ्खस्य वचनं यथेति" । तत्सर्पादिहतविषयं । "ये स्तेनाः पतिताः क्लीबा" इत्याद्यपाङ्क्त्यविषयं वा ॥ "चाण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि । दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम् ॥ पतनानाशकैश्चैव विषोद्बन्धनकैस्तथा । भुक्त्वैषां षोडशश्राद्धे कुर्यादिन्दुव्रतं द्विजः" इति । तथा । "अपाङ्क्त्यान्यदुद्दिश्य श्राद्धमेकादशेऽहनि । ब्राह्मणस्तत्र भुक्त्वाऽन्नं शिशुचान्द्रायणं चरेदिति" । "आमश्राद्धे तथा भुक्त्वा तप्तकृच्छ्रेण शुध्यति । संकल्पिते तथा भुक्त्वा त्रिरात्रं क्षपणं भवेदिति" **भारद्वाजेन** गुरुप्रायश्चित्ताभिधानात् ॥

ब्रह्मचारिषु **बृहद्यमो** विशेषमाह । "मासिकादिषु योऽश्नीयादसमाप्तव्रतो द्विजः । त्रिरात्रमुपवासोऽस्य प्रायश्चित्तं विधीयते ॥ प्राणायामत्रयं कृत्वा घृतं प्राश्य विशुध्यतीति" । इदमज्ञानविषयम् । कामतोऽपि स एवाह । "मधु मांसं च योऽश्नीयाच्छ्राद्धं सूतकमेव वा । प्राजापत्य चरेत्कृच्छ्रं व्रतशेषं समापयेदिति" । आमश्राद्धे तु सर्वत्रार्धम् । "आमश्राद्धे तदर्धं तु प्राजापत्यं तु सर्वदेति" **षट्त्रिंशन्मते**ऽभिधानात् ॥ यत्तु **शनसो**क्तम् । "दशकृत्वः पिबेच्चापो गायत्र्या श्राद्धभुग्द्विजः । ततः संध्यामुपासीत शुद्ध्येत्तु तदनन्तरमिति" तदनुक्तप्रायश्चित्तश्राद्धविषयम् ॥

संस्काराङ्गभूतश्राद्धभोजने तु **व्यासेन** विशेष उक्तः । "निवृत्तचूडाहोमे तु प्राङ्नामकरणात्तथा । चरेत्सान्तपनं भुक्त्वा जातकर्मणि चैव हि ॥ अतोऽन्येषु तु भुक्त्वाऽन्नं संस्कारेषु द्विजोत्तमः । नियोगादुपवासेन शुध्यते निन्द्यभोजन" इति ॥ सीमन्तोन्नयनादिषु पुन**र्धौम्यः** विशेषमाह । "ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा । जातश्राद्धे नवश्राद्धे द्विजश्चांद्रायणं चरेदिति" । अत्र ब्रह्मौदनाख्यं कर्म यज्ञाङ्गभूतं सोमसाहचर्यात् ॥

अथ परिग्रहाभोज्यभोजने प्रायश्चित्तम् । यत्स्वरूपतोऽनिषिद्धमपि विशिष्टपुरुषस्वामिकतयाऽभोज्यं भण्यते तत्परिग्रहाशुचि । तत्र **योगीश्वरेण** 'अदत्तास्यग्निहीनस्य नान्नमद्यादनापदी'त्यारभ्य सार्धपञ्चभिः श्लोकैरभोज्यान्नाः प्रतिपादिताः । **मनुना**ऽपि त एव किंचिदधिकाः प्रतिपादिताः (अ. ४ श्लो. २०५–२१७)

५ "नाश्रोत्रियतते यज्ञे ग्रामयाजिहुते तथा । स्त्रिया क्लीबेन च हुते भुञ्जीत ब्राह्मणः क्वचित् ॥
"मत्तक्रुद्धातुराणां तु न भुञ्जीत कदाचन । गणान्नं गणिकान्नं च विदुषां च जुगुप्सितम् ॥
"स्तेनगायकयोश्चान्नं तक्ष्णो वार्धुषिकस्य च । दीक्षितस्य कदर्यस्य बद्धस्य निगडस्य च ॥
"अभिशस्तस्य षण्ढस्य पुंश्चल्या दांभिकस्य च । चिकित्सकस्य मृगयोः क्रूरस्योच्छिष्टभोजिनः ॥
"उग्रान्नं सूतिकान्नं च पर्यायान्नमनिर्दशम् । अनर्चितं वृथामांसमवीरायाश्च योषितः ॥
१० "द्विषदन्नं नगर्यन्नं पतितान्नमवक्षुतम् । पिशुनानृतिनोश्चैव क्रतुविक्रयिणस्तथा ॥
"शैलूषतन्तुवायान्नं कृतघ्नस्यान्नमेव च । कर्मारस्य निषादस्य रङ्गावतरणस्य च ।
"सुवर्णकर्तुर्वेणस्य शस्त्रविक्रयिणस्तथा ॥ श्ववतां शौण्डिकानां च चैलनिर्णेजकस्य च ॥
"रजकस्य नृशंसस्य यस्य चोपपतिर्गृहे ॥ मृष्यन्ति ये चोपपतिं स्त्रीजितानां च सर्वशः ॥
"अनिर्दशं च प्रेतान्नमतुष्टिकरमेव चेति" ॥
१५ अत्र च पदार्था अभक्ष्यकाण्डे श्राद्धकण्डे च व्याख्याताः ।

अत्र प्रायश्चित्तमाह । ( **मनुः** अ. ४ श्लो. २२२ ) "भुक्त्वाऽतोऽन्यतमस्यान्नममत्या क्षपणं त्र्यहम् । मत्या भुक्त्वा चरेत्कृच्छ्रं रेतो विण्मूत्रमेव चेति" । **पैठीनसिना**ऽप्यकामतस्त्रिरात्रमेवोक्तम् । 'कुनखी श्यावदन्तः पित्रा विवदमानः स्त्रीजितः कुष्ठी पिशुनः सोमविक्रयी वाणिजको ग्रामयाजकोऽभिशस्तो वृषल्यामभिजातः परिवित्तिः परिविन्दानो दिधिषूपतिः पुनर्भूपुत्रश्चोरः काण्डपृष्ठः
२० सेवकश्चेत्यभोज्यान्ना अपाङ्क्त्या अश्राद्धार्हाः एषां भुक्त्वा दत्वा वाऽविज्ञानात्त्रिरात्रमिति' ॥ **शङ्खेन** त्वेतानेव किंचिदधिकान्पठित्वा चान्द्रायणमुक्तं तदभ्यासविषयम् ॥ **गौतमेन** पुन'रुच्छिष्टपुंश्चल्यभिशस्ते'त्यादिना अभोज्यान्पठित्वा (अ.१७सू.१७) 'प्राक्पञ्चनखेभ्यश्छर्दनं घृतप्राशनं चेति' प्रायश्चित्तमुक्तं ( अ. २३ सू. २६ ) तदापद्विषयम् ॥ यस्तु बलात्कारेण भुज्येत त**स्यापस्तम्बेन** विशेष उक्तः ।

"बलाद्दासीकृता ये तु म्लेच्छचाण्डालदस्युभिः । अशुभं कारिताः कर्म गवादिप्राणिहिंसनम् ॥
२५ "उच्छिष्टमार्जनं चैव तथोच्छिष्टस्य भोजनम् ॥ खरोष्ट्रविड्वराहाणामामिषस्य च भक्षणम् ॥
"तत्स्त्रीणां च तथा सङ्गस्ताभिश्च सह भोजनम् । मासोषिते द्विजातौ तु प्राजापत्यं विशोधनम् ॥
"चान्द्रायणं त्वाहिताग्नेः पराकस्त्वथवा भवेत् । चान्द्रायणं पराकं च चरेत्संवत्सरोषितः ॥
"संवत्सरोषितः शूद्रो मासार्धं यावकं पिबेत् । मासमात्रोषितः शूद्रः कृच्छ्रपादेन शुध्यति ॥
"ऊर्ध्वं संवत्सरात्कल्प्यं प्रायश्चित्तं द्विजोत्तमैः । संवत्सरैस्त्रिभिश्चैव तद्भावं स निगच्छति" ॥ इति

३० आशौचिपरिगृहीतान्नभोजने तु **च्छागल** आह । "अज्ञानाद्भोजने विप्राः सूतके मृतकेऽपि वा ॥ प्राणायामशतं कृत्वा शुध्यन्ते शूद्रसूतके ॥ वैश्ये षष्टिभिर्वद्राज्ञि विंशतिर्ब्राह्मणे दश ।

१ आचारे १६०–१६५ श्लोकेषु.

एकाहं च त्र्यहं पञ्च सप्तरात्रमभोजनम् । ततः शुद्धिर्भवत्येषां पञ्चगव्यं पिबेत्ततः " इति । ब्राह्मणादिक्रमेणैकाहत्र्यहादयो योज्याः । इदमकामविषयम् ॥ कामतस्तु **मार्कण्डेय** आह । " भुक्त्वा तु ब्राह्मणाशौचे चरेत्सान्तपनं द्विजः ॥ भुक्त्वा तु क्षत्रियाशौचे तप्तकृच्छ्रो विधीयते ॥ वैश्याशौचे तथा भुक्त्वा महासान्तपनं चरेत् । शूद्रस्यैव तथा भुक्त्वा त्रिमासान्व्रतमाचरेत् ॥ " यत्तु **शङ्खे**नोक्तम् । " शूद्रस्य सूतके भुक्त्वा षण्मासान्व्रतमाचरेत् । वैश्यस्य तु तथा भुक्त्वा त्रीन् मासान्व्रतमाचरेत् ॥ ५ " क्षत्रियस्य तथा भुक्त्वा द्वौ मासौ व्रतमाचरेत् । ब्राह्मणस्य तथाऽऽशौचे भुक्त्वा मासं व्रती भवेदिति"॥ इदमभ्यासविषयम् । एतच्च प्रायश्चित्तमाशौचानन्तरं वेदितव्यम् । 'ब्राह्मणादीनामाशौचे यः सकृदेवान्नमश्नाति तस्य तावदाशौचं यावत्तेषमाशौचव्यपगमे तु प्रायश्चित्तं कुर्यादिति ' **विष्णु**स्मरणात् ॥

अपुत्राद्यन्नभोजने तु **लिखित** आह । " भुक्त्वा वार्धुषिकस्यान्नमव्रतस्यासुतस्य च । शूद्रस्य १० च तथा भुक्त्वा त्रिरात्रं स्यादभोजनम् " । तथा । "परपाकनिवृत्तस्य परपाकरतस्य च । अपचस्य तु भुक्त्वाऽन्नं द्विजश्चान्द्रायणं चरेत्" इति ॥ एतच्चाभ्यासविषयम् ॥ परपाकेन निवृत्तादेर्लक्षणं च तेनैवोक्तम् ।

"गृहीत्वाऽग्निं समारोप्य पञ्चयज्ञान्न निर्वपेत् । परपाकनिवृत्तोऽसौ मुनिभिः परिकीर्तितः ॥

"पञ्चयज्ञांस्तु यः कृत्वा परान्नादुपजीवति । सततं प्रातरुत्थाय परपाकरतस्तु सः ॥

"गृहस्थधर्मवृत्तौ यो ददातिपरिवर्जितः । ऋषिभिर्धर्मतत्त्वज्ञैरपचः संप्रकीर्तितः " इति ॥ यत्तु १५ ब्रह्मचार्याद्यन्नभोजने **वृद्धयाज्ञवल्क्य** आह । " यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ । तयोरन्नं न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेदिति " ॥ यत्तु पार्वणश्राद्धायकर्तुरन्नभोजने **भरद्वाज** आह । " पक्षे वा यदि वा मासे यस्य नाश्नन्ति देवताः ॥ भुक्त्वा दुरात्मनस्तस्य द्विजश्चान्द्रायणं चरेदिति " तदुभयमप्यभ्यासविषयम् ॥ पूर्वपरिगणितातिरिक्ता ये निषिद्धाचरणशीलास्तदन्नभोजने तु " निराचारस्य विप्रस्य निषिद्धाचरणस्य च । अन्नं भुक्त्वा द्विजः कुर्याद्दिनमेकमभोजनमिति " **षट्त्रिंशन्मत**तोक्तं २० द्रष्टव्यम् । अत्रैव संवत्सराभ्यासे **षट्त्रिंशन्मत** एवोक्तम् । " उपपातकयुक्तस्य अब्दमेकं निरन्तरम् । अन्नं भुक्त्वा द्विजः कुर्यात्पराकं तु विशोधनमिति " । इदं चाभक्ष्यभक्षणप्रायश्चित्तकाण्डगतविशेषादितव्रतकदम्बकं द्विजाग्र्यस्यैव । क्षत्रियादीनां तु पादपादहान्या भवति । " विप्रे तु सकलं देयं पादोनं क्षत्रिये स्मृतम् । वैश्येऽर्धं पाद एकस्तु शूद्रजातिषु शस्यत " इति **विष्णु**स्मरणात् ॥

इत्यभक्ष्यभक्षणप्रायश्चित्तप्रकरणम् । २५

निमित्तपरिगणनवेलायामुपपातकानन्तरं जातिभ्रंशकरादीनि परिगणितानि तत्र प्रायश्चित्तान्युच्यन्ते । तत्र **मनुः** । ( अ. ११ श्लो. १२४।१२५ ) "जातिभ्रंशकरं कर्म कृत्वाऽन्यतममिच्छया । चरेत्सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया ॥ संकरापात्रकृत्यासु मासं शोधनमैन्दवम् । मलिनीकरणीयेषु तप्तः स्याद्यावकत्र्यहमिति" । अन्यतममिति सर्वत्र संबध्यते । **यमे**नाप्यत्र विशेष उक्तः । "संकरीकरणं कृत्वा मासमश्नाति यावकम् । कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तं समाचरेत् ॥ अपात्रीकरणं कृत्वा तप्तकृच्छ्रेण शुध्यति । ३० शीतकृच्छ्रेण वा शुद्धिर्महासान्तपनेन वा ॥ मलिनीकरणीयेषु तप्तकृच्छ्रं विशोधनमिति " ॥ **बृहस्पतिना**ऽपि जातिभ्रंशकरे विशेष उक्तः । " ब्राह्मणस्य रुजः कृत्वा रासभादिप्रमापणम् । निन्दि-

तेभ्यो धनादानं कृच्छ्रार्धं व्रतमाचरेदिति ''। एतेषां च जातिभ्रंशकरादिप्रायश्चित्तानां **मन्वाद्यु**क्तानां जातिशक्त्याद्यपेक्षया विषयो विभजनीयः ॥ २९० ॥

एवं योगीन्द्रहृद्गतमभक्ष्यभक्षणादिप्रायश्चित्तं संक्षेपतो दर्शितम् ॥ अधुना प्रकृतमनुसरामः ।

महापातकमतिपातकमनुपातकमुपपातकं प्रकीर्णकमिति पञ्चविधं पापजातमुक्तम् । तत्र
५ चतुर्विधप्रायश्चित्तमभिधाय क्रमप्राप्तं प्रकीर्णकप्रायश्चित्तमाह

**प्राणायामी जले स्नात्वा खरयानोष्ट्रयानगः ।**
**नग्नः स्नात्वा च भुक्त्वा च गत्वा चैव दिवा स्त्रियम् ॥ २९१ ॥**

खरयुक्तं यानं **खरयानम्** । उष्ट्रयुक्तं यानमु**ष्ट्रयानं** रथगन्त्र्यादि तेनाध्वगमनं कृत्वा दिगम्बरः स्नात्वाऽभ्यवहृत्य दिवा वासरे च निजाङ्गनासंभोगं कृत्वा च तडागतरङ्गिण्यादाववगाह्य कृत-
१० प्राणायामः शुध्यति । इदं च कामकारविषयम् । '' उष्ट्रयानं समारुह्य खरयानं तु कामतः । सवासा जलमाप्लुत्य प्राणायामेन शुध्यतीति '' **मनु**स्मरणात् ( अ. ११ श्लो. २०१ ) । अकामतः स्नानमात्रं कल्प्यम् । साक्षात्खरारोहणे तु द्विगुणावृत्तिः कल्पनीया । तस्य गुरुत्वात् ॥ २९१ ॥

**गुरुं हुङ्कृत्य त्वङ्कृत्य विप्रं निर्जित्य वादतः ।**
**बध्वा वा वाससा क्षिप्रं प्रासाद्योपवसेद्दिनम् ॥ २९२ ॥**

१५ किंच । **गुरुं** जनकादिकं । **त्वंकृत्य** त्वमेवमात्थ त्वयैवं कृतमित्येकवचनान्तयुष्मच्छब्दोच्चारणेन निर्भर्त्स्य । **विप्रं** वा ज्यायांसं समं कनीयांसं वा सक्रोधं 'हुं' तूष्णीमास्व, 'हुं' मा बहुवादीरित्येवमाक्षिप्य जल्पवितण्डाभ्यां जयफलाभ्यां **विप्रं निर्जित्य** कण्ठे **वाससा** मृदुस्पर्शेनापि **बध्वा क्षिप्रं** पादप्रणिपातादिना **प्रसाद्य** क्रोधं त्याजयित्वा **दिनमुपवसेत्** । अनश्नन्कृत्स्नं वासरं नयेत् ॥ यत्तु **यमे**नोक्तम् । '' वादेन ब्राह्मणं जित्वा प्रायश्चित्तविधित्सया । त्रिरात्रोपोषितः स्नात्वा प्रणिपत्य
२० प्रसादयेदिति '' तदभ्यासविषयम् ॥ २९२ ॥

किंचाह

**विप्रदण्डोद्यमे कृच्छ्रस्त्वतिकृच्छ्रो निपातने ।**
**कृच्छ्रातिकृच्छ्रोऽसृक्पाते कृच्छ्रोऽभ्यन्तरशोणिते ॥ २९३ ॥**

**विप्र**जिघांसया **दण्डाद्युद्यमे कृच्छ्रः** शुद्धिहेतुः । **निपातने** ताडने **अतिकृच्छ्रः** ।
२५ **असृक्पाते** रुधिरस्रावे पुनः **कृच्छ्रातिकृच्छ्रः** । **अभ्यन्तरशोणिते**ऽपि **कृच्छ्रः** शुद्धिहेतुः ॥ **बृहस्पतिना**ऽप्यत्र विशेष उक्तः । '' काष्ठादिना ताडयित्वा त्वग्भेदे कृच्छ्रमाचरेत् । अस्थिभेदेऽतिकृच्छ्रः स्यात्पराकस्त्वङ्गकर्तने '' इति । पादप्रहारे तु **यम** आह । '' पादेन ब्राह्मणं स्पृष्ट्वा प्रायश्चित्तविधित्सया । दिवसोपोषितः स्नात्वा प्रणिपत्य प्रसादयेदिति '' ॥ **मनुना** त्वन्यानि प्रकीर्णकप्रायश्चित्तानि दर्शितानि । ( अ. ११ श्लो. २०२ ) '' विनाऽद्भिरप्सु वाऽप्यार्तः शारीरं संनिषेव्य

तु । सचैलो बहिराप्लुत्य गामालभ्य विशुध्यतीति " । विनाऽद्भिरित्यसंनिहितास्वपीत्यर्थः । शारीरं मूत्रपुरीषादि । इदमकामविषयम् । कामतस्तु " आपन्नतो विना तोयं शारीरं यो निषेवते । एकाहं क्षपणं कृत्वा सचैलो जलमाविशेदिति " **यमोक्तं** वेदितव्यम् ॥ यत्तु **सुमन्तु**वचनम् । "अप्स्वग्नौ वा मेहतस्तप्तकृच्छ्रमिति " तदनार्तविषयमभ्यासविषयं वा ॥ नित्यश्रौतादिकर्मलोपे तु **मनु**राह ( अ. ११ श्लो. २०३ ) ' वेदोदितानां नित्यानां कर्मणां समतिक्रमे । स्नातकव्रतलोपे च प्रायश्चित्तमभोजनमिति ' । ५ श्रौतेषु दर्शपौर्णमासादिकर्मसु स्मार्तेषु वा नित्यहोमादिषु प्रतिपदोक्तेष्ट्यादिप्रायश्चित्तैरुपवासस्य समुच्चयः । स्नातकव्रतानि च "न जीर्णमलवद्वासा भवेच्च विभवे सती"त्येवमादीनि प्रागुक्तानि । स्नातकव्रतमधिकृत्य **क्रतु**नाऽप्युक्तम् । ' एतेषामाचाराणामेकैकस्य व्यतिक्रमे गायत्र्यष्टशतं जप्यं कृत्वा पूतो भवतीति ' ॥ पञ्चमहायज्ञाकरणे तु **बृहस्पति**राह । " अनिर्वर्त्य महायज्ञान्यो भुङ्क्ते प्रत्यहं गृही । अनातुरः सति धने कृच्छ्रार्धेन विशुध्यति ॥ आहिताग्निरुपस्थानं न कुर्याद्यस्तु पर्वणि । ऋतौ न गच्छेद्भार्यां वा १० सोऽपि कृच्छ्रार्धमाचरेदिति " ॥ द्वितीयादिभार्योपरमे तु **देवल** आह । " मृतां द्वितीयां यो भार्यां दहेद्वैतानिकाग्निभिः । जीवन्त्यां प्रथमायां तु सुरापानसमं हि तदिति " । स्वभार्याभिशंसने तु **यम** आह । " स्वभार्यां तु यदा क्रोधादगम्येति नरो वदेत् । प्राजापत्यं चरेद्विप्रः क्षत्रियो दिवसान्नव ॥ षड्रात्रं तु चरेद्वैश्यस्त्रिरात्रं शूद्र आचरेदिति " ॥ अस्नानभोजनादौ **हारीत** आह । " वहन्कमण्डलुं रिक्तमस्नातोऽश्नंश्च भोजनम् । अहोरात्रेण शुद्धिः स्याद्दिनजप्येन चैव हीति " ॥ १५

एकपङ्क्त्युपविष्टानां स्नेहादिना वैषम्येण दानादौ **यम** आह ।
"न पङ्क्त्यां विषमं दद्यान्न याचेत न दापयेत् । याचको दायको दाता न वै स्वर्गस्य गामिनः ॥
"प्राजापत्येन कृच्छ्रेण मुच्यते कर्मणस्ततः ॥ नदीसंक्रमहन्तुश्च कन्याविघ्नकरस्य च ।
"समे विषमकर्तुश्च निष्कृतिर्नोपपद्यते[1] ॥ त्रयाणामपि चैतेषां प्रत्यापत्तिस्तु मार्गताम् ।
"भैक्षलब्धेन चान्नेन द्विजश्चान्द्रायणं चरेदिति" । संक्रम उदकावतरणमार्गः । समे विषमकर्ता २० पूजादौ ॥

इन्द्रधनुर्दर्शनादावृष्य**शृङ्ग** आह । " इन्द्रचापं पलाशाग्निं यदन्यस्य प्रदर्शयेत् । प्रायश्चित्तमहोरात्रं धनुर्दण्डश्च दक्षिणा " ॥ पतितादिसंभाषणे तु **गौतम** आह ( अ. ७ सू. १७–१९ ) । " न म्लेच्छाशुच्यधार्मिकैः सह संभाषेत । संभाष्य पुण्यकृतो मनसा ध्यायेत् । ब्राह्मणेन सह वा संभाषेत तल्पान्नधनलाभवधे पृथग्वर्षाणीति " । भार्यान्नधनानां लाभस्य वधे विघ्नकरणे प्रत्येकं संवत्सरं २५ प्राकृतं ब्रह्मचर्यम् ॥ तथा । ब्रह्मसूत्रं विना विण्मूत्रोत्सर्गादौ **स्मृत्यन्तरे** प्रायश्चित्तमुक्तम् । " विना यज्ञोपवीतेन यद्युच्छिष्टो भवेद्द्विजः । प्रायश्चित्तमहोरात्रं गायत्र्यष्टशतं तु वा " । तत्र ऊर्ध्वोच्छिष्टे उपवासः, अध उच्छिष्टस्योदकपानादिषु गायत्रीजप इति व्यवस्था । अकामतस्तु । " पिबतो मेहतश्चैव भुञ्जतोऽनुपवीतिनः । प्राणायामत्रिकं षट्कं नक्तं च त्रितयं क्रमादिति" **स्मृत्यन्तरोक्तं** द्रष्टव्यम् ॥ भुक्त्वा शौचाचमनमकृतोत्थाने तु " यद्युत्तिष्ठत्यनाचान्तो भुक्त्वा वाऽनशनात्ततः । सद्यः स्नानं प्रकु- ३० र्वीत सोऽन्यथा पतितो भवेदिति " स्मृत्यन्तरोक्तं द्रष्टव्यम् ॥

१ निष्कृतिर्न विधीयते पाठान्तरम् ।

चौराद्युत्सर्गादौ **वसिष्ठ** आह।(२०।६) (अ.१९सू.४०–४३)'दण्डोत्सर्गे राजैकरात्रमुपवसेत्। त्रिरात्रं पुरोहितः। कृच्छ्रमदण्ड्यदण्डने पुरोहितः। त्रिरात्रं राजा। कुनखी श्यावदन्तश्च कृच्छ्रं द्वादशरात्रं चरित्वोद्धरेयातामिति '। उद्धरेयातां कुत्सितानां दन्तानां नखानां चोद्धरणं कुर्यातामित्यर्थः। स्तेनपतितादिपङ्क्तिभोजने तु **मार्कण्डेय** आह। " अपाङ्क्तेयस्य यः कश्चित्पङ्क्तौ भुङ्क्ते द्विजोत्तमः। अहोरात्रोषितो ५ भूत्वा पञ्चगव्येन शुध्यतीति "॥ नीलीविषये **त्वापस्तम्ब** आह।

"नीली रक्तं यदा वस्त्रं ब्राह्मणोऽङ्गेषु धारयेत्। अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति॥
"रोमकूपैर्यदा गच्छेद्रसो नील्यास्तु कस्यचित्। त्रिषु वर्णेषु सामान्यं तप्तकृच्छ्रं विशोधनम्॥
"पालनं विक्रयश्चैव तद्वृत्त्या चोपजीवनम्। पातकी च भवेद्विप्रस्त्रिभिः कृच्छ्रैर्व्यपोहति॥
"नीलीदारु यदा भिन्द्याद्ब्राह्मणस्य शरीरतः। शोणितं दृश्यते यत्र द्विजश्चान्द्रायणं चरेत्॥

१० "स्त्रीणां क्रीडार्थसंभोगे शयनीये न दुष्यतीति"॥ **भृगुणा**ऽप्युक्तम्। " स्त्रीधृता शयने नीली ब्राह्मणस्य न दुष्यति। नृपस्य वृद्धौ वैश्यस्य पर्ववर्ज्यं विधारणमिति "॥ तथा वस्त्रविशेषकृतश्च प्रतिप्रसवः।'कम्बले पट्टसूत्रे च नीलीरागो न दुष्यतीति' स्मरणात्॥ तरुनिर्मितखट्वारोहणे **शङ्ख** आह।

"अध्यस्य शयनं यानमासनं पादुके तथा। द्विजः पलाशवृक्षस्य त्रिरात्रं तु व्रती भवेत्॥
"क्षत्रियस्तु रणे पृष्ठं दत्वा प्राणपरायणः। संवत्सरं व्रतं कुर्याच्छित्त्वा वृक्षं फलप्रदम्॥

१५ "द्वौ विप्रौ ब्राह्मणाग्नी वा दम्पती गोद्विजोत्तमौ। अन्तरेण यदा गच्छेत्कृच्छ्रं सान्तपनं चरेत्॥
"होमकाले तथा दोहे स्वाध्याये दारसंग्रहे। अन्तरेण यदा गच्छेद्द्विजश्चान्द्रायणं चरेदिति"। दोहे सान्नाय्याद्यङ्गभूते। एतच्चाभ्यासविषयम्। सच्छिद्रादित्याद्यरिष्टदर्शनादौ **शङ्ख** आह। ' दुःस्वप्नारिष्टदर्शनादौ घृतं सुवर्णं च दद्यादिति'॥

क्वचिद्देशविशेषगमनेऽपि **देवल** आह। ' सिन्धुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः। अङ्ग-२० वङ्गकलिङ्गान्ध्रान् गत्वा संस्कारमर्हति "॥ एतच्च तीर्थयात्राव्यतिरेकेण द्रष्टव्यम्॥

स्वपुरीषदर्शनादौ **यम** आह। " प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत्। दृष्ट्वा सूर्यं निरीक्षेत गामग्निं ब्राह्मणं तथेति "॥ **शङ्खो**ऽप्याह। " पादप्रतपनं कृत्वा कृत्वा वह्निमधस्तथा। कुशैः प्रमृज्य पादौ तु दिनमेकं व्रती भवेदिति "॥ क्षत्रियाद्युपसंग्रहणे **हारीत** आह। ' क्षत्रियाभिवादनेऽहोरात्रमुपवसेत्। वैश्याभिवादने द्विरात्रम्। शूद्रस्याभिवादने त्रिरात्रमुपवासः' इति॥ तथा "शय्यारूढे पादुको-२५ पानच्छिरोपितपादोच्छिष्टान्धकारस्थश्राद्धकृज्जपदेवपूजानिरताभिवादने त्रिरात्रमुपवासः स्यादन्यत्र निमन्त्रितेनान्यत्र भोजनेऽपि त्रिरात्रमिति "। समित्पुष्पादिहस्तस्याभिवादनेऽप्येतदेव। "समित्पुष्पकुशाज्याम्बुमृदन्नाक्षतपाणिकम्। जपं होमं च कुर्वाणं नाभिवादेत वै द्विजमि"**त्यापस्तम्बीये** जपादिभिः समभिव्याहारात्। अभिवादकस्यापीदमेव प्रायश्चित्तम्॥ ' नोदकुम्भहस्तोऽभिवादयेत् न भैक्षं चरन्न पुष्पाज्यादिहस्तो नाशुचिर्न जपन्न देवपितृकार्यं कुर्वन्न शयानः ' इति तस्यापि **शङ्खेन** प्रतिषेधात्। ३० एवमन्यान्यपि वचांसि स्मृत्यन्तरतोऽन्वेष्याणि ग्रन्थगौरवभयादत्र न लिख्यन्ते॥ २९३॥

इति प्रकीर्णकप्रायश्चित्तप्रकरणम्।

निमित्तानामानन्त्यात्प्रतिव्यक्तिप्रायश्चित्तस्य वक्तुमशक्यत्वात्सामान्यत
उपदिष्टानुपदिष्टविषयं प्रायश्चित्तविशेषज्ञानार्थमिदमाह

**देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः ।**
**प्रायश्चित्तं प्रकल्प्यं स्याद्यत्र चोक्ता न निष्कृतिः ॥ २९४ ॥**

यदुक्तं प्रायश्चित्तजातं वक्ष्यमाणं वा तद्देशादिकमवेक्ष्य यथा कर्तुः प्राणविपत्तिर्न भवति तथा ५ विषयविशेषे कल्पनीयम् । इतरथा प्रधाननिवृत्तिप्रसङ्गात् । तथा वक्ष्यति । 'वायुभक्षो दिवा तिष्ठन्रात्रिं नीत्वाऽप्सु सूर्यदृगिति'[1] । तत्र यदि हिमवद्गिरिनिकटवर्तिनामुदकवास उपदिश्यते अतिशीताकुलिते वा शिशिरादिकाले तदा प्राणवियोगो भवेदिति तद्देशकालपरिहारेणोदकवासः कल्पनीयः । तथा वयोविशेषादपि यदि नवतिवार्षिकादेरपूर्णद्वादशवार्षिकस्य वा द्वादशाब्दिकं प्रायश्चित्तमुपदिश्यते तदा प्राणा विपद्येरन्निति ततोऽन्यवयस्के तत्प्रायश्चित्तं कल्प्यम् । अत एव स्मृत्यन्तरे 'क्वचिदर्धं क्वचि- १० त्पादः' इति वृद्धादिषु प्रायश्चित्तस्य ह्रासोऽभिहितः । तत्तु प्राक्प्रपञ्चितं । तथा धनदानतपश्चरणादिशक्त्यपेक्षया च न हि निर्धनस्य 'पात्रे धनं वा पर्याप्तमि'त्याद्युपपद्यते । तथोद्रिक्तपित्तादेर्वा पराकादिकं नापि स्त्रीशूद्रादेर्जपादिकं । अत एव गजादीनामशक्नुवन् 'दानं दातुं चरेत्कृच्छ्रमेकैकस्य विशुद्धये' इत्युक्तम् । तथा 'प्रायश्चित्तार्धमर्हन्ति स्त्रियो रोगिण एव चेति' तपस्यशक्तस्य स्मृत्यन्तरे प्राक् प्रायश्चित्तस्य ह्रासोऽभिहितः । पापं च महापातकादिरूपेण प्रत्ययाप्रत्ययसकृदभ्यासादिरूपेण वाऽवेक्ष्य १५ यत्नतः सकलधर्मशास्त्रपर्यालोचनया प्रायश्चित्तं कल्पनीयम् । तत्राकामतो यद्विहितं तदेव कामकृते द्विगुणं कामतोऽभ्यासे चतुर्गुणमित्येवं स्मृत्यन्तरानुसारेण कल्पनीयम् ।

तथा 'महापापोपपापाभ्यां योऽभिशंसेन्मृषा परम् । अब्भक्षो मासमासीते'त्युक्तं । तत्र महापापोपपापयोस्तुल्यप्रायश्चित्तस्यायुक्तत्वात्पापापेक्षयोपपातके मासिकव्रतस्य ह्रासः कल्पनीयः । तत्र च हसितजृम्भितास्फोटनानि नाकस्मात्कुर्यात्तथा । 'नोदन्वतोऽम्भसि स्नायान्न च श्मश्र्वादि कर्तयेत् । २० अन्तर्वत्न्याः पतिः कुर्वन्नप्रजा भवति ध्रुवमि'त्यादौ प्रायश्चित्तं नोपदिष्टं तत्रापि देशाद्यपेक्षया प्रायश्चित्तं कल्प्यम् ॥

ननु किंचिदपि निमित्तजातमनुक्तनिष्कृतिकमुपलभ्यते । "प्राणायामशतं कार्यं सर्वपापापनुत्तये । उपपातकजातानामनादिष्टस्य चैव ही"त्यनुक्तनिष्कृतिष्वपि प्रायश्चित्तस्य वक्ष्यमाणत्वात् ॥ **गौतमे**नापि 'एतान्येवानादेशे विकल्पेन क्रियेरन्नित्येकाहादयः' प्रतिपादिताः ( अ. १९ सू. १८ ) । २५ उच्यते । सत्यमस्त्येव सामान्यतः प्रायश्चित्तोपदेशस्तथापि सर्वत्र देशकालादीनामपेक्षितत्वादस्त्येव कल्पनावसरः । न च हसितादिषु सर्वत्र प्राणायामशतं युक्तम् । निमित्तस्य लघुत्वात् । अतः पापापेक्षया ह्रासः कल्पनीयः प्रायश्चित्तान्तरं वा ।

ननु कथं पापस्य लघुत्वं येन प्रायश्चित्तस्य ह्रासकल्पना स्यात् । तत्र प्रायश्चित्ताल्पत्वं वाच्यम् । अनुक्तनिष्कृतित्वादेव । सत्यम् । किंतु अर्थवादसंकीर्तनाद्बुद्धिपूर्वाबुद्धिपूर्वानुबन्धाद्यपेक्षया च सुबोध ३० एव दोषस्य गुरुलघुभावः । तथा दण्डह्रासवृद्ध्यपेक्षया च प्रायश्चित्तगुरुलघुभावः । यथा ब्राह्मणाव-

[1] अग्रे ३१२ श्लोके.

गोरणादौ सजातीयविषये प्राजापत्यादिकमुक्तम् । तत्र यदाऽऽनुलोम्येन प्रतिलोम्येन वाऽवगोरणादि क्रियते यदा वा मूर्धावसिक्तादिभिस्तदा दण्डस्य तारतम्यदर्शनाद्दोषाल्पत्वमहत्त्वावगमात्प्रायश्चित्तस्यापि गुरुलघुभावः कल्पनीयः। दर्शितश्च दण्डस्य गुरुलघुभावः 'प्रातिलोम्यापवादेषु द्विगुणास्त्रिगुणो दमः' इत्यादिना ॥ २९४ ॥

५ एवं महापातकादिभिः पतितस्य प्रायश्चित्तमुक्तं; यस्त्वौद्धत्यादेतन्न चिकीर्षति तस्य किं कार्यमित्यत आह

**दासीकुम्भं बहिर्ग्रामान्निनयेरन्स्वबान्धवाः ।**
**पतितस्य बहिः कुर्युः सर्वकार्येषु चैव तम् ॥ २९५ ॥**

जीवत एव पतितस्य ये ज्ञातयो बान्धवाः पितृमातृपक्षास्ते सर्वे संनिपत्य दासी प्रेष्या तया सपिण्डादिप्रेषितया आनीतमपां पूर्णं कुम्भं घटं ग्रामाद्बहिर्निनयेयुः । एतच्चतुर्थ्यादिरिक्तातिथिष्वह्नः पञ्चमे भागे गुर्वादिसंनिधौ कार्यम् । "पतितस्योदकं कार्यं सपिण्डैर्बान्धवैर्बहिः । निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधाविति" **मनु**स्मरणात् ॥ ( अ. ११ श्लो.१८२ )। अथवा दास्येव सपिण्डादिप्रयुक्ता निनयेत् । यथाह **मनुः** । ( अ. ११ श्लो. १८३ ) "दासी घटमपां पूर्णं पर्यस्येत्प्रेतवत्पदा । अहोरात्रमुपासीरन्नशौचं बान्धवैः सहेति" । प्रेतवदिति दक्षिणामुखापसव्ययोः प्राप्त्यर्थम् ।

१० पतितस्य घटस्फोटविधिः ।

१५ एतच्च निनयनं उदकपिण्डदानादिप्रेतक्रियोत्तरकालं द्रष्टव्यम् । 'तस्य विद्यागुरून् योनिसंबन्धाश्च संनिपत्य सर्वाण्युदकादीनि प्रेतकर्माणि कुर्युः । पात्रं चास्य विपर्यस्येयुः । दासः कर्मकरो वाऽवकरात् पात्रमानीय दासीघटान् पूरयित्वा दक्षिणाभिमुखः पदा विपर्यस्येदिदम् । अमुमनुदकं करोमीति नामग्राहं । तं सर्वेऽन्वालभेरन् प्राचीनावीतिनो मुक्तशिखाः । विद्यागुरवो योनिसंबन्धाश्च वीक्षेरन् । अप उपस्पृश्य ग्रामं प्रविशेयुरिति' **गौतम**स्मरणात् ( अ. २० सू. २–७ ) । अयं च त्यागो यदा बन्धुभिः २० प्रेर्यमाणोऽपि प्रायश्चित्तं न करोति तदा द्रष्टव्यः । 'तस्य गुरोर्बान्धवानां राज्ञश्च समक्षं दोषानभिख्याप्यानुभाष्य पुनः पुनराचारं लभस्वेति स यद्येवमप्यनवस्थितमतिः स्यात्ततोऽस्य पात्रं विपर्यस्येदिति' **शङ्ख**स्मरणात् । ततस्तं लब्धोदकं पतितं **सर्वकार्येषु** संभाषणसहासनादिषु **बहिः कुर्युः** वर्जयेयुः । तथा च **मनुः** (अ. ११ श्लो. १८४) । " निवर्तेरंस्ततस्तस्मात्संभाषणसहासने । दायाद्यस्य प्रदानं च यात्रामेव च लौकिकीमिति " ॥ यदा स्नेहादिना संभाषणं करोति तदा प्रायश्चित्तं कार्यम् । 'अत ऊर्ध्वं २५ तेन संभाष्य तिष्ठेदेकरात्रं जपन्सावित्रीमज्ञानपूर्वं । ज्ञानपूर्वं चेत्त्रिरात्रमिति' ( **गौतमीये** अ. २० सू. ८।९ ) ॥ २९५ ॥

यदा तु बन्धुत्यागादन्यथा वा जातवैराग्यः प्रायश्चित्तं च कृतं तदा किं कार्यमित्यत आह

**चरितव्रत आयाते निनयेरन्नवं घटम् ।**
**जुगुप्सेरन्न चाप्येनं संवसेयुश्च सर्वशः ॥ २९६ ॥**

१ व्यवहाराध्याये २०७ श्लोके.

कृतप्रायश्चित्ते बन्धुसमीपं पुनरायाते तत्सपिण्डायास्तेन सहिता नवं अनुपहतं घटं उदकपूर्णं निनयेयुः । एतच्च निनयनं पुण्यह्रदादिस्नानोत्तरं द्रष्टव्यम् । "प्रायश्चित्ते तु चरिते पूर्णं कुम्भमपां नवम् । तेनैव सार्धं प्रास्येयुः स्नात्वा पुण्ये जलाशये" इति **मनु**स्मरणात् ( अ. ११ श्लो.१८६ ) । **गौतमेन** तु विशेष उक्तः ( अ. २० सू. १०।१७) । 'यस्तु प्रायश्चित्तेन शुध्येत्तास्मिन् शुद्धे शात-कुम्भमयं पात्रं पुण्यतमात् ह्रदात्पूरयित्वा स्रवन्तीभ्यो वा तत एनमप उपस्पर्शयेयुः । अथास्मै तत्पात्रं दद्युस्त- ५ त्संप्रतिगृह्य जपेत् । 'शान्ता द्यौः शान्ता पृथिवी शान्तं शिवमन्तरिक्षं यो रोचनस्तमिह गृह्णामीति' । एतैर्यजुर्भिः पावमानीभिस्तरत्समन्दीभिः कूष्माण्डैश्चाज्यं ब्राह्मणाय जुहुयाद्धिरण्यं दद्याद्गां वाऽऽचार्याय । 'यस्य तु प्राणान्तिकं प्रायश्चित्तं स मृतः शुद्ध्येत् । एतदेव शान्त्युदकं सर्वेषूपपातकेष्विति' ॥ तत एनं कृतप्रायश्चित्तं ते नैव कुत्सयेयुः । तथा सर्वकार्येषु क्रयविक्रयादिषु तेन सह संव्यवहरेयुः ॥ २९६ ॥

पूर्वोक्तस्य पतितपरित्यागादिविधेरतिदेशमाह  १०

**पतितानामेष एव विधिः स्त्रीणां प्रकीर्तितः ।**
**वासो गृहान्तिके देय अन्नं वासः सरक्षणम् ॥ २९७ ॥**

य एव पुरुषाणां परित्यागे पिण्डोदकदानविधिः कृतप्रायश्चित्तानां परिग्रहविधिश्च स एव पति-तानां स्त्रीणामपि वेदितव्यः । इयांस्तु विशेषः । पतिताभ्योऽपि ताभ्यः स्त्रीभ्यः कृतोदकादिकर्मभ्यो वासस्तृणपर्णमयं कुटीगृहकं प्रधानगृहसमीपे देयम् । तथा प्राणधारणमात्रमन्नं मलिनं च वस्त्रं पुनः १५ पुरुषान्तरोपभोगनिवारणसहितं देयम् ॥ २९७ ॥

ननु काः पतितास्तां यासामयं परित्यागविधिरित्यत्र आह

**नीचाभिगमनं गर्भपातनं भर्तृहिंसनम् ।**
**विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम् ॥ २९८ ॥**

हीनवर्णगमनं गर्भपातनमब्राह्मण्या अपि भर्तुः अब्राह्मणस्यापि हिंसनमित्येतानि स्त्रीणामसाधा- २० रणानि पतननिमित्तानि । अपिशब्दात्पुरुषस्य यानि पतननिमित्तानि महापातकातिपातकानुपपातका-न्यभ्यस्तानि चोपपातकादीनि तान्यपि स्त्रीणां ध्रुवं निश्चितं पतनकारणानि भवन्ति । अत एव **शौनकः** । "पुरुषस्य यानि पतननिमित्तानि स्त्रीणामपि तान्येव । ब्राह्मणी हीनवर्णसेवायामधिकं पततीति" ॥ यत्तु **वसिष्ठे**नोक्तम् ( अ. २८ सू. ७ ) । "त्रीणि स्त्रियाः पातकानि लोके धर्मविदो विदुः । भर्तु-र्वधो भ्रूणहत्या स्वस्य गर्भस्य पातनामिति" । भ्रूणहत्याग्रहणं कृतं तत् दृष्टान्तार्थं न पुनरितरेषां महा- २५ पातकादीनां पतनहेतुत्वनिरासार्थम् । यदपि **तेनैव** ( अ. २१ सू. १० ) । "चतस्रस्तु परि-त्याज्याः शिष्यगा गुरुगा च या । पतिघ्नी च विशेषेण जुङ्गितोपगता च या" इति । 'चतसृणामेव परि-त्याग इत्युक्तं तस्यापि तासां प्रायश्चित्तमचिकीर्षन्तीनां मध्ये चतसृणामेव शिष्यगादीनां चैलान्नगृह-वासादिजीवनहेतुत्वाद्युच्छेदेन त्यागं कुर्यात्' नान्यासामित्यभिप्रायः । अतश्चान्यासां पतितानां प्राय-श्चित्तमकुर्वतीनामपि 'वासो गृहान्तिके देयं' इत्यादिकं कर्तव्यमित्यवगम्यते ॥ २९८ ॥  ३०

'जुगुप्सेरन्न चाऽप्येनं संविशेयुश्च सर्वशः' इत्यस्यापवादमाह

**शरणागतबालस्त्रीहिंसकान्संवसेन्न तु ।**
**चीर्णव्रतानपि सतः कृतघ्नसहितानिमान् ॥ २९९ ॥**

**शरणागता**दिव्यापादनकारिणः **कृतघ्नसहिता**न्प्रायश्चित्तेन क्षीणदोषानपि न संव्यवहरेदिति। ५ वाचनिकोऽयं प्रतिषेधः । किमिदं वचनं न कुर्यान्न हि वचनस्यातिभारोऽस्ति अतश्च यद्यपि व्यभिचारिणीस्त्रीवधेऽल्पीय एव प्रायश्चित्तं तथापि वाचनिकोऽयं संव्यवहारप्रतिषेधः ॥ २९९ ॥

एवं प्रसङ्गेन स्त्रीषु विशेषमभिधाय प्रकृत एव चरितव्रतविधौ विशेषमाह

**घटेऽपवर्जिते ज्ञातिमध्यस्थो यवसं गवाम् ।**
**प्रदद्यात्प्रथमं गोभिः सत्कृतस्य हि सत्क्रिया ॥ ३०० ॥**

१० **घटेऽपवर्जिते** ह्रदादुद्धृत्य पूर्णे कुम्भेऽवनिनीतेऽसौ चरितव्रतः सपिण्डादि**मध्यस्थो** गोभ्यो यवसं दद्यात् । ताभिः प्रथमं सत्कृतस्य पूजितस्य पश्चाज्ज्ञातिभिः सत्क्रिया कार्या। गोभिश्च तस्य सत्कारस्तद्दत्तयवसभक्षणमेव । यदि गावस्तद्दत्तं यवसं न गृह्णीयुस्तर्हि पुनः प्रायश्चित्तमनुतिष्ठेत् । यथाह **हारीतः** । ' स्वशिरसा यवसमादाय गोभ्यो दद्यात्यदि ताः प्रतिगृह्णीयुरथैनं प्रवर्तयेयुरिति ' । इतरथा नेत्यभिप्रेतम् ॥ ३०० ॥

१५ महापातकादिपञ्चविधेऽपि दोषगणे प्रातिस्विकव्रतसंदोहमभिधायाधुना सकलव्रतसाधारणं धर्ममाह

**विख्यातदोषः कुर्वीत पर्षदोऽनुमतं व्रतम् ।**

यद्दोषो यावत्कर्तृसंपाद्यस्ततोऽन्यैर्विख्यातो ज्ञातो दोषो यस्यासौ पर्षदुपदिष्टं व्रतं कुर्यात् । यद्यपि स्वयं सकलशास्त्रार्थविचारचतुरस्तथापि पर्षत्समीपमुपगम्य तया सह विचार्य तदनुमतमेव कुर्यात् । तदुपगमने **चाङ्गिरसा** विशेष उक्तः । " कृते निःसंशये पापे न भुञ्जीतानुपस्थितः । २० भुञ्जानो वर्धयेत्पापं यावन्नाख्याति पर्षदि ॥ सचैलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः । पर्षदानुमतस्तत्त्वं सर्वं विख्यापयेन्नरः ॥ व्रतमादाय भूयोऽपि तथा स्नात्वा व्रतं चरेदिति " ॥ विख्यापनं दक्षिणादानानन्तरं कार्यम् । यथाह **पराशरः** ।" पापं विख्यापयेत्पापी दत्वा धेनुं तथा वृषमिति" ।

एतच्चोपपातकविषयम् । महापातकादिष्वधिकं कल्प्यम् । यत्तूक्तम् । " तस्माद्द्विजः प्राप्तपापः सकृदाप्लुत्य वारिणि । विख्याय पापं पर्षद्भ्यः किंचिद्दत्वा व्रतं चरेदिति " तत्प्रकीर्णकविषयम् । २५ पर्षत्स्वरूपं च **मनुना** दर्शितम् ( अ. १२ श्लो. १११ ) । " त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः । त्रयश्चाश्रमिणः पूर्वे पर्षदेषा दशावरा " ॥ हैतुको मीमांसार्थादितत्त्वज्ञः । तर्की न्यायशास्त्रकुशलः । तथाऽन्यदपि पर्षद्द्वयं **तेनैव** दर्शितम् (अ.१२ श्लो.११२।११३) । "ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च । अपरा पर्षद्विज्ञेया धर्मसंशयनिर्णये " इति । तथा "एकोऽपि वेदविद्धर्मं यं व्यवस्येत्समाहितः । स ज्ञेयः परमो धर्मो नाज्ञानामुदितोऽयुतैरिति " । आसां च पर्षदां संभवापेक्षया ३० व्यवस्था महापातकाद्यपेक्षया वा ॥

यत्तु **स्मृत्यन्तरेऽभि**हितम् । " पातकेषु शतं पर्षत्सहस्रं महदादिषु । उपपापेषु पञ्चाशत्स्वल्पं स्वल्पे तथा भवेदिति " तदपि महापातकादिदोषानुसारेण पर्षदो गुरुलघुभावप्रतिपादनपरं न पुनः संख्यानियमार्थम् । मन्वादिमहास्मृतिविरोधप्रसङ्गात् ॥

तथा **देवलेन** चात्र विशेषो दर्शितः । " स्वयं तु ब्राह्मणा ब्रूयुरल्पदोषेषु निष्कृतिम् । राजा च ब्राह्मणाश्चैव महत्सु च परीक्षितमिति " ॥ तथा च पर्षदा अवश्यं व्रतमुपदेष्टव्यम् । " आर्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः । जानन्तो न प्रयच्छन्ति ते यान्ति समतां तु तैरि"**त्यङ्गिरः**स्मरणात् । तथा च पर्षदा ज्ञात्वैव व्रतमुपदेष्टव्यम् । "अज्ञात्वा धर्मशास्त्राणि प्रायश्चित्तं ददाति यः । प्रायश्चित्ती भवेत्पूतः किल्बिषं पर्षदं व्रजेदिति" **वसिष्ठ**स्मरणात् ॥ क्षत्रियादीनां तु कृतैनसां धर्मोपदेशे विशेषो**ऽङ्गिरसा** दर्शितः । "न्यायतो ब्राह्मणः क्षिप्रं क्षत्रियादेः कृतैनसः । अन्तरा ब्राह्मणं कृत्वा व्रतं सर्वं समादिशेत् ॥ तथा शूद्रं समासाद्य सदा धर्मपुरःसरम् । प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितमिति " । तत्र यागाद्यनुष्ठानशीलानां जपादिकं वाच्यम् । इतरेषां तु तपः । "कर्मनिष्ठास्तपोनिष्ठाः कदाचित्पापमागताः । जपहोमादिकं तेभ्यो विशेषेण प्रदीयते ॥ ये नामधारका विप्रा मूर्खा धनविवर्जिताः । कृच्छ्रचान्द्रायणादीनि तेभ्यो दद्याद्विशेषतः " ॥

इति प्रकाशप्रायश्चित्तप्रकरणम् ।

अथ रहस्यप्रायश्चित्तम् ।

" व्याख्याय ख्यातदुरितशान्तनीं व्रतसंततिम् । रहःकृताघसंदोहहारिणीं व्याहरन्मुनिः " ॥

तत्र प्रथमं सकलरहस्यव्रतसाधारणं धर्ममाह

## अनभिख्यातदोषस्तु रहस्यं व्रतमाचरेत् ॥ ३०१ ॥

कर्तृव्यतिरिक्तैरनभिख्यातो दोषो यस्यासौ रहस्यमप्रकाशं प्रायश्चित्तमनुतिष्ठेत् । अतः स्त्रीसंभोगादौ तस्या अपि कारकत्वात् तदितरैरविज्ञातदोषस्य रहस्यव्रतमिति मन्तव्यम् । अत्र यदि कर्ता स्वयं धर्मशास्त्रकुशलस्तथा परस्मिन्नविभाव्य स्वनिमित्तोचितं प्रायश्चित्तमनुतिष्ठेत् । यस्तु स्वयमनभिज्ञोऽसौ केनचिद्रहो ब्रह्महत्यादिकं कृतं तत्र किं रहस्यप्रायश्चित्तमित्यन्यव्याजेनावगम्य रहोव्रतमनुतिष्ठेत् । अत एव स्त्रीशूद्रयोरप्यमुनैव मार्गेण रहस्यव्रतज्ञानसिद्धेरधिकारासिद्धिः ।

न च वाच्यं रहस्यव्रतानां जपादिप्रधानत्वादविद्ययोश्च स्त्रीशूद्रयोस्तदनुपपत्तेरनाधिकार इति । यतोऽनैकान्ततो रहस्यव्रतानां जपादिप्रधानत्वम् । दानादेरप्युपदेशात् **गौतमो**क्तप्राणायामादेरपि संभवाच्च । इतरेषामपि मन्त्रदैवतार्षिच्छन्दःपरिज्ञानमात्रमेवाधिकारोपयोगि न त्वन्यस्यैव विषयम् । न हि तडागनिर्माणादौ ज्योतिष्टोमादिविषयिणी विप्रतिपत्तिरुपयुज्यते । देवतादिपरिज्ञानं त्ववश्यमपेक्षणीयम् । " अविदित्वा ऋषिं छन्दो दैवतं योगमेव च । योऽध्यापयेज्जपेद्वाऽपि पापीयाञ्जायते तु सः" इति **व्यास**स्मरणात् ॥ अत्राप्याहारविशेषानुक्तौ पयःप्रभृतयः कालविशेषानुक्तौ संवत्सरादयः देशविशेषानुक्तौ शिलोच्चयादयो **गौतमा**द्यभिहिताः ( अ. १९ सू. १४।१५ ) प्रकाशप्रायश्चित्तवदन्वेषणीयाः ॥३०१॥

एवं सकलरहस्यव्रतसाधारणधर्ममभिधाय प्रकाशप्रायश्चित्तवद्ब्रह्महत्यादिक्रमेणैव रहस्यप्रायश्चित्तान्याह

**त्रिरात्रोपोषितो जप्त्वा ब्रह्महा त्वघमर्षणम् ।**
**अन्तर्जले विशुध्येत दत्वा गां च पयस्विनीम् ॥ ३०२ ॥**

**त्रिरात्रमुपोषितोऽन्तर्जले**ऽघमर्षणेन महर्षिणा दृष्टं सूक्तं **अघमर्षणं** 'ऋतं च सत्यं चेति' तृचमानुष्टुभं भाववृत्तदेवताकं जप्त्वा त्रिरात्रान्ते **पयस्विनीं गां दत्वा ब्रह्महा विशुध्यति ।** जपश्चान्तर्जले निमग्नेन त्रिरावर्तनीयः । यथाह **सुमन्तुः ।** "देवद्विजगुरुहन्ताऽप्सु निमग्नोऽघमर्षणं सूक्तं त्रिरावर्तयेत् । मातरं भगिनीं गत्वा मातृष्वसारं स्नुषां सखीं वाऽन्यद्वा गमनं कृत्वाऽघमर्षणमेवान्तर्जले त्रिरावर्त्य तदेतस्मात्पूतो भवतीति" । एतच्चाकामकारविषयम् । यत्तु **मनु**नोक्तम् । (अ. ११ श्लो. २४८) "सव्याहृतिप्रणवकाः प्राणायामास्तु षोडश । अपि भ्रूणहणं मासात्पुनन्त्यहरहः कृताः" इति तदप्यस्मिन्नेव विषये गोदानाशक्तस्य वेदितव्यम् । यत्तु **गौतमेन** षट्त्रिंशद्रात्रव्रतमुक्त्वोक्तम् (अ. २४ सू. ९) । 'तद्व्रत एव ब्रह्महत्यासुरापानसुवर्णस्तेयगुरुतल्पेषु प्राणायामैः स्नातोऽघमर्षणं जपेदिति' तदकामतो वधविषयम् । यत्तु **बौधायने**नोक्तम् (३।९।४)-(३।५।२-७) । 'ग्रामात्प्राचीं चोदीचीं दिशमुपनिष्क्रम्य । स्नातः शुचिः शुचिवासा उदकान्ते स्थण्डिलमुपलिप्य सकृत्क्लिन्नवासाः सकृत्पूतेन पाणिनाऽऽदित्याभिमुखोऽघमर्षणं स्वाध्यायमधीयीत । प्रातः शतं मध्याह्ने शतमपराह्णे शतं परिमितं । चोदितेषु नक्षत्रेषु प्रसृतियावकं प्राश्नीयात् । ज्ञानकृतेभ्योऽज्ञानकृतेभ्यश्चोपपातकेभ्यः सप्तरात्रात्प्रमुच्यते द्वादशरात्रान्महापातकेभ्यो ब्रह्महत्यासुरापानसुवर्णस्तेयानि वर्जयित्वा एकविंशतिरात्रेण तान्यपि तरतीति'. तत्कामकारविषयम् । अकामतः श्रोत्रियाचार्यसवनस्थवधविषयं वा । यत्तु **मनु**नोक्तम् । (अ. ११ श्लो. २५८) "अरण्ये वा त्रिरभ्यस्य प्रयतो वेदसंहिताम् मुच्यते पातकैः सर्वैः पराकैः शोधितस्त्रिभिरिति" तत्कामतः श्रोत्रियादिवधविषयमितरत्र कामतोऽभ्यासविषयं वा । यत्तु **बृहद्विष्णु**नोक्तम् । 'ब्रह्महत्यां कृत्वा ग्रामात्प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य प्रभूतेन्धनेनाग्निं प्रज्वाल्याघमर्षणेनाष्टसहस्रमाज्याहुतीर्जुहुयात्तत एतस्मात्पूतो भवतीति' तन्निर्गुणवधविषयमनुग्राहकविषयं वा । यत्तु **यमेनो**क्तम् । "त्र्यहं तूपवसेद्युक्तस्त्रिरह्नोऽभ्युपयन्नपः । मुच्यते पातकैः सर्वैस्त्रिर्जपित्वाऽघमर्षणम्" इति, तद्गुणवतो हन्तुर्निर्गुणवधविषयं प्रयोजकानुमन्तृविषयं वा । यत्तु **हारीते**नोक्तम् । 'महापातकातिपातकोपपातकानामेकतममेव संनिपाते वाऽघमर्षणमेव त्रिर्जपेदिति' तन्निमित्तकर्तृविषयम् । एवमन्यान्यपि स्मृतिवाक्यानि अन्विष्य एवमेव विषयेषु विभजनीयानि ग्रन्थगौरवभयान्न लिख्यन्ते । एतदेव व्रतजातं यागस्थयोषित्क्षत्रविट्स्वात्रेय्यामाहिताग्निपत्न्यां गर्भिण्यामविज्ञाते च गर्भे व्यापादिते तुरीयांशन्यूनमनुष्ठेयम् ॥ ३०२ ॥

प्रायश्चित्तान्तरमाह

**लोमभ्यः स्वाहेत्यथवा दिवसं मारुताशनः ।**
**जले स्थित्वाऽभिजुहुयाच्चत्वारिंशद्घृताहुतीः ॥ ३०३ ॥**

अथवाऽहोरात्रमुपोषितो रात्रावुदके वासं कृत्वा प्रातर्जलादुत्तीर्य लोमभ्यः स्वाहेत्याद्यैरष्टभिर्मन्त्रैरेकेन पञ्चपञ्चाहुतय इत्येवं चत्वारिंशद्घृताहुतीर्जुहुयात् । इदं च पूर्वोक्तसमानविषयम् । उदवासस्य क्लेशबाहुल्यात् ॥ ३०३ ॥

क्रमप्राप्तं सुरापानप्रायश्चित्तमाह

**त्रिरात्रोपोषितो हुत्वा कूष्माण्डीभिर्धृतं शुचिः ।**

सुरापश्चत्वारिंशद्धृताहुतीरित्यनुवर्तते । त्रिरात्रमुपोषितः कूष्माण्डीभिः 'यद्देवादेवहेडनमि'त्याद्याभिः कूष्माण्डदृष्टाभिरनुष्टुब्भिर्मन्त्रलिङ्गदेवताभिर्ऋग्भिश्चत्वारिंशद्धृताहुतीर्हुत्वा शुचिर्भवेत् । तथा **बौधायनेना**प्युक्तम् ( ३।७।१,३-४ )। "अथ कूष्माण्डीभिर्जुहुयाद्योऽपूत एवात्मानं मन्येत । यावदर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मुच्यते । अयोनौ वा रेतः सिक्त्वाऽन्यत्र स्वप्नादिति "। यत्तु **मनुना** ( अ. ११ श्लो. २६२ )। " मासं जप्त्वाऽऽप इत्येतद्वासिष्ठं च तृचं प्रति । माहित्र्यं शुद्धवत्यश्च सुरापोऽपि विशुध्यतीति " मासं प्रत्यहं षोडशकृत्वो'ऽप नः शोशुचदघं प्रतिस्तोमेभिरुषसं' **वासिष्ठम्**।'महित्रीणामवोस्त्वेतोन्विन्द्रंस्तवामे'त्येतेषामन्यतमस्य जप उक्तः स त्रिरात्रोपवासकूष्माण्डहोमाशक्तस्य वेदितव्यः ।

एतच्चाकामतः पैष्ट्याः सकृत्पाने, गौडीमाध्व्योस्तु पानावृत्तौ च वेदितव्यम् । यच्च **मनुना** ( अ. ११ श्लो. २५६ ) " मन्त्रैः शाकलहोमीयैरब्दं हुत्वा घृतं द्विजः । स गुर्वप्यपहन्त्येनो जप्त्वा वा नम इत्यृचमिति "। संवत्सरं प्रत्यहं 'देवकृतस्यैनस' इत्याभिरष्टभिर्मन्त्रैर्होमो 'नम इदुग्रं नम आविवास' इत्यस्या वा ऋचो जप उक्तः स कामकारविषयः । ( **मनुः** अ. १२ श्लो. २५७ ) यत्तु " महापातकसंयुक्तोऽनुगच्छेद्गाः समाहितः । अभ्यस्याब्दं पावमानीर्भैक्षाहारो विशुध्यतीति " तदभ्यासविषयम् समुच्चितमहापातकविषयं वा ॥

सुवर्णस्तेयप्रायश्चित्तमाह

**ब्राह्मणः स्वर्णहारी तु रुद्रजापी जले स्थितः ॥ ३०४ ॥**

**ब्राह्मणः स्वर्णहारी** पुनस्त्रिरात्रोपोषितः जलमध्यस्थो 'नमस्ते रुद्र मन्यव' इति शतरुद्रियजपयुक्तः शुध्यतीति ॥ **शातातपेना**त्र विशेष उक्तः ।

"मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा ।

"भस्माच्छन्नो भस्मशय्यां शयानो रुद्राध्यायी मुच्यते सर्वपापैरिति "। जपश्चैकादशकृत्वः कार्यः । " एकादशगुणान्वाऽपि रुद्रानावर्त्य धर्मवित् । महापापैरपि स्पृष्टो मुच्यते नात्र संशय " इत्य**त्रि**स्मरणात् ॥

यत्तु **मनुना** ( अ. ११ श्लो. २५० ) "सकृज्जप्त्वाऽस्य वामीयं शिवसंकल्पमेव च । सुवर्णमपहृत्यापि क्षणाद्भवति निर्मलः " इति द्विपञ्चाशदृक्संख्याकस्य'अस्य वामस्यपलितस्य होतुरिति' सूक्तस्य तथा 'यज्जाग्रतो दूरमुदैतु दैवमिति' शिवसंकल्पदृष्टस्य षड्ऋचस्य वा सकृज्जप उक्तः सोऽत्यन्तनिर्गुणस्वामिकस्वर्णहरणे गुणवतोऽपहर्तुर्द्रष्टव्यः । सुवर्णन्यूनपरिमाणविषयोऽनुग्राहकप्रयोजकविषयो वा ॥ आवृत्तौ तु 'महापातकसंयुक्तोऽनुगच्छेदित्या'दिनोक्तं द्रष्टव्यम् ॥ ३०४ ॥

क्रमप्राप्तं गुरुतल्पगप्रायश्चित्तमाह

**सहस्रशीर्षाजापी तु मुच्यते गुरुतल्पगः ।**
**गौर्देया कर्मणोऽस्यान्ते पृथगेभिः पयस्विनी ॥ ३०५ ॥**

**गुरुतल्पगस्तु** ' सहस्रशीर्षेति ' षोडशर्चसूक्तं नारायणदृष्टं पुरुषदैवत्यमानुष्टुभं त्रिष्टुबन्तं जपंस्तस्मात्पापान्मुच्यते । ' **सहस्रशीर्षाजापीति** ' ताच्छील्यप्रत्यययादावृत्तिर्गम्यते । अत एव **यमे**नोक्तम् । ' पौरुषं सूक्तमावर्त्य मुच्यते सर्वकिल्बिषादिति' । आवृत्तौ च संख्यापेक्षायामधस्तन-श्लोकगता चत्वारिंशत्संख्याऽनुमीयते । अत्रापि प्राक्तनश्लोकगतं त्रिरात्रोपोषित इति संबध्यते । अत
५ एव **बृहद्विष्णुः** । ' त्रिरात्रोपोषितः पुरुषसूक्तजपहोमाभ्यां गुरुतल्पगः शुध्येदिति ' । एभिश्च सुराप-सुवर्णस्तेनगुरुतल्पगैस्त्रिभिः पृथक्पृथगस्य त्रिरात्रव्रतस्यान्ते बहुक्षीरा गौर्देया ।

इदमकामविषयम् । यत्तु **मनु**ना (अ. ११ श्लो. २५१) "हविष्पान्तीयमभ्यस्य ' न तमहं ' इतीति च । जप्त्वा तु पौरुषं सूक्तं मुच्यते गुरुतल्पगः इति ' हविषान्तमजरंस्वर्विदं, ' ' न तमंहो न दुरितं, ' ' इति वा इति मे मनः, ' ' सहस्रशीर्षेत्ये'षामन्यतमस्य मासं प्रत्यहं षोडशषोडशऋचां
१० चत्वारिंशत्संख्याकजप उक्तः सोऽप्यकामविषय एव । कामतस्तु "मन्त्रैः शाकलहोमीयैरिति" **मनू**क्तं द्रष्टव्यम् । यत्तु **षट्त्रिंशन्मते**ऽभिहितम् । " महाव्याहृतिभिर्होमस्तिलैः कार्यो द्विजन्मना । उप-पातकशुद्ध्यर्थं सहस्रपरिसंख्यया ॥ महापातकसंयुक्तो लक्षहोमेन शुध्यतीति " तदावृत्तिविषयम् । यत्तु **यमे**नोक्तम् । " जपेद्वाऽप्यस्य वामीयं पावमानीरथापि वा । कुन्तापं वालखिल्यांश्च निवित्प्रै-षान्वृषाकपिम् ॥ होतॄन्रुद्रान् सकृज्जप्त्वा मुच्यते सर्वपातकैरिति " तद्व्यभिचारिणीगमनविषयम् ॥
१५ यानि पुनः गुरुतल्पातिदेशविषयाणि तत्समानि वाऽतिपातकोपपातकपदाभिधेयानि तेषु तुरीयांशन्यून-मर्धोनं च क्रमेण वेदितव्यम् । ' पातकातिपातकोपपातकमहापातकानामेकतमे संनिपाते वा अघ-मर्षणमेव त्रिर्जपेदिति ' **हारीतो**क्तं वा द्रष्टव्यम् । महापातकसंसर्गिणश्च ' स तस्यैव व्रतं कुर्यादिति ' वचनाद्येन सह संसर्गस्तदीयमेव प्रायश्चित्तम् । न च वाच्यमत्राध्यापनादिसंसर्गस्यानेककर्तृकसंपाद्यत्वा-द्रहस्यत्वानुपपत्तिरिति । यतः सत्यप्यनेककर्तृत्वे परदारगमनवत् कर्तृव्यतिरिक्ततृतीयाद्यपरिज्ञानमात्रे-
२० णैव रहस्यत्वम् । अतो भवत्येव रहस्यप्रायश्चित्तम् । एवमतिपातकादिसंसर्गिणोऽपि तदीयमेव प्रायश्चित्तं वेदितव्यम् ॥ ३०५ ॥

इति महापातकरहस्यप्रायश्चित्तप्रकरणम् ।

क्रमप्राप्तं गोवधादिषट्पञ्चाशदुपपातकप्रायश्चित्तमाह

**प्राणायामशतं कार्यं सर्वपापापनुत्तये ।**
२५ **उपपातकजातानामनादिष्टस्य चैव हि ॥ ३०६ ॥**

गोवधादिषट्पञ्चाशदुपपातकजातानामनादिष्टरहस्यव्रतानां च जातिभ्रंशकरादीनां सर्वेषामपनु-त्तये प्राणायामानां शतं कार्यम् । तथा सर्वेषां महापातकादीनां प्रकीर्णकान्तानामप्यपनुत्तये प्राणायामाः कार्याः । तत्र च महापातकेषु चतुःशतम् । अतिपातकेषु त्रिशतम् । अनुपातकेषु द्विशतमिति संख्याविवृद्धिः कल्पनीया । प्रकाशप्रायश्चित्तेषु महापातकप्रायश्चित्ततुरीयांशस्योपपातकेषु विधानदर्श-
३० नात् प्रकीर्णकेषु च ह्रासः कल्प्यः । अत एवोक्तं **यमेन** । " दशप्रणवसंयुक्तैः प्राणायामैश्चतुःशतैः । मुच्यते ब्रह्महत्यायाः किं पुनः शेषपातकैरिति " । **बौधायने**नाप्यत्र विशेष उक्तः ( ४।१ ५-११ ) । ' अपि वाक्चक्षुःश्रोत्रत्वक्घ्राणमनोऽव्यतिक्रमेषु त्रिभिः प्राणायामैः शुध्यति । शूद्र-

स्त्रीगमनान्नभोजनेषु पृथक्पृथक् सप्ताहं सप्त प्राणायामान्धारयेत् । अभक्ष्याभोज्यामेध्यप्राशनेषु तथा वाऽपण्यविक्रयेषु मधुमांसघृततैललाक्षालवणरसान्नवर्जितेषु यच्चाप्यन्यदप्येवं युक्तं स्याद्द्वादशाहं द्वादशद्वादश प्राणायामान्धारयेत् । अथ पातकोपपातकवर्ज्यं यच्चाप्यन्यदप्येवं युक्तं स्यादर्धमासं द्वादश द्वादश प्राणायामान्धारयेत् । उपपातकपतनीयवर्ज्यं यच्चाप्यन्यदेवं युक्तं स्यान्मासं द्वादशार्धमासान् द्वादशार्धमासान् द्वादशद्वादश प्राणायामान् धारयेत् । अन्यपातकवर्ज्यं यच्चाप्यन्यदप्येवं युक्तं द्वादश ५ अर्धमासान् द्वादश प्राणायामान् धारयेत् । अथ पातकेषु संवत्सरं द्वादशद्वादश प्राणायामान् धारयेदिति'।

तत्र वाक्चक्षुरित्यादिप्राणायामत्रयं प्रकीर्णकाभिप्रायम् । शूद्रस्त्रीगमनान्नभोजनेत्यादिनोक्ता एकोनपञ्चाशत्प्राणायामा उपपातकविशेषाभिप्रायाः । तथा अभक्ष्याभोज्येत्यादिनोक्ताश्चतुश्चत्वारिंशदधिकशतप्राणायामा अप्युपपातकविशेषाभिप्राया एव । अथ पातकोपपातकवर्ज्यमित्यादिनोक्ताः साशीतिशतप्राणायामा जातिभ्रंशकराद्यभिप्रायाः । अथ पातकपतनीयवर्ज्यमित्यादिनोक्ताः षष्ट्यधिकशतत्रय- १० प्राणायामाः गोवधाद्युपपातकाभिप्रायाः। अथ पातकवर्ज्यमित्यादिनोक्ताः षष्ट्यधिकद्विशतसहितद्विसहस्रसंख्याकाः प्राणायामाः अतिपातकानुपपातकाभिप्रायाः । अथ पातकेष्वित्यादिनोक्ताश्चतुःसहस्रप्राणायामा महापातकविषयाः । इदं चाभक्ष्यभोज्येत्यादिनोक्तं प्रायश्चित्तपञ्चकमत्यन्ताभ्यासविषयम् समुच्चितविषयं वा । यत्तु **मनुना** । ( अ. ११. श्लो. २५२ ) "एनसां स्थूलसूक्ष्माणां चिकीर्षन्नपनोदनम् । अवेत्यृचं जपेदब्दं यत्किंचेदमितीति चे " त्यब्दं यावत्प्रत्यहमर्थान्तराविरुद्धेषु कालेषु १५ 'अव ते हेळो वरुणे'त्यस्या ऋचो 'यत्किंचेदमि'त्यस्या 'इति वा इति मे मन' इत्यस्याश्च जप उक्तः सोऽप्यभ्यासविषयः ॥ ३०६ ॥

उपपातकसामान्यप्राप्तस्य प्राणायामशतस्यापवादमाह

**ओङ्काराभिष्टुतं सोमसलिलं पावनं पिबेत् ।**
**कृत्वा तु रेतोविण्मूत्रप्राशनं तु द्विजोत्तमः ॥ ३०७ ॥** २०

द्विजो रेतोविण्मूत्रप्राशनं कृत्वा सोमलतारसमोङ्कारेणाभिमन्त्रितं शुद्धिसाधनं पिबेत् । एतच्चाकामकारविषयम् । कामतस्तु **सुमन्तू**क्तम् । 'रेतोविण्मूत्रप्राशनं कृत्वा लशुनपलाण्डुगृञ्जनकुम्भिकादीनामन्येषां वाऽभक्ष्याणां भक्षणं कृत्वा हंसग्रामकुक्कुटश्वसृगालादिमांसभक्षणं कृत्वा ततः कण्ठमात्रमुदकमवतीर्य शुद्धवतीभिः प्राणायामं कृत्वा अथ महाव्याहृतिभिरुरोगमुदकं पीत्वा तदेतस्मात्पूतो भवतीति'। **मनुना**ऽपि सप्तविधाभक्ष्यभक्षणे प्रायश्चित्तान्तरमुक्तम् ( अ. ११ श्लो. २५३ ) २५ "प्रतिग्राह्याप्रतिग्राह्यं भुक्त्वा चान्नं विगर्हितम् । जपंस्तरत्समन्दीयं पूयते मानवस्त्र्यहादिति "। अप्रतिग्राह्यं विषशस्त्रसुरादिपतितादिद्रव्यं च । यदा त्वप्सु रेतोविण्मूत्रादिशारीरं मलं विसृजति तदाऽपि तेनैवोक्तम् ( अ. ११ श्लो. २२५ ) । "अप्रशस्तं तु कृत्वाऽप्सु मासमासीत भैक्षभुगिति " ॥ ३०७ ॥

अज्ञानकृते प्रकीर्णके मानसे चोपपातके प्रायश्चित्तमाह ३०

**निशायां वा दिवा वाऽपि यदज्ञानकृतं भवेत् ।**
**त्रैकाल्यसंध्याकरणात्तत्सर्वं विप्रणश्यति ॥ ३०८ ॥**

रजन्यां वासरे वा यत्प्रमादकृतं प्रकीर्णकं मानसं वाचिकं चोपपातकं तत्सर्वं प्रातर्मध्याह्नादिकालत्रयविहितनित्यसंध्योपासनया प्रणश्यति । तथा च **यमः** । "यदह्ना कुरुते पापं कर्मणा मनसा

गिरा । आसीनः पश्चिमां संध्यां प्राणायामैर्निहन्ति तदिति " । शातातपेनाप्युक्तम् । "अनृतं मद्य-गन्धं च दिवा मैथुनमेव च । पुनाति वृषलान्नं च संध्या बहिरुपासितेति " ॥ ३०८ ॥

सकलमहापातकादिसाधारणान्पवित्रमन्त्रानाह

**शुक्रियारण्यकजपो गायत्र्याश्च विशेषतः ।**
**सर्वपापहरा ह्येते रुद्रैकादशिनी तथा ॥ ३०९ ॥**

शुक्रियं नाम आरण्यकविशेषः 'विश्वानि देव सवितरि'त्यादि वाजसनेयके पठ्यते। आरण्यकं च यजुः ' ऋचं वाचं प्रपद्ये मनो यजुः प्रपद्ये ' इत्यादि तत्रैव पठ्यते तयोर्जपः सकलमहापातकादिहरः । तथा गायत्र्याश्च महापातकेषु लक्षमतिपातकोपपातकयोर्दशसहस्रमुपपातकेषु सहस्रं प्रकीर्णकेषु शत-मित्येवं विशेषतो जपः सर्वपापहारः । तथा च गायत्रीमधिकृत्य श्लोकः **शङ्खेनोक्तः**—

"शतं जप्ता तु सावित्री महापातकनाशिनी । सहस्रजप्ता तु तथा पातकेभ्यः प्रमोचिनी ॥
"दशसाहस्रजाप्येन सर्वकिल्बिषनाशिनी । लक्षं जप्ता तु सा देवी महापातकनाशिनी ॥
"सुवर्णस्तेयकृद्विप्रो ब्रह्महा गुरुतल्पगः । परापश्च विशुध्यन्ति लक्षं जप्त्वा न संशयः "॥ इति

यत्तु **चतुर्विंशति**मतेनोक्तम् ॥ " गायत्र्यास्तु जपेत्कोटिं ब्रह्महत्यां व्यपोहति । लक्षाशीतिं जपेद्यस्तु सुरापानाद्विमुच्यते ॥ पुनाति हेमहर्तारं गायत्र्या लक्षसप्ततिः । गायत्र्या लक्षषष्ट्या तु मुच्यते गुरुतल्पगः " इति तद्गुरुत्वात्प्रकाशविषयम् ।

तथा रुद्रैकादशिनी एकादशानां रुद्रानुवाकानां समाहारो रुद्रैकादशिनी सा च विशेषतो जप्ता सर्वपापहरा ॥ "एकादशगुणान्वाऽपि रुद्रानावर्त्य धर्मवित् । महद्भ्यः स तु पापेभ्यो मुच्यते नात्र संशयः " इति महापातकेष्वेकादगुणावृत्तिदर्शनात् । अतिपातकादिषु चतुर्थचतुर्थांशह्रासो योजनीयः । चशब्दोऽघमर्षणादिसमुच्चयार्थः । यथाह **वसिष्ठः** ।

"सर्ववेदपवित्राणि वक्ष्याम्यहमतः परम् । येषां जपैश्च होमैश्च पूयन्ते नात्र संशयः ॥
"अघमर्षणं[1] देवकृतं[2] शुद्धवत्यस्[3]तरत्समाः[4] । कूष्माण्ड्यः[5] पावमान्यश्च[6] दुर्गा[7] सावित्रिरेव[8] च ॥
"अभिषङ्गाः[9] पदस्तोमाः[10] सामानि[11] व्याहृतीस्[12]तथा । भारदण्डानि[13] सामानि गायत्रं[14] रैवतं[15] तथा ॥
"पुरुषव्रतं[16] च भासं[17] च तथा देवव्रतानि[18] च । आर्विलिङ्गं[19] बार्हस्पत्यं[20] च वाक्सूक्तं[21] मध्वृचस्[22]तथा ॥
"शतरुद्रियम्[23]थर्वशिरास्[24]त्रिसुपर्णं[25] महाव्रतम्[26] । गोसूक्तं[27] चाश्वसूक्तं[28] च इन्द्रशुद्धे[29] च सामनी ॥
"त्रीण्याज्यदोहानि[30] रथन्तरं[31] च अग्नेर्व्रतं[32] वामदेव्यं[33] बृहच्च[34] ।
"एतानि गीतानि पुनन्ति जन्तूञ्जातिस्मरत्वं लभते यदीच्छेदिति" ॥ ३०९ ॥

१ अघमर्षणम् । 'ऋतं च सत्यामि'त्यादि । २ देवकृतं 'देवकृतस्यैनस' इत्याद्यृक् । ३ शुद्धवत्यः 'एतोन्विन्द्रं स्तवाम'-त्याद्या ऋचः । ४ तरत्समास्तरत्समन्दीत्याद्यृचः । ५ कूष्माण्ड्यः यद्देवादेवहेडनमित्याद्याः । ६ पावमान्यः स्वादिष्ठया मदिष्ठयेत्याद्याश्चत्वारोऽध्यायाः । ७ दुर्गा जातवेदसेसुनवेत्यादिसूक्तम् । ८ सावित्रिः देवस्यत्वेत्या-द्यृचः । ९ अभिषङ्गास्तदाख्या मन्त्रविशेषाः । १० पदस्तोमाः उत्सोदेवाहिरण्यया इत्यादयः । ११ सामानि साधारणानि । १२ व्याहृतीः भूरग्नये च पृथिव्यै चेत्यादिकाः । १३ भारदण्डानि सामानि अग्न आयाहीत्या-दीनि । १४ गायत्रं सामविशेषः । १५ रैवतं रेवतीर्न समाधा इत्यादि । १६ पुरुषव्रतं वैश्वानरमित्यादि । १७ भासं अग्नेव्रतपत इत्यादि । १८ देवव्रतं अनृतात्सत्यमुपैमीत्यादि । १९ आर्विलिङ्गं ऋत्विग्भ्रेषमन्त्रा बौधायनीयाः । २० बार्हस्पत्यं बृहस्पतेः प्रथमं वाचो इत्यादि । २१ वाक्सूक्तं ओष्ठापिधानेत्यादि । २२ मध्वृचः मधुवाता इत्या-दयः । २३ शतरुद्रियं नमस्ते रुद्र मन्यव इत्यादि । २४ अथर्वशिराः देवा ह वै स्वर्गमित्यादि । २५ त्रिसुपर्णं ब्रह्ममेतु मामित्यादि । २६ महाव्रतं अथ महाव्रतमित्यादि । २७ गोसूक्तं आगावो अग्मन्नित्यादि । २८ अश्वसूक्तं अश्वंनो अस्तु इत्यादि । २९ इन्द्राय सामगायतेत्यादिनी इन्द्रशुद्धसामनी । ३० आज्यदोहमित्यादीनि त्रीण्याज्यदोहानि । ३१ रथन्तरं सामविशेषः । ३२ अग्नेर्व्रतम् । ३३ वामदेव्यं कया नश्चित्र इत्यादि । ३४ बृहत्साम सामविशेषः ॥

**यत्र यत्र च संकीर्णमात्मानं मन्यते द्विजः ।**
**तत्र तत्र तिलैर्होमो गायत्र्या वाचनं तथा ॥ ३१० ॥**

किंच । यत्र यत्र ब्रह्मवधादौ तज्जनितदोषजातेनात्मानं संकीर्णमभिभूतं द्विजो मन्यते तत्र तत्र गायत्र्या तिलैर्होमः कार्यः । तत्र महापातकेषु गायत्र्या लक्षहोमः कार्यः । "गायत्र्या लक्षहोमेन मुच्यते सर्वपातकैरिति" **यम**स्मरणात् । अतिपातकादिषु पादपादह्रासः कल्पनीयः । तथा तिलैर्वाचनं दानं कार्यम् । तथा रहस्याधिकारे **वसिष्ठः** (अ. २८ सू. १८) । "वैशाख्यां पौर्णमास्यां च ब्राह्मणान्पञ्च सप्त च । क्षौद्रयुक्तैस्तिलैः कृष्णैर्वाचयेदथवेतरैः ॥ प्रीयतां धर्मराजेति यद्वा मनसि वर्तते । यावज्जीवकृतं पापं तत्क्षणादेव नश्यतीति " ॥ अनियतकालेऽपि दानं **तेनै**वोक्तम् (अ. २८ सू. २२) । " कृष्णाजिने तिलान्कृत्वा हिरण्यं मधुसर्पिषी । ददाति यस्तु विप्राय सर्वं तरति दुष्कृतमिति" । तथा **व्यासे**नाप्युक्तम् । " तिलधेनुं च यो दद्यात्संयतात्मा द्विजन्मने । ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः" इति ।

एवमादि दानजातं रहस्यकाण्डोक्तमविदुषां द्विजातीनां स्त्रीशूद्रयोश्च वेदितव्यम् । यत्तु **यमे**नोक्तम् । "तिलान्ददाति यः प्रातस्तिलान्स्पृशति खादति । तिलस्नायी तिलाञ्जुह्वन्सर्वं तरति दुष्कृतम्" । तथा । "द्वे चाष्टम्यौ तु मासस्य चतुर्दश्यां तथैव च । अमावास्या पूर्णमासी सप्तमी द्वादशीद्वयम् । संवत्सरमभुञ्जानः सततं विजितेन्द्रियः । मुच्यते पातकैः सर्वैः स्वर्गलोकं च गच्छतीति" । **यज्ञात्रिणो**क्तम् । "क्षीराब्धौ शेषपर्यङ्के आषाढ्यां संविशेद्धरिः । निद्रां त्यजति कार्तिक्यां तयोः संपूजयेद्धरिम् । ब्रह्महत्यादिकं पापं क्षिप्रमेव व्यपोहति"त्यादि तत्सर्वं विद्याविरहिणां कामाकामसकृदभ्यासविशेषतया व्यवस्थापनीयम् ॥ ३१० ॥

किंचाह

**वेदाभ्यासरतं क्षान्तं पञ्चयज्ञक्रियापरम् ।**
**न स्पृशन्तीह पापानि महापातकजान्यपि ॥ ३११ ॥**

"वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः । तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधेति" उक्तक्रमेण वेदाभ्यासनिरतं तितिक्षायुक्तं पञ्चमहायज्ञानुष्ठाननिरतं महापातकजान्यपि पापानि न स्पृशन्ति । किमुत प्रकीर्णकजानि वाङ्मनसजन्योपपातकानि वेत्यत्र तात्पर्यमपिशब्दाल्लक्ष्यते । एतच्चाकामकारविषयम् । अत एव **वसिष्ठे**न (अ. २७ सू १) । "यद्यकार्यशतं साग्रं कृतं वेदश्च धार्यते । सर्वं तत्तस्य वेदाग्निर्दहत्यग्निरिवेन्धनामिति" प्रकीर्णकाद्यभिप्रायेणाभिधायाभिहितम् । "न वेदबलमाश्रित्य पापकर्मरतिर्भवेत् । अज्ञानाच्च प्रमादाच्च दह्यते कर्म नेतरत्" इति ॥ ३११ ॥

**वायुभक्षो दिवा तिष्ठन् रात्रिं नीत्वाऽप्सु सूर्यदृक् ।**
**जप्त्वा सहस्रं गायत्र्याः शुध्येद्ब्रह्मवधादृते ॥ ३१२ ॥**

किंच । सोपवासो वासरमुपविशन् उषित्वा सलिले वसन्निशां नीत्वाऽऽदित्योदयानन्तरं सावित्र्याः सहस्रं जप्त्वा ब्रह्मवधव्यतिरिक्तसकलमहापातकादिपापजातान्मुच्यते ।

ऽनेकदोषसमुच्चये वा वेदितव्यम् । विषमविषयसमीकरणस्यान्याय्यत्वात् । अत एव **वृद्ध-वसिष्ठेन** । महापातकोपपातकयोः कालविशेषेण व्रतविशेष उक्तः । यथाह । "यवानां प्रसृतिमञ्जलिं वा श्रप्यमाणं घृतं चाभिमन्त्रयेत् । 'यवोऽसि धान्यराजस्त्वं वारुणो मधुसंयुतः । निर्णोदः सर्वपापानां पवित्रमृषिभिः स्मृतः ' इत्यनेन । 'घृतं यवा मधुयवाः पवित्रममृतं यवाः । सर्वं पुनन्तु मे पापं वाङ्मन-५ कायसंभवमि'त्यनेन वा । 'अग्निकार्यं न कुर्वीत तेन भूतबलिं तथा । नाग्रं न भिक्षां नातिथ्यं न चोच्छिष्टं परित्यजेत् काय ॥' 'ये देवा मनोजाता मनोयुजः सुदक्षा दक्षपितरः ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहे'त्यात्मनि जुहुयात्त्रिरात्रं मेधाभिवृद्धये पापक्षयाय त्रिरात्रं सप्तरात्रं ब्रह्महत्यादिषु द्वाद-शरात्रं पतितोत्पन्नश्चेति"एतद्दिगवलम्बनेनान्यान्यपि स्मृतिवचनानि विवेचनीयानि ॥ ३१२ ॥

इति रहस्यप्रायश्चित्तप्रकरणम् ।

१० विनियुक्तव्रतव्रातरूपभेदे बुभुत्सिते । कीदृक्षामिति संक्षेपाल्लक्षणं वक्ष्यतेऽधुना ॥
तत्र तावत्सकलप्रकाशरहस्यव्रताङ्गभूतान्धर्मानाह

**ब्रह्मचर्यं दया क्षान्तिर्दानं सत्यमकल्कता ।**
**अहिंसा स्तेयमाधुर्ये दमश्चेति यमाः स्मृताः ॥ ३१३ ॥**
**स्नानं मौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः ।**
१५ **नियमा गुरुशुश्रूषा शौचाक्रोधाप्रमादता ॥ ३१४ ॥**

**ब्रह्मचर्यं** सकलेन्द्रियसंयमः । **उपस्थनिग्रहो** लिङ्गनिग्रहः । गोबलीवर्दन्यायेन निर्दिष्टः । **अकल्कता** अकुटिलता । शेषं प्रसिद्धम् । यत्पुन**र्मनु**नोक्तम् । ' अहिंसा सत्यमक्रोधमार्जवं च समाचरेदिति ' तदप्येतेषामुपलक्षणं न परिगणनाय । अत्र च दयाक्षान्त्यादीनां पुरुषार्थतया प्राप्तानामपि पुनर्विधानं प्रायश्चित्ताङ्गत्वार्थम् । क्वचिद्विशेषोऽप्यस्ति । यथा विवाहादिष्वभ्यनुज्ञातस्याप्यनृत-२० वचनस्य निवृत्त्यर्थं सत्यत्वविधानम् । पुत्रशिष्यादिकमपि न ताडनीयमित्येवमर्थमहिंसाविधानमित्ये-वमादि ॥ ३१३ ॥ ३१४ ॥

तत्र सान्तपनाख्यं व्रतं तावदाह

**गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।**
**जग्ध्वा परेह्नयुपवसेत्कृच्छ्रं सान्तपनं परम् ॥ ३१५ ॥**

२५ पूर्वेद्युराहारान्तरपरित्यागेन गोमूत्रादीनि पञ्चगव्यानि पञ्चद्रव्यानि कुशोदकसहितानि संयुज्य पीत्वा अपरेद्युरुपवसेदिति द्वैरात्रिकः सान्तपनः कृच्छ्रः । संयोजनं चोत्तरश्लोके पृथग्विधानादवगम्यते । कृच्छ्र इति चान्वर्थसंज्ञेयम् । तपोरूपत्वेन क्लेशसाध्यत्वात् । गोमूत्रादीनां परिमाणं वक्ष्यते ।

यदा पुनः पूर्वेद्युरुपोष्यापरेद्युः समन्त्रकं संयुज्य समन्त्रकमेव पञ्चगव्यं पीयते तदा ब्रह्मकूर्च इत्याख्यायते । यथाह **पराशरः** ।

"गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । निर्दिष्टं पञ्चगव्यं तु प्रत्येकं कायशोधनम् ॥
"गोमूत्रं ताम्रवर्णायाः श्वेतायाश्चापि गोमयम् । पयः काञ्चनवर्णाया नीलायाश्च तथा दधि ॥
"घृतं च कृष्णवर्णायाः सर्वं कापिलमेव वा । अलाभे सर्ववर्णानां पञ्चगव्येष्वयं विधिः ॥
"गोमूत्रे माषकास्त्वष्टौ गोमयस्य तु षोडश । क्षीरस्य द्वादश प्रोक्ता दध्नस्तु दश कीर्तिताः ॥
"गोमूत्रवद्धृतस्याष्टौ तदर्धं तु कुशोदकम् । गायत्र्यादाय गोमूत्रं 'गन्धद्वारेति' गोमयम् । ५
"आप्यायस्वेति' च क्षीरं 'दधिकाव्णोति' वै दधि ॥ 'तेजोऽसि शुक्रमि'त्याज्यं 'देवस्य त्वा' कुशोदकम् ॥
"पञ्चगव्यमृचा पूतं होमयेदग्निसंनिधौ । सप्तपत्राश्च ये दर्भा अच्छिन्नाग्राः शुचित्विषः ॥
"एतैरुद्धृत्य होतव्यं पञ्चगव्यं यथाविधि । इरावतीं ' इदं विष्णुर्मा नस्तोके ' च शंवतीः ॥
"एताभिश्चैव होतव्यं हुतशेषं पिबेद्द्विजः । प्रणवेन समालोड्य प्रणवेनाभिमन्त्र्य च ॥ १०
"प्रणवेन समुद्धृत्य पिबेत्तत्प्रणवेन तु । मध्यमेन पलाशस्य पद्मपत्रेण वा पिबेत् ॥
"स्वर्णपात्रेण ताम्रेण ब्राह्मतीर्थेन वा पुनः ।
"यत्त्वगस्थिगतं पापं देहे तिष्ठति मानवे । ब्रह्मकूर्चोपवासस्तु दहत्यग्निरिवेन्धनमिति " ॥

यदा त्वेतदेव पञ्चगव्यं मिश्रितं त्रिरात्रमभ्यस्यते तदा यतिसान्तपनसंज्ञां लभते । ' एतदेव त्र्यहाभ्यस्तं यतिसान्तपनं स्मृतमिति ' **शङ्खस्मरणात्** ॥ **जाबालेन** तु सप्ताहसाध्यं सान्तपनमुक्तम् । १५ " गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । एकैकं प्रत्यहं पीत्वा त्वहोरात्रमभोजनम् ॥ कृच्छ्रं सान्तपनं नाम सर्वपापप्रणाशनमिति " ॥ एषां च गुरुलघुकृच्छ्राणां शक्त्याद्यपेक्षया व्यवस्था विज्ञेया । एवमुत्तरत्रापि व्यवस्था बोद्धव्या ॥ ३१५ ॥

महासान्तपनाख्यं कृच्छ्रमाह

**पृथक्सान्तपनद्रव्यैः षडहः सोपवासकः ।** २०
**सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः ॥ ३१६ ॥**

सप्ताहेनापवर्जितो महासान्तपनाख्यः कृच्छ्रो विज्ञेयः । कथमित्यपेक्षायामुक्तं । पृथग्भूतैः षड्भिर्गोमूत्रादिभिरेकैकेनैकैकमहरतिवाहयेत् । सप्तमं चोपवासेनेति । **यमेन** तु पञ्चदशाहसंपाद्यो महासान्तपनोऽभिहितः । " त्र्यहं पिबेत्तु गोमूत्रं त्र्यहं वै गोमयं पिबेत् । त्र्यहं दधि त्र्यहं क्षीरं त्र्यहं सर्पिस्ततः शुचिः ॥ महासान्तपनं ह्येतत्सर्वपापप्रणाशनमिति " ॥ **जाबालेन** त्वेकविंशतिरात्रनिर्वर्त्यो महा- २५ सान्तपन उक्तः । " षण्णामेकैकमेतेषां त्रिरात्रमुपयोजयेत् । त्र्यहं चोपवसेदन्त्यं महासान्तपनं विदुरिति" ॥ यदा तु षण्णां सान्तपनद्रव्याणामेकैकस्य त्र्यहमुपयोगस्तदा अतिसान्तपनम् । यथाह **यमः** । " एतान्येव तथा पेयादेकैकं तु त्र्यहं त्र्यहम् । अतिसान्तपनं नाम श्वपाकमपि शोधयेदिति " । श्वपाकमपि शोधयेदित्यर्थवादः ॥ ३१६ ॥

इति महासांतपनातिसांतपनम् ।

---

पर्णकृच्छ्राख्यं व्रतमाह

**पर्णोदुम्बरर।ज**
**प्रत्येकं प्रत्यहं पीतैः पर्णकृच्छ्र उदाहृतः ॥ ३१७ ॥**

पलाशोदुम्बरराजीवश्रीवृक्षपर्णानामेकैकेन क्वथितमुदकं प्रत्यहं पिबेत् । कुशोदकं चैकस्मिन्नहनीति पञ्चाहसाध्यः पर्णकृच्छ्रः । यदा तु पर्णादीनामेकीकृतानां क्वाथस्त्रिरात्रं पीयते तदा पर्णकूर्चः । यथाह **यमः** । " एतान्येव समस्तानि त्रिरात्रोपोषितः शुचिः । क्वाथयित्वा पिबेदद्भिः पर्णकूर्चोऽभिधीयते " इति । यदा तु बिल्वादिफलानि प्रत्येकं क्वथितानि मासं पीयन्ते तदा फलकृच्छ्रादिव्यपदेशं लभन्ते । यथाह **मार्कण्डेयः** । " फलैर्मासेन कथितः फलकृच्छ्रो मनीषिभिः । श्रीकृच्छ्रः श्रीफलैः प्रोक्तः पद्माक्षैरपरस्तथा ॥ मासेनामलकैरेवं श्रीकृच्छ्रमपरं स्मृतम् । पत्रैर्मतः पत्रकृच्छ्रः पुष्पैस्तत्कृच्छ्र उच्यते । मूलकृच्छ्रः स्मृतो मूलैस्तोयकृच्छ्रो जलेन त्विति " ॥ ३१७ ॥

इति पर्णकृच्छ्रः एकादशविधः ।

तप्तकृच्छ्रमाह

**तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत् ।**
**एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः ॥ ३१८ ॥**

दुग्धसर्पिरुदकानां तप्तानामेकैकं प्रतिदिवसं प्राश्यापरेद्युरुपवसेत् । एष दिवसचतुष्टयसंपाद्यो महातप्तकृच्छ्रः । एभिरेव समस्तैः सोपवासैर्द्विरात्रसंपाद्यः सान्तपनवत्तप्तकृच्छ्रः । **मनुना** तु द्वादशरात्रनिर्वर्त्योऽभिहितः । ( अ. ११ श्लो. २१४ ) " तप्तकृच्छ्रं चरन्विप्रो जलक्षीरघृतानिलान् । प्रतित्र्यहं पिबेदुष्णान्सकृत्स्नायी समाहितः " इति । क्षीरादिपरिमाणं तु **पराशरे**णोक्तं द्रष्टव्यम्:—

" अपां पिबेत्तु त्रिपलं द्विपलं तु पयः पिबेत् । पलमेकं पिबेत्सर्पिस्त्रिरात्रं चोष्णमारुतमिति " । त्रिरात्रस्य मारुतस्य पूरणे उष्णोदकबाष्पं पिबेदित्यर्थः । यदा तु शीतं क्षीरादि पीयते तदा शीतकृच्छ्रः । " त्र्यहं शीतं पिबेत्तोयं त्र्यहं शीतं पयः पिबेत् । त्र्यहं शीतं घृतं पीत्वा वायुभक्षः परं त्र्यहमिति " **यम**स्मरणात् ॥ ३१८ ॥

इति तप्तकृच्छ्रश्चतुर्विधः ।

पादकृच्छ्रमाह

**एकभक्तेन नक्तेन तथैवायाचितेन च ।**
**उपवासेन चैवायं पादकृच्छ्रः प्रकीर्तितः ॥ ३१९ ॥**

**एकभक्तेन** सकृद्भोजनेन दिवैव । **नक्तेनेति** पृथगुपादानात् अतश्च दिवैवैकवारमेव भोजनेनैवैकमहोरात्रमतिवाहयेदिति । तत्र दिवेति रात्रिव्युदासः । एकवारमिति द्विवारादिव्युदासः । भोजनेनेत्यभोजनव्युदासः ।

एतच्च कृच्छ्रादीनां व्रतरूपत्वात् पुरुषार्थभोजनपर्युदासेन कृच्छ्राङ्गभूतं भोजनं विधीयते । तथा **चापस्तम्बः** ( १।२७।७ ) । ' त्र्यहमनक्ताश्यदिवाशीचततस्त्र्यहं । अयाचितव्रतस्त्र्यहं । नाश्नातीति किंचन' । इति । अत्र चानक्ताशीत्यनेन व्रतविहितेन णिनिप्रत्ययेन नक्तपर्युदासेन दिवाभोजननियमं दर्शयति । **गौतमे**नापीदमेव स्पष्टीकृतम् ( अ. २६ सू. २ ) । ' हविष्यान्प्रातराशान्भुक्त्वा तिस्रो रात्रीर्नाश्नीयादिति ' । एवं नक्तभोज

न विद्यते याचितं यस्मिन्भोजने तदयाचितमिति । तेन कालविशेषानुपादानाद्दिवा रात्रौ वा सकृदित्येव । तपोरूपत्वात् कृच्छ्राणां द्वितीयभोजने तदनुपपत्तेः अयाचितमिति न केवलं परकीयान्न-याचनप्रतिषेधः अपि तु स्वकीयमपि परिचारकभार्यादिभ्यो न याचितव्यम् । प्रेषणाध्येषणयोः साधारण-त्वात् याञ्चायाः । अतः स्वगृहेऽपि भृत्यभार्यादयोऽनाज्ञप्ता एव यदि भोजनमुपहरन्ति तर्हि भोक्तव्यम् । नान्यथा । अमुनैवाभिप्रायेणोक्तं **गौतमेन** ( अ. २६ सू. ४ ) 'अथापरं त्र्यहं न कंचन याचे- ५ तेति' । अत्र च ग्राससंख्यानियमः **पराशरेण** दर्शितः " सायं तु द्वादश ग्रासाः प्रातः पञ्चदश स्मृताः । चतुर्विंशतिरायाच्याः परं निरशनं स्मृतमिति " ॥ **आपस्तम्बेन** त्वन्यथोक्तम् " सायं द्वाविंशतिर्ग्रासाः प्रातः षड्विंशतिः स्मृताः । चतुर्विंशतिरायाच्याः परं निरशनास्त्रयः । कुक्कुटाण्डप्रमाणस्तु यथा चास्यं विशेत्सुखमिति " ॥ अनयोश्च कल्पयोः शक्त्यपेक्षया विकल्पः । **आपस्तम्बेन** तु प्राजापत्यप्रायश्चित्तं चतुर्धा विभज्य चतुरः पादकृच्छ्रान्कृत्वा वर्णानुरूपेण व्यवस्था दर्शिता । "त्र्यहं १० निरशनं पादः पादश्चायाचितं त्र्यहम् । सायं त्र्यहं तथा पादः पादः प्रातस्तथा त्र्यहम् ॥ प्रातः पादं चरेच्छूद्रः सायं वैश्यस्य दापयेत् । अयाचितं तु राजन्ये त्रिरात्रं ब्राह्मणे स्मृतमिति" ॥ यदा त्वयाचितोपवासात्मकत्र्यहद्वयानुष्ठानं तदाऽर्धकृच्छ्रः । सायं व्यतिरिक्तापरत्र्यहत्रयानुष्ठानं तु पादोनमिति विज्ञेयम् । ' सायं प्रातर्विनाऽर्धं स्यात्पादोनं नक्तवर्जितमिति ' **तेनै**वोक्तत्वात् ॥ अर्धकृच्छ्रस्य प्रकारान्तरमपि **तेनैव** दर्शितम् " सायं प्रातस्तथैकैकं दिनद्वयमयाचितम् । दिनद्वयं च नाश्नी- १५ यात्कृच्छ्रार्धं तद्विधीयते " इति ॥ ३१९ ॥

प्राजापत्यं कृच्छ्रमाह

**यथाकथंचित्त्रिगुणः प्राजापत्योऽयमुच्यते ।**

अयमेव पादकृच्छ्रः यथाकथंचिद्दण्डकलितवदावृत्त्या स्वस्थानविवृद्ध्या वा तत्राप्यानुलोम्येन प्रातिलोम्येन वा तथा वक्ष्यमाणजपादियुक्तं तद्रहितं वा त्रिरभ्यस्तः प्राजापत्योऽभिधीयते । तत्र दण्ड- २० कलितवदावृत्तिपक्षो **वसिष्ठेन** प्रदर्शितः ( अ. २३ सू. ४३ ) । " अहः प्रातरहर्नक्तमहरेक-मयाचितम् । अहः पराकं तत्रैकमेवं चतुरहौ परौ ॥ अनुग्रहार्थं विप्राणां मनुर्धर्मभृतां वरः । बालवृद्धा-तुरेष्वेवं शिशुकृच्छ्रमुवाच हेति " ॥

आनुलोम्येन स्वस्थानविवृद्धिपक्षस्तु **मनुना** दर्शितः ( अ. ११ श्लो. २११ ) । " त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् । परं त्र्यहं च नाश्नीयात्प्राजापत्यं चरन्द्विजः " इति ॥ प्रातिलो- २५ म्यावृत्तिस्तु **वसिष्ठेन** दर्शिता । ' प्रातिलोम्यं चरेद्विप्रः कृच्छ्रं चान्द्रायणोत्तरामिति ' ।

जपादिरहितपक्षस्तु स्त्रीशूद्रादिविषये**ऽङ्गिरसा** दर्शितः । " तस्माच्छूद्रं समासाद्य सदा धर्म-पथे स्थितम् । प्रायश्चित्तं प्रदातव्यं जपहोमादिवर्जितमिति " । जपादियुक्तपक्षस्तु पारिशेष्याद्योग्य-तया च त्रैवर्णिकविषयः । स च **गौतमादि**भिर्दर्शितः ( अ. २६ सू. १।१७ ) । ' अथातः कृच्छ्रान्व्याख्यास्यामः । हविष्यान्प्रातराशान्भुक्त्वा तिस्रो रात्रीर्नाश्नीयादथापरं त्र्यहं नक्तं भुञ्जीताथापरं ३० त्र्यहं न कंचन याचेताथापरं त्र्यहमुपवसेत्तिष्ठेदहनि रात्रावासीत क्षिप्रकामः सत्यं वदेदनार्यैः सह न भाषेत रौरवयौधाजपे नित्यं प्रयुञ्जीतानुसवनमुदकोपस्पर्शनमापो हि ष्ठेति तिसृभिः पवित्रवतीभिर्मार्जयीत

'हिरण्यवर्णाः शुचयः पावका' इत्यष्टाभिरथोदकतर्पणम् । नमोऽहमाय मोहमाय मंहमाय धन्वने तापसाय पुनर्वसवे नमो मौञ्ज्याय औम्र्याय वसुविन्दाय सर्वविदाय नमः । पाराय सुपाराय महापाराय परपाराय पारयिष्णवे नमः। रुद्राय पशुपतये महते देवाय त्र्यम्बकायैकचरायाधिपतये हराय शर्वायेशानाय उग्राय वज्रिणे घृणिने कपर्दिने नमः। सूर्याय आदित्याय नमः। नीलग्रीवाय शितिकण्ठाय नमः। कृष्णाय पिङ्गलाय नमः।
५ श्रेष्ठाय ज्येष्ठाय वृद्धायेन्द्राय हरिकेशाय ऊर्ध्वरेतसे नमः। सत्याय पावकाय पावकवर्णायैकवर्णाय कामाय कामरूपिणे नमः। दीप्ताय दीप्तरूपिणे नमः। तीक्ष्णाय तीक्ष्णरूपिणे नमः। सौम्याय पुरुषाय महापुरुषाय मध्यमपुरुषाय उत्तमपुरुषाय ब्रह्मचारिणे नमः। चन्द्रललाटाय कृत्तिवाससे नमः' इति। 'एतदेवादित्योपस्थानमेता एवाज्याहुतयो द्वादशरात्रस्यान्ते चरुं श्रपयित्वा एताभ्यो देवताभ्यो जुहुयादग्नये स्वाहा सोमाय स्वाहाऽग्नीषोमाभ्यामिन्द्राग्निभ्यामिन्द्राय विश्वेभ्यो देवेभ्यो ब्रह्मणे प्रजापतयेऽग्नये स्विष्ट-
१० कृते। इति अन्ते ब्राह्मणभोजनमिति। ''तत्र तिष्ठेदहनि रात्रावासीत क्षिप्रकाम '' इत्यस्यार्थः। यस्तु महतोऽप्येनसः क्षिप्रमेकेनैव कृच्छ्रेन क्षिप्रं मुच्येयमित्येवं कामयते असावहनि कर्माविरुद्धेषु कालेषु तिष्ठेद्रात्रावासीत। एवं रौरवयोधाख्यसामजपो नमोहमायेत्यादिभिस्तर्पणमादित्योपस्थानादिकं चरुश्रपणादिकं च योगीश्वरायनुक्तं क्षिप्रकामकः कुर्वीत। अतश्च योगीश्वराद्युक्तप्राजापत्यद्वयस्थाने गौतमीयमनेकेतिकर्तव्यतासहितं द्रष्टव्यम्। एवमन्यान्यपि स्मृत्यन्तरोक्तानि विशेषेणान्वेषणीयानि ॥

१५ अतिकृच्छ्रमाह

**अयमेवातिकृच्छ्रः स्यात्पाणिपूरान्नभोजनः ॥ ३२० ॥**

एतद्धर्मक एव एकभक्तादिप्राजापत्यधर्मयुक्तोऽतिकृच्छ्रः स्यात्। इयांस्तु विशेषः। आद्ये त्र्यहत्रये पाणिपूरणमात्रमन्नं भुञ्जीत न पुनर्द्वाविंशत्यादि ग्रासान् ॥ अत्र च प्राप्तभोजनानुवादेन पाणिपूरान्नविधानादन्त्यत्र्यहेऽतिदेशप्राप्त उपवासोऽप्रतिपक्ष एव ॥ अत्रापि पादशो व्यवस्था पूर्ववदेव द्रष्टव्या।
२० यत्तु **मनु**नोक्तम् (अ. ११ श्लो. २१३) " एकैकं ग्रासमश्नीयात्त्र्यहाणि त्रीणि पूर्ववत्। त्र्यहं चोपवसेदन्त्यमतिकृच्छ्रं चरन् द्विजः " ॥ इति, तत्पाणिपूरान्नपरिमितत्वादल्पत्वाच्छक्तविषयम् ॥ ३२० ॥

कृच्छ्रातिकृच्छ्रमाह

**कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम् ।**

एकविंशतिरात्रं पयसा वर्तनं कृच्छ्रातिकृच्छ्राख्यं व्रतं विज्ञेयम्। **गौतमेन** तु 'द्वादशरात्रमुदकेन वर्तनं कृच्छ्रातिकृच्छ्रमि'त्युक्तम् (अ. २६ सू. १५)। 'अब्भक्षस्तृतीयः स कृच्छ्राति-
२५ कृच्छ्रः ' इति (अ. २६ सू. २०)। अतश्च शक्त्यपेक्षया तयोर्व्यवस्था ॥

पराकमाह

**द्वादशाहोपवासेन पराकः परिकीर्तितः ॥ ३२१ ॥**

ऋज्वर्थोऽयमर्धश्लोकः ॥ ३२१ ॥

सौम्यकृच्छ्रमाह

**पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम् ।**
**एकरात्रोपवासश्च कृच्छ्रः सौम्योऽयमुच्यते ॥ ३२२ ॥**

पिण्याकोनिःसृततैलस्तिल ओदननिस्रावोदश्विदुदकसक्तूनां पञ्चानामेकैकं प्रतिदिवसमुपयुज्य षष्ठेऽह्नि उपवसेदेष सौम्याख्यः कृच्छ्रोऽभिधीयते । द्रव्यपरिमाणं तु प्राणयात्रामात्रनिबन्धनमधिगन्तव्यम् । ५ **जाबालेन** तु चतुरहव्यापी सौम्यकृच्छ्र उक्तः । " पिण्याकं सक्तवस्तक्रं चतुर्थेऽहन्यभोजनम् । वासो वै दक्षिणां दद्यात्सौम्योऽयं कृच्छ्र उच्यते " इति ॥ ३२२ ॥

तुलापुरुषाख्यं कृच्छ्रमाह

**एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम् ।**
**तुलापुरुष इत्येष ज्ञेयः पञ्चदशाहिकः ॥ ३२३ ॥** १०

एषां पिण्याकादीनां पञ्चानां क्रमेणै**कैकस्य** त्रिरात्राभ्यासेन पञ्चदशाहव्यापी तुलापुरुषाख्यः कृच्छ्रो वेदितव्यः । अत्र च पञ्चदशाहिकत्वविधानादुपवासस्य निवृत्तिः ॥ **यमेन** त्वेकविंशतिरात्रिकस्तुलापुरुष उक्तः । " आचाममथ पिण्याकं तक्रं चोदकसक्तुकान् । त्र्यहं त्र्यहं प्रयुञ्जानो वायुभक्षी त्र्यहद्वयम् ॥ एकविंशतिरात्रस्तु तुलापुरुष उच्यते " इति । अत्र **हारीता**द्युक्तेतिकर्तव्यता ग्रन्थगौरवभयान्न लिख्यते ॥ ३२३ ॥ १५

चान्द्रायणमाह

**तिथिवृद्ध्या चरेत्पिण्डान् शुक्ले शिख्यण्डसंमितान् ।**
**एकैकं ह्रासयेत्कृष्णे पिण्डं चान्द्रायणं चरन् ॥ ३२४ ॥**

चान्द्रायणाख्यं व्रतं कुर्वन् मयूराण्डपरिमितान् पिण्डान् शुक्ले आपूर्यमाणपक्षे तिथिवृद्ध्या चरेत् भक्षयेत् । यथा प्रतिपत्प्रभृतिषु चन्द्रकलानामेकैकशो वृद्धिरर्धमासे तद्वत्पिण्डानपि प्रतिपद्येको २० द्वितीयायां द्वावित्येवमेकैकशो वर्धयन् भक्षयेद्यावत्पौर्णमासी । ततः पञ्चदश्यां पञ्चदशग्रासान्भुक्त्वा ततः कृष्णपक्षे चतुर्दश प्रतिपदि द्वितीयायां त्रयोदशेत्येवमेकैकशो ग्रासान् ह्रासयन् अश्नीयात् यावच्चतुर्दशी । ततश्चतुर्दश्यामेकं ग्रासं ग्रसित्वा इन्दुक्षये अर्थादुपवसेत् । तथा च **वसिष्ठः** ( अ. २७ सू. २१ ) । " एकैकं वर्धयेत्पिण्डं शुक्ले कृष्णे च ह्रासयेत् । इन्दुक्षये न भुञ्जीत एष चान्द्रायणो विधिरिति " । चन्द्रस्यायनमिवायनं चरणं यस्मिन्कर्मणि ह्रासवृद्धिभ्यां तच्चान्द्रा- २५ यणम् । संज्ञायां दीर्घः । इदं च यववत् प्रान्तयोरणीयः मध्ये स्थवीय इति यवमध्यमिति कथ्यते । एतदेव व्रतं यदा कृष्णपक्षप्रतिपदि प्रक्रम्य पूर्वोक्तक्रमेणानुष्ठीयते तदा पिपीलिकावन्मध्ये ह्रसिष्ठं भवतीति पिपीलिकमध्यमिति कथ्यते । तथा हि पूर्वोक्तक्रमेण कृष्णप्रतिपदि चतुर्दश ग्रासान् भुक्त्वा एकैकग्रासापचयेन चतुर्दशीं यावद्भुञ्जीत । ततश्चतुर्दश्यामेकं ग्रासं ग्रसित्वाऽमावास्यायामुपोष्य शुक्लप्रतिपदि एकमेव ग्रासं प्राश्नीयात् । तत एकोपचयभोजनेन पक्षशेषे निर्वर्त्यमाने पौर्णमास्यां ३०

पञ्चदश ग्रासाः संपद्यन्त इति युक्तैव पिपीलिकामध्यता । तथा च **वसिष्ठः** । ( अ. २३ सू. ४५ ) "मासस्य कृष्णपक्षादौ ग्रासानद्याच्चतुर्दश । ग्रासापचयभोजी सन्पक्षशेषं समापयेत् ॥ तथैव शुक्लपक्षादौ ग्रासं भुञ्जीत चापरम् । ग्रासोपचयभोजी सन्पक्षशेषं समापयेदिति " ॥

यदा त्वेकस्मिन्पक्षे तिथिवृद्धिह्रासवशात् षोडशदिनानि भवन्ति चतुर्दश वा तदा ग्रासाना- ५ मपि वृद्धिह्रासौ वेदितव्यौ । 'तिथिवृद्ध्या पिण्डांश्चरेदि'ति नियमात् । **गौतमेनात्र** विशेषो दर्शितः (अ. २८ सू. १–१५) । "अथातश्चान्द्रायणं । तस्योक्तो विधिः कृच्छ्रे । वपनं च व्रतं चरेत्। श्वोभूतां पौर्णमासीमुपवसेत् । 'आप्यायस्व' 'सं ते पयांसि' 'नवो नव' इति चैताभिस्तर्पणमाज्यहोमो हविषश्चानुमन्त्रणमुपस्थानं च चन्द्रमसः । 'यद्देवादेवहेडनमिति' चतसृभिराज्यं जुहुयात् । 'देवकृतस्येति' चान्ते समिद्भिः ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐतपः ॐसत्यं यशः श्रीऊर्क् इट् ओजः १० तेजः पुरुषः धर्मः शिव इत्येतैर्ग्रासानुमन्त्रणं प्रतिमन्त्रं मनसा । नमः स्वाहेति वा सर्वान् एतैरेव ग्रासा- न्भुञ्जीत । तद्ग्रासप्रमाणमास्याविकारेण । चरुभैक्षसक्तुकणयावकशाकपयोदधिघृतमूलफलोदकानि हवींषि उत्तरोत्तरं प्रशस्तानि । पौर्णमास्यां पञ्चदश ग्रासान् भुक्त्वा एकैकापचयेनापरपक्षमश्नीयात् । अमा- वास्यायामुपोष्यैकैकोपचयेन पूर्वपक्षं । विपरीतमेकेषाम् एष चान्द्रायणो मासः " इति ।

अत्र ग्रासप्रमाणमास्याविकारेणेति यदुक्तं तद्बालाभिप्रायम् । तेषां शिख्यण्डपरिमितपञ्चदश- १५ ग्रासभोजनाशक्तेः । क्षीरादिहविष्षु शिख्यण्डपरिमितत्वं पर्णपुटकादिना संपादनीयम् । तथा कुक्कुटा- ण्डार्द्रामलकादीनि तु ग्रासपरिमाणानि स्मृत्यन्तरोक्तानि शक्तिविषयाणि शिख्यण्डपरिमाणाल्लघुत्वात्ते- षाम् । यत्पुनरत्र 'श्वोभूतां पौर्णमासीमुपवसेदि'त्यत्र चतुर्दश्यामुपवासमभिधाय पौर्णमास्यां 'पञ्चदशग्रासान्भुक्त्वे'त्यादिना द्वात्रिंशदहरात्मकत्वं चान्द्रायणस्योक्तं तत्पक्षान्तरप्रदर्शनार्थं न सार्व- त्रिकम् । **योगीश्वर**वचनानुरोधेन त्रिंशदहरात्मकस्य दर्शितत्वात् । यदेतत्सार्वत्रिकं स्यात्तदा नैरन्तर्येण २० संवत्सरे चान्द्रायणानुष्ठानानुपपत्तिः स्यात् चन्द्रगत्यनुवर्तनानुपपत्तिश्च ॥ ३२४ ॥

चान्द्रायणान्तरमाह

**यथाकथञ्चित्पिण्डानां चत्वारिंशच्छतद्वयम् ।**
**मासेनैवोपभुञ्जीत चान्द्रायणमथापरम् ॥ ३२५ ॥**

**पिण्डानां चत्वारिंशद**धिकं **शतद्वयं मासेन भुञ्जीत । यथाकथञ्चि**त्प्रतिदिनं मध्या- २५ ह्नेऽष्टौ ग्रासान् अथवा नक्तंदिनयोश्चतुरश्चतुरो वा अथवैकस्मिंश्चतुरोऽपरस्मिन्द्वादश तथैकरात्रमुपो- ष्यापरस्मिन्षोडश वेत्यादिप्रकाराणामन्यतमेन शक्त्याद्यपेक्षया भुञ्जीतेत्येतत्पूर्वोक्तचान्द्रायणद्वयादपरं चान्द्रायणम् । अतस्तयोर्नायं ग्राससंख्यानियमः । किंतु पञ्चविंशत्यधिकशतद्वयसंख्यैव । **मनुना** चैते प्रकारा दर्शिताः । ( अ. ११ श्लो. २१८–२२० )

"अष्टावष्टौ समश्नीयात्पिण्डान्मध्यन्दिने स्थिते । नियतात्मा हविष्यस्य यतिचान्द्रायणं चरेत् ॥
३० "चतुरः प्रातरश्नीयात्पिण्डान्विप्रः समाहितः । चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं चरेत् ॥
"यथाकथञ्चित्पिण्डानां तिस्रोऽशीतीः समाहितः । मासेनाश्नन्हविष्यस्य चन्द्रस्यैति सलोकताम्॥"

इति" । तथा चत्वारिंशच्छतद्वयन्यूनसंख्याग्राससंपाद्यस्यापि संग्रहार्थमपरग्रहणम् । यथाह **यमः** । " त्रींस्त्रीन्पिण्डान्समश्नीयान्नियतात्मा दृढव्रतः । हविष्यान्नस्य वै मासमृषिचान्द्रायणं स्मृतमिति" ।

एषु च यतिचान्द्रायणप्रभृतिषु न चन्द्रगत्यनुसरणमपेक्षितम् । अतस्त्रिंशद्दिनात्मकसाधारणेन मासेन नैरन्तर्येण चान्द्रायणानुष्ठाने यदि कथंचित्तिथिवृद्धिह्रासवशात् पञ्चम्यादिष्वारम्भो भवति तथापि न दोषः । यदपि सोमायनाख्यं मासव्रतं **मार्कण्डेयेनो**क्तम् । " गोक्षीरं सप्तरात्रं तु पिबेत्स्तनचतुष्ट- ५ यात् । स्तनत्रयात्सप्तरात्रं सप्तरात्रं स्तनद्वयात् ॥ स्तनेनैकेन षड्रात्रं त्रिरात्रं वायुभुग्भवेत् । एतत्सोमायनं नाम व्रतं कल्मषनाशनमिति" ॥ स्मृत्यन्तरे 'सप्ताहं चेत्येतद्गोस्तनमखिलमथ त्रीन्स्तनान्द्वौ तथैकं कुर्यात्त्रीं-श्चोपवासान्यदि भवति तदा मासि सोमायनं तत्'इति तदपि चान्द्रायणधर्मकमेव । **हारीतेन** 'अथातश्चान्द्रा-यणमनुक्रमिष्य' इत्यादिना सेतिकर्तव्यताकं चान्द्रायणमभिधायैवमेव सोमायनमित्यतिदेशाभिधानात् । यत्पुनस्तेन कृष्णचतुर्थीमारभ्य शुक्लद्वादशीपर्यन्तं सोमायनमुक्तम् । चतुर्थीप्रभृतिचतुःस्तनेन १० त्रिरात्रं त्रिस्तनेन त्रिरात्रं द्विस्तनेन त्रिरात्रं एकस्तनेन त्रिरात्रमेवमेकस्तनप्रभृति पुनश्चतुःस्तनान्तं "या ते सोम चतुर्थी तनूस्तया नः पाहि तस्यै नमः स्वाहा, या ते सोम पञ्चमी षष्ठीत्येवं यागार्थास्तिथिहोमा एवं स्तुत्वा एनोभ्यः पूतश्चन्द्रमसः समानतां सलोकतां सायुज्यं च गच्छतीति' चतुर्विंशतिदिनात्मकं सोमायनमुक्तं तदशक्तविषयम् ॥ ३२५ ॥

अथ कृच्छ्रचान्द्रायणसाधारणीमितिकर्तव्यतामाह　　१५

**कुर्यात्त्रिषवणस्नायी कृच्छ्रं चान्द्रायणं तथा ।**
**पवित्राणि जपेत्पिण्डान्गायत्र्या चाभिमन्त्रयेत् ॥ ३२६ ॥**

**कृच्छ्रं** प्राजापत्यादिकं चान्द्रायणं वा **त्रिषवणस्नानयुक्तः कुर्यात्** । एतच्च तप्तकृच्छ्र-व्यतिरेकेण । तत्र 'सकृत्स्नायी समाहितः' इति **मनुना** विशेषाभिधानात् ॥ यत्पुनः **शङ्खेन** कृच्छ्रेषु त्रिषवणस्नानमभिहितम् । 'त्रिरह्नि त्रिर्निशायां तु सवासा जलमाविशेदिति' तदशक्त- २० विषयम् । यत्पुन**र्वैशम्पायनेन** द्वैकालिकं स्नानमुक्तम् । 'स्नानं द्विकालमेव स्यात्त्रिकालं वा द्विजन्मनः' इति तत्त्रिषवणस्नानाशक्तस्य वेदितव्यम् । यत्पुन**र्गार्ग्येणो**क्तम् । 'एकवासाश्चरेद्भैक्षं स्नात्वा वासो न पीडयेत्' तदपि शक्तस्यैव । 'एकवासा आर्द्रवासा वा लब्धाशीः स्थण्डिलेशयः' इत्येकवस्त्रताया अपि **शङ्खेन** पाक्षिकत्वेनाभिधानात् । स्नाने च **हारीतेन** विशेष उक्तः । 'त्र्यवरं शुद्धवतीभिः स्नात्वाऽघमर्षणमन्तर्जले अपित्वा धौतमहतं वासः परिधाय साम्ना सौम्येनादित्यमुपतिष्ठेदिति' । २५

स्नानानन्तरं च पवित्राणि जपेत् । पवित्राणि च अघमर्षणं 'देवकृतः शुद्धवत्यस्तरत्समा' ( अ. २८ सू. ११ ) इत्यादीनि **वसिष्ठादि**प्रतिपादितानामन्यतमान्यर्थाविरुद्धेषु कालेषु अन्तर्जले जपेत् । "सावित्रीं च-जपेन्नित्यं पवित्राणि च शक्तितः" इति **मनु**स्मरणात् ( अ. ११ श्लो. २२५ ) । यत्तु **गौतमेनो**क्तम् ( अ. २६ सू. ९ ) । 'रौरवयोधाजपे नित्यं प्रयुञ्जीतेति' तदपि पवित्रत्वादेवोक्तं न पुनर्नियमाय । तथा सति श्रुत्यन्तरमूलत्वकल्पनाप्रसङ्गात् । अतोऽनधीतसाम- ३० वेदेन गायत्र्यादिकमेव जप्तव्यम् । यत् पै 'नमो हमाय मोहमाय' इत्यादि पठित्वा 'एता एवाज्याहुतय' इत्युक्तं तदपि न नैयमिकं किंतु "महाव्याहृतिभिर्होमः कर्तव्यः स्वयमन्वहमिति" **मनुना** महाव्याहृ-

तिभिर्होमविधानात् ( अ. ११ श्लो. २२२ )॥ तथा **षट्त्रिंशन्मते**ऽप्युक्तम् । "जपहोमादि यत्किंचित्कृच्छ्रोक्तं संभवेन्न चेत् । सर्वं व्याहृतिभिः कुर्याद्गायत्र्या प्रणवेन चेति" । आदिग्रहणादुदकतर्पणादित्योपस्थानादेर्ग्रहणम् । अत एव **वैशम्पायनः** । 'स्नात्वोपतिष्ठेदादित्यं सौरीभिस्तु कृताञ्जलिरिति" ॥ एवमन्येष्वपि विरोधिपदार्थेषु विकल्प आश्रयणीयः । अविरोधिषु समुच्चयः ।

शाखान्तराधिकरणन्यायेन सर्वस्मृतिप्रत्ययत्वात्कर्मणः । जपसंख्यायां विशेषस्तेनैव दर्शितः । "ऋषभं विरजं चैव तथा चैवाघमर्षणम् । गायत्रीं वा जपेद्देवीं पवित्रां वेदमातरम् ॥ शतमष्टशतं वाऽपि सहस्रमथवा परम् । उपांशु मनसा वाऽपि तर्पयेत्पितृदेवताः ॥ मनुष्यांश्चैव भूतानि प्रणम्य शिरसा ततः" इति ॥ तथा पिण्डांश्च प्रत्येकं गायत्र्या चाभिमन्त्रयेत् । तथा **यमेना**पि विशेष उक्तः । "अङ्गुल्यग्रस्थितं पिण्डं गायत्र्या चाभिमन्त्रितम् । प्राश्याचम्य पुनः कुर्यादन्यस्याप्यभिमन्त्रणमिति" । अतश्च ॐभूर्भुवःस्वरित्यादिभि**र्गौतमो**क्तैरभिमन्त्रणमन्त्रैः सहास्य विकल्प उक्तः । यत्पुनः 'राप्यायस्व' 'संतेपयांसी'त्यादिभिः पिण्डकरणात्पूर्वं हविषोऽभिमन्त्रणमुक्तं तद्भिन्नकार्यत्वात्समुच्चीयते ।

एतानि कृच्छ्रादिव्रतानि यदा प्रायश्चित्तार्थमनुष्ठीयन्ते तदा केशादिवपनपूर्वकं परिगृहीतव्यानि । 'वपनं व्रतं चरेदिति' **गौतम**स्मरणात् ( अ. २७ सू. ३ ) । अभ्युदयार्थे तु नैव वपनम् । **वसिष्ठेना**प्यत्र विशेष उक्तः ( अ. २४ सू, ४–५ ) । "कृच्छ्राणां व्रतरूपाणां श्मश्रुकेशादि वापयेत् । कुक्षिरोमशिखावर्ज्यमिति' । कृच्छ्राणां व्रतरूपाणि वपनादीन्यङ्गानि वक्ष्यन्त इति शेषः ।

पर्षदुपदिष्टव्रतग्रहणं च व्रतानुष्ठानदिवसात्पूर्वेद्युः सायाह्ने कार्यम् । यथाह **वसिष्ठः**—

"सर्वपापेषु सर्वेषां व्रतानां विधिपूर्वकम् । ग्रहणं संप्रवक्ष्यामि प्रायश्चित्ते चिकीर्षिते ॥

"दिनान्ते नखरोमादीन्प्रवाप्य स्नानमाचरेत् । भस्मगोमयमृद्वारिपञ्चगव्यादिकल्पितैः ॥

"मलापकर्षणं कार्यं बाह्यशौचोपसिद्धये । दन्तधावनपूर्वेण पञ्चगव्येन संयुतम् ॥

"व्रतं निशामुखे ग्राह्यं बहिस्तारकदर्शने । आचम्यातः परं मौनी ध्यायन्दुष्कृतमात्मनः ॥

"मनः संतापनं तीव्रमुद्वहेच्छोकमन्ततः" इति । बहिरिति ग्रामाद्बहिर्निष्क्रम्य ।

स्त्रियाऽप्येवमेव व्रतपरिग्रहः कार्यः । केशश्मश्रुलोमनखवपनं तु नास्ति । 'चान्द्रायणादिष्वेतदेव स्त्रियाः केशवपनवर्ज्यमिति' **बौधायन**स्मरणात् ( २।१।७१ ) ॥

वपनानिच्छोस्तु **हारीतेन** विशेष उक्तः । "राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः । केशानां वपनं कृत्वा प्रायश्चित्तं समाचरेत् ॥ केशानां रक्षणार्थं तु द्विगुणं व्रतमाचरेत् । द्विगुणे तु व्रते चीर्णे दक्षिणा द्विगुणा भवेदिति" ॥

एतच्च महापातकादिदोषविशेषाभिप्रायेण द्रष्टव्यम् । "विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनम् । व्रते महापातकिनो गोहन्तुश्चावकीर्णिनः" इति **मनु**स्मरणात् ॥ **जाबालेना**प्यत्र विशेष उक्तः । "आरम्भे सर्वकृच्छ्राणां समाप्तौ च विशेषतः । अनेनैव च शालाग्नौ जुहुयाद्व्याहृतीः पृथक् ॥ श्राद्धं कुर्याद्व्रतान्ते तु गोहिरण्यादि दक्षिणा" इति ॥ **यमेना**प्यत्र विशेषोऽभिहितः । "पश्चात्तापो निवृत्तिश्च

स्नानं चाङ्गतयोदितम् । नैमित्तिकानां सर्वेषां यथा चैवानुकीर्तनमिति " तथा ॥ " गात्राभ्यङ्गशिरोभ्यङ्गताम्बूलमनुलेपनम् । व्रतस्थो वर्जयेत्सर्वं यच्चान्यद्बलरागकृदिति " । एवमादिकर्तव्यतांजातं स्मृत्यन्तरादन्वेष्टव्यम् ।

एवमनेन विधिना व्रतं गृहीत्वाऽवश्यं परिसमापनीयम् । अन्यथा तु प्रत्यवायः । " पूर्वं व्रतं गृहीत्वा तु नाचरेत्काममोहितः । जीवन्भवति चाण्डालो मृतः श्वा चैव जायते " इति **छागलेय**स्मरणात् । इत्यलं प्रपञ्चेन ॥ ३२६ ॥

इत्थमुक्तविनियोगस्य चान्द्रायणादेः स्वरूपमभिधाय कार्यान्तरेऽपि विनियोगमाह

**अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन तु ।**
**धर्मार्थं यश्चरेदेतच्चन्द्रस्यैति सलोकताम् ॥ ३२७ ॥**

आदिश्यत इत्यादिष्टं प्रायश्चित्तं न विद्यते आदिष्टं येषु पापेषु तेषु चान्द्रायणेन शुद्धिः। चशब्दात्प्राजापत्यादिभिः कृच्छ्रैरैन्दवसहितैस्तन्निरपेक्षैर्वा शुद्धिः । तथा च **षट्त्रिंशन्मते**ऽभिहितम् । " यानि कानि च पापानि गुरोर्गुरुतराणि च । कृच्छ्रातिकृच्छ्रचान्द्रैस्तैः शोध्यन्ते **मनु**रब्रवीदिति " त्रयाणां समुच्चय उक्तः प्रतिपादितः । **उशनसा** तु द्वयोः समुच्चय उक्तः । " दुरितानां दुरिष्टानां पापानां महतामपि । कृच्छ्रं चान्द्रायणं चैव सर्वपापप्रणाशनमिति " । दुरितमुपपातकम् । दुरिष्टं पातकम् । **गौतमेन** तु ' कृच्छ्रातिकृच्छ्रौ चान्द्रायणमिति सर्वप्रायश्चित्तमिति ' विसमासकरणेनैन्दवनिरपेक्षता कृच्छ्रातिकृच्छ्रयोः सूचिता ( अ. १९ सू. २० ) । चान्द्रायणस्य निरपेक्षता इतिशब्देन च त्रयाणां समुच्चयः । केवलप्राजापत्यस्य तु निरपेक्षं **चतुर्विंशतिम**तेऽभिहितम् । ' लघुदोषे त्वनादिष्टे प्राजापत्यं समाचरेदिति' । **गौतमेना**पि प्राजापत्यादेर्नैरपेक्ष्यमुक्तम् (अ. २६सू. २१ )। 'प्रथमं चरित्वा शुचिः पूतः कर्मण्यो भवति । द्वितीयं चरित्वा यदन्यन्महापातकेभ्यः पापं कुरुते तस्मात्प्रमुच्यते । तृतीयं चरित्वा सर्वस्मादेनसो मुच्यत इति ' महापातकादपीत्यभिप्रेतम् । **मनुना**ऽप्युक्तम् । ( अ. ११ श्लो. २१५ ) ' पराको नाम कृच्छ्रोऽयं सर्वपापापनोदनः ' इति । **हारीते**नाप्युक्तम् । "चान्द्रायणं यावकश्च तुलापुरुष एव च । गवां चैवानुगमनं सर्वपापप्रणाशनम् " ॥ तथा " गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । एकरात्रोपवासश्च श्वपाकमपि शोधयेत् " । तथा तप्तकृच्छ्रमधिकृत्य तेनैवोक्तम् । " एष कृच्छ्रो द्विरभ्यस्तः पातकेभ्यः प्रमोचयेत् । त्रिरभ्यस्तो यथान्यायं शूद्रहत्यां व्यपोहतीति " । **उशनसोक्त**म् । " यत्रोक्तं यत्र वा नोक्तं महापातकनाशनम् । प्राजापत्येन कृच्छ्रेण शोधयेन्नात्र संशयः " इति ।

एतानि प्राजापत्यादीनि अनादिष्टेषूपपातकादिषु सकृदभ्यासापेक्षया व्यस्तानि समस्तानि वा योजनीयानि । तथा आदिष्टव्रतेष्वपि महापातकादिषु अभ्यासापेक्षया योजनीयानि । अत एव **यमे**नोक्तम् । ' यत्रोक्तमि'त्यादि । **गौतमे**नाप्युक्तनिष्कृतीनां संग्रहार्थं सर्वप्रायश्चित्तग्रहणं कृतम् । तथा यदपि **तेनै**वोक्तम् ( अ. २६ सू. २२ ) । 'द्वितीयं चरित्वा यदन्यन्महापातकेभ्यः पापं कुरुते तस्मात्प्रमुच्यत ' इत्युक्त्वा ' तृतीयं चरित्वा सर्वस्मादेनसो मुच्यत ' इति, तदपि महापातकाभिप्रायं

न तु क्षुद्रपातकाभिप्रायम् । न च महापातकमनुक्तनिष्कृतिकं संभवति तस्मादुक्तनिष्कृतिकेष्वपि प्राजापत्यादयो योजनीयाः ।

तत्र द्वादशवार्षिकव्रते द्वादशद्वादशदिनानि एकैकं प्राजापत्यं च परिकल्प्य गण्यमाने प्राजापत्यानां षष्ट्यधिकशतत्रयं द्वादशवार्षिके वैकल्पिकमनुष्ठेयं भवति। तदशक्तौ तावत्य एव धेनवो दातव्याः। ५ तदसंभवे निष्काणां षष्ट्यधिकशतत्रयं दातव्यम् । तथा **स्मृत्यन्तरम्** । "प्राजापत्यक्रियाशक्तो धेनुं दद्याद्विचक्षणः । धेनोरभावे दातव्यं मूल्यं तुल्यमसंशयम्" ॥ मूल्यार्धमपि निष्कं वा तदर्धं वा शक्त्यपेक्षया दातव्यम् । 'गवामभावे निष्कं स्यात्तदर्धं पाद एव वेति' स्मरणात् । मूल्यदानस्याप्यशक्तौ तावन्तो वेदवासाः कार्याः। तत्राप्यशक्तौ गायत्रीजपः षट्त्रिंशल्लक्षसंख्याकः कार्यः । "कृच्छ्रोऽयुतं तु गायत्र्या उदवासास्तथैव च । धेनुप्रदानं विप्राय सममेतच्चतुष्टयमिति" **पराशर**स्मरणात् ।

१० यत्तु **चतुर्विंशतिमते**ऽभिहितम् । "गायत्र्यास्तु जपन्कोटिं ब्रह्महत्यां व्यपोहति । लक्षाशीतिं जपेद्यस्तु सुरापानाद्विमुच्यते ॥ पुनाति हेमहर्तारं गायत्र्या लक्षसप्ततिः । गायत्र्याः षष्टिभिर्लक्षैर्मुच्यते गुरुतल्पगः" । इति, तत् द्वादशवार्षिकतुल्याविधानतयोक्तं । न पुनरशक्तविषयमिति न विरोधः । एवः मन्येऽपि । 'कृच्छ्रो देव्ययुतं चैव प्राणायामशतद्वयम् । तिलहोमसहस्रं तु वेदपारायणं तथे'त्यादयप्रत्याम्नायाश्चतुर्विंशतिमन्वादिशास्त्राभिहिताः षष्ट्यधिकात्रिशतगुणिता महापातकेषु बोद्धव्याः । अति- १५ पातकेषु सप्तत्यधिकशतद्वयं प्राजापत्यानां कर्तव्यम् । तावन्तो वा धेन्वादयः प्रत्याम्नायाः । पातकेषु साशीतिशतं प्राजापत्यानां प्रत्याम्नायाः धेन्वादयस्तावन्त एव वा । तथा **चतुर्विंशतिमते**ऽभिहितम् । "जन्मप्रभृति पापानि बहूनि विविधानि च । कृत्वाऽर्वाग् ब्रह्महत्यायाः षडब्दं व्रतमाचरेत् ॥ प्रत्याम्नाये गवां देयं साशीति धनिना शतम् । तथाऽष्टादशलक्षाणि गायत्र्या वा जपेद्बुधः" इति । इदमेव- द्वादशवार्षिके व्रते द्वादशद्वादशदिनैरेकैकप्राजापत्यकल्पनायां लिङ्गम् ।

२० एवमुपपातकेषु त्रैवार्षिकप्रायश्चित्तविषयभूतेषु नवति प्राजापत्यास्तावन्तः प्रत्याम्नायाः । त्रैमासिक विषये पुनः सार्धसप्तप्राजापत्याः प्रत्याम्नायाश्च धेनूदवासादयस्तावन्त एव । मासिकव्रतविषये तु सार्धं प्राजापत्यद्वयं तावानेव वा प्रत्याम्नायः । चान्द्रायणविषयभूतेषु पुनरुपपातकेषु प्राजापत्यत्रयम् । तदशक्तस्य प्रत्याम्नायस्तावानेव । यत्पुनश्च**तुर्विंशति**मतेऽभिहितम् । "अष्टौ चान्द्रायणे देयाः प्रत्याम्नायविधौ सदेति" तदपि धनिनः पिपीलिकामध्यादिचान्द्रायणप्रत्याम्नायविषयम् । मासाति- २५ कृच्छ्रविषयभूतेषु पुनरुपपातकेषु सार्धसप्तप्राजापत्याः प्रत्याम्नायाश्च धेन्वादयस्तावन्त एव । "प्राजापत्ये तु गामेकां दद्यात्सान्तपने द्वयम् । पराकतप्तकृच्छ्रातिकृच्छ्रे तिस्रस्तु गास्तथेति" **चतुर्विंशतिमते**ऽभिधानात् ।

एतच्चैकैकं ग्रासमश्नीयादित्यामलकपरिमितैकैकग्रासपक्षे वेदितव्यम् । पाणिपूरान्नभोजनपक्षे पुनर्धेनुद्वयमेव । प्राजापत्यस्य षडुपवासतुल्यत्वात् ॥ तद्द्विगुणत्वाच्चातिकृच्छ्रस्य । यद्यपि नवसु दिनेषु ३० पाणिपूरान्नभोजनं तथाऽपि नैरन्तर्येण द्वादशदिवसानुष्ठाने क्लेशातिशयात्षडहोपवाससमानप्राजापत्यद्वयतुल्यत्वमेव । प्राजापत्यस्य च षडुपवासतुल्यत्वं युक्तमेव । तथा हि । प्रथमे त्र्यहे सायन्तनभोजनत्रयनिवृत्तावेकोपवाससंपत्तिः । द्वितीये त्र्यहे प्रातःकालभोजनत्रयनिवृत्तिपरस्य । तथा च अयाचितत्र्यहेऽपि

सायन्तनभोजनत्रयवर्जनेऽपरस्येत्येवं नवभिर्दिनैरुपवासत्रयम् । पुनश्चान्त्यत्र्यहे चोपवासत्रयमिति युक्तं षडुपवासतुल्यत्वम् । ऋषभैकादशगोदानसहितत्रिरात्रोपवासात्मकगोवधव्रते तु सार्धैकादशप्राजापत्यास्तावत्संख्याकाश्चोदवासादयः प्रत्याम्नायाः । मासं पयोव्रते तु सार्धप्राजापत्यद्वयम् । पराकात्मके तूपपातकव्रते प्राजापत्यत्रयं पराकतप्तातिकृच्छ्रस्थाने कृच्छ्रत्रयं चरेत् । "सान्तपनस्य चाध्यर्धमशक्तौ व्रतमाचरेदिति" **षट्त्रिंशन्मते**ऽभिधानात् । चान्द्रायणपराककृच्छ्रातिकृच्छ्रास्तु प्राजापत्यत्रयात्मका द्वादश- ५ वार्षिकव्रतस्थाने विंशत्युत्तरशतसंख्या अनुष्ठेयाः । तत्प्रत्याम्नायास्तु धेन्वादयस्त्रिगुणाः । अतिपातकेषु नवतिसंख्याकाश्चान्द्रायणादयः । तत्समेषु पुनः पातकपदाभिधेयेषु षष्टिसंख्याः । उपपातकेषु त्रैवार्षिकविषयेषु त्रिंशत्संख्याः । त्रैमासिके गोवधव्रतस्थाने गोमूत्रस्नानादीनां कर्तव्यताबाहुल्याच्चान्द्रायणादित्रयम् । मासिकव्रते तु **योगीश्वरोक्ते** एकमेव चान्द्रायणम् । धेनूदवासादिप्रत्याम्नायस्तु सर्वत्र त्रिगुण एव । प्रकीर्णकेषु पुनः प्रतिपदोक्तप्रायश्चित्तानुसारेण प्राजापत्यं पादादिकॢप्त्या योज- १० नीयम् । आवृत्तौ पुनश्चान्द्रायणादिकमिति । एतद्दिगवलम्बनेनान्यत्रापि कल्पना कार्या । यत्तु**नवबृहस्पतिनो**क्तम् । "जन्मप्रभृति यत्किञ्चित्पातकं चोपपातकम् । तावदावर्तयेत्कृच्छ्रं यावत्षष्टिगुणं भवेदिति" । ततः 'द्वे परदारे' इति **गौतमोक्त**द्विवार्षिकसमानविषयम् (अ. २३ सू. २९) । तथा त्रैमासिकादिविषयभूतोपपातकावृत्तिविषयं वा । पातकपदाभिधेयचाण्डालादिस्त्रीगमने द्विरभ्यासविषयं वा । तत्र 'ज्ञानात् कृच्छ्राब्दमुद्दिष्टमज्ञानादैन्दवद्वयमिति' सकृद्बुद्धिपूर्वगमने कृच्छ्राब्दविधानात् १५ तदभ्यासे द्विवर्षतुल्यषष्टिकृच्छ्रविधानं युक्तमेव । यत्तु **सुमन्तुनो**क्तम् "यदप्यसकृदभ्यस्तं बुद्धिपूर्वमघं महत् । तच्छुद्ध्यत्यब्दकृच्छ्रेण महतः पातकादृते" इति तदप्युपपातकावृत्तिविषयं तथा 'अज्ञानादैन्दवद्वयमिति' यमोक्तैन्दवद्वयविषयभूतपातकावृत्तिविषयं वा ।

यस्तु तपस्यसमर्थो धान्यसमृद्धश्च स कृच्छ्रादिव्रतानि द्विजाग्र्यभोजनदानेन संपादयेत् । तथा हि **स्मृत्यन्तरम्** । २०

"कृच्छ्रे पञ्चातिकृच्छ्रे त्रिगुणमहरहस्त्रिंशदेवं तृतीये

"चत्वारिंशच्च तप्ते त्रिगुणितगुणिता विंशतिः स्यात्पराके ।

"कृच्छ्रे सान्तापनाख्ये भवति षडधिका विंशतिः सैव हीना

"द्वाभ्यां चान्द्रायणे स्यात्तपसि कुशबलो भोजयेद्विप्रमुख्यानिति" ।

अहरहरिति सर्वत्र संबन्धनीयम् । २५

तृतीयः कृच्छ्रातिकृच्छ्रः । अत्र प्राजापत्यदिवसकल्पनया विद्वद्विप्राणां षष्टिभोजनं भवति ।

यत्तु **चतुर्विंशतिमते**ऽभिहितम् । "विप्रा द्वादश वा भोज्याः पावकेष्टिस्तथैव च । अन्या वा पावनी काचित्समान्याहुर्मनीषिणः" इति प्राजापत्यस्थाने द्वादशानां विप्राणां भोजनमुक्तं तन्निर्धनविषयम् । यच्चान्द्रायणस्यापि तत्रैव प्रत्याम्नायमुक्तम् । "चान्द्रायणं मृगारेष्टिः पवित्रेष्टिस्तथैव च । मित्रविन्दापशुश्चैव कृच्छ्रं मासत्रयम्॥" तथा "नित्यनैमित्तिकानां च काम्यानां चैव कर्मणाम् । इष्टीनां पशु- ३ बन्धानामभावे चरवः स्मृता" ॥ इति, तदपि चान्द्रायणाशक्तस्य । यत्तु कृच्छ्रं मासत्रयं तथेति

कृच्छ्राष्टकं प्रत्याम्नातं तदपि जरठमूर्खविषयम् । 'चान्द्रायणं त्रिभिः कृच्छ्रैरिति' दर्शितत्वादित्यलं प्रपञ्चेन । प्रकृतमनुसरामः ।

यस्त्वभ्युदयकामो धर्मार्थकाम्यनियोगानिष्पत्त्यर्थं एतच्चान्द्रायणमनुतिष्ठति न पुनः प्रायश्चित्तार्थमसौ चन्द्रसालोक्यं स्वर्गविशेषं प्राप्नोति । एतच्च संवत्सरावृत्त्यभिप्रायेण । 'एकमाप्त्वा विपापो विपाप्मा ५ सर्वमेनो हन्ति । द्वितीयमाप्त्वा दशपूर्वान् दशापरान् आत्मानं चैकविंशं पंक्तिं च पुनाति । संवत्सरं चाप्त्वा चन्द्रमसः सलोकतामाप्नोतीति' **गौतमस्मरणात्** (अ. २७ सू. १६–१८) ॥ ३२७ ॥

किंचाह

**कृच्छ्रकृद्धर्मकामस्तु महतीं श्रियमाप्नुयात् ।**
**यथा गुरुक्रतुफलं प्राप्नोति सुसमाहितः ॥ ३२८ ॥**

१० यस्त्वभ्युदयकामः प्राजापत्यादिकृच्छ्राननुतिष्ठति स महतीं राज्यादिलक्षणां श्रियमनुभवति । यथा गुरुक्रतूनां राजसूयादीनां कर्ता तत्फलं स्वाराज्यादिलक्षणं महत्फलं लभते तथाऽयमपि सुसमाहितः सकलाङ्गकलापमविकलमनुतिष्ठन्निति फलमहिमप्रकाशनार्थं क्रतुदृष्टान्तकीर्तनम् । 'सुसमाहित' इत्यनेनाविकलशास्त्रानुष्ठानं वदन्काम्यकर्मतयाऽङ्गवैकल्ये फलासिद्धिं द्योतयति । अतो नात्र प्रायश्चित्तेष्विव यावत्संभवाङ्गानुष्ठानमङ्गीकरणीयमिति दूरोत्सारितं प्रत्याम्नायोपादानम् । कृच्छ्राद्यनुष्ठानावृत्तौ १५ त्वधिकारिणः फलावृत्तिः कर्मण्यारम्भभाव्यत्वादिति न्यायलभ्या स्थितैवेति नेदमविवक्षितम् ॥ ३२८ ॥

प्रागदिनाखिलार्थोपसंहारव्याजेन धर्मशास्त्रधारणादिविधीन्सार्थवादान्
प्रार्थनावरदानरूपेण प्रतिपादयितुमाह

**श्रुत्वैतानृषयो धर्मान्याज्ञवल्क्येन भाषितान् ।**
**इदमूचुर्महात्मानं योगीन्द्रममितौजसम् ॥ ३२९ ॥**

२० अत्र हि वर्णाश्रमादिव्यावृत्ता धर्माः षट्प्रकाराः प्रतिपादिताः तानखिलान् योगीश्वरभाषितान् ऋषयः श्रुत्वा प्रहर्षोत्फुल्ललोचनास्तं महिमगुणशालिनमचिन्तनीयशक्तिविभवमिदमभिधास्यमानमूचिवांसः ॥ ३२९ ॥

**य इदं धारयिष्यन्ति धर्मशास्त्रमतन्द्रिताः ।**
**इह लोके यशः प्राप्य ते यास्यन्ति त्रिविष्टपम् ॥ ३३० ॥**
२५ **विद्यार्थी प्राप्नुयाद्विद्यां धनकामो धनं तथा ।**
**आयुष्कामस्तथैवायुः श्रीकामो महतीं श्रियम् ॥ ३३१ ॥**
**श्लोकत्रयमपि ह्यस्माद्यः श्राद्धे श्रावयिष्यति ।**
**पितॄणां तस्य तृप्तिः स्यादक्षय्या नात्र संशयः ॥ ३३२ ॥**

**ब्राह्मणः पात्रतां याति क्षत्रियो विजयी भवेत् ।**
**वैश्यश्च धान्यधनवानस्य शास्त्रस्य धारणात् ॥ ३३३ ॥**

इत्थमृज्वर्थैः श्लोकैः सामश्रवःप्रभृतयोऽनेकधा प्रार्थयन्तेस्म ॥३३०॥३३१॥३३२॥३३३॥

अपरामपि प्रार्थनामाह

**य इदं श्रावयेद्विद्वान्द्विजान्पर्वसु पर्वसु ।** ५
**अश्वमेधफलं तस्य तद्भवाननुमन्यताम् ॥ ३३४ ॥**

यस्त्विदं धर्मशास्त्रं प्रतिपर्व द्विजान् श्रावयेत् तस्याश्वमेधफलं भवेदिति श्रावणविध्यर्थवादः । तदेतदस्मत्प्रार्थितमर्थं सर्वत्र भवाननुमन्यताम् ॥ ३३४ ॥

वरदानमाह

**श्रुत्वैतद्याज्ञवल्क्योऽपि प्रीतात्मा मुनिभाषितम् ।** १०
**'एवमस्त्विति' होवाच नमस्कृत्य स्वयंभुवे ॥ ३३५ ॥**

एतदृषिभिर्भाषितं श्रुत्वा **योगीन्द्रो**ऽपि स्वानिर्मितधर्मशास्त्रधारणादिफलप्रार्थनोन्मीलितमुखपङ्कजः स्वयंभुवे ब्रह्मणे नमस्कृत्य प्रणम्य 'भवत्प्रार्थितं सकलमित्थं भवत्वि'त्येवं किल भगवान्बभाषे ॥ ३३५ ॥

इति श्रीभारद्वाज**पद्मनाभभट्टो**पाध्यायात्मजस्य श्रीमत्परमहंसपरिव्राजक**विज्ञानेश्वर**भट्टारकस्य १५ कृतौ ऋजुमिताक्षरायां **याज्ञवल्क्य**धर्मशास्त्रविवृतौ प्रायश्चित्ताध्यायस्तृतीयः समाप्तिमगमत् ॥

अथात्राध्यायानुक्रमणिका लिख्यते । तत्राद्यं सूतकप्रकरणम् १ । आपद्धर्मप्रकरणम् २ । वानप्रस्थप्रकरणम् ३ । अध्यात्मप्रकरणम् ४ । ततः प्रायश्चित्तप्रकरणम् ५ । तत्रादौ कर्मविपाकः ६ । महापातकादिनिमित्तपरिगणनम् ७ । महापातकप्रायश्चित्तान्यातिदेशिकसहितानि ८ । उपपातकप्रायश्चित्तानि ९ । प्रकीर्णकप्रायश्चित्तप्रकरणम् १० । पतितत्यागविधिः ११ । व्रतग्रहणविधिः १२ । २० रहस्यप्रायश्चित्ताधिकारः १३ । कृच्छ्रादिलक्षणम् १४ । इति प्रकरणानि ॥

**उत्तमोप**पदस्येवं शिष्यस्य कृतिरात्मनः । धर्मशास्त्रस्य विवृति**र्विज्ञानेश्वर**योगिनः ॥ १ ॥
इति **याज्ञवल्क्यमु**निशास्त्रगता विवृतिर्न कस्य विहिता विदुषः ।
प्रमिताक्षराऽपि विपुलार्थवती परिषिञ्चति श्रवणयोरमृतम् ॥ २ ॥
गम्भीराभिः प्रसन्नाभिर्वाग्भिर्न्यस्ता **मिताक्षरा** । अनल्पार्थाभिरल्पाभिर्विवृतिर्विहिता मया ॥३॥ २५

नासीदस्ति भविष्यति क्षितितले **कल्याण**कल्पं पुरं
'नो दृष्टः श्रुत एव वा क्षितिपतिः **श्रीविक्रमार्को**पमः ।
**विज्ञानेश्वर**पण्डितो न भजते किंचान्यदन्योपम-
श्चाकल्पं स्थिरमस्तु कल्पलतिकाकल्पं तदेतत्त्रयम् ॥ ४ ॥

स्रष्टा वाचां मधुरवपुषां विद्वदाश्चर्यसीम्नां
दातार्थानामनिशयजुषामर्थिसार्थार्थनायाः ।
ध्याता मूर्तेर्मुरविजयिनो जीवतादाऽर्कचन्द्रं
जेताऽरीणां तनुसहभुवां तत्त्वविज्ञाननाथः ॥ ५ ॥

आ सेतोः कीर्तिराशे रघुकुलतिलकस्या च शैलाधिराजात्
आ च प्रत्यक्पयोधेश्चटुलतिमिकुलोत्तुङ्गरिङ्गत्तरङ्गात् ।
आ च प्राचः समुद्रान्नतनृपतिशिरोरत्नभाभासुराङ्घ्रिः
पायादा चन्द्रतारं जगदिदमखिलं **विक्रमादित्यदेवः** ॥ ६ ॥

अन्तर्मुखानि यदि खानि तपस्ततः किं
नान्तर्मुखानि यदि खानि तपस्ततः किम् ।
अन्तर्बहिर्यदि हरिश्च तपस्ततः किं
नान्तर्बहिर्यदि हरिश्च तपस्ततः किम् ॥ ७ ॥

**॥ श्रीमज्जगदीश्वरार्पणमस्तु ॥ शुभं भवतु ॥**



# अथ विश्वेश्वरी (सुबोधिनी) टीका

## (मिताक्षराटीका)

### व्यवहाराध्यायप्रारंभः

### साधारणव्यवहारमातृकाप्रकरणम् १

॥ श्रीगणेशाय नमः ॥ ५

नमः सकलकल्याणभाजनाय पिनाकिने[1]।
नमो लक्ष्मीविलासाय देवतायै गिरां नमः ॥ १ ॥
योऽप्पभट्टात्मजः श्रीमान् भट्टविश्वेश्वरः सुधीः।
व्याख्यां मिताक्षराख्यायाः कुरुतेऽयं सुबोधिनीम्[2] ॥ २ ॥
मतिर्येषां शास्त्रे प्रकृतिरमणीया व्यवहृतिः १०
परा शीलं श्लाघ्यं जगति ऋजवस्ते कतिपये ॥
चिरं चित्ते तेषां मुकुरतलभूते स्थितिमिया-
दियं व्यासारण्यप्रवरमुनिशिष्यस्य भणितिः ॥ ३ ॥

पूर्वाध्यायान्ते राजधर्मकथनप्रस्तावे दुष्टेषु दंडविधानाच्छिष्टेषु परिपालनविधानादन्वयव्यतिरे-काभ्यां परिपालनाधिकारिणाऽहरहर्व्यवहारदर्शनं कर्तव्यमित्युक्तम्। तस्य व्यवहारस्य स्वरूपप्रकारे- १५ तिकर्तव्यताऽकांक्षायामुत्तराध्याय आरभ्यते। **अभिषेकादिगुणयुक्तस्येति**। अथ व्यवहारा-न्स्वयं पश्येदित्यादिना प्रयोगविधिना सांगोपांगो व्यवहारः कर्तव्य इति विहितः पूर्वस्मिन्नध्याये। तत्रांगाकांक्षायां तदर्थमुत्तरारंभ इति। अयमभिप्रायः। अनयोरध्याययोर्हेतुहेतुमद्भावसंलक्षणः संबंध इति। तद्व्यवहारो नाम कीदृश इत्याशंक्य **व्यवहारानित्यत्र** प्रातिपदिकोपात्तं व्यवहार-स्वरूपं निर्वक्ति। **अन्यविरोधेनेति**। तमेवोदाहृत्य दर्शयति। **यथाकश्चिदिति**। प्रातिपदि- २० कोद्दिष्टस्य व्यवहारस्य प्रत्ययेन द्वितीयाबहुवचनेन भेदो दर्श्यते[3] इत्याह। **तस्यानेकावधत्व-मिति**। नृपशब्दोपादानस्याभिप्रायमाह। **नृप इति**। **नेति**। व्यवहारान्स्वयं पश्येदित्यनेन पौनरुक्त्यं परिहरति। **पश्येदिति**। **पूर्वोक्तस्यानुवाद** इति। अत्रैषा वचनव्यक्तिः। व्यवहा-रान्स्वयं पश्येदिति यत्तद्वक्ष्यमाणधर्मेण सहेति। तमेव धर्मविशेषमाह। **विद्वद्भिर्वेदव्याकरण-धर्मशास्त्राभिज्ञैरिति**। विद्वद्ब्राह्मणसाहित्यरूपधर्मविधानमित्यर्थः। स एव धर्म इतिकर्तव्यता ना- २५ मांगानुष्ठानप्रकारः। एवं च द्वितीयाध्यायादिश्लोकस्यैव प्रपंचः सकलाध्यायशेष इति गम्यते[4]। ननु किंचिद्ब्राह्मणानां नृपस्यच व्यवहारदर्शने[5] समप्राधान्यमेवेत्याशंक्य नेत्याह। **ब्राह्मणैः सहेति**।

१ क—पिनाकये २ क—सुबोधिनी। ३ ग—दृश्यते। ४ क—अनुगम। ५ क—दर्शनेन।

तेषां ब्राह्मणानामित्यर्थः । ननु तृतीयानिर्देशादप्राधान्यं कथमित्यत आह । **सहयुक्त इतीति सहयुक्तेऽप्रधाने** । अस्यार्थः । सहार्थेन युक्ते अप्रधाने तृतीयाविभक्तिर्भवतीति । यथा पुत्रेण सहागतः पितेत्यादिषु । एवं प्रकृतेऽपि ब्राह्मणैः सहेति सहयोगे तृतीयाविधानात् । ब्राह्मणानाम प्राधान्यमुपसर्जनत्वमित्यर्थः । राज्ञः प्राधान्ये ब्राह्मणानां चोपसर्जनत्वे फलमाह । **अतश्चाद ५र्शन इति** । अयमभिप्रायः । राज्ञः प्राधान्यादधिको दोषः । ब्राह्मणानां तु तादृशदोषाभावः नतु सर्वात्मना दोषाभावः । तथाच । 'सभा वा न प्रवेष्टव्या वक्तव्यं वा समंजसं । अब्रुवन्विब्रुवन्वाऽपि नरो भवति किल्बिषी' ( **मनुस्मृतौ** अ० ८ श्लो० १३ ) त्यनेन विरोधः स्यादिति

## याज्ञवल्कीये २ श्लोकः

पूर्वोक्तेभ्यो ब्राह्मणेभ्यः पृथक्सभासदः कर्तव्या इत्याह । **किंचेति** । ते च सभासदो ब्राह्मणा १० एवेत्याह । **यद्यपीति** । **स तु सभ्यैरिति** । स राजा । **सभ्यैः** । **स्थिरैः**रचंचलैः । **प्राज्ञै-** बुद्धिमद्भिः । **मौलैः** । पितृपितामहागतैः । **अर्थशास्त्र**मौशनसादि । **तेच त्रय इति** । ते सभासदः । पक्षांतरमाह । **बृहस्पतिस्त्विति** । व्यवहारान्नृपः पश्येदित्यत्रोपात्तविद्वद्ब्राह्मणोद्देशेन श्रुताध्ययनसंपन्नत्वादिरूपो धर्मो विधीयते । ततश्च विद्वद्ब्राह्मणविशेषणत्वाच्छ्रुताध्ययनसंपन्नत्वादेर्न पूर्वोक्तेभ्यः पृथक्भूताः सभासद इत्यभिप्रायेणाशंक्य परिहरति । **न च ब्राह्मणैः सहेत्या- १५ दिना** । **कात्यायनेन** पूर्वोक्तब्राह्मणेभ्यः पृथक्त्वेन सभासदां दर्शितत्वात्त एव सभासद इति वक्तुं न शक्यते । अतस्तद्वचनविरोधाद्विशेषणविशेष्यभावाभावाच्च तदुद्देशेन विधिर्न घटत इत्यर्थः । **सप्राड्विवाक इति** । राजप्रतिनिधिः प्राड्विवाकः । **अमात्या** बुद्धिसचिवाः । ब्राह्मणानामनियुक्ततया भेदमाह । **ब्राह्मणाऽप्यनियुक्ता इत्यादिना** । अत्र नियोगे नृपोऽधिकारी । तेन नियुक्ता अनियुक्ताश्चेत्यर्थः । तेऽपि तद्भागिन इत्यर्थः । मूलवचनस्थशब्दद्योत्यमर्थमाह । **रिपौ- २० मित्रेचेति** । चशब्दादिति ॥ २ ॥

## याज्ञवल्कीये ३ श्लोकः

ननु नृपस्य प्रतिदिनं व्यवहारदर्शनं कर्तव्यतया विहितं । तथा शांतिकादीनि कर्तव्यान्यपि विहितानि । तत्र दैववशादुभयसमवाये किं कर्तव्यमित्यत्राशंक्य दांतत्वादिगुणयुक्तं सभासदादिभ्यः पृथग्भूतं ब्राह्मणं तदभावे वैश्यं वा व्यवहारदर्शने नियोजयेदित्याह । **व्यवहारान्नृपः २५ पश्येदित्युक्तमित्यादिना** । योगीश्वरोक्तमनुकल्पमेव मुख्यं मन्यते **नारद इत्याह** । **नारदेन त्वयमेवेति** । राज्ञां बहुकार्यव्याकुलत्वेनावकाशाभावात्स्वप्रतिरूपकपूर्वोक्तपुरुषांतरद्वारेणैव व्यवहारदर्शनस्योचितत्वादसावेव पक्षो मुख्यो ज्यायानित्यर्थः । **धर्मशास्त्रं पुरस्कृत्येत्यत्र** प्रस्तुतत्वाद्राजप्रयुक्तपुरुष एव व्यवहारदर्शनेऽधिकारीति गम्यते । **प्राड्विवाकमते स्थित इति** । धर्मशास्त्रानुसारेण कृतस्य प्राड्विवाकस्यानुकूलत्वेन न तु नियंतृत्वेन यथाकथंचित्स्वेच्छ- ३० याऽनयनमित्यर्थः । पृच्छति विविनक्ति चेति प्राड्विवाकस यौगिकी संज्ञा, नत्वश्वकर्णादिवद्रूढिरित्याह । **तस्यचेयं यौगिकीति** । **पृच्छतीति प्राट्** । क्विब्वचिप्रच्छीत्यादिना क्विप् । **दीर्घोसंप्रसारणं च** । **विविनक्ति विचारयति**[3] । विविनक्ति विशेषेण कथयतीत्यर्थः ॥३॥

---

१ ग—ब्राह्मणानां विशेषामित्यर्थः । २ ग—दीर्घोप्रसारणमेव । ३ विवेचयतीति पाठः ।

## याज्ञवल्कीये ४ श्लोकः

अज्ञानभ्रांत्यादिव्यतिरिक्तै रागद्वेषादिभिरुपाधिभिर्धर्मशास्त्रविरुद्धमाचरन्तः सभ्यास्तत्र व्यवहारपराजयनिमित्तदंडद्विगुणदंडेन प्रत्येकं दंड्या इत्याह। **अपिच रागादित्यादिना। सभ्या इति** नियुक्ताभिधानं। अत एवानियुक्तानां नियुक्तापेक्षया न्यूनदंडः परिकल्पनीयः। नियुक्तानामभियुक्तत्वे सति धर्मशास्त्रविरुद्धाचरणादधिकापराधः। अनियुक्तानां तु तदभावादल्पापराध इति युक्तमेवैतत्। तथाहि नियुक्तेषु स्मृत्युल्लंघनं नृपाज्ञाभंगश्च। अनियुक्तेषु स्मृत्युल्लंघनमेवेति। **अष्टा-** ५ **चत्वारिंशत्संस्कारैरिति**। तेच संस्कारा **गौतमेनोक्ताः**। गर्भाधानं १। पुंसवनं २। सीमंतोन्नयनं ३। जातकर्म ४। नामकरणं ५। निष्क्रमणं ६। अन्नप्राशनं ७। चौलोपनयने (द्वे) ९। वेदव्रतानि (चत्वारि) १३। स्नानं १४। सहधर्मचारिणीसंयोगः १५। पंचयज्ञानुष्ठानं २०। देवपितृमनुष्यभूतब्राह्मणा एतेषां चेति। एतेषां संस्काराणां च कृते, देवयज्ञादीनांच कृते, पंचयज्ञानुष्ठानं भवतीत्यर्थः। अष्टका पार्वणः श्राद्धं २। श्रावण्याग्रहायणी २। चैत्री। आश्वयु- १० जीति सप्त **पाकसंस्थाः**। अभ्याधेयं। अग्निहोत्रं। दर्शपौर्णमासौ। चातुर्मास्यानि। आग्रयणेष्टिः। निरूढपशुबंधः। सौत्रामणीति सप्त**हविर्यज्ञसंस्थाः**। अग्निष्टोमः। अत्यग्निष्टोमः। उक्थः। षोडशी। वाजपेयः। अतिरात्रः। अप्तोर्यामः। इति **सप्त सोमसंस्थाः**। इति चत्वारिंशत्संस्काराः।

द्विविधः संस्कारो भवति। ब्राह्मो दैवश्च। गर्भाधानादिस्नानांतो **ब्राह्मः**। पाकयज्ञहविर्यज्ञसौम्याश्चेति **दैवः**। पाकयज्ञादीनां च संस्कारत्वं **शंखलिखितवचनात्**। "पाकयज्ञा हविर्यज्ञाः १५ सोमसंस्थास्तथैव च। संस्काराद्यग्निहोत्रांता अग्निहोत्रं तु जुह्वतः॥ संस्कारैः संस्कृतः पूर्वैरुत्तरैरनुसंस्कृतः। नित्यमष्टगुणैर्युक्तो ब्राह्मणो ब्रह्मलौकिकः॥ ब्राह्मं पदमवाप्नोति तस्मान्न च्यवते पुन"रिति॥ **ब्रह्मलौकिको**। ब्रह्मलोकार्हः। **अष्टगुणाश्च**, सर्वभूतदया क्षांतिरनसूया शौचमनायासो मांगल्यमकार्पण्यमस्पृहेत्येवमष्टाचत्वारिंशत्संस्काराः॥ ४॥

## याज्ञवल्कीये ५ श्लोकः

२०

प्रत्यर्थिप्रतिकूलतया नृपादिषु कथनं व्यवहारः। कथ्यमानं तद्विषयं इत्याह। **व्यवहारविषयमाहेत्यादिना। 'आवेदयति चेद्राज्ञे'** इत्यत्र राजशब्दः पूगश्रेण्यादीनामुपलक्षणार्थः। व्यवहारविषयस्य द्वैविध्यं दर्शयति। **सच द्विविध इत्यादिना**। शंकारूपोऽभियोगो यस्मिन्विषये तत्वरूपोऽभियोगो यस्मिन्विषय इति विग्रहः। **होढा लोप्त्रमिति**। लुप्यत इति लोप्त्रं चौर्यं धनं। "चौरिकास्तैन्यचौर्येच स्तेयं लोप्त्रं तु तद्धनमित्यमरः" (२-१०-२५)। **एतान्य-** २५ **पि साध्यभेदेनेति**। अवांतरसाध्यभेदेनेत्यर्थः। **नच प्रापितमन्येनेति**। अन्यायेनान्येन प्रापितं न गृण्हीयात्। अथवा, अन्येन प्रापितं निवेदितं कार्यं **न ग्रसेत** नोपेक्षेत। "नवा प्रापितमन्येनेत्य"पि **पाठः**। तत्रायमर्थः। अन्येन विवदमानेन तत्संबंधिना वा अप्रापितमनिवेदितं कथंचिदवगम्य रागादिना न ग्रसेत्। न ग्राहयेदिति। मूलवचनस्य परशब्दस्थितं तृतीयाबहुव-

१ क—अत्र चत्वारिंशता। ग—अष्टाचत्वारिंशता। २ म—चौलोपनयम ८। ३ ग—त एते देवइ०
४ क—अग्निहोत्रः। ५ ग—मूलवचनस्यापरशब्दइ०

**पनमविवक्षितं** । अतश्चैकस्यैकेनवा द्वाभ्यां वा बहुभिर्वा विवादो घटत इत्याह । **परैरितीति** । तद्भिन्नसाध्यविषयमिति । भिन्नसाध्यानि पृथक्साध्यानि भिन्नव्यवहारविषये इति यावत् । एत-दुक्तं भवति । यदात्वेकेनैकः पुमानभियुक्तो मद्यमसौ धारयतीति तदा तस्मिन्व्यवहारे निष्पन्ने अपरेणापरेणच पूर्वमभियुक्तो नाभियोज्य इत्येवमेकस्य बहुभिः सार्धं विवादाभावः । नत्वेवमेते ५ मह्यं धारयन्ति शतमित्येवमेकस्य बहुभिर्विवादाभावः इति । **इत्याद्यर्थसिद्धमिति** । अविनी-तस्यावेदनमेव न घटते । उद्धतत्वेन राज्ञः परिसरमेव गंतुमशक्यत्वात् । आवेदनानंतरं च युक्तत्वे प्रत्यर्थिनोऽनाव्हाने आवेदनमेव निष्प्रयोजनमिति नकोऽप्यावेदयेत् । तथा च प्रजापरि-पालनमेव न सिध्यतीत्यादिभिर्हेतुभिः पूर्वोक्तानां धर्माणामर्थसिद्धत्वमूह्यम् । **किं कार्यं का च ते पीडेति** । अर्थकृतो मन्युकृतश्च प्रश्नभेदः । **अकल्पेत्यादि** । **अकल्पो** व्याधितः । १० **विषमस्थ** उत्पन्नसंकटः । **क्रियाकुलो** नित्यनैमित्तिकादिक्रियाव्यग्रः । आगच्छतो यस्य गुरुतर-कार्यहानिः स **कार्यातिपाती** । इष्टवियोगादिदुःखवान्व्यसनी । **मत्तो** मदनीयद्रव्येण । **उन्मत्तो** ग्रहादिभिः । सर्वदाऽवधानहीनः **प्रमत्तः** । **आर्तो** विपदादिना । **हीनपक्षामिति** । अनाथां सर्वजनशोच्यामिति यावत् । स्त्रीणामाव्हाने निषिद्धे तत्र प्रतिप्रसवमाह । **तदधीनकुटुं-बिन्य इति** । पूर्वमकल्पाद्याव्हानं निषिद्धं, तत्रापि प्रतिप्रसवमाह । **कालं देशं च विज्ञा-** १५ **येति** । **स्थानासेध इत्यादि** । अस्मात्प्रदेशान्न गंतव्यमिति **स्थानासेधः** । आसंध्यं न गंत-व्यमित्यादिः **कालासेधः** । ग्रामं प्रति न गंतव्यमिति **प्रवासासेधः** । असौ व्यापारो न कर्तव्य इति **कर्मासेधः** । इति विवेकः । **अन्यथाकुर्वन्नासेद्धेति** । अनासेधकाल आसेधं कुर्वन्नित्यर्थः । **निर्वेष्टुकामइति** । आश्रमांतरं गंतुकामः । विवाहोद्यत इति यावत् । 'हीनः पंच-विधः स्मृत' इति वचनादिति शेषः । अथवा इति शब्दो हेत्वर्थे । अतो हेतोरित्यर्थः ।

## २० याज्ञवल्कीये ६ श्लोकः

पूर्वावतारितवचनस्यैवोत्तरार्थशंकोत्तरपरत्वेनावतारयति । **आवेदनकाल एवेति** । **तिथि-वारदिनमिति** । **तिथिः** प्रतिपदादिः । **दिनमहः** । **क्षमालिङ्गादीनीति** । प्रत्यर्थिविषये आसेधाद्यकरणं **क्षमा** । सहिष्णुता । तत्र लिंगानि कारणानि बाल्यजडत्वादीनि । **अर्थवद्धर्म-** २५ **संयुक्तमित्यादि** । **अर्थवत्प्रयोजनवत्** । **धर्मसंयुक्तं** । **धर्मोगुणः** । अल्पाक्षरत्वप्रभूतार्थत्वा-दिकः । तेन **संयुक्तं** । संपूर्णमध्याहारानपेक्षं । **अनाकुलमसंदिग्धाक्षरं** । **साध्यवत्सिषाधयि-षितार्थसहितं** । **वाचकपदं** गौणलाक्षणिकपदरहितं । **प्रकृतार्थानुबन्धि** पूर्वावेदितार्थाविरोधि । **प्रसिद्धं** लोकप्रसिद्धवस्तुविषयम् । **अविरुद्धं** पुरराष्ट्राद्यविरुद्धं । पूर्वापराविरुद्धं । प्रत्यक्षादि-प्रमाणाविरुद्धं । व्यावहारिकधर्माविरुद्धं च । **निश्चितं** । अर्थांतरसंशयरहितम् । **साधनक्षमं** साधनार्हं । **संक्षिप्तमनतिविस्तृतं** । **निखिलार्थं** अनवशेषितवक्तव्यं । **देशकालाविरोधि**

१ क—विषया । २ क—राज्ञा । ३ क—कोपि वेदयेत् । ४ क—र्थो ५ ग—अर्थकृतामन्युकृतंच । क—मन्युःकृतश्च । ६ क—विवाहो घटत इति । ७ क—दिनेति । तिथिवारादिनेति ( बापूशास्त्री मोघेसंस्कृत मिताक्षरापुस्तके पाटः ) ८ ग—विस्मृतं ।

मध्येदेशीयं **कमुकक्षेत्रं** । शरत्कालीनमाम्रफलसहस्रं मदीयमपहृतमित्येवमादिशून्यं । **अहः** प्रति-पदादिर्दिनं वा । **वेला** प्रातरादिः । **देशो** मध्यदेशादिः । **प्रदेशः** क्षेत्रादेः स्थलविशेषः । **स्थानं** वाराणस्यादि । **आवसथो** ग्रामादिः । हट्टादिरूपस्थलविशेषो वा । **साध्याख्या** विवादास्पदीभूतवस्तुनाम । **जातिर्ब्राह्मणादिः** । **आकारो** गवाश्वादिगतो वर्णविशेषः । गृहक्षे-त्रादेः संस्थानविशेषश्च । **वयः** अश्वादेर्वयःप्रमाणं । **साध्यप्रमाणसंख्यावत्** । **साध्यप्रमाणं** ५ क्षेत्रादेर्निर्वर्तनादिकम् । **संख्या** रूपकादीनां । **आत्मप्रत्यर्थिनामवत्** । स्पष्टं । **परात्मपूर्व-जानकराजनामभिरंकितं** । **परः** प्रतिवादी, **आत्मा** वादी; **पूर्वजा**स्त्वनयोः पित्रादयः; **अनेकराजानो** भुक्तिकालीनाः; एषां **नामानि**; तैश्चिह्नितं । **क्षमालिंगात्मपीडावत्** । व्याख्यातानि क्षमालिङ्गानि (पृ. ४ पं. २२) । **आहर्ता** प्रतिग्रहोदिनाऽधिगन्ता । **दायको** दाता । कथितावाहर्तृदायकौ यस्मिन्वचने तत्त्वीदृक् । अथवा **कथिताहर्तृदायकमिति** । कथितप्रत्य- १० र्थिसंबंधमितियावत् । **कृष्णभूमः** पांडुभूम इति । अच् प्रत्ययांतावेतौ शब्दौ ।

"कृष्णोदक्पांडुसंख्याया भूमेरच्प्रत्ययः स्मृतः ।

गोदावर्याश्च नद्याश्च संख्याया उत्तरे यदी"ति **वार्तिककारस्मरणात्** । (व्या. सू. ५-४-७५)

अप्रसिद्धादीनां पक्षाणां यथा पक्षाभासत्वं तथा अनेकपदसङ्कीर्णः पूर्वपक्षो न सिध्यतीत्य-त्रापि प्रातीतिकार्थानुसारेणेदृशस्यापि पक्षस्य पक्षाभासत्वमेवेति प्रतीयते तन्निराकर्तुमुपपादते ।१५ **यत्त्वनेकपदेति** । अनेकपदैः संकीर्णो यः **पूर्वपक्षः** प्रतिज्ञा सा न सिध्यति । **आभासेति** प्रातीतिकार्थः । तत्र **पदशब्दः** पद्यते ज्ञायत इति किं वस्तुपरः । उत ऋणादानादिरूपव्यवहार-विषयपरो वेति विकल्प्य नतावदाद्ये पक्षे पक्षाभासत्वमित्याह । **तत्र यद्यनेकेति** । अस्तु द्वितीय इत्याशङ्क्य परिहरति । **ऋणादानादीति** । अधुना अनेकपदसंकीर्णइ त्यस्य योऽभिप्रे-तोऽर्थः तमर्थमाह । **किंतु क्रियाभेदादिति** । तमेवार्थमुपसंहारव्याजेन द्रढयति । **तस्माद**-२० **नेकेति** । **तस्यार्थः** तस्य वचनस्यार्थः ।

'यथावेदितमर्थिने' त्यत्रार्थिपदद्योत्यानाह । **अर्थिग्रहणादिति** । अर्थिनःपुत्रोऽप्यर्थी तत्पि-ताऽपि । **आदिशब्दादर्थिना** नियुक्तादयोऽपि अर्थिन इत्यर्थः । तत्रार्थिपुत्रादीनां तदेकार्थत्वं युक्तं । अर्थिनियुक्तस्य तु कथं तदेकार्थत्वमित्यत आह । **नियुक्तस्यापीति** ।

## याज्ञवल्कीये ७ श्लोकः

२५

**अश्लिष्टविभक्तिसमासेति** । **श्लिष्टं** संबद्धं युक्तमदुष्टमिति यावत् । **अश्लिष्टं** दुष्टं । **वि-भक्ति**श्च समासश्च विभक्तिसमासौ । अश्लिष्टौच तौ विभक्तिसमासौ च । अध्याहारेण सह वर्तत इति साध्याहारं । अश्लिष्टविभक्तिसमासाभ्यां साध्याहारेण च यदभिधानं तत्तादृशं तेनेति समासः । **प्रत्यवस्कंदनमिति** । कारणोत्तरमित्यर्थः । **प्रतिपत्तिरुदाहृतेति** । **प्रतिपत्तिः** संप्रतिपत्तिः **सत्योत्तर**मित्यनर्थांतरं । आचारेणावसन्नोऽपीति । व्यवहारेण पराजित इत्यर्थः । **श्रुतार्थस्योत्तरं** ३०

१ ग—अत्रात्मा । क—आत्म । २ क—प्रतिग्रहादीनामधिगता ३ क—न । ४ दुःश्लिष्टेति मिताक्षरापुस्तकेषु पाठः ।

लेख्यमित्युत्तरमित्येकवचननिर्देशात्संकीर्णोत्तरस्यानुत्तरत्वमित्याह । **उत्तरमित्येकवचननिर्देशादिति । एवं चतुःसङ्करेऽपीति ।** 'अनेन सुवर्णं रूपकशतं वस्त्राणि धान्यंच गृहीत'मित्यभियोगे, 'सुवर्णं धारयामि,' 'रूपकशतं न गृहीतं,' 'वस्त्राणि प्रतिग्रहेर्ण लब्धानि,' धान्यविषये पूर्वंपराजित,' इत्येवं क्रमादुत्तरसङ्करो द्रष्टव्यः । **अतोऽन्यथासंकीर्णं भवतीति ।** यत्प्रभूतार्थविषयं उत्तरं न भवति । अपि तु समार्थविषयम् । यत्र चोत्तरे उभयत्र क्रियाफलं भवति तर्तः पूर्वोक्तादन्यथा प्रकारान्तरं सङ्कीर्णमिति शेषपूरणेन प्रकारान्तरत्वस्यैव कथनं । संकीर्णं किमनुत्तरमेवेत्याशंक्य युगपन्नोत्तरं । वादिप्रतिवादिनोः सभ्यानां चापेक्षाक्रमेण क्रमादुत्तरं भवतीति । पूर्वोक्तार्थमेवात्रापि स्मारयति । **ऐच्छिकक्रमः ।** अपेक्षाक्रमो भवतीत्यर्थः । **तस्मिन्नेवाभियोग इति ।** अनेन 'सुवर्णं रूपकशतं वस्त्राणि च गृहीतानीति' पूर्वोक्त एवाभियोग इत्यर्थः । अत्र 'सुवर्णं रूपकशतं च गृहीतं वस्त्राणि न गृहीतानीति' सत्यमिथ्योत्तरयोः संकरः। 'प्रतिदत्तानीति' सत्येनसह कारणस्य संकरः। 'वस्त्रविषये पूर्वं पराजित' इति सत्येन सह प्राङ्न्यायस्य संकर इति विवेकः । संकीर्णोत्तरे विषये साम्ये ऐच्छिकक्रमः । विषयवैषम्येत्वधिकविषयोपादानेन प्रथमतो व्यवहार इत्युक्तं । तत्र प्रथमतोऽधिकविषयोपादानस्यापवादमाह । **संप्रतिपत्तेर्भूरिविषयत्वेऽपीति ।** एवं तर्हि संकीर्णोत्तरं सर्वदा यौगपद्येन किमनुत्तरमेवेत्याशंक्य । **नेत्याह । यत्र तु मिथ्याकारणोत्तरयोरित्यादिना** परिहरति । **तस्य शुद्धमिथ्याविषयत्वादिति । प्रसिद्धकारणोत्तर इति ।** सत्यं गृहीतं प्रतिदत्तं चेत्येवंरूपे प्रकृतोदाहरण इति । अन्यस्तु मिथ्यैतदेतत्प्रदर्शितं कालादित्येवं पूर्वोक्त इत्यर्थः ।

ननुं पक्षनिराकरणसमर्थमुत्तरं भवति । संप्रतिपत्तेरंगीकारात्मकत्वेर्न तदभावादनुत्तरत्वमेवेत्याशंक्याह । **संप्रतिपत्तेरपीति ।** संकीर्णोत्तरस्य युगपदनुत्तरत्वमुक्तमुपसंहरति । **नक्वचिदिति । प्रत्याकलितस्येति ।** पौनःपुन्येन विचारणं प्रत्याकलितं ।

॥ इति व्यवहारमातृका ॥

# अथ असाधारणव्यवहारमातृकाप्रकरणम् २

## याज्ञवल्कीये ९ श्लोकः

ननु अभियुक्तस्य प्रत्यभियोगनिषेधे "गृहीतं प्रतिदत्त" मित्येवं प्रत्यभियोगात्मकं कारणोत्तरं न स्यादित्याशंक्याह । **यद्यपीति ।** अयमभियुक्तः स्वाभियोगनिवारकं प्रत्यभियोगमपि कुर्यात् । अन्यथा—"सत्यं मिथ्योत्तरं चैव प्रत्यवस्कंदनं तथा । पूर्वन्यायविधिश्चैकमुत्तरं स्याच्चतुर्विधं" इति चातुर्विध्यकथनमेवानुपपन्नं इति । **अयं निषेध** इति । नैनं प्रत्यभियोजयेदित्ययं निषेधः । **एकस्मिन्नपिपदे** इति । एकस्मिन्नपि ऋणादानादिव्यवहारविषये वस्त्वंतरोक्तिनिषेध इत्यर्थः ।

१ ग—प्रतिग्रहोपलब्धानि । २ क—अत्रान्यथा । ३ क—विषयमनुत्तरं । ४ ग—मदतः । ५ ग—चेत्येवं । ६ क—प्रतिदर्शि । ७ क—तत्तु । ८ क—त्मकत्वे । ९ क—विषयो । १० क—प्रत्यभियोगात्मकारणोत्तरं । ११ ग—अयम।शक्यार्थः ।

तदुदाहृत्य दर्शयति । यथाऽनेनेति । रूपकशतस्य मिथ्यादानमावेदनसमयेऽभिधाय प्रत्यर्थिनः पुरस्ताद्भाषाकाले वस्त्रशतस्य वृद्ध्यादानेऽअभिधीयमाने यद्यपि ऋणादानरूपैक एव व्यवहारविषयो भवति तथापि रूपकशतस्थाने वस्त्रशतस्योपन्यासात् वस्त्ररूपवस्त्वंतरोपादानं यत्तन्निषिध्यते । **यथावेदितमर्थिनेत्यनेनेत्यर्थः । तथासति पदान्तरागमनेऽपीति** । विषयांतरंप्रत्यागमनेपीत्यर्थः । अस्मिन्प्रकरणे पदशब्दो विषयवाचीति ज्ञेयः । **यथा रूपकशतं वृध्यागृहीत्वा-** ५ **ऽयमिति** । आवेदनसमये वृद्ध्या रूपकशतमभिधाय प्रतिज्ञाकाले रूपकशतस्य बलादपहरणेऽभिहिते रूपवस्तुन एकत्वेऽपि ऋणादानरूपापहरणरूपव्यवहारविषययोर्भिन्नत्वेन यत्पदांतरगमनं 'तन्नोक्तं विप्रकृतिं नयेदि''त्यनेन निषिध्यत इत्यर्थः । यदुक्तं **हीनवादी दण्ड्य एव न प्रकृतार्थाद्धीयत** इति तदेतदुक्तविषयव्यवहार एवेत्याह । **एतच्चार्थव्यवहार** इति । **मन्युकृत** इति । वाक्पारुष्ये दण्डपारुष्य इत्यादिके व्यवहार इत्यर्थः । एतदुक्तं भवति । एवंविधे वाक्- १० छलेसति व्यवहारहानिर्दंड्यश्चेति । **न मन्युकृतेष्विति** । अमन्युकृतेष्वितियावत् ।

## याज्ञवल्कीये १० श्लोकः

प्रत्यभियोगसंभवे साहसादिष्वेवापराधेषु स्वयमभियुक्तोऽपि प्रत्यभियोजयेत्प्रत्यर्थिना असति तु नेत्याह । "अभियोगमनिस्तीर्ये''त्यादिना । नन्वेवंविधस्थले त्वभियोगः किमुत्तरं सत्सार्थकः उत प्रतिज्ञांतरं सत्सार्थक इति विकल्पे, नतावदुत्तरत्वेन सार्थकत्वं पूर्वपक्षनिराकरणासमर्थत्वेनानुत्तर- १५ त्वात् । नापि प्रतिज्ञांतरत्वेन पूर्वाभियोग एकः प्रतिज्ञाप्रत्यभियोगश्चान्यः । ततश्च यथा संकीर्णोत्तरे युगपद्व्यवहारासंभवादनुत्तरमेव तत् । तथा प्रतिज्ञांतरेऽपि युगपद्व्यवहारासंभवस्य समानत्वादप्रतिज्ञात्वेन प्रत्यभियोगविधिरेव व्यर्थ इति अभिप्रायेण क्षिपति । **नन्वत्रापीति** । **कार्ययोग्यैस्तु वादिन** इति । वादिन इत्यर्थिप्रत्यर्थिनोः समासेन ग्रहणं । उक्तन्यायमन्यत्राप्यतिदिशति । प्राङ्न्याये प्रत्यवस्कंदनेचेदमेवेत्यादिना । योजनाप्रकारस्त्वेवं । अस्मिन्नर्थे पूर्वं पराजित इति प्राङ्- २० न्यायोत्तरे, गृहीतं प्रतिदत्तमिति कारणोत्तरे, दत्ते पूर्वन्यायं प्रतिदानं च प्रतिज्ञावाद्येवापलपतीति वाद्येवापलापवादी । तत्रच प्रतिज्ञावादिना साधिते प्राङ्न्याये पराजये प्रतिदाने वा राज्ञे प्रकृतधनसमं दंडमेव वादी दद्यात् । अथ प्रत्यर्थी प्राङ्न्यायं प्रतिदानं वा न साधयति तदा तस्य वादित्वेन प्रकृतधनद्विगुणधनं दंडं राज्ञे प्रकृतधनं च वादिने दद्यात् इति । संप्रति प्रत्युत्तरे तु दंडाभाव इति निह्नवाद्यभावे दंडाभावः । **अथ** धनव्यवहारेष्विति । वाक्पारुष्यदंडपारुष्यादि- २५ व्यवहारेषु प्रकृतधनसमदंडदानं तद्वैगुण्यदानं वा यतो न संभवति तस्मादित्यर्थः ।

## याज्ञवल्कीये ११ श्लोकः

ननु पूर्वोक्तदण्डस्यर्णादानमात्रविषयत्वे राज्ञाधमर्णिको दाप्य इत्यत्र पुनरभिधानमनुपपन्नं स्यादित्याशंक्य परिहरति । **राज्ञाधमर्णिक** इति । निह्नवे भावितो दद्यादित्येतदृणादानमात्रविषयत्वमभिहितं पूर्वत्र । अधुना तस्यैव सकलव्यवहारविषयतामाह । **एतदेव सर्वव्यवहार-** ३० **विषयत्वेने**त्यादिना प्रतिपदोक्तमेव धनं दंडं दद्यादित्यन्वयः । प्रतिपदोक्तमेवेत्यवधारणं कुतो

१ क—यदनेनेति । २—क वेदनं । ३ क—येभिधाय । ४ क—योग ।

लभ्यत इत्यत आह । **च शब्दोऽवधारण** इति । मूलवचनस्थश्चशब्द इत्यर्थः । **इत्यनुवाद** इति । शृंगग्राहिकतया तत्तद्व्यवहारपदेषु दंडस्य विहितत्वात्प्राप्तत्वेनानुवादः । **दद्यादिति विधीयत** इति । द्विगुणदंडस्याप्राप्तत्वात् ।

## याज्ञवल्कीये १३ श्लोकः

५ **"देशाद्देशांतरं याति"**। "अभियोगेऽथ साक्ष्ये वा दुष्टः स परिकीर्तित" इति । मनोवाक्कायकर्मभिरित्युद्दिश्य देशांतरं यातीत्यादिना व्युत्क्रमेण कर्मकायवाङ्मनसां विकृतिं प्रदर्शयतो योगीश्वरस्यायमभिप्रायः । उद्देशक्रमेणोत्तरस्य बाह्यत्वेन अत्यंतस्थूलत्वेन स्थूलतमप्रक्रमेण विकारदर्शनमिति एते वक्ष्यमाणास्त्रयो न केवलं दुष्टा अपितु अर्थादपि हीना दण्ड्याश्चेत्याह ।

## याज्ञवल्कीये १६ श्लोकः

१० **किंचेति । संदिग्धमित्यादिना** । यत्र द्वावपि प्रतिज्ञावादिनौ तद्विषयत्वेन पूर्वोक्तं वचनं स्वयं व्याख्याय कैश्चिदुत्तरवशादेव पूर्ववादिन उत्तरवादिनश्च साक्षिणः प्रष्टव्या इत्यन्यथा व्याख्यातं तन्निराकर्तुमनुभाषते ।

## याज्ञवल्कीये १७ श्लोकः

**मिथ्योत्तरे पूर्ववादिन** इति । **प्रतिज्ञातार्थसाधनमित्यनेनोक्तत्वादिति** । अर्थ्यत १५ इत्यर्थः । तद्वानर्थी साध्यवान् । एवंच मिथ्योत्तरे पूर्ववादी साध्यवान् । कारणप्राङ्न्याययोस्तु उत्तरवाद्येव साध्यवान् । यस्य साध्यवत्ता तस्यैव साधनोपन्यास इत्यभिप्रायत उक्तत्वादित्यर्थः ।

## याज्ञवल्कीये १९ श्लोकः

**यस्माद्भूतमपीत्यादिना** । भूतमपि वस्तुतत्वमपि साक्ष्यादिभिरनुपन्यस्तं सद्व्यवहारतो हीयते इत्यन्वयः । **द्विगति**रिति । द्विप्रकारक इत्यर्थः ॥

२० 
## याज्ञवल्कीये २० श्लोकः

**"निन्हुते लिखितं नैक"**मिति । अस्मिन्वचने पादत्रयेणैषोऽर्थः प्रतीयते । प्रतिज्ञाकाले वादिनाऽभिहितस्य सकलस्यार्थस्य प्रतिवादिना निह्नवे कृते यदि वादी पूर्वोक्तार्थे एकदेशमपि साधयति तदा प्रतिवादी सकलं पूर्वोक्तार्थं दाप्य इति । चतुर्थपादे त्वयमर्थः प्रतीयते । प्रतिज्ञाकाले नाभिधाय पश्चात्कमप्यर्थमधिकं निवेदयमानो वादी नादर्तव्य इति । एवमंशद्वयेन प्रतिज्ञा-२५ कालेऽभिहित एवार्थो व्यवहारतः प्राप्यत इत्यन्वयः । अनभिहितो न प्राप्यत इति व्यतिरेकश्च दर्शितः । यतोऽन्वयव्यतिरेकाभ्यां भूतमप्यनुपन्यस्तं हीयत इत्येतद्दृढीकृतं । अतस्तदुदाहरणमित्यर्थः । **तर्कापरनामेति** । तर्कज्ञानस्य संज्ञांतरं संभावनाज्ञानमिति । तज्ज्ञानसहकृतान्निह्नवे लिखितमित्यस्माद्योगीश्वरवचनादित्यर्थः । **न्यायाधिगमतर्क** इति । अस्यार्थः । न्यायज्ञाने तर्क उपायः । तेन तर्केण न्यायमध्यूह्य यस्मिन्विषये न्याय्यो योजनीयस्तत्स्थानं गमयेत् । अथवा ३० यथास्थानं न्यूनातिरेकरहितं यथातथा गमयेदिति । ननु भाषासमये पश्चादभिधीयमानो वादी यथा नादरणीयः एवमेकदेशविभावितः सन्नपि प्रत्यर्थी अनादरणीय एव भवतु किमिति सर्वे

दाप्य इत्यनेनाभिप्रायेणाशंक्य स्यादेवं । यदि वचनं नास्ति । अस्ति तु तदित्याह । न चैकदेशविभावितोऽनुपादेयवचन इत्यादिना प्रतिवेदन् निन्हववादी न भवति । ऋणस्यान्यकृतत्वेनाज्ञानस्यापि तत्र संभवादपलापाभावादित्यभिप्रायः । **अनेकार्थाभियोगेऽपीति कात्यायन**वचनमिति । सामान्यविषयं **कात्यायन**वचनं कर्तृविशेषशास्त्रस्य विषयं निह्नवोत्तरं परिहृत्याज्ञानोत्तरे प्रवर्तत इत्यन्वयः । **निह्नवो** ज्ञात्वाऽपलापः । **अज्ञानं** ज्ञानाभावः । **स्थिरप्रायेष्विति** ।५ लिंगदर्शनमात्रेणादृढहेतुना स्त्रीसंग्रहणादिरूपस्य साध्यस्य सिद्धिर्भवतीति तादृशानामस्थिरत्वं । ऋणादानादिरूपस्य तु साध्यस्य दृढसाधनेनैव **सिद्धेः स्थिरप्रायत्वमित्यर्थः** ॥ **उच्यते लिखितसर्वार्थसाधनेति** । अयमभिप्रायः । 'सुवर्णं रजतं वस्त्राणि चानेन गृहीतमि'त्यभियोगे न मया गृहीतमिति निन्हवे कृते तत्रोक्तसकलवस्तुग्रहणे साधनत्वेन कथितैः साक्षिभिः सुवर्णाद्यन्यतमस्य ग्रहणे वा सुवर्णं रजतं वस्त्राणि धान्यं च **गृहीतमिति** पूर्वनिर्दिष्टवस्तुभ्योऽधिकवस्तुग्रह- १० णे वा निर्दिष्टे सकलमपि साध्यं न सिध्यति । इत्येतत्परं **कात्यायन**वचनं । **याज्ञवल्क्य**वचनं तु । सुवर्णं रजतं वस्त्राणि च धारयतीत्यभियुक्तः प्रत्यर्थी न धारयतीति निन्हुते । तदा सुवर्णग्रहणसाक्षिणः संतीत्युपन्यस्य तावन्मात्रेऽपि साक्षिभिः साधिते, प्रत्यर्थी पूर्वोक्तं सर्वं दाप्य इत्येतत्परमित्येवं परस्परविरोध इति **कात्यायन**वचनाचेत्युक्तं तदेव वचनं दर्शयति । **साध्यार्थांशेऽपीति** । स्त्रीसंग्रहादिके विवादपदे प्रतिवादिनो योऽर्थः साध्यत्वेन कथितः तत्र सकलसा- १५ ध्यसाधनत्वेनाभिहितैरपि **साक्षिभिः** साध्यस्यार्थस्यैकदेशेऽपि कथिते **सकलं साध्यं भवेत्** सिध्येदित्यर्थः ।

## याज्ञवल्कीये २१ श्लोकः

**उत्सर्गापवादादिलक्षण** इति । "सामान्यस्य विशेषं[3] बाधक" मित्येवं सामान्यापवादकलक्षणो[4] न्यायः । आदि (शब्दा?) त्सविषयनिर्विषययोः निर्विषयं बलवदित्यादिकं गृह्यते विकल्पादि य- २० थासंभवमिति आदिशब्दात्प्रबलप्रमाणविरोधे अर्थवादत्वमाश्रित्य यथोचितन्यायानुसारेण योज्यमित्यभिधीयते । नन्वेकविषये प्राप्तयोर्विरुद्धार्थयोर्हि स्मृत्योः परस्परं विरोधो न तु भिन्नविषययोरविरुद्धार्थयोर्वा । सति तु विरोधे प्रबलदुर्बलभावचिंता । एवं च पूर्वमेव धर्मशास्त्रानुसारेणैव व्यवहारदर्शनस्य विहितत्वादौशनसादि नीतिशास्त्रं न व्यवहारविषयमुपस्पृशति । अत एकविषयत्वाभावादर्थशास्त्रधर्मशास्त्रयोर्दूरे विरोधः । तथा चानयोः प्रबलदुर्बलभावचिंतैव न घटत इत्यभिप्राये- २५ णाक्षिप्य । सत्यमेवं । नात्रौशनसाद्यर्थशास्त्रधर्मशास्त्रयोः प्रबलदुर्बलभावचिंता । अपि तु धर्मशास्त्रांतर्गतार्थशास्त्रस्य धर्मशास्त्रस्य च प्रबलदुर्बलकथनभावाचिंता इति समाधत्ते । **धर्मशास्त्रानुसारेणत्यनेनैवेत्यादिना** । एवं तर्ह्येवंविधार्थशास्त्रधर्मशास्त्रयोर्**मन्वा**दिरूपैककर्तृनिष्पन्नत्वेन वचनस्वरूपगतविशेषाभावादनयोरपि न प्रबलदुर्बलभावचिंतावकाश इत्याक्षिपति । **यद्यपि समानकर्तृकतयेति** । (नच?) स्वरूपगतविशेषात्प्रबलदुर्बलभावः । अपि तु धर्मशास्त्रप्रमेयस्य षड्विधस्यापि धर्मस्य ३० मुख्यत्वेन अर्थशास्त्रप्रमेयस्यार्थस्य नीतेरमुख्यत्वादुपसर्जनत्वे[5] च प्रमेयगतविशेषसंभवात्प्रबलदुर्बल-

१ क—प्रतिवदं । २ क—साध्यनत्वे । ३ क—विशेष । ४ क—सामान्यापदकलक्षणे । ५ ग—नीतेमुख्यत्वादुप ।

भावो घटत इति परिहरति । **तथाऽपि प्रमेयस्येति । शास्त्रादौ दर्शितमिति** । आचाराध्यायस्यादावित्यर्थः । ( आचाराध्याये श्लो. ८ टीका ) । अन्यैरुक्तमुदाहरणमनूद्य रूपयति[1] । **न तावद्गुरुं चेत्यादिना धर्मशास्त्रं बलवदित्युक्त**मित्यंतेन । अत्र इति न तावदुक्तमिति व्यवहितेनान्वयः । उक्तवचनानामनुदाहरणत्वे हेतुमाह । **अनयोरेकविषयत्वासंभवेनेति** । गुरुं वा बालवृद्धौवेत्यर्थवादत्वेन स्वार्थे प्रामाण्याभावादेकविषयताभावः । तेन विरोधाभावान्नोदाहरणत्व[2]मित्यर्थः । **आत्मनश्च परित्राण** इत्येतद्वचनं व्याचष्टे । **आत्मरक्षणे दक्षिणादीनामिति । गुरुं वा बालवृद्धौ वेति** । अस्यार्थवादत्वप्रकारमेव दर्शयति । **गुर्वादीनत्यंतावध्यानपीति** । अयमर्थः । कैमुतिकन्यायेण गुर्वादिव्यतिरिक्तानां हननमीदृशस्थले प्रशस्तमिति स्तूयते । अतः स्तावकत्वेनार्थवादत्वमिति । नन्वेतावतेदमुक्तं स्यात् । अत्र गुर्वादिहनने न तात्पर्यमिति । तत्कुतोऽवगम्यतामित्याह । **वाशब्दश्रवणादित्यादिना** । अयमभिप्रायः । यथा लोकेऽत्र पिशाचोऽस्तीत्युक्ते पिशाचो राक्षसो वा भवतु भूतमपि प्रेतोऽपि भवत्वित्यादौ प्रौढिप्रतिपालने[3] तात्पर्यं, एवमत्रापि वाशब्दापिशब्दयोः प्रौढिप्रकर्षे तात्पर्यं । अतस्तद्विशिष्टवाक्यजातस्यापि न गुर्वादिहनने तात्पर्यं । तथा वेदेऽपि । "वायुर्वै क्षेपिष्ठा देवते"ति, "प्रतिनिघ्नंतीह वा य एता रात्रीरुपयंती"त्यादौ, वैशब्दवाशब्दप्रभृतीनां शब्दानां विधिशक्तिप्रबंधकत्वदर्शनात् । प्रकृतेऽपि वाशब्दापिशब्दाभ्यां तद्वद्विधिशक्तेः प्रतिबद्धत्वात् । न गुर्वादिहननविधिः । अतश्च गुर्वादिविषये[4] "गुरुं वा बालवृद्धौवे"त्यनेन वचनजातेन हननविधेस्तन्निमित्तस्य प्रायश्चित्तविधेश्चेयं विशुद्धिरुदितेत्यनेन चाप्रासत्वात् नानयोः परस्परविरोधः । येन प्रबलदुर्बलभावकथनस्योदाहरणं स्यादिति । किंच **सुमन्तुमनु**भ्यां गोब्राह्मणाचार्यादिव्यतिरिक्तानामेवाततायिनां वधे दोषाभावप्रतिपादनादाततायिनामपि गुर्वादीनां न वध्यत्वमित्याह । **नाततायिवधे दोषोऽन्यत्रेत्यादिना** । नन्वाचार्यं च **प्रवक्तारं** इत्यत्र **मनु**वचने आचार्याद्युपादानं प्रदर्शनमात्राय[6] । तथा च हिंसामात्रप्रतिषेधतात्पर्यादस्य वचनस्याततायिनां आचार्यादीनां विधिनिषेधपरत्वं येन गुरुं वा बालवृद्धौ वेत्यस्यैतन्**मनु**वचनविरोधः स्यादित्याशंक्य परिहरति । **आचार्यादीनामाततायिनां हिंसाप्रतिषेधेनेति**[7] । अयमभिप्रायः । हिंसामात्रप्रतिषेधस्य सामान्यवचनेनैव सिद्धत्वादस्मिन्वचने आचार्यादिपदानां स्वार्थाविवक्षाकारणाभावाद्धिंसाविशेषनिषेधेनैवैतद्वचनं संप्रयोजकं[8][9] । हिंसामात्रनिषेधपरत्वे वचनांतरेणैतन्निषेधस्य प्राप्तत्वात्पुनरुक्तेनास्य निष्प्रयोजकत्वमिति । **इदं वचनं** । आचार्यंचेत्येतन्**मनु**वचनमिति यावत् । नन्वेवं तर्ह्याचार्यं च प्रवक्तारमित्यनेन नाततायिनामप्याचार्यादीनां हिंसा निषिध्यते । 'नाततायिवधे दोष' इत्यनेन चाततायिहिंसायां दोषाभावप्रतिपादनादाततायिनां वध्यत्वप्रतीतेरनयोर्वचनयोः परस्परविरोधः स्यादित्यत आह । **नाततायिवधे दोषो हन्तुर्भवति । कश्चनेत्येतदपीति** । भिन्नविषयत्वेनाविरोध इत्यर्थः ।

ब्राह्मणादिव्यतिरिक्तविषयत्वमेव दर्शयति । **यतोऽग्निद इत्यादिना** । एतदुक्तं[10] भवति । सामान्येनैवाततायिनः प्रदर्शनादाततायिवधे दोष इत्यभिहितत्वात्सामान्यशास्त्रमिदं । नातता-

१ क—रूषयति । २ क—विरोधेग्रे बाग्दुर्बल भाव य चिंता । ३ ग—प्रतिपादने. । ४ ग—गुर्वादिरूपे विषये । ५ क—इति पादना । ६ क—प्रदर्शनामात्राय । ७ क—हिंसाप्रतिबंधेनेति । ८ ग—स्वार्थविवक्षा । ९ क—संप्रयोजनकं । ख—संप्रयोजकं १० ग—यदुक्तं भवति ।

यीत्यादिकं विशेषशास्त्रस्य आचार्यं च प्रवक्तारमित्यस्य विषयः । ब्राह्मणादिकं परिहृत्यैतद्व्यतिरिक्तविषये वर्तत इति । एवं सिद्धे आततायिनां ब्राह्मणादीनामवध्यत्वे प्रमादाद्यदि आततायिनां ब्राह्मणानां हननं स्यात्तदा प्रामादिकत्वाद्धननस्य सर्वात्मना हन्तुः किं दोषाभावः स्यादित्याशंक्य नेत्याह । **अतश्च ब्राह्मणादय** इत्यादिना । स्वाभिमतमुदाहरणमाह । **तदुच्यत** इत्यादिना । **अत एव धर्मार्थसंनिपात इति** । यतो धर्मशास्त्रं प्रबलं । अतएव अस्माद्धेतोरित्यर्थः । ५

## याज्ञवल्कीये २२ श्लोकः

**शासनमुक्तलक्षणमिति** । 'दत्वा भूमिं निबंधं वा कृत्वा लेख्यं तु कारयेत्' ( याज्ञवल्कीये आचाराध्याये ३१८ श्लोकः ) इत्यत्रोक्तरूपमित्यर्थः । **प्रकारो** भेदः । **दृष्टसाक्षिणः** श्रुतसाक्षिण इत्येवमादिः । स्वरूपं च प्रकारश्च वक्ष्यमाणस्वरूपप्रकारौ येषां ते तथाविधाः । ननु प्रत्यक्षादिष्वन्तर्भूतमेव प्रमाणं नेतरत् एवंच पत्रस्य स्वस्मिन्लिखितशब्दसंदर्भद्वारा प्रामाण्यं । साक्षिणां- १० त्वभिवदनरूपशब्दद्वारा प्रामाण्यं । भोगस्य क्व प्रमाणेऽतर्भावः येन प्रामाण्यं स्यादित्याक्षिपति । **ननु लिखितस्य साक्षिणांचेति** । प्रमाणांतर्भावमाह । उच्यते । **भुक्तिरपि कैश्चिद्विशेषणैरित्यादिना** । विशेषणान्यनुमानरचनावेलायां स्फुटीभविष्यंति । अयमभिप्रायः । **अनुमानेऽर्थापत्तौ वाऽन्तर्भवतीति प्रमाणमिति** । इदं क्षेत्रादिकमस्य क्रयादिप्राप्तं भवितुमर्हति । आसेधरहितत्वे सति चिरकालोपभोगयोग्यत्वात् । "संप्रतिपन्नवदि"**त्यनुमानं** । असौ देवदत्त ए- १५ तत्क्षेत्रादिविषयकक्रयादिमान् । आसेधरहितचिरकालोपभोक्तृत्वात् । यथा संप्रतिपन्नः क्षेत्रादाविति वा । आसेधरहितचिरकालभोगान्यथानुपपत्त्या क्रयादिकं परिकल्प्यत **इत्यर्थापत्तिः** । एवमनुमानार्थापत्तिभ्यां सिद्धे क्रयादिके स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेष्वित्यादिभिर्वचनोपेतैर्नियतकारकत्वहेतुभिः स्वत्वं सिद्धं भवति । **एषाम्...अन्यतमाभावे दिव्यान्यतममुच्यते** इत्यत्र मानुषप्रमाणाभावमात्रे दिव्यावसर इति प्रतीयते । न च तथा । अपि तु २० मानुषप्रमाणाभावनिर्णये सत्येव दिव्यं प्रमाणं कर्तव्यमित्याह । **मानुषाभाव एवेति** । मानुषप्रमाणस्याभावनिर्णये सत्येव दिव्यं प्रमाणमित्येतत्कुतोऽवगम्यत इत्यत आह । **अस्मादेव वचनादिति** । अस्मादेव वचनादवगम्यत इत्युक्तं । तत्र हेतुमाह । **दिव्यस्य स्वरूपप्रामाण्ययोरिति** । अयमर्थः । दृष्टे सत्यदृष्टाश्रयणस्यान्याय्यत्वात्[1] । दिव्यस्वरूपस्य तत्प्रामाण्यस्य च शास्त्रैकसमधिगम्यत्वेनालौकिकत्वेनादृष्टत्वाद्यावद्दृष्टप्रमाणसंभावना तावदद्दृष्टप्रमाणस्यावसराभा- २५ वादेषामन्यतमाभाव इत्यत्र दृष्टप्रमाणस्याभावनिर्णये सति एवं दिव्यं प्रमाणीकर्तव्यमिति तात्पर्यार्थः ।

**सिद्धो भवतीति** । यत्र सकलसाध्यसाधनत्वे सति न मानुषी दैवी च क्रियोपन्यस्ता तत्र भवतु मानुष्येव क्रिया ग्राह्या । यत्र पुनः साध्यैकदेशे साधनं मानुषी क्रिया, दैवी तु सर्वस्मिन्साध्ये साधनं, तत्र का ग्राह्या इत्यपेक्षायामाह । **यत्रापि प्रधानैकदेशसाधनमित्यादिना** । वृद्धिव्यतिरेकेण यन्मूलभूतं स्वं **तत्प्रधान**मित्युच्यते । **तस्यैकदेशः** । 'रूपकशतमनया वृद्ध्या ३ गृहीतं' इत्यत्र रूपकशतग्रहणं प्रधानं । रूपकग्रहणमात्रमेकदेशः । एकदेशांतरं संख्या । **अस्य**

[1] क—न्यायत्वात् ।

**चापवादो दृश्यते इति**। 'मानुषाभाव एव दिव्येन निर्णय' इति यदुक्तं सामान्येन। अस्य साक्षिदिव्ययोर्विकल्पविधानात्पूर्वोक्तनिर्णयस्यापवादः। **तथा लेख्यादीनामपीति**। **आदि**शब्देन भुक्तिसाक्षिणौ गृह्येते। **तथा द्वारमार्गक्रियाभोगेति**। अस्यार्थः। **द्वारक्रिया मार्गक्रिया चेति**। क्रियाशब्दस्य प्रत्येकमभिसंबंधः। द्वारकरणं मार्गकरणं चेति। तत्र **चाभोगेच**। **आभोगः** ५ परिणाहः। तेन परिणाहवदंगणादिकं लक्ष्यते। जलवाहादिषुच। **जलवाहो** जलमार्गः। **आदि**शब्दाद्गृहादिषु प्रमार्जितरजःपुंजप्रक्षेपणस्थानमवस्करादिकं गृह्यते। एतेषु पूर्वोक्तेषु **भुक्तिरेव क्रिया** प्रमाणं। न दिव्यं नापि साक्षिणः प्रमाणमिति। तथा, **दत्तादत्तेति**। दत्तंच अदत्तं च दत्तादत्तं तस्मिन्दत्ताप्रदानिकाख्ये, स्वामिभृत्यनिर्णयाख्ये, विक्रयासंप्रदानाख्ये। द्यूतं च समाह्वयं च द्यूतसमाह्वयं। तदाख्येच विवादपादे प्राप्ते साक्षिण एव साधनं नान्यदित्यस्यार्थः। १० एतानि च विवादपदानि उत्तरत्र स्फुटीभविष्यंति।

## याज्ञवल्कीये २३ श्लोकः

सर्वेष्वर्थविवादेषु बलवत्युत्तरा क्रियेत्यत्रोदाहरणमाह। **तथा पूर्वं द्विकं शतमिति**। निष्काणां शतस्य निष्कद्वियं वृद्धिरिति प्रथमं गृहीत्वा कालांतरे स्वकार्यवशात्तस्यैव निष्कशतस्य निष्कत्रयं वृद्धिरित्यंगीकारे तदेव **परं** बलवत्। विरुद्धस्वभावत्वेन पूर्वाबाधेनोत्पत्त्यभावादित्यर्थः। १५ **न्यायमूलमेवेदं वचनमिति**। एकत्राहितस्य दत्तस्य विक्रीतस्य वा पुनरन्यत्र आध्यादिकरणे स्वत्वमेव न संभवति इत्यसावेव न्यायः, एतन्मूलमेवेदं वचनं। एतन्न्यायसिद्धमेवार्थं सौकर्यायानुवदतीत्यर्थः। अथवा, न्यायस्यैव मूलमेतद्वचनं। अनेन वचनेनाध्यादिषु पूर्वबलीयस्त्वे विहिते तद्बलादेकत्राहितादेर्वस्तुन अन्यत्राधानादिकं न घटते स्वत्वाभावादित्यसौ न्यायो निष्पन्न इत्युभयथाऽपि न्यायमूलमेवेदं वचनमित्युक्तिरनुसंधेया

२० 

## याज्ञवल्कीये २४ श्लोकः

**भुक्तेः कैश्चिद्विशेषणैर्युक्ताया इति**। आसेधराहित्यचिरकालत्वादीनि विशेषणानि तैर्युक्तायाः।

**पश्यतोऽब्रुवत** इत्येतद्वचनमेकदेशिमतमादाय व्याचष्टे। **परेणासंबंधेन भुज्यमानामित्यादिना**। अनासेधात्स्वामिनः स्वत्वानपगमाद्विंशतिवर्षोपभोगादिभिश्च उपभोक्तुः स्वत्वाप्राप्तेः २५ विंशतिवार्षिकी दशवार्षिकी च हानिरनुपपन्नेत्याक्षिपति। **नन्वित्यादिना**। अनासेधात्स्वत्वानपगममाह। **नह्यप्रतिषेधादिति**। तत्र हेतुमाह। **अप्रतिषिद्धस्येति**। यथा दानक्रयादेः स्वत्वापगमे हेतुत्वं लोके शास्त्रे च सिद्धं, तथा प्रतिषेधस्य नास्तीत्यर्थः। उपभोगादुपभोक्तुः स्वत्वमाह। **नापि विंशतिवर्षोपभोगादिति**। तत्र हेतुमाह। **उपभोगस्य स्वत्वे प्रमाणत्वादिति**। अयमभिप्रायः। यथा धूमानुमानस्य पर्वतेऽग्निज्ञापकत्वं, नोत्पादकत्वं, तथोपभोगस्यापि ३० स्वप्रमेयभूतस्वत्वज्ञापकत्वं ? अतो नोपभोगात्स्वत्वोत्पत्तिरिति। उपभोगात्स्वत्वाभावे हेत्वंतरमाह। **रिक्थक्रयादिति**। कारकहेतुषु मध्ये भोगस्य पाठाभावात्तस्योत्पादकहेतुत्वं नास्तीत्यर्थः। कारकहे-

---

१ क—पूर्वाभावेनो २ क—क्रमादिष्विति।

तुष्वपाठमेव दर्शयति। **तथाहि, स्वामी रिक्थक्रयेति गौतम**वचनस्यायमर्थः। **रिक्थक्रय-संविभागपरिग्रहाधिगमेषु** सत्सु स्वामी भवति। इति सर्वसाधारणस्वत्वकारकहेतुपरिगणनं।

अप्रतिबंधो दायो **रिक्थं**। सप्रतिबंधोदायः **संविभागः**। **परिग्रहो**ऽरण्यादिष्वनन्यपरिगृहीत-तृणकाष्ठादिस्वीकरणं। **अधिगमो** निध्यादिप्राप्तिः। असाधारणकारकस्य हेतूनाह। **ब्राह्मण-स्याधिकं लब्धमिति**। ब्राह्मणस्य प्रतिग्रहादिना यल्लब्धं तदधिकमसाधारणं। शूद्रस्य द्विज-५ शुश्रूषादिना भृतिरूपेण यल्लब्धं तदधिकमसाधारणं। "निर्वेशो भृतिभोगयोरित्यमरः (३।३। २१४) ननु 'पश्यतोऽब्रुवत' इतीदमेव **योगीश्वर**वचनं विंशतिवर्षोपभोगस्य दशवर्षोपभोगस्य च स्वत्वहेतुत्वविधायकं भविष्यतीत्यत आह। **न चेदमेव वचनमिति**। तत्र हेतुः। **स्वत्वस्य स्वत्वहेतूनां चेति**। अयमभिप्रायः। विधेरत्यंताप्राप्तप्रापणत्वस्वभावेन लोकसिद्धार्थे प्रवृत्त्य-भावादिति। **एतच्च विभागप्रकरण इति**। स्वत्वस्य स्वत्वहेतूनां च लोकसिद्धत्वमिति यत्१० तदेतत्। एवं तर्हि गौतमवचनस्य का गतिरित्याशंक्य शास्त्रपरिगणितैरेव हेतुभिः स्वत्वमुत्पाद-यितव्यं नापरिगणितैः। यतो नियमाददृष्टं जायत इत्येवं नियमार्थं न तु स्वत्वं स्वत्वकारक-हेतवो वा शास्त्रसमधिगम्या इत्येवमर्थमित्याह। **गौतमवचनंत्विति। अनागमोपभोगस्य स्वत्वहेतुत्वे विरुध्यते इति**। अनागमोपभोगेन स्वत्वोत्पत्तौ उपभोक्तुर्दंडविधानमनुपपन्नं। विधीयते च दंडः। अत एव तद्वचनविरोधादपि स्वत्वमुपभोगान्नोत्पद्यते इत्यर्थः। सति चै वि-१५ रोधे सर्वात्मना उपभोगात्स्वत्वानुत्पत्तिः। न च विरोधः। तथाहि। "**अनागमं च यो भुंक्ते**" इत्यनेनैतद्विधीयते। स्वामिनोऽसमक्षं बहुकालोपभोगेऽपि स्वत्वानुत्पादादुपभोक्ता चोरव-दंड्य इति। "**पश्यतोऽब्रुवत" इत्येतत्तु** अमुमर्थं विधत्ते। स्वामिनः समक्षं अनासेधोपभोगे विं-शतिवर्षाद्यनंतरं हानिर्भवति। उपभोगादुपभोक्तुः स्वत्वमुत्पद्यत इति। एवं च परोक्षापरोक्षविषयत्वे नानयोः परस्परविरोधः। येन पश्यतोऽब्रुवत इत्यत्रोपभोगात्स्वत्वप्रतीतिर्न स्यादित्याशंक्य परिह-२० रति। **न चागमं तु यो भुंक्ते इत्येतदिति**। न हि प्रतिज्ञामात्रेणार्थसिद्धिरित्याशंक्य हेतुमाह। **अनागमं तु यो भुंक्त इतीति**। अयमाशयः। परोक्षत्वापरोक्षत्वरूपविशेषमन्तरेण सामान्येन यः अनागमं भुंक्ते स दंड्य इति निर्देशान्न परोक्षापरोक्षविषयत्वेन व्यवस्थापनं युक्तं। न विरोध इति। **नोपभोगे बलं कार्यमिति**। उपभोगमात्रबलादेव न स्वत्वसिद्धिरित्यर्थः। **समक्षभोगे च हानिकारणाभावेनेति**। अनासेधेन स्वत्वानपगमात्, उपभोगेन च स्वत्वाप्राप्तेरिति पूर्वोक्तानु-२५ संधानेन न हानिकारणाभावो द्रष्टव्यः।

ननु पश्यतोऽब्रुवत इत्यस्य माभूत्पूर्वोक्तार्थः। "आधौ प्रतिग्रहे क्रीत" इत्यत्राध्यादिषु पूर्वक्रि-याप्राबल्यमभिहितं, तदपवादेन भूमौ विंशतिवर्षोपभोगसहिता उत्तरक्रिया। धने तु दशवर्षोपभोगस-हिता उत्तरक्रिया च बलवती। अत एवंविधस्थले आध्यादिष्वप्युत्तरक्रियैव प्राबल्येत्येवंरूपोऽर्थो-ऽस्त्वित्येवमाशंक्य परिहरति। **न चैवं मन्तव्यमित्यादिना**। अत्र क्रिया नाम करणं कृति-३० रिति यावत्। भूमौ विंशतिवर्षोपभोगरहितस्थले, धने च दशवर्षोपभोगरहितस्थले पूर्वकृताध्यादि-

१ क—क्रम। २ क—स्वत्वहेतुत्वमित्यपि पाठः। ३ क—सति चावरोधे। ४ क—अनागमे तु यो भुंक्ते। ५ क—न चैतन्मंत्रत्वमित्यादिना।

कमेव बलवत् । एतदभावस्थले तु पूर्वकृताध्यादिकापेक्षया उत्तरकालकृताध्यादिकं बलवदिति
शंकावादिनोऽभिप्रायः । परिहारवाद्यभिप्रायस्तु उत्तरक्रियाया एवाभावात् पूर्वक्रियापेक्षया उत्तर-
क्रियाप्राबल्यं न घटते । यतः सति हि धर्मिणि धर्मचिंतनमिति । किं च एवं च सति पूर्वोक्तव-
क्ष्यमाणयोर्योगीश्वरवचनयोः परस्परविरोधादानर्थक्यमपि स्यादित्याह । **तथाऽध्यादीनां**
५ **त्रयाणामिति** । अयमभिप्रायः । विंशतिवर्षोपभोगसहितं दशवर्षोपभोगसहितं चोत्तरकालकृत-
माध्यादिकं बलवत् । एतदपेक्षया पूर्वकालकृतं दुर्बलमिति । पश्यतोऽब्रुवत इत्यनेनाभिधीयत इति
पूर्वपक्षिण आशयः । एवं स्थिते, 'आधिसीमोपनिक्षेपजडबालधनैर्विनेति' पूर्वोक्तापवादकेनोत्तरव-
चनेनाधौ उत्तरं कार्यं बलवन्नभवतीति विधीयते । तथा च पूर्वेण वचनेनाधावुत्तरकार्यबलीय-
स्त्वविधानादुत्तरेण च वैपरीत्याभिधानात्परस्परविरोधादानर्थक्यमिति ।

१० ननु माभूत्स्वरूपहानिः भूम्यादीनामासेधाद्यकरणे विंशतिवर्षाद्यनंतरं व्यवहारस्य तत्तद्विषयस्य
हानिर्भवत्वित्यत आह । **नापि व्यवहारहानिरिति** । तत्र हेतुः । **यत उपेक्षां कुर्वत
इति** । अस्य वचनस्य पूर्वोक्तार्थहेतुत्वमेवोपपादयति । **इति नारदेनोपेक्षालिंगाभावकृत
इति** । उपेक्षायां यानि लिंगानि जडत्वबालत्वादीनि तेषामभावः । तत्कृता तन्निमित्ता । एत-
दुक्तं भवति । उपेक्षा लिंगेष्वसत्स्वपि व्यवहारोऽनेन किमिति न कृतो विप्रतिपन्नवस्तुनः स्वकी-
१५ यत्व इति प्रत्यर्थिनाभिहिते वादी निरुत्तरो भवति । इत्येवं प्रकारेण व्यवहाराभावो **नारदे**ना-
भिधीयते । उपेक्षां कुर्वत इत्यभिधानात् । अतो न वस्तुनो व्यवहाराभावो वक्तुं शक्यत इति ।

पश्यतोऽब्रुवत इत्येतद्वचनं प्रकारांतरेण व्याचष्टे । **अथ मतमित्यादिना** । अयमर्थः । अना-
सेधविंशतिवर्षोपभोगात्तादृशदशवर्षोपभोगाच्च भूम्याधिक्यवस्तुनो हानिर्वा तद्विषयस्य हानिरनेन-
वचनेन प्रतिपाद्यते । अपि तु स्वसमक्षं वस्तुनि उपभुज्यमाने सत्यासेधं यदि स्वामी न करोति
२० तदा कालांतरे व्यवहारहानिशंका भवेदिति व्यवहारहानिशंकानिवृत्यर्थं आसेधो विधेय इत्यासे-
धस्यावश्यकर्तव्यतां विधत्त इति । तदपि व्याख्यानं दूषयति । **तच्च नेत्यादिना** । किमयं तूष्णीं
न स्थातव्यमित्युपदेशोऽदृष्टार्थः ? । उत दृष्टार्थः ? । न तावदृष्टार्थः । तथाहि । व्यवहारहानिशं-
कायां सत्यां तन्निवृत्त्यर्थमयमुपदेशो वक्तव्यः । स च हानिशंकाकारणे सत्येवोत्पद्यते ना-
सति । तच्च कारणं विंशतिवर्षादिपरिमिता भुक्तिः । आहोस्विदन्यत् ? । न तावदन्यत् । वचने
२५ ऽनुपादानादसंभवाच्चेति बहिरेव परिहृत्य नापि तादृशी भुक्तिरित्याह । **स्मार्तकालाया भुक्ते-
रिति** । अयमर्थः । असौ मदीयं क्षेत्रादिकं प्रतिग्रहादिकमंतरेणोपभुंक्ते इति स्मरणयोग्यकालिनी
या भुक्तिः तादृशभुक्त्या व्यवहारहानिशंकैव नोत्पद्यते । साक्ष्यादिसंभवादिति । नाप्यदृष्टार्थ इ-
त्याह । **तूष्णीं न स्थातव्यमितीति** । अत्रैतावन्मात्राभिधित्सायां अविवक्षितं स्यादित्यंतरे-
णान्वयः । **अविवक्षितमनुपपन्नमिति** । अयमभिप्रायः । तूष्णीं न स्थातव्यमित्यस्योपदेशस्या-
३० दृष्टं फलमिति वक्तव्यं । तच्च फलं विधानबलात्कल्प्यं । कल्पना च गरीयसी । अदृष्टं[१]प्रथमं ताव-
न्नास्तीत्येवं प्रतीयते । "बालाग्रशतबालोऽपि न कल्प्यो निष्प्रमाणक" इति न्यायात् । साच क-
ल्पना संभवत्यसत्यां गतौ । वक्ष्यमाणानुसारेण चास्य वचनस्य गत्यंतरसंभवाददृष्टकल्पनयैवास्य

१क—पक्षया ।

वचनस्य सार्थकत्वकल्पनायां हेत्वभावात्तूष्णीं न स्थातव्यमित्ययमुपदेशो नादृष्टार्थ इति। अस्योपदेशस्यादृष्टार्थत्वमंगीकृत्यापि दोषमाह। **विंशतिग्रहणमविवक्षितं स्यादिति**। अविवक्षितं स्यादिति पदं पूर्वग्रंथशेषत्वेनैतद्ग्रंथशेषत्वेनान्वेति। अयमर्थः। तूष्णीं न स्थातव्यमित्युपदेशोदृष्टार्थः। आसेधकृते किमप्यदृष्टं फलं जायते अतस्तूष्णीं न स्थातव्यमित्युपदिश्यत इत्युक्तं स्यात्। तथा च तत्फलं विंशतिवार्षिकीति विंशतिवर्षरूपमर्यादाभावे तूष्णीं न स्थातव्यमिति निषेधमात्रे- ५ णापि सेत्स्यतीति विंशतिपदं अविवक्षितमनर्थकं स्यादित्यर्थः। अथवा सकललोकमनःप्रसादसंपादिना सुगमेन मार्गेण तच्च नेत्यादिपरिहारग्रंथसंदर्भोऽभिप्रायतो व्याख्यास्यते। तदपि व्याख्यातं दूषयति। तच्च नेत्यादिना। अयमर्थः। असौ मदीयं क्षेत्रादिकं प्रतिग्रहादिकमंतरेणोपभुंक्ते इति स्मरणयोग्यकालीना या भुक्तिः साऽस्य व्यवहारहानिशंकाप्रतिकारणत्वाभावान्निवृत्त्यर्थमसावुपदेश इति न घटते। अत एव वक्तव्यं तूष्णीं न स्थातव्यमिति एतावन्मात्रमुप- १० दिश्यत इति। तथा च विंशतिपदमविवक्षितमनर्थकं स्यात्। कुतः। दृष्टप्रयोजनाभावादस्योपदेशस्यादृष्टं प्रयोजनं कल्पनीयं। अदृष्टप्रयोजनस्य विंशतिवर्षरूपमर्यादाभावेऽपि उपपत्तेः। अतो विंशतिपदमविवक्षितमिति। विंशतिपदस्यानर्थक्यं परिहरति। **अत्रोच्यत इत्यादिना**। अयमभिप्रायः। पश्यतोऽब्रुवत इत्यनेन तूष्णीं न स्थातव्यमित्येतन्मात्रमेवोपदिश्यते नाधिकं। तथापि विंशतिपदं सार्थकं। तथाहि विंशतिवर्षपर्यंतं यदि स्वामी नासेधति, प्रत्यर्थी चासेधरहितं तावंतं कालमुपभुंक्ते १५ वस्तुतः कपटकृतलेख्यमपि। तदा विंशतिवर्षेष्वतिक्रांतेषु तत्पत्रं निर्दोषमिति पत्रगतदोषोद्भावनं निराकरणार्थे विंशतिपदं सार्थकं। अनासेधविंशतिवर्षोपभोगेन विंशतिवर्षानंतरं पत्रं निर्दोषमिति अत्र **कात्यायन**वचनं प्रमाणयति। **शक्तस्य संनिधावर्थ इति**। निराकरोति। **तदपि न आध्यादिष्वपीति**। अयमभिप्रायः। पत्रे दोषोद्भावननिराकरणत्वेन विंशतिपदस्य सार्थकत्वे अस्य न्यायस्याध्यादिपत्रेष्वपि तुल्यत्वात्। उपरितन**योगीश्वर**वचने 'आधिसीमोपनिक्षेपजडबालधनैर्विना' २० इत्यसौ आध्यादिषु अपवादो विरुध्येतेति।

**ननु** पश्यतोऽब्रुवत इत्यनेनासेधरहितविंशतिवर्षोपभोगानंतरं सामान्येन सर्वत्रपदेषु दोषोद्भावननिराकरणे प्राप्ते आधिसीमोपनिक्षेपेत्यनेन विशेषवचने साध्यादिविषये तथा न। किं तु विंशतिवर्षानंतरमपि दोषोद्भावनमस्त्येवेति पूर्वोक्तापवादे कुतो विरोध इत्याशंक्य। न **योगीश्वर**वचनस्य विरोधः। अपि तु **कात्यायन**वचनाभ्यामाधिसीमोपनिक्षेप इति **योगीश्वर**वचनस्य वि- २५ रोध इति द्योतयितुं **कात्यायन**वचनमुदाहरति। **अथ वर्षाणीति**। एतदुक्तंभवति। आधिपत्रे सीमापत्रेऽपि विंशतिवर्षानंतरं दोषोद्भावनं नास्ति। अदुष्टमेव तत्पत्रं **कात्यायन**वचनाभ्यां प्रतीयते। **योगीश्वर**वचनेन त्वेतद्विपरीततया आधौ सीमनि च विंशतिवर्षानंतरं अपि दोषोद्भावनमस्तीति। तथा च विरोधः। न चैतद्युक्तं। वक्ष्यमाणप्रकारेण विरोधेनैवोपपत्तेरिति। तस्याभिप्रेतमर्थमाह। **उच्यत** इत्यादिना। **प्रत्यक्षभोगे च साक्रोश इति**। फलानुसरणं ३० लभत इत्यनुषंगः। अत्र हेतुः। **अब्रुवत इति वचनादिति**। यतोऽब्रुवत एव फलहानिः अतो ब्रुवाणस्याक्रोशं कुर्वतः फलमस्तीत्यर्थः। **प्रत्यक्षे निराक्रोशे लभत इति**। अत्रापि

१ क—अतएवं। २ विंशतिवर्षाणीति मिताक्षरापाठः। ३ क—अतोऽब्रुवाणस्य।

फलानुसरणमित्येव । अस्तु स्वत्वं; तथापि विषयविशेषे फलहानिरुपपन्नैवेत्यर्थांगीकारेण परिहरति। **बाढमिति**। क्व विषये फलहानिर्नास्ति क्व वा फलहानिरित्याकांक्षायां यत्र फलं विद्यमानं तत्र हानिर्नास्तीत्याह । **तस्य स्वरूपाविनाशेनेति** । तस्य फलस्य । यत्र पुनः फलमुपभोगात्स्वरूपतो नष्टं तत्र संबंधिनस्वरूपस्याभावात्संबंधात्मके स्वत्वे निवृत्तेऽपि अनागमोपभोक्तारं चोरवद्दंडयेदिति ५ विधानात् । चोरेणापहृतं द्रव्यं स्वामिनेऽर्पयित्वा यथा दंडो गृह्यते तद्वदुपभोक्तारं स्वामिने फलं दापयित्वा दंडयेदिति विधानात् । वचनबलात्फलमूल्यदाने प्राप्ते फलहानिर्विधीयत इत्याह । **यत्र पुनस्तदुत्पन्नमित्यादिना** ।

## याज्ञवल्कीये २५ श्लोकः

उपनिक्षेपस्योपनिधेर्भेदं दर्शयति । **उपनिक्षेपो नामेति** । एतदुक्तं भवति । रूपसंख्ये १० अप्रदर्श्य रक्षणार्थं यद्दीयते असौ उपनिधिरिति । **नारदवचने** विश्रंभादितिपदेन रूपसंख्याऽप्रदर्शनं द्योत्यते । **हानिर्नभवतीति** । फलहानिर्नभवतीत्यर्थः ।

## याज्ञवल्कीये २६ श्लोकः

**विवादास्पदीभूतं द्रव्यं स्वामिने दापयेदित्यनुवाद इति**। "निन्हवे भावितो दद्याद्धनं राज्ञे च तत्समं" ( याज्ञव० व्य० अ० श्लो० ११ ) इत्यस्यार्थस्य विहितत्वादित्यभि- १५ प्रायः । दंडं च तत्समं विवादास्पदीभूतद्रव्यसमं राज्ञे दापयेदिति । नन्वत्र विधिरनुपपन्न. । राज्ञे च तत्सममित्यत्रैव प्रकृतधनसमदंडस्यापि विहितत्वात् । उच्यते । राज्ञे च तत्सममित्यत्र ऋणादानमात्रे विधिर्न सर्वत्रविषयेषु । भवतु वा सर्वविषयत्वं । तथापि न तत्र विधिः । तत्र तत्र विहितस्य राज्ञे च तत्सममित्यनूद्यमानत्वात् । अतो न काचिदनुपपत्तिः । ननु सर्वेष्वपि विवादपदेषु तत्समदंडविधिर्न युक्तः । गृहादिविवादेषु गृहांतरादिरूपदंडदानस्याशक्यत्वादित्याशंक्य । सत्य- २० मेवं । तादृशि स्थले तत्सममिति च वक्ष्यमाणो दंडो विधीयत इत्याह ।**यद्यपि गृहक्षेत्रादिष्विति** । ननु तर्ह्यत्र वक्ष्यमाणस्थले चासावेवार्थो विधीयते इत्यन्यतरस्याविधित्वं स्यादिति चेन्न । वक्ष्यमाणस्थले दंडस्वरूपविधिः । अत्र तु तत्र प्राप्तदंडानुवादेन दापनविधिरिति उभयत्र विधेयसंभवान्नान्यतरस्याविधित्वं ।

ननु धिक्कारस्य दंडत्वमेव कथं सिद्धं, सिद्धे वा दंडत्वे सन्निधानं कुतोऽवगम्यते, इत्याशं- २५ क्योभयत्र **मनु**वचनं प्रमाणयति । **धिग्दंडं प्रथमं कुर्यादिति** । अत्र **प्रथमं तदनंतरं तृतीयादयः** शब्दा धिग्दंडधनदंडवधदंडानां मध्ये पूर्वपूर्वापेक्षयोत्तरोत्तरस्याधिक्यप्रतिपादकाः न पुनः सर्वेष्वप्यपराधेषु प्रथमादिक्रमेण कर्तव्यताप्रतिपादकाः । **नवधा दर्शित** इति । **नवधा** नवप्रकारेण, प्रसिद्धवधव्यतिरेकेण, नवप्रकार इत्यर्थः । **दश स्थानानि दण्डस्येति** । त्रिषु वर्णेषु क्षत्रियवैश्यशूद्रेषु यानि दण्डस्य स्थानानि दशेत्यन्वयः । **एतेषां च यन्निमित्तमिति** ।

१ क—अस्तु स्वत्व तथापि । २ क—त्याकांक्षाया । ३ क—यत्पुनस्तदुत्पन्नमिति मिताक्षरापाठः । ४ क—उपचयहानिर्भवतीति । ५ दशधा इति मिताक्षरापाठः ।

एतेषां उपस्थादीनां मध्य इत्यर्थः। अकिंचनं धिग्दंडयेदित्युक्तं । तत्रैव पश्चात्तरमप्याह। **कर्म च कारयितव्य** इत्यादिना। यथाह गौतमः। **कर्मवियोग इत्यादिना**। अस्यार्थः।

## याज्ञवल्कीये २७ श्लोकः

अवृत्तौ अन्यायिनि ब्राह्मणे व्यापारनिरोधान्यायप्रख्यापनादीनि कर्तव्यानीति विशिष्टभोगस्य स्वत्वे प्रामाण्यमभिधास्यन् स्वत्वोत्पादकहेतोरागमस्य प्राबल्यं दर्शयति। **स्वत्वहेतुः प्रतिग्रहक्र-** ५ **यादिरिति**। आगमस्य भोगापेक्षया बलीयस्त्वे हेतुमाह। **स्वत्वबोधने भोगस्येति**। अय-मर्थः। भोगः स्वत्वे प्रमाणं भवत् प्रतिग्रहादिकमपेक्षते। प्रतिग्रहादिकं तु भोगं नापेक्षते। एवं च सापेक्षनिरपेक्षयोः निरपेक्षं बलीय इति न्यायेनागमस्य प्रतिग्रहाद्यात्मकस्य बलीयस्त्वमिति। **विच्छेदापरवोज्झित इति। अपरव** आक्रोशः। विच्छेदेन अपरवेण चोज्झितस्त्यक्तः। विच्छेदापरवरहित इति यावत्। एतदुक्तं भवति। विच्छेदरहितो निरंतरः। अपरवरहितो नि- १० राक्रोश इति। पूर्वावतारितवचनस्यैवावयवमभिप्रायतो व्याख्यातुमुपक्रमते। **क्वचित्त्वागमनिर-पेक्षस्यापीति। स पुनरागमाभ्यधिक इति**। स पूर्वक्रमागतो बोध्यः। आगमनिरपेक्षः प्रमाणमित्युक्तं। तत्र कीदृशं नैरपेक्ष्यमित्याशंक्य आगमज्ञाने नैरपेक्ष्यं न तु **सत्तायामि**त्याह। **तत्राप्यागमज्ञाननिरपेक्ष इति**। एतदुक्तं भवति। कश्चन आगमोऽस्तीत्यागमस्य सद्भाव-मपेक्षते। अयमसावागम इति शृंगग्राहिकतया आगमज्ञानं नापेक्षत इति। एवं तर्ह्यपेक्षितसत्ता- १५ सद्भावे किं प्रमाणमित्यत आह। **सत्ता तु तेनैवेति**। तेनैव विशिष्टेनोपभोगेनैव। नन्वेतद-नुपपन्नं। अन्योन्याश्रयप्रसंगात्। तथाहि। प्रमाणभूतेन भोगेनागमसत्तावगतिः। आगमसत्ताया-मवगतायां तत्सहकृतस्य भोगस्य प्रामाण्यमिति। उच्यते। चिरकालोपभोगानुपपत्तिरूपया अर्था-पत्त्याऽऽगमसत्तावगतिः। सत्तायामवगतायां पश्चाद्भोगस्य प्रामाण्यनिश्चय इति। साक्षात्प्रमाण-भूतेन भोगेनागमसत्ताया अवगममात्रे[6]ऽन्योऽन्याश्रयप्रसंगः। तर्हि सत्ता तु तेनैवेत्युक्तिः कथमिति २० चेत्। तद्वारकार्थापत्त्यावगमादुपचारेण तेनैवेत्युक्तिरिति द्रष्टव्यं। 'आगमोऽभ्यधिको भोगादि-त्यत्र द्विविधो भोगः प्रमाणमित्यभिप्रेतं **योगीश्वरस्य**। स्मार्तकालीन अस्मार्तकालीनश्चेति तदुभयं विभज्य दर्शयति। **विना पूर्वक्रमागतादित्येतच्चेत्यादिना**। एतदुक्तं भवति। अस्मार्तका-लीनोपभोग आगमज्ञाननिरपेक्षः। स्मार्तकालीनस्तुभोग आगमज्ञानसापेक्ष इति। नन्वेकस्यैव भोगप्रमाणस्य क्वचिदागमसापेक्षत्वं क्वचिच्च नेति कुतोऽवगम्यत इत्याशंक्य सापेक्षत्वे हेतुमाह। २५ **अतश्च स्मरणयोग्ये काल इति**। स्मरणयोग्ये काले प्रतिग्रहक्रयादिरूपस्यागमस्य प्रमिति-योग्यत्वे सत्यपि प्रमित्यभावादागमाभावनिश्चयो जायते। सिद्धे चाभावनिश्चये केवलभोगस्य बलात्कारेणापि सिद्धेरप्रामाण्यप्रसंगादागमसापेक्षत्वमित्यर्थः।

इदानीं भोगस्य क्वचिदागमज्ञाननिरपेक्षत्वे हेतुमाह। **अस्मार्ते तु काल इति**। योग्यत्वे सत्यनु-पलब्धिर्योग्यानुपलब्धिः। स्मरणयोग्ये काले प्रतिग्रहादिकस्य प्रमितियोग्यत्वाभावादेव योग्या- ३० नुपलब्ध्यभावः। तेनागमो नास्तीति निश्चेतुं न शक्यते। अभावग्राहकप्रमाणस्य योग्यानुपलब्धे-

१ वा—मिताक्षरापाठः। २ क—स्वत्वाबोधने। ३ क—प्रतिग्रहादिकर्तृभोगेनापेक्षते। ४ क—विच्छे-दोपरवोज्झितः इतिमिताक्षरापाठः। ५ कचिच्चेति मिताक्षरापाठः। ६ क—अनागममात्रान्योन्याश्रयप्रसंगः।

रसंभवात्। एवं चागमाभावनिश्चय एव भोगो न प्रमाणम्। मूलशैथिल्यात्। प्रकृते तु आगमाभावनिश्चयाभावान्मूलशैथिल्याभावेनागमज्ञाननिरपेक्षो भोगः प्रमाणमित्यर्थः। **स्मार्ते काले क्रियेति।** **क्रिया** प्रमाणमित्यर्थः। सर्वे गत्यर्था ज्ञानार्था इति। गत्यर्थे गमिर्ज्ञाने वर्तते। अतोऽनुगमो नाम निश्चयज्ञानं। तदभावेऽनुगमाभावः। क तदभाव इति साकांक्षत्वाद्योग्यानुपलब्ध्यभावेनागमाभावे ५निश्चयाभाव इत्याकांक्षां पूरयन् **कात्यायन**वचनस्थमनुगमाभावपदं व्याचष्टे। **अनुगमाभावादिति। योग्येति।** यत अनागमस्मृतिपरंपरायां सत्यामपि भोगो न प्रमाणं अत एव **मनुना** अनागमभोगेऽविशेषेण दंडो विहित इत्याह। **अत एवानागमं त्विति।** ननु 'बहून्यब्दशतान्यपी' त्यत्रापिशब्दः समुच्चये वर्तते। तथा च **उपसर्गसूत्रं** 'अपिसंभावनानिवृत्त्यपेक्षासमुच्चयगर्हाशीःसमर्थभूषणप्रश्नेष्विति'। तथा चैवमर्थः संपद्यते। बहूनब्दान् अभिव्याप्य य उपभुंक्ते स दंड्य १०इति। यत एककर्तृकानेककर्तृकानेकवर्षोपभोग एव समुच्चयो घटते नान्यथा। एवं **चापिशब्दा**दुपभोक्तुरेकत्वं प्रतीयते। तथा य इत्येकवचननिर्देशादपि। तथा च यद्येकश्चिरकालमनागममुपभुंक्ते स दंड्य इत्येकस्यैव दंड्यत्वं न बहूनां। पितृपरंपरया भोगे तु भोक्तॄणामनेकत्वादेवंविधैकभोक्तुरभावेन प्रथममनागमेनोपभोक्तुरेकत्वेन प्रथमस्यानागमोपभोक्तुः पुरुषस्य चोरसदृशो दंडो न द्वितीयस्य तृतीयस्य[1] वा दंडः। तेन तत्र भोगस्य प्रामाण्यप्रतीतेर्यदुक्तं 'अनागमस्मृति१५परंपरायां भोगो न प्रमाणमिति' तदयुक्तमित्यभिप्रायेणाक्षिप्य परिहरति। **न चानागमं तु यो भुंक्ते इत्येकवचननिर्देशादित्यादिना।** अथवा, अपिशब्दः समर्थवाची। समर्थवाचित्वं च तेनैव सूत्रेण प्रतीयते। एतदुक्तंभवति। अनागमचिरकालोपभोगे यः समर्थः स एव दंड्य इति। समर्थश्च प्रथम एव, न द्वितीयतृतीयौ। तयोः परंपरायातभोगत्वेन तादृशसामर्थ्याभावात्। अथ प्रथम एव दंड्य इत्याशयेनाशंक्य परिहरति। **न चानागमं तु यो भुंक्ते इत्येकवचननिर्दे२०शादित्यादिना।** परिहाराभिप्रायस्तु। 'आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमेति'। मध्येऽपि सागमभुक्तेः प्रामाण्यविधायकवचनबलात्। अनागमं तु यो भुंक्ते इत्यत्र य इत्युद्देश्यगतत्वेनेकवचनस्याविवक्षितत्वाच्च सागमाया भुक्तेः प्रामाण्यं। अतो द्वितीयतृतीययोरपि पुरुषयोर्निरागमोपभोगे दंडो दुर्निवार इति अनागमस्मृतिपरंपरायां सत्यां भोगो न प्रमाणमेवेति। एवं **चापिशब्दो** संभावनायां वर्तते न समुच्चये सामर्थ्ये वा। ततश्चैतदुक्तं भवति। बह्वब्दशतव्या२५प्त्यैनापि यस्य भोगः संभाव्यते। संभोगश्चेन्निरागमः। तादृशोपभोगवानपि पुरुषो दंड्यः। किमुतो[2] नागमाऽल्पोपभोगवानिति ?।

ननु अस्मरणयोग्यकालिकस्य[3]* पूर्वक्रमायातस्यैव भोगस्यैवागमज्ञाननैरपेक्ष्येण प्रामाण्यमिति यदुक्तं तदनुपपन्नं। 'अन्यायेनापि यद्भुक्तं पित्रा पूर्वतरैस्त्रिभिः'। अस्मिन्वचने अन्यायेनापि पित्रा यद्भुक्तं तथा पूर्वतरैस्त्रिभिर्यद्भुक्तं ततउभयत्रापि प्रत्यपहारो न शक्यत इत्यभिधाना३०दनागमोपभोगस्य स्मरणयोग्यकालीनस्यापि प्रामाण्यप्रतीतेरित्याक्षिपति। **यदप्यन्यायेनापि यद्भुक्तमिति। अत्रान्यायेनापीति** निरागमभोगस्य प्रामाण्यप्रतिपादकं। **पित्रेति** स्मरणयोग्यकालीनस्य। स्मार्तकालीनोपभोगस्यागमनिरपेक्षस्य न प्रामाण्यमिति।

१ क—तृतीयस्य तृतीयस्य। २ क—किमुतआगमोऽल्पोपभोगवानिति। ३ स्मरणयोग्यकालीनस्य * कालाद्ध्व्।

परिहरति। **पित्रा सहेति** । अयमर्थः । अत्र पित्रा यद्भुक्तमिति न पृथगन्वयः। येन पित्रो-पभोगस्य स्मार्तकालीनत्वेन तादृशस्य निरागमोपभोगस्य प्रामाण्यं स्यात्। अपि तु सहयोगे इयं तृतीया। **पित्रेति** । तथा च तेन सह पूर्वतरपुरुषत्रयोपभोगे क्रमेणाविच्छेदेन तदेतत्क्षेत्रादिकं तस्मादपहर्तुं न शक्यत इति एकवाक्यत्वेऽनेकपुरुषोपभोगस्य चिरतरकालमंतरेणासंभवात् अस्मा-र्तकालीनोपभोगस्य प्रामाण्यमित्युक्तं स्यात्। अतो न निरागमस्य स्मार्तकालीनोपभोगस्य प्रामाण्य-५ मिति। ननु त्रिपुरुषागतमित्यनेनानेकपुरुषोपभोगे वा कथमस्मार्तकालेऽपि भोगो लभ्यत इत्या-शंक्योपलक्षकमेतदित्याह। तत्रापि क्रमादिति। ननु भवत्वस्मार्तकालीनोपभोगः प्रमाणं। सोऽप्या-गमसत्तामपेक्षते। अतः अन्यायेनापीत्युक्तिः कथमित्यत आह। अन्यायेनापि यद्भुक्तमित्यतआह।

नन्वस्मार्तकालीना भुक्तिरागमज्ञानं नापेक्षते। अपि तु तत्सत्तामपेक्षते इत्युक्तं। तदसंगतं। यद्विनागममित्यंतं भुक्तमित्यस्मिन्वचने अत्यंतमिति सर्वात्मना आगमनैरपेक्ष्येण भुक्तेः प्रामाण्य-१० प्रतीतेरित्यत्राभिप्रायेणाक्षिपति। यच्चोक्तं **'यद्विनागममि'**त्यादिना। परिहरति। **तच्चाप्यंत-मिति** । अयमभिप्रायः। सर्वात्मना आगमस्यास्मार्तकालीनोपभोगापेक्षाभावादत्यंतमागमज्ञानं वि-नाऽपि अस्मार्तकालीनोपभोगे सति भुक्तं तद्वस्तु अपाहर्तुं न शक्यत इत्येव। न तु वस्तुत आगम-सत्तां विनाऽप्युपभोगात्स्वत्वमस्तीति येन पूर्वोक्तविरोधः[2] स्यादिति। अत्र हेतुमाह। **आगमस्य स्व-[3] रूपाभाव इति** । अनियत इति शेषः। **एतदुक्तार्थमिति** । अस्मार्तकालो लक्षकत्वेनोक्तार्थ-१५ मित्यर्थः। अस्मार्तकालीनोपभोग आगमज्ञाननिरपेक्षः प्रमाणं। स्मार्तकालीनस्त्वागमज्ञानसापेक्षः प्रमाणमित्युक्तं। तत्र स्मार्तकालीनस्यागमज्ञानापेक्षत्वेन प्रामाण्यमनुपपन्नमित्याक्षिपति।

**ननु स्मरणयोग्य इति** । तमेवोपपादयति। **तथाहीत्यादिना** । यमागममपेक्षते भोगः स किं प्रमाणान्तरेणानुगतः उत नेति कस्मिन् सति किं स्यादित्याशंक्याद्ये दोषमाह। **यच्चागम[4] इति** । अयमर्थः। प्रमाणांतरावगतागमेनैव स्वत्वे ज्ञाते भोगस्य स्वत्वज्ञाने आगमज्ञानेवानु-२० पयुक्तत्वेन प्रमाणांतरप्रमिते स्वत्वे आगमस्यैव[5] प्रमित्यनुत्पादकत्वेनाप्रामाण्यादागमज्ञानसापेक्षो भोगः[6] प्रमाणमिति वक्तुं न शक्यमिति। द्वितीयेऽपि दोषमाह। **अथेति** । अनवगतागमेन वै-शिष्ट्यासंभवादित्यर्थः। समाधत्ते। **उच्यत** इत्यादिना। एतदुक्तं भवति। प्रमाणांतरेणैवागमो-ऽवगम्यते। तादृशागमविशिष्टभोगः प्रतिग्रहाद्युत्तरभाविनि कालान्तरे स्वत्वबोधक इति। ननु उक्तं स एवागमः स्वत्वं गमयिष्यति, किमनेन भोगेनेत्यत आह। **अवगतोऽप्यागम इत्यादिना**। २५

**वाचिकस्तु ममेदमिति** । मदीयमित्यभिवदनोल्लेखि यत्र विकल्पज्ञानं स वाचिकः स्वी-कार इत्यर्थः। **तत्र नियमः स्मर्यत इति** । **तत्र** कायिकस्वीकारे । **अनुमंत्रयेत्प्राण्यभि-मृशेदिति** । अस्यार्थः। प्रतिग्राह्यः पदार्थश्चेत्प्राणी बलवान्वक्तुं समर्थः । तदा तं प्रतिग्राह्यं प्रतिग्रहीता अनुमंत्रयेत। अमुकस्त्वं मदीयोऽसि इति । सोऽपि ब्रूयादहं भवदीयोऽस्मीति।

प्रतिग्राह्यं अप्राणी अभिवदनानभिज्ञो गवादिः प्राणिष्वपि कन्या वा तदुभयं प्रतिग्रहीताऽभिमृ-३० शेदिति। **तत्सहितादागमादिति** । कायिकस्वीकारसहितागमापेक्षयेत्यर्थः।

१—तत्राप्यन्ततमागमिति मिताक्षरा पाठः २ क—विरोधस्यादिति। ३—आगमस्वरूप इति मिताक्षरापाठः। ४ यचागम इति पाठः। ५ क—आगमेवाप्रमित्य। ६ क—होमः।

'ननूपभोगसहितागमापेक्षया भोगसहितागमस्य दुर्बलत्वे यत्रैकमेव क्षेत्रं एकस्याधीकृत्यान्यस्याधीकरोति। तत्र यदि दैववशात्पूर्वस्य भोगाभावः उत्तरस्य भोगोऽस्ति तादृशेऽपि स्थले भोगरहितागमस्य दौर्बल्यं स्यात्। तथा च 'आधौ प्रतिग्रहे क्रीत' इत्यादिवचनविरोधः स्यादित्याशंक्य परिहरति। **एतच्च द्वयोरित्यादिना**। आगमोऽभ्यधिको भोगादित्येतद्वचनं प्रकारांतरेण ५ व्याचष्टे। **अथवेत्यादिना**। **एतेषां समवाय इति**। **एतेषां** साक्ष्यादीनां। **समवाये** मेलने। सर्वसंभव इति यावत्। **पूर्वक्रमाद्भोगाद्विनेति**। क्रमायातभोगव्यतिरिक्तभोगापेक्षयागमो बलवानित्यर्थः। पूर्वक्रमागतभोगस्यागमापेक्षया क्वचिद्बलीयस्त्वं दर्शयति। **सपुनरिति**। **'आगमोऽपि बलं नैवेति'** द्वितीयार्धं तात्पर्यतो व्याचष्टे। **मध्यमेन भोगरहितादिति**। **कारणं भुक्तिरेवैकेति**। एतच्चतुर्थपुरुषविषयम्॥ २७॥

१० ## याज्ञवल्कीये २८ श्लोकः

दंडव्यवस्थां दर्शयितुमाह। **आगमस्तु कृतो येनेति**। न चैतदनुपपन्नं अस्मिन्वचने दंडव्यवस्थाविधानाभावात् इति चेन्नैवम्। आद्येन पुरुषेण प्रतिग्रहादिकमेवोपन्यसनीयं। द्वितीयेनाविच्छिन्नाप्रतिरवसमक्षत्वादिविशेषेण विशिष्टो भोग एवोपन्यसनीयः। तृतीयेन समक्षत्वादिविशेषणवैशिष्ट्यमंतरेणापि क्रमागतभोगमात्रमुपन्यसनीयमिति नियमविधेर्नियमातिक्रमे दंडविधानम- १५ प्यर्थसिद्धमेवेति दंडव्यवस्थाप्रतिपादकत्वं उपपन्नमेवेति सर्वमनवद्यं। **भोग्यहानिस्तयोरपीति**। भोग्यहानिरर्थहानिरित्यर्थः।

## याज्ञवल्कीये २९ श्लोकः

**नवारूढविवादस्येति**[2]। अस्यार्थः। आरूढविवादस्य व्यवहारिणः **प्रेतस्य** संबंधिना **पुत्रेण**। **स्वार्थो** विवादास्पदीभूतः। संशोध्य आगमेन तमर्थं **भोगो न निवर्तयेत्** न प्रत्या- २० वर्तयेत्। तत्र न भोगः प्रमाणं भवतीति यावदिति।

**व्यवहर्तरि प्रेते व्यवहारो न निवर्तत** इति। **न निवर्तते** नापगच्छति प्रवर्तते इति एवेत्यर्थः।

## याज्ञवल्कीये ३० श्लोकः

**यथा हेडावुकादीनामिति**। देशाद्देशांतरं गत्वा प्रस्थाप्य येऽश्वविक्रेतारो[3] हेडाबुका इति २५ गुर्जरे प्रसिद्धोऽयं शब्दः। **गणाश्चाधिकृता इति**। **गणाः** पूगाः। **सोत्तरसभ्येनेति**। अधिकसभायुक्तेनेत्यर्थः।

## याज्ञवल्कीये ३२ श्लोकः

असंबद्धकृत इत्यमुमंशं अनियुक्तपदाध्याहारेण व्याचष्टे। **अनिर्युक्तासंबद्धकृत इति**[4]। अनियुक्तत्वेनासंबद्धः। अप्रेषितत्वेन प्रकृतव्यवहारसंबंधरहित इत्यर्थः। ननु मत्तोन्मत्तादिकर्तृको ३० व्यवहारो न सिध्यतीत्युक्तं पूर्वत्र। तत्र किं मत्तादिग्रहणमुपलक्षणं। तथाच न केवलमेतद्वचनो-

---

१ क—तादृशयपि। २ क—तथारूढः। ३ क—योश्वविक्रेतारो। ४ क—अनियुक्तो।

पात्तमत्तादिकर्तृकव्यवहारासिद्धिः । अपि तु गुरुशिष्यादिकृतोऽपि व्यवहारो न सिध्यतीत्येवं । उत मत्तादिग्रहणं नोपलक्षणं । ततश्च मत्तादिभिरेव कृतो व्यवहारो न सिध्यतीति नियमार्थमिति विकल्पे न तावदाद्यः । असंबद्धकृतश्चैवेत्येवकारेण मत्तादिभिरेव कृतो व्यवहारो न सिध्यतीति नियमप्रतीतेरिति बहिरेव परिहृत्य नापि द्वितीयः । गुरोः शिष्य इत्यादिवचनेन नियम-निवृत्तेरित्याह् । यत्तुस्मरणं **गुरोः शिष्य इत्यादिना** । अयमभिप्रायः । गुरुशिष्यादिकृतव्य- ५ वहाराणामसिद्धिकथनेन मत्तोन्मत्तादिव्यवहारव्यतिरिक्तानामपि गुरुशिष्यादिव्यवहाराणामसिद्धेः पूर्वोक्तनियमविशिष्टसिध्यभावात्पूर्वोक्तमत्तादिव्यवहाराणामेवासिद्धेरेवेतिनियमो घटत इति । गुरु-शिष्ययोर्व्यवहारस्थलं दर्शयति । **तथाहि शिष्यशिष्टिरवधेनेति** । अस्यार्थः । शिष्यस्य शिक्षाऽवधेनाताडनेन । अताडनेन शिक्षाया अशक्तौ रज्जुवेणुविदलाभ्यां सूक्ष्माभ्यां कृत्वा ताडयेत् । **अन्येन** रज्जुवेणुविदलव्यतिरिक्तेन स्थूलया रज्ज्वा स्थूलेन वेणुविदलेन वा घ्नन् ताडयन् राज्ञा शिक्षणीयो १० गुरुरिति । **भूर्या पितामहोपात्तेत्यादिवचनादिति** । 'भूर्या पितामहोपात्ता निबंधो द्रव्यमेव च । तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चैव हि' । इति वचनादित्यर्थः । **संप्रतिरोधक इति** । सर्वस्वहरणं कृत्वा दुर्गादौ परबलैर्निरोधः **संप्रतिरोधकं । नाकामो दातुमर्हति इति** । पूर्वोक्तस्थलेषु गृहीतं स्त्रीधनं पुनर्दातुमनिच्छुश्चेन्न दद्यादित्यर्थः । **गणद्रव्यं हरेद्यस्तु संविदं लंघयेच्च य इति** । सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत् इत्युत्तरार्धं । **एकं घ्नतां** १५ **बहूनां चेदित्यादि** । यथोक्ताद्विगणोदय इति वचनशेषः । **व्यवहार इष्यत एवेति इति** । गणद्रव्यहारिणः सर्वस्वहरणादिविधानम् । एकहंतॄणां बहूनां च द्विगुणदंडविधानं च विद्यते । एतदुभयमपि व्यवहारमुखेन तादृशापराधवतामेव भवतीति व्यवहारोऽस्तीत्यर्थः । एकस्य बहुभिः सार्धमित्यस्य **नारद**वचनस्याभिप्रायमाह । **भिन्नार्थैर्बहुभिरिति** । पृथक्साध्यवद्भिर्बहुभिः सार्धमेकस्य युगपद्व्यवहारो न सिध्यति । अपि तु क्रमात्सिध्यतीत्यभिप्रायः । उपसंहरति । २० **इति योजनीयमिति** । अयं भावः । उन्मत्तादिव्यवहारः सर्वात्मना न सिध्यत्येव गुरुशिष्या-दिकृतव्यवहारस्तु उक्तरीत्या सिध्यत्येवेति ।

## याज्ञवल्कीये ३२ श्लोकः

**यदि न भावयति तदा तत्समं दंड्य इति** । पूर्वं मदीयमेतदिति निवेद्य पश्चाद्यदि न साधयति तदा दंड्य इत्यर्थः । ननु प्रणष्टाधिगतद्रव्यस्य परकीयत्वेन अवश्यं देयत्वात् प्रणष्टा- २५ धिगतं देयमित्यसावुपदेश एवानर्थक इत्यत आह । **अधिगमस्य स्वत्वनिमित्तत्वादिति** । **अत्र कालावधिं वक्ष्यतीति** । अत्र प्रणष्टाधिगतस्य प्रतिदाने राजभागस्य चतुर्थांशोऽधिगंत्रे दातव्य इति । यः पुनः प्रणष्टं द्रव्यं प्राप्य राज्ञे समर्पयति शुल्कस्थानाद्यधिकृतस्तस्मै शुल्कस्थानाद्यधिकर्त्रे राज्ञो यो भागः षष्ठादिरूपः तच्चतुर्थांश उद्धृतषष्ठादिभागाद्धनाद्दातव्यो न राज्ञोंऽशात् । तथा सति, आददीताथ षड्भागमित्यादिवचनविरोधः स्यादित्यभिप्रायः । **उर्ध्वमधिगंतुश्चतुर्थोंऽशो राज्ञः** ३० **शेषमिति** वत्सरानंतरं । स्वामिन्यागते अनागते वाऽधिगन्तुश्चतुर्थांशो दातव्यः । शेषं राज्ञो भवति । तत्राधिगन्तुश्चतुर्थांशदाने इयान् भेदः । स्वामिन्यागते पूर्वोक्तरीत्या राज्ञः षष्ठांशमुद्धृत्या-

१ क—व्यवहारद्रष्टातवेति । २ क—अवश्यदेयत्वात् ।

वशिष्टाद्धनाद्राज्ञश्चतुर्थभागः । अनागते तु स्वामिनि सर्वस्माद्धनाच्चतुर्थांश इति पूर्ववदत्रापि विवेकः । राज्ञः शेषमित्यत्राप्येष विवेकः । यदा स्वाम्यागतस्तदा पूर्वोक्तरीत्या राज्ञः षष्ठादि-भागः । अनागते तु तस्मिन् सर्वस्माद्धनाच्चतुर्थमंशं अधिगंत्रे दत्वा राजा गृण्हीत इत्येवं **गौतमी-**मप्यनुसंधेयं । गौतमवचनस्थं संवत्सरमित्येकवचनमविवक्षितमित्याह । **अत्र संवत्सरमित्येक-**
५ **वचनमिति** । अर्वाक्संवत्सरादित्यत्रापि समानन्यायेनैकत्वस्याविवक्षितत्वे बुद्धिस्थत्वेन तच्चतुर्थ-पादस्याभिप्रायमाह । **हरेत परतो नृप इत्येतदपीति** । **राजा स्वांशमवतार्य तत्समं दद्या-दिति** । **स्वांशं** षष्ठांशं अवतार्य **तत्समं** यावदधिगंतृहस्तादृहीतं तत्संख्याकं राजा दद्यात्स्वामिने। तत्रापि न तज्जन्यवृद्धिं दद्यात् किं तु मूलमात्रमेव । परतो नृपतिर्हरेदिति व्यवहारानभिज्ञानात् इति तात्पर्यार्थः ।

१० एतच्च तत्समत्वं स्वकोशद्रव्येणैव नत्वधिगंत्रे दत्तो यश्चतुर्थांशस्तस्य ग्रहणेनापि तस्मै भृति-रूपेण दत्तत्वात् । भृतिरूपस्यादाने कालांतरे प्रणष्टाधिगतप्रत्यर्पणं न स्यात् । स्वांशमवतार्येति विशेषोपादानाच्च ।

## याज्ञवल्कीये ३४।३५ श्लोकौ

**निध्यधिगमो राजधनमिति** । अस्यार्थः । **निध्यधिगमो** निधेः प्राप्तिः । तया प्राप्त्या
१५ धनं लक्ष्यते । तद्राज्ञो धनं नाधिगंतुः । अभिरूपस्य श्रुताध्ययनसंपन्नस्य ब्राह्मणस्य निध्यधि-गमो न राजधनमपि तु तस्यैव । अब्राह्मणो ब्राह्मणव्यतिरिक्त आख्याता निध्यधिगमस्य कथ-यिता चेत्तदा स्वेन प्राप्तनिध्यधिगमस्य कथिता षष्ठं अंशं लभत इत्येके । एक इति निध्यधि-गमो न राजधनमपि तु सर्वग्रहणेन सह षष्ठांशप्रदानस्य विकल्पप्रदर्शनार्थमिति ।

नन्वनिवेदितविज्ञातो दाप्यस्तं दंडमेवेत्येतदनुपपन्नं । निध्यधिगंत्रा वाऽन्येन वाऽनिवेदने
२० राज्ञो ज्ञानाभावादित्यत आह । **अनिवेदित इति कर्तरि निष्ठेति** । अयमभिप्रायः । यदि निध्यधिगंता स्वयं निवेदने कर्ता प्रयोजको वा न भवति, अपि तु अन्यैर्निवेदितः सन् राज्ञो विज्ञातो भवति, तदा स तं अर्धं दंडं च दाप्य इति ॥ ३४।३५ ॥

## याज्ञवल्कीये ३६ श्लोकः

चौरैरपहृतद्रव्यस्याप्रतिदाने यस्य तद्धनं यश्च चोरस्तयोरुभयोः किल्बिषं राजा प्राप्नोतीत्युक्तं ।
२५ तदेव विभज्य दर्शयति । **यदि चौरहस्तादादायेत्यादिना** । यथास्थानं गमयेदिति । यस्य तद्धनं तं प्रापयेदित्यर्थः ॥ ३६ ॥

इत्यसाधारणव्यवहारमातृकाः ।

अथवा इति साधारणासाधारण व्यवहारमातृकाः ॥

१ क—राज्ञा गृण्हीतरित्येवं । २ क—तत्र संवत्सर । ३ कस्वांशमवेतार्थं ।

# अथ ऋणादानप्रकरणम् ३

पूर्वोत्तरयोर्ग्रंथसंदर्भयोः संगतिं दर्शयति । **साधारणासाधारणरूपामित्यादिना** । अयमभिप्रायः । प्रथमप्रकरणे साधारणमातृकाऽभिहिता । द्वितीयप्रकरणेऽसाधारणमातृकाऽभिहिता । एवं च प्रकरणद्रव्यस्योत्तरग्रंथोपयोगित्वेन ताभ्यां उत्तरग्रंथसंगतिः । अथवाऽनंतरप्रकरणमेव साधारणासाधारणात्मकं । तथाहि । देशाद्देशांतरं यातीत्यादिषु दुष्टलक्षणं सर्वसाधारणं छलं ५ निरस्य भूतेनेत्यादिकमपि । इतरदसाधारणमित्युभयात्मकत्वेन अनंतरप्रकरणेनैवोत्तरस्य संगतिरिति अनेनैवाभिप्रायेण पूर्वप्रकरणसमाप्तौ उभयात्मकत्वेन प्रकरणसमापनं ।

**ईदृशं ऋणं देयमित्यादि** । अस्वतंत्रैरपि स्त्र्यादिभिः कुटुंबरक्षणार्थं गृहीतमृणं देयं । उक्तवैपरीत्ये तु न देयं । पुत्रपौत्रादिरूपेणाधिकारिणा देयं । यद्यधमर्णिको ब्राह्मणः क्षीणवृत्तिः तदा शनैर्दाप्यो यथोदयमिति उदयवति समये देयं । क्वचित्सवृद्धिकं देयं । क्वचिदवृद्धिकमित्यनेन प्रकारेण देयमिति । १० क्रमेणाधमर्णे पंचप्रकारं उत्तमर्णे द्वैविध्यमिति मिलित्वा ऋणादानं सप्तविधमित्यर्थः । **ऋणं देयमदेयमिति** । यत्र च यदृणं देयं यच्चादेयमित्यन्वयः । **येनेत्य**धिकारिणो निर्देशः । **यत्रेति** कालस्य । **यथेति** प्रकारस्य । एवमृणादानस्य स्मृत्यंतरानुसारेण सप्तविधत्वं प्रतिपाद्याधुना मूलवचनमवतारयति । तत्र प्रथममिति ।

## याज्ञवल्कीये ३७ श्लोकः १५

**मासि मासीत्येवेति** । मासि मासीत्यनुवर्तते । तथा च प्रतिमासं वर्णक्रमाद्द्वित्रिचतुष्पंचकं भवतीत्यर्थः । द्वित्रिचतुष्पंचकमित्ययं शब्दः कन्प्रत्ययान्त इत्याह । **तदस्मिन्वृद्ध्यायेति** । पूर्वोक्ताया वृद्धे रूपादिभेदानाह । **इयं च वृद्धिरित्यादिका कायाविरोधिनी शश्वदिति** । **शश्वन्मुहुर्मुहुः** । प्रतिदिनमिति यावत् ॥ ३७ ॥

## याज्ञवल्कीये ३८ श्लोकः २०

**सर्वे वा ब्राह्मणादयोऽधमर्णा इति** । अत्र ब्राह्मणादीनामधमर्णत्वं मूर्धावसिक्तादिजातीनां उत्तमर्णत्वं च प्रदर्शनमात्रं । हीनोत्तरभावमपरिगणय्य व्यत्ययेन यथाकथंचिदुत्तमर्णत्वं अधमर्णत्वं च भवतीत्यर्थः । **न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचिदिति** । वृद्धिं कुर्वंतमधमर्णं उत्तमर्णः प्रयुक्त इति णिचि कृते निष्ठान्तः शब्दः कारितेति । च आङ् पूर्वः । न आकारिता अनाकारिता । अकृतेत्यर्थः । अकृता वृद्धिः प्रीत्या त्वं व्यवहरेति दत्तानां २५ क्वचिदपि न स्यात् । एतादृश्यपि स्थले । वत्सरादूर्ध्वं षण्मासानंतरं अनाकारितमपि धनं वर्धत इति । अस्यार्थः । वर्धनप्रकारस्तु सबंधकाबंधकभेदात्पूर्वोक्तो द्रष्टव्यः । **यस्तु याचितकमिति** । याच्ञयाप्तं याचितकमित्यमरः ( २–९–४ ) । **कृत्वोद्धारमदत्वा य इति** । याचितकरूपेणोद्धारं कृत्वेत्यर्थः । प्रीतिदत्ते वत्सरार्धादिरूपकालानंतरमकृताऽपि वृद्धिः प्राक् प्रदर्शिता । **तदपवादो नारदेनोक्त** इत्यत आह । **अनाकारितवृद्धेरपवाद इति** । विश्वस्ते पुरुषे रूप- ३०

१ क— मित्याह । २ क—यश्च याचितकमिति मिताक्षरापाठः । ३ क—कृत्वोद्धारयदत्वाय इति ।

संख्याप्रदर्शनद्रव्ये न्यस्ते स यदि मयैतत् व्यवह्रियते कालांतरं एतत्संख्याकमेतज्जातीयं च द्रव्यं दास्यामीति स्वामिनः पुरस्तात्कथयति । स च स्वामी तथैवांगीकुरुते तादृशि न्यासे अकृता वृद्धिर्नास्तीत्यर्थः । न्यासमात्रे वृद्ध्यभावस्य सिद्धत्वात् । स्वामिनेऽकथयित्वैव व्यवहारे कृते सो- दयस्य देयत्वात् च वृथादानं नाम बंदिचारणादिभ्यो दत्तं । आक्षिकं द्यूतजितं । पण्यं विक्रे-
५ यवस्तु । न्यासव्यतिरेकेण पण्यमूल्यादिषु दास्यामीति दृढीभूतवाग्व्यवहारे कृते तावत्तेषां पण्य- मूल्यादीनां परकीयत्वेनादाने अनाकारितवृद्धिप्राप्तौ अपोद्यत इति तात्पर्यार्थः ॥ ३८ ॥

## याज्ञवल्कीये ३९ श्लोकः

**पशूनां स्त्रीणां संततिरेवेति** । **स्त्रीणां** दासीनां न कुलस्त्रीणां । **कियती परा वृद्धिरिति** । वृद्धेः पराकाष्ठा कियतीत्यर्थः ।

१० **एतच्च सकृत्प्रयोगे सकृदाहरणे चेति** । एकस्मिन्नृणादानप्रयोगे एकदैव सवृद्धिकमूल- ग्रहणे चेत्यर्थः । एतदुक्तं भवति । एकस्मिन्नृणप्रयोगे दशसु रूपकेषु दत्तेषु प्रतिमासं प्रतिवत्सरं वा वृद्धेरग्रहणे कालविलंबवशात् वृद्धेर्द्वैगुण्यादिक्रमेणाभिवृद्धिर्जाता । तत्र सवृद्धिकमूलमेकदैव गृण्हन् उत्तमर्णो मूलेन सह द्विगुणं विंशतिरूपकपरिमितं द्रव्यं गृह्णीयात् । यदि तदेव द्विगु- णद्रव्यं पूर्वं यस्मै दशरूपकपरिमितं दत्तं तस्मादेव प्रयोगांतरं कृत्वा दीयते अन्यस्मै वा दीयते,
१५ तदा पूर्वप्रयोगे द्विगुणीभूतमिति कृत्वा अधुना क्रियमाणे प्रयोगांतरे न वर्धत इति न मन्तव्यं । तदा दीयमानस्यैव मूलत्वेन वृद्धेरिष्टत्वादिति । अत एव प्रथमप्रयोगे एव द्वैगुण्यादिक्रमेणाभिवृद्धिर्नास्ति । द्वितीयादिप्रयोगांतरेषु द्वैगुण्यमप्येतीति मंतव्यं।अधमर्णदेयस्य द्वैगुण्यासंभवादिति।द्वैगुण्यासंभवस्त्वेवं द्रष्टव्यः । प्रतिमासं प्रतिसंवत्सरं वा यस्मिन्दिने वृद्धिर्दीयते तस्माद्दिनात्पूर्वं अभिवृद्धस्य विच्छेदः पुनरपि नूतनत्वेनाभिवृद्धिः । एवं च वस्तुतः प्रयोगान्तरमेव भवतीति । यावद्द्वैगुण्यं प्राप्नोति
२० तावदविच्छेदेन वृद्धस्य द्रव्यस्य स्थित्यभावादिति । **सकृदाहृतेति पाठे** शनैः **शनैरिति** । यदि सकृदाहृता मूलसहिता वृद्धिरेकदैव गृहीता तर्हि द्वैगुण्यं नात्येति । अन्यथा शनैः शनै- र्गृहीता सती द्वैगुण्यमत्येतीत्यर्थः । **चिरस्थाने द्वैगुण्यं प्रयोगस्येति** । **स्थानं** स्थितिः । ऋणादानप्रयोगस्य प्रतिमासं ग्रहणमंतरेण चिरस्थितौ सत्यां द्वैगुण्यं भवतीति ॥ ३९ ॥

## याज्ञवल्कीये ४०-४१ श्लोकौ

२५ **अप्रतिपन्नं साधयन् राज्ञा निवारणीय इति** । **अप्रतिपन्नमनंगीकृतं साधयन्** प्रत्या- हारन्नित्यर्थः । **प्रत्युदाहरणं बोद्धव्यमिति** । अयमभिप्रायः । "स्मृत्याचारव्यपेतेन मार्गेणा- धर्षितः परैः । आवेदयति चेद्राज्ञे व्यवहारपदं हि तत्" इत्यनेनैतदुक्तं भवति । स्मृत्याचार- विरुद्धेन मार्गेणाभिभूतः सन् यदि राज्ञे निवेदयति तदावेद्यमानं व्यवहारपदमिति । साध्यमानो नृपं गच्छेदित्यनेनैतदभिहितं स्यात्; स्मृत्याचाराविरुद्धमार्गेण राज्ञो न निवेदयेत् । यदि निवे-
३० दयति तन्निवेद्यमानं व्यवहारपदं न भवतीति । अत एव दंडो विधीयते । **दंडो दाप्यश्च**

१ क—आक्षित ।

**तद्धनमिति** । तद्विपरीतोदाहरणमित्यर्थः । राजाऽधमर्णिकाद्दंडरूपेण गृह्णीयादित्यर्थः । इति ॥ ४० ॥ ४१ ॥

## याज्ञवल्कीये ४२ श्लोकः

नन्वत्र दंडादिरूपेण ग्रहणमनुपपन्नं 'राज्ञाऽधमर्णिको दाप्यः' इति **योगीश्वर**वचनेऽधमर्णाद्दशमांशग्रहणमात्रस्यैव प्रतीतेः, उत्तमर्णात्पंचमांशग्रहणस्य प्रतीतेरिति चेत् मैवं । ग्रहणं तावत्प्रतीयते न तत्र विवादः । तत्र को हेतुरित्यपेक्षायां दृष्टसंभवेऽदृष्टं न कल्पनीयं । दृष्टे सत्यदृष्टकल्पनाया अन्याय्यत्वात् । दृष्टहेतुश्चाधमर्णेऽगीकृतार्थादानरूपोऽपराधः । उत्तमर्णे तु न कोऽप्यपराधः । अपि त्वशक्तिरेव । अत एव यथाक्रममपराधेनाशक्यत्वेन च हेतुनाऽधमर्णाद्दंड उत्तमर्णाद्भृतिरिति सर्वमनवद्यं ।

ननु प्रतिवादिनांऽगीकृते धने प्रत्याहरणप्रकारो दंडविभागश्च दर्शितः,'प्रपन्नं साधयन्नित्यादिना'। प्रतिवाद्यनंगीकृते तु धने कथं साधनप्रकारः कथं वा दंडविभाग इत्याह । **अप्रतिपन्नार्थसाधनेत्विति** ॥ ४२ ॥

## याज्ञवल्कीये ४३ श्लोकः

**कर्मणाऽपि समं कुर्यादिति** । समोऽपकृष्टजातिश्चाधमर्णिको धनिकेन सार्धं आत्मानं कर्मणाऽपि समं कुर्यात् । श्रेयांस्तु तद्धनं शनैर्दद्यादित्यन्वयः । अस्यैव श्लोकस्य तात्पर्यार्थमाह । **उत्तमर्णेन सममिति** ॥ ४३ ॥

## याज्ञवल्कीये ४५।४६ श्लोकौ

**अविभक्तैर्बहुभिः कुटुंबार्थमिति** । बहुभिरेकैकेन वा कुटुंबार्थं यदृणमितिदेयर्णकथनं ।

**कुटुंबी दद्यादित्य**धिकारिवर्णनं । **तस्मिन् प्रेते प्रोषिते वेति** ( श्लो० ५० ) कालाभिधानं । **तद्रिक्थिन** ( श्लो० ५१ ) इत्यप्यधिकारिण एवोक्तिः । **येन देयमित्यत्र प्रत्युदाहरणमिति** । 'अविभक्तैः कुटुंबार्थं यदृणं तु कृतं भवेदि'त्यस्मिन्**योगीश्वर**वचने कुटुंब्यादिभिरधिकारिभिर्ऋणं देयमिति येनेत्ययमंशो विवृतः । तत्र कुटुंब्यादिभिरपि योषिदाद्यधिकारिभिर्विषयविशेषे ऋणमदेयमिति पूर्वमभिहितं ऋणस्य देयत्वं व्यावर्तत इति प्रत्युदाहरणत्वमित्यर्थः ।

## याज्ञवल्कीये ४७ श्लोकः

**तस्य पुरस्तादपवादमाहेति** ।'पुत्रपौत्रैर्ऋणं देयमि'त्येतद्वचनं 'सुराकामद्यूतकृते'त्याद्यपवादकथनापेक्षया यद्यपि पाठक्रमापेक्षया[1] परं, तथापि अर्थक्रमतः पूर्वभावीत्यपवाद इत्यर्थः । धूर्तबंद्यादिभ्यो दत्तस्य वृथादानत्वं प्रतिपादयति । **धूर्ते बंदिनि मल्ले चेति** । निष्फलं भवतीति वचनबलाद्वृथादानत्वं । न तु दृष्टफलाभावादित्यर्थः । **मद्यशुल्कद्यूतकदंडान् इति** । अत्र मद्यशुल्कद्यूतदंडैः पदैस्तत्तदर्थव्ययीकृतानि द्रव्याणि लक्ष्यंते । एते मद्यादयः पुत्राद्नाधिभवेयुरित्यन्वयः । तात्पर्यार्थस्तु ग्रंथ एव स्पष्टः ॥ ४७ ॥

१ क—पाटनक्रमापेक्षया ।

## याज्ञवल्कीये ४९ श्लोकः

**मुमूर्षुणा प्रवत्स्यता वेति** । मुमूर्षुणा, **प्रवत्स्यता** देशांतरं गंतुमिच्छता वा **पत्या** भर्त्रा ऋणदाने नियुक्तया भार्यया यत्प्रतिपन्नमंगीकृतं तद्देयमित्यर्थः । ननु 'भार्या पुत्रश्चे'त्यनेन भार्याया निर्धनत्वे प्रतीयमाने सति 'प्रतिपन्नं स्त्रिया देयमि'त्यादिवचनशतैरपि देयत्वे विधीयमाने कथं स्त्रिया ५ ऋणं देयं निर्धनत्वादित्यत आह । **न चानेन वचनेन ह्यादीनामिति** ॥ ४९ ॥

## याज्ञवल्कीये ५० श्लोकः

**पौगंडश्चेति शब्द्यत इति** । **पौगंड** इति बालस्यैव संज्ञांतरं । **स्वतंत्रः पितरावृत इति** । ऋते पितरौ पित्रोरभावे षोडशवर्षानंतरमेव स्वतंत्रो भवतीत्यर्थः । ननु पित्रभावे षोडशवर्षानंतरं स्वातन्त्र्यमिति नियमोऽनुपपन्नः । षोडशभ्यो वर्षेभ्यः प्रागपि पितृमरणे स्वातंत्र्यसिद्धेः। १० तथा च अप्राप्तव्यवहारस्याप्यृणं देयं स्यादित्यत आह । **यद्यपि पितृमरणादूर्ध्वमिति** । **अप्राप्तव्यवहारश्चेदिति** । अप्राप्तव्यवहारः अषोडशवर्षदेशीयत्वेन यदि तदा स्वतंत्रोऽपि हि ऋणभाङ् न भवतीत्यर्थः ।

यस्मादेवं अप्राप्तव्यवहारो न ऋणभाक् तस्माद्वक्ष्यमाणवचनमेवं व्याख्येयमित्याह । **तस्मादतः पुत्रेण जातेनेति** । न जातमात्रेण पुत्रेण पिता ऋणान्मोचनीयः । १५ अपि तु व्यवहारतया जातेन षोडशवर्षदेशीयत्वेन जातेन पुत्रेणर्णात्पिता मोचनीय इत्यर्थः । **न ब्रह्माभिव्याहारयेदिति** । अस्यार्थः । ब्रह्म वेदं नाभिव्याहारयेन्न प्रयोजयेदन्यं[1] स्वधाकारः प्रणीयतेऽस्मिन् श्राद्धे इति स्वधाकारप्रणयनं श्राद्धं तस्मादन्यत्र श्राद्धव्यतिरिक्तस्थले नाभिव्याहारयेदिति । एतदुक्तं भवति । श्राद्धे वेदोच्चारणं कारयेत् यदि स्वयमनुपनीतः । उपनीतस्य स्वयमेवोच्चारणेऽधिकारात् । एवं च बालस्यापि प्रयोजककर्तृत्वप्रतीतिबलाद्यजमानताप्रतीतेरधिकारो- २० ऽस्तीति । यद्वा ब्रह्म वेदं, अन्यो ऋत्विगादिः प्रयोजककर्ता । अनुपनीतं बालं नाभिव्याहारयेत् । बालं वेदोच्चारणे न प्रयोजयेदित्यर्थः । स्वधानिनयनादन्यत्र । **संभूयसमुत्थानेनेति** । अंशकल्पनामंतरेण मिलित्वैवेत्यर्थः । अविभक्ताः संभूयसमुत्थानेन ऋणं दद्युरित्युक्तं । तत्र तात्पर्यार्थमाह । **गुणप्रधानभावेनेति** । प्रधानभूतो मुख्यो दद्यादित्यर्थः ।

**अत ऊर्ध्वं पितुः पुत्रा इति** । यतः पुत्रपौत्रैर्ऋणं देयं अतः पितुरूर्ध्वं अविभक्ता वा २५ पुत्रा ऋणं दद्युः। अविभक्तानां पुत्राणां ऋणदाने प्रकारमाह । **यस्तांवोद्वहतेधुरमिति**[2] । अविभक्तानां मध्ये यस्तां धुरं कुटुंबभारमुद्वहति स दद्यादित्यभिप्रायः । अत्र 'तां वेति' वाशब्द एवकारार्थः । विभक्तानां दानप्रकारमाह । **यथांशत इति** । **अत्र च यद्यपीति** । **अत्र** 'पुत्रपौत्रैर्ऋणंदेयमि'त्यस्मिन्वचने । **अत्र विभावितमिति** । **अविशेषोपादानमिति** । अत्र बृहस्पतिवचने विभावितमितिसामान्येनोपादानात् । 'पुत्रपौत्रैर्ऋणं देयं निन्हवे साक्षिभावित'मिति ३० **योगीश्वरवचने साक्षिभावित**मितिपदं प्रमाणमात्रमुपलक्षयति । अतश्च येन केनापि प्रमाणेन

१ क—प्रयोजयेदन्येन। २ क—यस्तां वोद्वहते धुरमिति मिताक्षरापाठः।

साधितमृणं पुत्रादिभिर्दातव्यं इत्यर्थः । एवं च **योगीश्वरबृहस्पतिवचनयोर्न** विरोध इत्यभिप्रायः ॥ ५० ॥

## याज्ञवल्कीये ५१ श्लोकः

**ऋणापाकरणे ऋणी तत्पुत्र इति** । **ऋणी** ऋणग्राही । 'ननु रिक्थग्राह' इत्येवालं न 'योषिद्ग्राह' इत्येवं वक्तव्यं । तस्य योषितोऽपि द्रव्यत्वेन' रिक्थरूपत्वात् । **अत आह योषितोऽ** ५ **विभाज्यद्रव्यत्वेनेति** । अयमर्थः । यद्यपि योषिद्द्रव्यं भवति तथाऽपि रिक्थशब्दवाच्यत्वं नास्ति तस्य विभागार्हद्रव्य एव लोके रिक्थशब्दप्रयोगात् । योषितश्च विभागानर्हत्वादिति ।

**एतेषां** रिक्थग्राह्यादीनां **समवाये** मेलने केन क्रमेण ते ऋणं दाप्या इत्याकांक्षायां 'रिक्थग्राहऋणं दाप्य' इत्येतद्वचनपाठक्रमेणैव दाप्या इत्याह । **एतेषां समवाय इति** । रिक्थग्राह्यादीनां सति हि समवाये क्रमचिंता । स एव समवायो नास्तीत्याक्षिपति । **नन्वेतेषामिति** ।१० समवायाभावमेवोपपादयति । **न भ्रातरो न पितर इति** । न भ्रातरो न पितरो रिक्थहराः । अपि तु 'पितू रिक्थहराः पुत्रा एवेति' **मनुना** प्रतिपादितत्वात् ( अ. ९ श्लो. १८५ ) । पुत्रे विद्यमानेऽन्यस्य रिक्थहारित्वासंभवात् रिक्थग्राहपुत्रयोर्मेलनं नास्तीत्यर्थः । ननु मा भूद्रक्थग्राहपुत्रयोः समवायः, योषिद्ग्राहपुत्रयोः समवायोऽस्तीत्याशंक्य योषिद्ग्राहाभावादेव नानयोः समवाय इत्याह । **योषिद्ग्राहोऽपि नोपपद्यत इति** । अत्र हेतु**र्न द्वितीयश्चेति** । द्वितीयभर्तृनिषेधादेव १५ योषिद्ग्राहाभाव **इत्यर्थः** ।

'पुत्रोऽनन्याश्रितद्रव्य' इत्यत्र पुत्र ऋणं दाप्य इत्युक्तं । असावप्युपदेशोऽनर्थक इत्याह । **तथा ऋणं पुत्रो दाप्यत इति । तत्र हेतुः पुत्रपौत्रैरिति** । 'पुत्रपौत्रैर्ऋणं देयमि' त्यत्रास्यैवार्थस्य प्रतिपादितत्वेन पौनरुक्त्यात् अत्र पुनः कथनमयुक्तमित्यर्थः । 'पुत्रोऽनन्याश्रितद्रव्य' इत्यत्रैवानन्याश्रितद्रव्य इति विशेषणमुपात्तं तदप्यनर्थकमित्याह । **अनन्याश्रितद्रव्य इति** । तत्रोपप-२० त्तिमाह । **पुत्रे सतीति** । पुत्रे विद्यमाने पितृद्रव्यस्यान्यगामित्वाभावात् अनन्याश्रितद्रव्यः पुत्र ऋणं दाप्य इत्यर्थः व्यर्थविशेषणमित्यर्थः । सत्यपि पुत्रे पितृद्रव्यस्यान्यगामित्वमंगीकृत्यापि दोषमाह । **संभवे चेति** । अयमाशयः । यदा पुत्रे विद्यमानेऽपि रिक्थग्राह्यंतरं संभवति तदा न पुत्रा ऋणं दाप्याः; अपि तु यदा पुत्रोऽनन्याश्रितद्रव्यः स्वयमेव रिक्थग्राही, तदा ऋणं दाप्य इत्येतदर्थं अनन्याश्रितद्रव्य इत्येतद्विशेषणं सार्थकं इत्येवं कृत्यमस्मिन्पक्षे । तथा च रिक्थग्राहि-२५ त्वमेव ऋणदाने हेतुर्न पुत्रत्वमित्युक्तं स्यात् । एवं च एषोऽर्थः सिद्धो भवति । रिक्थभागृणं दाप्य इति । अस्यार्थस्य 'रिक्थग्राह ऋणं दाप्य' इत्यनेनैवांशेनोक्तत्वात्पुनरपि 'पुत्रोऽनन्याश्रितद्रव्या' भिधानमनुपपन्नमिति । मूलवचनस्य चतुर्थपादमाक्षिपति । **पुत्रहीनस्य रिक्थिन इत्येतदपीति** ।

आक्षेपाभिप्रायमेव विवृणोति । **पुत्रे सत्यपीति** । एवं पुत्रे विद्यमानेऽपि रिक्थग्राह ऋणं दाप्यः तदा किमुताविद्यमाने पुत्रे रिक्थग्राहो दाप्य इति कैमुतिकन्यायेनैवा-३० र्थतः सिद्धत्वात्पुत्रहीनरिक्थिन इत्ययमुपदेशोऽनर्थक इत्यर्थः इत्याक्षिप्य परिहरति **अत्राच्यत इत्यादिना** । पुत्रे सत्यन्यस्य रिक्थग्रहणासंभव इति यदुक्तमाक्षेपदशायां तत्राह । **पुत्रे स-**

१ क—विभज्य ।

**त्यन्यन्यो रिक्थग्राही संभवतीत्यादिना** । क्लीबादिपुत्राणां रिक्थहरत्वाभावे हेतुमाह । **तथा च क्लीबादीननुक्रम्येति** ।

योषिद्ग्राहसद्भावमाह । **योषिद्ग्राहो यद्यपीति** । अयमभिप्रायः । शास्त्रे भर्त्रंतरनिषेधात्स्त्रीणां यद्यपि शास्त्रीयः पतिर्द्वितीयो नास्ति तथा शास्त्रनिषेधोल्लंघनकारिणो योषिद्ग्राहित्वसंभवा-
५ त्तादृशस्तत्पतिकृतर्णापाकरणेऽधिकारीति । संभवतु नाम एवंविधो योषिद्ग्राहः शास्त्रातिकारी, तस्यापि स्मृत्यंतरोक्तलक्षणानुसारेणानेकविधत्वादनियमने किं सर्वे योषिद्ग्राहा ऋणापाकरणेऽधिकारिण इत्याकांक्षायां नियममाह । **यश्चतसृणामिति** । स्वैरिणीनां चातुर्विध्यं पुनर्भुवां च त्रैविध्यं तत्र च यथाक्रमेणांतिमप्रथमयोषिद्ग्राहयोरेवर्णापाकरणेऽधिकारित्वं चेत्येतत्सर्वं **नारद**वचनैः प्रतिपादयति । **यथाह नारदः 'परपूर्वाः स्त्रिय' इत्यादिना** । **परः** पतिः **पूर्वो** यासां तास्तादृश्यः
१० देवरादीनपास्येति नियोगविधिना प्राप्तान् देवरादीन् परित्यज्येत्यर्थः । **प्राप्ता देशादिति** । अस्यार्थः । देशाद्देशांतरात्प्राप्ता सती धनक्रीता भवति या स्त्री सा क्षुत्पिपासातुरा सती तवाहमिति प्राप्ता भवेत् सा चतुर्थी स्वैरिणीति कथिता । **अंतिमा स्वैरिणीनामिति** । स्वैरिणीनां मध्ये यांऽतिमा । पुनर्भुवांच मध्ये या प्रथमा । ते यं उपाश्रिते स, तयोः पतिकृतं ऋणं दद्यादर्थादित्यन्वयः । **ऋणं वोढुः स भजत इति** । वोढुः पत्युः । 'पुत्रोऽनन्याश्रितद्रव्य' इत्यत्र पुत्रग्र-
१५ हणरिक्थयोषिद्ग्राहयोरभावे पुत्रेणर्णं देयमिति एवंविधक्रमप्रतिपादनार्थं । न तु ऋणापाकरणे पुत्रस्याधिकारप्रदर्शनाय । न पौनरुक्त्यं स्यात् इत्याह । **पुत्रस्य पुनर्वचनमिति** । अनन्याश्रितद्रव्य इत्येतदपि विशेषणं सार्थकमित्याह । **अनन्याश्रितद्रव्य इतीति** । अनन्याश्रितद्रव्येन पितृकृतर्णापाकरणेऽधिकारान्नांधबधिरादय इत्येवमर्थपरत्वेनानन्याश्रितद्रव्य इति विशेषणं सार्थकमिति । एतदुक्तं भवति । अंधबधिरादयोऽन्याश्रितद्रव्याः अंधत्वादिदोषयुक्तत्वेन पितृरिक्थांशग्रहणायो-
२० ग्यत्वात् । अतोंऽधादिपुत्रा अनन्याश्रितद्रव्यत्वेन पितृऋणापाकरणेऽनधिकारिणः । अंधत्वादिदोषरहितास्त्वधिकारिणः पितृऋणापाकरणे अनन्याश्रितद्रव्यत्वेनेत्यस्य विशेषणस्य सार्थकत्वमिति पुत्रहीनस्य रिक्थिन इत्यस्य सिद्धांताभिप्रेतमर्थमाह । **पुत्रहीनस्य रिक्थिन इत्येतदपीति** । पुत्रपौत्राभावे प्रपौत्रोऽपि यदि रिक्थग्राही तदा प्रपितामहर्णदानेऽधिकारी । अन्यथा रिक्थग्रहणाभावे प्रपौत्रः प्रपितामहर्णापाकरणे नाधिकारीत्यर्थः । रिक्थभाजः प्रपौत्रस्य प्रपितामहर्णदाने अ-
२५ धिकारप्रतिपादितत्वेन पुत्रहीनस्य रिक्थिन इत्यप्यंशः सार्थक इति तात्पर्यार्थः ।

'पुत्रहीनस्य रिक्थिन' इत्यमुमंशं प्रकारान्तरेण व्याचष्टे । **यद्वा योषिद्ग्राहाभाव इति** । अयमर्थः । रिक्थग्राहाभावे 'योषिद्ग्राह ऋणं दाप्यः' तदभावे अनन्याश्रितद्रव्यः पुत्र ऋणं दाप्य इति पुत्रोऽनन्याश्रितद्रव्य इत्यंतेनोक्तं । अधुना पुत्राभावे योषिद्ग्राह ऋणं दाप्य इत्युच्यते । **पुत्रहीनस्य रिक्थिन इत्यनेनेति** । अस्मिन्पक्षे रिक्थिन इति पञ्चमी । रिक्थिनः सकाशादृणं दाप्य-
३० मित्यर्थः । नन्वत्र 'पुत्रहीनस्य रिक्थिन' इत्येवं, न तु पुत्रहीनस्य योषिद्ग्राह इति । अतः पुत्राभावे योषिद्ग्राहो दाप्य इतीयं व्याख्या कथमित्यत आह । **रिक्थशब्देन योषिदेवेति** । **स तस्य हरते धनमिति चेति** । अत्र यो यस्य दारान् हरते स तस्य धनमपि हरेदिति न विधिः । अपि तु यस्माद्दारा एव धनं तस्माद्दारान् हरन् तद्धनहारीति व्यपदेशभाग्भवतीत्यर्थः ।

**इति परस्परविरुद्धमिति** । अत्र हि किंविधो विरोधः । तथा हि योषिद्ग्राहाभावे पुत्रेणर्णं देयमिति एकः क्रमः प्रतीयते । 'योषिद्ग्राहस्तथैव च' 'पुत्रोऽनन्याश्रितद्रव्य' इत्यंतेन । 'पुत्रहीनस्य रिक्थिन' इत्यनेन तु पुत्राभावे तु योषिद्ग्राहेणर्णं देयं इति पूर्वोक्तविपरीतक्रमः प्रतीयते । एवं च क्रमे परस्परविरोध इत्येको विरोधः । यदा योषिद्ग्राहः पुत्रश्च द्वावपि स्तस्तदोभयसद्भावे परस्पराभावोपलक्षितयोरेवर्णदत्वनियमात् उपलक्षकाभावे सति न कस्यापि ऋणं देयमिति कृत्वा 'यदा तु न सकुल्यास्युर्न च संबंधिबांधवाः।तदा दद्याद्द्विजेभ्यस्तु तेष्वसत्स्वप्सु च क्षिपेदि'त्यावश्यर्णदेयत्वप्रतिपादकवचनविरोध इत्यपरो विरोधः । एतद्वयमपि सूचितपरस्परविरुद्धं इत्यनेन **उभयसद्भाव** इत्यनेन च पूर्वोक्तमाक्षेपं परिहरति । **नैष दोष इति** । अनेके योषिद्ग्राहिणस्तत्र द्वे कोटी अंतिमस्वैरिणीग्राही प्रथमपुनर्भूग्राही, प्रकृष्टधनयुक्तस्त्रीहारीत्येका कोटिः । निरपत्यनिर्धनयोषिद्ग्राहीत्यन्या कोटिः । एवं स्थिते प्रथमकोट्यंतर्भूतयोषिद्ग्राहाभावे पुत्र ऋणं दाप्यत इत्यभिधीयते 'पुत्रोऽनन्याश्रितद्रव्य' इत्यनेनेत्याह । **अंतिमस्वैरिणीग्राहिण इति** । पुत्राभावे द्वितीयः कोऽप्यंतर्भूतो योषिद्ग्राह ऋणं दाप्य इत्यभिधीयते । 'पुत्रहीनस्य रिक्थिन' इत्यनेनेत्याह । **पुत्राभावे तु निर्धन इति** । एतदुक्तं भवति । न हि सामान्येन योषिद्ग्राहाभावे पुत्रो दाप्यः, पुत्राभावे योषिद्ग्राहो दाप्य, इति उच्यते येन विरोधः स्यात् । किं तु योषिद्ग्राहेषु कोटिद्वयालंबनेनैवंविधयोषिद्ग्राहाभावे पुत्रो दाप्यस्तदभावे पूर्वोक्तविलक्षणयोषिद्ग्राहो दाप्य इत्यवांतरभेदांगीकरणेन न क्रमविरोधो नाप्यवश्यमृणस्य देयप्रतिपादकवचनसंदर्भेण सह विरोधः अवश्यमनन्यत्वेनैव देयत्वादिति न कश्चिद्विरोध इति । 'पुत्रहीनस्य रिक्थिन' इति अस्य पूर्वोक्तव्याख्यानांतरेणायमर्थः सिद्धः । योषिद्ग्राहाभावे पुत्र ऋणं तदभावे योषिद्ग्राहो दाप्य इति ।

अत्र **नारदवचनं** प्रमाणयति । **एतदेवोक्तमित्यादिना** । धनस्त्रीहारीत्येतन्नारदवचनं व्याचष्टे । **धनस्त्रीहारिपुत्राणां समवाय इति** । पुत्रहीनस्य रिक्थिन इत्यस्य व्याख्यानांतरं वक्तुमुपक्रमते । **'पुत्रहीनस्य रिक्थिन' इत्यस्य अन्या व्याख्येति** । तदेव व्याख्यानांतरमभिधातुमाकांक्षापूर्वकमर्थसिद्धं किंचिदाह । **एतेन स्त्रीहारि पुत्रा इति** । अयमर्थः । 'रिक्थग्राह ऋणं दाप्य' इत्यादिना 'पुत्रोऽनन्याश्रितद्रव्य' इत्यंतेनोक्ता धनस्त्रीहारिपुत्रा ऋणं दाप्या इत्युक्तं । कस्य कृते ते ऋणं दाप्या इत्याकांक्षयां सत्यां प्रथमतो यस्मादृणं गृहीतं तस्योत्तमणर्स्य दाप्याः । तस्मिन्नसति तत्पुत्रस्य पौत्रस्य चेति एष एव चार्थसिद्धार्थः । इत्यर्थसिद्धमभिधायाधुना पुत्रहीनस्य रिक्थिन इत्यमुमंशमवतारयति । **पुत्राद्यभाव इति** । अस्मिन् पक्षे **रिक्थिन** इति षष्ठी । अमुमेवार्थं विवृण्वन् व्याचष्टे । **पुत्राद्यन्वयहीनस्येति** । तस्य सपिंडादिरूपस्य रिक्थिनः कृते रिक्थग्राहादयः पूर्वोक्तक्रमेण ऋणं दाप्या इत्यर्थः। **ब्राह्मणस्य तु यद्देयमिति** । सान्वयस्य ब्राह्मणस्य यदृणं देयं स चेद्ब्राह्मणो नास्ति तदा तत्सकुल्येषु तदृणं निर्वपेत् तदभावेऽस्य ब्राह्मणस्योत्तमर्णस्य बंधुषु निर्वपेदित्यन्वयः। सकुल्याः सगोत्रत्वे सति सपिंडाः । बंधवोऽसगोत्रत्वे सति सपिंडाः । पुत्राद्यन्वयाभावे रिक्थग्रहणयोग्यसपिंडाद्यभावे चैते पूर्वोक्ताः कस्य कृते ऋणं दाप्या इत्याकांक्षानिवृत्तये **नारदवचन**मेव दर्शयति । **यदा तु न सकुल्याः स्युरिति** । एवं च **नारदवचने** व्यवस्थापनीये ।'एते धनस्त्रीहारिपुत्रा' इत्यादिना 'तदभावे तत्पुत्रादेरित्यंतेन'

१ क—केनापी । २ क—अवश्यमन्यत्वमेव ।

योऽर्थोऽभिहितस्तत्र **नारदीयं** 'ब्राह्मणस्य तु यद्देयमिति' श्लोकपूर्वार्धे प्रमाणयति । **ब्राह्मणस्य त्विति** । 'पुत्राद्यभावे कस्य दाप्या' इत्यादिना, 'तस्य रिक्थिनो दाप्या' इत्यंतेन योऽर्थो दर्शितस्तमर्थं नारदीयेनैव सार्धश्लोकेनान्वयव्यतिरेकाभ्यां द्रढयति । **'निर्वपेत्तत्सकुल्येषु'** इत्यादिना । तत्र निर्वपेदित्यनेनान्वयः । अन्वयाभावे तत्सकुल्येषु निर्वपेदित्यन्वयमुखेनाभिधानात् ।
५ 'यदा तु न सकुल्याः स्युरिति' व्यतिरेकः । सकुल्याभाववद्द्विजादौ निक्षिपेदित्यभिधानेन सत्सु सकुल्येषु द्विजादावृणदाननिषेधद्वारा पूर्वोक्तार्थस्य दार्ढ्यात् ॥ ५१ ॥

## याज्ञवल्कीये ५२ श्लोकः

**अधुना पुरुषविशेष इति** ।'पुत्रहीनस्य रिक्थिन' इत्यस्यांतिमव्याख्यानेनायमर्थः सिद्धः । पुत्राद्यन्वयहीनस्योत्तमर्णस्य यो रिक्थी सपिंडादिस्तस्य रिक्थिनः कृते एते पूर्वोक्ता ऋणं
१० दाप्या इति । एतेन 'रिक्थं चर्णं गृह्णीयान्नान्य' इत्यादि नियमाद्रिक्थग्रहणायोग्यस्य पुरुषविशेषस्यर्णग्रहणमप्यर्थान्निषिद्धं स्यात् । एवमार्थिकात्पुरुषविशेषे ऋणग्रहणप्रतिषेधप्रसंगादन्यदपि निषेधतीत्यर्थः । **अपि तु प्रतिषिद्धं साधारणधनत्वादिति** । साधारणं समुदितं धनं येषां भ्रात्रादीनां ते तादृग्विधाः तेषां भावस्तत्त्वमिति समासः ।

दंपत्योर्विभागात् प्राक् परस्परानुमितिव्यतिरेकेण प्रातिभाव्यादिकं[1] नास्तीति यदुक्तं तदाक्षिपति ।
१५ **ननु दम्पत्योरिति** । तत्र हेतुः । **तयोर्विभागाभावेनेति** । विभागाभावात् विभागात्प्रागित्यत्र विभागपदवैयर्थ्यात् विशेषणानर्थक्यमित्यर्थः । अर्धांगीकारेण । परिहरति । **सत्यमित्यादिना** । एवं **श्रौतस्मार्ताग्निसाध्येषु कर्मसु** सहाधिकारविधिबलादर्थसिद्धमर्थमाह । **अतश्चेति** । 'पूर्तं खातादिकर्म यत्' **इत्यमरः** (२-७-२८)[2]। पुण्यफलेषु चेत्यमुमंशं व्याचष्टे । **तथा पुण्यानामिति** । **दिवि ज्योतिरिति** । अस्यार्थः । **दिवि** द्युलोकादावजरं कारणभूतं सुकृतनाशपर्यंत-
२० मपि नश्वरं ज्योतिः तेजः प्रधानं कलेवर**मारभेतामिति** निष्कृष्टमर्थं दर्शयति । **येषु पुण्यकर्मस्विति** । यथाऽऽधाने सहाधिकारविधिबलात्साध्याग्निनिष्पाद्यस्वर्गादिफलेषु सहत्वं विभागाभावश्चेत्तर्हि[3] द्रव्यस्वाम्येऽपि सहत्वविधायकवचनबलात्सहत्वसिद्धे द्रव्यसाध्यपुत्रादिफलेष्वपि दंपत्योः सहत्वं । सहितयोरेव द्रव्यस्वाम्यात् द्रव्यस्याविभाज्यत्वमपि स्यात् । तथा च द्रव्येऽपि दंपत्योर्विभागाभावाद्यदुक्तं विभागात्प्राक् प्रातिभाव्यादिकं नास्तीति तद्व्यर्थविशेषणत्वादेव पूर्ववदसं-
२५ गतमित्यभिप्रायेणाक्षिपति ।

**ननु द्रव्यस्वामित्वेऽपि सहत्वमुक्तमिति** । द्रव्यस्वामित्वेऽपि सहत्वोक्तिमेवदर्शयति । **द्रव्यपरिग्रहेषु चेति** । **अस्यापस्तंबवचनस्यायमाक्षेपवाद्यभिप्रेतोऽर्थः** । पाणिग्रहणाद्धि सहत्वमित्यनुवर्तते । द्रव्यपरिग्रहेषु चार्जनेषु च सहत्वमेव दंपत्योः । एतदुपपादयति । **न हि भर्तुरिति** । भर्तुर्विप्रवासे सति भार्याया नैमित्तिके दाने न हि स्तेयं चौर्यमुपदिशंतीति । द्रव्यस्वाम्येऽपि स-
३० हत्वविधानाच्छ्रौतस्मार्ताग्निसाध्यकर्मादिष्विव द्रव्येऽपि विभागो नास्तीत्यर्थः । 'द्रव्यस्वाम्यमात्रमुपदिशत्ये'तद्वचनं न तत्र सहत्वविधानं येन विभागाभावः स्यादित्यर्धांगीकारेण परिहरति । **सत्यं**

---

१ क—प्राग्विभाग्यादिकं । २ क—पूर्तंखातादिकर्मणीत्यमरः । ३ क—विभागाभावश्च तर्हि ।

**द्रव्यस्वामित्वमित्यादिना** । 'द्रव्यपरिग्रहेषु चे'त्यादिवचनस्यायं सिद्धांतसंमतोऽर्थः । द्रव्यार्जनेष्वपि सहत्वं दंपत्योः । एतच्च सहत्वमौपचारिकं न मुख्यं । तथा हि । यथा आधानादिषु पतिपत्न्योरन्यतराभावे आधानादिस्वरूपासिद्धिः एवं द्रव्यार्जने न; अपि तु पतिरर्जयिता पत्नी चार्जितं रक्षयतीति योगक्षेमावुभाभ्यां क्रियेते इति उभयानुसंधानसिद्धत्वेन सहत्वमिव । एवं च यत्राधानादिषु सहत्वं तत्र स्वत्वमस्तीत्यत्रापि द्रव्यपरिग्रहेषु सहत्वप्रतीतेः स्वत्वमस्तीति । तदेतद्गूढाभिसंधिराह । **यस्माद्द्रव्यपरिग्रहेषु चेत्युक्तेति** । अयमभिप्रायः । न सहत्वं विधत्ते । अपि तु लोकसिद्धमेव । सहितयोरेव स्वाम्यात् । अथैवं ब्रूषे विवाहात्प्रागर्जिते द्रव्ये पुरुषस्यैव स्वत्वं । तत ऊर्ध्वमर्जिते तु पतिपत्न्योरिति । तदपि तु । तथा सति पुत्रस्यापि स्वजन्मतः प्राक् पित्रार्जितधने स्वत्वमेव न स्यादित्यलमतिप्रपंचेन । **अन्यथा स्तेयं स्यादिति** ॥ ५२ ॥

## याज्ञवल्कीये ५३ श्लोकः

अन्यथा स्वत्वाभावे, **उर्वराप्रायभूरिति** । 'उर्वरा सर्वसस्याढ्ये' त्यमरः ( २-१-४ ) **इतरस्य सुता अपि** इत्यत्रापि वितथपदमनुवर्तत इत्याह । **वितथ इत्येवेति** । वैतथ्यमेव दर्शयति । **शाठ्येनेति** । दौर्जन्येन धनाभावेन वा अधमर्णो यदोत्तमर्णस्य धनं न ददाति तदा दानप्रतिभूर्दाप्य इत्यर्थः ॥ ५३ ॥

## याज्ञवल्कीये ५४ श्लोकः

दानप्रतिभुवः पुत्रा मूलमेव दद्युरित्याह । **ते च मूलमेवेति** । मूलमेव च मूल्यं । **व्यासवचनं** व्याचष्टे । **प्रातिभाव्यव्यतिरिक्तमित्यादिना** । अत्र प्रातिभाव्यव्यतिरिक्तमित्येतत्पदमर्थसिद्धं । 'प्रातिभाव्यागतं सुत' इत्यमुमंशं व्याचष्टे । तथा **तत्सुतोऽपीति** । 'तत्सुतौ तु न दाप्या'वित्यमुमंशं व्याख्यास्यन् तत्सुताविति पदं निर्वक्ति **तयोः पुत्रपौत्रयोः सुतावित्यनेन** । तौ कावित्याकांक्षायां विवृण्वन्नाह **पौत्रप्रपौत्रावित्यनेन** । अधुना **तत्सुतौ न दाप्यावित्यस्य** वाक्यार्थमाह । **प्रातिभाव्यायातमिति** । पौत्रसुतः प्रपौत्रो अप्रातिभाव्यायातम् । पुत्रसुतः पौत्रः प्रातिभाव्यायातंचर्णमगृहीतरिक्थौ द्वावपि न दद्यातामित्यर्थः । **'ऋणं पैतामह'** मित्यनेन **व्यासवचनेन** सह विरोधमाशंकते वचनांतरस्य **यदपि स्मरणं खादको वित्तहीन इति** । **व्यासवचने** तु दानप्रतिभूपुत्रस्य मूलदानं प्राप्तं । अत्र तु लग्नकस्य प्रतिभुव एव मूलदानमिति विरोधः । विरोधं परिहरति । **तदपीति** । व्याख्येयमित्युत्तरेणान्वयः ।

दानप्रतिभुवः पुत्रा ऋणं दाप्या इत्यभिधानाद्दर्शनप्रत्ययप्रतिभुवोः सुता न दाप्या इत्युक्तं । तत्र क्वचिदपवादमाह । यत्र **दर्शनप्रतिभूरित्यादिना** । अत्र तस्मादेव बंधकादृणं दाप्या इत्यभिधानात्तस्य बंधकस्य पर्याप्तत्वेऽपि यावद्बंधकमर्हति तावद्देयं नातोऽधिकं यावदृणं तावद्देयमिति गम्यते ॥ ५४ ॥

१ क—धानाद । २ 'प्रथमपंक्तिप्रारंभेऽयं शोधो ज्ञेयः' इति कपुस्तकांतर्गतावतरितटिप्पणिका । ३ क—वितथेत्येवेति । ४ क—तथासुतोऽपीति । ५ क—प्रतिभव । ६ क—दाप्य । ७ क—नतोधिकं ।

## याज्ञवल्कीये ५५ श्लोकः

**अतश्च धनिको वित्ताद्यपेक्षयेति** । आदिशब्दात्सत्यवाक्त्वाभिजात्यादयः । **मृते तु कस्मिंश्चिदिति** । एकच्छायाश्रितेषु मध्ये कस्मिंश्चित्प्रतिभुवि मृत इत्यर्थः। **एकच्छायाप्रविष्टानामिति** । एकच्छायाप्रविष्टसुतोऽपि धनिकेच्छया सर्वं दाप्यः । तेष्वेकच्छायाश्रितेषु कस्मिंश्चि-
५ न्मृते तत्सुतः स्वपित्र्यमंशमेव दाप्यो न सर्वमित्यस्यार्थः ॥ ५५ ॥

## याज्ञवल्कीये ५६ श्लोकः

**एतच्च हिरण्यविषयमिति** । न वस्त्रधान्यादिकमित्यर्थः । **कालविशेषमनपेक्ष्य सद्य एव द्विगुणं दातव्यमिति** । यदुक्तं तदाक्षिपति ।

**नन्विदं वचनमिति** । 'द्विगुणं प्रतिदातव्यमिति' द्वैगुण्यमात्रं प्रतिपाद्यते । तच्च द्वैगुण्यं पूर्वो-
१० क्तमासादिरूपे काले यत्काला वृद्धिस्तस्य यः क्रमो वर्धते तमबाधित्वैवोपपद्यत इत्यर्थः। एतदुक्तं भवति। स्वस्वकृतवृद्ध्यनुसारेण यदा कालांतरे द्वैगुण्यमेति धनं तदैव देत्तद्रव्याय प्रतिभुवे द्विगुणं धनं दातव्यमधमर्णेन। अन्यथा यावती वृद्धिः तत्सहितं मूलधनं देयं न द्विगुणं इति।'सद्यो द्वैगुण्यदानमयुक्तमिति'।

**पूर्वोक्तकालकलाक्रमाबाधेनापि द्वैगुण्यमुपपद्यत इत्युक्तं** । तत्राबाधेनाप्युपपत्तौ दृष्टान्तमाह । **यथा जातेष्टिविधानमिति** । चतुर्थे तृतीयपादेऽतिमाधिकरणं । 'फलसंयोगस्त्वचोदिते-
१५ न स्यात्संयोगस्याशेषभूतत्वात्' । 'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात' इति श्रूयते । तत्र संशयः । पुत्रजन्मानंतरमेवेयं जातेष्टिः कर्तव्या उत जातकर्मानंतरमेवेति । **पूर्वपक्षस्तु** पुत्रजन्मनो निमित्तस्य नियोज्यविशेषणत्वेन निमित्तानंतरमेवेष्टिः कर्तव्या । अतो जातकर्मणः प्रागेवेति । सिद्धांतस्तु न केवलं जन्म विशेषणं नियोज्यस्य, अपि तु पुत्रगतपूतत्वादिकमपि । एवं च जन्मपूतत्वनिमित्तयोः संकलितयोरेव नियोज्यविशेषणत्वं । पुत्रग-
२० तपूतत्वादिकं च पुत्रे जीवत्यभिलषितं पितुः न तद्वैपरीत्येन । जीवनं च स्तनपानादेव । स्तनपानं च जातकर्मणः प्राक् निषिद्धम् । अतो जातकर्मानंतरमेवेष्टिः । एवं च जन्मानंतरभाविन्या इष्टेर्जातकर्मानंतरमुत्कर्षे आशौचानंतरमेव कर्तव्या, न जातकर्मानंतरं; कालशौचरूपांगत्यागे प्रमाणाभावात् । 'शुचिना कर्म कर्तव्यमि'त्यस्यापवादाभावादिति । एतच्च **गुरुतंत्रानुसारेण** ।

२५ **भट्टमते** तु 'फलसंयोगस्त्वचोदितेन स्यात्संयोगस्याशेषभूतत्वात्' । 'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात' इत्यादि श्रूयते । तत्र संशयः । पुत्र जन्मानंतरमेवेष्टिरुत जातकर्मानंतरमेवेति । निमित्तानंतरं नैमित्तिकस्यावश्यंभावित्वात् जन्मन एव निमित्तत्वाज्जन्मानंतरमेवेति पूर्वः पक्षः । वाक्यशेषश्रुतपुत्रगतपवित्रत्वादिफलकामनावान्वैश्वानरेष्टावधिकारी । पुत्रगतपवित्रत्वादिकं च फलं जीवत्येव पुत्रेऽभीष्टं । जीवनं च जातमात्रस्य शिशोः स्तनपानायत्तमेव । तच्च स्तनपानं जातक-
३० र्मानंतरमेवं न प्राक् । अतः पुत्रगतपवित्रत्वादिकफलाविरोधेन जातकर्मानंतरमेवेष्टिरिति सिद्धांतः.

१ क—एकच्छायाप्रविष्टात्सुतोऽपि ख—एकच्छायाप्रविष्टाना मध्ये दश्यतेस । २ क—धन्यादिकमित्यर्थं । ३ क—तदुक्तं । ४ क—तन्नाबाधित्वैव । ५ क—वादत्तद्रव्यायः । ६ क—सहितं । ७ क—पूर्वोक्तकालकला क्रमोधिक्षणं । ८ ख—सिद्धान्तस्तु । ९ क—संवालितयो ख—संवलितयो । १० ख—जातकर्मणि निर्वृत्त एव । ११ क—फलविरोधेन ।

एवं स्थिते तृतीयवर्णकेऽन्या चिंता। जातकर्मानंतरमेवेष्टिः उताशौचापगम इति। तत्र पुत्रगत-पवित्रत्वादिरूपप्रयोजनवशात् जननरूपनिमित्तानंतरमपि प्राप्तेयमिष्टिर्जातकर्मानंतरमुत्कृष्टा। एवमुत्कृष्टायाः पुनराशौचानंतरं उत्कर्षे प्रयोजनाभावात् जातकर्मानंतरमेव कर्तव्यमिति प्राप्ते विधीयते। निमित्तानंतर्यं तावद्बाधितमिष्टेः पवित्रत्वादिरूपप्रयोजनवशात्। बाधिते च निमित्तानंतर्ये शुद्धकालप्रतीक्षायाः आशौचापगमे पौर्णमास्यादिकाले कर्तव्या। शुद्धकालस्याप्यंगत्वात्। ५ 'शुचिना कर्म कर्तव्यमि'त्यस्य अपवादाभावादिति।

प्रकृते त्वेवमुपयोगः। यथा शुद्धकालरूपमंगं अबाधित्वैव जातेष्टिविधानं, तथा 'अशीतिभागो वृद्धिः स्यादि'त्यादिना पूर्वोक्तो यः कालक्रमेण वृद्धिक्रमः तमबाधित्वैव द्वैगुण्यविधानं। अतश्च न सद्यो द्वैगुण्यमेति। सद्यो द्वैगुण्यपक्षेऽनुपपत्तिमपि दर्शयति। **अपि च सद्य इति**। अयमर्थः। सद्यो द्वैगुण्यं नाम सद्य एव वृद्ध्या सह द्वैगुण्यं न स्वरूपतः। वृद्धिस्तु पशुस्त्रीणां १० संततिरेव। 'संततिस्तु पशुस्त्रीणामि'त्युक्तत्वात्। तथा च सद्यो द्वैगुण्यदानपक्षे पशुस्त्रीषु सद्यः संतत्यभावान्मूलमात्रमेव देयं स्यान्नद्विगुणं। अतश्चाननुस्यूतत्वेन सद्यो द्वैगुण्यमनुपपन्नमिति। परिहरति। **तदसदित्यादिना**। एतदुक्तं भवति। 'वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणापेरे' त्येतद्वचनारंभसामर्थ्येनैव कालक्रमेण द्वैगुण्यादेः प्राप्तत्वात् पुनरत्र कालक्रमायातद्वैगुण्यविधानमनुपपन्नं स्यात्। अतश्च पूर्वमप्राप्तं यत्सद्यो द्वैगुण्यं तदेवावश्यं विधेयं। जातेष्टिविधायक- १५ वाक्यस्य आनर्थक्याभावात्। 'शुचिना कर्म कर्तव्यमि'त्येतदबाधेनाप्युपपत्तिरिति विशेष इति।

'प्रतिभूर्दापितो यत्तु' इत्येतत्तस्यैव वचनस्य विषयविशेषपर्यवसानद्वारा कालक्रमेणैव द्विगुणदानविधिपरत्वं वक्तुमाक्षेपवादी तदुपयुक्तं किंचिदाह। **अथ प्रातिभाव्यमित्यादिना**। अधुना कालक्रमेणैव द्विगुणदानपरत्वं दर्शयति। **अतश्चास्येति**। प्रीतिदत्तस्य अयाचितस्य वृद्ध्यभावेन प्रतिभूदत्तस्यापि पूर्वोक्तरीत्या प्रीतिदत्तत्वेन अयाचितस्यापि वृद्ध्यभावे प्राप्ते तदपवाद- २० त्वेनायाचितस्यापि प्रतिभूदत्तस्य दानदिवसादारभ्य कालक्रमेण वृद्ध्या सह द्विगुणं दातव्यमिति। निराकरोति। **तदप्यसदिति**। वाक्यार्थो हि वाच्यो व्यंग्यो वा भवेत्। न त्वसावर्थो अभिधीयेत न व्यज्येत वा। अतो नायमर्थो अपि त्वस्मदुक्त एवार्थो ग्राह्य इत्यर्थः॥ ५६॥

## याज्ञवल्कीये ५७ श्लोकः

**निबंधं दापयेत्तामिति**। तमर्थं दापयेदित्यर्थः। २५

इति ऋणादानप्रकरणे प्रतिभूविधिः।

### आधिविधिः।

**'अधिक्रियत' इत्यादिनारद**वाक्यं व्याचष्टे। **कृतकाल आधानकालश्चेत्यादिना**। **तत्र कृतकालाधि**स्वरूपं निरुच्य अकृतकालाधिस्वरूपं निर्वक्ति। **देयं दानमित्यादिना**। गोप्याधिस्वरूपमाह। **गोप्यो रक्षणीय इति**। भोग्यस्तु प्रसिद्धः॥ ५७॥ ३०

एवं चातुर्विध्यमाधेरुक्तं भवति। तद्यथा। कृतकालगोप्यः कृतकालभोग्यश्चेति द्वेधा। अकृतकालगोप्यः अकृतकालभोग्यश्चेति द्विप्रकारमिति।

१ ख—प्रतिविधीयते। २ ख—प्रतीक्षायल। ३ ख—मूलदानमात्रमेव। ४ ख—देव। ५ क—पूर्वोत्प्राप्तम्। ६ क—इत्येतत्तस्यैव। ७ क—भूतात्तस्य। ८ ख सदुक्तापवादार्थो। ९ क—निबंधं दाप्येतामिति।

## याज्ञवल्कीये ५८ श्लोकः

अक्षरार्थमाह । **प्रयुक्ते धन इत्यादिना** । चतुर्विधाधिष्वपि विशेष विभज्य **दर्शयति** । **कृतकालस्य गोप्यस्येति** । अकृतकालगोप्याधेर्द्वैगुण्यातिक्रमे नाशः । कृतकालगोप्यभोग्याधेस्तु कृतकालातिक्रमे नाश इत्यभिहितम् । तत्र द्वैगुण्यमात्र एव न च कालातिक्रममात्र एव ५ नाशः । अपि तु ततोऽपि कियानवकाशोऽस्तीति आह । **द्वैगुण्यातिक्रमेणेति** ।

अथ कृतकालस्य गोप्याधेर्धनद्वैगुण्ये नाशोऽभिहितः । तमाक्षिपति । **नन्वाधिः प्रणश्येदित्यनुपपन्नमित्यादिना** । परिहरति । **उच्यते; आधीकरणमेवलोक इत्यादिना** । सोपाधिकी चासौ स्वत्वनिवृत्तिश्च तत्र हेतुः । सोपाधिकी चासौ स्वत्वापत्तिश्च तत्र हेतुरित्युभयत्रापि समासः ।

१० ननु भवेत्वेवं लोकतः । तथाप्यधमर्णस्यात्यंतिकस्वत्वनिवृत्तेरुत्तमर्णस्य चात्यंतिकस्वत्वप्राप्तेश्चाभावादाधिनाशः कथमित्यत आह । **तत्र धनद्वैगुण्ये निरूपितकाले प्राप्ते चेति** । **अयमर्थः** । 'परिपूर्णे कृते काले धने च द्विगुणे सति । तदंतरा धनं दत्त्वा ऋणी बंधमवाप्नुयादिति' वदता **बृहस्पतिना** द्वैगुण्यानंतरं कृतकालानंतरमपि चतुर्दशदिनाभ्यंतरे द्रव्यं दद्याच्च नोत्तरत्रेति सूचितम् । तेन चात्यन्तं द्रव्यदानं द्वैगुण्याद्यनंतरं निवर्तते । निवृत्ते च द्रव्यदाने 'आधिः १५ प्रणश्येदि'त्यनेन वचनेनाधमर्णस्यात्यंतिकी स्वत्वनिवृत्तिरुत्तमर्णस्य चात्यंतिकी स्वत्वप्राप्तिरुपादिश्यत इति । **यतो 'नत्वेवाधौ सोपकार' इति** । सोपकार आधौ भोग्याधाविति यावत् । तत्राप्यकृतकाल इति बोद्धव्यम् ॥ ५८ ॥

## याज्ञवल्कीये ५९ श्लोकः

गोप्यभोग्याधिसाधारणं धर्ममाह । **नष्टो विकृतिं गत इति** । उभयसाधारण्यमेव विविनक्ति । **तत्र गोप्याधिर्नष्टश्चेदित्यादिना** । विनष्ट आत्यंतिकं नाशं प्राप्त इत्यादिकमप्युभयाधिविषयं बोध्यं* ॥ ५९ ॥

## याज्ञवल्कीये ६० श्लोकः

**आधेर्गोप्यस्य भोग्यस्य च स्वीकरणादुपभोगादिति** । गोप्यस्य स्वीकारमात्रं भोग्यस्योपभोग इति द्रष्टव्यं । भोग्यस्योपभोगेनैव सिद्धिरित्यत्र **नारद**वचनं प्रमाणयति । २५ **'आधिस्तु द्विविधः प्रोक्त' इति** । अथवा आधेर्गोप्यस्य भोग्यस्य च स्वीकरणादित्यस्यान्या व्याख्या । तद्यथा । स्वीकरणशब्दस्यैव पर्याय उपभोगादि इति । अयमभिसंधिः । 'भुजिः पालनेऽभ्यवहारे च' वर्तते । गोप्याधावुपभोगो नाम परिपालनं अत्रोपेत्युपसर्गो व्याप्तौ वर्तते । तथा चोपसर्गसूत्रं । **'उपसामीप्यसामर्थ्यव्याप्त्याचार्यकरणदोषाख्यानदानदाक्षिण्यवीप्सारंभपूजोद्योगकार्याहृत्यमरणानशनेष्विति'** । भोग्याधावुपभोगो नामाभ्यवहरणं । फलाद्युपभोग इति यावत् । ३० अस्मिन्व्याख्याने उभयत्र **नारदवचनमपि** प्रमाणयति । **'आधिस्तु द्विविध' इति** । **अस्य च फलमिति** । **'आधेः स्वीकरणात्सिद्धि'**रित्यस्य वाक्यस्येत्यर्थः । फलत्वमेव विविच्य

१ क—तत्र द्वैगुण्य मात्र एव न च कालातिक्रममात्र एव । २ क—नन्वाधिः । ३ क—कालप्राप्ते चेति । ४ क—दाप्यान्नोत्तरत्रेति । ५ क ख—फलत्वमेव । * [illegible]—बोद्धव्यं

## याज्ञवल्कीये ६१ श्लोकः

यद्द्रव्यमात्मसात्कृतं पराधीनं वा कृतमित्युक्तं पूर्वत्र, तत्रात्मसात्कृतं द्रव्यमाह। **धनिनः स्वच्छाशयत्वेनेति** । पराधीनकृतं द्रव्यमाह । **यदि वाऽधमर्णस्येति** । '**सत्यंकार**' इत्येतच्छब्दं निर्वक्ति । **करणं कार** इत्यादिना । '**चरित्रबन्धककृतं**' इत्येतत्प्रकारांतरेण व्याचष्टे । **अन्योऽर्थ** इत्यादिना ॥ ६१ ॥ ५

## याज्ञवल्कीये ६२ श्लोकः

**असंनिहिते पुनः प्रयोक्तरि** इति । **प्रयोक्ता** ऋणप्रयोक्ता उत्तमर्ण इति यावत् ॥ ६२ ॥

## याज्ञवल्कीये ६३ श्लोकः

'अथ प्रयोक्ताऽप्यसंनिहितस्तदाप्ताश्च धनग्रहीतारो न सन्ति' इत्याशंक्योत्तरं । **तस्मिन्काले यत्तस्याधेर्मूल्यमिति** । 'यदि वा असंनिहिते प्रयोक्तरीति' यदुक्तं तत्रोत्तरं **यावद्वा तन्मूल्य- द्रव्यमिति** । **यदृणग्रहणकाल** इत्यादिना । **विचारिते त्वयमिति** । अस्मिन्वचने अभिहित इत्यर्थः ॥ ६३ ॥ १०

## याज्ञवल्कीये ६४ श्लोकः

**यदा प्रयुक्तं धनमिति** । अयमाशयः । ऋणत्वेन प्रयुक्ते धने वृद्ध्या सह द्विगुणे जाते धने पश्चादाधिर्दत्तो भोगार्थं यदा तदा आधेः सकाशादुत्पन्ने धने द्विगुणे धनिनः प्रविष्टे सत्याधि- मोंक्तव्य इति । १५

**यदि वाऽऽदावेवेति**[1] । अयमाशयः । ऋणग्रहणकाल एवाधिं दत्त्वा अधमर्ण एवं ब्रवीति । 'यदा द्रव्यं वृद्ध्या सह द्विगुणं जायते तदाऽयमाधिस्त्वया भोक्तव्यो न ततः पूर्वमिति' । एवं च परिभाषया[2] यावद्द्विगुणं भवति तावदाधेर्भोगाभावः; अथवा यावद्द्विगुणं भवति तावदृणग्रहणकालदत्तस्याप्याधेर्दैविक- राजकव्यसनरूपकारणान्तरवशाद्भोगाभावः । एवमुभयथाऽपि ऋणग्रहणकाले दत्तस्याप्याधेर्भोगाभावेन २० हेतुना ऋणे द्विगुणे जाते पश्चादाधिमुपभोक्तुं धनिनि प्रविष्टे सति आध्युत्पन्नद्रव्येऽपि द्विगुणे जाते वृद्ध्या सह द्विगुणीभूतर्णसमे सत्याधिर्मोक्तव्य इति ।

'**ऋणी बंधमवाप्नुयात्**' इत्यादिबृहस्पतिवचनजातं व्याचष्टे **अस्यार्थ** इत्यादिना । तत्र 'ऋणी बंधमवाप्नुयात् फलभोग्यं पूर्णकालम्' इत्येतदंतमेकं वाक्यं तात्पर्यार्थसहितं व्याचष्टे। **फलं भोग्यं यस्य** इत्यादिना[3] **बंधमवाप्नुयादित्यर्थ** इत्यंतेन । '**दत्त्वा द्रव्यं तु सामकं' इत्यस्यांशस्य व्याख्या** २५ '**वृद्धिमात्रापाकरणार्थ'मित्यादिना** । 'यदि प्रकर्षितं तत्स्यात्तदा न धनभाग्धनी' इत्यमुमंशं व्याख्यास्यन्नवतारयति । **अस्यापवादमाहेति** । 'ऋणी[4] च न लभेद्बंधं' इत्यमुमंशं व्याचष्टे । **अथ त्वप्रकर्षितमित्यादिना** । 'यदि प्रकर्षितं न स्यात्तदा न धनभाग्धनी' इत्येकं वाक्यम् । 'ऋणी च न लभेद्बंधं' इत्यपरम् । एतदुभयं **बृहस्पतिरेवापवदतीत्याह** । **पुनरुभयत्रापवादमाहेति** ।

इति ऋणादानप्रकरणम् ॥ ३ ॥ ३०

१ क यदि स्वादावेवेति । २ क परिभाषा । ३ क फलं भोगस्येत्यादिना । ४ ग-ऋणं

## अथ उपनिधिप्रकरणम् ४

### याज्ञवल्कीये ६५।६६।६७ श्लोकाः

(श्लो० ६६) **'ग्रहीतुः सह याऽर्थेनेति'**। अस्यार्थः। ग्रहीतुरर्थेन सह योऽर्थो नष्टः सोऽर्थो दायिनो धनस्वामिन एव नष्टः। सोपनिध्यादिरक्षकस्येति। एतच्च चौरहृताद्युपलक्षणार्थं।
५ **अस्यापवादमिति। 'न दाप्योऽपहृतं त्विति'** यदुक्तं तस्येत्यर्थः। अस्मिन्प्रकरण इतरन्निगदव्याख्यातम् ॥

इति निक्षेपप्रकरणम् ॥ ४ ॥

## अथ साक्षिप्रकरणम् ५

**अर्थिना स्वार्थसिद्ध्यर्थमिति**। अस्यार्थः। अर्थिना साध्यवता स्वार्थसिद्ध्यर्थं प्रत्यार्थिना वचनं स्फुटं यथा भवति तथा प्रत्यर्थिनाऽविज्ञातः सन् स्थितो यः पुमान् श्राव्यते स **गूढसाक्षी** कथ्यत इति[1]
१० **'लेखकः प्राड्विवाकश्च सभ्याश्चैवानुपूर्वशः। नृपे पश्यति तत्कार्ये साक्षिणः समुदाहृताः' इतीति**। सह पाठादिति शेषः। अस्यार्थः। राजनि तत्कार्ये व्यवहारकार्ये पश्यति सति एते लेखकादयोऽनुपूर्वशः 'पूर्वाभावे परः पर' इति साक्षिणः न तु लेखकादीनामेव सभापतित्वे त एव साक्षिणः ॥ 'नृपे पश्यती' त्यभिधानादिति लेखकादिभिः सह परिपठितस्य प्राड्विवाकस्योपादानं लेखकाद्युपलक्षणार्थमित्यर्थः।
१५ साक्षिप्रकरणप्रक्रमप्रभृत्येतत्पर्यंतमुपोद्घातत्वेन किंचिदभिधायाधुना मूलवचनमवतारयति। **ते च साक्षिणः कीदृशा इति** ॥

### याज्ञवल्कीये ६८।६९ श्लोकौ

वचनादसाक्षिणां स्वरूपं नारद एव दर्शयतीत्याह। **के पुनर्वचनादसाक्षिण इति। निर्ग्रंथा इति**। पाषंडिन इत्यर्थः। **'साक्षिणां लिखितानां चेति'**। अस्यार्थः। साक्षित्वेन
२० निर्दिष्टानां, 'एते साक्षिण' इति पत्रलिखितानां, वादिनां ब्रुवतां तेषां साक्षिणां मध्ये एकोऽन्यथा वादी चेत् ते भेदान्न साक्षिण इति ॥

**'योऽर्थः श्रावयितव्यः स्यादित्ये'**तद्वचनं व्याचष्टे। **'येनार्थिना प्रत्यर्थिना वा' इत्यादिना**। एतदुक्तं भवति। अस्मिन्नर्थविशेषे एते साक्षिण इति अर्थविशेषेऽभिहिते निर्दिष्टेषु च साक्षिषु सत्सु पश्चात्तमर्थविशेषंप्रति निर्दिष्टपुरुषाणां[6] कृते साक्ष्ये[7] वक्तव्यं एवं च पदार्थविशेषनिर्देशेव मृतः।
२५ अथवाऽर्थविशेषो न निवेदितः। तदा तस्मिन्नर्थे कस्य कृते साक्ष्यं वदत्विति मृतांतरः साक्षी नेति। मृतेनांतरं अवकाशो व्यवधानं यस्य स मृतांतरः।

एवं मृतांतरस्य सर्वत्रा[8]साक्षित्वे प्राप्तेऽपवादमाह। **यत्र तु मुमूर्षेत्यादिना। 'मृतांतरेऽर्थिनि प्रेते मुमूर्षुश्रावितादृत' इति**। अस्यार्थः। अर्थिनि प्रेते सति साक्षी मृतांतर इति कथ्यते। **मुमूर्षुश्रावितं विना**। अयमभिप्रायः। मुमूर्षुश्रावितो मृतांतरः साक्षी भवतीत्यमुमर्थं नारदवचनेन
३० प्रतिपाद्य स्वस्थेन श्राविता मृतांतरोऽपि साक्षी भवतीत्यत्रापि नारदवचनमेव प्रमाणयति। **तथा 'श्रावितो नातरेणापीति'** ॥ ६८ ॥ ६९ ॥

१ क-अर्थं. २ ख-नानु. ३ क-पाठतस्य. ४ क-वे. ५ ख-निर्दिष्ट. ६ ख-पुरुषस्य. ७ ख-साक्ष्यं. ८ क-सर्वत्र. ९ ख-श्रावितो.

## याज्ञवल्कीये ७०।७१ श्लोकौ.

एवं महता प्रपंचेनासाक्षिस्वरूपं प्रतिपाद्य अस्मिन्नर्थे मूलवचनमवतारयति । **तानेतानसाक्षिण इति ॥ ७०-७१ ॥**

## याज्ञवल्कीये ७२ श्लोकः

ननु त्र्यवरा अपि धर्मविद एकोऽपि धर्मविदेव साक्षी तथा द्वावपि एवं च त्र्यवरपदमनर्थकमित्यभिप्रायेणाशंक्य परिहरति । **यद्यपि श्रौतस्मार्तक्रियापरा इत्यादिना ।** ५

ननु संग्रहणचौर्यपारुष्यसाहसानां सर्वेषामपि साहसशब्दवाच्यत्वाद्भेदेनोपादानमनुपपन्नमित्याशंक्य परिहरति । **'मनुष्यमारणं चौर्य' इत्यादिना ।** अयं भावः । जनसमक्षं स्वबलावष्टंभेन यत्करणं स एवोपाधिः; तेनोपाधिना क्रोडीकृतान्येतानि संग्रहणादीनि साहसशब्दवाच्यानि । एकांते बलादिना यत्करणं स एवोपाधिः; स चोपाधिर्विषयभेदाद्भिद्यते । ततश्च तत्तद्विषयभेदघटितरहःकरणोपाधिभेदात्संग्रहणादिशब्दवाच्यत्वमिति ॥ ७२ ॥ १०

## याज्ञवल्कीये ७३।७४।७५ श्लोकाः

'सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः । गोबीजकांचनैर्वैश्यमि' त्यस्मिन्नर्थे मनुरेवापवादं दर्शयतीत्याह । **अत्र चापवादस्तेनैवेत्यादिना ।** अत्र 'गोरक्षकान्' इत्यादीनि 'विप्रान्' इत्यस्य विशेषणानि न स्वतंत्राणीति बोद्धव्यम् । १५

**अनेकजन्मार्जितसुकृतसंक्रमणस्येति ।** अनेकानि च तानि जन्मानि च तत्रार्जितं तच्च तत् सुकृतं च तस्य संक्रमणमास्मिन्ननेकजन्मार्जितसुकृतसंक्रमणमिति समासः ॥ ७३।७४।७५ ॥

## याज्ञवल्कीये ७८ श्लोकः

ननु पूर्वं 'भेदादसाक्षिणः' इत्युक्तं । अधुना 'द्वैधे बहूनां' इत्यनेन भेदादपि साक्षिणो भवंतीत्युच्यते । तथा च परस्परविरोधः स्यादित्याशंक्याह । **यत्तु भेदादसाक्षिण इति ।** यत्र संख्यागुणादिभिः साम्यं तत्र विशेषाभावाद्भेदादसाक्षित्वं, यत्र पुनः संख्यागुणादिभिर्वैषम्यं तत्र पूर्वोक्तरीत्या भेदादपि साक्ष्यं भवतीत्यभिप्रायः ॥ ७८ ॥ २०

## याज्ञवल्कीये ८० श्लोकः

पूर्वोक्तलक्षणे साक्षिभिः साक्ष्य स्वाभिप्रायविषये साक्ष्ये । प्रतिज्ञातार्थवैपरीत्येनाभिहिते इत्यन्वयः अथ साक्षी नाम अर्थ्यभिमतार्थस्य सम्यक् ज्ञाता, तस्य भावः साक्ष्यं, तदेव साक्ष्यं स्वस्यार्थिनः अभिप्रायः । एवं च साक्ष्यं नाम स्वाभिप्रायः । तथा च साक्ष्यपदस्य व्याख्या स्वाभिप्राय इति । अस्मिन् पक्षे यथाश्रुत एवान्वयः । **निगदे दत्त इति ।** सभ्यादिजनसमक्षमुच्चैर्निःसंदिग्धभाषणं **निगदः**, तस्मिन् दत्ते कृत इत्यर्थः । २५

**यदाऽर्थी प्रतिज्ञातार्थस्येति ।** अयमभिसंधिः । प्रतिज्ञातार्थस्य सत्यत्वेन स्वांतःकरणेऽवधार्य एवमेवेति दृढतरप्रतीत्युपपत्तेः । तदुपपत्त्यन्यथानुपपत्त्या साक्षिष्वपि दोषः परिकल्प्यंते । न दृष्टदोषस्तेषु साक्षिषु । अतश्च परिकल्पितदोषदुष्टत्वेन प्रमाणांतरांगीकरणमुपपन्नमेव । अंगीकृते च प्रमाणांतरे व्यवहारदर्शिभिरपि व्यवहारः प्रवर्तनीय एवं । **'छलं निरस्य भूतेनेति'** वचनादिति । ३०

ननु स्वयमित्यसाक्षिष्वदृष्टदोषः कथमित्याशंक्य दृष्टांतमुखेनोपपादयति । **'यस्य च दुष्टं करण-**

---

१ क-कारणं. २ क- कारणं. ३ ख-भेदावसाक्षिणो. ४ क- अथवा. ५ ख- करणो. ६ क-तदुत्पन्यथा. ७ क- कल्पनेन ८ क-प्रमाणांगीकरणं, ९ क-एवं. निगदिते इति मिताक्षरापाठः

**मिति**' । अस्यार्थः । यस्य ज्ञानस्य च करणं चक्षुरादिकं दुष्टं काचकामलादिदोषदुष्टं यत्र चेदं रजितमित्यादिज्ञानविषये नेदं रजतमिति बाधकप्रत्ययः । स एव प्रत्ययो ज्ञानमसमीचीनमिति दृष्टांतवाक्यस्य तात्पर्यार्थं प्रकृतोपयोगार्थमाह । **यथा चक्षुरादीति** । अयमभिप्रायः । अर्थविसंवादादर्थस्य शुक्तिरजतादेरन्यथात्वतज्जनितस्येदं रजतमिति ज्ञानस्याप्रामाण्येन चक्षुरादिगतदोषकल्पना यथेति दार्ष्टांतिके
५ योजयति तथेहापीति ।

न केवलं युक्तितः प्रमाणांतरं गवेषणमुचितम् अपि तु वचनबलादपीत्याह । **साक्षिपरीक्षातिरेकेणेति** । अयमभिप्रायः । न केवलं साक्षिवचनमात्रेण निर्णयः अपि तु तद्वाक्यपरीक्षया च । एवं च साक्षिवचनपरीक्षायां क्रियमाणायां यदि तद्वचनमबाधितं स्यात्तदा तस्य प्रामाण्यमितरथा साक्षिवचनस्य बाधितत्वे साक्षिष्वपि दोषकल्पना स्यादिति । एतच्च परीक्षावचनवि-
१० धिबलाद्गम्यते । 'यदा शुद्धा क्रियेति' **कात्यायन**वचनं व्याचष्टे । **क्रिया साक्षिलक्षणेत्यादिना** । **'स शुद्धस्तथा'** इति शुद्धपदस्य व्याख्या । **तथाभूत इति** । तथाभूतस्तथ्यभूतः सत्य इति यावत् । **कात्यायन**वचनस्य तात्पर्यार्थमाह । **करणदोषबाधकप्रत्ययाभाव इति** । 'यथा शुद्धा क्रिया न्यायात्' इत्यनेनांशेन साक्षिलक्षणक्रियारूपकरणगतदोषाभावोऽभिधीयते । 'शुद्धाच्च वाक्याद्यः शुद्धः' इत्यनेन तु बाधकप्रत्ययाभावोऽभिधीयते । एवं च करणदोषबाधकप्रत्यययोरभावे
१५ सत्यर्थोऽवितथः सत्य इति तात्पर्यार्थः ।

**स्वभावेनैव यद्ब्रू रिति** । आर्थिना स्वकीयप्रतिज्ञायामन्यथाभावमज्ञात्वैव प्रथममेवान्येषामपि साक्षित्वेन निर्दिष्टत्वात्स्वभावेनैव वचनमिति प्रकृते द्रष्टव्यं यदुक्तं 'आक्षेपसमये अनवस्थाप्रसंगान् इति' तत्परिहरति । **अतःपरमपरितुष्यताऽपीति** ।

स्वप्रत्ययबलादपरितुष्यताऽर्थिना 'प्रमाणांतरमंगीकर्तव्यामित्युक्तं । प्रत्यर्थिनस्तु तथा नास्तीत्याह । **यत्र तु प्रत्यर्थिन इत्यादिना** । 'यस्य दृश्येते' त्यस्य मनुवचनस्य विषयं दर्शयति । **एतच्च यस्योचुः**
२० **साक्षिणः सत्यामिति** । अयमर्थः । एतत् तु 'यस्य दृश्येतेति' **मनु**वचनं 'यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवे'दित्यस्यापवादकं कस्मिन्विषय इत्याकांक्षायां इदमुच्यते । अपरे तु व्युत्पत्यर्थाविषय एवेति ।

एतदुक्तं भवति । साक्षिभिः साक्ष्ये कथिते यदि प्रत्यर्थी परितुष्यति तदाऽर्थिनो जयः, प्रत्यर्थिनः पराजयः । अथ स्वप्रत्ययविसंवादित्वेन प्रत्यर्थी न परितुष्यति, तर्हि साक्षिपरीक्षणे सप्तदिनेषु
२५ क्रियमाणे यदि दोषवन्तः साक्षिणः तदा 'यस्य दृश्येत सप्ताहादिति' **मनु**वचनेन 'यस्योचुः साक्षिणः सत्यामिति' **योगीश्वर**वचनमपोद्यते । तथा च प्रत्यर्थिनो जयः । अपरस्य पराजय इति । 'उक्तेऽपि साक्षिभिः साक्ष्य' इत्यस्य **योगीश्वर**वचनस्यैकदेशिव्याख्यानं दूषयितुमनुभाषते । 'केचिदुक्तेऽपि साक्षिभि'रित्यादिना दूषयति । **तदसादिति** । प्रत्यर्थिनः क्रियानुपपत्तिं विविच्य दर्शयितुमर्थिप्रत्यर्थिस्वरूपं दर्शयति । **तथा ह्यर्थी नामेति** । भवत्वभाववादित्वं प्रत्यर्थिनस्तस्य
३० क्रियानुपपत्तौ किमायातमित्यत आह । **तत्राभावस्येति** । अयमाशयः । न भावः अभावः; भावाधीनत्वादभावस्वरूपस्य तथा अभाव इत्युक्ते कस्याभाव इत्याकांक्षायां पटस्याभावः घटस्याभाव इति प्रतियोगिभूतघटपटादिनिरूपणाधीननिरूपणत्वात् प्रध्वंसाभावे च भावस्वरूपसिध्युत्तरकालीनत्वाच्च अभाव स्वरूपसिद्धेः भावस्वरूपेण सापेक्षसिद्धत्वमभावस्य भावत्वे तद्वैपरीत्यात्स्वातंत्र्येण सिद्धिर्न त्वभावापेक्षया भावस्य सिद्धिः अत एवाभावसिद्धिर्निरपेक्षसिद्धत्वं भावस्य । एवं च सापेक्षनिरपेक्षयोः सिद्धयोर्भावा-
३५ भावयोर्मध्ये निरपेक्षसिद्धत्वेन भावस्यैव साध्यत्वं युक्तमिति ।

नन्वभावस्य सापेक्षत्वे सिद्धे कोऽपराधो यत्साध्यता नास्तीत्यत आह–**अभावस्य स्वरूपेणेति**।

---

१ ख-ज्ञानं करणं. २ क-यत्रेदं रजतमिति. ३ क-कल्पनाय. ४ ख-प्रथितं. ५ क-निर्दिष्टत्वात्. ६ क-सप्रत्यय ७ ख-सत्यमिति. ८ ख-मित्याकांक्षायां, अपरितुष्यत्प्रत्यर्थिविषय. ९ क-आपद्यते. १० क-मभावाधीनत्वात्.

अयमर्थः । भावस्य साक्षात्साक्ष्यादिरूपप्रमाणप्रमेयत्वं; अभावस्य तु न साक्षात् अपि तु भावद्वारा; तथा न साक्षात्प्रमेयस्यैव साध्यत्वं न निरूपणपरंपरतया प्रमेयस्येति ।

'उक्तेऽपि साक्षिभिः साक्ष्य' इत्यस्य वचनस्यार्थांतरमाशंकते **पूर्ववादी** ।**अथ मतमित्यादिना**। तस्यायमपवाद इत्युक्तं । कोऽपवाद इत्याशंक्य परिशेषादपवादविषयं वक्तुं 'द्वयोर्विवदतोरर्थे' इत्यस्य विषयं दर्शयति–**अतश्च पूर्वोत्तरयोः वादिनोरिति** । अपवादविषयमाह । **यदा** ५ **तूत्तरवादिन इति** । अस्मिन् व्याख्याने पूर्वोक्तदोषाभावं दर्शयति । **एवं च नाभावस्येति** ।

ननु पूर्वोत्तरयोर्वादिनोः साक्षिणां समत्वे पूर्ववादिनः साक्षिणः प्रष्टव्याः उत्तरवादिसाक्षिणां गुणाधिक्ये द्वैगुण्ये वा उत्तरवादिन एव साक्षिणः प्रष्टव्या इत्यभिधीयमाने एकस्मिन्नपि वादे द्वयोर्वादिनोः क्रियाप्रसक्तेः। 'नचैकस्मिन्विवादे तु क्रिया स्याद्वादिनोर्द्वयोः' इत्येतद्वचनविरोधः स्यादित्यत आह । **चतुर्विधोत्तरविलक्षणत्वादिति** । अयमभिप्रायः । सत्यमिथ्याकारणप्राङ्न्यायोत्तरेष्वेव वादिप्रतिवादिनोर्द्वयो- १० रपि क्रियभावः । प्रकृतोदाहरणे तु उभयोः प्रतिवादित्वेन तद्विलक्षणत्वात् क्रिया व्यवस्थेति ।

युक्त्यंतरमाह—**एकस्मिन् व्यवहारे यथेति** । अयमर्थः । यथा **परमते** सिद्धांतिनो मते साक्षिभिः साक्ष्येऽभिहिते सति प्रतिज्ञातार्थस्यं अन्यथात्वेन स्वांतःकरणप्रत्ययाभावात् प्रमाणांतरांगीकरणं, एवमस्मन्मतेऽपि वादिप्रतिवादिनोः क्रियाद्वयमिति । एतदुक्तं भवति । सिद्धांतिनो मते 'न चैकस्य क्रियाद्वयमिति' वचने जाग्रत्यपि यथा स्वांतःकरणविसंवादित्वेन प्रमाणांतरांगीकरणं तथाऽस्मन्मतेऽपि 'न चैकस्मिन्विवादे तु क्रिया स्याद्वादिनोर्द्वयोः' इत्येतस्मिन् सत्यपि उक्तरीत्यैकस्मिन् विवादे क्रियाद्वयमिति निराचष्टे । **तदप्याचार्य इति । आचार्यो विश्वरूपाचार्यः** । '**विश्वरूपविकटोक्तिविस्तृति**'संग्रहात्मकत्वात् अस्य ग्रंथस्य '**उक्तेऽपि साक्षिभिः साक्ष्ये' इत्यतः शब्दादिति** अतोऽस्माच्छब्दात् वचनादित्यर्थः ॥ ८० ॥ २०

## याज्ञवल्कीये ८१ श्लोकः

**क्रोधात्तु त्रिगुणं परमिति** । **परं** तु उत्तमसाहसमित्यर्थः । लोभादिकारणविशेषे दंडविशेषमभिधाय कूटसाक्ष्याभ्यासे दंडविशेषं दर्शयति । **तथा कौटसाक्ष्यं त्विति** । अभ्यासविषयत्वमेव व्यनक्ति । **एतच्चाभ्यासविषयमिति** । एतदुक्तं भवति । अनभ्यासे त्वेकदैव कृतत्वेन भूतार्थे क्तप्रत्ययान्तः शब्दः स्यात् कृतानिति । न च तथा वर्तमानार्थवाचिशानच्प्रत्ययांतः शब्दः २५ प्रयुक्तः कुर्वाणानिति । प्रारब्धस्यापरिसमाप्तिर्हि वर्तमानता पुनः पुनः कौटसाक्ष्यमभिधीयमानस्यापरिसमाप्तिप्रायत्वाद्वर्तमानत्वमेव कौटसाक्ष्यभिधानस्य अतोऽभ्यासविषयत्वमिति ।

'**कौटसाक्ष्यं तु कुर्वाणान**'इत्येतद्वचनं व्याचष्टे । **त्रीन् वर्णानिति । अस्य चार्थशास्त्ररूपत्वा दिति । अस्य** 'कौटसाक्ष्यं त्वि'त्येतद्वचनस्येत्यर्थः ।

ननु किं ब्राह्मणस्य सर्वत्र विवासनमेव नार्थदंड इत्याशंक्य दंडोऽप्यस्तीत्याह । '**ब्राह्मणस्यापि** ३ **लोभादिकारणविशेषपरिज्ञाने चेत्यादिना** । **अत्राप्यभ्यास इति**। अत्रापि महाविषये सर्वेषां ब्राह्मणादीनां दंडाभावो वा प्रसज्येतेति तच्चायुक्तमिति शेषः ।

---

१ क-साक्ष्यं. २ क-मेयस्येति. ३ क-तत्र कापवाद. ४ क-एवं वचनाभावस्येति. ५ ख-पूर्वोक्तयो ६ क-स ७ क-एकस्मिन् विवादे. ८ क-क्रिया व्यवस्थेति. ९ क-परम सिद्धांतितो., १० ख-प्रतिज्ञातार्थः स्यात् स्यात्ते ११ ख-जाग्रत्यापि, १२ क-कौट साक्ष्यभ्यासे. १३ ख-समास. १४ ख-सार्थदंड. १५ ख-आशंका.

नतु ब्राह्मणस्यार्थदंडो न युज्यते। शंखवचने त्रयाणां वर्णानां क्षत्रियादीनां धनापहारवधबंधक्रिया, ब्राह्मणस्य तु विवासनमेवेत्युक्तत्वादित्याशंक्य परिहरति। **यत्तु शंखवचनं त्रयाणां वर्णानामित्यादिना**। एष परिहाराभिप्रायः। सर्वस्वहरणं ब्राह्मणस्य निषिध्यते न दंडमात्रमिति।

नतु वधसाहचर्यवचनमात्रेण धनापहारस्य सर्वस्वापहारपरत्वं कथमित्यत आह। **शारीरस्त्ववरोधादिरिति** ॥ ८१ ॥

## याज्ञवल्कीये ८२ श्लोकः

**एतच्च पूर्वश्लोकेऽप्यनुसर्तव्यमिति**। **एतदिति**। ब्राह्मणस्य द्रव्यदानासमर्थस्य विवासनं क्षत्रियादीनां च द्रव्यदानासमर्थानां निगडबंधनादिकं यदुक्तं तत्पृथक् पृथक् पूर्वोक्तप्रकारेण दंड्य इत्यर्थः। **तदाऽनुबंधापेक्षयेति**। जातिद्रव्यगुणद्रव्यगुणाद्यपेक्षयेत्यर्थः ॥ ८२ ॥

## याज्ञवल्कीये ८३ श्लोकः

**यत्र वर्णिनां शूद्रविट्क्षत्रविप्राणामिति**। अत्र प्रातिलोम्येन वर्णिनामुपादानं हीनस्यापि वधो गर्हितः। किमुतोत्कृष्टस्येति ज्ञापनार्थम्।

'असत्यवचनमवचनं चाभ्यनुज्ञायत' इत्युक्तं पूर्वत्र, तत्र क्वासत्यवचनाभ्यनुज्ञानं क्व चावचनाभ्यनुज्ञानमित्याकांक्षायां असत्यवचनाभ्यनुज्ञानविषयं दर्शयति। **यत्र शंकाभियोगादाविति**। अवचनाभ्यनुज्ञानविषयमाह–**यत्र तु सत्यवचन इति**।

अनृतवचननिषेधो हि द्विप्रकारः। साधारणोऽसाधारणश्चेति। साधारणस्तु 'नानृतं वदेदब्रुवन् विब्रुवन्वे'त्यादिकः। असाधारणस्तु 'स तान् सर्वानवाप्नोति यः साक्ष्यमनृतं वदेदिति' 'अब्रुवन् हि नरः साक्ष्य'मित्यादिकश्च। एवं स्थिते योऽयमसाधारणो निषेधः साक्ष्यनृतवचनावचनयोस्तत्राभ्यनुज्ञावशादनृतवचने अवचने वा न प्रायश्चित्तमित्यभिप्रायेणाह। **साक्षिणामनृतवचनं चेति**

नतु तर्हि 'तत्पावनाये'त्यनेन प्रायश्चित्तार्थं सारस्वतचरुः क्व विधीयत इत्याशंक्य साधारणनिषेधातिक्रमाभ्यनुज्ञानाभावात् तदतिक्रमदोषपरिहारायेदं प्रायश्चित्तमित्याह। **यच्च नानृतं वदेदिति**।

नतु 'वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेदि'त्येतन्निषिद्धानृतवचनाभ्यनुज्ञापरं वचनमनर्थकं। सामान्यतो निषिद्धानृतवचनावचनातिक्रमजन्यदोषस्य स्थितत्वादित्याशंक्य परिहरति। **न च मन्तव्यमित्यादिना**। एवं परिहाराभिप्रायः। साधारणनिषेधातिक्रमजन्यभूयोदोषाभावं प्रतिपादयन् सार्थकमिति।

नतु ब्रह्महनने विचारिते पापमुत्पद्यते; तदुद्योगे कृते तस्मादप्यधिकं पापं; हनने निष्पन्ने महत्पापमिति पूर्वपूर्वापेक्षया पापाधिक्येऽपि हननजनितमहापापप्रायश्चित्ते क्रियमाणे आनुषंगिकविचारोद्योगादिजन्यान्यानामल्पीयसामपि पापानां यथा निवृत्तिस्तथेहाभ्यनुज्ञावचनेन महतः प्रत्यवायस्य निवृत्तेरनुषंगाद्विरसाधारणानृतवचननिषेधातिक्रमजन्यस्वल्पप्रत्यवायनिवृत्तिरपि भातीवत्याशंक्य, 'वर्णिनां ही

१ ख-दंडमात्रमिति. २ क-धनापहाराय वधबन्धक्रियां 'ब्राह्मणस्य तु' निवासनमेवेत्युक्तत्वादित्याशंक्य परिहरा ३ क-शंकाभियोगादाविति। ४ ख-साक्ष्यमनृतं वदेदिति वचनावचनयोः ५ क-मनय श्रा. ६ क-न प्रायश्चित्त. ७ वचाव. चनाभ्य. ८ ख-अभ्यनुज्ञानपरं.

त्यभ्यनुज्ञावचनात् तत्पावनाय निर्वाप्य इत्येतद्वचनारंभसामर्थ्यादत्र नाल्पीयसः प्रत्यवायस्य निवृत्ति रित्याह । यद्यपि भूयस इत्यादिना । अयमाशयः । यद्यभ्यनुज्ञावचनमेव स्यात् तर्हि स्यान्मद्वतः प्रत्यवायस्य निवृत्त्यानुषंगसिद्धस्याल्पीयसोऽपि निवृत्तिः, प्रायश्चित्तविधायकमप्यस्ति वचनम् । अत एतदानर्थक्यपरिहारायानुषङ्गसिद्धस्याल्पीयसः प्रत्यवायस्यानिवृत्तिः कल्प्यत इति ।

उक्तन्यायमन्यदप्यतिदिशति । एतदेवेति । उक्तन्यायातिदेशेन प्रायश्चित्तस्याप्यतिदेशप्राप्तावप- ५ वदति । नच तत्रेति । तत्रोपपत्तिमाह । प्रतिषेधांतराभावादिति । एतदुक्तं भवति । यथा साधारण्येनानृतवचनावचननिषेधे सत्यपि पुनर्विशेषेण साक्षिणां तन्निषेधः । न तथा निषेधद्वयं पांथादिषु किंतु साधारणनिषेध एव, अतो विशिष्टनिषेधान्तराभावात्सामान्यनिषेधातिक्रमजन्यप्रत्यवायस्याभ्यनुज्ञावचनबलेनाभावाच्च न प्रायश्चित्तिरिति ॥ ८३ ॥

इति साक्षिप्रकरणम् ॥

---

## अथ लेख्यप्रकरणम् ॥ ६ ॥

'प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति' मानुषप्रमाणानां मध्ये निर्देशक्रमेण लेखस्य पूर्वभावित्वेऽ- १० पि साक्षिलिखितयोरर्थसंबंधवशात्पौर्वापर्यं असिद्धवत् कृत्वा प्रसंगात्प्रथमत एव मध्यनिर्दिष्टाऽपि भुक्तिः प्रतिपादिता । ततश्च साक्षिस्वरूपे विज्ञाते 'लेख्यं तु साक्षिमत् कार्यम्' इति साक्षियुक्तलेख्यविधानं सुबोधमिति साक्षिप्रकरणानंतरभावित्वं लेख्यप्रकरणस्योचितमिति संगतिं दर्शयति । भुक्तिसाक्षिणौ निरूपिताविति । मूलवचनमवतारयति । तत्रान्यकृतमाहेति ॥ ८४ ॥

### याज्ञवल्कीये ८९ श्लोकः

युक्तमर्थक्रमापरिलोपेनेति । अर्थक्रमापरिलोपेन लिप्यक्षरापरिलोपेन च युक्तं लेख्यमित्यन्वयः । 'देशाचारविरुद्धम्' इत्येतत्प्रारब्धवचनं व्याचष्टे । विधानं विधिरित्यादिना ॥ ८९ ॥

### याज्ञवल्कीये ९० श्लोकः

न तुरीयादिभिरिति । नियम्यत इति । तुरीयश्चतुर्थः । प्रपौत्र इति यावत् । पूर्वोक्तमाक्षेपं २० समाधत्ते । बाढमिति । अयमर्थः । 'पुत्रपौत्रैर्ऋणं देयं' इत्यनेन पत्रारूढे पत्रानारूढे चर्णे सामान्येन त्रयाणामेव दातव्ये सति स्मृत्यंतरवशात्पत्रारूढमृणं पुत्रपौत्रैरेव देयं न प्रपौत्रादिभिरित्येष नियमो न घटते । अपि तु प्रपौत्रादिभिरपि देयमिति पत्रारूढर्णेऽपवादशंका ज्ञायते तां शंकामपनेतुं 'ऋणं लेख्यकृतं देयम्' इत्येतद्वचनमादृतमिति तदेव स्मृत्यंतरप्रकरणशुद्धिपूर्वकं दर्शयति । तथाहीत्यादिना ।

पूर्वोक्तं कात्यायनवचनं व्याचष्टे । इत्थं पत्रारूढमिति । अनेन वचनेन पत्रारूढर्णविषये पुत्र- २५ पौत्रैरेव देयमृणमिति न अपि तु प्रपौत्रादिभिरपि देयमितीयमपवादशंका कथं ज्ञायते इत्यत आह । अत्र पितॄणामिति । अयमभिप्रायः । बहुत्वं त्रित्वे पर्यवस्यति । तथा च पितॄणामित्युक्तेः प्रपौत्रस्य प्रपितामहर्णं देयमिति प्रतीयते । तथा यदा पौत्रोऽप्यतिक्रांतो मृतस्तदा 'पुत्रपौत्रै ऋणं देयं' इत्यादिभिर्वचनैः पौत्रानंतरकालीनस्य प्रपौत्रादेरदेयत्वे सिद्धेऽपि अतिक्रांतकालमित्युक्तेः प्रपौत्रादीनामपि पत्रारूढे ऋणे देयमित्याशंका भवतीति आक्षेपसमाधानमुपसंहरति । अतश्चेति । एवं तर्हि कात्या- ३० यनहारीतवचनयोः का गतिरित्यत आह । वचनद्वयं चेति ॥ ९० ॥

---

१ ख-दोषस्य तथापि स्थितत्वात् २ क-तत्पावना याति. ३ ख-निवृत्त्यनुषंगं. ४ ख-अद्भुत ५ क-[illegible] वा. ७ क-प्रतीता. ८ क. ख.-परिलोपेनेति च. ९ नचतुर्थादिभिरिति मिताक्षरापुस्तकेषु पाठः १० क-[illegible] १२ क ख-अतश्चेति.

## याज्ञवल्कीये ९१ श्लोकः

'देशांतरस्थे दुर्लेख्ये' इत्यस्मिन् वचने विधेयांशमाह । **व्यवहाराक्षम इति** । व्यवहाराक्षमत्वमेव कथमित्याशंकायामाह । **व्यवहाराक्षमत्वं चेत्यादिना** । अत्र व्यवहाराक्षमत्वं च भवतीत्युत्तरेणान्वयः ।

५ **यथोपन्यस्तसाध्यार्थ इति** । अस्यार्थः । साध्यार्थः प्रतिज्ञातार्थः तेन संयुक्तं; तथा उत्तरेण द्वितीयपादसंरूपेण[1] क्रियया पत्रादिरूपेण च सहितं; तथैव सावधारणकं. अवधारणं निर्णयः तेन सहितं जयपत्रं भवतीति । **एतच्च चतुष्पाद्व्यवहार एवेति** । एतज्जयपत्रमित्यर्थः ॥ ९१ ॥

## याज्ञवल्कीये ९२ श्लोकः

**साक्ष्यसंभवविषयमिदं हारीतवचनमिति** । **इदं वक्ष्यमाणं** ' न चतदिति[2]' वचनमित्यर्थः १० ॥ ९२ ॥

## याज्ञवल्कीये ९३ श्लोकः

'धनी चोपगतं दद्यादि'त्यमुमंशं प्रकारांतरेण व्याचष्टे । **यद्वोपगतं प्रवेशपत्रमिति** । शेषं सुगमं॥९३।

इति लेख्यप्रकरणं ॥ ६ ॥

# अथ दिव्यप्रकरणं ॥ ७ ॥

## याज्ञवल्कीये ९५ श्लोकः

१५ त्रेधा हि नियमः संभवति । अपराधविशेषे दिव्यस्वरूपे उभयत्रापीति । तद्यथा । महाभियोगरूपापराधेष्वेव दिव्यानीत्येकः । इयंत्येव[3] दिव्यस्वरूपाणीत्यपरः[4] । इयंत्येव दिव्यस्वरूपाणि महाभियोगेष्वेवेति अन्यः; एवं स्थिते 'तुलाग्न्यापः' इत्यत्र निर्दिष्टानि पंच दिव्यानि 'महाभियोगेष्वेवेति' नियम्यते न स्वरूपनियमो नापि विशिष्टनियमः । यतः **पितामहवचन**विरोध इत्याह ॥

२० **एतानि महाभियोगेष्वेवेत्यादिना** । अत्र न प्रसरति **पुनः**[5]शब्दो विशिष्टनियमनिराकरणार्थः । पूर्वोक्तानि दिव्यानि महाभियोगेष्वेवेति नियमो न घटत इत्याशंकते । **नन्वल्पाभियोगेऽपीति**[6] । परिहरति । **सत्यमित्यादिना** । अयमर्थः । कोशस्य तुलादिभिः सह पाठो न महाभियोगेष्वेवेति नियमार्थः । अपि तु यथैतानि तुलादीनि सावष्टंभाभियोगेषु भवंति तथा कोशोऽपि सावष्टंभाभियोगेष्वपीत्येवमर्थ इति । **सावष्टंभाभियोगे इति** । यत्राभियोक्ताऽहमस्यापराधं जानामीति शीर्षकस्थो २५ भवति स **सावष्टंभाभियोगः** इत्युच्यते ॥ ९५ ॥

## याज्ञवल्कीये ९६ श्लोकः

**अल्पाभियोगे महाभियोगे शंकावष्टंभयोरिति** । अल्पाभियोगे ' कोशमल्पेऽपि दापयेदि' त्यनेन, ' महाभियोगेष्वेतानी ' त्यनेन, शंकायां ' तंडुलाश्चैव कोशश्च शंकास्वेव न संशयः ' इत्यनेन । सावष्टंभे तु 'तुलाग्न्यापो विषं कोशः ' इति तुलादिसहपाठेन ' शीर्षकस्थेऽभियोक्तारी'त्यनेन ३० चोक्तार्थमिति द्रष्टव्यम् । **तुलादीनि विषांतानीत्यादि** । अत्रापि **महाभियोगेष्वेव** । ' महाभियोगेष्वेतानी' त्यनेनैव सावष्टंभेष्वेव ' शीर्षकस्थेऽभियोक्तारि ' इत्यनेन च नियमो दर्शित इति बोद्धव्यम् ।

---

१ क-संरूपेण. २ 'न मयैतादिति' मिताक्षरापुस्तकेषु पाठः ३ क-इयंतेव. ४ कख-अमरः ५ क-पुनरीति. ६ क-तथाल्पाभियोगे. ७ ख-नन्वाल्पाभियोगे.

**महाचौर्याभिशंकायां चेति** । अत्र शिरस्थायिना विनाऽपि तंडुलादीनि कुर्यादिति पूर्वेण संबंधः **राजभिः शंकितानां च निर्दिष्टानां च दस्युभिरिति** '। अत्र निर्दिष्टानां च दस्युभिरित्युक्त्या शब्दतश्चौर्याभिशंका यद्यपि न प्रतीयते तथाऽपि 'राजभिः शंकितानामि' त्युपक्रमबलात् दस्यूनामविश्वसनीयत्वेन तन्निर्दिष्टेऽप्याशंकैव जायत इति । 'चौर्यशंकाभियुक्तानामिति' यद्यप्यविशेषेणोक्तं तथाऽपि तप्तमाषस्य तीक्ष्णत्वेन महादिव्यत्वात् तप्तमाषानुसारेणाभिमित्तस्य चौर्यशंकाया महत्त्वं ५ युक्तमिति भावः । एतच्च प्रायश्चित्ताध्याये निपुणतरमुपपादयिष्यते । **अभियोगेषु सह्येष्विति** । सह्येषु सहनयोग्येषु स्वल्पेष्विति यावत् ।

**ब्राह्मणपरिव्राजकवदिति** । अयमर्थः । 'ब्राह्मणानामंत्रये' त्युक्ते परिव्राजकेऽपि ब्राह्मणत्वस्याविशिष्टत्वात्तन्निमंत्रणेऽपि प्राप्ते पुनः 'परिव्राजकमामंत्रयेति' पृथगभिधानं[2] यथा परिव्राजकप्राधान्यप्रतिपादनार्थं तथा तुलादीनां शपथानां च सिद्धेऽपि दिव्यत्वे तुलादिभ्यः शपथानां पृथगभिधानं १० कालांतरनिर्णयनिमित्तत्वद्योतनार्थमिति । एतदुक्तं भवति । यथा परिव्राजकस्य पृथगभिधानं प्रयोजनांतरानुसारेण तथा शपथानामपि प्रयोजनांतरानुसारेण पृथगभिधानमिति । तच्च प्रयोजनांतरं पूर्वमेवोक्तम् -

अथवा 'ब्राह्मणपरिव्राजकवदि'त्यस्यान्योऽर्थः ।'ब्राह्मणानामंत्रय, परिव्राजकं चामंत्रयेत्युक्ते' ब्राह्मणामंत्रण[4]नियोगेनैव परिव्राजकेऽप्यामंत्रणनियोगे सिद्धे पुनः परिव्राजकामंत्रण[5]नियोगाद्यथा परिव्राजकातिरिक्तविषयो ब्राह्मणशब्दः तथा तुलादीनां शपथाना च दिव्यत्वे सिद्धेऽपि दिव्यशब्दशपथशब्दयोः १५ प्रयोगाद्दिव्यशब्दः शपथव्यतिरिक्ततुलादिविषय इति ।

ननु यदि कालांतरनिर्णयनिमित्तानि शपथास्तर्हि सद्यो निर्णयनिमित्तेषु तुलादिषु कोशस्य सहपाठो अनुपपन्न इत्याशंक्य पूर्वोक्तमेव प्रयोजनं स्मारयति । **कोशस्य तु शपथत्वेऽपीति** ।

यदुक्तं[6] 'ऋणादिषु सर्वेषु विवादेषु यथासंभवं दिव्यानि प्रयोज्यानीति' तदनुपपन्नं स्थावरेषु पितामहवचनविरोधात् इत्याशंक्य परिहरति । **यत्तु पितामहवचनं स्थावरेष्वित्यादिना** । २० एवं सति 'स्थावरेषु विवादेष्वि' त्यत्र **पितामह**वचने स्थावरपदमनर्थकं विवादांतरेष्वपि मानुषप्रमाणसंभवे दिव्याभावादित्याक्षिपति । **ननु विवादांतरेष्वपीति** । अर्धांगीकारेण परिहरति । **सत्यमित्यादिना** ।

स्थावरपदस्य सार्थकत्वमाह । **स्थावरेषु तु विवादेषु प्रत्यर्थिनेति** । अयमभिप्रायः । स्थावरेषु मानुषादिव्यप्रमाणयोर्न विकल्प इति विकल्पनिराकरणार्थः स्थावरशब्द इति ॥ ९६ ॥ २५

## याज्ञवल्कीये ९७ श्लोकः ।

ननु ग्रीष्मादिकालविधानबलादेवेतरकालनिषेधसिद्धेः पुनर्निषेधोऽनर्थक इत्याशंक्य परिहरति । **विधानलब्धस्यापि पुनरिति** ॥ ९७ ॥

## याज्ञवल्कीये ९८ श्लोकः ।

नन्वग्निर्जलं वा शूद्रस्य यवाः सप्त विषस्य वे 'त्यत्राग्निर्जलविषाणां शूद्रस्य एव विकल्पोऽस्तु ।'किमि- ३० त्यनुपात्तक्षत्रियवैश्यविषयताश्रियत इत्यत आह '**ब्राह्मणस्य तुलाविधानात् शूद्रस्य यवा**' इति।
ननु भवतु क्याादिगणस्य तदतिरिक्तानां अन्येषां च मिथोऽभियोक्तृत्वेऽभियोज्यत्वे वा क्यादि

---

सिरस्थं विनेति मुद्रकतरःपाठः १ क—सर्वेषु इति मिताक्षरापुस्तकेषु पाठः ।१४ २ क—पृथग्विधानं. ३ क—ब्राह्मणमामंत्रय. ४ ख—मंत्रणानियोगेन. ५ क—परिव्राजकमात्रेण. ६ क ख—तदुक्तं ७ ख—काल. ८ क—नियोक्तृत्वे.

व्यतिरिक्तानामेवादिव्यं माऽस्तु । ' रुच्या वाऽन्यतर ' इति विकल्पः । स्त्र्यादीनामेवान्योन्याभियोगे कथमित्यत आह । **परस्पराभियोगे त्विति** ।

ननु च दिव्यकर्तृविकल्पवद्दिव्यविकल्पोऽप्यस्तु इत्याशंक्य भवेन्न्यायतः अपि तु 'स्त्रीबालवृद्धेत्यादि' **योगीश्वर**वचनेन तुलाया नियम इत्याह । **तत्रापि तुलैवेति** । ननु किमयं सावष्टंभाभियोगे-
५ ष्वेव तुलानियम इत्याशंक्य नेत्याह । **तथा महापातकादीति** । अत्र तथा वेति स्त्र्यादीनां तुलानियमसाम्याभिप्रायस्तथाशब्दो न सर्वसाम्याभिप्रायेण शंकाभियोगे सर्वथा सावष्टंभाभियोगसाम्याभावात् ।

ननु किमयं तुलानियमः स्त्रीणां सार्वकालिक इत्याशंक्य नेत्याह । **एतच्च वचनमित्यादिना** । एतच्च ' स्त्रीबालेत्यादि ' **योगीश्वर**वचनमित्यर्थः ।

१० उक्तं प्रमेयमुपसंहरति । **तस्मात्साधारणकाल इति** । नियमार्थमेवेत्याह । **इदमिति** । इदमिति ' स्त्रीबालेत्यादि ' **योगीश्वर**वचनम् । पूर्वं विधिप्रतिषेधमुखेन ' अग्नेः शिशिरहेमंता ' वित्यादिभिः वचनैः शिशिरादिकालांतराणि दर्शितानि । तत्र प्रयोजनं तु वक्ष्यत इत्युक्तम् । तदिदानीं दर्शयति । **कालांतरे तु तत्कालविहितमित्यादिना** । उक्तं प्रयोजनमुपसंहरति । **सर्वथाऽपि विधिप्रतिषेधाद्दतुकालानतिक्रमणेति** ' मध्यवर्ति जलमपीति ' ' तुलाग्न्यापो विषं कोश '
१५ इत्यत्र तुलाविषयोर्मध्ये जलस्य स्थितत्वात् मध्यवर्तित्वमित्यर्थः ॥ ९८ ॥

## याज्ञवल्कीये ९९ श्लोकः ।

**अत्र कोशस्य ग्रहणमिति** । अत्र ' नासहस्राद्धरेदि ' त्यत्र वचन इत्यर्थः । **एतानि चत्वारि दिव्यानीति** । तुलाग्न्यापोविषानीति भावः । **एतच्च वचनद्वयमिति** । 'नासहस्रादिति' **योगीश्वर**वचनमेकं, अपरं ' तु सहस्रे तु धटमिति ' **पितामह**वचनमिति द्रष्टव्यम् । शेषं सुबोधम् ॥ ९९ ॥

२० **इतिदिव्यमातृका** ॥

अथ धटाकृतिर्लिख्यते । इति धटाकृतिः । धटप्रकरण एव **षष्ट्याह** । ' **खाग्निभिर्दिनैः मास** ' **इति** । अत्र खशब्देन शून्यमभिधीयते । अग्निशब्देन त्रित्वसंख्या । ततश्चैवंरूपोऽङ्कः संपद्यते [ ३० ] । तुला अग्निः सलिलं विषं कोशः तंडुलः तप्तमाषः धर्माधर्माख्यादिव्यं निष्के तु सत्यवचनामित्यादयः । शपथाः दिव्यपराजयनिमित्तदंडविधानं चेत्येवंरूपैस्तत्तन्नामधेयैर्दशभिरवांतर-
२५ प्रकरणैर्विशिष्टं दिव्यप्रकरणं सुबोधम् ॥ **इति दिव्यप्रकरणं** ॥

॥ इति**श्रीमद्भट्टविश्वेश्वर**विरचितायां मिताक्षराव्याख्यायां **सुबोधिन्यां** दिव्यप्रकरणम् ॥

## अथ दायविभागप्रकरणम् ९ ।

महता प्रणिधानेन दायविभागप्रकरणं व्याचिख्यासुः निबन्धकारः पूर्वोत्तरयोर्ग्रंथसंदर्भयोः पद्यसंबंधेन संगतिं दर्शयति । ' **प्रमाणं मानुषं दैवमिति** ।

३० दायशब्दार्थमाह । **तत्र दायशब्देनेति** । अयमर्थः । धनस्वामिना पित्रादिना सह यः संबंधो जन्यजनकत्वादिः तस्मात्संबंधरूपात् निमित्तादन्यस्य संबंधप्रतियोगिनः पुत्रादेः स्वं यद्धनं भवति तद्दायशब्देनोच्यत इति ।

**अप्रतिबंधदाय**स्वरूपमाह । **तत्र पुत्राणां पौत्राणां चेति** । अयमभिप्रायः । पितृधने पितामहधने च पुत्रपौत्रयोः स्वव्यतिरिक्तजन्यजनकप्राप्तिमंतरेण स्वाम्यं भवतीत्यप्रतिबंधो दाय इति ।

१ क—प्रतिशेष.

**सप्रतिबंधदाय**स्वरूपमाह । **पितृभ्रात्रादीनामिति** । पितरौ भ्रातरश्चादिर्येषां ते तथाविधाः । **एवं तत्पुत्रादिष्वप्यूहनीय इति** । अत्र तच्छब्देन पुत्रपौत्रयोः पुत्रादयो गृह्यंते । अयमभिसंधिः । विद्यमानेषु स्वामिसंबंधिषु यस्य व्यवहितः स्वामिसंबंधः तस्य सप्रतिबंधो दायः । अव्यवहितेषु सत्स्विवति ।

दायशब्दार्थमभिधाय **विभागशब्दार्थमाह । विभागो नाम द्रव्य समुदायविषयाणामिति** । अयमाशयः । अविभक्तद्रव्यसमुदायगोचराणामनेकेषां पुत्रादिस्वाम्यानां तदेकदेशेषु ५ समुदितद्रव्यैकदेशेषु व्यवस्थापनं विशेषेण प्रातिस्विकस्वाम्यस्थापनं विभागशब्दवाच्यं इति पूर्वं संगतिश्लोके '**दायविभागो योगमूर्तिने**' त्यभिधाय दायविभागशब्दस्यार्थो विविच्य दर्शितः ।

तत्र **नारद**वचनं प्रमाणयितुमाह । एतदेवाभिप्रेत्योक्तं इति । **नारद**वचनस्य स्वाभिप्रेतार्थपरत्वं दर्शयति । **पैत्रस्येति स्वत्वनिमित्तसंबंधोपलक्षणमित्यादिना** । एतदुक्तं भवति । स्वामिसंबंधादेव निमित्तादिति यदुक्तं तदुपलक्षणार्थं **नारदवचनस्य** पैत्रस्येति पदं । तनयैरितिपदमव्यवहि- १० तसंबंधोपलक्षणार्थमिति ।

संगतिमभिधाय विभागप्रकरणार्थं निष्कृष्य दर्शयति । **इदमिह निरूपणीयमित्यादिना** । तत्र **कस्येति** द्रव्यस्य निर्देशः । **कथ**मितीतिकर्तव्यतायाः **कैश्चे**ति कर्तॄणां । तत्र कस्येत्यस्यांशस्य मूलश्लोकानारूढत्वात्सकलविभागप्रकरणोपयोगित्वाच्च तमंशं प्रथमतो विचारपथमवतारयति । **कस्य विभाग इत्येतदिह चिंत्यत इति** । १५

अत्र द्विपर्वा विचारः । तथाहि विभज्यमानं द्रव्यं विषयं तत्र संदेहः किमस्वस्य विभाग उत स्वस्य विभाग इति । तदर्थमर्थांतराचिंता विभागः स्वत्वहेतुरुत नेति । यदि विभागः स्वत्वहेतुः ततोऽस्वस्य विभागः तेन च विभागेन स्वत्वं, न ततः प्राक्; स्वत्वहेतुभूतविभागाभावात् । अतश्चास्वस्य विभाग इति पक्षोदयः । अथ विभागो न स्वत्वहेतुः अपि तु जन्मैव तदा जन्मनैव स्वत्वात्स्वस्य विभाग इति पक्षोदय इत्येको विचारः । तमेनं विचारं दर्शयति । **किं विभागात्स्वत्वं उत** २० **स्वस्य सतो विभाग इति** ।

अपरो विचारः । स्वत्वविषयं तमुपक्षिपति । **तत्र स्वत्वमेव तावन्निरूप्यत इति** । अत्र तु स्वत्वं विषयः तत्र संशयः । किं शास्त्रैकगोचरं स्वत्वं उत लौकिकप्रमाणांतरगोचरमिति । तमेव दर्शयति । **किं शास्त्रैकसमधिगम्यमिति** । पूर्वपक्षं परिगृह्णाति । **तत्रेति** । हेतुमाह । **गौतमवचना-** २५ **दिति** । तदेव वचनं दर्शयति । **स्वामी रिक्थेति** ।

स्वत्वस्य लौकिकप्रमाणांतरगम्यत्वे युक्तिदोषमाह । **प्रमाणांतरगम्ये स्वत्वे इति नेदं वचनं** । इदं **गौतमवचनं** नार्थवदित्यर्थः ।

स्वत्वस्य लौकिकत्वे दोषमाह—**अपि चेति** । तत्र हेतुः । **अपहर्तुरेव स्वत्वादिति** । विशेषमाशंकते । **अथेति** । परिहरति । **एवं तर्हीति** । अयमभिप्रायः । यदि लौकिकं स्वत्वं तर्हि अन्यस्य ३० स्वे अन्येनापहृते सति तत्रापह्रियमाणो यदि ब्रूयात् मम स्वमनेनापहृतमिति । ततः शृण्वतां सभासदां अस्य वा स्वमस्य वा स्वमिति संशयो न स्यात् । यथा लौकिके सुवर्णरजतादिस्वरूपे दृष्टे सुवर्णादिकं भवति वा न वेति न संशयः। तथा स्वत्वेऽपि संशयाभावः स्यात् लौकिकत्वात्स्वत्वस्य । जायते च संशयः। अतोऽपहर्तुः स्वं न भवतीति प्रमितिरुत्पद्यते वा नवेति विकल्प्याद्यं दूषयति । **एवं तर्हीति** । अयमाशयः।

१ घ—यस्याव्यहित, ग—अव्यवहितः । २ ख—पक्षोदायः । ३ क घ—रूपयति.

व्यतिरिक्तानामेवादिव्यं माऽस्तु । ' स्त्र्या वाऽन्यतर ' इति विकल्पः । स्त्र्यादीनामेवान्योन्याभियोगे कथमित्यत आह । **परस्पराभियोगे त्विति** ।

ननु च दिव्यकर्तृविकल्पवद्दिव्यविकल्पोऽप्यस्तु इत्याशंक्य भवेन्यायतः अपि तु 'स्त्रीबालवृद्धेत्यादि' **योगीश्वर**वचनेन तुलाया नियम इत्याह । **तत्रापि तुलैवेति** । ननु किमयं सावष्टंभाभियोगे-
५ ष्वेव तुलानियम इत्याशंक्य नेत्याह । **तथा महापातकादीति** । अत्र तथा वेति स्त्र्यादीनां तुलानियमसाम्याभिप्रायस्तथाशब्दो न सर्वसाम्याभिप्रायेण शंकाभियोगे सर्वथा सावष्टंभाभियोगसाम्याभावात् ।

ननु किमयं तुलानियमः स्त्रीणां सार्वकालिक इत्याशंक्य नेत्याह । **एतच्च वचनमित्यादिना** । एतच्च ' स्त्रीबालेत्यादि ' **योगीश्वर**वचनमित्यर्थः ।

१० उक्तं प्रमेयमुपसंहरति । **तस्मात्साधारणकाल इति** । नियमार्थमेवेत्याह । **इदमिति** । इदमिति ' स्त्रीबालेत्यादि ' **योगीश्वर**वचनम् । पूर्वं विधिप्रतिषेधमुखेन ' अग्नेः शिशिरहेमंता ' वित्यादिभिः वचनैः शिशिरादिकालांतराणि दर्शितानि । तत्र प्रयोजनं तु वक्ष्यत इत्युक्तम् । तदिदानीं दर्शयति । **कालांतरे तु तत्कालविहितमित्यादिना** । उक्तं प्रयोजनमुपसंहरति । **सर्वथाऽपि विधिप्रतिषेधाहृतुकालानतिक्रमणेति** ' मध्यवर्ति जलमपीति ' ' तुलाग्न्यापो विषं कोश '
१५ इत्यत्र तुलाविषयोर्मध्ये जलस्य स्थितत्वात् मध्यवर्तित्वमित्यर्थः ॥ ९८ ॥

## याज्ञवल्कीये ९९ श्लोकः ।

**अत्र कोशस्य ग्रहणमिति** । अत्र ' नासहस्राद्धरेदि ' त्यत्र वचन इत्यर्थः । **एतानि चत्वारि दिव्यानीति** । तुलाग्न्यापोविषानीति भावः । **एतच्च वचनद्वयमिति** । 'नासहस्रादिति' **योगीश्वर**-वचनमेकं, अपरं ' तु सहस्रे तु धटमिति ' **पितामह**वचनमिति द्रष्टव्यम् । शेषं सुबोधम् ॥ ९९ ॥

२० **इतिदिव्यमातृका** ॥

अथ धटाकृतिर्लिख्यते । इति धटाकृतिः । धटप्रकरण एव **षष्ट्याहः** । ' **खाग्निभिर्दिनैः मास** ' **इति** । अत्र खशब्देन शून्यमभिधीयते । अग्निशब्देन त्रित्वसंख्या । ततश्चैवंरूपोऽङ्कः संपद्यते [ ३० ] । तुला अग्निः सलिलं विषं कोशः तंडुलः तप्तमाषः धर्माधर्माख्यादिव्यं निष्के तु सत्यवचनमित्यादयः । शपथाः दिव्यपराजयनिमित्तदंडविधानं चेत्येवंरूपैस्तत्तन्नामधेयैर्दशभिरवांतर-
२५ प्रकरणैर्विशिष्टं दिव्यप्रकरणं सुबोधम् ॥ **इति दिव्यप्रकरणं** ॥

॥ इति**श्रीमद्भट्टविश्वेश्वर**विरचितायां मिताक्षराव्याख्यायां **सुबोधिन्यां** दिव्यप्रकरणम् ॥

## अथ दायविभागप्रकरणम् ९ ।

महता प्रणिधानेन दायविभागप्रकरणं व्याचिख्यासुः निबन्धकारः पूर्वोत्तरयोर्ग्रंथसंदर्भयोः पद्यसंबंधेन संगतिं दर्शयति । ' **प्रमाणं मानुषं दैवमिति** ।

३० दायशब्दार्थमाह । **तत्र दायशब्देनेति** । अयमर्थः । धनस्वामिना पित्रादिना सह यः संबंधो जन्यजनकत्वादिः तस्मात्संबंधरूपात् निमित्तादन्यस्य संबंधप्रतियोगिनः पुत्रादेः स्वं यद्धनं भवति तद्दायशब्देनोच्यत इति ।

**अप्रतिबंधदाय**स्वरूपमाह । **तत्र पुत्राणां पौत्राणां चेति** । अयमभिप्रायः । पितृधने पितामहधने च पुत्रपौत्रयोः स्वव्यतिरिक्तजन्यजनकप्राप्तिमंतरेण स्वाम्यं भवतीत्यप्रतिबंधो दाय इति ।

१ क—प्रतिषेध.

**सप्रतिबंधदाय**स्वरूपमाह । **पितृभ्रात्रादीनामिति** । पितरौ भ्रातरश्चादिर्येषां ते तथाविधाः । **एवं तत्पुत्रादिष्वप्यूहनीय इति** । अत्र तच्छब्देन पुत्रपौत्रयोः पुत्रादयो गृह्यंते । अयमभिसंधिः । विद्यमानेषु स्वामिसंबंधिषु यस्य व्यवहितः स्वामिसंबंधः तस्य सप्रतिबंधो दायः । अव्यवहितेषु सत्स्विति ।

दायशब्दार्थमभिधाय **विभागशब्दार्थमाह** । **विभागो नाम द्रव्य समुदायविषयाणामिति** । अयमाशयः । अविभक्तद्रव्यसमुदायगोचराणामनेकेषां पुत्रादिस्वाम्यानां तदेकदेशेषु समुदितद्रव्यैकदेशेषु व्यवस्थापनं विशेषेण प्रातिस्विकस्वाम्यस्थापनं विभागशब्दवाच्यं इति पूर्वं संगतिश्लोके '**दायविभागो योगमूर्तिने**' त्यभिधाय दायविभागशब्दस्यार्थो विविच्य दर्शितः ।

तत्र **नारद**वचनं प्रमाणयितुमाह । एतदेवाभिप्रेत्योक्तं इति । **नारद**वचनस्य स्वाभिप्रेतार्थपरत्वं दर्शयति । **पैत्रस्येति स्वत्वनिमित्तसंबंधोपलक्षणमित्यादिना** । एतदुक्तं भवति । स्वामिसंबंधादेव निमित्तादिति यदुक्तं तदुपलक्षणार्थं **नारद**वचनस्य पैत्रस्येति पदं । तनयैरितिपदमव्यवहितसंबंधोपलक्षणार्थमिति ।

संगतिमभिधाय विभागप्रकरणार्थं निष्कृष्य दर्शयति । **इदमिह निरूपणीयमित्यादिना** । तत्र **कस्येति** द्रव्यस्य निर्देशः । **कथ**मितीतिकर्तव्यतायाः **कैश्चेति** कर्तॄणां । तत्र कस्येत्यस्यांशस्य मूलश्लोकानारूढत्वात्सकलविभागप्रकरणोपयोगित्वाच्च तमंशं प्रथमतो विचारपथमवतारयति । **कस्य विभाग इत्येतदिह चिंत्यत इति** ।

अत्र द्विपर्वा विचारः । तथाहि विभज्यमानं द्रव्यं विषयं तत्र संदेहः किमस्वस्य विभाग उत स्वस्य विभाग इति । तदर्थमर्थांतरचिंता विभागः स्वत्वहेतुरुत नेति । यदि विभागः स्वत्वहेतुः ततोऽस्वस्य विभागः तेन च विभागेन स्वत्वं, न ततः प्राक्; स्वत्वहेतुभूतविभागाभावात् । अतश्चास्वस्य विभाग इति पक्षोदयः । अथ विभागो न स्वत्वहेतुः अपि तु जन्मैव तदा जन्मनैव स्वत्वात्स्वस्य विभाग इति पक्षोदय इत्येको विचारः । तमेनं विचारं दर्शयति । **किं विभागात्स्वत्वं उत स्वस्य सतो विभाग इति** ।

अपरो विचारः । स्वत्वविषयं तमुपक्षिपति । **तत्र स्वत्वमेव तावन्निरूप्यत इति** । अत्र तु स्वत्वं विषयः तत्र संशयः । किं शास्त्रैकगोचरं स्वत्वं उत लौकिकप्रमाणांतरगोचरमिति । तमेव दर्शयति । **किं शास्त्रैकसमधिगम्यमिति** । पूर्वपक्षं परिगृह्णाति । **तत्रेति** । हेतुमाह । **गौतमवचनादिति** । तदेव वचनं दर्शयति । **स्वामी रिक्थेति** ।

स्वत्वस्य लौकिकप्रमाणांतरगम्यत्वे युक्तिदोषमाह । **प्रमाणांतरगम्ये स्वत्वे इति नेदं वचनं** । **इदं गौतमवचनं** नार्थवदित्यर्थः ।

स्वत्वस्य लौकिकत्वे दोषमाह—**अपि चेति** । तत्र हेतुः । **अपहर्तुरेव स्वत्वादिति** । विशेषमाशंकते । **अथेति** । परिहरति । **एवं तर्हीति** । अयमभिप्रायः । यदि लौकिकं स्वत्वं तर्हि अन्यस्य स्वे अन्येनापहृते सति तत्रापह्रियमाणो यदि ब्रूयात् मम स्वमनेनापहृतमिति । ततः शृण्वतां सभासदां अस्य वा स्वमस्य वा स्वमिति संशयो न स्यात् । यथा लौकिके सुवर्णरजतादिस्वरूपे दृष्टे सुवर्णादिकं भवति वा न वेति न संशयः। तथा स्वत्वेऽपि संशयाभावः स्यात् लौकिकत्वात्स्वत्वस्य । जायते च संशयः। अतोऽपहर्तुः स्वं न भवतीति प्रमितिरुत्पद्यते वा नवेति विकल्प्याद्यं दूषयति । **एवं तर्हीति** । अयमाशयः।

१ घ—यस्याव्यहित, ग—अव्ययहितः । २ ख—पक्षोदायः । ३ क घ—रूपयति.

यथेदं सुवर्णमिदं रजतमित्युत्पन्नायां प्रमितौ सुवर्णादिस्वरूपे संशयो न जायते । तथा प्रकृतेऽपीति । नापि द्वितीयः । प्रमित्यनुदयादेवापहर्तुः स्वं न भवतीति वक्तुमशक्यत्वादिति । बहिरेव परिहृत्य पूर्वपक्षमुपसंहरति । **तस्मादिति** ।

सिद्धांतमाह । **अत्रोच्यत इति** । स्वत्वं लौकिकमित्यत्रानुमानं प्रमाणयति । **लौकिकमेव**
५ **स्वत्वमित्यादिना** । अनुमानं तु स्वत्वं लौकिकं लौकिकार्थक्रियासाधनत्वात् । यद्यत् लौकिकार्थक्रियासाधनं तत्तल्लौकिकं । यथा व्रीह्यादि तथा चेदं स्वत्वं, तस्माल्लौकिकमिति ।

यद्यल्लौकिकं न भवति तल्लौकिकार्थक्रियासाधनमपि न भवति । यथाऽऽहवनीयादि इति व्यतिरेकव्याप्तिं दर्शयति । **आहवनीयादीनां हीति** ।

व्यतिरेकापरिशुद्धमनुमानं न प्रमाणमित्याक्षिपति । **नन्वाहवनीयादीनामपीति** ।
१० अलौकिकस्याप्याहवनीयस्य लौकिकपाकस्फोटादिसाधनत्वाद्यद्यदलौकिकं तत्तत् लौकिककार्यक्रियासाधनमिति या व्यतिरेकव्याप्तिः तस्या व्यभिचारादनुमानं दुष्टमित्यर्थः ।

समाधत्ते । **नैतदित्यादिना** । अयमभिसंधिः । आहवनीयादीनां द्वे रूपे । अलौकिकाहवनीयत्वं लौकिकाग्नित्वं च । एवं च लौकिकाग्निरूपेण पाकसाधनत्वं नत्वलौकिकाहवनीयादिरूपेण, तथा सत्यलौकिकाहवनीयादिरूपहीनलौकिकाग्नेः पाकसाधनत्वं न स्यात् । तस्मान्न व्यतिरेकव्याप्ति-
१५ व्यभिचार इति ।

ननु तर्हि प्रकृतेऽपि सुवर्णादिरूपेणैव लौकिकक्रयविक्रयार्थसाधनत्वमस्तु सुवर्णादेर्वस्तुनः । मा भूत्स्वत्वरूपेणेत्याशंक्याह । **इह तु सुवर्णादिरूपेत्यादिना** । अज्ञातशास्त्रव्यवहाराणां म्लेच्छादीनामपि स्वत्वव्यवहारो दृश्यते । अतस्तदन्यथाऽनुपपत्तिरपि स्वत्वस्य लौकिकत्वे प्रमाणमित्याह । **अपि चेत्यादिना** ।

२० 'स्वत्वव्यवहारो दृश्यते' इत्यनेन स्वत्वव्यवहारः स्वत्वस्य लौकिकत्वे कल्पक इत्यभिहितः । तत्र कल्पकासत्वाख्यमर्थापत्तिदूषणं निवारयति । **क्रयविक्रयादिदर्शनादिति** ।

**तथा हि लिप्सासूत्रे तृतीयवर्णक इति** । चतुर्थाध्यायप्रथमपादे द्वितीयाधिकरणसूत्रं । 'यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्सार्थलक्षणविभक्तत्वात्' । अत्र प्रथमवर्णके क्रत्वर्थपुरुषार्थयोर्लक्षणविचारः ।, द्वितीयवर्णके गोदोहनादिकं क्रत्वर्थमुत पुरुषार्थमिति ।

२५ तृतीयवर्णके त्वयं विचारः । 'अनारभ्य श्रूयंते द्रव्यार्जननियमाः । ब्राह्मणः प्रतिग्रहादिना धनमर्जयेत्, राजन्यो जयादिना, वैश्यः कृष्यादिनेति' । तत्र संदेहः। एते नियमाः क्रत्वर्था उत पुरुषार्था इति । पूर्वपक्षस्तु । अनारभ्याधीतत्वेऽपि द्रव्यार्जननियमानां क्रत्वर्थत्वानंगीकारे अधिकारिणः अभावात् । तथाहि द्रव्यार्जनविध्यानर्थक्यापत्तेः कर्तृपार्थक्यापत्तेः कर्तृप्रयुक्तद्रव्यद्वारा क्रत्वर्थत्वमेव युक्तम् ।

नन्वेष पूर्वपक्ष एव नोदेति । क्रतुसिद्ध्यभावात् । तथाहि । द्रव्यार्जननियमानां क्रत्वर्थत्वे स्वत्वस्या-
३० लौकिकहेत्वजन्यत्वात् वैदिकहेत्वंतराभावात् । नियतप्रतिग्रहादिहेतूनां च क्रत्वर्थत्वेनान्यार्थत्वादकारणककार्योत्पत्त्यभावाच्च स्वत्वमेव नोत्पद्यते । ततः स्वत्वस्याभावात्क्रतोरभावः। यतः स्वेनैव क्रतुसिद्धिर्नान्येन । मैवं जन्मना प्रतिग्रहादिभिश्चार्जितस्य द्रव्यस्य स्वत्वं लोकसिद्धमिति लोके वृद्धव्यवहारसिद्धत्वात् ।

ननु नार्जनोत्पन्नः कोऽपि धर्मो मानगम्यः यत् स्वत्वमिति व्यवह्रियते । मैवं । अर्जनाद्यर्जकाज्य-

१ ख—त्वद्वा. २ घ—पृथक्त्वापत्तेः. ३ क ख—कर्तृपृथक् प्रयत्या ४ घ—[illegible]त्व. ५ क ख—नास्त्वेन ६ क— ७ ग. अर्जक.

संबंधो यः स स्वामिभावसंबंधो तदेव स्वत्वं तच्च पृथङ्मानं नापेक्षते, यतः क्रियागर्भः कर्तृकर्मणोः संबंधो लोकसिद्धः । न चैवमर्जनक्रियापायेतज्जन्मस्वरूपसंबंधस्यापायः संबंधिनोराश्रययोरनपायात् । न हि पितुः क्रियापाये[1] पितृत्वमपैति । तेन लौकिकत्वात्स्वत्वस्य स्वेन च क्रतुसिद्धेः सिद्धमर्जननियमानां क्रत्वर्थत्वमिति ।

सिद्धांतस्तु धनार्जनप्रवृत्ते स्वाधिकारिण्यर्थलभ्ये सति अर्जननियमानां क्रतुनिवेशककल्पना न युक्ता ५ धनकामाधिकारे यथेष्टाचरणात्प्रवृत्तौ[2] न नियते प्रवर्तते । अतो नियमार्थे विधिवाक्यप्रवृत्तौ 'ब्राह्मणः प्रतिग्रहादिना धनमर्जयेदि'त्यादिविधेर्नानर्थक्यम् ।

किंच । क्रत्वर्थे चार्जने कृत्स्नमेवार्जितं सर्वं क्रत्वर्थमिति । जीवनोपायाभावात् सर्वक्रतुलोपः स्यात् । तस्मात्पुरुषार्थो नियमाः । नियमातिक्रमे च पुरुषस्य दोषो न क्रतुवैगुण्यं । पूर्वपक्षे तु क्रत्वर्थत्वान्नियमानां तदतिक्रमे क्रतुवैगुण्यमिति । १०

प्रकृतमनुसरामः । ' स्वत्वं लौकिकमिति न्यायविदो मन्यंत ' इत्युक्तं तदुपपादयति । ***तथाहि लिप्सासूत्र इत्यादिना** ।

तत्र द्रव्यार्जननियमाः क्रत्वर्था इत्यमुं पूर्वपक्षमाक्षिपति । **×द्रव्यार्जननियमानामित्यादिना पूर्वपक्षासंभवमाशंक्येत्यन्तेन** । अयमभिप्रायः । द्रव्यार्जननियमाः क्रत्वर्था उत पुरुषार्था इति लिप्सासूत्रतृतीयवर्णके विचारः । तत्र क्रत्वर्था इति पूर्वपक्षः । स न घटते तथाहि १५ द्रव्यार्जननियमानां क्रत्वर्थत्वे स्वत्वस्यालौकिकत्वेन लौकिकहेत्वजन्यत्वात् वैदिकोपायांतराभावादर्जननियमानां च क्रत्वर्थत्वेनान्यार्थत्वात् स्वत्वमेव नोदेति । तथा च स्वस्याभावादस्वेन च क्रत्वसिद्धेः क्रत्वर्था द्रव्यार्जननियमा इति पूर्वपक्षो न घटत इति ।

पूर्वपक्षमुपजीवयति । **द्रव्यार्जनस्य प्रतिग्रहादिनेति** । अयमभिसंधिः । प्रतिग्रहादिनियमाः स्वत्वं साधयन्त एव क्रतूपयुक्तधनद्वारा क्रत्वर्था भविष्यंति । यथाऽवघातो वितुषीभावं २० कुर्वन्नेव क्रतूपयुक्तव्रीहिद्वारा क्रत्वर्थः । तच्च स्वत्वं वृद्धाः पुत्रत्वादिकमेव लौकिकं मन्यंते । अतो न क्रतुसिद्ध्यभाव इति ।

ननु भवत्वर्जनं स्वत्वसाधनं अर्जननियमानां क्रत्वर्थत्वादर्जनस्यापि [3] क्रत्वर्थत्वेनान्यार्थत्वात् स्वत्वमेव न भवतीति क्रत्वभावस्तदवस्थ एवेत्याक्षिपति । **ननु चेति** । अपहरति । **प्रलपितमिदमिति** । **अर्जनं स्वत्वं नापादयतीति** वदता केनापि प्रलपितम् । कुतः । **विप्रतिषिद्धमिति** । २५ एवं योजना ।

अयमर्थः । अर्जनं नामार्जकधर्मसंबंधरूपः ; स द्विनिष्ठः । पितापुत्रवत् । तथा चान्यमंतरेणार्जनस्यानिष्पत्तेः 'मे माता वंध्ये' तिवत् अर्जनं स्वत्वं नापादयतीति वचनं विरुद्धमिति ।

**विचारप्रयोजनमुक्तमिति** । अधिकरणविचारप्रयोजनमित्यर्थः । प्रयोजनस्वरूपं दर्शयति । **अतो नियमातिक्रम इति** । ३०

पूर्वोक्तप्रयोजनग्रंथार्थो विवृतो गुरुणा । तमर्थमाह । **†अस्य चार्थ एवं विवृत इत्यादिना** । ***पुरुषस्यैव नियमातिक्रमे दोष इत्यन्तेन** । एष तात्पर्यार्थः । पूर्वपक्षे पुरुषस्य नियमातिक्रमदोषो

१ ख—पापे २ क ख—वर्णात्प्रवृत्तौ ३ ख—अनेन ४ ख—नादात ५ क ख—पक्वाव्रीहिद्वारा ६ ख—नद्विनिष्ठः ७ क—अर्जकमन्तरेण । ख कारण

* पृ. ७४ पं. १. × पृ. ७४ पं. २–३, † पृ. ७४ पं. ७. * पृ. ७४ पं. १०

नास्ति । किंतु नियमातिक्रमार्जितद्रव्येण न क्रतुसिद्धिः । अतः क्रतुवैगुण्यम् । राद्धांते तु नियमानां पुरुषार्थत्वात्तदतिक्रमे पुरुषस्य दोषः । न क्रतुवैगुण्यमिति ।

फलितार्थमाह । **नियमातिक्रमार्जितस्यापीति । अन्यथा क्रतुसिद्ध्यभावादिति ।** अन्यथा नियमातिक्रमार्जितस्यापि, स्वत्वानंगीकारे नियमानां क्रत्वर्थत्वेन स्वत्वस्याप्यलौकिकत्वा-
५ ल्लौकिकस्वत्वाभावेन जीवनमपि दुर्लभमिति कर्तुरभावात्क्रतोरभाव इत्यर्थः ।

ननु यदि नियमातिक्रमार्जितेऽपि स्वत्वं तर्हि चौर्यादिप्राप्तस्यापि स्वत्वप्रसंग इत्याशंक्य परिहरति । **न चैतावतेत्यादिना । ज्ञातेषु ज्ञायते स्वामीति** । एतेषु निमित्तेष्वित्यनुवर्तते । एतेषु निमित्तेषु ज्ञातेषु स्वामी ज्ञायत इत्यर्थः ।

उक्तन्यायमन्यत्राप्यतिदिशति । **एवमनुलोमजानामित्यादिना** । ननु 'पत्नी दुहितर'
१० इत्यादिभिर्वचनैः स्वामिन अभावे पत्न्यादीनां स्वामित्वप्रतिपादनात्स्वत्वस्य लौकिकत्वे एतद्वचनजातं विरुद्ध्येत इत्याक्षिप्य परिहरति । **यद्यपि पत्नी दुहितरश्चेत्यादिना ।**

स्वत्वस्य लौकिकत्वे पूर्वपक्षिणा यद्दूषणमभिहितं तत्परिहर्तुमनुभाषते । **यद्यपि मम स्वमिति ।** एतदुक्तं भवति । स्वत्वस्य लौकिकत्वे मम स्वमनेनापहृतमिति न ब्रूयात् । अपहर्तुरेव स्वत्वात् । यदि ब्रूयात्तर्हि मम स्वमनेनापहृतमिति उक्ते मध्यस्थानां संशयो जायते । स न घटेत सुव-
१५ र्णादिस्वरूप इवेति ।

परिहरति । **तदप्यसदित्यादिना ।** । अयमर्थः । एतादृशस्थले अन्यस्य स्वं तेनापहृतमिति ज्ञानमात्रमुत्पद्यते । अविदकवचनबलात्प्रतीतिर्हि सा न प्रतीतिः । तथा च विप्रतिपत्तेः कारणसंदेहो जायते । तथा हि । मम स्वमनेनापहृतमिति वादिना अभिहिते प्रतिवादिना तद्विपरीते चाभिहिते मध्यस्थानां सन्देहो जायते । अनेनापहृतमथवा क्रयादिना लब्धमिति । एवं च स्वत्वकारणभूतक्रयादिषु
२० संदेहात्कार्यभूतस्वत्वेऽपि संशयो भवतीति ।

ननु साधु निरूपितं स्वत्वस्य लौकिकत्वं । तथाऽप्ययुक्तमेव विभागप्रकरणे स्वत्वगतलौकिकत्वालौकिकत्वयोः अप्रयोजकत्वादित्याशंक्याह । **विचारप्रयोजनं त्वित्यादिना जप्येन तपसैव चेत्यन्तेन** । 'यद्गर्हितेने'त्येतद्वचनमर्थाद्व्याचक्षाणः पूर्वपक्षसिद्धांतयोर्विभागप्रकरणोपयोगिनी प्रयोजने दर्शयति । **शास्त्रैकसमधिगम्य इत्यादिना ॥**

२५ ननूद्देशक्रमेणोद्दिष्टविषयविचारो युक्तः । अथ मतं प्रयोजनांतरानुसारेणापि विचार इति । तर्हि न तत्प्रयोजनांतरं पश्यामः । तथाहि तत् किं हेतुमद्भावः उत सूचीकटाहन्यायेनाल्पता अथान्यः । तत्र न प्रथमः स्वत्वगतलौकिकत्वानपेक्षत्वात् वक्ष्यमाणविचारस्य । न द्वितीयः बहुयुक्तिसाध्यत्वाल्लौकिकस्य । न चरमः अदर्शनादेव । अतः कृतकरिष्यमाणविचारावनवसरदुःस्थावित्यमुमाक्षेपमभिप्रायतः परिहरन् प्रथमोद्दिष्टं विचारं परिगृह्णाति ।

३० अयमभिप्रायः । विभागोऽपि लौकिकः तद्गतनियमा एवालौकिकाः । जन्मादिकमपि लौकिकं । एवं च स्वत्वस्य लौकिकत्वे सिद्धे लौकिकविभागादिजन्यत्वं घटते नेतरथा । अतः स्वत्वगतलौकिकत्वविचारो हेतुः । अयं तु विचारो हेतुमानिति तदानंतर्यमस्य विचारस्योचितमिति अनेनैवाभिप्रायेणेदानीमित्युक्तिः ।

**जातपुत्रस्याधानविधानादिति** । 'जातपुत्रः कृष्णकेशोऽग्नीनादधीतेति' श्रुतिवाक्येनाधान-

१ क—अत्रापि. २ ख पादतात्स्वत्वस्य; ३ क स्वत्वस्य प्रतिपादनस्वत्वस्यलौकिकत्वे. ४ क ख—प्रमितिः ५—विप्रतिपत्तेः ६ ख—प्रयो. जनकत्वात् ख—प्रकरणोपयोगि प्रयोजनं.

विधानादित्यर्थः । अस्य वाक्यस्यायमर्थः । जातपुत्रोऽपत्यवान् पुत्रशब्दोऽपत्योपलक्षणं । कृष्णकेशः पूर्ववयस्कः समर्थ इति यावत् । एवंविधोऽधिकारी आधानं कुर्यादिति ।

नन्वेतद्वचनं आधानं विधत्ते न तु विभागात्स्वत्वप्रतिपादनपरमित्याशंक्य तत्परत्वमाह । **यदि जन्मनैवेत्यादिना ।** अयमभिप्रायः । जन्मनैव स्वत्वे उत्पन्नमात्रस्यापि द्रव्यस्वाम्यात् । द्रव्यस्य साधारणत्वेन द्रव्यसाध्ये पतिपत्नीमात्रसाध्ये आधानादौ कर्मणि अनधिकारः स्यात् इति । आदि- ५ शब्दादवश्यकर्तव्यश्राद्धाद्युपसंग्रहः । प्रतिषेधस्य प्राप्तिपूर्वकत्वाज्जन्मनैव स्वत्वपक्षे प्रीतिदत्तस्य विभागप्राप्तिरेव नास्ति तत्प्रतिषेधोऽपि नोपपद्यते इत्याह । **तथा विभागादिति ।**

ननु सति कुड्ये चित्रकर्म तादृशः प्रतिषेध एव नास्तीत्याशंक्य प्रतिषेधवचनं दर्शयति ।***यथाह शौर्यभार्या धने इति** । किंच जन्मनैव स्वत्वे जातमात्रस्यापि स्वत्वस्य विद्यमानत्वात् तस्यानुज्ञायामपि असामर्थ्यात् द्रव्यस्य सर्वसाधारणत्वेनैकेनादातुमशक्यत्वात्प्रीतिदानस्याप्यभावात्प्रीतिदान- १० प्रतिपादकमपि वचनं विरुध्येतेत्याह । **तथा भर्त्रा प्रीतेन यद्दत्तमित्यादिना ।**

ननु नास्ति प्रीतिदानवचनविरोधः अपित्वनुकूलमेव तद्वचनम् । तथाहि 'स्थावराहते यद्भर्त्रा स्त्रियै दत्तं तस्मिन् मृते सा यथाकाममश्नीयादि'त्यन्वयः ॥ तथा च स्थावरेषु प्रीतिदानप्रतिषेधाज्जन्मनैव स्वत्वे सिद्धे तन्न्यायेनेतरद्रव्येऽपि तथात्वे स्थावरव्यतिरिक्तस्य प्रीतिदानं वचनाद्भविष्यति किं तर्हि वचनं न कुर्यादित्याशंक्याह । **नच स्थावराहते यद्दत्तमिति ॥** १५

अयमत्र परिहाराभिप्रायः । यद्ययमन्वयः स्यात् स्यादेवं; एवंविधान्वयस्य व्यवहितत्वेन प्रधानाजंवादयमन्वय एव न घटत इति वचनांतरयोरव्यवहिताऽन्वयेनैव स्थावराणां प्रीतिदानप्रतिषेधात् जन्मैव स्वत्वहेतुर्न विभाग इत्याशंक्य परिहरति । **यदपि मणिमुक्ताप्रवालानामित्यादिना ॥** अयमभिप्रायः । अर्जनादर्थमर्जकस्य स्वं भवति । तच्च तत्संबंधिनां पुत्रादीनां विभागात्स्वामिनाशाद्वा संभवति । तत्र स्वामिनि जीवति विभागः स्वत्वहेतुः । विनष्टे तु स्वामिनि स्वामिनाश एव स्वत्वहेतुः । २० तत्राप्ययमपरो अर्धवैशसः । स्वामिसंबंधिनः पुत्रस्य पौत्रस्य च एकत्वे स्वामिनाश एवासाधारणत्वहेतुः पुत्रादीनां बहुत्वे स्वामिनाशात्साधारणं स्वं भवति । विभागात् प्रातिस्विकम् । एवं स्थिते स्वामिनि पितामहे नष्टे विभागात्प्राक् पितामहधने पितुः प्रातिस्विकस्वत्वाभावादेव पैतामहं स्थावरं न प्रीत्या दद्यादिति स्थावरप्रीतिदाननिषेधो, न स्वोपार्जितस्य यतो जन्मैव स्वत्वहेतुः स्यादिति ।

ननु किमेतदपि अर्धवैशसं पैतामहे स्थावरे सर्वसाधारण्यं मणिमुक्तादिषु तु नेत्याशंक्य वचनाभिप्रायमाह २५ इत्याह । **अतीते पितामह इति** । यतः स्वामिनाशोऽपि स्वत्वहेतुः अत एव पितरि मृते विभागात्प्रागन्यद्द्रव्यमिवौदासीन्यविषयं तद्द्रव्यं न भवतीत्याह । **अत एव पितुरूर्ध्वमिति । पितृप्रयाणांविति** । पितृमरणादित्यर्थः ।

एवं पूर्वपक्षे प्राप्ते सिद्धांतं प्रतिजानीते । **अत्रोच्यत इति** । जन्मनैव स्वत्वे **गौतम**वचनं प्रमाणयति । **तथा चोत्पत्त्यैवेति** । जन्मनैवार्थस्वामित्वात्तमर्थं लभते इत्यर्थः । मणिमुक्ताप्रवालादीनामि- ३० त्यादिकमपि सिद्धांतपक्ष एवोपपद्यत इत्याह । **मणिमुक्तेति ।**

यदुक्तं पूर्वपक्षिणा अस्य वचनजातस्य अन्यार्थपरत्वं तन्नेत्याह । **नच पितामहेति ।** अयमभिप्रायः । स्वामिनाशस्यापि स्वत्वहेतुत्वेन अतीते पितामहे तद्धने पितापुत्रयोः साधारण्ये मणिमुक्तादिकं वचनात् पितुः स्थावरे तु साधारण्यमेवेत्येतावानर्थो यदि तद्वचनात्प्रतीयते तदा पूर्वोक्तव्यवस्था स्यात् न च तथा । ततश्चैवं वक्तव्यम् । पितामहे जीवत्यपि स्थावरेषु सर्वसाधारण्यमिति । तथा ३५

१ कघ—विधानाद । २ क ख—अपत्यलसण ३ क ख—मात्रया द्रव्य साम्यान. ४ कघ—न विभागादिति ५ घ—ननु ६ कघ—पतिदान वचनाद्भविष्यति । ७ ख—तेषां स्वामिनाशान् । ८ ख—विभागात् प्रतिस्विकं । क-विभागाया ९ क—ननु किमर्ध वैशतं पैतामो घ-ननु किमर्थं वैशसं । १० घ—प्रामसिद्धांते. ११ ख—तद्दते । घ-वन्नु । ख—अनुज्ञाही नुमात । * पृ. ७५ पं. ७

चास्य वचनस्य पितामहोपार्जितस्थावरविषयत्वमनुपपन्नमिति । कथमनुपपन्नमित्याशंक्य हेतुमाह । **न पिता न पितामह इति वचनादिति** । यदि पितामहोपार्जितमेव स्थावरादिकं तदा तस्मिन् जीवति स्वोपार्जितप्रभुत्वाभाववचनमनुपपन्नमित्यर्थः ।

मणिमुक्तादिवचनद्वयस्य जन्मना स्वत्वपरत्वं दर्शयति । **पितामहस्य हीति** । जन्मनैव स्वत्वे ५ सर्वसाधारणत्वात्स्वस्य प्रीतिदानं कथमित्याशंक्य प्रतिषेधवचनादित्याह । **परमत इत्यादिना** । अयमभिप्रायः । स्थावरव्यतिरिक्तं स्वोपार्जितं वस्तु अनुज्ञार्हानुमतिमंतरेणापि पित्रा प्रीत्या दातुं शक्यत इति ।

ननु यद्येवं तर्हि स्थावरस्यापि प्रीतिदानप्रतिपादनेन विष्णुवचनेन विरोध इत्याह । **यत्तु भर्त्रा प्रीतेनेत्यादि विष्णुवचनमिति** । अयमाशयः । स्वोपार्जितेष्वपि स्थावरेषु त्वनुज्ञातमर्थानुज्ञातमर्थानुज्ञार्हसर्वानुमतिमंतरेण दानानधिकारः । इतरेषु नानुमत्यपेक्षेति विष्णुवचनस्यैवमर्थपरत्वे हेतुमाह । १० **पूर्वोक्तैरिति** ।

यदुक्तं जातपुत्रस्याधानाभाव इति तत्राह । **यद्प्यर्थसाध्येष्विति** वचनादधिकार इत्यर्थः । स्वार्जिते पित्रा प्राप्ते च स्थावरे पितुः पुत्रादिपारतंत्र्यमेवेत्यभिहितन्यायतः सामान्यवचनादपि तदपोद्यते वैशेषिकेन वचनेनेत्याह । अस्यापवादः । **एकोऽपि स्थावरे कुर्यादित्यादिना** । ननु 'एकोऽपि स्थावरे कुर्यादि' त्यस्यापवादो दृश्यते 'विभक्ता वाऽविभक्ता वे' १५ त्यनेनेत्याशंक्य नैतद्वचनं सर्वात्मना दानादिष्वेकस्याधिकारं निरुणद्धि अपि तु अविभक्तानुज्ञामंतरेण दानाद्यसिद्धसाध्यकत्वाद्द्रव्यस्य विभक्तानुमतिव्यतिरेकेणापि दानादिकमुपपद्यते। परंतु प्रतिग्रहीत्रादीनां व्यवहारसौकर्याय तदनुमतिरित्याह । **यत्तु वचनं विभक्तावेत्यादिना** । 'षड्भिर्गच्छति मेदिनी' त्युक्तम् । तत्र षण्णां क्रमेणोपयोगं दर्शयन् प्रथमतो ग्रामजनानुमतेः प्रयोजनं दर्शयति । **तत्रापि ग्रामानुमतिरित्यादि** । एवं क्रमेणेतरेषामप्युपयोगो ग्रंथ एव द्रष्टव्यः ।

२० पूर्वं कस्मिन् काले कस्य कथं कैश्च विभागः कर्तव्य इति प्रकरणार्थं संगृह्य कस्येत्ययमंशो महता प्रबंधेन प्रतिपादितः। अधुनेतरानंशान्प्रतिपादयितुं मूलश्लोकानवतारयति। **इदानीं यस्मिन् काल इति**

## याज्ञवल्कीये ११४ श्लोकः

सुतानित्यत्र बहुवचनमविवक्षितमित्याह। **पुत्रं पुत्रौ पुत्रानिति** । 'ज्येष्ठस्य विंश उद्धार' इत्यस्य मनुवचनस्य स्वयमेवार्थं दर्शयिष्यति । 'विभजेरन् सुताः पित्रोरि' त्यत्र 'ज्येष्ठं वा श्रेष्ठभागेनेति' २५ **योगीश्वरवचनस्थवाशब्दस्याभिप्रायमाह । वाशब्दो वक्ष्यमाणपक्षापेक्ष इति** ।

**'विभागं चेत्पिता कुर्यादित्यनेन'** जीवत्येव पितरि पितुरिच्छया विभाग इति यस्मिन्काले विभाग इत्यस्योपसंग्रहः । **पितेत्यनेन** येन इत्यस्योपसंग्रहः । **ज्येष्ठं वा श्रेष्ठभागेनेत्यादिना** ' यथा विभाग इत्यस्योपसंग्रह इति द्रष्टव्यम् ।

चत्वारः काला विभागस्य पित्रार्जितद्रव्ये । तद्यथा । जीवत्येव पितरि पितुर्यदा विभागेच्छा स तावदेकः; ३० निवृत्तरजस्कायां मातरि स्त्रीसुखानभिलाषिणि द्रव्यनिस्पृहे पितरि जीवत्येव पित्रनिच्छायामपि यदा पुत्रेच्छा सोऽन्यः, पितृप्रयाणानंतरमपरः; सरजस्कायामपि मातरि अनिच्छत्यपि पितरि तस्मिन् वृद्धे ऽधर्मवर्तिनि अचिकित्स्यरोगग्रस्तेऽकामे वा यदि पुत्रेच्छा सोऽप्यन्यतरः ।

१ ख—दानाद्यसिद्धिः साधारणत्वात् द्रव्यस्य । २ ख प्रतिग्रहादीनां । ३ तेषामप्युपयोगो । ४ ख—प्रतिपादी । ५ [illegible] वक्ष्यमाणपक्षापेक्षो । ६ ख—पित्रार्जित द्रव्ये । ७ क—विवृत्त, ख—निवृत्त ।

तत्र तावत् प्रथमं कालमाह । **विभागं चेत्पिता कुर्यादिति** । **यदा पितुरिति** । द्वितीयं दर्शयति । **अपरो जीवत्येवेति** । **अत्र पुत्राः समं धनं विभजेयुरित्यनुषज्यत इति** । **अत्रेति** । पूर्वोक्ते 'मातुर्निवृत्ते रजसीति' **नारदवचन** इत्यर्थः ।

प्रथमद्वितीयतृतीयपक्षान् प्रतिलोमक्रमेण दर्शयति । **गौतमेनापीति** । चतुर्थमाह । **तथा सरजस्कायामपीत्यादिना** । इतःपरं सार्धश्लोकव्याख्यानं सुगमम् ॥ ११६ ॥ ५

पूर्वं पुत्राणां चत्वारः काला विभागस्य दर्शिताः निबंधकर्त्रा ते **योगीश्वरेण** द्विधा संगृहीताः 'पितरि जीवतीति' । तत्र 'पितरि जीवती'त्यत्र त्रयः पक्षाः संभवंति । तद्यथा । पित्रिच्छायां, तदनिच्छायामपि द्विधा, अरजस्कायां मातरि निवृत्तरमणादिके पितरीत्येकः, मातुरनिवृत्ते रजसि पितर्यधर्मवृत्तित्वादिगुणयुक्ते चेत्यपर इति । एतत्सकलं कर्तृनियमः प्रकारनियमश्च 'विभागं चेत्पिता कुर्यादि' त्यत्राभिप्रायतो दर्शिताः ।

अधुना पितृप्रयाणोपलक्षितो यः कालः ये च कर्त्तारः यश्च प्रकारः तत्प्रतिपादकं वचनं अवतारयति । **इदानीं विभागस्य कालांतरमिति** । १०

## याज्ञवल्कीये ११७ श्लोकः ।

नियमस्वरूपमेव निष्कृष्य दर्शयति । **सममेवेति** । ननु पितुरूर्ध्वं च प्रागपि च **मन्वादि**वचनैर्विषमविभागादिविधानात्समविषमविभागयोर्विकल्पे न्याय्ये सममेवेति नियमो न घटत इत्याक्षिपति । १५ **ननूर्ध्वमित्यादिना, सममेव विभजेरन्निति नियम्यत इत्यंतेन** । 'धर्म्यमपि लोकविद्विष्टं नाचरेद्यतो अस्वर्ग्यं तदिति' विषमविभागाभावे हेतुरभिहितः । तत्र स्मार्तमुदाहरणं दर्शयति । **यथा महोक्षं वेति** । श्रौतं उदाहरणं दर्शयति । **यथा मैत्रावरुणीमिति** । अस्यार्थः । मित्रावरुण देवताकां[1] वशां वंध्यां अनुबंध्यां गामालभेतेति । उक्तस्मार्तश्रौतोदाहरणोपेतं विषमविभागप्रतिषेधकं वचनं दर्शयति । **उक्तं चेति** । अस्यार्थः । अन्यो नियोगधर्मो । विधिधर्मो विधायकवाक्यविहितो २० महोक्षमहाजालंभनरूपः तथाऽनुबंध्यावशालंभनरूपश्च धर्मो यथा नास्ति तथा विषमविभागोऽपि नास्ति इति ।

**देशविशेषे सुवर्णं कृष्णा गाव इत्यादि** । अस्यार्थः । क्वचन देशे सुवर्णं कृष्णाः गावः कृष्णं भौमं, भूमौ जातं, माषादिधान्यं । कृष्णं भौमं कृष्णायसं इत्येके । एतज्ज्येष्ठस्य पुत्रस्य, पितू रथः परीभांडं च गृहे । यद्गृहे परीभांडमुपकरणं पीठादिकं भार्याया धृतोऽलंकारः तथा ज्ञातिभ्यः पित्रा- २५ दिभ्यश्च यल्लब्धं धनं तत् ज्येष्ठपुत्रपितृभार्याणां यथाक्रमेणांशो भवति इति स्वयमेव दर्शयति स्मेति **स्वयमापस्तंब** इत्यर्थः । **मनुः पुत्रेभ्यो दायमिति** । अस्यार्थः । **मनुरविशेषेण** ।

अवशिष्टेऽपि मातृधने पुत्राणामनधिकारो दुहित्रादिषु सत्सु अत एव मातृकृतर्णसमे न्यूने च सुतरामनधिकारात् मातृकृतर्णसमं न्यूनं च मातृधनं 'विभजेरन् सुताः पित्रोरि'त्यस्य वचनस्याविषय इत्याह । **अतऋणसममिति** । यथा ऋणावशिष्टं मातृधनं दुहित्रादिषु सत्सु विभागानर्हं, ३० तथा दुहित्रादिष्वसत्सु तद्धनं ऋणसमं न्यूनमपि विभागानर्हमित्यर्थः ।

**प्रत्ताप्रत्तेति** । **प्रत्ता** विवाहिता । **अप्रत्ता** कन्यका ॥ ११७ ॥

[1] ग—मैत्रावरुणदेवताकां ।

## याज्ञवल्कीये ११८।११९ श्लोकौ ।

' पूर्वं नष्टां तु यो भूमि ' मित्येतच्छंखवचनं पूरयति । **क्रमादभ्यागतमिति** । अत्र क्रमादित्येतत् शंखवचनस्थमेव पदं अभ्यागतमित्येतदेव शेषपूरकं पदं । मूलवचनस्थः ' पितृद्रव्या-विरोधेने ' त्ययमंशः विभागानर्हत्वेन वचनोपात्ता ये मैत्रादयस्तेषां सर्वेषां शेष इत्याह । **अत्र पितृद्र-**
५ **व्याविरोधेनेति** । उपलक्षणं चैतत् । यद्यत्स्मृत्यंतरेऽप्यविभाज्यमुक्तं तस्य तस्य योगस्यायं शेष इति द्रष्टव्यम् ।

' पितृद्रव्याविरोधेनेति ' अस्यांशस्याविभाज्यत्वेन वचनोपात्तानां मैत्रादीनामेव शेष-त्वाद्यथा पितृद्रव्यविरोधेनोपार्जितानां विभाज्यत्वं, तथा मैत्राद्यनंतर्भूतत्वात्प्रतिग्रहलब्धस्य पितृद्रव्या-विरोधेनोपार्जितस्यापि तस्य विभागार्हत्वमित्याह । **तथा पितृद्रव्याविरोधेनेति** । यदि
१० पितृद्रव्याविरोधेनेत्ययमंशो मैत्रादिशेषो न स्यात् तदाऽयमर्थः संपद्यते । यद्यत्पितृद्रव्याविरोधे-नोपार्जितं तत्तदविभाज्यमिति । तथा चानया वचनव्यक्त्या साधारण्येन तादृशानां मैत्रादीनामप्य-विभाज्यत्वसिद्धेः पुनस्तेषां मैत्रमौद्वाहिकमित्यविभाज्यत्वाभिधानमनुपपन्नं स्यात् इत्याह । **अस्य च सर्वशेषत्वाभाव इति** ।

१५ ननु मैत्रादिकं तु पितृद्रव्यविरोधेनार्जितमप्यविभाज्यमित्येतदर्थं मैत्राद्यारंभ इति विशे-षमाशंकते । **अथ पितृद्रव्यविरोधेनेति** । शिष्टाचाररूपप्रमाणविरोधान्नैवमिति परिहरति । **तथा सतीति** ।

नन्वेतदनुपपन्नं वचनापेक्षया आचारस्य दुर्बलत्वात् । अथ मतं । आचारोऽपि वचनं कल्पयन्नेव प्रमाणं न स्वत एवेति । अस्मिन्नं मतेऽपि वचनमेवेति । एवमप्याचारपरिकल्पिततया स्मृत्या
२० यावता स्वार्थः प्रत्येष्यते तावता मैत्रमौद्वाहिकमित्यादिस्मृत्या तदर्थप्रतीतेः विलंबितत्वाविलंबितत्व-प्रतीतिभ्यामाचार एव दुर्बल इति चेत् । मैवं । अगतिका हीयं गतिः योऽयं बाधः; न हि दुर्बलं दुर्बलं इत्येवं बाध्यते अपि तु विरोधे । विरोधश्चैकस्मिन् विषये परस्परविपरीताभिधानेन । तथा सत्यबाधेनोपपत्तौ बाधो न न्याय्य, इति न्यायेन ' मैत्रमौद्वाहिकमि ' त्यस्य वचनस्यास्मदुक्त-रीत्या शिष्टाचाराविरोधेनैव वाक्यार्थप्रमित्युपपत्तेरर्थांतरकल्पनया विरोधोऽनुपपन्न इति सूक्तं ।

२५ **समाचारविरोध इति** सर्वमनवद्यं । न केवलं समाचारविरोधः अपि तु मैत्रादिगणपरि-पठितविद्यालब्धधनविषये **नारद**वचनमपि विरुध्येतेत्याह । **विद्यालब्ध इति** । **नारद**वचनस्या-यमर्थः । विद्याध्ययनं कुर्वतो भ्रातुर्योऽन्यो भ्राता तत्कुटुंबं पोषयति स पोषकस्तस्माद्विद्याधनाद्भाग-मश्रुतः सन्नपि प्राप्नुयादिति । अत्र कुटुंबभरणस्य धनग्रहणे हेतुत्वोपन्यासादौपाधिकी विद्याधनांशप्राप्तिर्न भ्रातृत्वेन स्वाभाविकीति विद्याधनस्य न स्वतो विभागार्हतेत्यविभाज्यत्वमिति
३० तात्पर्यार्थः ।

**कात्यायन**वचनेन पित्रादिव्यतिरिक्तान्यवहरणप्राप्तविद्याधनस्यैवाविभाज्यत्वावगमाद्विद्या-लब्धे धने तद्वचनविरोधोऽपीत्याह । **तथा विद्याधनस्येति** । **कात्यायन**वचनस्यैवं तात्प-र्यार्थः । पितृद्रव्याविरोधेन या विद्या प्राप्ता अन्यसकाशात्तया लब्धं धनं तथा प्राप्तं धनं नान्यत् । ईदृशमेवाविभाज्यं । एतद्विपरीतं तु विद्याधनं अविद्याधनमेवातो विभाज्यमेवेति ।

---

१ क-ख-यस्यांशस्य । २ ख-वचनवृत्त्या । ३ क वचन कल्पनयैव । ४ ख—अस्मन्मतेऽपि । ५ ख-नहि । ६ ख नोपपन्नो ।

पितृद्रव्याविरोधेनेत्यस्य मैत्रादिसर्वविशेषत्वाभावे दोषांतरमाह । **तथा पितृद्रव्याविरोधेने-त्यस्य भिन्नवाक्यत्वे इति** । एतदुक्तं भवति । यदा पितृद्रव्याविरोधेनेत्यंमशः स्वतंत्रो न मैत्रादिशेषः तदा यद्यत्पितृद्रव्याविरोधेनार्जितं तत्तदविभाज्यमिति सिद्धे निरभिसंधिकदानक्रियासंप्रदानैर्भूतस्यैव प्रतिगृहीतत्वात्प्रतिग्रहलब्धस्य पितृद्रव्याविरोधेनोपार्जितत्वात्तस्याप्यविभाज्यत्वं स्यात् । तथा च वृद्ध-व्यवहारविरोध इति । ५

' पितृद्रव्याविरोधेने ' त्यस्य मैत्रादिशेषत्वं **मनुना** स्पष्टीकृतमित्याह । **एतदेव स्पष्टीकृत-मिति** । अयमर्थो **मनु**वचनस्य । पितृद्रव्यमनुपघ्नन् श्रमेण विद्यया यल्लब्धं उपार्जयेत् । लभ्यत इति लब्धं धनं । अथवा पितृद्रव्यमनुपघ्नन् श्रमेण यदुपार्जयेत् । पितृद्रव्यमनुपघ्नता विद्यया यल्लब्धमिति विभक्तिविपरिणामेनान्वयः । तदुभयमपि दायादेभ्यो न दद्यादिति । एवं च पितृद्रव्याविनाशस्य विद्यादिभिरुपार्जितस्य द्रव्यस्य चोपार्जकद्वारा विशेषणविशेष्यभावप्रतीतेः पितृद्रव्याविरोधेन यद्विद्यालब्धं १० धनं श्रमलब्धं वा तदविभाज्यमिति सिद्धमित्यर्थः । उपलक्षणं चैतत् । मैत्रादीनामप्येवमेव तद्गण-परिपठितविद्याधनस्य तथात्वात् ।

ननु पैतामहे पैतृके च धने पुत्रादीनां जन्मनैव स्वत्वं न भ्रात्रर्जिते । अतश्च भ्रातृप्राप्तमैत्रादिधनेषु यद्येनैवार्जितं तत्तस्यैवेति तादृशधने विभागप्राप्त्यभावात् मैत्रादिकर्मविभाज्यमिति निषेधोऽनुपपन्न इत्यभिप्रायेणाक्षिपति । **ननु पितृद्रव्याविरोधेनेत्यादिना** । एकदेशिमतं दूषयितुं तन्मतेन मैत्रादीनां विभागप्राप्तिं दर्शयति । **अत्र कश्चिदिति** । १५

विभागप्रापकं वचनं दर्शयति । **यत्किंचित् पितरि प्रेत इति** । अस्य वचनस्य मैत्रादि-विभागप्राप्तिपरत्वं दर्शयति । **ज्येष्ठो वा कनिष्ठो वेति** । अयमर्थः । ' धनं ज्येष्ठोऽधिगच्छति ' इत्यत्र ज्येष्ठशब्दोऽविवक्षितस्वार्थः । तथा च ज्येष्ठशब्दो मध्यमकनिष्ठयोरप्युपलक्षकः । तथा ' भागो यवीयसामि ' त्यत्र यवीयःशब्दः कनिष्ठवाची ज्यायसामुपलक्षकः । तथा 'पितरि प्रेत' इति पितृमरणोत्तर-कालपरोऽयं शब्दः पितृप्रयाणोत्तरकालं प्राचमपि कालं लक्षयति । एवं ज्येष्ठादिशब्दानामुपलक्षकत्वेन २० ज्येष्ठोऽन्यो वा यत्किंचिन्मैत्रादिकं धनमधिगच्छाति तस्माद्धनात्कनिष्ठानां ज्येष्ठानां वा पितरि स्थिते मृते च विभागोऽस्ति यदि ते विद्यानुपालिनो विद्वांस इत्येवमर्थपरत्वा'द्यत्किंचित्पितरि प्रेत' इति अस्य वचनस्यानेन मैत्रादीनामपि विभाज्यत्वे प्राप्ते ' पितृद्रव्याविरोधेनेत्यनेन **योगीश्वर-**वचनेन निषिध्यत इति । मैत्रादिलब्धधनस्य वृद्धव्यवहारसिद्धं अविभाज्यत्वमनुवदति । पितृ-द्रव्याविरोधेनेत्येतद्वचनं न निषेधकम् । यतः प्राप्तिमपेक्षत इत्यभिप्रायेण दूषयति । **तदसदि-** २५ **त्यादिना** । भवतु वा निषेधकं । तथापि वचनांतरंप्रमाणेन प्राप्तिः न त्वदुक्तरीत्येत्याह । **अथवा समवेतैस्त्विति** ।

'यत्किंचित्पितरि प्रेते धनं ज्येष्ठोऽधिगच्छेती'त्यस्य वचनस्य युक्तमर्थं दर्शयति । **अतो मैत्रादिवचनैरिति** । पितुर्मरणात्प्रागूर्ध्वं मैत्रादीनां 'पितृद्रव्याविरोधेने' त्यादि**भिर्योगीश्वर-**वचनैरविभाज्यत्वे प्राप्ते 'यत्किंचित्पितरि प्रेत' इत्यनेन वचनेन पितरि मृते ज्येष्ठेनार्जितान्मैत्रा- ३० दिकाद्भागं कनीयांसो यदि विद्वांसः तदा लभंते इत्यपोद्यत इत्यर्थः ।

१ क-पितृद्रव्याविरोधेन । २ ख-निरभिसंधिकादानक्रिया । ३ ख-संपादक । ४ ख-विद्याया । ५ ख-देयादिति । ६ ख-भ्रात्रार्जिते । ७ ख-विभागकास्यभावात् । ८ क-ख-मैत्रादिकमविभाज्यम् । ९ कनीयोवाचीति युक्ततरः पाठ । १० क-ख-वचनान्तरेण । ११ ख-अधिगच्छति ।

"यद्वा पञ्चमलंकार" त्वित्येतन्मनुवचनं व्याचष्टे । पुत्राणामेव पञ्चानामित्यादिना । वैषम्येणाविभाज्यत्वे ज्येष्ठस्येति । अत्र वैषम्यमंशं प्रत्यपर्याप्तत्वं न विषमसंख्योपेतत्वं । युक्तं चैतत् । यद्योऽश्वास्त्रयः पुत्रास्तदा अंशविभागस्य पर्याप्तत्वात् । तद्विभाज्या । अश्वाश्चत्वारः पुत्रास्त्रयः पंच वा अश्वानां विषमसंख्याकानां स्वरूपेणांशविभागस्य कर्तुं अशक्यत्वात् मूल्यद्वारा विभागस्य निषिद्धत्वाज्ज्येष्ठस्यैव देयत्वविधानात् अंशपर्याप्तानश्वादीन्विभज्य वैषम्येणावशिष्टम-श्वादिकं ज्येष्ठस्यैव दद्यात् इति । अस्मिन् प्रकरण एवमेव वैषम्यम् द्रष्टव्यम् ।

यः स्त्रीभिरलंकारो धृतो भवेत् इति । अत्र स्त्रीभिरित्युपलक्षणम् । तथा च 'यो येन धृत, इति पूर्वतनग्रंथे सामान्यनिर्देशो न विरुध्येत । एवं च 'पत्यौ जीवती'त्यत्र पत्याव-धिपतौ पित्रादिक इति यावत् । पित्रवरुद्धस्वैरिण्यादीनां समानानामप्यविभाज्यत्वे गौतमवचनं
१० दर्शयति । स्त्रीषु च संयुक्तास्विति । संयुक्तासु उपभुक्तासु अवरुद्धास्विति यावत् ।

"पितृद्रव्याविरोधेन यदन्यत्स्वयमार्जितमि"त्यादिना अविभाज्यत्वं वक्तुं आरब्धं योगी-श्वरेण । तच्च विधिप्रतिषेधमुखेनैकत्राभिहितं सुबोधमित्यविभाज्यप्रकर॰ एव वक्ष्यमाणं निर्दिश-न्नुक्तं च स्मारयति । पितृप्रसादलब्धस्याविभाज्यत्वं वक्ष्यत इत्यादिना । 'अविभाज्य-स्वरूपकथनं विधिः । अविभाज्यत्वनिरासो निषेधः । येन चैषामिति । एषां भ्रातृणामि-
१५ त्यर्थः ॥ ११८।११९ ॥

## याज्ञवल्कीये १२० श्लोकः ।

अनेकपितृकाणामिति ॥ अनेकपितृकाणां भिन्नपितृकाणां भ्रातृपुत्राणामिति यावत् । 'प्रमीतपितृकाणामि, त्यपि पाठोऽस्ति । न स्वरूपापेक्षयेति । न पौत्रस्वरूपापेक्षयेत्यर्थः । केषु चित्पुत्रेषु ध्रियमाणेषु इति । ध्रियमाणेषु अवस्थितेषु जीवत्स्विति यावत् । धृङ् अवस्थाने ॥

२० न न्व'नेकपितृकाणां तु पितृतो भागकल्पने'त्यनेनैतावानर्थः संपन्नः । पौत्रस्य पैतामहद्रव्याप्राप्तिः पितृद्वारा । तत्रापि पितरि अविभक्ते दिष्टंगत एवेति । तथा सति यदा पिता जीवति विभ-क्तश्च स्वपितुः, अथवैकपुत्रत्वेन भ्रात्रंतराभावात् स्वपितुः सकाशादविभक्त एव जीवन्नास्ते । तदा प्रथमपक्षे विभक्तत्वादेव पैतामहद्रव्यप्राप्त्यभावः स्वपितुः तस्माद्ध्रियमाणत्वाच्च पौत्रस्य पैतामहधनस्य प्राप्त्यभावः उद्धारस्य निरुद्धत्वात् । द्वितीयपक्षे यद्यपि स्वपितुर्धनप्राप्तिरस्त्यविभक्तत्वात् तथापि पितुर्विद्यमानत्वादेव पौत्रस्य पैतामहधनप्राप्त्यभावः । अत एव पैतामहे धने पौत्रस्य जीवत्पितृकस्य विभाग एव नास्ति । भवतु वा विभागो जन्मनैव स्वत्वात् । तथाऽपि पितरि दिष्टंगतेऽपि पितृद्वारा
२५ ह्यांऽशविधानात् जीवति तस्मिन् सुतरामिति पितुः प्राधान्यप्रतीतेः पितुरिच्छयैव विभागः ॥ १२० ॥

तत्रापि "द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता" इत्यंशद्वयं पितुः स्यादित्यभिप्रायेणाशं-[illegible] । उत्तरं वचनमवतारयितुं । अधुना विभक्ते पितरीत्यादिना ।

## याज्ञवल्कीये १२१ श्लोकः ।

अत्र पौत्रस्येत्युपलक्षणं पौत्रयोः पौत्राणामपि । निबंध एकस्य पर्णभारकस्येति ॥
३० एकस्याः पर्णवाटिकाया इयंति पर्णानि । तथा क्रमुकवाटिकाया इयंति क्रमुकाणीति तद्व्यापारको-विदा विदंति । तथा च निबध्यते पर्णादिगणनयेति निबंधः । पर्णभरकादिरित्यर्थः । भृञ् भरणे वुन् प्रत्ययांतः ।

---

१ क-अश्वपञ्चांश्च । २ क-पूर्वतनग्रंथे । ३ क-भिन्न पितृका भ्रातृपुत्राणामिति यावत् । ४ क-अथवैकपुत्रत्वेन । ५ क-प्रकरणम् ।

]

**प्रतिमहविजयादिना लब्धमिति** । आदिशब्देन वाणिज्यविजसुश्रूषादिकं गृह्यते । यतो एवं स्वाम्यं पितापुत्रयोः पितामहधने समानं लोके अतोऽ' नेकपितृकाणां तु पितृतो भागकल्पने ' त्यस्यार्थः 'पितरि प्रेते' वचनावगम्यते । न तु जीवतीत्यभिप्रायेणाह । **आतश्च पितृतो भागकल्पनेति** वचनांतरविरोधं परिहरति । **विभागं चेत्यादिना** ।

पितामहधने पित्रर्जितधनाद्विशेषांतरं आह । **तथा च सरजस्कायामित्यादिना** । पतामहे धने पित्रा दीयमाने पौत्रस्य निषेधाधिकारः । पैत्रे तु नेत्यभिहितं । तदेव हेतूपन्यासपुरःसरं  ५
विवृणोति । **तथाहीत्यादिना** । **पितामहार्जितं अकामोऽपि इति** । पूर्वोकव्यतिरिक्तं पितामहार्जितमित्यर्थः ॥ १२१ ॥

## याज्ञवल्कीये १२२ श्लोकः ।

**मातृभागं चासत्यां दुहितरीति** । अत्र च शब्दस्त्वर्थे । दुहितृसद्भावे मातृभागं न लभेतेत्यर्थः । **असवर्णायां उत्पन्नास्तु स्वांशमेवेति** । ब्राह्मणात् क्षत्रियायामुत्पन्नः पादोनं  १०
अंशं, वैश्यायां उत्पन्नोऽर्धमंशं, शूद्रायां उत्पन्नश्चतुर्थांशं । एवं क्षत्रियात् क्षत्रियायामुत्पन्नोऽशत्रयं वैश्यायां उत्पन्नोऽर्धं शूद्रायामुत्पन्नः पादं । वैश्यायां उत्पन्नोऽशद्वयं शूद्रायामुत्पन्नः पादं लभते इत्यर्थः ।

एवमेव वक्ष्यति । ' चतुस्त्रिद्व्येकभागाः स्युरि'त्यत्र । **मातृकं तु सर्वमेवेति** । अत्रापि ' असत्सु दुहित्रादिषु' इत्येव 'मातुर्दुहितरः शेषमि'त्यस्य मातृधनमात्रशेषत्वात् ।  १५

सवर्णायां विभागानंतरमुत्पन्नपुत्रस्य पित्रोरूर्ध्वं तद्धनभाक्त्वं इत्यत्र मनुवचनं प्रमाणयति ॥ **एतदेवं मनुनोक्तमिति** । **मनु**वचनस्थं पित्र्यमिति पदं एकशेषं कृत्वा व्याचष्टे । **पित्रोरिदमिति** ।

नन्वेकशेषे कृतेऽकृते च पित्र्यमित्येव तथा चैकशेषकरणे को हेतुरित्यत आह । २०
**अनीशः पूर्वज इति** । अत्र पित्रोरिति द्विवचननिर्देशादित्यर्थः । **अनीशः पूर्वजः पित्रो**'रित्येतद्वचनं व्याचष्टे । **मातापित्रोरिति** । **संसृष्टास्ते न वेति** । तेन पित्रेत्यर्थः ।

**'दृश्याद्वा तद्विभागः स्यादि'** त्यत्र तद्विभागशब्दस्यार्थमाह । **तस्य पितरि प्रेत इति** । अत्र ग्रंथे विभागोत्तरकालमुत्पन्नस्य तस्येत्यन्वयः । विभागानंतरं मातिस्विकांशैः कृष्यादिषु क्रियमाणेषु यो लाभः स **आयः** । पितृकृतर्णापाकरणस्वकुटुंबपोषणादिकं क्रियते स **व्ययः** । २५
आयमंशमध्ये परिगणय्य व्ययं चोद्धृत्य सर्वेभ्योऽशेभ्यो यस्माद्दशावयवाद्युचितं तावत्तावद्गृहीत्वांऽशकॢप्तिः कर्तव्या । पितृमरणसमय एव गर्भे पतित्वा विभागसमयेऽपि अव्यक्ते गर्भे तस्मादेव गर्भादुत्पन्नस्य पुत्रस्येत्याह । **एतदुक्तं भवतीत्यादिना** । विभक्तमपि तात्पितृधनं अविभक्तमिव यतो गर्भस्थितमप्यपत्यमपत्यत्वादेव पितृधनांशार्हं अतः पितृधनात्तदुत्थादपि लाभाच्च तदपत्यं भागार्हमित्यर्थः । तत्रापि पुत्रत्वे समांशभागित्वं पुत्रीत्वे तु स्वजातिनिबंधनादंशाच्चतुर्थांश- ३०
भागित्वमितिवक्ष्यमाणमनुसंधेयम् । अत्र मूलवचनस्थवाशब्दोऽवधारणे । आयव्ययविशोधिताद्
दृश्यादेव तद्विभाग इत्यर्थः ।

---

१ ख. अंशत्रयम् । २ अग्रे याज्ञवल्कीये अस्मिन्नेवाध्याये १२५ श्लोकः । ३ पृ. ८२ पं. २३ ४ घ—निर्देशादित्यर्थः । ५ क—ख—पितृमरणसमय एव । ६ पृ. ८३. पं ६. ।

' अथ भ्रातॄणामि ' त्येतद्ब्रसिष्ठवचनमध्याहृत्य व्याचष्टे । **गृहीतगर्भाणामिति** ॥ १२२ ॥

' **विभक्तजः । पित्र्यं मातृकं चेति** । विभागानंतरं मातापित्रोः सतोरेव योऽयमुत्पन्नः **तादृशो विभक्तजः** । पित्रोरूर्ध्वं माता पितृधनं गृह्णातीत्युक्तं 'विभक्तेषु सुतो जात ' इत्यत्रेत्यर्थः ।

## याज्ञवल्कीये १२३ श्लोकः ।

उक्तन्यायं स्थलांतरेऽप्यतिदिशति । **तथा असति विभक्तजे इति** । अयमर्थः । न केवलं विभक्तजपुत्रे सति विभागात् प्राक् वा 'पितृभ्यां यस्य यद्दत्तं तत्तस्यैवेति' नियमः । अपि तु विभक्तजपुत्राभावेऽपि विभक्ताभ्यां पितृभ्यां स्वपुत्रादिभ्यो यत्प्रीत्या दत्तं तन्मातापितृमरणानंतरं तद्रिक्थं विभजतां मध्ये यस्मै यद्दत्तं तत्तस्यैव न विभागार्हमिति ॥ १२३ ॥

## याज्ञवल्कीये १२४ श्लोकः ।

'भगिन्यश्च निजादंशादि' त्यत्र वचने व्याख्यातॄणां विप्रतिपत्तेर्विद्यमानत्वात्सूक्ष्मत्वाच्चार्थस्य स्वेनैवोच्यमानोऽर्थो नान्य इत्यभिप्रायेणाह । **अस्यार्थ इति** । ' असंस्कृतास्तु संस्कार्या ' इत्यमुं प्राच्यमंशं अत्रानुषज्य व्याचष्टे । **भगिन्यश्चासंकृता इति** ।

केचन 'निजादंशादिति' पदं एवं व्याचक्षते । तद्यथा । यावंतो भ्रातरस्तावंतः अंशान्विधाय स्वात्स्वादंशाच्चतुर्थश्चतुर्थो भागो दातव्यो भगिन्यै । तथा भगिनीद्वित्वे बहुत्वे चैकैकस्यै प्रत्येकं चतुर्थश्चतुर्थो तावतः अंशात् दातव्य इति । अपरे तु भ्रातृभिः स्वात्स्वादंशाच्चतुर्थमंशं उद्धृत्य भगिन्यै दातव्यं । यदा द्वे भगिन्यौ बह्व्यो वा तदाऽप्युद्धृतमेवैनं भागं ते ताश्च गृह्णीयुर्न पृथगुद्धार इति व्याचक्षते । तदुभयमनुपपन्नम् ।

तथाहि । आद्ये यदैको भ्राता भगिन्यश्च सप्ताष्टास्तदा प्रतिभागिनि चतुर्थेंऽशे दीयमाने भ्रातुरकिंचनता स्यात् ॥ अथैका भगिनी बहवो भ्रातरः । तदा भ्रातृभिश्चतुर्थे चतुर्थेंऽशे दीयमाने भ्रातुरधिकांशता भगिन्याः स्यात् । तथा पुत्रापेक्षया पुत्र्या न्यूनांशप्रापकवचनविरोधः ।

द्वितीये तु व्याख्याने भगिन्या एकत्वे भ्रातॄणां च बहुत्वे पूर्वोक्त एव दोषः । भ्रातुरेकत्वे भगिनीनां च सप्ताष्टत्वे भ्रातृभागस्यैकनिष्ठत्वे तच्चतुर्थभागस्य स्वल्पत्वेन तत्राप्यंशकल्पनायामतितुच्छता स्यात्तदंशस्येति । ' दत्वांऽशं तु तुरीयकमि'त्यस्याविषयः ।

भवतु वा तथापि तद्वचनविरोधः । अस्मदुच्यमानरीत्या तु प्रत्येकं भगिनीनामपि चतुर्थेंऽशे सिद्धे तुरीयकमित्येतत्पदं न विरुध्यते, त्वन्मते तु तदभावाद्विरुध्येतेत्यनेनाभिप्रायेणैकदेशिमतं निराकुर्वन् स्वमतमाह । **तत्र निजादंशादित्यादिना शेषं ब्राह्मणीपुत्रो विभज्य गृण्हीत इत्यंतेन** ।

**एवं जातिवैषम्ये भ्रातॄणां भगिनीनां चेत्यादि** । तत्र जातिवैषम्ये भ्रातॄणां भगिनीनां संख्याया साम्ये एवं द्रष्टव्यं । तद्यथा । ब्राह्मणीपुत्रः कन्या च क्षत्रियापुत्रः कन्या च तथा वैश्यायाः शूद्रायाश्च एवमष्टावपत्यानि, चत्वार्यपत्यानि स्त्रियः चत्वारि पुमांसः । चतुस्त्रिद्व्येकभागास्युरितिवचनेन ब्राह्मण्यपत्ययोरष्टावंशाः क्षत्रियापत्ययोः षट् वैश्यापत्ययोश्चत्वारः शूद्रापत्ययोः द्वौ एवं विंशति भागान् कृत्वा ब्राह्मणीकन्यकायै स्वजातिविहितादंशचतुष्टयरूपान्निजाद्भागाच्चतुर्थमंशं दद्यात् ॥ क्षत्रियकन्याकायै स्वजातिविहितादंशत्रयरूपान्निजाद्भागाच्चतुर्थमंशं दद्यात् । वैश्याकन्यकायै स्वजाति-

१ क--ख--ग--विभक्तिज । २ क--घ--विभक्ते । ३ विभक्तपुत्राव । ४ क--घ--स्वपित्रादिभ्या । ५ ख--प्राग्रं ।

विहितादंशद्वयरूपान्निजाद्भागाच्चतुर्थमंशं दद्यात् । शूद्राकन्यकायै स्वजातिविहितादेकांशरूपादेव निजाद्भागाच्चतुर्थमंशं दत्वा तत्तद्भागादवशिष्टं द्रव्यमेकीकृत्य ब्राह्मणादिपुत्राः क्रमाच्चतुस्त्रिद्व्येकभागान् गृह्णीयुः। वैषम्ये तु भ्रातॄणां भगिनीनां यावंत्यो व्यक्तयो भ्रात्रादीनां तावतोऽशान् चतुस्त्रिद्व्येकभागादिक्रमेण कल्पयित्वा कन्यकानां स्वस्वजातिविहिताद्भागाच्चतुर्थमंशं दत्वाऽवशिष्टं तत् भागद्रव्यं पुनश्चतुरन्त्यादिक्रमेण विभज्य गृह्णीयुरित्येवं योजनीयम् । ५

**संस्कारमात्रोपयोगि द्रव्यमिति** । संस्कारो विवाहः । 'स्वेभ्योंशेऽभ्यस्त्विति' **मनु**वचनं स्वोक्तार्थपरत्वेन व्याचष्टे । **अस्यार्थ इत्यादिना । मनु**वचनेऽप्येकदेशिव्याख्यानं निराचष्टे । न चात्रात्मीयभागादिति ।

अत्रापि जातिवैषम्ये भ्रातॄणां भगिनीनां च वैषम्ये पूर्वोक्तैव व्यवस्थेत्याह । **वैषम्ये संख्यावैषम्ये चेति** । ननु कन्यानां प्रीतिदानमेव, न त्वावश्यकमित्यत आह । 'पतिताः स्युरदित्सव' इत्यकरण इति । १०

एवं **मनु**वचनं व्याख्यायाक्षिपति । **अत्रापि चतुर्भागवचनमिति** । समाधत्ते । **न स्मृतिद्वयेऽपीति** । स्मृतिद्वये **याज्ञवल्क्य**स्मृतौ **मनु**स्मृतौ चेत्यर्थः । **अंशदानविवक्षायां बहुभ्रातृकायां इति** । 'दत्वांऽशं तु तुरीयकमि'त्यत्र 'स्वात्स्वादंशाच्चतुर्थभागामि'त्यत्रापि चतुर्थांशदानविवक्षायामित्यर्थः ॥ १२४ ॥ १५

## याज्ञवल्कीये १२५ श्लोकः ।

**संख्यैकवचनाच्च वीप्सायामिति** । अस्य पाणिनीयसूत्रस्यायमर्थः । संख्यावाचिनश्च एकवचनाच्च वीप्सायां द्योत्यायां शस् प्रत्ययो भवतीति । संख्यायां द्वौ द्वौ ददाति द्विशो ददाति । एकवचनोदाहरणत्वेन प्रकृते दर्शयति । **अधिकरणकारकादिति** । सप्तम्येकवचनादित्यर्थः **तत्पुत्राणां पूर्वोक्त एव विभाग इति** । तस्य शूद्रस्य पुत्राः शूद्रायामुत्पन्नास्तत्पुत्रास्तेषां पूर्वोक्तो विभागः । 'विभागं चेत्पिता कुर्यादित्यादिना' 'विभजेरन् सुताः पित्रोरूर्ध्वमित्यादिना' चोक्त इत्यर्थः । २०

किंच अतोऽपि कारणात् क्षत्रियादिसुतानां क्रयादिलब्धभूभागोऽस्त्वित्याह । **प्रतिग्रहग्रहणादिति** । प्रतिग्रहशब्दोपादानसामर्थ्यात् क्रयादिलब्धायां भुवि क्षत्रियादिसुतानामपि भागोऽस्त्येवेत्याह । **शूद्रापुत्रस्येति । शूद्र्यां द्विजातिभिर्जात इति** । अत्र शूद्र्यामिति न शूद्रभार्यायां अपि तु स्वस्त्रियां शूद्रायामित्यर्थः । शूद्रभार्यात्वे तस्यां जातस्य कुंडगोलकयोरन्यतरत्वेन भागानर्हत्वात् । अतः 'शूद्र्यामिति' छांदसः । २५

ननु भवतु शूद्रापुत्रस्य विशेषतो भूभागप्रतिषेधः । एतावता क्रयादिप्राप्तायां भुवि क्षत्रियादिसुतानां विभागप्राप्तिः कुतस्त्येत्यत आह । **यदि क्रयादिप्राप्ता भूरिति** । शूद्रापुत्रस्यैव शृंगग्राहिकतया निषेधात् क्षत्रियादिसुतानां भागोऽस्तीति गम्यत इत्यर्थः ।

ननु स्वल्पमेतदुच्यते शूद्रापुत्रस्य भूमेर्भागो नास्तीति यतो वचनांतरेणांशमात्रमेव निषिध्यते तस्येत्याशंक्य परिहरति । **यत्पुनर्ब्राह्मणक्षत्रियविशामित्यादिना** । जीवता पित्रा शूद्रापुत्राय यत्किंचिद्दत्तं स्यात् तदा शूद्रापुत्रोंऽशभाङ्न भवतीत्यर्थः ॥ १२६ ॥ ३०

---

१ ख- चतुस्त्रिद्व्येकभागादि दत्वा तत्तद्भागादवशिष्टं द्रव्यमेकीकृत्य ब्राह्मणादि दद्यात् । शूद्राकन्यकायै स्वजातिविहितादेकांशरूपादेव निजाद्भागाच्चतुर्थंशं क्रमेण कल्पयित्वा कन्यकानां स्वस्वजातिविहिताद्भागातुर्थं चतुर्थमंशं दत्वाऽवशिष्टं । २ [illegible] १. ३ ख-भागप्रतिषेधः ४ क-कुतस्त्येत आह ।

## याज्ञवल्कीये १२६ ।

**उद्धारविभागो निषिद्ध इति ।** 'ज्येष्ठं वा श्रेष्ठभागं चे'त्युक्त्यांऽशविभागो निषिद्ध इत्यर्थः । केचन 'अन्योन्यापहृतमि'त्येतद्वचनं विभागार्हसमुदायद्रव्यापहारे कृतेऽपि तेषां दोषो नास्तीत्येतत्परमिति व्याचक्षते तदसदित्याह । **एवं च वचनस्यार्थवत्वादिति ।** अयमभिप्रायः ।
५ पूर्वोक्तरीत्या श्रुतसमांशविभागविधानमात्रेणैव वाक्यस्य सार्थकत्वादश्रुतदोषाभावपरत्वं न कल्प्यं; अतः समुदायद्रव्यापहारेऽपि दोषो नास्तीति ।

नन्वस्तु दोषः, स तु ज्येष्ठस्यैव ( न ) कनीयसां **मनुना** तथोक्तत्वादित्याशंकते । **ननु मनुना ज्येष्ठस्यैवेति ।** विनिकुर्वीत तिरस्कुर्यान्न वंचयेदिति यावत् । **दंडापूपिकनीत्येति ।** अपूपानां समूह आपूपिकं । 'अचित्त हस्ति धे नोष्ठगिति' ठक् (व्या. सू.४।२।४७) । तथा**चामरः ।**
१० (३।२।४०)'आपूपिकं शाष्कुलिकमेवमाद्यमचेतसामि'ति । आपूपीकं यस्मिन् दंडे प्रोतं बद्धं वा । स दंडो यदि चौरैरपहृतः तदा आपूपिकमपि सुतरामपहृतमिति गम्यते । तद्वत् प्रकृतेऽपि । स्वतंत्रस्य पितृस्थानीयज्येष्ठस्य यदा समुदायद्रव्यापहारे दोषः श्रूयत इत्याह । **तथा चाविशेषेणेत्योदिना ।**

ननु समुदायद्रव्ये स्वस्यापि स्वत्वमस्तीति अपहारदशायामपि स्वद्रव्यमित्येव गृह्यते । अतोऽपहर्तुर्दोषो नास्तीत्यभिप्रायेणाशंकते । **अथ साधारणं द्रव्यमिति ।** यथा स्वस्य स्वत्वं समुदायद्रव्ये
१५ तथा भागार्हाणां अन्येषामपि तत्र स्वत्वमस्तीत्यपहारदशायामन्यद्रव्यमपि सर्वात्मनाऽपहृतमेव स्यादिति ।

परस्वं न गृह्णीयादित्याविनिषेधकशास्त्रानुप्रवेशादस्त्येव दोष इति परिहराति । **तदस-दित्यादिना ।** अमुमेवार्थं दृढयितुं षष्ठन्यायमुदाहराति ! **यथा मौद्गे चरौ विपन्न इत्यादिना ।** षष्ठतृतीयपादाधिकरणं । 'प्रतिषिद्धं चाविशेषेण हि तच्छ्रुतिः । अयज्ञिया वै माषाश्चण काः'
२० कोद्रवा इति श्रूयते । तत्र संशयः । मौद्गं चरुं निर्वपेदित्यस्ति । तत्र मुद्गाभावे प्रतिनिधित्वेन माषा ग्राह्या वा न वेति । पूर्वपक्षे तु व्रीह्यभावे नीवारा इव मुद्गाभावे माषाः प्रतिनिधेयाः । नन्वयज्ञिया वै माषा इति निषेधसंभवान्न प्रतिनिधेया माषा इति चेन्न । माषादिरूपेण हि तत्र निषेधो न तु मुद्गाद्यवयवादानेनावर्जनीयतया प्राप्तमाषावयवादिरूपेण अतः प्रतिनिधेया इति । राद्धांतस्तु, माषादिजातीयस्य हि सर्वात्मना यज्ञसाधनत्वं निरस्तं ' अयज्ञिया वै माषा ' इत्यनेन
२५ साधारण्येन श्रुतेः । अतो नांतरीयका अपि माषावयवा वर्ज्याः तस्मात्प्रतिनिधित्वेन माषा न ग्राह्या इति ।

ग्रंथयोजना त्वेवं । अधिकरणस्थपूर्वपक्षं संगृह्य दर्शयति । **यथा मौद्गे चराविति ।** अयमर्थः । मुद्गे चरौ नष्टे मुद्गाभावे मुद्गसदृशतया माषेषु गृह्यमाणेषु '( अ ) यज्ञिया वै माषावटकाः' इत्येतन्निषेधशास्त्रं न प्रविशति, निषेधो नास्ति यतो माषेषु मुद्गावयवाः सन्ति तत्र स्थितमुद्गावयवबुद्ध्यैव
३० माषा गृह्यंते न स्वरूपेणेति सिद्धांतं संगृह्य दर्शयति । **मुद्गावयवेषु गृह्यमाणेष्ववर्जनीयतयेति ।** अयमाशयः । 'अयज्ञिया वै माषा' इत्यनेन सामान्येन माषजातिर्निषिध्यते । अतो मुद्गावयवबुद्ध्या गृह्यमाणेष्वपि माषेषु अवर्जनीयतया निषिद्धमाषजातीयावयवा अपि गृह्यंते एवेति निषेधशास्त्रप्रवेशोऽस्तीति

१ पृ. ८५ पं २६. २ क—ख अश्रुते ३ पृ. ८६ पं ६. ४ ख—प्रतिषिद्धं चाविशेषेण हि तच्छ्रुति.

उक्तन्यायं दार्ष्टांतिकेऽप्यभिप्रायतो दर्शयन्नेकदेशिमतनिराकरणमुपसंहरति । **तस्माद्वचनत इति** ॥ १२६ ॥

## याज्ञवल्कीये १२७ श्लोकः ।

'अपुत्रेण परक्षेत्र' इत्यस्य 'उभयोरप्यसा' वित्यस्य च प्रत्युदाहरणं दर्शयितुं तात्पर्यार्थमाह । **इत्यस्यार्थ इत्यादिना** । इतिशब्द एवंशब्दार्थे वक्ष्यमाणाभिप्रायः । तदिदानीं प्रत्युदाहरण- ५ माह । **यदा तु नियुक्त इति** । उक्तार्थे **मनु**वचनं प्रमाणयति । **यथोक्तं मनुना क्रियाभ्युप- गमादिति** । पूर्वोदाहृतं **मनु**वचनं व्याचष्टे । **अत्रोत्पन्नमपत्यमित्यादिना** । अत्रोत्पन्नमपत्य- मावयोरिति यदा प्रतिज्ञा नास्ति तदा क्षेत्रिण एव तदपत्यं नोभयोरित्यमुमंशं **मनु**वचनेन द्रढयति । **तथा फलं त्वनभिसंधायेति** । क्षेत्रिणां बीजिनां मध्येऽन्यतमेनापि फलमनभिसंधाय तथा तथोत्पन्नेन परक्षेत्रे यदपत्यं उत्पाद्यत इति पूर्वोक्तमनुषज्यते । सोऽपत्यरूपोऽर्थः क्षेत्रिणामेव । अत्रो- १० दाहरणांतराविवक्षया बहुवचनम् । **बीजिनां क्षेत्रिणामिति** । तत्र हेतुः । **बीजाद्योनिर्बली- यसीति** । प्रत्यक्षं प्रत्यक्षेण दृश्यत इत्यर्थः । एवं श्लोकयोजना । विशेषार्थस्तु निबंध एव स्पष्टः ।

**इतरस्य नियोगस्येति** । विवाहिताविषयनियोगस्येत्यर्थः । ननु 'देवराद्वा सपिंडाद्वा स्त्रिया सम्यङ्‌ नियुक्तये' त्यादिकेन **मनु**वचनेन विधवानियोगस्य विहितत्वात् 'नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिरि' त्यादिकेन च तन्नियोगस्य निषिद्धत्वाच्च षोडशिग्रहणाग्रहण- १५ वन्नियोगविषयविधिनिषेधयोर्विकल्पोऽस्तीत्याशंक्य परिहरति । **न च विहितप्रतिषिद्धत्वादिति** । समयोर्हि विकल्पः । अत्रा 'न्यस्मिन् हि नियुंजाना धर्मं हन्युः सनातनमिति' नियोक्तृनिंदाश्रवणा- न्निषेधे च तदभावान्न समता विधिनिषेधयोः, अतो न विकल्पः ।

षोडशिग्रहणाग्रहणयोस्तूभयत्र निंदाश्रवणात्समत्वेन ग्रहणाग्रहणयोर्विकल्पः इत्यभिप्राये- णाह । **नियोक्तृणां निंदाश्रवणादिति** । २

ननु 'तामनेन विधानेन निजो विंदेत देवर' इति विवाहस्य विहितत्वेन सा भार्या स देवर एव पतिरिति दांपत्यसमुत्पत्तेस्तदुत्पन्नः पुत्रः तयोरौरस एव स्यादित्याशंक्याह । **अयं च विवाहो वाचनिक इत्यादिना** । अयमभिसंधिः । नियुक्ताभिगमने यथा घृताभ्यंगादिकमंगत्वेन विधीयते तथाऽयं विवाहोऽपि नियुक्ताभिगमनेऽगं न स्वतंत्रतया प्रधानकर्म येन दांपत्यप्रसंगः । अत एव नोभयो- रौरसः पुत्रः अपि तु क्षेत्रज एव क्षेत्रस्वामिन 'अत्रोत्पन्नमपत्यमावयोरिति' प्रतिज्ञाया अभावे । सत्यां तु २ प्रतिज्ञायामुभयोरपि पुत्र इति ॥ १२७ ॥

## याज्ञवल्कीये १२८-१३२ श्लोकाः ।

**अत एवौरससम इति** । यत औरस्याः पुत्रिकायाः सुतः पुत्रिकासुतः अत एवौरससमत्वं न साक्षादौरसत्वं व्यवहितत्वादित्यर्थः ।

ननु 'पुत्रिकैव सुतः पुत्रिकासुत' इत्यस्मिन् व्याख्यानेनौरससमः पुत्रिकासुत इत्येतद्विरुध्यते व्यवहितत्वाभावात्तस्या इत्याशंक्याह । **सोऽप्यौरससम इत्यादिना** । अयमभिसंधिः । पित्रवय-

१ पृ. ८७ पं. १९. २ ख-स्वातंत्र्या. ३ ख-तत्समः पुत्रिकासुतः ।

वानां दुहितरि विरलत्वादवयवबाहुल्याभावेन व्यवहितत्वमिति । 'तृतीयः पुत्रिकैवेति' (१७–१५) **वसिष्ठेन** तृतीयत्वेन पुत्रिका गणिता न **याज्ञवल्क्येन**।

ननु ह्यामुष्यायणो बीजिनः किमौरस उत तत्समादिष्वन्यतम इत्याशंक्याह । **ह्यामुष्यायणास्त्विति । औरसाविशिष्टः** । औरससम इत्यर्थः । 'क्षेत्रजः क्षेत्रजातस्त्वि'त्यादि मूलवचनांशं व्याख्यातुमुपादत्ते । **क्षेत्रजः क्षेत्रजातस्त्विति** ॥ १२८ ॥

**तथा पितृगृह एव संस्थितेति** । विवाहात्प्राक् पुत्र उत्पन्ने तथा विवाहितैव पितृवेश्मनि यदि स्थिता सा कन्या तस्याः पुत्रो मातामहस्येत्यर्थः । अनूढा चेत्कन्या तदा कानीनो मातामहसुतः ऊढा चेद्वोढुरित्युक्तम् । तत्रोभयत्र **मनु**वचनं प्रमाणयति । **यथाह मनुः । पितृवेश्मनीति ।** अस्यार्थः । पितृवेश्मनि कन्या रहो व्यभिचारेण यं पुत्रं जनयेत्तं कन्यासमुद्भवं नाम्ना कानीनं वदेत् स वोढुर्भवतीति । अत्र वोढुरित्युपादानाद्विवाहिता चेत्तदा वोढुर्नो चेन्मातामहस्येति गम्यते ॥ १२९ ॥

**सदृशं प्रीतिसंयुक्तमिति** । सदृशं सवर्णमित्यर्थः । **दातुरयं प्रतिषेध इति**—न प्रतिग्रहीतुरित्यर्थः । पूर्वोक्तं पुत्रीकरणप्रकारं क्रीतकृत्रिमादिष्वप्यतिदिशति । **एवं क्रीतस्वयंदत्तेति** ॥ १३० ॥

ननु यदुक्तं 'सवर्ण इत्येवेति' । तदनुपपन्नं **मनु**वचनविरोधादित्याशंक्य परिहरति । **यत्तु मनुनोक्तं क्षीणीयादित्यादिना** । तत्र हेतुमाह '**स्वजातीयेष्वयं प्रोक्त**' **इत्युपसंहारादिति । योगीश्वरेणेति** शेषः । **योगीश्वर**वचनविरोध इत्यर्थः ॥ १३१ ॥

**औरसपौत्रिकेयेसमवाय इति** । औरसपुत्रस्य पुत्रिकायाश्च सद्भाव इत्यर्थः । '**समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रिया**' **इतीति** । अस्यार्थः । पुत्रिकायां कृतायां यद्यौरस उत्पन्नः तदा स्त्रियाः पुत्रिकायाः ज्येष्ठता नास्ति । 'ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरमि'त्यभिहितोद्धारादिकं नास्ति अपि तु सम एव विभाग इति सम एवेत्युक्तत्वादौरसस्य सकलधनग्रहणं नास्ति । अतः 'पूर्वाभावे परः पर' इत्यस्यापवाद इत्यर्थः । यथौरसे सति पुत्रिकाया अंशभाक्त्वं तथाऽन्येषामपि पुत्राणां अंशभाक्त्वं अस्तीत्याह । **तथा अन्येषामपीत्यादिना ।**

औरसे सति क्षेत्रजादीनामप्यंशभाक्त्वे **कात्यायन**वचनमपि प्रमाणयति । **तथा च कात्यायन इत्यादिना । क्षेत्रजदत्तकादय इति** । आदिशब्दात्क्रीतकृत्रिमस्वयंदत्तापविद्धा गृह्यंते । **असवर्णाः कानीनेति** । असवर्णा अप्रशस्ता इत्यर्थः ।

दत्तकादीनामौरसप्रतिकूलत्वे निर्गुणत्वे च चतुर्थांशभाक्त्वं नास्ति । किंतु ग्रासमात्रं दातव्यमित्युक्तम् । अधुना क्षेत्रजस्यौरसप्रतिकूलत्वे निर्गुणत्वे च विशेषोऽस्तीत्याह । **तत्र क्षेत्रजस्येति । प्रतिकूलत्वनिर्गुणत्वसमुच्चये इति** । उभयसद्भाव इत्यर्थः । 'दायादा बांधवाश्च षडिति' 'षडदायाबांधवा इति । च द्वयोर्वचनयोः स्वसपिंडसमानोदकानां संनिहितरिक्थहरांतराभावे पूर्वेण रिक्थहरत्वमुत्तरेषां तु तन्नास्तीत्ययमर्थो दर्शितः।

---

१ औरसापकृष्ट इति मिताक्षरापाठः। २ 'तथाविवाहित' इति संश्लिष्टपदं लिखितपुस्तकेषु दृश्यते । ३ अरूढा। ४ एतत्वपुस्तके न दृश्यते। ५ औरसपौत्रिकसमवाय । ६ पृ. ८९ पं. १८ ॥ ७ दत्तकक्षेत्रजादय इति मिताक्षरापाठः। ८ विशेषो नास्तीत्याह। ९ पृ. ८९ पं. ३० ।

तत्र हेतुमाह । **गोत्ररिक्थे जनयितुरित्यादिना** । अस्यार्थः । दत्तकः पुत्रो जनयितुर्निषेक्तुर्जनकस्य गोत्रं धनं च न कदाचित् प्राप्नुयात् । अपि तु यस्मै दत्तस्तस्य गोत्रं धनं च स दत्तकः प्राप्नोति । तथा पिंडः पिंडदानमपि गोत्ररिक्थानुगः यत्संबंधिनी गोत्ररिक्थे भवतः, तस्मा एव पिंडो देयः यस्मात्कारणात्स्वधा स्वधासाधनकं पिंडं श्राद्धादिकं ददतो दातुः सकाशाद्व्येति निवर्तते । ५

एतच्च दातुः पुत्रांतरादिसद्भावे वेदितव्यम् । अभावे त्वसावेव पिंडदो रिक्थहरश्चेति । एतदुक्तं भवति । अत्र दत्रिमग्रहणं प्रतिनिधिपुत्रोपलक्षणार्थम् । तथा च दत्रिमादिपुत्राणामनेन वचनेन रिक्थहरत्वप्रतीतेः पूर्वपक्षोक्तरीत्या च रिक्थहरत्वाभावप्रतीतेः परस्परविरोधादप्रामाण्यं प्रसज्येत । ततो वचनानर्थक्यभयादस्मदुक्तैव व्याख्या श्रेयसी ।

ननु षट्कद्वयमध्ये पूर्वषट्कस्यैव स्वसपिंडादिरिक्थहरत्वमस्तु, मा भूदुत्तरषट्कस्य, पितृधने १० तु कथमित्यत आह । **पितृधनहारित्वं त्विति** । तत्र हेतुमाह । **न भ्रातर इति** । ' ननु पुत्रा रिक्थहरा ' इति पुत्राणां पितृधनभाक्त्वं प्रतीयते । ते पुत्रा औरसा एव न तद्व्यतिरिक्ता इत्यत आह । **औरसस्यैक एवौरस इति** । वचनद्वयस्याप्येकार्थत्वे पौनरुक्त्यमित्यर्थः । दायादशब्दस्वरूपपर्यालोचनयाऽपि ' दायादा बांधवाश्च षट् ' ' षडदायादबांधवा ' इत्यत्र पितृधनपरत्वं नास्तीत्याह । **दायादशब्दस्येति** । ननु **याज्ञवल्क्येन** ' औरसो धर्मपत्नीज ' **इत्यादिना** द्वादश- १५ विधपुत्राः प्रदर्शिताः । ' पूर्वाभावे परः पर ' इति रिक्थग्रहणक्रमोऽपि **दर्शितो वाक्यशेषे** स्मृत्यंतरेष्वन्यथा दर्शितः । तथा हि **आपस्तंब**धर्मवृत्तौ स्मृत्यंतरसंग्रहः ।

' औरसः पुत्रिका बीजक्षेत्रजो पुत्रिकासुतः । पौनर्भवश्च कानीनः सहोढो गूढसंभवः ॥
दत्तः क्रीतः स्वयंदत्तः कृत्रिमश्चापविद्धकः । यत्र क्व चोत्पादितश्च स्वपुत्रा दश पंच चेति '॥

अत्र संख्याव्यत्ययः क्रमव्यत्ययश्च । अत्र संख्याव्यत्ययः सुपरिहरः । पुत्रिकापुत्रिकासुतौ द्वावप्येका कोटिः । २० तथा ' बीजक्षेत्रजो यत्र क्व चोत्पादितोऽप्येष्वेवान्यतम ' इति पुत्रिकात्रयाणामंतर्भावे द्वादशैवेति । तथापि क्रमव्यत्ययस्तदवस्थ एव । **मानवे** तु, (अ. ९ श्लो. १६६–१७८)

'औरसक्षेत्रजौ पुत्रौ पितृरिक्थस्य भागिनौ । दशापरे तु क्रमशो गोत्ररिक्थांशभागिन ' **इति** । पुत्रिकामप्यौरससमत्वेनौरस एवांतर्भावयित्वा इतरे दश पुत्रा दर्शिताः ॥

" स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादितश्च यः । तमौरसं विजानीयात्पुत्रं प्रथमकल्पितम् ॥ २५
यस्तल्पजः प्रमीतस्य क्लीबस्य पतितस्य च । स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः ॥
माता पिता वा दद्यातां यमद्भिः पुत्रमापदि । सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः ॥
सदृशं तु प्रकुर्वीणं गुणदोषविचक्षणम् । पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः ॥

१ ख–दातुः सकाशाद्या वैति । २ क—प्रमाण्यं । ३ पृ० १० पं. १ । ४ उत्ताद्वयोद्धि यम् । ५ यस्तल्पजः प्रमीतस्य
६ प्रकुर्याद्यं ।

उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः। स गृहे गूढमूत्पन्नो यस्य स्यात्तस्य तल्पजः॥ ”

‘ न च ज्ञायेत कस्य स इति । हीनाधिकपुरुषजत्वमंतरेण सवर्णजत्वनिश्चये कस्य पुरुषस्येति पुरुषविशेषो न च ज्ञायते इत्यर्थः । यस्य स्यात्तस्य तल्पज इति । यस्य तल्पजः स्यात्तस्य तल्पज इत्यर्थः । तल्पशब्देन दारा लक्ष्यंते । यथा गुरुतल्पग इति। ‘तल्पं शय्याट्टदारेष्वि ’त्यमरः ( ३-३-१३० )

“ मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा । यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते ॥
पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः । तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम् ॥
या गर्भिणी संस्क्रियते ज्ञाताऽज्ञाताऽपि वा सती । वोढुः स गर्भो भवति सहोढज इहोच्यते ॥
क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमंतिकात् । स क्रीतस्तु सुतस्तस्य सदृशोऽसदृशोऽपि वा॥ ”

१० गुणैः सदृशोऽसदृशश्चेत्यर्थः ॥

या पत्या वा परित्यक्ता विधवा चेच्छयाऽऽत्मनः । उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते ॥ पुनर्भूत्वा पुनर्गृहिणीभूत्वेत्यर्थः ।

“ मातापितृविहीनो यस्त्यक्तो वा स्यादकारणे । आत्मानं स्पर्शयेद्यस्तु स्वयं दत्तस्तु स स्मृतः । ”

अकारणे पातित्यादिकारणाभावे। स्पर्शयेद्दद्यादित्यर्थः।‘ विश्राणनं वितरणं स्पर्शनं प्रतिपादन-

१५ मि ’त्यमरः । ( २-७-२९ )।

“ यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम् । स पारयन्नेव शवस्तस्मात्पारशवः स्मृतः ” । स पारयन्नेव शव इति । स पुत्रः पितॄन् श्राद्धादिभिः पारयन् प्रीणयन्नपि इतरपुत्रवदप्रशस्तत्वात् शववच्छव इति पारयन् शवः पारशव इत्यर्थः ।

अस्य शूद्रापुत्रस्य विवाहिताजन्यत्वेनानुलोमजात्वादौरसत्वं अविशिष्टम् । तथाप्येषु सत्सु तस्य

२० सकलधनहरत्वाभावादस्मिन् प्रकरणे अंते परिगणनम् । वासिष्ठे ( अ. १७ सू. १५ ) तु ‘ तृतीयः पुत्रः पुत्रिकैवेति ’ क्रमव्यत्ययः । एवं स्मृत्यंतरेष्वपि द्रष्टव्यम् । ग्रंथगौरवभयान्न लिख्यते ।

अतः कथं ‘ पूर्वाभावे परःपर ’ इत्युक्तिरित्याशंक्याह । वासिष्ठादिषु वर्गद्वयेऽपीति । अयमत्र परिहाराभिप्रायः ॥ मनुना तु ( अ. ९ श्लो० १५९–१६० ) “ औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ॥ गूढोत्पन्नोऽपविद्धश्च दायादा बांधवाश्च षट् ॥ कानीनश्च सहोढश्च

२५ क्रीतः पौनर्भवस्तथा । स्वयं दत्तश्च शौद्रश्च षडदायादबांधवा ” इति स्वसपिंडसमानोदकानां संनिहितरिक्थ-हरांतराभावे प्रथमषट्कस्य तद्रिक्थहरत्वं द्वितीयषट्कस्य तदभावं च प्रतिपाद्य तत्प्रसंगादेव पश्चादौरसादि-पुत्रस्वरूपप्रतिपादनात् । उपक्रमानुसारेण तत्वतः ‘ एष एव क्रम ’ इति ज्ञायते । अत एव तत्र क्रमस्य

१ वा स्वयेच्छया । २ अकारणात् । ३ यस्मै ।

इत्युक्तिरपि सर्वात्मनाऽमुमेव क्रमं न नियच्छति। अपि तु कस्मिंश्चिद्विशेषे इत्येव। स च विशेषो गुणवद्गुणवद्रूप एवेति। एवं स्मृत्यंतरपाठस्यापि गतिरिति।

युक्तियुक्तं चैतत् **याज्ञवल्क्योक्तम्**।' तथा हि औरसपौत्रिकेययोस्त्वौरसत्वात्समत्वादेव, क्षेत्रजगूढजकानीनपौनर्भवानां तु सबीजस्वक्षेत्रोत्पन्नत्वादेव दत्ताद्यपेक्षया प्राबल्यम्। सहोढजस्य स्वकीयत्वेन परिगृहीतक्षेत्रोत्पन्नत्वेऽप्युत्तरे षट्के पाठो वाचनिक एवेति सर्वमनवद्यम्।

एतच्च सर्वं युगांतरविषयम्। कलौ त्वौरसदत्तकावेव औरससमत्वात्पुत्रिका'च दत्तौरसेतराणां तु पुत्रत्वेन परिग्रह' इति स्मरणात्। अत्र वाक्यशेषे 'कलौ युगे त्विमान्धर्मान् वर्ज्यानाह मनीषिण' इति वाक्यशेषः। शिष्टाचारोऽपि तथैव दृश्यते कलौ।

ननु मा भूदितरवचनविरोधः। **गौतमेन** त्वौरससमस्य पौत्रिकेयस्य दशमत्वेन पाठात्तद्वाक्यविरोध इत्याशंक्य परिहरति। **गौतमीये त्विति। विजातीयविषय इति।** ब्राह्मणादेः क्षत्रियादिस्त्रीषूत्पन्नपौत्रिकेयविषय इत्यर्थः।

ननु 'भ्रातॄणामेकजातानामि'त्यनेन भ्रातृपुत्रेणैवेतरभ्रातॄणामपि पुत्रवत्त्वप्रतिपादनात् द्वादशभ्योऽधिकोऽन्यः स पुत्र इति द्वादशत्वकथनं पुत्रेष्वनुपपन्नमित्यत आह। **यत्तु भ्रातॄणामेकजातानामित्यादिना।** तत्र हेतुमाह। **तत्सुता गोत्रजा बंधुरिति।** 'पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा॥ तत्सुता गोत्रजा बंधुः शिष्यः सब्रह्मचारिणः'। इत्यत्र भ्रात्रनंतरं भ्रातृपुत्रस्य रिक्थभाक्त्वप्रतिपादक**याज्ञवल्क्य**वचनविरोधः। भ्रातृपुत्रेणेतरभ्रातॄणां पुत्रित्वेन पुनरस्य पुत्रत्वेन सर्वेभ्यः पित्रादिभ्यः पूर्वमेव रिक्थभाक्त्वादित्यर्थः॥ १३२॥

## याज्ञवल्कीये १३३।१३४ श्लोकौ।

कानीनादिषु सजातीयत्वं दर्शयति। **तत्र कानीनेति। तेषां वर्णजातिलक्षणाभावस्योक्तत्वादिति।** कुंडगोलकयोरन्यतरत्वेन वर्णाद्यभाव आचाराध्यायेऽभिहित इत्यर्थः।

मूर्धावसिक्तादीनां दायहरणे क्रममाह। **तथाऽनुलोमजादीनामिति। नाधिकं दशमाद्दद्याच्छूद्रापुत्राय धर्मत इतीति।** नन्वेतदुपपन्नं 'चतुस्त्रिद्व्येकभागाः स्युर्वर्णश' इति शूद्रापुत्रस्यैकांशहरत्वाभिधानादत्र च दशांशहरत्वाभिधानात्। मैवं। ब्राह्मणीपुत्रस्य चत्वारोंऽशाः क्षत्रियापुत्रस्य त्रय इति सप्त, वैश्यापुत्रस्य द्वाविति नव, शूद्रापुत्रस्यैक इति मिलित्वा दश। एवं च 'चतुस्त्रिद्व्येक' इत्यत्रापि दशमांशहारित्वस्योक्तत्वान्न विरोध इति सर्वमनवद्यम्॥

**ये परिणीताः संतीति।** विवाहितायाः पुत्रा इत्यर्थः। **स्वभागादर्धं दद्युरिति।** स्वांशापेक्षया अर्धं समुदितद्रव्याद्दद्यादित्यर्थः॥ १३३।१३४॥

## याज्ञवल्कीये १३५।१३६ श्लोकौ।

उक्तप्रमेयस्य कठिनत्वाद्वक्ष्यमाणप्रमेयस्य कठिनतमत्वाच्च तत्र श्रोतृसावधानार्थं[1] पद्यबंधेन संगतिं दर्शयति निबंधकारः। **मुख्यगौणसुता इति। तेषामभावे सर्वेषामिति।** [illegible]काद्यनुलोमजातीनां सूतादिप्रतिलोमजानां चेत्यर्थः।

[1] ख–श्रोतृसाधनात्।

'सर्ववर्णेष्वयं विधिरि' त्यत्र सर्वशब्दो न वर्णविशेषणं अपि तु स्वतंत्र एव। तथा सर्वे च वर्णाश्च तेषां समाहारे समासांतर्गतश्च शब्द इत्याह। **सर्वेषु मूर्धावसिक्तादिष्विति। पत्युर्नो यज्ञसंयोगे इति। स्मरणादिति**। अस्य **पाणिनि**सूत्रस्यायमर्थः। पतिशब्दस्य नकारादेशो भवति। यज्ञसंयोगे गम्यमाने यज्ञसाधनत्वात्तत्फलोपभोक्त्रीत्वाच्चेति । एतदुक्तं भवति। विवाहसंस्कृता नारी यज्ञसाधनं ५ नान्येति। विवाहसंस्कृतैव पत्नीत्युच्यत इति। यद्यपि ज्येष्ठायामनिषिद्धायां सत्यां कनीयसीनां यज्ञे नाधिकारः' तथापि तदभावे सद्भावेऽपि वा दीर्घरोगग्रस्तायां तस्यां पतितायां वाऽन्यासां क्रमेणाधिकारोऽस्तीति यज्ञसाधनत्वयोग्यताऽस्तीति 'यज्ञसंयोग' इत्यत्र यज्ञसाधनत्वयोग्यता विवक्षितेत्यर्थः।

अथवा यज्ञशब्देन विवाह एव कथ्यते। तत्रापि देवतोद्देशेन द्रव्यस्य दीयमानत्वात् तद्रूपत्वाच्च यागस्य । एवमपि विवाहितैव पत्नी नान्या तदा स्त्रियमंतरेण विवाहस्यैवाभावात् यज्ञसाधनत्व- १० मिति द्रष्टव्यम्। **यथांशं विभज्यधनं गृह्णंतीति। यथांशम्** 'चतुस्त्रिद्व्येकभागाः स्यु' रित्यनेन क्रमेण ब्राह्मणी क्षत्रिया वैश्या शूद्रा च गृह्णीयुरित्यर्थः। **अपुत्रस्यार्थे कुलजा पत्नीति**। नात्र कुलजेति स्वसवर्णाज्जाता अपि तु सत्कुलप्रसूता सवर्णादानुलोम्येन च जाता गृह्यते। **अव्यभिचारिण्यः** साध्व्य इति यावत्। **आछिंद्युरितरास्विति**। इतरासु व्यभिचारिणीस्त्रीषु विषये भरणं पोषणं अप्याछिंद्युरपाकुर्युर्न दद्युरिति यावत्। एतच्चापोषणं अत्यंतपरिदुष्टासु । एवं परस्परविरुद्धानां १५ वचनानां **धारेश्वरेण** कृतां व्यवस्थां दर्शयति । **पत्नीगृह्णीयादित्येतद्वचनजातमिति।** एतद्वचनजातं **याज्ञवल्क्यवृद्धमनुबृहद्विष्णुकात्यायनबृहस्पति**वचनसमूह इत्यर्थः । नियोगार्थिन्या एव पत्न्या धनग्रहणमित्येतत्कुतो हेतोरित्याशंक्य तामेव व्यवस्थां प्रतिपादयितुं **कुत एतदिति । न स्वतंत्राया इति**। नियोगानपेक्षिण्या इत्यर्थः। तं हेतुमाह। **पिता हरेदिति।** 'पिता हरेदपुत्रस्येत्यादि' वचनविरोधादित्यर्थः।

२० किमतो यद्येवमित्याशंक्योभयेषामप्रामाण्यप्रसक्तेर्व्यवस्था वक्तव्या, तत्रापि कारणं वक्तव्यमित्याह। **व्यवस्थाकारणं वक्तव्यमिति**। ननु तत्कारणमन्यदेवास्तु किमिति नियोगापेक्षित्वमेवेति नियम इत्याशंक्याह। **नान्यदिति**। न केवलं नियोगार्थिन्या एव धनग्रहणमिति युक्तितः अपि तु **गौतम**वचनमप्यस्तीत्याह। **गौतमवचनाच्चेति**। 'बीजं वा लिप्सेते' त्यत्र स्थितं **वा**-शब्दं यद्यर्थपरं व्याचष्टे। **यदि बीजं लिप्सेतेति। दद्यात्तस्यैव तद्धनमिति**। **तद्धनं** तस्य २५ भ्रातुर्धनं तस्यैव दद्यादित्युक्त्या विभक्तभ्रातृविषयमिति गम्यते । अन्यथा विभागाभावे तस्य पृथग्भूतधनाभावात् समस्तविभागः स्यादिति समो विभागः स्यादित्यभिधानादेतदविभक्तविषयमिति गम्यते। विभक्ते विभागाभावात् ॥ **योगीश्वरेणापि** किल वक्ष्यत इति। अत्रारुचौ किलशब्दः यथा 'त्वं किल योत्स्यस इति'। 'अपुत्रा योषितश्चैषे'त्यस्य **योगीश्वर**वचनस्यार्थांतरस्य वक्ष्यमाणत्वात्। **तथा च केनापि स्मृतमिति**। केनापीत्यनादरद्योतनार्थम्। अत एतस्मिन् पूर्वपक्षे, न ३० मूलयुक्तित्वेन प्रदर्शनमस्य वचनस्य **धारेश्वरेणोक्तां** व्यवस्थां दूषयितुमुपक्रमते। **तदनुपपन्नमिति। अप्रस्तुतत्वाच्चेति**। अप्रकृतत्वादित्यर्थः।

आद्यं पक्षं दूषयति। **तत्र नियोगस्यैवेति**। ननु नियोगस्यैव धनग्रहणे निमित्तत्वात्तत्सद्भावे अपुत्राया अपि धनग्रहणमस्तु को विरोधः इत्यत आह। **उत्पन्नस्य च पुत्रस्येति**। **अयमभिसंधिः**। नियोगादुत्पन्नपुत्रस्य धनग्रहणे निमित्तत्वांतरस्य धनसंबंधाभावे सति 'पित्रोरूर्ध्वं विभजतां माताऽप्यंशं समं हरेदिति' 'स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिरिति' च द्वादशविधपुत्राणां विभागप्रकारकथनं पुत्राभाव एवेतरेषां धनग्रहणकथनं च विरुध्येतेति। द्वितीयं पक्षं ५ दूषयति। **अथ तदपत्यस्यैवेति**। अयमभिप्रायः। पुत्रस्यैव 'धनसंबंधनिमित्तत्वे' पत्नी दुहितरश्चैव' त्यत्र पत्नीति न कथनीयम्, तस्या धनसंबंधनिमित्तत्वाभावादस्य वचनस्य धनसंबंधनिमित्तप्रदर्शनार्थत्वाच्चेति।

ननु पत्न्या धनग्रहणे नियोगो वा निमित्तं, तदुत्पन्नमपत्यं वा निमित्तं, विशिष्टं वा निमित्तं, वैशिष्ट्येऽपि नियोगः प्रधानं, अपत्यं वा, उभयोः समप्राधान्यं वेति, षट्पक्षाः संभवंति। १०

एवं च पक्षद्वयोपन्यासोऽनुपपन्न इति चेत्, मैवं, आद्यपक्षद्वयोक्तदूषणैरेव पक्षांतराणां सुपरिहरत्वात्। पृथगुक्तेरनपेक्षितत्वात्। तद्यथा। यदा वैशिष्ट्ये नियोगः प्रधानं तदाऽपत्यमुपसर्जनमिति अपत्यं निमित्तमप्यनिमित्तमिव अन्यपरतंत्रत्वात्। तथा चानुत्पादितपुत्राया अपि धनसंबंधः प्राप्नोतीति प्रथमपक्षोक्तं दूषणं तदवस्थमेव। अथापत्यं प्रधानं तदा 'पत्नीति' नारब्धव्यमिति स दोषस्तदवस्थः। उभयप्राधान्ये नियोगवत्याः पत्न्याः पुत्रस्य च धनसंबंधात्केवलं 'पत्नी दुहितर' इत्यनेन पत्न्या १५ एव धनसंबंधकथनमनुपपन्नं स्यात्। अथ मतम्। उभयप्राधान्ये नियोगोत्पन्नः पुत्रः प्रधानमित्युक्तं भवतीति। तथापि पत्नीति नारब्धव्यं पुत्रस्यैव धनसंबंधादिति सर्वात्मना पूर्वोक्तदूषणद्वयस्य दुष्परिहरत्वं न काऽप्यनुपपत्तिरिति निरवद्यः पक्षद्वयोपन्यासः।

ननु यदुक्तं पत्नीतिनारब्धव्यमिति तदसत्। स्त्रीणां भर्तृद्वारा पुत्रद्वारा वा धनसंबंधः। 'न स्त्री स्वातंत्र्यमर्हतीति' वचनात्। तथा चाभर्तृकाया अपुत्रायाश्च धनसंबंधाभावात् पत्युरभावे २ नियोगेनैव पुत्रसिद्धेस्तद्द्वारा पत्न्या धनसंबंधं वक्ति 'पत्नी दुहितर' इति। अतः पत्नीत्यारंभोऽपि सार्थकोऽस्मदुक्तव्यवस्थाऽप्यवश्यमाश्रयणीयेत्यनेनाभिप्रायेणाशंकते। **अथ स्त्रीणामिति**। भवेदेवं पतिपुत्रद्वारैव धनप्राप्तिः स्त्रीणामिति यदि नियमः, स एव न घटते। मुखांतरेणापि स्त्रीणां धनसंबंधबोधादिति परिहरति। **तदप्यसदध्यग्नीति। अध्यावहनिकमिति**। 'यत्पुनर्लभते नारी नीयमाना पितुर्गृहात्। अध्यावहनिकं नाम स्त्रीधनं तदुदाहृतमिति' **कात्यायन**वचनेनाध्यावहनिकस्वरूपं २ दर्शयिष्यति। नियुक्तायाः पुत्रद्वारा धनसंबंधे स पुत्रः क्षेत्रजः। तथा च तस्य क्षेत्रजः पुत्रस्य धनसंबंधोऽर्थादुक्तः स्यात्।

अस्य चार्थ 'स्यौरसो धर्मपत्नीज' इत्यत्रैवोक्तत्वात् 'पत्नी दुहितर' इत्यत्र पत्नीति न कथनीयं पौनरुक्त्यप्रसंगादित्याह। **किंचेत्यादिना**।

ननु युक्तियुक्तमिदमपुत्रधनं नियोगानपेक्षिण्येव गृह्णातीति। एवं च **गौतम**वचनानां का गतिरित्याशंक्य तेषां गतिं दर्शयितुं **गौतम**वचनं पूर्वपक्ष्यभिप्रायसहितमनुवदति। **अथ पिंडगोत्रर्षिसंबंधा इति। तदाऽनपत्यस्य स्त्री धनं गृह्णीयादिति**। धनमनपत्यस्य स्त्री गृह्णीयादित्यन्वयः।

१ पृ. १२ पं. २६

अत्रायमभिप्रायः । गोत्रर्षिसंबन्धा रिक्थभाजः स्त्री च रिक्थार्हेत्यभिधाय तस्याः प्रमीतभर्तृकाया धर्मद्वयमुपदिशति । तत्रायमेको धर्मः । **सा स्त्री बीजं वा लिप्सेत** । नियोगधर्मेण पुत्रमपेक्षेतेति । अत्रत्यवाशब्दो न यद्यर्थः अपि तु विकल्पाभिप्रायः । विकल्पश्च पक्षांतरापेक्षया । तदेव पक्षांतरं द्वितीयो धर्मः । स च धर्मो वचने साक्षादनुपात्तोऽपि वाशब्दप्रयोगबलात् नियोगेन संतानाभिलाषरूपस्य पक्षस्य प्रतियोगी संयतत्वं धर्म इति ज्ञायते । एतदुक्तं भवति । नियोगात्पुत्रमपेक्षेत वा संयता वा भवेदिति धर्मद्वयोपदेश इति । तदविभक्ते संसृष्टिनि वा भर्तरि प्रेत इति । एतदुक्तं भवति । अविभक्ते पत्यौ मृते, संसृष्टिनि वा पत्यौ मृते, पक्षद्वयेऽपि तत्पत्न्याः स्वस्या धनसंबंधो नास्तीति कृत्वा स्वस्या धनसंबंधाभावेऽपि स्वापत्यस्य भवत्विति धनलोभान्नियोगो नापेक्षणीय इति ।

ननु "संसृष्टानां तु यो भागस्तेषामेव स इष्यते" इति **नारदेन** संसृष्टिन उपक्रम्य "भ्रातॄणामप्रजाः प्रेयात् कश्चिच्चेत्प्रव्रजेत वा । विभजेरन् धनं तस्य शेषास्ते स्त्रीधनं विना । भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयादि' त्युक्तत्वात् उपक्रमानुरोधेन भ्रातुर्धनमितरे संसृष्टिभ्रातरो गृह्णीयुरित्यभिहितम् । 'भ्रातॄणामप्रजाः प्रेयादि" त्यादिना च स एवार्थोऽभिधीयत इति पौनरुक्त्यं स्यादित्याशंक्य परिहरति । **न भ्रातॄणामित्यादिना** । अयमर्थः । पूर्वं संग्रहेण कथितमधुना विवृण्वन् 'तत्र स्त्रीधनमविभाज्यमिति' च 'तासां स्त्रीणां भरणं कर्तव्यमिति' च वाक्यद्वयेनार्थद्वयं विधीयते न केवलं पूर्वोक्तमेव कथ्यते येन पौनरुक्त्यं स्यादिति । तत्र स्त्रीधनं विनेति । तद्धनस्यौविभाज्यत्वविधिः उत्तरेणोत्तरविधिः । **योगीश्वर**वचनस्य स्वाभिमतमर्थं दर्शयति । **यदप्यपुत्रा योषित इति** । यत्तु **मनु**वचनं । (अ.९श्लो.१४६)'धनं यो बिभृयाद्भ्रातुर्मृतस्य स्त्रियमेव वा । अपत्यं भ्रातुरुत्पाद्य दद्यात्तस्यैव तद्धन' मिति विभक्तेऽपि भ्रातरि नियोगद्वारैव तत्पत्न्या धनग्रहणप्रतिपादकं पूर्वपक्षदशायामुक्तं तत्र **मनु**नैव नियोगस्य निंदितत्वात्तत्परिहारः सुकर इति व्याख्यातृबुद्धिपरीक्षार्थं च सिद्धांतार्थमदर्शयित्वैव वचनांतराणि स्वाभिप्रेतार्थपरत्वेन दर्शितानि इति मंतव्यम् । परिहारस्त्वेवम् । 'अन्यस्मिन्हि नियुंजाना धर्मं हन्युः सनातनमि' त्यादिभिर्विधवायां नियोगस्य निंदितत्वादवश्यं नियोगेन विभक्तधनविधवायां भातृजायायां पुत्रमुत्पाद्य तद्धनं तस्यैव दातव्यमिति न नियम्यते तेन वचनेन, आपि तु 'न स्त्री स्वातंत्र्यमर्हतीति' स्त्रीणामेकाकितयाऽवस्थानं निषिद्धमिति । देवरगृहेऽवस्थाने कृते स्त्रीणामप्रगल्भत्वेन तद्धनरक्षणे देवरेण च क्रियमाणे संततिलोभात् सा स्त्री शास्त्रसिद्धत्वाद्गर्हितमपि नियोगं यद्यनुमनुते तदाऽपत्य उत्पन्ने देवरेण धनलोभो न कर्तव्यस्तस्यैव तद्धनं समर्पयेदित्येवमर्थपरं व्याख्येयं अनेकवचनविरोधादिति । अत एव 'धनं यो बिभृयादिति' धारणपोषणवाचिनो भृत्र उपादानं **मनुना कृतम्** ।

ननु यज्ञशब्दो धममात्रोपलक्षको न यज्ञवाचकः अतो दानहोमादिसिद्धिरित्याशंकते । **अथ यज्ञशब्दस्येति** । 'देवतोद्देशेन द्रव्यत्यागो यागः' स एवोद्देशोऽग्नौ प्रक्षेपणांतो होमः । 'स्वत्वनिवृत्तिद्वारा परस्वत्वापादानं दानमिति' यागहोमदानानां भेदः धर्म एव धनस्योपयोगाद्धनसाधनकः कृषिवाणिज्यादिलभ्योऽर्थः, तथा धनसाधनकः स्रक्चंदनादिविषयः कामश्च, न स्यातामिति परिहरति । **एवं तर्ह्यर्थकामयोरिति** ।

ॐ इत्यत आह । **तथा च सतीत्यादिना** । धर्मार्थकामेभ्यो यथाशक्ति पूर्वाह्णमध्यंदिनापराह्णानफलान्न कुर्यादिति **गौतम**वचनस्यान्वयः । 'न तथैतानि शक्यंत' इति 'इंद्रि-

१ क–जीवनं. २ क–तद्धनस्य विभाज्यत्वाः ।

याणां विचरतां. विषयेष्वपहारिषु । संयमे यत्नमातिष्ठेदि ' तींद्रियसंयमं प्रक्रम्य ' प्रापणात्सर्वकामानां परित्यागो 'विशिष्यते । न तथैतानि शक्यंते संनियंतुमसेवया ' इत्यभिहितं **मनुना** । ( अ. २ श्लो. ९५—९६ ) । अस्यार्थः । सर्वकामानां प्रापणादुपभोगादपि परित्यागो विशिष्यते समीचीन उत्तम इति यावत् । एतानि विषयासक्त्या दोषजनकानींद्रियाणि । असेवया रूपादिविषयानुपभोगेन तथा संनियंतुं न शक्यंते । यथा विषयोपभोगेन तद्गतदोषविज्ञानं तथा विषयानुपभोगेन नेत्यर्थः । ५ अनिषिद्धविषयोपभोगस्य वैराग्योत्पादकत्वेन कर्तव्यत्वादर्थकामाववश्यं साधनीयाविति प्रतिपादकवचनविरोध इत्यभिप्रायः ।

यदि धन यज्ञार्थं स्यात्तर्हि ' हिरण्यं धार्येमि ' त्यनेन वाक्येन विहितहिरण्यधारणं क्रत्वर्थं इति पूर्वपक्षिणाऽभिहिते तन्निराकृत्य पुरुषार्थमित्युक्तं सिद्धांतिना तन्न्यायाविरोधोऽपि स्यादित्याह । **अपि च धनस्य यज्ञार्थत्वे हिरण्यं धार्यमितीति तत्प्रत्युद्भूतं स्यादिति** । प्रत्युद्भूतं १० विघटितं विपरीताभिहितमिति यावत् ।

तृतीयचतुर्थपादाधिकरणम् । ' अप्रकरणे तु तद्धर्मस्ततो विशेषात् ' । ' अनारभ्य श्रूयते; तस्मात् सुवर्णं हिरण्यं धार्यं । दुर्वर्णोऽस्य भ्रातृव्यो भवतीति ' । तत्र **संशयः** । किं हिरण्यधारणमिदं क्रत्वंगतया विधीयते, उत क्रतुगताहिरण्यानुवादेन धारणं संस्कारो विधीयते अथवा हिरण्यं हस्ते भवतीति विहितं यद्धारणं तदनुवादेन सुवर्णता शोभनरूपता विधीयते यद्धिरण्यं धार्यमिति, । आहो- १५ स्विद्धिरण्यधारणं पुरुषार्थतया विधीयत इति ।

**पूर्वपक्ष**स्तु । हिरण्यविशिष्टं धारणं यद्यपि विधीयते तथापि तस्य फलापेक्षायामस्य धारणस्य वेदवाक्यविहितत्वेन वैदिकत्वात् क्रियारूपत्वेन वैदिकदर्शपूर्णमासादिसाम्यात्, फलवद्वैदिकं कर्म बुद्धिस्थं भवति । ततश्च तत्रैव वैदिककर्मणि प्रयाजादिवदारादुपकारं कुर्वन् क्रत्वंगं धारणं भविष्यति । एतावता च प्राधान्यप्रतीतेर्धारणं संस्कारः व्रीहीन्प्रोक्षतीत्यत्र प्रोक्षणमिव भूतभाव्याकांक्षादिनिवृत्तेः स्वर्गा- २० दिफलकल्पना न युक्तेत्येकः । अथवा हिरण्यं धार्यमित्यत्र कृत्यप्रत्ययेन धारणविधानात्कर्मणो हिरण्यस्य द्वितीयाविभक्त्या प्राधान्यप्रतीतेर्धारणं संस्कारः । व्रीहीन्प्रोक्षतीत्यत्र प्रोक्षणमिव । ' भूतभाव्युपयोगं हि द्रव्यं संस्कारमर्हतीति ' न्यायेनोपयुक्तस्योपयोक्ष्यमाणस्य वा संस्कारः कर्तव्यः । उपयोगश्च प्रयोजनवत एव । निष्प्रयोजनस्य लौकिकसुवर्णस्य धारणसंस्कारायोगात् क्रतुगतहिरण्यानुवादेन धारणसंस्कारविधानमिति प्रयाजादिवन्नारादुपकारकमंगं, अपि तु प्रोक्षणादिवत्संस्कारकर्मेत्यपरः । अथवा क्रतुगतं हिरण्यं २५ तद्धारणं चानूद्य लाघवात्सुवर्णमिति सुवर्णता विधीयत इत्यन्यः । एवं त्रेधाऽपि तावत्क्रत्वर्थमिति प्राप्तेऽभिधीयते । यदुक्तं वैदिकत्वक्रियात्वसाम्यात्क्रतुरुपतिष्ठते फलाकांक्षायामिति नैष नियमो घटते स्वर्गाद्युत्पत्तेरपि क्रियात्वाद्दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादिषु स्वर्गादेः कर्तृसंबंधितयोत्पत्तेः वैदिकत्वाच्च स्वर्गाद्युत्पत्तिं क्रतुं चोभयमुपस्थापयति क्रियात्वं च वैदिकत्वं चेति हेतुद्वयं न नियमतः क्रतुमेव येन विशिष्टविधिपक्षेऽपि क्रत्वर्थता स्यात् । न च क्रतुगतहिरण्यप्रतीतिः यतो हिरण्यानुवादेन ३० धारणसंस्कारविधिः स्यात् । लोकेऽपि हिरण्यसद्भावात् येन न क्रतुगतहिरण्यप्रतीतिः । न हि धारणं धार्यमाणसंस्कारः अदृष्टार्थत्वं विनाऽपि धारणोपपत्तेः कृत्यप्रत्ययश्च कर्मत्वे साध्यतामात्रं चाह न प्राधान्यं अनीप्सितकर्मणोऽपि विद्यमानत्वात् ।

१ क-विषयेष्वनपादिषु २ क-धार्यमित्यनेन । ३ कख-प्रत्युदाहरणम् । ४ सू. २६-३० ५ कख-क्रियारूपत्वाय ६ क—कर्माणि । ७ क-कुर्वंतु । ८ ख—भूतभाव्यप्रयोगं । ९ ख—वोभय । १० क-अदृष्टार्थत्वे ।

अत एव न धारणानुवादेन सुवर्णतारूपगुणविधिः क्रतुगतधारणाप्रतीतेः लोकेऽपि धारणसंभवात् अतो न क्रत्वर्थं सुवर्णधारणं । विधिवशाच्चावश्यं फलेन भवितव्यं । तच्च फलमर्थवादाभावे विश्वजिन्न्यायेन स्वर्गो भवति । अर्थवादसद्भावे तु रात्रिसत्रन्यायेन तद्गतमेव । अत्र तु ' दुर्वर्णोऽस्य भ्रातृव्यो भवतीति ' श्रवणात् भ्रातृव्यस्य दुर्वर्णत्वमात्मनश्च शोभनरूपतैव फलमिति पुरुषार्थं हिरण्य-
५ धारणमिति सिद्धांतः ॥

**तदस्तु पारतंत्र्यमिति** । **पारतंत्र्य**मेकाकिनीभूत्वा स्थितिः । अतः स्वपत्युर्धने गृहीतेऽपि न विरोध इत्यर्थः । **यज्ञार्थमेवार्जितं यद्धनमिति** यज्ञार्थं द्रव्यमुत्पन्नमित्यस्मिन् वचने द्रव्यं यज्ञार्थमुत्पन्नमिति न विधिः, किंतु यागभिक्षयाऽवनिपतिगमनेन यज्ञार्थमेव यज्ञोद्देशेन यद्द्रव्यमुत्पन्नमित्यनूद्य तद्द्रव्यं तेन यज्ञ एव विनियोक्तव्यम् । लोभादिनाऽनेन तत्र विनियो-
१० गेऽकृतेऽपि पुत्रादिभिरपि धर्मकार्येष्वेव विनियोक्तव्यमिति सर्वात्मना यज्ञार्थमर्जितं द्रव्यं धर्म एव विनियोक्तव्यमिति विधीयते । अत एव धर्मेऽनधिकृतैस्तद्द्रव्यं न ग्राह्यम् । धर्मकरणेऽधिकाराभावात् । अत एव ग्रासाच्छादनमात्रभाजना इत्युच्यत इत्यर्थः ।

**दोषश्रवणस्य पुत्रादिष्वप्यविशेषादिति** । ' यज्ञार्थं लब्धमदद ' दित्यस्मिन्वचने अर्जकनामग्रहणमंतरेण सामान्यतोऽभिधानात्[3] नानृतं वदेदितिवत् पुरुषमात्रोद्देशेन प्रवृत्तेः अर्जकस्य
१५ तत्पुत्रादीनां च यज्ञार्थद्रव्यस्य यज्ञादिष्वनियोगे दोष इत्यर्थः ।

पूर्वोक्तं **कात्यायन**वचनं व्याचष्टे **अदायिकं दायादरहितमित्यादिना** । अस्यैव **कात्यायन**वचनस्य द्वितीयार्धं व्याचष्टे **अस्यापवाद इति** । इष्ट इत्येवं व्याख्याय तद्विरोधं परिहरति । **एतदप्यवरुद्धस्त्रीविषयमिति** । तत्र हेतुः । **योषिद्ग्रहणादिति** । **अन्यत्र ब्राह्मणात् किंत्विति** । ' अदायिकं राजगामी ' त्यस्यैवार्थस्य **नारदेन** पूर्वप्रस्तुतत्वादनुषंगेणैवात्र
२० योजना कर्तव्या । ब्राह्मणादन्यत्रादायिकं धनं राजगामि । किंतु तत्रापि तत्स्त्रीणां जीवनं दद्यादिति । प्रतिपादितं स्वपक्षमुपसंहरति । **तस्माद्विभक्तासंसृष्टिनीति** ।

ननूक्तस्यैवोपसंहारो युक्तः तथा च पूर्वोक्तोपसंहारेऽभिहितस्यार्थस्य 'पत्नी दुहितर' इत्यत्र वचने व्याख्याने वा अनुक्तत्वात्कथं सोऽर्थ उपसंह्रियत इत्याशंक्य सकलवाक्यानां स्वेतरवाक्यविरोधेनैव प्रवृत्तेर्न्याय्यत्वादुक्तवक्ष्यमाणानुसंधानेनास्मिन् वाक्ये इयानर्थो लब्ध इत्यर्थादुक्तस्यैवोपसंहार
२५ इति दर्शयितुमुक्तं स्मारयन् वक्ष्यमाणं च प्रदर्शयति । **विभागस्योक्तत्वादिति** । यद्यल्पधनं भवति तद्यपुत्रस्य प्रमीतस्य तद्धनं पत्नी गृह्णीयादित्येवमर्थपरत्वं ' पत्नी दुहितर ' इत्येवमादीनां पत्न्यादिप्रापकाणां[4] **याज्ञवल्क्या**दिवचनानामन्यैः प्रदर्शितं यद्वक्ष्यमाणेन निरस्तमित्याह । **एतेनाल्पधनविषयत्वमिति** । निरसनप्रकारमुपपादयति **तथाहीत्यादिना**[5] ॥ जीवद्विभागेऽजीवे चेति पत्यौ जीवति मृतेऽपीत्यर्थः । **व्यामोहमात्रमिति** । यदा भर्तरि जीवति मृते च पुत्रेषु सत्स्वपि
३० पुत्रसमांशभाक्त्वं न भरणमात्रोपयुक्तधनभाक्त्वं पत्न्याः तदा किमु वक्तव्यमपुत्रस्य धनं सकलमाप्नोतीत्येवं कैमुतिकन्यायेनैव पत्न्याः सकलधनभाक्त्वे सिद्धे ग्रासाच्छादनातिरिक्तं न प्राप्नोतीत्युक्तिः भ्रांतेत्यर्थः । किंच अंशग्रहणाधिकारिणां पुत्रांतराभावे सकलरिक्थग्रहणाधिकारेण[6] पुत्रेण सह समांश-

---

१ क-विश्रवणात् । २ क-ग्रासमात्रभाजना । ख-ग्रासाधनमात्र । ३ ख-सामान्यतरां विधानात् । ४ पत्न्या च न प्रापकाणां । ५ पृ. ९३ पं. ३२ । ६ ख-अधिकारेणापुत्रेण सह ।

भाक्तवस्योक्तत्वात् पुत्राभावे विभक्तस्यानपत्यस्य धनं पत्नी गृह्णातीति युक्तियुक्तं चैतत् । तस्मात्पूर्वापरविचारशून्यानामिदं वचनमुपेक्षणीयमेव ।

समांशशब्दावपि जीवनोपयुक्तधनोपलक्षकावित्याशंकते । अथ **'पत्न्यः कार्या' इति**। परिहरति । **तदसदिति** । अयमर्थः । भागे तुल्यतायां चांशसमशब्दौ लोके व्युत्पन्नौ । तथा कारणमंतरेण स्वार्थपरित्यागादानर्थक्यं स्यादिति । ५

नन्वनयोः शब्दयोः पक्षे स्वार्थपरत्वान्न सर्वात्मनाऽऽनर्थक्यमिति विशेषमाशंकते । **स्यान्मतमिति** । परिहरति । **तच्च नेति** । विधिवैषम्यस्वरूपं दर्शयति । **तथा हीत्यादिना** । अयमर्थः । 'पत्न्यः कार्याः समांशिकाः' 'माताप्यंशं समं हरेत्' इति वचनद्वयं बहुधनपत्यौ जीवति मृते वा पुत्रैः सह विभागकाले 'भरणं चास्य कुर्वीरन्नि' त्यादिवाक्यांतरापेक्षया जीवनमात्रोपयुक्तधनग्रहणं पत्न्या विधत्ते । पत्यावल्पधने तु स्वपुत्रांशसमं धनग्रहणं विधत्त इति । १०

सकृदुच्चरितमेकमेव वचनं पक्षे सापेक्षं पक्षे निरपेक्षं इत्येकरूपत्वाभावात् विधिवैषम्यमिति अस्मिन्नर्थे दृष्टांतार्थत्वेनास्य न्यायस्योपपादकमधिकरणं संगृह्य दर्शयति । **तथा चातुर्मास्येषु इत्यादिना** ॥ सप्तमतृतीयपादाधिकरणं ( सू. १९ ) । 'सौमिकं तु प्रणयनमवाच्यं हीतरत्' सोमे सधर्मकमग्निप्रणयनमस्ति दर्शपूर्णमासयोश्चाधर्मकमग्निप्रणयनं । प्रणयनं नाम गार्हपत्यादाहवनीयाग्निनयनम् । उत्तरवेदिश्च सोमे एव न दर्शपूर्णमासयोः एवं प्रयोगस्थितिः । १५

एवं स्थिते चातुर्मास्यानीति चत्वारि कर्माणि संति, वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाणि । तत्र श्रूयते 'द्वयोः प्रणयंति' 'तस्माद्द्वाभ्यां यंति ऊरू वा एते यज्ञस्येति' 'द्वयोश्चातुर्मास्यपर्वणोरग्निं प्रणयंतीति' विधायकं वाक्यं 'तस्माद्द्वाभ्यां फलं यंति गच्छंती' त्यादिकमर्थवादवाक्यम् । तत्र संशयः सौमिकप्रणयनसदृशं प्रणयनं विधीयते 'द्वयोः प्रणयंतीत्यनेन वाक्येन'। एतदुक्तं भवति । सौमिकप्रणयनवत् प्रणयनं कर्तव्यमिति, उत प्रणयनमात्रं विधीयत इति ? पूर्वपक्षस्तु सौमिकप्रणयनसदृशं प्रणयनं विधीयत इति तावद्युक्तं अतिदेशात एव प्रकृतिभूतदर्शपूर्णमासयोः प्रणयनमात्रप्राप्तेः प्रणयनमात्रविधानानर्थक्यात् । २०

नन्वनुवादकमेव भवतु चोदकप्राप्तप्रणयनस्य, किमर्थं विधानमिति चेत् । मैवम् । प्रणयंतीति विधायकप्रत्ययश्रवणबलाद्विधेयत्वप्रतीतेः । किंच, 'न वैश्वदेव उत्तरवेदिमुपकिरंति न शुनासीरीय' इति वाक्यद्वयेन वैश्वदेवशुनासीरीयाख्ययोः पर्वणोरुत्तरवेदिप्रतिषेधश्चोपपद्यते । सौमिकप्रणयनसदृशप्रणयनविधाने ह्युत्तरवेदेरपि प्राप्तत्वात् दर्शपौर्णमासिकप्रणयने तूत्तरवेदेरभावात् तत्प्रणयनप्राप्तावुत्तरवेदिप्राप्त्यभावे 'न वैश्वदेव उत्तरवेदिमुपचयंती' त्यादिप्रतिषेधो नोपपद्यते । २५

ननु सौमिकप्रणयनसदृशप्रणयनविधानेनोत्तरवेदिप्राप्तौ प्राप्ताया उत्तरवेदेर्न वैश्वदेव इत्यादि निषेध इति कोऽयं बकबंधनप्रयासः । चातुर्मास्यप्रकरणे स्थितेन 'उपात्तं वपंती' त्यनेन वाक्येनोत्तरवेदेर्विहितत्वात् । विधानलब्धोत्तरवेदिनिषेधकं 'न वैश्वदेव' इत्यादिवाक्यद्वयं भविष्यतीति चेत् । तन्न । 'उपात्तं वपंतीति' इदं वचनं चातुर्मास्यैपरमापूर्वशेषतयोत्तरवेदिं विदधत्पर्वचतुष्टयेऽप्यविशेषेण विधत्ते । 'न वैश्वदेव' इति वाक्यद्वयेन पर्वद्वये निषेधात् । विधिनिषेधयोर्वाक्यप्रमितत्वात्तुल्यत्वेन विकल्पः प्राप्नोति । ततश्चैवमर्थः संपद्यते । 'उपात्तं वपंतीति' वाक्यं, वैश्वदेव- ३०

१ ख–स्वपुत्रांशसमानग्रहणम् । २ मी सू. ७-३-१९ । ३ क–गार्हपत्यादाहवनीयादिष्वग्निनयनं । ४ क–प्रकृ ५ क–विधानेनेत्युत्तरवेदेरपि । ६ क ख—चातुर्मास्यापरमापूर्वक.

शुनासीरीययोः पर्वणोर्निषेधकं 'न शुनासीरीय' इत्यादिवाक्यद्वयमपेक्ष्य यदा निषेधकवाक्यद्वयार्थानुष्ठानं नास्ति तदैवोत्तरवेदिं विधत्ते, इतरपर्वद्वये तु नित्यवदुत्तरवेदिं विधत्त इति।

तथा च द्वयोः पर्वणोः वाक्यांतरमनपेक्ष्योत्तरवेदिविधिः। ईतरयोस्तु पर्वणोः वाक्यांतरापेक्षया पक्षे विधिरिति विधिवैषम्यापत्तिः तस्मात् सौमिकप्रणयनसदृशप्रणयनविधिरिति।

५ राद्धांतस्तु विधायकप्रत्ययश्रवणात्प्रणयनं तावद्विधेयं विधेयत्वादेव दर्शपौर्णिमासिकप्रणयनादन्यत् प्रणयनमेतदिति गम्यते। न चैवं सति प्रणयनप्रवृत्तिमात्रमेव आतिदेशिकं न भवति किंत्वौपदेशिकमिति प्रवृत्तौ न कोऽपि विशेष इति वाच्यम्। तस्मात् 'द्वाभ्यां यंती' त्यादिकस्यार्थवादस्य विध्यन्वयेन तदेकवाक्यतया प्रामाण्योपपत्तेः। तथा चार्थवादबलेन मध्यमपर्वद्वय उत्तरवेदेरुपसंहारादनुष्ठानेऽपि विशेषोऽस्तीत्युत्तराधिकरणे राद्धांतेषु गुरुणा वक्ष्यते। ततश्च 'न वैश्वदेव उत्तरवेदि-

१० मुपकिरंति न शुनासीरीये' इति वाक्यद्वयमाद्यंतयोः पर्वणोर्नित्यानुवादकम्। 'उपात्तं वपंती' तीदं वाक्यं मध्यमपर्वणोरेवोत्तरवेदिप्रापकमिति पर्वचतुष्टये उत्तरवेदिप्राप्तेरभावाद्विधिवैषम्यमपि नास्तीति प्रणयनांतरमेव विधीयत इति प्रथमोत्तमयोः न प्रणयनमुत्तरवेदिप्रतिषेधात्।

'द्वयोः प्रणयती'त्यादि श्रूयते। तत्र सशंयः। किमिदं पर्वद्वये विधीयमानं प्रणयनमाद्यंतयोः पर्वणोः उत मध्यमयोरेवेति 'न वैश्वदेवे न शुनासीरीय' इत्याद्यंतयोरुत्तरवेदिप्रतिषेधादसत्यां च प्राप्तौ

१५ प्रतिषेधानुपपत्तेराद्यंतयोः पर्वणोः प्रणयनमिति पूर्वपक्षः। 'ऊरू वा एते यज्ञस्य यद्वरुणप्रघासश्च साकमेधश्चेति तस्माद्द्वाभ्यां यंती' त्याद्यर्थवादस्य द्वयोः प्रणयंतीत्यस्य च मध्यमपर्वघटितत्वात् तत्रैव प्रणयनं; 'न वैश्वदेव उत्तरवेदिमुपकिरंति न शुनासीरीय इति' आद्यन्तयोः पर्वणोर्नित्यानुवाद इति सिद्धान्तः।

अथ प्रकृतमनुसरामः। चातुर्मास्येषु द्वयोः प्रणयंति इति प्रणयनं विहितम्। तत्र सौमिकप्रणयनसदृशप्रणयनं[3] विधीयते इति पूर्वः पक्षः। सौमिकप्रणयनवत्प्रणयनं कर्तव्यमित्यभिप्रायः। एवं स्थिते

२० प्रणयनविधिः प्रतीयते न सौमिकवदित्यतिदेशप्रतीतिः। एवं च तद्वत् कर्तव्यमित्यतिदेशे को हेतुरित्याशंक्य न वैश्वदेवे न शुनासीरीये इत्येतदुत्तरवेदिप्रतिषेधकवाक्यद्वयमुत्तरवेदिप्राप्तिमपेक्षते। प्राप्तिश्च सौमिकवदित्यतिदेशात्तत्रत्यसकलधर्मप्राप्ता उत्तरवेदिरपि सिध्यतीति प्रतिषेधकवाक्यद्वयमेव सौमिकप्रणयनसदृशप्रणयनविधाने हेतुरिति पूर्वपक्षिणोऽभिप्रायमाह। **द्वयोः प्रणयंतीत्यत्र पूर्वपक्षिणेत्यादिना वेदिप्रतिषेधे दर्शित इत्यंतेन।**

२५ प्रतिषेधः प्राप्तिमपेक्षते। सा च सौमिकप्रणयनातिदेशमंतरेणापि चातुर्मास्यप्रकरणपरिपठते-'नोपात्तं वपंती'त्याद्यंतयोर्वैश्वदेवशुनासीरीयपर्वणो 'रुपात्तमिति' प्राप्ताया उत्तरवेदे 'र्न वैश्वदेव' इत्यादिवाक्येन प्रतिषेधसिद्धेः सौमिकप्रणयनवत्प्रणयनं कर्तव्यमिति पूर्वपक्षो न घटत इति पूर्वपक्षं निराकरोति। **राद्धांतैकदेशिनेत्यादिना प्रतिषेधोऽयमित्यभिहित इत्यंतेन।**

नन्वेवमुपात्तं वपंतीति वाक्यं पर्वचतुष्टयेऽप्युत्तरवेदिं विधत्ते न वैश्वदेव उत्तरवेदिमुपकिरंति न

३० शुनासीरीय इति पर्वद्वय उत्तरवेदिं निषेधतः। उत्तरवेदिविधिनिषेधयोरुभयोरपि वाचनिकत्वेन द्वयोः पक्षे उत्तरवेद्यनुष्ठानमिति विकल्पः प्रसंगः। तत एवैवं स्यात्। 'उपात्तं वपंती' तीदं वाक्यं आद्यंतयोः पर्वणोः न वैश्वदेव इत्यादिवाक्यद्वयेन यदोत्तरवेदिर्न निषिध्यते तदा तद्वाक्यमपेक्ष्य पक्ष उत्तरवेदिं विधास्यति। मध्यमयोस्तु पर्वणोर्निषेधवाक्यानपेक्षयैव नित्यवत्प्रापयतीति सकृदाम्नातं वाक्यमेकत्र पक्षे

---

१ क-इतरपर्वणयोः। २ ख-अन्यरूप। ३ क-सौमिकप्रणयनं विधीयते। ४ख-उत्तरवेदेरपि। ५पृ. ९४-पं. १०-१२

प्रापकमेकत्र नित्यवदिति एकरूपप्रवृत्त्यभावाद्विधिवैषम्यं स्यादिति पूर्ववादीराद्धांतैकदेशिमतं निराकरोतीत्याह । **पुनः पूर्वपक्षिणेत्यादिना विधिवैषम्यं दर्शितमित्यंतेन ।**

राद्धांतैकदेशिमतानंतरं मुख्यराद्धांतस्योचितत्वात् तद्भ्रांतिर्मा भूदिति पुनः पूर्वपक्षिणेत्युक्तिर्द्रष्टव्या । राद्धांतमाह । **राद्धांतेऽपीति ।** एकदेशिमतानुसारेणाभिधीयमाने विधिवैषम्यं दुर्वारमिति 'द्वयोः प्रणयंति तस्माद्द्वाभ्यां यंति ऊरू वा एते यज्ञस्ये' त्याद्यर्थवादवाक्यस्य मध्यमपर्वद्वयघटितत्वेन ५ तत्रैव प्रणयनविधिः यत्र प्रणयनं तत्रैवोत्तरवेदिरिति उपात्तं वपंतीत्युत्तरवेदिविधानमप्यर्थवादानुसारेण तत्रैव मध्यमपर्वणोरिति। आद्यंतयोरुत्तरवेदिप्राप्त्यभावात् न वैश्वदेव इति वाक्यद्वयमाद्यंतयोः पर्वणोर्नित्यानुवादकं नांतरिक्षे न दिव्यग्निश्चेतव्य इतिवदित्यर्थः ।

अनेन चातुर्मास्येष्वित्यादिग्रंथजातेनैतदुक्तं भवति । यथा तत्रैकदेशिमते विधिवैषम्यं दोषः तथा 'पत्न्यः कार्याः समांशिकाः' 'माताऽप्यंशसमं हरेदि' त्यत्र च सकृदाम्नातावंशसमशब्दावपि भर्तृ- १० बहुधनत्वपक्षे 'भरणं चास्य कुर्वीरन्नि' त्यादिवाक्यपर्यालोचनया जीवनोपयुक्तधनपरौ, स्वल्पधनत्वे तु वाक्यांतरनैरपेक्ष्येण नित्यवत् पुत्रांशसमांशपराविति **श्रीकरा**द्युक्तव्याख्यानेऽपि विधिवैषम्यदोषो दुर्वार इति ।

अन्यैः कैश्चिदपि पत्नीदुहितर इत्यादीनां वाक्यानां व्यवस्था दर्शिता तां निराकर्तुं दर्शयति । **यदपि मतमित्यादिना । मनु**वचनशंखवचनयोस्तात्पर्यार्थमाह । **अपुत्रस्य धनं भ्रातृगा-** १५ **मीति । नारद**वचनस्य तात्पर्यार्थमाह । **भरणोपयुक्तं ( धनं ) पत्नी लभत इत्यपि स्थितमिति ।** एवमुक्तरित्याऽपुत्रप्रमीतभर्तृरिक्थभाज इतरे भ्रातरः तत्स्त्र्यपि जीवनोपयुक्तं धनं लभत इत्येवं व्यवस्थिते सति यस्या भर्ता अपुत्रको बहुधनश्च तस्मिन् प्रमीत एतद्वयमपि घटते, यद्भ्रातरो रिक्थभाजो पत्नी च भरणमात्रं लभत इति ।

अथ तु पत्न्यै जीवनायैवालं तद्धनं जीवनायापि नालं वा । तदा **मनुशंख**वचनप्रामाण्या- २० द्भ्रातरो गृह्णंति उत **नारद**वचनात् पत्न्येव गृह्णातीति संशये तन्निवृत्त्यर्थं **योगीश्वरेण** अनुपसंजातविरोधित्वेन पूर्वबलीयस्त्वात् पत्न्येव गृह्णातीति वक्तुं क्रमप्रतिपादकं 'पत्नी दुहितर' इत्यादिवचनमारब्धमित्याह । **एवं स्थिते बहुधन इत्यादिना इत्यारब्धमित्यंतेन ।** सर्वदा पत्न्येवापुत्रधनभागिनी न भवतीत्यर्थः ।

निराकरोति । **तदप्यत्रेति । आचार्यो विश्वरूपा**चार्यः । 'पिता हरेदपुत्रस्येत्यस्य' २५ **मनु**वचनस्यान्यार्थत्वादित्यर्थः ।

तदेवान्यार्थं दर्शयति **यतः पिता हरेदित्यादिना ।** अयमर्थः । दायग्रहणे पित्रादिक्रमप्रतिपादनपरमेतद्वचनं न भवति । येन पूर्वोक्तव्यवस्था स्यात् । अपि तु पित्रादयोऽपि रिक्थग्रहणेऽधिकारिणः इति अधिकारप्रदर्शनपरं 'रिक्थं भ्रातर एव वेति' वाशब्देन विकल्पप्रतीतेः समयोर्हि विकल्पः । पितुरभावेऽन्येऽधिकारिण इति क्रमस्य विवक्षितत्वे पितुः प्राधान्यप्रतीतेस्तस्य चान्येषां ३० च समत्वाभावाद्विकल्पस्मरणमनुपपन्नम् । एवमधिकारप्रदर्शनपरत्वे **मनु**वचनस्य पत्नीं दुहितरं वा गणयित्वा पिता 'हरेदपुत्रस्येति' पितृभ्रातृगणने कृतेऽपि पितृभ्रात्रोरधिकारो घटत एवेति जीवनोपयुक्तं ततो न्यूनं वा धनं पत्न्या एवेत्यभिधानार्थं 'पत्नी दुहितर' इति वचनमित्युक्तिरनुपपन्नेति ।

---

१ ख-अत्र । २ पृ. ६४ पं. २०-२१ । ३ क—जीवनोपयुक्ततो न्यूनं च धनं ।

स्वर्यातस्य ह्यपुत्रस्येति **शंखवचनमप्याचार्येणान्यथा व्याख्यातं तद्दर्शयति । शंखवचन-मपि संसृष्टभ्रातृविषयमिति ।**

विभागानंतरं पुनरपि स्नेहादिवशादेकीभूयस्थितभ्रातृविषयमित्यर्थः । **अस्माद्वचनात्प्रक-रणादिति ।** 'पत्नीदुहितर' इत्यस्माद्वचनादित्यर्थः । किंच पत्नीदुहितर इत्यस्याल्पधनं पत्नी
५ गृह्णातीत्येवमर्थपरत्वे । 'एषामभावे पूर्वस्य धनभागुत्तरोत्तर' इति वाक्यशेषोऽपि । 'भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयादि' त्यादिवाक्यपर्यालोचनया यदि चेद्भरणमात्रोपयुक्तमेव धनं तदैव पत्नी तदभावे दुहिता गृह्णाति न बहुधनत्व इति । पक्षे अनित्यवद्धनग्रहणं पत्न्या दुहितुश्च प्रापयति । पितृभ्रातृ-तत्पुत्रादिषु तु वाक्यांतरनिरपेक्षेणैव नित्यवद्बोधयति रिक्थग्रहणमिति ।

पूर्वोक्तो विधिवैषम्यदोषस्तदवस्थ एवेति आह । **धनभागुत्तरोत्तर इत्यस्य चेत्यादिना ।**
१० अस्मादेव वचनादिति । **हारीत**वचनादित्यर्थः । **एतदेवाभिप्रेत्योक्तमिति ।** अनाशंकितव्य-भिचारायाः सकलग्रहणमेवेत्यर्थः । उपसंहरति **तस्मादिति ।**

दुहितर इति । अत्र दुहितृप्रकृत्या स्त्र्यपत्यमात्रमभिधीयते तत् च स्त्र्यपत्यत्वं भिन्नजातीयेष्वप्य-विशिष्टम् । प्रत्ययेन च जात्याऽपि बहुत्वं प्रतीयते । तच्च विसदृशेष्वप्यविरुद्धं अतः प्रकृतिप्रत्ययाभ्यां समानासमानजातीया दुहितरः प्रतीयंते । ताश्चतुस्त्रिद्व्येकभागाः स्युरित्यनेन क्रमेण समविषमांशभाजो
१५ भवंतीत्याह । **दुहितर इति बहुवचनमिति । अंगादंगात्संभवतीति ।** सर्वेभ्योऽङ्गेभ्य उत्पद्यत इत्यर्थः । **तथा प्रतिष्ठिताप्रतिष्ठितासमवाय इति ।** प्रतिष्ठिताः सधनाः अप्रतिष्ठिता निर्धनाः । **स्त्रीधनं दुहितॄणामिति ।** अविवाहितानां दुहितॄणां स्त्रीधनम् । तदभावे निर्धनानामित्यर्थः ।

नन्वेतद्गौतमवचनं मातृधनविषयं न पितृधनविषयमित्यत आह । **पितृधनेऽपि समान-त्वादिति ।** अयमर्थः । 'स्त्रीधनं दुहितॄणामिति' स्त्रीधनोद्देशेन दुहितृसंबंधविधानात् उद्देशविशेषण-
२० त्वेन स्त्रीत्वस्याविवक्षितत्वान्न्यायस्य साधारणत्वमिति ।

ननु 'पत्नी दुहितर' इत्येतद्वचनं पत्न्यभावे पुत्रिकाया दुहितुर्धनसंबंधं ब्रवीति । न तु दुहितृ-मात्रस्य । येनानूढाभावे अप्रतिष्ठिता, तदभावे प्रतिष्ठितेत्येषु क्रमः स्यादित्याशंक्य परिहरति । **न चै-तत्पुत्रिकाविषयमित्यादिना ।** पुत्रप्रकरण एवाभिहितत्वात् पुनरभिधानमनुपपन्नमित्यर्थः ।

'पत्नी दुहितरश्चैव' त्यत्र **च**शब्दमभिप्रायतो व्याचष्टे । **चशब्दाद्दुहित्रभावे इति । अपुत्र-**
२५ **पौत्रसंतान इति ।** पुत्रपौत्रादिरूपः संतानः तदभावः अपुत्रपौत्रसंतानः । तस्मिन् सति पुत्रपौत्र-दुहित्रभावे धनं दौहित्रा एव पौत्रस्थानीया अवाप्नुयुः । **पूर्वेषां** मातामहादीनां **स्वधाकारे** श्रा-द्धादौ **दौहित्रकाः** पौत्राः मता. संमताः । त एवाधिकारिणः । श्राद्धादौ दौहित्रा एव पौत्रस्थानी-या इत्यर्थः । **अकृता वा कृता वाऽपीति ।** पुत्रिकात्वेन कृता वाऽकृता वा दुहितृत्वात्सदृशात्स-वर्णाग्र्यं सुतं लभते तेन सुतेन मातामहः पौत्री पौत्रवान् । स तस्य धनं गृह्णीयात् पिंडमपि
३० दद्यादित्यर्थः ।

'पितरावि' त्यत्रैकशेषोऽभिप्रेत इत्याह । **पितरौ मातापितराविति ।** ननु दुहितृदौहित्रा-भावे पित्रोर्धनभाक्त्वं विधीयते तत्रैकशेषत्वात् मिलितयोर्वा धनग्रहणं उत प्रत्येकं तत्राप्यैच्छिको वा क्रमः उत प्रतिनियतो वा क्रम इत्याकांक्षायामाह । **यद्यपीति ।** अयमर्थः । '**चार्थे द्वंद्व**' **इतरेतर-**

१ क-तस्मिन्नसति । २ व्या. सू. (२।२।२९)।

योगसमाहारयोर्विधीयमानो द्वंद्वसमास उभयपदार्थप्रधानो भवति । अत एव पूर्वपदार्थरूपमुत्तरपदार्थरूपं चाधिकरणम् युगपत् द्वंद्वसमासाभिधाने । अपरथा उभयपदार्थप्राधान्याभावात् ।

एवं स्थिते पिता मात्रेत्येकपदलोपेनान्यतरापितृशब्दावैशेषस्य पितरावित्यस्यापि युगपदधिकरणवचनत्वेन यद्यपि समासे क्रमो न प्रतीयते तथापि माता च पिता चेति विग्रहवाक्ये अभ्यर्हितं पूर्वमिति मातृशब्दस्य पूर्वनिपातात् यदात्वेकशेषाभावः तदा समासेऽपि मातापितरौ इति पूर्वं मातृशब्दस्य श्रुतेरुभयथाऽपि मातृशब्दस्य पूर्वमुच्चारितत्वाच्छब्दोच्चारणक्रमेणार्थक्रमप्रतीतेः । प्रकृतेऽपि धनग्रहणे क्रमापेक्षायां क्रमांतराप्रतीतेर्विग्रहसमासप्रतीतक्रमानुसरणेनैव मात्रभावे पितुर्धनसंबंधो वेदितव्य इति ।

मातुः स्वपुत्रान्प्रत्यसाधारणत्वेन पित्रपेक्षयाऽत्यंतसंनिहितः संनिकर्षः । पितुस्तु सवर्णाया जातेभ्यः पुत्रेभ्यः क्षत्रियादिस्त्रीभ्यो जातपुत्रेभ्यश्च पितृत्वं साधारणमिति मात्रपेक्षया साधारणत्वाकारेण व्यवहितः संनिकर्ष इति मातुरधिका प्रत्यासत्तिः । ततश्च 'अनंतरः सपिंडाद्य' इत्यनेन यः सपिंडात्संनिहितः तस्य सपिंडसन्निहितस्य धनं सपिंडस्य सन्निहितस्य धनं भवेदिति विहितत्वात् मातैव प्रथमं धनभागिनीत्याह । **किंच पिता पुत्रांतरेष्वित्यादिना** । यद्यपि पुंत्रे पित्रवयवबाहुल्यात् मात्रपेक्षया प्रत्यासत्त्यतिशयः एतदेव च प्रत्यासत्तेर्मूलकारणं, तथापि पुत्रांतरेषु पितुः साधारणत्वेन मातुरसाधारणत्वेन चैवंविधाव्यवहितसंनिकर्षसध्रीचीनया* पितरावित्येकपदात्मिकया श्रुत्या स्वविग्रहवाक्यांतर्गतक्रमस्योपस्थापितत्वादेष एव क्रमो ज्यायानित्यभिप्रायः ।

नन्वनुगतं हि कारणं लोके दृश्यते 'अनंतरः सपिंडाद्य' इत्यस्मिन् वचने सपिंडपदोपादानेन सपिंडेष्वेव प्रत्यासत्तिर्धनग्रहणे कारणं न समानोदके । तत्र कारणांतरं वक्तव्यम् । तदेव सपिंडेष्वपि भवतु किमनया प्रत्यासत्त्येत्याशंक्य सपिंडपदं समानोदकानामप्युपलक्षकम् । अतोऽनेनैव वचनेनोभयत्र प्रत्यासत्तिरेव धनग्रहणे कारणमित्याह । **न च सपिंडेष्वेवेत्यादिना । रिक्थं भ्रातर एव वेति** । अत्र वाशब्दो व्यवस्थितविकल्पार्थः । मातुरभावे पिता रिक्थग्राहीत्युक्तम् । तदन्यैरन्यथाकृतं तत्परोक्तं निराकर्तुं सिंहावलोकनन्यायेनानुभाषते । **यत्पुनर्धारेश्वरेणेत्यादिना** ॥

अयमभिप्रायः । पित्रा गृहीतं तद्धनं पितृधनमिति मूर्धावसिक्तजातीयपुत्राणामपि भवति, पितामह्या गृहीते तु मातृधनत्वेन तद्दुहितृणां तदभावे दौहित्रपुत्रादीनां क्रमाद्भवतीति सजातीयानामेव भवेदित्येवंरूपयुक्त्युपबृंहित**मनु**वचनेन मात्रभावे पितामही गृह्णीयादिति न्यायविद्भिश्वरूपाचार्यो नांगीकुरुत इति निराकरोति । **एतदप्याचार्य इति** ।

भवेदेवं यदि परंपरया विजातीयपुत्रग्रहणे दोषः । न च तथा । अपि तु तेऽपि वचनेनैव रिक्थभाज इत्येकदेशिमतनिराकरणे हेतुमाह । **विजातीयपुत्राणामपीति** । 'मातर्यपि च वृत्तायां पितुर्माता हरेद्धनमिति' **मनु**वचनं न क्रमपरम् । अपि तु पितामह्यपि धनग्रहणेऽधिकारिणीत्येवमधिकारप्रदर्शनपरं व्याख्येयम् । अथवा मात्रनंतरं पितृभ्रातृतत्सुताः क्रमेण धनभाजः एतेषामप्यभावे पितामही गृह्णीयादित्येवमध्याहृत्य व्याख्येयम् । अथवा नाध्याहारापेक्षा 'पितुर्माता हरेद्धनमि' त्युक्त्या तत्रत्यपितृशब्दः पितरं तत्कुलभूतं पुत्रपौत्रं च लक्षयति । पितुर्मातेत्येतत्पदद्वयं तु तदनंतरं पितामह्यौ धनसंबंधं बोधयतीति गम्यते । यतः सूत्रप्राया प्राचामुक्तिः । अत एव 'पितामहीति नोपात्तम्' इति ।

---

१ क-युगपत्न्नद्वंद्वसमासोऽत्रिधाने । २ क-अविशेषस्य । ३-पूर्वोक्तनिपातात् । ४ क-जातिपुत्रेभ्यः । ५ क-पुंत्रात । ६ क-तत्परित्यक्तं । ७ कख-मातामह्या । * कख-संनिकर्ष ।

परमतं निराकृत्य यदुक्तं पित्रभावे भ्रातरो धनभाज इति तदिदानीं विशेषकथनेनानु-संधत्ते । **भ्रातृष्वपि सोदरा इत्यादिना । तत्पुत्राः पितृक्रमेण धनभाज इति ।** 'अनेकपितृकाणां तु पितृतो भागकल्पने' त्यनेन न्यायेन भ्रातृसुतानामेकत्वे द्वित्वे बहुत्वेऽपि स्वपितृद्वारा भागकल्पना न स्वरूपद्वारेत्यर्थः । **भ्रातृभ्रातृपुत्रसमवाये इति** । मृतस्य भ्रातरः
५ केचन संति । तथा प्रमीतपितृका भ्रातृपुत्राश्च । तत्र भ्रातॄणां तत्पुत्राणां च सद्भाव इत्यर्थः । **भ्रात्रभावे भ्रातृपुत्राणामिति** । 'पितरौ भ्रातरस्तथा तत्सुता गोत्रजा' इति भ्रात्रभावे तत्पुत्राणामधिकारप्रतिपादनादित्यर्थः । यदा त्व**पुत्रे भ्रातरि स्वर्याते इत्यादि** । अयमर्थः । बहुभ्रातृषु विभक्तेषु सत्सु तेष्वेकोऽनपत्योऽपत्नीको मृतः पितरौ च न स्तः तदा तत्र भ्रातॄणां तद्धनग्रहणेऽधिकारे प्राप्ते भ्रातृधनस्य विभागात्पूर्वमेवान्यो भ्राता मृतः तस्य पुत्राः संति तादृशस्थले भ्रातृभ्रातृपुत्रसम-
१० वाये भ्रातॄणामेव धनमित्युक्तत्वात् भ्रातर एव विभज्य न गृह्णीयुः । अपि तु मृतभ्रातृपुत्रा अपि तत्पितुर्धनसंबंधस्य प्राप्तत्वात् पितृद्रव्ये पुत्राणामधिकारात् । इयांस्तु विशेषः तत्र भ्रातृभ्यो भ्रातृपुत्राणाम् । भ्रातरः स्वीयानंशान् लभंते भ्रातृपुत्रास्तु स्वपित्रंशमिति । **गोत्रजाः पितामही सपिंडाः समानोदकाश्चेति** । पितामही च सपिंडाश्च समानोदकाश्चेति पदविभागः ।

ननु पितामह्या मात्रनंतरं धनग्रहणे युक्ते भ्रातृसुतानंतरं धनग्रहणोक्तिः कथमित्याशंक्याह
१५ **मातर्यपि च वृत्तायां पितुर्माता धनं हरेदिति मात्रनंतरं इत्यादिना** । अयमभिसंधिः 'मातर्यपि च वृत्तायां' इत्यस्य **मनु**वचनस्य पूर्वोक्तयुक्त्या धनग्रहणाधिकारप्राप्तिमात्राद्यर्थपरत्वे क्रमे तात्पर्याभावात् । पुत्रपौत्राभावे 'पत्नी दुहितरश्चैवेति' पत्नी दुहितृदौहित्रा धनभाज इत्यभिधा 'पितरौ भ्रातरस्तथा तत्सुता' इति मातापित्रोरव्यवहितत्वात्तदनंतरमेकगोत्रत्वे सति स्वपितृकुलत्वेनात्यं तांतरंगत्वादानंतर्यपाठा 'त्पूर्वाभावे परः पर इति' वाक्यशेषाच्च भ्रातृतत्सुतपर्यंतानां संदष्टक्रमत्वे
२० तेषां मध्ये पितामह्या धनग्रहणविषये ऽप्रवेशयन् भ्रातृसुतानंतपर्यंतमाकृष्यापनुन्ना* सती पिताम 'मातर्यपि च वृत्तायां पितुर्माता धनं हरेदिति' प्रातीतिकक्रमस्यातःपरं बाधहेत्वभावात् भ्रातृसु नंतरं गोत्रजा इति पाठा**न्मनु**वचनस्थप्रातीतिकक्रमानुसारेण पितामहाद्यपेक्षया पितामह्या सन्निहितत्वात् गोत्रजातत्वाच्च भ्रातृसुतानंतरमेव रिक्थभागिनीति ।

अत्र कैश्चिदेवमभिहितं । दौहित्रानंतरं पिता माता च धनग्रहणे युगपदधिकारिणौ उभयो
२५ सन्निहितत्वात् अत एव तौ विभज्य गृह्णीयाताम् । न तु माता पूर्वं तदभावे पितेत्ययं क्रमः । अने वाभिप्रायेण **याज्ञवल्क्येन** पितरावित्येकशेषः कृतः । एकशेषे क्रमाप्रतीतौ च पांचमिकन्याय उदाहृत तद्यथा—पंचमप्रथमपादाधिकरणं । 'मुख्यक्रमेण वांऽगानां' तदर्थत्वात् 'सारस्वतौ भवत' पुरोडाशहविष्कं यागद्वयं विहितम् । सरस्वती देवता अस्य सारस्वतः पुरोडाशः । सरस्वान् देवता सारस्वतः तौ सारस्वतावित्येकशेषः । एवं स्थिते स्त्रीदैवत्ययाज्यानुवाक्यायुगलमाम्नायपाठे
३० पठितं । ततश्च पुंदैवत्ययाज्यानुवाक्यायुगलं पठितमिति मंत्रपाठानुसारेण यागानुष्ठानक्रमः एता धिकरणविषयमूलविभागः । इतःपरमधिकरणार्थचिंता । पुरोडाशयागस्येष्टिविकृतत्वादतिदेशेन मुष्टीन् निर्वपतीति विहितो निर्वापः प्राप्तः ।

तत्र संदेहः । किमनियमेन निर्वापः कर्तव्य उत स्त्रीदैवत्यं निरूप्य ततः पुंदैवत्यनिर्वाप इ तत्रातिदेशप्राप्तनिर्वापक्रमाप्रतीतेरनियमेन निर्वाप इति प्राप्तेऽभिधीयते । मुख्ययागक्रमेणैव नि

१ क-तदुक्तं । २ क-तदा भ्रातॄणां । ३ क-मातृधनग्रहणे । ४ क-तनु । * क—मपकृष्य ।

कर्तव्यः । मुख्ययौगयोस्तु याज्यानुवाक्यायुगलपाठानुक्रमेणानुष्ठानक्रमः । अतः प्रमितक्रमाविरोधाय मुख्यक्रमानुसारेणैव निर्वापानुष्ठानक्रम इति राद्धांतः । एवमत्राधिकरणे सारस्वतौ भवत इति अतिदेशवाक्ये एकशेषत्वेन क्रमाप्रतीतेर्ऽर्थतो याज्यानुवाक्यायुगलपाठक्रमेण यागयोरनुष्ठानक्रमोऽङ्गीकृतः । अतोऽत्रापि 'पितरौ भ्रातर' इति वचने एकशेषत्वेन पितरावित्यत्र क्रमाप्रतीतेः सामान्यतो दौहित्रानंतरं मातापित्रोर्युगपद्धनप्राप्तिः । तदभावे भ्रातॄणां तदभावे तत्सुतानामिति प्राप्ते न्यायमूलमिदं **योगीश्वर**वचनं **कात्यायन**वचनेनापोद्यते । सामान्यन्यायापेक्षया वचनस्य प्राबल्यात् । ५

वचनं च 'विभक्ते संस्थिते द्रव्यं पुत्राभावे पिता हरेत् ॥ भ्राता वा जननी वाऽथ माता वा तत्पितुः क्रमात्' । अस्य चार्थ एवमभिहितः । पुत्रग्रहणमासन्नतरोपलक्षणार्थम् । तेन पुत्रपौत्रपत्नीदुहितृदौहित्राभावे प्रथमं पिता धनभागिति ।

**मिताक्षराकार**व्याख्याने दूषणान्यप्यभिहितानि । तद्यथा । मातुः स्वपुत्रेष्वसाधारणत्वात् पितुस्तु पुत्रांतरेषु साधारणत्वाच्च मातुरवाभ्यर्यात्सत्यतिशये इति यदुक्तं तदसत् । न हि जननीजनकयोर्जन्यं प्रति सन्निकर्षतारतम्यमस्तीति । अन्यच्च । गोत्रजा इत्यनेन पितामही सपिंडाश्च समानोदकाश्चोच्यंते । एवं च 'पितरौ भ्रातरस्तथेति' पुत्रादीनां भ्रातृसुतपर्यंतानां बद्धक्रमत्वेन मध्ये पितामह्याः प्रवेशाभावेन 'मातर्यपि च वृत्तायां पितुर्माता धनं हरेदिति' मात्रनंतरं पितामही न धनं प्राप्नोति । अपि तु उत्कृष्टा सती भ्रातृसुतानंतरं प्राप्नोतीति यदुक्तं, तदप्यसत् । गोत्रजा इति सरूपैकशेषत्वेन पुंसामेव ग्रहणात् । तथा च पूर्वोक्तभ्रातृसुतैः सह गोत्रजानां पुरुषत्वेन बद्धक्रमत्वाविशेषेण तत्रापि पितामह्याः प्रवेशाभाव इत्यादीनि । एतदखिलमप्यचतुरस्रम् । तथा हि । न तावदेकशेषे क्रमाप्रतीतिः विग्रहवाक्ये चानेकशेषपक्षे च मातुः पूर्वपाठादेव क्रमप्रतीतेः । ननु 'सारस्वतौ भवत' इत्युक्तं इति चेत् न, तन्न्यायविरोधाभावात् । तथाहि सारस्वतश्च सारस्वतश्च सारस्वताविति 'सरूपाणामेकशेष एकविभक्तौ' इति सरूपैकशेषत्वात् क्रमस्तत्र विग्रहवाक्येऽपि न प्रतीयते अतः कोऽत्र क्रम इत्याकांक्षायां श्रौतो मंत्रक्रमो युक्त इति याज्यानुवाक्यायुगलक्रमेण यागानुष्ठानक्रमो निरूपितः न तु सर्वत्रैकशेषे क्रमप्रतीत्यभाव इत्यभिप्रायः । प्रकृते तु 'पितरा'वित्यत्र 'पिता मात्रेति' विजातीयैकशेषत्वाद्विग्रहवाक्येऽवश्यं क्रमप्रतीतेः स क्रमो ग्राह्य एव । १० १५ २०

यच्चोक्तं । नहि जननीजनकयोर्जन्यं प्रति सन्निकर्षतारतम्यमस्तीति तदपि स्थवीयः । गर्भधारणपोषादिभिरत्यावश्यकत्वेन जन्येऽतिशयांतरमुत्पादयति माता । पिता तु निषेकक्रदेव । अदृष्टात् दृष्टस्यैव प्राबल्यात् दृष्टोपकाराधिक्यान्मातुः सन्निकर्षातिशयोऽस्तीति । २५

यदपि चोक्तं गोत्रजा इति सरूपैकशेषत्वात् भ्रातृतत्सुतादिभिः सह बद्धक्रमत्वात् पितामह्या भ्रातृसुतानंतरमपि प्रवेशाभाव इति तदसाधु । विजातीयानामपि स्त्रीणां पुंसां च गोत्रजाश्च गोत्रजाश्च इत्येकविभक्त्यंतत्वाविरोधात् । जातिद्रव्यगुणा इतिवत् । नापि बद्धक्रमता । पित्रादिभ्रातृसुतानां गोत्रजानां च न बद्धक्रमता । अतः पत्न्यभावे दुहिता तदभावे दौहित्रस्तदभावे माता तदभावे पिता तदभावे भ्रातरस्तदभावे भ्रातृसुतास्तदभावे पितामहीति च क्रमः । यथाह **बृहस्पतिः** । 'भार्यासुतविहीनस्य तनयस्य मृतस्य तु । माता रिक्थहरी ज्ञेया भ्राता वा तदनुज्ञयेति' । ३०

१ दुर-प्रतीतेर्यतो । २ क-चाथ । ३ पितृष्वसु । ४ 'मातुरेव प्रत्यासत्त्यतिशये' इति समीचीनः पाठः । ५ "सरूपाणामेकशेष एकविभक्तौ" । व्या. सू. १।२।६४॥ । ६ क-ख-कोधा । ७ क-ख-मंत्रक्रमोपयुक्त । ८ व्या. सू. १।२।७०॥ । ९ ख-रिक्थहरी ॥

अस्यार्थः। सुतविहीनस्य मृतस्यास्य रिक्थहरी भार्या। तदभावे तनया। तदभावे तत्पुत्रः। तदभावे माता। मात्रनुज्ञया मृतस्य भ्राता वा। भ्रात्रा गृहीतेऽपि मात्रनुज्ञया गृहीतत्वादेव मात्रा गृहीतमेवेति मातुरेव पितुः पूर्वं रिक्थभाक्त्वमिति। केचन **बृहस्पति**वचनेऽपि तनयशब्दो दौहित्रपितॄणामुपलक्षक इति कथयंति। तन्मंदं। अनुपपत्त्या हि लक्षकत्वं शब्दानाम्।
५ एवं च सर्वत्राविवादेन दुहितुरभावे दौहित्रस्य धनभाक्त्वं वचनेष्वविशिष्टमिति दुहित्रनंतरं वचनांतरविरोधरूपया दुहितृसंततिरूपया चानुपपत्त्या दुहितृदौहित्रयोरेवोपलक्षको न तु पितुः। तावतैवानुपपत्तेः परिक्षीणत्वात्। परिक्षयश्च **मानवा**दिवचनांतरेषु पितुर्दौहित्रानंतर्यस्यानियतत्वेन। अतो यावत्यर्थे लक्षितेऽनुपपत्तिः शाम्यति तावानेव तनयशब्देन लक्ष्यत इति। न पितुर्दौहित्रानंतरं प्रतीतिः।

यच्च **कात्यायन**वचनम् 'विभक्ते संस्थिते द्रव्यं पुत्राभावे पिता हरेत्। भ्राता वा जननी
१० वाऽथ माता वा तत्पितुः क्रमात्' इति। अत्रापि वाशब्दस्य श्रवणान्न क्रमपरता। अपि तु वचनोपात्ता एतेऽधिकारिण इत्यधिकारमात्रप्रदर्शनपरतैव। स्वाम्याख्ये सिद्धरूपे वस्तुनि विकल्पाभावादपिशब्दार्था वाशब्दाः। न तु परोक्तरीत्या पूर्वपूर्वाभावपरा वाशब्दाः। अभावे वाशब्दस्य शिष्टप्रयोगाभावात्। अप्यर्थे प्रयोगाच्च।

अथशब्दोऽप्यानंतर्यपरो न मात्रनंतरमेव पितामह्या धनसंबंधं बोधयति। वाक्यस्योक्तरीत्या
१५ क्रमपरत्वाभावात्। अतो भ्रातृसुतानतरमेवाविरोधात् धनसंबंधं बोधयतु। तथापि स्वार्थाहानात् क्रमादिति च पदं 'पूर्वाभावे परः परः' इति **योगीश्वर**वचनवाक्यशेषपर्यालोचनया तत्रत्यमविरुद्धमेतत्क्रमं बोधयति न स्ववाक्यस्थम्। अत्र क्रमादिति सामान्येनाभिधानात्। **योगीश्वरे**ण 'पूर्वाभाव' इति विशेषोपादानात्सामान्यं प्रति विशेषस्य बाधकत्वात्। तस्मादन्यैर्यत्किंचिदुक्तमिति मिताक्षराव्याख्यानमेव युक्ततरमिति सर्वं सुस्थम्॥

२० एवं भ्रातृसुतानंतरं पितामह्या धनग्रहणे युक्ततरे सति ततोऽपि क्रमं विविच्य दर्शयति। **तत्र च पितृसंतानाभाव इति**। पितृसंतानो भ्रातृतत्सुतपर्यंतः। **जन्मनामज्ञानावधिकावेति**। सापिंडानामुपरीत्यनुवर्तते[1]। ततश्च सप्तपुरुषानंतरं यावज्जन्म च नाम च ज्ञायते तावद्वा समानोदकसंज्ञका इत्यर्थः। **गोत्रजाभावे बंधवो धनभाज इति**। पितामही-पितामह-पितृव्य-तत्पुत्राणां, प्रपितामही-प्रपितामह-पितामहभ्रातृ-तत्पुत्राणां, प्रपितामहमातृ-प्रपितामहपितृ-प्रपितामहभ्रातृ-तत्पुत्राणां, प्र-
२५ पितामहपितामही-प्रपितामहपितामह-प्रपितामहपितृव्य-तपुत्राणां, प्रपितामहप्रपितामही प्रपितामहप्रपितामह-प्रपितामहपितामहभ्रातृतत्पुत्राणां समानोदकेष्वप्यनेन न्यायेन तेषां भाव इत्यर्थः।

**ब्राह्मणार्थस्य तन्नाश इति**। 'ब्राह्मणार्थस्य कश्चन दायादो न चेत् तद्ब्राह्मणायैव दातव्यं तदिति' सामान्येन निर्देशः। अध्याहारेण कस्मिन् सति? । **तन्नाशे** तस्य स्वामिनो ब्राह्मणस्य नाशे सतीत्यन्वयः। अथवा तदिति पृथक्पदं। **सर्वाभावे हरेन्नृप इति**। सर्वाभावे सर्वसब्रह्मचारिपर्य-
३० तानामभावे इत्यर्थः॥ १३५।१३६॥

## याज्ञवल्कीये १३७ श्लोकः।

**'नैष्ठिकस्य धनं तदपवादेनेति'**। मात्रादिग्रहणापवादेनेत्यर्थः। **सच्छिष्य इति**। शिष्यस्य सम्यक्त्वमुपलक्षणं, अत आचार्यधर्मभ्रात्रेकतीर्थिनावपि सुवृत्तावेव धनग्राहिणावित्याह।

---

[1] पृ. ९७ पं. २३.

**दुर्वृत्तस्याप्याचार्यादेरपीति ।** अनेनैवाभिप्रायेण **याज्ञवल्क्योऽपि** ‘ आचार्यसच्छिष्यधर्मभ्रात्रेक-तीर्थिन ’ इत्युभयत्र संबंधं द्योतयितुं सच्छिष्य इति मध्ये परिगणयामास ।

अथवा सच्छिष्य इत्यनेनादुर्वृत्तत्वं नाभिधीयते । अपि तु अध्यात्मश्रवणादिसमर्थोऽभिधीयते । न (नु ?) च दुर्वृत्तानामाचार्यादीनां सर्वेषामपि भागानर्हत्वस्याविशिष्टत्वात् शिष्यस्यैवादुर्वृत्तत्वकथन-मनुपपन्नं स्यादित्याह । **सच्छिष्यः पुनरित्यादिना । भागानर्हत्वादित्यन्तेन । प्रतिपन्नो भ्रातेति ।** भ्रातृत्वेनांगीकृत इत्यर्थः ।

आचार्यसच्छिष्यभ्रात्रेकतीर्थिनामभावे ब्रह्मचारियतिवानप्रस्थानां को धनं गृह्णीयादिति आह । **एतेषामाचार्यादीनामभावे इति ।**

**योगसंभारभेदांश्चेति ।** योगप्रतिपादकग्रंथादीनित्यर्थः ।

## याज्ञवल्कीये १३८ श्लोकः ।

संसृष्टिशब्दं निर्वक्तुं संसृष्टशब्दार्थमाह । **विभक्तं धनमिति ।** मूलवचनं व्याचष्टे । **तस्य संसृष्टिन इत्यादिना । संसृष्ट्येवापहरेत् गृह्णीयात् न पत्न्यादिरित्यंतेन ।** नान्यो धनं हरेदित्युपरितनवाक्यशेषस्थित ‘हरेदिति’ पदमपकृष्यैतद्वाक्यं पूरयति । **अपहरेत् गृह्णी-यादिति । तस्येत्यनेन** पूर्वोक्तं समासवाक्यं पूरयति । अत्र मृतस्येत्यर्थलभ्यं पदं प्रकरणलभ्यं वा वचनांतरविरोधपरिहाराय तदर्थेन वाक्यार्थं पूरयति । **विभागकालेऽविज्ञातगर्भायामिति ।**

इदमत्राकूतम् । यदा त्रिचतुरो भ्रात्रादयः संसृष्टिनस्तदा तेष्वेकस्मिन् भ्रातरि स्वभार्यायां गर्भ-माधाय दिवं गते संसृष्टिनां जीवतामनेकत्वादैक्याभावात् च विभागः प्राप्तः । एकत्वे ऐक्ये च वि-भागाभावात् । तस्मिन् विभागकालेऽस्पष्टगर्भत्वेन यदि गर्भो न विज्ञातो विभागश्च निष्पन्नः कालांतरे पुत्र उत्पन्नः तदा तस्मै तत्पित्रंशो दातव्यः । तदभावे संसृष्टिव्यक्तिपर्यालोचनयांऽशकल्पनया संसृ-ष्टिनो गृह्णीयुरिति । अत्र संसृष्टीत्यनुगतधर्मविवक्षया एकवचनम् । अन्यथा व्यक्त्येकत्वे विभागाभावात् पूर्ववाक्यानुवृत्तौ यो वाक्यार्थः संपद्यते तं दर्शयति । ‘**अतः सोदरस्य**’ **संसृष्टिन**’ **इति** ‘ **जातस्य सुतस्येति** ’ पूर्ववदेव विभागकालेऽस्पष्टगर्भायां पश्चादुत्पन्नस्येत्यर्थः ॥ सोदरस्य तु सोदर इत्यनेन ‘संसृष्टिनस्तु संसृष्टी’त्यस्यापवाद इत्युक्तं तदभिप्रायतः स्फोटयति । **एवं च सोदरासोदर-संसर्ग इति ।**

## याज्ञवल्कीये १३९ श्लोकः ।

**कस्य धनग्रहणमिति विवक्षायां** दर्शने ज्ञाने समुत्पन्ने, जिज्ञासायां सत्यां इति यावत् ।

मूलवचनद्वितीयार्धादिपदांतमादित आरभ्य वाक्यमित्याह । **अन्योदर्यः सापत्नो भ्रातेति ।** अत्र संसृष्टिन इत्यस्य पदस्यानुवृत्तिर्द्रष्टव्या । अतः संसृष्टिनो धनमित्यर्थः ।

संसृष्टिनो भिन्नोदरस्य धनहारित्वविधानरूपेणान्वयेनासंसृष्टिनो भिन्नोदरस्य धनहारित्वनिषेध-रूपेण च व्यतिरेकेण योऽर्थो निष्पन्नस्तं निष्कृष्य दर्शयति । **अनेनान्वयव्यतिरेकाभ्यामिति ।** असंसृष्टीत्येतत्पदं काकाक्षिवदुभयत्र संबध्यते । अतः ‘असंसृष्ट्यपि चादद्यादि’ त्यंतमन्यद्वाक्यमित्याह । **असंसृष्टीप्येतदुत्तरेणापीति ।** एतद्वाक्यमेवाह । **अतश्चासंसृष्ट्यपीति ।** संसृष्ट्याधिकारत्वादेव

१ ख-बोधयितुं । २ पृ. १८ पं. ७ ॥

संसृष्टिन इति लभ्यते । संसृष्ट इत्युत्तरपदं पूर्ववाक्यशेषत्वेन योजयति । **कोऽसाविति** । पूर्वोक्तसंसृष्टशब्दार्थमाह । **संसृष्ट एकोदरसंसृष्ट इति** । एकस्मिन् मातुरुदरे मिलित इत्यर्थः । एतत्पितुरप्युपलक्षणपरम् । 'पतिर्जायां प्रविशति गर्भो भूत्वा स मातरमिति' जायाया अपि मातृत्वश्रवणस्य श्रौतत्वात्पिताऽसंसृष्ट्यपि पुत्रस्य । एवं पुत्रोऽप्यसंसृष्टी पितुः भ्रातुः परेतस्यान्यस्मात् संसृष्टिनो भागं हरेदिति
५ तात्पर्यार्थः । संसृष्टपदप्रयोगात् अमुमेवाभिप्रायं प्रकटयति । **सोदर इति यावदिति** ।

'असंसृष्ट्यपि चाददयात्संसृष्ट' इत्येतस्य वाक्यस्य तात्पर्यार्थमाह । **अनेन सोदरस्येति** । पूर्वोक्तेनैव न्यायेन पूर्ववाक्यांतर्गतसंसृष्टपदं 'नान्यमातृज' इति उत्तरपदसंदर्भेणाप्यन्वेतीत्याह । **संसृष्ट इत्युत्तरेणापीति** । उत्तरवाक्यशेषत्वे संसृष्टशब्दस्याभिप्रेतमर्थमाह । **तत्र च संसृष्ट इति** ।

'नान्यमातृज' इत्येतदेवशब्दाध्याहारेण पूरयितुं प्रतीकमुपादत्ते । **नान्यमातृज इति** ।
१० अध्याहृतैवकारोपेतस्य 'संसृष्टो नान्यमातृज' एवेत्यस्य वाक्यस्य व्याख्याप्रकारमेवं दर्शयति । **संसृष्ट्यप्यन्यमातृज एवेति** ।

'असंसृष्ट्यपि चाददयादि' त्यस्योत्तरार्धस्य सकलस्यापि तात्पर्यार्थमाह । **एवं चासंसृष्ट्यपि चेति** । तत्र हेतुमाह । **द्वयोरपीति** । भिन्नोदरस्य संसृष्टित्वं धनग्रहणे हेतुः सोदरस्य सोदरत्वमेव हेतुः । न संसृष्टित्वमित्यर्थः । **संसृष्टिविभागं प्रक्रम्येति** । सहजीवंत इत्युक्त्या तत्प्रक्रम
१५ इत्यनुसंधेयम् ॥

**'येषां ज्येष्ठः कनिष्ठो वेति' मनु**वचनं व्याचष्टे । **येषां भ्रातृणामित्यादिना** । आद्यंतयोर्ज्येष्ठकनिष्ठयोरुपादानान्न्यायसाम्येन च मध्यमोऽपि विवक्षित इत्यभिप्रायेणाह । **मध्यमो वेति** ।

अंशाद्धंशे निमित्तानि दर्शयति । **आश्रमांतरपरिग्रहेणेति** । अस्यैव **मनु**वचनस्य तात्पर्यार्थमाह । **अतः पृथगुद्धरणीय इति** । 'सोदर्या विभजेयुरि' त्येतन्**मनु**वचनं व्याख्यातुमवतार-
२० यति । **तस्योद्धृतस्येति** । भ्रातरो ये च संसृष्टा इत्यत्र संसृष्टपदोपादानात्सोदरा अत्रासंसृष्टा इति गम्यते । अत एवार्थलभ्यार्थसंसृष्टपदान्वयेन पूर्वार्द्धं व्याचष्टे । **तमुद्धृतं भागमिति** । **सनाभयो भगिन्यश्चेति** । सहोदर्या भगिन्य इत्यर्थः ॥ १३९ ॥

## याज्ञवल्कीये १४०।१४१।१४२ श्लोकाः ।

**पुत्रपत्न्यादिसंसृष्टिनामिति** । पुत्रशब्देन पौत्रोऽपि लक्ष्यते । आदिशब्देन दुहित्रादयः ।
२५ पुत्राश्च पत्न्यादिगणाश्च संसृष्टी चेति समासः । '**विभक्तेषु सुतो जातो सवर्णायां विभागभागि**' **त्यस्य सामान्यन्यायत्वादिति** । विभागादूर्ध्वमुत्पन्ने पुत्रे स्वपुत्रोत्पत्तिरिति धर्मधर्मिणोरुत्पत्तिमात्रभेद एव नान्यो भेदोऽस्ति इति विषयमात्रभेदात्समानन्यायत्वादित्यर्थः । **उक्तदोषदुष्टानामिति** । क्लीबत्वादिभिर्दोषैरित्यर्थः ।१४०।१४१।१४२।

## याज्ञवल्कीये १४३ श्लोकः ।

३० **अग्नावधिकृत्येति** । अग्निसन्निधावित्यर्थः । **आधिवेदननिमित्तमिति** । आधिवेदनं धर्मपत्न्यां सत्यां रागत एव विवाहांतरकरणम् । **षड्विधं स्त्रीधनं स्मृतमिति मनु**वचनबलान्**मनु**परिगणितेष्वेव षट्सु अध्यग्न्यादिवत्स्त्रीधनशब्दा अयौगिक इति केचन वर्णयंति । तदसाधु । वचनांतर-

---

१ अपि तौ । २ ख-संसृष्टिपदाप्रयोगस्य । ३ क-उपादनम् । ४ क-लभ्यंत । ५ क-समानन्यायत्वम् ॥

विरोधात् शिष्टाचारविरोधादलब्धात्मिकाया रूढेर्योगस्य प्राबल्याच्च यौगिक एवेत्यनेनाभिप्रायेणाह। **स्त्रीधनशब्दश्च यौगिक इति** ॥ १४३ ॥

## याज्ञवल्कीये १४५ श्लोकः ।

**दुहितॄणां प्रसूता चेदिति** । मूलवचनस्थं पदं व्याचष्टे । **सर्वेष्वपि विवाहेष्विति । दुहितृदुहितर इति** । दुहितुः पुत्र्य इत्यर्थः । **सोदर्याणामूर्ध्वं मातुरिति** । मातुरभावे सोदर्या ५ गृह्णीयुरित्यर्थः ।

यदा दुहितरो बह्व्यस्ताश्च न संति । तत्पुत्र्यश्चैकस्या एकैव अन्यस्या द्वे अपरस्यास्तिस्र इत्येवं वैषम्यं तदा मातामहीधने दौहित्रीणां कथं विभागकल्पना इत्याशंक्य पौत्राणां पैतामहे धनोक्तमेव न्यायं स्मारयति । **तासां भिन्नमातृकाणामिति । प्रतिमातृतो वा स्ववर्गेण इति** । अस्यार्थः । दौहित्रीवर्गे, प्रतिमातृ, मातरि मातरि, स्वस्वमातृविषयो भागविशेषः कर्तव्यः, न स्व- १० स्वरूपापेक्षयेति । **मातुर्दुहितरोऽभाव इति** । अस्यार्थः । मातुरूर्ध्वं तद्धनं दुहितरो गृह्णीयुः । तदभावे तदन्वये दुहितृसंताने प्रथमतो दुहितॄणां दौहित्रीणां भवति । 'तदभावे तदन्वय' इति अभिधानात्पुत्रिसंतानरूपाणां दौहित्राणां भवति अन्यथाऽन्वय इत्युक्तेरानर्थक्यादिति ।

ननु तच्छब्दः संनिहितपरामर्शी, तथा च दुहितॄणामेव पाठक्रमेण सन्निहितत्वाद्दौहित्र्यन्वयो वंश एव लभ्यते । न दुहितृसंतानरूपा दौहित्रा लभ्यंत इत्यत आह । **तच्छब्देनेति** । इदमत्राकूतम् । १५ अर्थसंनिधेः शब्दसंनिधेश्च विद्यमानत्वात्साक्षाद्दुहितृपरामर्श एव युज्यत इति ।

'**जनन्यां संस्थितायां त्विति**' **मनु**वचनं व्याचष्टे । **मातृकं रिक्थमिति** । ननु सहोदराः सनाभयो भगिन्यश्च मिलित्वा भजेरन्नित्येकान्वयोऽस्तु, किमिति भिन्नान्वय इत्याशंक्य परिहरति । न **पुनः सहोदरा इति** । तत्र हेतुमाह । **इतरेतरस्येति** । अयमाशयः । चत्वारश्चार्थाः । समुच्चयान्वाचयेतरेतरयोगसमाहाराः । 'चार्थे द्वंद्वः' । तत्र समुच्चयान्वाचययोरसामर्थ्यात् द्वंद्वसमासो २० नास्ति इतरेतरयोगसमाहारयोरेव समासः । इतरेतरयोगप्रतीतौ च **मनु**वचने भ्रातृभगिन्य इति सजातीयैकशेषे रक्षं इतिवच्च समानार्थानामिति वा 'भ्रातृपुत्रौ स्वसृदुहितृभ्र्यामिति' भ्रातृस्वस्रोरेकशेषे भ्रातराविति वा पुत्रदुहित्रोरेकशेषे पुत्राविति । एतेषामन्यतरसद्भावे भवति तत्प्रतीतिः । न च तथा । तस्मान्नेतरेतरयोगप्रतीतिरिति । किंच चशब्दस्य प्रकारांतरेणाप्युपपत्तेर्न भ्रातृभगिन्योः संभूय विभागप्रतीतिरित्याह । **विभागकर्तृत्वान्वयेनापीति** । अथवा ननु द्वंद्वैकशेषाभावेऽपि चशब्दफलादि- २५ तरेतरयोगप्रतीतिरस्त्विति चेत्यत आह । **विभागकर्तृत्वान्वयेनापीति** । अथवा तत्र दृष्टांतमाह । **यथा देवदत्त इति** ।

**स्त्रियास्तु यद्भवेद्वित्तमिति** । अत्र **स्त्रिया इति पित्रेति ब्राह्मणी कन्येति** चोपादानादुक्तार्थप्रतीतिः । **अनपत्यवैश्याधनं क्षत्रिया कन्या गृह्णातीति** । एवं शूद्राधनेऽपि द्रष्टव्यम् । **रिक्थभाज ऋणं प्रतिकुर्युरिति** । ये ऋणं प्रतिकर्तारस्ते रिक्थभाज इत्युक्तत्वात् वचनद्वय- ३० पर्यालोचनया पौत्रस्यापि तादृशत्वेन पुत्राभावे पौत्रः पितामही धनभागित्यर्थः ॥ १४५ ॥

---

१ क–योगस्याप्राबल्याद्वा । २ क–पौत्रिणाम् । ३ क ख क्ष–तत्र स्वस्वरूपापक्ष । ४ पृ. १०१ पं. २४॥ ५ आर्थसन्निहितिश्च । ६ व्या. सू. २।२।२९ । ७ ख–रक्ष इतिवच्चानीति वा (?)। ८ व्या. सू. १।२।६८ । ९ क–दुहितृदुहित्रोरेक॰ १० क– किंवा । ११ क–शूद्रापत्येऽपि ॥

## याज्ञवल्कीये १४६ श्लोकः ।

**द्रव्यानुबंधाद्यनुसारेणेति** । अनुबंधो दोषोत्पाद इति यावत् । ' दोषोत्पादोऽनुबंधः स्या 'दित्यमरः । **उभयोरात्मनः कन्यादातुश्चेति** । अयमाशयः । विवाहोद्यतैः कन्यादातृप्रतिगृहीतृतत्पित्रादिभिस्तन्निमित्तं व्ययीकृतं धनं तस्मात् कन्याधनात् गृहीत्वाऽवशिष्टं वराय दद्यादिति । **तदभावे मातुस्तदभावे पितुरिति** । सोदराभावे मातुर्भवति । तदभावे पितुर्भवतीत्यर्थः ।

## याज्ञवल्कीये १४८ श्लोकः ।

विवाहांतरमेव पूर्वस्याः धर्मपत्न्या धनदाने निमित्तमित्याह । **अधिवेदननिमित्तं धनमिति** । तत्कियदित्याकांक्षायामाह ॥ **समं यावदधिवेदनार्थमिति** । अत्र मूलवचनस्थार्धपदं न नपुंसकलिंगं येन समविभागवाचकं अपि तु पुंलिंगम् । अत एवांशमात्रवचनम् इत्यनेनाभिप्रायेणाह । **अर्धशब्दश्चात्रेति** । ' पुंस्यर्धोऽर्धं, समेंऽशक ' **इत्यमरः** ॥

इति रिक्थविभागप्रकरणम् ॥

# अथ सीमाविवादप्रकरणम् ९ ।

## याज्ञवल्कीये १५०।१५१ श्लोकौ ॥

**जनपदसीमेति** । जनपदो देशः । **सा च यथासंभवमिति** । नावश्यं वक्ष्यमाणैः पंचभिर्लक्षणैरुपेतैव सीमा । अपि तु क्वचिदेकेन क्वचित् द्वाभ्यां क्वचित् बहुभिरिति यत्र यथा प्राप्तिसंभवः तमनतिक्रम्येत्यर्थः । **ध्वजिनी वृक्षादिलक्षितेति । मात्स्यनी सलिलवती । नैधानी निखाततुषांगारादिमती च** ॥ तथा चाह **व्यासः**—

" ग्रामयोरुभयोः सीम्नि वृक्षा यत्र समुन्नताः । समुच्छ्रिता ध्वजाकारा **ध्वजिनी** सा प्रकीर्तिता ॥
" स्वच्छंदगा बहुजला झषकूर्मसमन्विता । नित्यप्रवाहिणी यत्र सा सीमा **मत्स्यनी** मता ॥
" तुषांगारकपालैस्तु कुंभैरायतनैस्तथा । सीमा प्रचिह्निता कार्या **नैधानीति** निगद्यते " ॥ इति

**अर्थिप्रत्यर्थिपरस्परसंप्रतिपत्तिनिर्मितेति** । वादिप्रतिवादिनोः सत्यसंधत्वेन परस्परमत्यंतविश्वस्तत्वादियं मदीया भूरियं मदीयेति स्वस्वचित्तानुसंधानपुरःसरं वाङ्मात्राभिर्विरचितेत्यर्थः। अत्रार्थित्वं प्रत्यर्थित्वं नतिविशेष्यत्वेन तयोग्यत्वाभिप्रायेण न मत्सरग्रस्तत्वेनेति द्रष्टव्यम् ॥

**ज्ञातृचिह्नाभाव इति** । ज्ञातारो वक्ष्यमाणाः साक्षिसीमंतादयः । चिह्नानि वृक्षादीनि । ज्ञातारश्च चिह्नानि च तेषामभाव इत्यर्थः ।

भूविवादे षट्प्रकारत्वं **कात्यायन**वचनव्याख्याने दर्शयन् तत्र प्रथमप्रकारमाह । **ममात्र पंचनिवर्तनाया इति** । द्वितीयमाह । **पंचनिवर्तनेति** । तृतीयं चतुर्थं चाह । **पंचनिवर्तनो ममांश इति** । ' अत्र पंचनिवर्तनो ममांश ' इत्युक्ते ' अंशस्ते पंचनिवर्तन ' इत्येतन्नास्ति इति तृतीयं पक्षं व्याख्यातृबुद्धिपरीक्षार्थं स्फुटमकथयित्वोत्तरः पक्ष एव व्यक्तीकृतः । अत एवास्तिनास्तित्वविवाद इति संभूयोपसंहारः ।

---

१ पृ. १०२ पं. ८ । २ अ. को. ३।३।९८ ॥ ३ पृ. १०२ पं. १५ ॥ ४ क-धर्मे दाने । ५ क-ख-मूलवचनस्थधर्मपद ६ क-ख-नपुंसकलिंगं । ७ अ. को. १।३।१६

पंचमषष्ठावाह । **मदीया भूः प्रागिति ।** इयं मर्यादेयं वेति च; अथवा पंचनिवर्तनो ममांश इत्यत्र एक एव प्रकारः, इयं मर्यादेयं मर्यादा वेति पंचमः प्रकारः, इयं सीमा इयं चेति षष्ठः, अनेनैवाभिप्रायेणाह । **इयं मर्यादेयं वेति सीमाविवाद इति ।**

मर्यादायाः सीम्नश्च भेदं दर्शयिष्यति 'मर्यादायाः प्रभेदे त्वित्यत्र' । आस्तिनास्तित्वविवादे पक्षद्वयांगीकरणे सीम्नो मर्यादायाश्चैकत्वेन व्यवहारः । अत्र भेदे पूर्वत्रैकत्वम् । अथवा आधिक्यं न्यूनत्वं ५ अस्तित्वं नास्तित्वं अभोगभुक्तिः सीमा चेत्यमी षट् हेतवः । क्वचिद्व्यस्ताः क्वचिन्मिलिता इति एवं पूर्वोक्ताभिप्रायगर्भितमुपसंहराति । **षट्प्रकार एवेति । श्रुत्यर्थाभ्यामिति ।** यत्र साक्षात्सीमाविवादः तत्र श्रुत्या इतरत्रार्थादिति विवेकः ।

**तत्संसक्ताद्युपलक्षणार्थमित्युक्तं ।** तत्रादिशब्दगृहीतानाह । **उक्तं च कात्यायेन । संसक्तकास्त्विति ।** अस्यार्थः । सामंतास्तु संसक्तकाः प्रकीर्तिताः । तथा तदनंतरस्थिताः तत्सं- १० सक्ता उत्तरा इति च कथिताः । अत एव संज्ञात्वान्न सर्वनामसंज्ञा । तथा तदनंतरस्थिताः संसक्तसक्तसंसक्ताः पद्माकारा इति चोच्यंते । सामंतादयस्त्रयोऽपि संज्ञाद्वययुक्ता इत्यर्थः ।

**तत्कार्यं तद्गुणान्वितैरिति ।** तत्कार्यं सीमादिनिर्णयादिरूपं तद्गुणान्वितैः सीमानिर्णयादिषु निपुणमतित्वरूपगुणयुक्तैरित्यर्थः । **उपश्रवणसंभोगेति ।** अत्र वसुरिति सभ्येभ्यः स्पष्टश्रवणमुपश्रवणं च संभोगरूपकार्यं च तयोराख्यानं तेनोपलक्षिता इत्यर्थः । १५

**व्याधान् शाकुनिकानिति ।** व्याधाः[1] लुब्धकाः । शाकुनिकाः पक्षिवधजीविनः । कैवर्तास्तटाकादिखननवृत्तयः । मूलखानकाः वृक्षादिमूलोत्पाटनजीविनः । व्यालग्राहाः सर्पग्राहिणः आहितुंडिकाः । उंच्छवृत्तयः शिलोंच्छवृत्तयः । वनगोचराः फलपुष्पाद्यर्थमरण्यचारिणः ।

**गुल्मान् वेणूंश्च विविधानिति ।** गुल्माः अप्रकांडस्तंबाः 'अप्रकांडे स्तंबगुल्मावि' **त्यमरः ।** ( २।४।९ ) । तृणं जंघा वा । **कुप्यकगुल्माश्चेति[2] ।** कुप्यसंबंधिनो गुल्माः कुप्यगुल्माः । कुप्यमेव २० कुप्यकं । कुप्यं सुवर्णरजतव्यतिरिक्तताम्रादि । 'हेमरूप्ये कृताकृते । ताभ्यां यदन्यत्तत्कुप्यं' **इत्यमरः** ( २।९।९१ ) । कुप्यकस्य मलापकर्षणात्परस्परसंश्लेषादिरूपयोगित्वात्[3] तत्संबंधित्वम् । अत एवाधिकोपयोगित्वेन गुल्मेभ्यः पृथक् ग्रहणमिति भेदः । **तडागान्युदपानानीति ।** उदपानानि कूपाः । 'कूप उदपानं तु पुंसि वे' **त्यमरः** ( १।१०।२६ ) । वाप्यः पाषाणादिबद्धा दीर्घिकाः । 'वापी तु दीर्घिके' **त्यमरः** ( १।१०।२८ ) । प्रस्रवणानि निर्झरादयः[4] ॥ २५

## याज्ञवल्कीये १५२ श्लोकः ।

**सामंता वा समग्रामा इति ।** समग्रामा इति सामंतविशेषणं न पृथक् समग्रामासंसक्तका इत्यर्थः । वाशब्दार्थो ग्रंथ एव स्पष्टः । **स्वार्थसिद्धौ प्रदुष्टेष्विति ।** सामंतेषु दोषयुक्तेषु सत्स्वित्यर्थः ।

नयेयुरिति बहुवचननिर्देशादेकस्य द्वयोर्न सीमानिर्णेतृत्वं स्यादित्यत आह । **नयेयुरिति ।** ३० **बहुवचनमिति ।** 'निम्नगापहृतोत्सृष्टनष्टचिह्नासु' त्येत**न्नारद**वचनं व्याचिख्यासुरस्य पदस्य समासमाह । **निम्नगाया नद्य इति ।**

---

१ क-ख-व्याधलुब्धाः । २ कुब्जगुल्मा इति मिताक्षरापाठः । ३ ख-परस्य संश्लेषादिरूपः । ४ क-विकीरादयः ।

अस्मिन् वचन उपायत्रयमभिहितं । तत्र तत्प्रदेशानुमानादित्युपात्तमुपायस्वरूपं विविच्य दर्शयति । **तत्र तत्प्रदेशानुमानादिति ।** प्रमाणादित्युपात्तमुपायस्वरूपं विविनक्ति । **ग्रामाद्यारभ्येति ।** भोगदर्शनादित्येतद्व्याचष्टे । **प्रत्यर्थिसमक्षमिति । बृहस्पतिना चात्र विशेषो दर्शितः ५ इति ।** अत्रेति परमप्रकृतिसाक्षिसामंतादिविषय इत्यर्थः । अथवा अत्र सीमानिर्णय इत्यर्थः । 'ये विदुस्तेऽत्र साक्षिण ' इत्यत्र साक्षिग्रहणं सामंताद्युपलक्षणार्थम् । **ग्रामेयककुलानां त्विति ।** ग्रामस्य जनाः ग्रामेयकाः, तेषां च पूगश्रेणीकुलानामित्युक्तलक्षणकुलानां च वादिप्रतिवादिनोश्च समीप इत्यर्थः । अथवा ग्राम्यजनानां समूहाः कुलानि तेषामिति ।

## याज्ञवल्कीये १५३ श्लोकः ।

१० न 'त्वनृते तु पृथग्दंड्या ' इति सामान्योक्तेः केवलसामंतविषयता कथमित्यत आह । **सामंतविषयता चेति ।** सामंतव्यतिरिक्तानां स्मृत्यंतरेष्वेतद्विरुद्धदंडांतरविधानाद्योगीश्वरोक्तं दंडस्य सामंतविषयत्वेन युक्तमित्यर्थः । **जघन्यास्त इति ।** जघन्या दुष्टा इत्यर्थः । एतद्दंडविधानमज्ञानविषयमिति ' अनृते तु पृथक् दंड्य ' इत्यारभ्य यो दंडः प्रदर्शितो **योगीश्वरमनुनारदाद्युक्त**स्तद्विधानमित्यर्थः । तत्र हेतुमाह । **बहूनां तु गृहीतानां इत्यादिना ।**

अत्र भयाद्वा लोभाद्वा इति हेतूपादानात् ज्ञानविषयं त्वस्फुटम् । **यदा तस्यां भूमाविति ।** विवादास्पदीभूतायां भुव्यन्यतरस्य ग्रामस्याधिकोपकारसंभवे यावत्युपयुक्ता भूस्तावती सर्वाऽपि देयेत्यर्थः । १५ **सीमायामविषह्यायामिति ।** अस्यार्थः । लिंगसाक्ष्याद्यभावे सीमनि परिच्छेत्तुमशक्यायां धर्मज्ञो राजा स्वयं पक्षपातरहितः सन् यस्य ग्रामस्य यावतो भूभाग उपकारातिशयः तावानुपकारातिशयवशात् तस्य ग्रामस्य प्रतिदिशेन्निर्दिशेदिति ॥ १५३ ॥

'अतिदेशो ह्यधिकमाकांक्षते ' इति न्यायेन यत्राधिका शंका तत्र पूर्वोक्तविषया सादृश्यप्रतीतिः तद्वद्भावाभावेनातद्वद्भावाशंकायां पूर्वोक्तवदेवैतदपीत्यतिदेशो वक्तव्यः । यथाऽऽहिताग्नेः पिंडपितृयज्ञं २० विधाय एवमेवानाहिताग्नेरित्यनाहिताग्नेरातिदेशः । प्रकृते तु ' सीम्नो विवादे क्षेत्रस्ये ' त्यादिना यो न्यायोऽभिहितः तस्यारामादीनां अत्यंततुल्यत्वेन तेष्वतिदेशानपेक्षत्वादारामायतनेऽपि च वक्ष्यमाणं वचनं निष्प्रयोजनमित्याशंक्य भवत्वेवं तथापि न्यायप्रभवाण्यपि वचनानि संतीति शिष्यशिक्षार्थं पूर्वोक्तन्यायसिद्धार्थमविषयांतरेष्वपि वचनेन संगृह्णातीत्याह । **असत्यामपि अतद्भावाशंकायामिति ।** तत्तादृक्स्वरूपमस्यास्तीति तद्वतोऽभावः तत्तद्भावः तस्य आशंका तस्यामसत्यामपीत्येवं समासप्रयोजनम् ॥

## २५ याज्ञवल्कीये १५४ श्लोकः ।

आयतनं निवेशनमित्युक्त्या तदेव विविच्य दर्शयति । **पलालकूटाद्यर्थमिति** ॥ १५४ ॥

## याज्ञवल्कीये १५८ श्लोकः ।

**क्षेत्रं वा भीषया हरन्निति ।** भीषा भयमन्यस्योत्पाद्य तथा भीषया हरन्नित्यर्थः ॥ १५५ ॥

**इदानीं तस्यैवानुप्रसक्तानुप्रसक्त्येति ।** तस्यैव क्षेत्रस्वामिन एव । स्वामिसंबंधि क्षेत्रं ३० तत्संबंधी क्षेत्रगतविचारः । एवं प्रसक्तानुप्रसक्तिरन्यत्र द्रष्टव्या । **तं प्रदाप्याकृष्टशदमिति ।** तमकृष्टशदं प्रदाप्येत्यन्वयः । अकृष्टशदमित्येतत्पदं व्याचष्टे । **तस्याकृष्टस्य फलं इति ॥**

इति सीमाविवादप्रकरणम् ॥

---

१ ख-ग्राम्यजनाः । २ ख-समानोक्तेः । ३ ख-केचन । ४ पृ. १०७ पं. ५ ॥ ५ क क्ष-यावति; ख-यावती । ६ क-प्रतीतेः । ७ क--भावेनातत्तद्वदभावा । ८ ख-चैतदपीत्यादेदेशो वक्तव्यः । ९ आहिताग्निपिंड ॥

## अथ स्वामिपालविवादप्रकरणम् १० ।

### याज्ञवल्कीये १५९ श्लोकः ।

**ज्ञानपूर्वे तु पणस्य पादौ द्वौ गामिति** । गांप्रति द्वौ[1] पणस्यार्धो दंडः । महिषीं प्रतीति द्विगुणं संपूर्णः पणो दंडः । अजाविकवत्सानां तु पणस्य चतुर्थो भागो दंड इत्यर्थः । दंडाधिक्यादेव ज्ञानविषयत्वं[2] गम्यते ॥ १५९ ॥ ५

### याज्ञवल्कीये १६० श्लोकः ।

**यथोक्ताद्विगुणो दंडो वेदितव्य इति** । यथोक्ताद्विगुणो दंडो वेदितव्य इति । अज्ञाने तु 'माषानष्टौ तु महिषी'त्यादिनोक्तौ[3]दण्डाद्विगुणो दंडः । ज्ञानपूर्वकत्वे तु 'पणस्य पादौ द्वौ गामि'त्यादिनोक्ताद्विगुणो दंड इति विवेक्तव्यम् । **यथोक्ताच्चतुर्गुण इति** । अत्रापि पूर्ववदेवं विवेको द्रष्टव्यः । १०

**महिषी यत्र यादृशेनेति** । यत्र यस्मिन् क्षेत्रे यादृशो यत्परिमाणो दंडोऽभिहितः तादृशेन तत्समेन दंडेन खरो[4] दंडनीय इत्यर्थः । उष्ट्रोऽपि तथैव स्वापराधे[5] दंडनीयो न तूभयमपि विशिष्टं दंडनीयमित्यर्थः । तत्र हेतुमाह । **सस्योपरोधकत्व इति** ॥ १६० ॥

### याज्ञवल्कीये १६१ श्लोकः ।

'गोपस्ताड्यस्त्विति' वचनात्तस्य धनदंडाभावे प्राप्तेऽपवादमाह । **गोपस्य च ताडनमिति** । १५ **पालो** गोपालः । स्वदोषेणेति यावत् । पालनं[6] पालः तद्दोषेणेति वा व्याख्येयम् ।

'गोमी तु पूर्वोक्तं दंडमर्हति' इत्यमुमंशं व्याचष्टे । **गोमी पुनरिति** । **गोमी** गोस्वामी 'गोमान् गोमी' **त्यमरः** ( २।९।५८ )। **गोभिस्तु भक्षितं सस्यमिति** । अस्यार्थः । गोभक्षितं सस्यं यः प्रतियाचते, तस्मै सामंतपरिकल्पितं तत्क्षेत्रवापितं धान्यं धान्यादिमूल्यं देयम् । **पलालं** भक्षितावशिष्टम् । तृणबुसादिकं गोस्वामिने दद्यात् । 'यो नरः प्रतियाचते तस्मै देयमिति' सामान्या- २० भिधानेन विशेषाकांक्षायामर्थप्रकरणासिद्धमपि विशेषं स्पष्टीकुर्वन्नाह । **धान्यं वै कर्षकस्य त्विति** । तस्मा एव क्षेत्रस्वामिने प्रदातव्यमित्यर्थः ॥ १६१ ॥

### याज्ञवल्कीय १६२ श्लोकः ।

**ग्रामविवीतसमीपवर्तिनि च क्षेत्रे इति** । ग्रामसमीपवर्तिनि विवीतसमीपवर्तिनीति प्रत्येकमभिसंबध्यते । ग्रामसंबंधि यत् विवीतं तत्समीपवर्तिनीति वा । ग्रामाद्बहिर्यो गवादिस्थित्यर्थो २५ भूप्रदेशः तद्विवीतशब्देन लक्ष्यते । तत्समीपवर्तिनीति वा व्याख्येयम् । अजगोभिरित्युपलक्षणम् । **एतच्चानावृतक्षेत्रविषयमिति** । वृतिरहितविषयमित्यर्थः । **वृतिं च तत्र कुर्वीतेति** । अस्यार्थः । तत्र क्षेत्रपार्श्वे समंततः उष्ट्रावलोकनायोग्यां प्राकारसदृशीं वृतिं कुर्यात् । तत्र यानि छिद्राणि श्वादिमुख[7]प्रवेशयोग्यानि तान्यपि निरुंध्यात् । 'यद्वेतच्छिद्रं वारयेदिति' पाठः । तदा श्वादिमुखप्रवेशयोग्यसर्वच्छिद्ररहितं यथा तथा वाऽत्यनुन्नतां वृतिं कुर्यादिति वृतिकरणे प्रकारांतराभि- ३० धानमिति ॥ १६२ ॥

१ ख-द्वौ पादौ । २ क-विषयत्व । ३ या० व्य० अ० १५९ । ४ खरोष्ट्रं दण्डनीयम् । ५ क-तथैवैस्यापराधे ६ ख-पालनः । ख-मुख्य । ७ क-यद्वाच्छिद्रं वारयदिति पाठः । ख-यदच्छिद्रं वात्रयादिति पाठः ।

## याज्ञवल्कीये १६३ श्लोकः ।

**अदण्ड्यौ काणकूटौ चेति** । **काणः** एकाक्षिविकलः । **कूटः** पादरहितः पंगुरिति यावत् । शश्वत्कृतलक्षणः वारंवारं सस्यनाशकत्वेन दंडिताः अंकनेन धनग्रहणादिभिर्वेत्यर्थः ॥ १६३ ॥

## याज्ञवल्कीये १६४ श्लोकः ।

५ **नष्टं जग्धं च कृमिभिरिति** । अस्यार्थः । गोपालसंबंधिरक्षणाख्यपुरुषव्यापाररहितं संतं **नष्टं** दृष्टिगोचरातीतं, कृमिभिर्भक्षितम्, श्वादिभिर्हतम् । विषमे श्वभ्रादिप्रवेशे पतनेन मृतं च गोपाल एव स्वामिने दद्यादिति । **प्रसह्य चोरैरपहृतान्न दाप्य इति** । चोरैर्बलादपहृतात्पालात् स्वामिने न पशुर्दाप्य इत्यर्थः । **विघुष्य तु हृतं चोरैरिति** । चोरैः पटहाद्युद्घोषेण प्रसिद्धमपहृतं पालो दातुं नार्हति । यदि तस्मिन्नेव देशे हरणोत्तरकालमेव स्वामिने १० कथयतीत्यर्थः । **कर्णौ चर्म चेति** । **चर्म** त्वक् । **वालाः** लोमानि चिह्नभूतानि । **बस्ति** मूत्रधारांगविशेषः । **स्नायुर्वसा** । ' अथ वस्नसा स्नायुरि ' **त्यमरः** ( २।६।६६ ) । **रोचनां** गोरोचनाम् । एतानि स्वामिषु दद्यात् । पशुषु मृतेषु अन्यान्यप्यंगानि विज्ञापकानि प्रदर्शयेत् । 'अंकांश्च दर्शयेदि' त्यपि पाठः । तदा पशुदेहस्थितान् मुद्रादीन् अपि चिह्नानि दर्शये-दित्यर्थः ॥ १६४ ॥

१५

## याज्ञवल्कीये १६५ श्लोकः ।

**दण्डपरिमाणार्थः श्लोक इति** । पूर्वोक्तैरेव वचनैरितरार्थस्याप्राप्तत्वादर्धत्रयोदशपण इत्ययमेवांशो विधेय इत्यर्थः । ॥ १६५ ॥

## याज्ञवल्कीये १६६ श्लोकः ।

**तृणाद्यन्यतराभाव इति** । अस्वामिकतृणाद्यन्यतराभाव इत्यर्थः । **अनिवारिते आहरे-** २० **दिति** । निवारितः सन् न गृह्णीयादित्यर्थो गम्यते । **एतच्च परिगृहीतविषयमिति** । 'द्विजस्तृ-णैधःपुष्पाणी ' त्यादिनोक्तमित्यर्थः ॥ १६६ ॥

## याज्ञवल्कीये १६७ श्लोकः ।

**प्रचुरकंटकसंतानस्येति** । कंटकिवृक्षाद्याक्रांतस्येत्यर्थः ।

इति स्वामिपालविवादप्रकरणम् ॥

२५

# अथास्वामिविक्रयप्रकरणम् ११ ।

**विक्रीयतेऽसमक्षमिति** । स्वामिनोऽसमक्षं परोक्षमनुज्ञामंतरेणेति यावत् । एवंविधेऽस्वामि-विक्रयस्थले शास्त्रविधानं कीदृशं भवतीत्याशंकापुरःसरं मूलवचनमवतारयति । **तत्र किमित्याहेति** ।

## याज्ञवल्कीये १६८ श्लोकः ।

**असंभाव्ये द्रव्यादपि हीनमूल्य इति** । यद्वस्तु यावन्मूल्यद्रव्यमर्हति तस्मादपि । ३० न्यूनेन मूल्येनेति यावत् । **प्रकाशं क्रयतः शुद्धिरिति** । प्रकाशो यथा भवति तथा यः क्रयः क्रियते तस्मादित्यर्थः ॥

---

१ क-अदण्ड्यो काणकुब्जौ चेति : ख-अदण्ड्यौ काणकूटौ चेति । २ ख-कूटः । ३ क-इतरार्धस्य । ४ ख-त्र-योदशपण । ५ ख-इत्ययमेवांशो । ६ ' तृणाद्यन्यतरा भावे' इति मुद्रितमिताक्षरापाठः ७ ख-कंटकिवृक्षाद्यक्रांतस्येत्यर्थः ।

## याज्ञवल्कीये १६९ श्लोकः ।

एकदेशिव्याख्यानमनुभाषते दूषयितुम् । **नष्टमपहृतं चेत्यादिना** । अयमभिप्रायः । नष्टं चापहृतं चान्यदीयं द्रव्यं क्रयप्रतिग्रहादिभिरस्वामिनः सकाशाद्यः कश्चन प्राप्य स्वयमप्यन्यस्मै विक्रीणीते। तं[1] विक्रेतारं तस्मात्क्रेता पुरुषो रजनीचरादिभिः राजपुरुषैर्ग्राहयेत् । स्वचौर्यनिवृत्त्यर्थं राज्ञो दंडप्राप्त्यर्थं च । अथ केनापि कारणेन न ग्राहयितुं प्रदर्शयितुं वा समर्थः तदा तस्मात् गृहीतं द्रव्यं मूलस्वामिने समर्प्य स्वयं शुद्धो भवतीति दूषयति । **तदिदमनुपपन्नमिति** । तत्र हेतुमाह । 'विक्रेतुर्दर्शनादिति' वक्ष्यमाणमूलवचनेनास्य पौनरुक्त्यमित्यर्थः । स्वाभिप्रेतमर्थं दर्शयितुमुपक्रमते । **अतोऽन्यथा व्याख्यायत इति** । मूलवाक्यस्थमासाद्यैतत्पदं व्याचष्टे । **क्रेतृहस्तस्थं ज्ञात्वेति** । **तद्विज्ञापनकालात्प्रागिति** । स्थलपालादिभ्यः कथनात्प्रागित्यर्थः ॥

## याज्ञवल्कीये १७० श्लोकः ।

**मूले समाहृत इति** । मूले विक्रेतरीति यावत् । **क्रयं शोधयित्वैव शुद्धो भवतीति** । स्वक्रये साक्ष्यादिप्रदर्शनेनेत्यर्थः ॥ ॥ इत्यस्वामिविक्रयप्रकरणम् ॥

# अथ दत्ताप्रदानिकप्रकरणम् १२।

अस्मिन् प्रकरणेऽभिधेयं प्रमेयं निष्कृष्य दर्शयति । **अधुना विहिताविहितेति** । विहितमार्गाश्रयं दत्तानपाकर्म अविहितमार्गाश्रयं दत्ताप्रदानिकमित्यवांतरभेदः । सामान्यतस्तु दानाख्यं व्यवहारपदमित्यर्थः । 'दत्त्वा द्रव्यमसम्यग्य' इत्येतन्नारदवचनं व्याचष्टे । **असम्यगविहितमार्गाश्रयेणेति** ।'अस्मिन्नेव वचने दत्ताप्रदानिकमि' त्यस्य समस्तस्य पदस्य विग्रहवाक्यं दर्शयति । **दत्तस्याप्रदानमिति** । अविहितमार्गाश्रितदत्ताप्रदानिकस्वरूपनिरुक्तौ एतद्विपरीतरूपस्य दत्तानपकर्मणः स्वरूपमर्थसिद्धमेवेति न पृथङ्निर्दिष्टमित्याह । **विहितमार्गाश्रयत्वेनेति** । दत्तानपकर्मस्वरूपं निर्वक्ति । **दत्तस्यानपाकर्मेति** । शास्त्रविहितमार्गेणैव दत्त्वा पुनरादानस्य निषिद्धत्वेन[2] न पुनर्ग्रहणं इत्यर्थः । **तच्च देयादिभेदेनेति** । तद्दानाख्यं व्यवहारपदमित्यर्थः । **अथ देयमदेयमिति** । देयं दत्तं च द्वयमपि दत्तानपकर्मभेदः । अदेयमदत्तं च द्वयमपि दत्ताप्रदानिकभेदः । एवं दानमार्गश्चतुर्विध इत्यर्थः । **अनिषिद्धदानक्रियायोग्यमिति** । अनिषिद्धं च तद्दानक्रियायोग्यं चेति समासः । तद्यथा । कुटुंबाविरोधि स्वकीयं द्रव्यं । **अस्वतया निषिद्धतया चेति** । अन्वाहितादिकमस्वतया दानानर्हं कुटुंबपोषणापर्याप्तं यत्र द्रव्यं दातुमिच्छति तन्निषिद्धतया दानानर्हमिति ज्ञेयम् । **अव्यावर्तनीयमिति** । अपुनराहार्यमित्यर्थः । **नारद**वचनोक्तार्थपरत्वेन मूलवचनमवतारयति । **तदेतत्संतक्षेपत इति** ॥

## याज्ञवल्कीये १७५ श्लोकः ।

पूर्वमस्वतया दानानर्हं निषिद्धतया दानानर्हं चेत्यदेयं द्विविधं **नारद**वचने प्रतिपादितम् । तत्र निषिद्धतया यदेकं प्रकारमदेयं तन्मूलवचनस्थकुटुंबाविरोधेनेति. पदेन व्यतिरेकतो दर्शयति । **कुटुंबाविरोधेनेत्यनेनेति** । स्वकुटुंबपोषणायापर्याप्तं न देयमित्यर्थः ।

---

१ क-ख-तं विक्रेतार ।२ ड—निरुक्तयैव ।

अस्वतया यददेयमुक्तं तद्दर्शयति । **स्वं दद्यादित्यनेनेति ।** अयमभिप्रायः । अस्वमं स्वमपि कुटुंबपोषणापर्याप्तं न देयमिति द्विविधमदेयमिति । नन्वस्वत्वेनान्वाहितादिः पंचको गुणो यत्वेन त्वयाऽभिधीयते । **नारदेन** त्वष्टको गुणोऽदेय इत्यभिहितं । अतस्तद्विरोध इत्याशंकते हि परिहर्तुम् । **यत्पुनर्नारदेनेति ।** परिहरति । **एतददेयत्वमात्राभिप्रायेणेति ।** एकगणपाठोऽ
५ हितादीनां अष्टानामदेयत्वमात्रसाम्येन न पुनरस्वत्वाभिप्रायेणेत्यभिसंधिः । तत्र हेतुमाह । **पुत्र रसर्वस्वेति ।**

स्वकुटुंबाविरोधेन देयमित्यमुमंशं व्याख्याय दारसुतादृत इत्याद्यवशिष्टं व्याख्यातुमवतारयां **स्वं दद्यादित्यनेनेति ।**

## याज्ञवल्कीये १७६ श्लोकः ।

१० **स्थावरस्य विशेषतः ।** प्रकाशप्रतिग्रहे हेतुमाह । **तस्य सुवर्णादिवदिति ।**

पूर्वोक्तमूलश्लोकस्यैवोत्तरार्धप्रकरणसंबंधं अवतारयति । **एवं प्रासंगिकमिति । यद्य धर्मात्प्रच्युतो न भवतीति ।** यस्मै दातुं प्रतिश्रुतं स इत्यर्थः ।

देयादेयविषयं वक्तव्यमभिधाय दत्तादत्तविषयं वक्तव्यं वक्तुमुपक्रमते । **न्यायमार्गेण य त्तमिति ।** दत्तस्यानपहरणकथनेनैव तत्प्रतिपक्षभूतस्यादत्तस्य प्रत्याहरणमर्थसिद्धिमेवेत्याह । **यत्पुन**
१५ **न्यायेनेति । अदत्तं तु भयक्रोधेति ।** भयं च क्रोधश्च शोकश्च भयक्रोधशोकाः तेषामावेगः तेनासक्ततयेति समासः । पूर्वोक्तं **नारद**वचननिचयं व्याख्यातुमुपक्रमते । **अयमर्थ इति ।** तत्रैवाद्यं पण्यमूल्यमिति वचनं व्याचष्टे । **पण्यस्येति ।** **नारद**वचनस्थदत्तमिति पदं पण्यमूल्यादिशेषतः स्वतंत्रतया च तंत्रेणोपात्तमित्यभिप्रायं प्रकटयन्नाह । **यच्चादृष्टार्थमिति । सहस्रमिति परिभाष्य ददातीति ।** शतं दीयत इति । मनसि विचार्याऽतःकरणोल्लासादिवशात्सहस्रं दीयत इत्युक्तौ सत्यां
२० मनसोऽनभिप्रेतमप्युक्तानुसारेण यत् दीयते तदित्यर्थः । **कात्यायन**वचनेनैव सर्वविवादसाधारणं वचनमुक्तमित्याह । **तथेदमपरमिति ॥**

॥ इति दत्ताप्रदानिकं नाम प्रकरणम् ॥

---

## अथ क्रीतानुशयप्रकरणम् १३ ।

**द्विगुणं तु तृतीयेऽह्नीति ।** पूर्वोक्तत्रिंशांशाद्विगुणं पंचदशांशमित्यर्थः । 'परतः क्रेतु-रेव ही' त्यमुमंशं तात्पर्यतो व्याचष्टे । **परतोऽनुशय इति । एतच्च बीजादिव्यतिरिक्तेति ।**
२५ बीजादिव्यतिरिक्तं च तदुपयोगविनश्वरं चेति समासः ।

एवं स्मृत्यंतरोक्तं मनसि निधाय पूर्वोक्तव्यतिरिक्तविषये **योगीश्वरः** पत्यर्पणप्रकारं **दर्शयती-**त्याह । **बीजादिक्रये पुनरिति ।** परीक्षापूर्वक्रये विशेषमाह । **यत् पुनः परीक्ष्येति ।**

यद्यपि 'बीजायोवाह्यरत्नस्त्रीदोह्यपुसां परीक्षणमिति' बीजादिक्रमेण परिगणितं **तथापि** दोह्यमहिष्यादौ पतिसवनदोहनेन परीक्षायाः पयोगतात्पत्वमहत्त्वाभ्यां सुज्ञानत्वात्तत्प्राधान्येनाह ।
३० **दोह्यादिपरीक्षाप्रसंगेनेति । पटादौ पंचपलावृद्धिरिति ।** अत्र यद्यप्यौर्णकार्पाससौत्रिक इति कंबलस्यादित्वेन परिगणनं तथापि 'पटादावि' त्युक्तिरुपपन्ना । प्रतिलोमाभिप्रायत्वात् । **यत्र प्रावा-रादौ इति ।** प्रावार उत्तरासंगः '**द्वौ** प्रावारोत्तरासंगौ समावि' **त्यमरः** (२।६।११७) ।

॥ इति क्रीतानुशयप्रकरणम् ॥

---

१ क-ख-ग-प्रतिलोमाभिप्रायत्वादौ ।

## अथाभ्युपेत्याशुश्रूषाप्रकरणम् १४ ।

**अपरं विवादपदमिति ।** तेषामाद्यमृणादानामित्यत्रानुपात्तत्वादपरं विवादपदमित्यर्थः । अभ्युपेत्य 'तु शुश्रूषामि' त्येतन्नारदवचनं व्याचष्टे । **आज्ञाकरणमिति ।** शिष्यांतेवासिभृतकादि-कर्मकृतेः सामान्यसंज्ञामाह । **तेषामाद्य इति । सामान्यमस्वतंत्रत्वमिति ।** अस्यार्थः । एषां शिष्यादीनां पंचानामस्वतंत्रत्वं नाम सामान्य साधारणो धर्म इत्याहुः । **मनीषिणो** महर्षयः । एषां मध्ये शिष्यादिचतुष्टयसमुदायोऽवांतरजातिकर्मर इति विशेष उक्तो मनीषिभिः[1] कर्मकरत्वं चतुर्णाम-प्यवांतरजातिरित्यर्थः । तथा वृत्तिर्वर्तनमपि शुभकर्मकरत्वेन विशिष्टं शुभकर्मकरत्वं विशिष्टा-वृत्तिरिति । पूर्वोक्तमर्थं विविच्य दर्शयति । ' शिष्यांतेवासिभृतकाश्चतुर्थस्त्वधिकर्मकृदि ' त्यमुं **नारदीय**वचनांशं व्याचष्टे । **तत्र शिष्य इत्यादिना ।** गृहद्वारा शुचिस्थानरथ्यावस्करशोधन-पदानि व्याचष्टे । **अशुचिस्थानमित्यादिना ।** 'शिष्यांतेवासिभृतक' इत्युद्दिष्टानां मध्ये भृतकस्य त्रैविध्यमाह । **भृतकश्चेति ।** दासाः पुनः पंचदशप्रकारा इत्युक्तं तत्प्रपंचयति । **दासाः पुनरित्यादिना। ध्वजाहृत इति। दंडदासश्चेति च** । युद्धप्राप्तो ध्वजदासः । पारिव्राज्यच्युतस्य प्रायश्चित्तमकुर्वतः पुंसो दंडार्थमेवामरणाद्दास्यं राज्ञः कृते भवतीति दंडदासः पारिव्रज्याच्युत इति विवेकः । **न तु परिसंख्यार्थमिति ।** परिगणितव्यतिरिक्तं निषेधार्थं नेत्यर्थः ।

एवं प्रकरणोपात्तत्वेन स्मृत्यंतरोक्तमभिधाय मूलवचनविषयं विवेचयति । **तत्रैषामित्या-दिना** । अधुना मूलवचनमवतारयति । **दासांतेवासिनोरिति** ।

### याज्ञवल्कीये १८२ श्लोकः ।

**अपिशब्दादाहितो दत्तश्चेति** । चौरैरित्यनुवर्तते । चौरैराहितो दत्तश्चेत्यर्थः । स्वाम्या-हितादिविषय उत्तरत्राभिधास्यमानत्वात् । **यदि स्वामी न मुंचतीति** । बलात् चौरक्रयादिना वा यः स्वामीव स्वामी स इत्यर्थः ।

'भक्तत्यागादि' त्यमुं मूलवचनांशं व्याचष्टे । **भक्तादासादीनाम्।संभक्षितं यद्दुर्भिक्ष इति ।** दुर्भिक्षे यद्भक्षितं न तत्कर्मणा शुद्ध्येत् । यदीयं[4] भुंक्ते तदीयव्यापारमात्रेण न शुद्धिर्दास्यात न निर्मुक्तिः । अपि तु तत्कर्मकरणेन गोयुगदानेन च शुद्धिरित्यर्थः । अयमेव **याज्ञवल्क्योक्तो** विशेष इति ज्ञेयः । **प्रतिशीर्षकदानेनेति** । तुल्यव्यापारेण पुरुषांतरदानेन मुच्येरन् । कर्माणि स्वसदृश-पुरुषांतरं दत्वा मुच्येरन्नित्यर्थः । 'निग्रहाद्दडवायास्त्वि' त्यस्य तात्पर्यमाह । **दासेन सहेति । तेनैवोक्तमिति** । तेन **नारदेन** ।

### याज्ञवल्कीये १८३ श्लोकः ।

**दारवद्दासतेति** । यथाऽऽनुलोम्येनैव विवाहो न प्रातिलोम्येन तथा दासत्वमपीत्यभिप्रायः ।

### याज्ञवल्कीये १८४ श्लोकः ।

**स्वशिल्पमिच्छन्निति** । स्वजातिविहितं शिल्पमित्यर्थः ।

। इत्यभ्युपेत्याशुश्रूषाख्यं विवादपदम् ।

[1] ज-कर्मकृता । [2] ज-इत्यत्रशुचिस्थानावस्कर ? शोधनपदानिन्याचष्टे । [3] क-ख-स्वाम्याहितातिविषः [4] ज-यदीयं भक्तमभुंक्ते तदीय-

## अथ संविद्व्यतिक्रमप्रकरणम् १५ ।

'पाषंडिनैगमादीनामि' त्येतन्नारदवचनं व्याचष्टे । **पारिभाषिकधर्मेणेति** । पूर्वं व्यतिरेकमुखेन दर्शितं इत्युक्तं तद्दर्शयति । **तद्व्यतिक्रम्यमाणमिति** । इदमत्राकूतम् । समयस्यानपाकर्मेत्यन्वयमुखेन संविद्व्यतिक्रमाख्यविवादपदस्य प्रतिपक्षरूपमभिधाय तद्विवादपदं स्मृतमित्यभिधानात् ५ उक्तव्यतिरेकरूपं विवादपदमिति व्यतिरेकाभिधानमिति । मूलवचनमवतारयति ।

### याज्ञवल्कीये १८५-१९२ श्लोकाः ।

**तदुपक्रमार्थमिति** । **अनुबंधाद्यतिशयेति** । अनुबंधो दोषोऽपराध इति यावत् । १८५।१८६।१८७॥ **राज्ञा प्रथमसाहसमिति** । १८८।१९१॥ अस्मिन् ग्रंथे यच्छब्दोपादानात् स इति शब्दोऽप्यर्थसिद्ध इति स इति शब्दो नोपात्तः इति । शेषं सुबोधं ॥

१० इति संविद्व्यतिक्रमप्रकरणम् ।

## अथ वेतनादानप्रकरणम् १६ ।

एवं स्मृत्यंतरोक्तलक्षणवेतनस्यानपाकर्माख्ये विवादपदे **योगीश्वरो** निर्णयं दर्शयतीत्याह । **तत्र निर्णयमाहेति** ।

### याज्ञवल्कीये १९३ श्लोकः ।

१५ **भृत्याय वेतनं दद्यादिति** । भृतो भृत्य इत्यर्थः । **यथाक्रमम्** । आदिमध्यावसानेष्वैच्छिकक्रमेणोक्तसमयमनतिक्रम्येति यावत् । 'कर्मणो यद्विनिश्चित' **मित्यनेन** कर्मानुसारेण मध्यस्थपरिकल्पितं द्रव्यं भृतिरिति भृतिस्वरूपोक्तिर्द्रष्टव्या ।

### याज्ञवल्कीये १९५ श्लोकः ।

**यस्तु भृत्य इति** । अत्रानुचितं देशं कालं च दर्पादिनोल्लंघयेदित्यन्वयः ।

२० 
### याज्ञवल्कीये १९६ श्लोकः ।

**अनेकभृत्यसाध्ये कर्मणीति** । एकद्वित्र्यादिभिः वा मिलित्वैतत्कर्म तावत्या भृत्या क्रियत इति परिभाष्य क्रियमाणे कर्मणीत्यर्थः । **न पुनः सममिति** । एकस्मिन् कर्मणि पंचभिः कर्मकरैर्दशभिः पणैर्भृत्या क्रियमाणे व्याध्यादिवशात्तैः सर्वैरपि च तत्कर्म न निष्पन्नं कियदेव च निष्पन्नम् । तत्र प्रतिपुरुषं पणद्वयं पणद्वयं विभज्य साम्येन न दातव्यम् । अपि तु तत्तत्कृत- २५ कर्मानुसारेण न्यूनाधिकं देयमित्यर्थः । ऐतेनैव तत्कर्मणि निष्पन्ने परिभाषितवेतनमपि स्वामिना दत्तं कर्मकरा अपि स्वस्वकृतव्यापारानुरोधेनैव विभज्य गृह्णीयुरिति गम्यते ।

ननु 'न पुनः समं देय' मित्युक्त्या तत्तत्कृतकर्मानुसारेणैव वेतनं देयमित्युक्तं स्यात् । तथा चैतदुक्तं भवति । अवयवशो विभज्य दातव्यमिति । एतदनुपपन्नम् । यतः कर्मणि नियतमेव वेतनं कर्मकरेभ्यः समुदितमेव परिभाषितं न पृथक् पृथक्परिभाषानुसारेण वेतनादानमुचितमिति इमामाशंकां परिहरन्नाह । ३० **न चावयवश इति** । अयमाशयः । यद्यप्यविभज्य दानमपरिभाषितं तथापि कर्मानुसारेणै दातुमुचितत्वा-

---

१ क-एतेनैकतत्कर्मणि । २ ख-तथा चैतदित्युक्तं भवति । ३ ख-कर्मानुसारेणादातुम् ।

द्वचनात् च विभज्य दीयत इति । अयं हि परिहारः सुबोध इति ग्रंथे निबंधकारेण न निबद्धः । **साध्ये तूभाभ्यामिति** । उभाभ्यामित्युपलक्षणम् । अतो बहुभिर्वा साध्ये ॥

अभ्युपेत्याशुश्रूषाख्ये विवादपदे 'शुश्रूषकः पंचविध' इत्युपक्रम्य 'चतुर्विधाः कर्मकरास्तेषां दासास्त्रिपंचकाः । शिष्यांतेवासिभृतकाश्चतुर्थस्त्वधिकर्मकृदिति' शुश्रूषकपंचविधत्वमुक्त्वा भृतकस्यैव त्रैविध्यं दर्शितम् । "उत्तमस्त्वायुधीयोऽत्र मध्यमस्तु कृषीवलः । अधमो भारवाही स्यादित्येवं त्रिविधो भृतः" इति । तत्र 'गृहीतवेतनः कर्मे' त्यनेन कृषीवलभृतकं प्रतिवेतनविषयेऽभिहितमधुनाऽऽयुधीय भृतकभारवाहकभृतकौ प्रतिविशेषं दर्शयतीत्याह । **आयुधीयभारवाहकाविति** ॥ ५

## याज्ञवल्कीये १९७ श्लोकः ।

**भांडमिति** पात्रादिकं । 'सर्वमावपनं भांडं पात्रामत्रं च भाजनमि' **त्यमरः** ( २।९।३३ ) तथा नानार्थे **स** एव । 'स्याद्भांडमश्वाभरणेऽमत्रे मूलवणिग्धने' इति । (**अमरकोशे** ३।३।४३ )। १० **वाहकेन नाशितमिति** । वाहकपदमायुधीयस्याप्युपलक्षकम् ।

## याज्ञवल्कीये १९८ श्लोकः ।

**भृत्यंतदानपा इति** । अपादानमुपादानं संप्रदानामिति यावत् । **एतच्च व्याधितादिविषयमिति** । 'प्रस्थानविघ्नकृच्चैवेत्यारभ्य' यदुक्तं तदित्यर्थः । एवं विषयविभागः कथमवगम्यते इत्याशंक्य व्याध्याद्यपीडिते **मनु**ना दंडांतरविधानादित्याह । **भृतो नार्त इति** । भृतो भृत्यः नार्तो व्याध्यादिरहितः । अत्र 'न देयं तस्य वेतनमिति' **मनु**स्मरणादुपरितनवाक्यशेषेणान्वयः । **यस्त्वपगतव्याधिः स्वस्थ एव चेति** । व्याध्युपसृष्टः पश्चान्निवृत्तव्याधिः व्याध्यसंसृष्टः स्वस्थ इति भेदः ॥ १५

इति वेतनादानप्रकरणम् ॥

# अथ द्यूतसमाह्वयप्रकरणम् १७ ।

**अधुना द्यूतसमाह्वयाख्यमिति** । द्यूतं च समाह्वयश्च द्यूतसमाह्वयमेवं व्याख्या यस्मिन् २० विवादपदे तत्तथोक्तम् । अप्राणिभिः अक्षादिभिः साध्यं देवनं द्यूतं, प्राणिभिः कुक्कुटादिभिः साध्यं समाह्वयः । 'तदेतदुभयमक्षबंध' इति **नारद**वचनं व्याचक्षाणो दर्शयति । **अक्षाः पाशका** इत्यादिना ।

एवंलक्षणलक्षिते द्यूतसमाह्वयाख्ये विवादपदे द्यूतसभाधिकारिणो वृत्तिं **याज्ञवल्क्यो** दर्शयतीत्याह । **तत्र द्यूतसभाधिकारिण इति** ।

## याज्ञवल्कीये १९९ श्लोकः । २५

**तदाश्रया शतिकेति** । तदाश्रिता ग्लहाश्रिता । शतपरिमिता[1] वृद्धिस्तदधिका चेत्यर्थः । एतदुक्तं भवति । यस्मिन् यस्मिन् द्यूते शतेन वा तदधिकैर्वा काकिण्यादिभिः परिकल्पितं पणं जयति । स जेता शतिकवृधिरित्युच्यते ॥

## याज्ञवल्कीये २०१ श्लोकः ।

तस्मात् द्यूतकारात् शतकाकिण्यादिके जिते तत्सभाधिकारी पंचकाकिण्यादीन् गृह्णीयादिति ३० मूलवचनस्थं **स्थान** इति पदं व्याचष्टे । **अविप्रतिपन्नमिति** । स्थाने युक्तमविप्रतिपन्नमिति यावत् ॥

---

१ ज्ञ—नत्परिमिता ।

## याज्ञवल्कीये २०३ श्लोकः ।

**क्वचिद्द्यूतं निषेद्धुमिति** । कूटाक्षादिभिर्दीव्यतो दंडविधानात् तादृशाक्षादिभिर्देवनं सभिकरहितस्थले च देवनमर्थान्निषिद्धमिति गम्यते ॥

॥ इति द्यूतसमाह्वयाख्यप्रकरणम् ॥

## अथ वाक्पारुष्यप्रकरणम् १८ ।

'देशजातीति' **नारद**वचनं व्याचष्टे । **देशादीनामिति** । देशाद्याक्रोशानुदाहृत्य दर्शयति । **तत्र कलहप्रिया इत्यादिना । आदिग्रहणात्स्वविद्येति** । साक्षादितरपुरुषनिंदामकुर्वंस्तत्र निंदाभिप्रायेणैव स्वयं विद्वान् सन्नप्यविद्वान्वा यस्मिंस्तर्कविद्यादिविशेषे परस्य नैपुण्यमस्ति यस्यां च शिल्पविद्यायां कुशलः परः, तत्तर्कविद्यायां कुशलः परः । तत्तर्कविद्या १० शिल्पादिनिंदा या विद्वज्जनाद्यधिक्षेप इत्यर्थः । एवंविधे वाक्पारुष्ये दंडवैषम्याभिधानार्थं निष्ठुराश्लीलतीव्रत्वसंज्ञाभेदेन त्रिरूपत्वमभिधाय निष्ठुरादिलक्षणमपि **नारदे**नैवोक्तमित्याह । **तत्र च दंडतारतम्यार्थमित्यादिना** । अत्र च निष्ठुराक्षेपो लघीयान् तीव्राक्षेपो गरीयानिति भेदः ।

पूर्वं न्यंगमवद्यमित्युक्तं । तच्चावद्यम् । निष्ठुरादिषु वाक्पारुष्यभेदेषु साधारणमिति 'अश्लीलं न्यंगसंयुक्तं' मित्यश्लीलरूपवाक्पारुष्यरूपविशेषलक्षणाभिधानमनुपपन्नं स्यादित्यसत्यरूपोऽवद्यविशेषोऽत्र १५ न्यंगशब्देनाभिप्रेत इत्याह । **अत्र न्यंगमिति** ।

## याज्ञवल्कीये २०४ श्लोकः ।

अधुना मूलवचनमवतारयति । **तत्र निष्ठुराक्रोश इति** । 'सत्यादिः'। तत्र[1] स्वरूपमुदाहृत्य दर्शयति । **नेत्रयुगलहीन इत्यादिना** ।

ननु **मनु**ना 'कार्षापणावरमिति' कार्षापणादन्यूनदंडो[2] विहितोऽतस्तेन विरोधो अर्धाधिक-२० त्रयोदशपणात्मकदंडविधानस्येत्याशंक्याचारादिभिरत्यंतानिकृष्टो[3] वर्णी यद्याक्षिप्यते स वर्ण एव तदा स आक्षेपकः । कार्षापणावरं दण्डं दद्यो न सर्वविषय एष दंड इति विषयभेदेन विरोधं परिहरति । **काणं वाऽप्यथवा खंजमित्यादिना** । कार्षापणः अवरो यस्मिन् दंडे स तादृशः न ततो न्यूनमित्यर्थः ।

## २५ याज्ञवल्कीये २०५ श्लोकः ।

मूलवचनस्थहशब्दद्योत्यमर्थमाह । **अन्यं वा त्वजायामिति** ।

अश्लीलाक्षेप एव स्थलविशेषे दंडविशेषमाह । **एवं समानगुणेष्वित्यादिना** । पूर्ववाक्यस्थसंख्यापेक्षयाऽस्मिन् वाक्येऽर्थद्वैगुण्यादिप्रतिपादनात् अश्लीलाक्षेप एवेति गम्यते ।

## याज्ञवल्कीये २०६ श्लोकः ।

३० **परभार्यासु पुनरविशेषेणेति** । आक्षेप्त्रपेक्षया न्यूनवृत्तस्याधिकवृत्तस्य वा भार्या भवतु[5] । यथा । कथंचित्परभार्यात्वमत्र विवक्षितं अत एवाविशेषेत्युक्तिरिति द्रष्टव्यम् । ननु पूर्ववाक्यव्याख्यानावसरेऽन्यं किंचित्परं वा त्वज्जायामभिगंतेत्युपादाय पंचविंशतिको दमो विहितः । अत्र तु पंचाशत्पणात्मको

---

१ ग--तत्स्वरूपमुदाहृत्य २ ग--अभिहितो ३ क-अर्धाधिकद्वादश । ख-द्व्यधिकद्वादशपणात्मक । क-ख-निकृष्टेनु- वर्णिना यद्याक्षिप्यते । ५ क-भार्याभावात् भवतु । ख-भार्या भवतु भवतु ।

ऽभिधीयत इति परस्परविरोध इति चेत् मैवं । पूर्वत्र भार्याद्वारा पुरुषस्याक्षेपे दण्डविशेषोऽभिहितः । सांप्रतं परभार्याया एवाक्षेपे विशेषोऽभिधीयत इति भेदः । **उत्तराधरभावापेक्षयेति** । वर्णजातिगतन्यूनाधिकत्वतारतम्यापेक्षयेत्यर्थः । एतदेवोदाहृत्य दर्शयति । **यथा मूर्धावसिक्तमित्यादिना** । अत्र ब्राह्मणकर्तृको मूर्धावसिक्तविषय आक्षेपः । **प्रतिलोमापवादेष्विति** । 'वर्णानामानुलोम्येने'त्युपरितनवचने क्षत्रियकर्तृकब्राह्मणविषयाक्षेपे ब्राह्मणकर्तृकक्षत्रियविषयाक्षेपे च शतपणकं पंचाशत्पणकं च दंडं वक्ष्यमाणं सिद्धवत् कृत्वाऽत्रोपन्यस्यति । **क्षत्रियाक्षेपनिमित्तादिना** । **किंचिदधिकमिति** । किंचिदिति पादाभिप्रायेण स चात्र शतापेक्षया चतुर्थांश इति ज्ञेयः । अनेनैवाभिप्रायेणाह । **पंचसप्तत्यात्मकमिति** । **तं** मूर्धावसिक्तं । अत्र ब्राह्मणविषयक्षत्रियकर्तृकाक्षेपनिमित्ताच्छतदंडात्पादोनः पंचसप्ततिर्दंडः मूर्धावसिक्तस्य ब्राह्मणापेक्षया न्यूनत्वात्, क्षत्रियापेक्षयाऽधिकत्वात् । क्षत्रियकृतात् ब्राह्मणक्षत्रियानिमित्तात् शतदंडात्पादन्यूनो ब्राह्मणकृतात् क्षत्रियाक्षेपनिमित्तात् पंचाशत्परिमितात्पादाधिकः पंचसप्तत्यात्मको दंडः क्षत्रियकर्तृके मूर्धावसिक्तेऽपीति तौ ब्राह्मणक्षत्रियौ मूर्धावसिक्तस्य क्षत्रियापेक्षयाऽधिकत्वेन क्षत्रियकर्तृकब्राह्मणविषयापेक्षया निमित्तशतदंडापेक्षया पादोनशतं पंचसप्ततिरेव दंडो मूर्धावसिक्तेन ब्राह्मणाक्षेपे कृते तथा मूर्धावसिक्तस्य ब्राह्मणापेक्षया न्यूनत्वेन ब्राह्मणकर्तृकत्वेन ब्राह्मणकर्तृकक्षत्रियाक्षेपनिमित्तदंडात्पंचाशत्परिमितात् पादाधिकपंचसप्ततिर्दण्डो मूर्धावसिक्तेन क्षत्रियाक्षेपकृत इति । उभयतोऽपि तावानेव दंड इत्यभिप्रायः ।

एवं वर्णजात्योः परस्पराक्षेपे दंडमभिधाय जातिष्वेव ब्राह्मणात् क्षत्रियायां वैश्यायां च जातयो मूर्धावसिक्तांबष्ठयोरन्योन्याक्षेपे दण्डमाह । **मूर्धावसिक्तांबष्ठयोरिति** । अत्र ब्राह्मणस्थानीयो मूर्धावसिक्तः क्षत्रियस्थानीयोऽम्बष्ठः । अंबष्ठेन मूर्धावसिक्ताक्षेपे शतं विपरीते तु पंचाशदिति व्यवस्था विज्ञेया । वर्णजात्योर्जातिष्वेव वाऽनुलोमप्रातिलोमापवादे पूर्वोक्तन्यायेन पादोनः पादाधिको दंडः कल्पनीय इत्याह । **एवमन्यत्रापीति** । कल्पनाप्रकारस्तु ब्राह्मणकर्तृकमूर्धावसिक्तविषयाक्षेपे दर्शितो 'यथा मूर्धावसिक्तमि'त्यनेन । ब्राह्मणकर्तृकांबष्ठविषयाक्षेपे.सार्धसप्तत्रिंशत्पणात्मको दंडः । अत्र पञ्चाशत्पणात्मको दण्डः । अत्र पंचाशदपेक्षया पादपरिक्लृप्तिः न शतापेक्षया । तथा च क्षत्रियापेक्षयांऽबष्ठस्य न्यूनत्वात् वैश्यापेक्षयाऽधिकत्वात् ब्राह्मणे क्षत्रियाक्षेपे यो दंडः पंचाशत्पणात्मकः तस्मात्पादोनो ब्राह्मणेनैव वैश्यापेक्षया दंडः पंचविंशत्पणात्मकः तस्मात्पादाधिकः सार्धसप्ततिर्दंडो भवतीत्यर्थः । ब्राह्मणेन निषादाक्षेपे पादोनैकोविंशतिः पणानां दंडो यः पंचविंशतिः तदपेक्षया पादन्यूनो ब्राह्मणेनैव शूद्राक्षेपे यः सार्धद्वादशपणात्मको दंडः तस्मात्पादाधिकः पादोनैकविंशतिर्दंड इत्यर्थः । निषादेन ब्राह्मणाक्षेपे पंचसप्तत्यधिकं शतं दंडः । अत्रापि पुनः शतापेक्षयैव पादव्यवस्था । तथा च शूद्रापेक्षया निषादस्याधिकत्वेन वैश्यापेक्षया च न्यूनत्वेन शूद्रत्वेन ब्राह्मणापेक्षया यो दंडो वधात्मकः शारीरस्तस्मादर्थदंडस्यान्यूनत्वेन शूद्रकृतब्राह्मणाक्षेपनिमित्ताद्दंडात्किंचिन्न्यूनो वैश्येन ब्राह्मणाक्षेपे यो दंडः सार्धशतं तस्मात् किंचिदधिकः पंचसप्तत्यधिकं शतं दंडो भवतीत्यर्थः । अंबष्ठेन ब्राह्मणाक्षेपे पंचविंशत्यधिकशतदंडः । वैश्यापेक्षयांऽबष्ठस्याधिकत्वेन क्षत्रियापेक्षया च न्यूनत्वेन वैश्येन ब्राह्मणाक्षेपे सार्धं शतं यो दंडः तस्मान्न्यूनः क्षत्रि-

१ ज–सार्धसप्तत्रिंशत्पणात्मको दंडो । २ ज–पादोनौ कोनविंशति । ३ ज–न्यूनत्वेन ।

यकर्तृकब्राह्मणाक्षेपे यो दंडः शतात्मकः तस्मादधिकः पंचविंशत्यधिकं शतं दंडो भवतीत्यर्थः । मूर्धा-वसिक्तब्राह्मणविषयाक्षेपे पूर्वं दर्शितः । स एष वर्णजात्योरानुलोम्यप्रातिलोम्यापवादे कल्पनाक्रमः जातिष्वेव आनुलोम्यप्रातिलोम्यापवादे तु ब्रह्मक्षत्रविशामिव मूर्धावसिक्तांबष्ठनिषादानामपि यथाक्रमं पंचाशत्पंचविंशतिसार्धद्वादशसार्धशतशतपंचाशदात्मकं दंडस्योहनं विज्ञेयम् । एतदुक्तं भवति ।
५ स्वस्यासन्निहिताधिकापेक्षयाऽधिको दंडो व्यवहिताधिकाक्षेपे तथैव सन्निहितन्यूनापेक्षया च न्यूनो दंडो व्यवहितन्यूनाक्षेप इति ॥ २०६ ॥

प्रकृतमनुसरामः । **एवं सर्ववर्णविषय इति** । सर्वे च वर्णाश्चेति समासः । सर्वे मूर्धावसि-क्तादयः वर्णाः ब्राह्मणादयः पूर्ववाक्यद्विगुणपादोपात्तेति । 'अर्धोऽधमेषु द्विगुण' इत्यत्रेत्यर्थः ।

## याज्ञवल्कीये २०७ श्लोकः ।

१० द्वैगुण्यत्रैगुण्यं चोदाहृत्य दर्शयति । **शतपणाः सार्धशतपणा इति च** । अत्र दंडा इति बहुवचनं निमित्तभूतवर्णापराधबाहुल्याभिप्रायेण । तथाहि क्षत्रियवैश्याभ्यां ब्राह्मणे वैश्य-शूद्राभ्यां क्षत्रिये शूद्रेण वैश्ये एवमानुलोम्येनापीत्यपराधबाहुल्यम् । शूद्रस्य ब्राह्मणाक्षेपे शारीर एव दंडो नार्थदंडः । ब्राह्मणविषयक्षत्रियकर्तृकापराधे यो न्यायोऽभिहितः क्षत्रियविषयविट्शूद्रकर्तृ-कापराधेऽप्यातिदिशति । **विट्शूद्रयोरपीति** । अनंतरसंनिहितः एकांतर एकेन व्यवहितः यथा
१५ ब्राह्मणादनंतरैकांतरयोः क्षत्रियवैश्ययोः ब्राह्मणविषयापराधे दंडस्तथैव क्षत्रियादनंतरैकांतरयोर्वै-श्यशूद्रयोरपीत्यर्थः । ब्राह्मणानंतरभाविना क्षत्रियेण ब्राह्मणाक्रोशे शतमिव वैश्यानंतरभाविना शूद्रेण वैश्याक्रोशेऽपि शतमित्याह । **शूद्रस्य चेति** ।

**वर्णानामानुलोम्येनेति** । द्वितीयार्धं व्याचष्टे । **आनुलोम्येन त्विति** । **ब्राह्मणाक्रोश-निमित्ताविति** । क्षत्रियकर्तृकब्राह्मणविषयाक्षेपनिमित्ताच्छतदंडादित्यर्थः । **प्रतिवर्णमर्धस्यार्ध-**
२० **स्येति** । ब्राह्मणेन क्षत्रियाक्षेपे कृते शतादर्धं पंचाशद्दंडः । तेनैव वैश्याक्षेपे पंचाशतोऽर्धं पंचविंशतिः, तेनैव च शूद्राक्षेपे पंचविंशतेरर्धं सार्धद्वादशपणा इति विवेकः । **शूद्रे द्वादशको दम इति** । सार्ध-इति शेषः । 'क्षत्रियेण वैश्ये शूद्रे च' त्यत्र **गौतम**वचनं प्रमाणयति । **ब्राह्मणराजन्यवदिति** । 'वैश्यस्य च शूद्राक्रोशे' इत्यत्र **मनु**वचनं प्रमाणयति । **विट्शूद्रयोरेवमेवेति** ।

'सत्यासत्यान्यथा स्तोत्रैरि' त्येतेन नेष्ठुराक्षेपे दंडमभिधायाश्लीलाक्षेपे दंडं प्रस्तुत्य सिंहावलो-
२५ कनन्यायेन निष्ठुराक्षेपमधिकरोतीत्याह । **पुनर्निष्ठुराक्षेपमिति** ।

## याज्ञवल्कीये २०८ श्लोकः ।

वाचा प्रतिपादनमेवोदाहृत्य दर्शयति । **तव बाहुमिति** ।

## याज्ञवल्कीये २१० श्लोकः ।

**वर्णिनामाक्षेप इति** । वर्णिपदं मूर्धावसिक्तादिजातीनामुपलक्षणार्थम् । तथा च जातिष्वपि
३० परस्परं पतनीयैराक्षेपे मध्यमसाहसः उपपातकैराक्षेपे प्रथमसाहस इत्येष निर्णयः । वर्णजात्योः परस्परमाक्षेपेऽपि पूर्वोक्त एव दंडः । वर्णिष्वपि न्यूनाधिकभावमंतरेण मध्यमसाहसादिदंडविधानादि-तरत्रापि कल्पनापत्तिः प्रामाणिकत्वात् ।

१ ज—कल्पनाया निष्प्रामाणिकत्वात् ।

## याज्ञवल्कीये २११ श्लोकः ।

**ये पुनर्ब्राह्मणमूर्धावसिक्तादीनामिति ।** ब्राह्मणसंघो मूर्धावसिक्तसंघः एवं क्षत्रियादिसंघ इति प्रत्येकं संघशब्दान्वयः । मीलितान्वयो वा उभयथाऽपि स एव दंडः ।

॥ इति वाक्पारुष्यं नाम विवादपदम् ॥

## अथ दण्डपारुष्यप्रकरणम् १९ । ५

दंडपारुष्यस्वरूपं **नारद**वचनानुसारेणाभिधाय तद्वचनानुसारेणैव तद्भेदानप्याह । **तस्य त्ववगोरणादिरूपकरणभेदेनेति ।** अवगोरणादिरूपकरणकारणभेदेनेति यावत् । **द्रव्यरूपकर्मत्रैविध्यादिति ।** कर्मकारकत्रैविध्यादित्यर्थः । एतदुक्तं भवति । दंडपारुष्यं नाम शरीरस्य विरूक्षीकरणम्[1] । तत्र विरूक्षीकरणाख्ये कर्मणि अवगोरणं निःसंगपातनं क्षतदर्शनं चेति त्रीणि करणानि एवं करणभेदात् त्रैविध्यम् । यत्र शरीरे विरूक्षीकरणं जायते तत्कर्मकारकम् । तस्य कर्मकारकस्य १० हीनत्वेन मध्यमत्वेनोत्तमत्वेन च त्रैविध्यमिति । **तस्यापि दृष्टं त्रैविध्यमिति ।** तस्य दंडपारुष्यस्यावगोरणनिःसंगपातनक्षतदर्शनैः करणैर्हीनमध्यमोत्तमानां द्रव्याणां समतिक्रमात् हीनमध्यमोत्तरक्रमात्त्रैविध्यं दृष्टमित्यन्वयः । अवगोरणादिकरणेषु पाठक्रमादेव[2] हीनत्वादिकं विज्ञेयम् ।

ननु करणकारकभेदात् कर्मकारकभेदाच्च षड्विधत्वे सिद्धे विध्योक्तिरनुपपन्नेत्याशंक्याह । **त्रीण्येव साहसानीति ।** तत्रैवंविधे दंडपारुष्ये कंटकशोधने दुष्टशिक्षायां क्रियमाणायामपराधानुसारेण १५ शिक्षार्थं दंडपारुष्यरूपाणि साहसानि हीनदंडपारुष्यमध्यमदंडपारुष्योत्तमदंडपारुष्याणीति त्रीण्येवेति नियम्यते । अयमर्थः । कर्मकरणभेदेऽपि हीनमध्यमोत्तमव्यपदेशात्त्रिप्रकारत्वमेवेति ।

एवं दंडपारुष्यस्वरूपसंभेदमभिधाय वाक्पारुष्यदंडपारुष्यसाधारणधर्मानाह । **तथा वाग्दंडपारुष्ययोरुभयोरिति । बद्धे वैरानुसंधातुरिति ।** पूर्ववैरानुस्मर्तुरित्यर्थः । **विधिः पंचविधस्तूक्त इति ।** एतयोरुभयोर्वाग्दंडपारुष्ययोः पंचविधिः पंचप्रकारो विधिर्विधानमित्यर्थः । २० तानेतान् पंचविधीन् दर्शयति । **पारुष्ये सतीत्यादिना ।** संरंभात्पारुष्य उत्पन्ने सति क्रुद्धयोर्द्वयोर्मध्ये यः क्षमते स मान्यत इत्यन्वयः । **द्वयोरापन्नयोरिति ।** तुल्यमापन्नयोः कलहं प्रति प्राप्तयोः द्वयोर्मध्ये यः पुनर्वैरमनुबध्नाति स एव दंडभाक् प्रथमप्रवृत्तेः पश्चात्प्रवृत्तो वेत्यर्थः । **श्वपाकषंढेति ।** अस्यार्थः । श्वपाकादिदासांतेषु सद्यो घात एवानुशासनम् । कस्मिन् सति गुर्वाचार्यांतगेषु विषये मर्यादातिक्रमे सति अंतं चरममाश्रमं गच्छतीत्यंतगोपतिः । चशब्दो भिन्नक्रमः । तथा २५ चायमन्वयः संपद्यते । वधवृत्तिषु श्वपाकादिषु हस्तिपव्रात्यदासेषु सद्योघात एव अनुशासनं । गुर्वाचार्यान्तगेषु विषये मर्यादातिक्रमे सतीति । अथवाऽन्यैव व्याख्या । अंतं नाशं गच्छतीत्यंतगः । गुर्वाचार्याणामंतगो गुर्वाचार्यांतगो द्रोही तेषु गुर्वाचार्यांतगेषु गुर्वाचार्यद्रोहिष्विति यावत् । ततश्चायमन्वयः । श्वपाकादिगुर्वाचार्यांतगांतेषु सद्यो घात एवानुशासनं । कस्मिन् सति ? सत्सु विषयमर्यादातिक्रमे सति । सत्स्विति पदमुत्तरश्लोकपर्यालोचनयाऽर्थलभ्यम् । ३०

अधुना मूलश्लोकमवतारयति । **एवंभूतेति ।**

---

[1] क-विरक्तीकरणम् । [2] ख-पावक्रमादेव ।

## याज्ञवल्कीये २१२ श्लोकः ।

**कारणप्रयोजनेति ।** कारणपर्यालोचनात्मिकयेति । प्रत्येकमभिसंबध्यते ।

**साधनविशेषेणेति ।** वक्ष्यमाणभस्मादयः साधनविशेषाः ।

## याज्ञवल्कीये २१३ श्लोकः ।

५ **कर्णविद्दूषिकेति** । कर्णविट् कर्णमलम् । दूषिका नेत्रमलम् । मूलवचनस्थं 'द्विगुणस्तत' इत्यमुमंशं व्याचष्टे । **तत इति** । ततो द्विगुणो दंड इत्यन्वयः । तत इति कुत इत्यपेक्षायामाह । **पूर्वाद्दशपणादिति** । 'पूर्वादिभ्यो नवभ्यो वेति' विकल्पेन सर्वनामसंज्ञा । **पुरीषादिस्पर्शन इति ।** पुरीषादिभिः स्पर्शने कृत इत्यर्थः ।

**छर्दिमूत्रेति** । अस्यार्थः । छर्यादिभिः परगात्राभिद्रोहे दंडश्चतुर्गुणः कर्तव्यः । दशपणापेक्षया १० चातुर्गुण्यं चत्वारिंशत्पणा इत्यर्थः । **कायमध्ये** नाभेरुपरिष्टात् मुखादर्वाक् छर्यादिभिरभिद्रोहे षड्गुणो दंडः स्यात् । पारिशेष्यात्पूर्वोक्तश्चतुर्गुणो दंडो नाभेरधस्तात् द्रोहे विज्ञेयः । षड्गुणः षष्टिपणाः । अष्टगुणोऽशीतिः पणा इति ।

'समेष्वेवमि' त्यमुमंशं व्याचष्टे । **एवंभूतपूर्वोक्त इति** । परस्त्रीमात्रे, स्वापेक्षयाऽधिकश्रुतवृत्तेषु च भस्मादिभिः स्पर्शने दशपणात् द्विगुणो विंशतिपणः, अमेध्यादिभिः स्पर्शने तु विंशतिपणा-१५ द्द्विगुणः चत्वारिंशत्पणश्च दंडो भवतीत्याह । **परभार्यासु चाविशेषेणेति** । सवर्णोत्तमवर्णत्वहीनवर्णत्वविशेषमंतरेणेत्यर्थः । **पंचपणो दशपणश्चेति** । भस्मादिभिः स्पर्शन इत्यर्थः ॥

## याज्ञवल्कीये २१५ श्लोकः ।

**श्रेयांसमिति** । उत्तमजातिं द्विजातिमिति यावत् । उक्तन्यायमत्राप्यतिदिशति । **वैश्यस्यापीति ।** वैश्यस्यापि क्षत्रियानंतरभावित्वेन न्यूनत्वेनांत्यजत्वात् क्षत्रियस्य तदपेक्षया ज्यायस्त्वेन २० श्रेयस्त्वात् शूद्रतुल्यन्यायत्वेनायभेवांगछेदनरूपो दंड इत्यर्थः ।

ननु 'भस्मपंकरजःस्पर्श' इत्यत्रोक्तैर्भस्मादिभिः निष्ठ्यूतांतैः[1] कृत्वा प्रातिलोम्यापराधे को दंड इत्याकांक्षायामाह । **भस्मादिसंस्पर्शने त्विति** । अयमभिसंधिः । यत्र भस्मपंकरजोभिः स्पर्शने सवर्णविषये दशपणो दंडः तत्र क्षत्रियेण ब्राह्मणं प्रति भस्मादिभिरभिद्रोहे कृते प्रातिलोम्यापवादत्वेन[2] द्विगुणो विंशतिपणो दंडः । तैरेव वैश्यकर्तृके ब्राह्मणविषयाभिद्रोहे त्रिगुणः त्रिंशत्पणो २५ दंडः । अमेध्यादिभिः साधनैः क्षत्रियकर्तृकब्राह्मणविषयाभिद्रोहे तत्र तत्रोक्तात् विंशतिपणात् द्विगुणश्चत्वारिंशत्पणो दंडः तैरेव वैश्यकर्तृकब्राह्मणविषयापराधे विंशतिपणादेव त्रिगुणः षष्टिपणो दंड इति ।

## याज्ञवल्कीये २१६ श्लोकः ।

**परस्परवधार्थमिति** । सर्वेषां वर्णानां सर्वेष्वेव परस्परवधार्थं शस्त्र उद्वूर्ण इत्यर्थः ।

## याज्ञवल्कीये २१८ श्लोकः ।

३० **त्वग्भेदकः शतं दंड्य इति** । यस्त्वग्भेदको लोहितस्य च दर्शकः स शतं दंड्यो न तु त्वङ्मात्रभेदकः यतश्चशब्दः समुच्चयं प्रत्याययति । ननु **याज्ञवल्क्येन** चतुःषष्टिपणानां दंडोऽभिहितः । रक्तदर्शने **मनुना** तु शतमिति परस्परविरोध इति चेत्, मैवम् । मर्मस्थले परगात्रेषु रक्तदर्शकस्य शतपणो दंडः । इतरत्र चतुःषष्टिरिति विवेक्तव्यम् ।

---

१ ज-निष्ठ्यूतांऽन्तः । २ ज-प्रातिलोम्यापवादादन्यत्वेन ।

## याज्ञवल्कीये २१९ श्लोकः ।

ननु कर्णनासच्छेदाद्यपेक्षया करपाददंतभंगस्याल्पत्वेनैकरूप्येण सर्वत्र मध्यमसाहसं दंडविधान-मनुपपन्नं स्यादित्यत आह । **अनुबंधादिनेति** । अनुबंधो दोषोत्पादः । 'दोषोत्पादेऽनुबंधः स्यादि'त्यमरः (३।३।९८)। आदिशब्दाद्व्यवहारसौकार्यत्वं गृह्यते । कर्णनासच्छेदनरूढव्रणोद्भेदनादौ दोषा-धिक्यं प्रत्यक्षसिद्धम् । करपादयोस्तु साक्षाच्छरीरावयवत्वेन तद्भंगे व्यवहारसौकर्याभावेन शरीरयात्रायाः दुर्लभत्वाद्दोषाधिक्यम् । दंतभंगेऽभ्यवहारसौकर्याभावेन परंपरया जीवनसंकोचाद्दोषाधिक्यं इत्यनुबंधा-दिना करपाददंतभंगादिरूपस्य विषयस्य साम्यमूह्यमित्यर्थः ।

## याज्ञवल्कीये २२१ श्लोकः ।

एवं सवर्णविषयापराधे दंडमभिधाय तं दंडं वाक्पारुष्योक्तन्यायेन प्रातिलोम्यानुलोम्यापराधे योजयति । **प्रातिलोम्येति** । प्रातिलोम्यापराधे दंडस्य वृद्धिः आनुलोम्यापराधे तु दंडस्य[1] हानिरिति विवेकः ।

ननु 'विप्रपीडाकरं छेद्यमि'त्येतद्वचनव्याख्यानसमये 'भस्मादिसंस्पर्शे पुन'रित्यनेनासावर्थो-ऽभिहितः । स एवार्थोऽत्राभिधीयत इति पौनरुक्त्यं स्यादिति चेन्मैवम् । भस्मादिभिः कारणविशेषैः प्रातिलोम्यापराधे सति तत्रैवापराधे पूर्वमभिहितः प्रातिलोम्यापराधदंडप्रसंगेन । अत्र तु प्रातिलोम्यानु-लोम्यापराधयोरुभयोरपि वाक्पारुष्योक्तस्य सकलस्यापि दंडकल्पनाप्रकारः बालबोधार्थमभिधीयत इति न पौनरुक्त्यदोषः ।

## याज्ञवल्कीये २२३ श्लोकः ।

उत्तरवचनस्य प्रासंगिकी संगतिरित्याह । **परगात्राभिद्रोह इति** । अयमर्थः । अंतरंगभूत-हस्तपादादिष्वभिद्रोहे दंडमभिधायांगप्रसंगाद्बहिरंगभूतगृहाभिघातादौ दंडोऽभिधीयत इति ।

## याज्ञवल्कीये २२४ श्लोकः ।

पूर्वोक्तमर्थमाक्षिप्य समाधत्ते । **कथमिति । चेदिति** । समाधातुं सिद्धार्थमनुवदति । **अपराध-गुरुत्वादिति** । ततः किमित्यत आह । **तत्र चाश्रुतेति** । एतदुक्तं भवति । 'द्विपणप्रभृतिः क्रमा-दिति' द्वित्वम् तावत् श्रुतं । श्रुतद्वित्वसङ्ख्यात आधिक्यमश्रुतत्रित्वरूपधर्मिकल्पनया वा श्रुतद्वित्वगता-भ्यासाक्षिप्तचतुष्करूपधर्मकल्पनया वा भवति । एवं च त्रित्वेनाधिक्यकल्पनायामश्रुतकल्पना धर्मिकल्पना चेति गौरवं, चतुष्केनाधिक्यकल्पनायां तु श्रुतद्वित्वगताभ्यासरूपधर्मकल्पनेति लाघवम् । तथा च न्यायविदो मन्यंते । धर्मिकल्पनातो वरं धर्मकल्पनेति । अतश्च श्रुतद्वित्वाभ्यासश्रवणमेवोचितमिति ।

## याज्ञवल्कीये २२६ श्लोकः ।

**ताडनलोहितस्रावणादिति** । 'दुःखे च शोणितोत्पाद' इत्यादिनोक्तेषु निमित्तेष्वित्यर्थः ॥ स्रावणादीति ।

## याज्ञवल्कीये २२८ श्लोकः ।

**चैत्यादिषु जातानामिति** । अत्र शाखाछेदने स्कंधच्छेदने समूलवृक्षच्छेदने यथाक्रमं चत्वारिंशत्पणोऽशीतिपणः षष्ठ्याधिकशतपणश्चेति विवेकः ।

[1] ज-आनुलोम्यप्रातिलोम्यापराधे ।

## याज्ञवल्कीये २२९ श्लोकः ।

पूर्वोक्तादंडादर्धदंडो वेदितव्य इति । प्रकृतिभूतविंशतिचत्वारिंशदशीतिपणरूपात्पूर्वोक्तादंडादर्धदंडो दशविंशतिचत्वारिंशदात्मक इत्यर्थः ।

॥ इति दंडपारुष्यप्रकरणम् ॥

५

# अथ साहसप्रकरणम् २० ।

## याज्ञवल्कीये २३० श्लोकः ।

मूलवचनस्थं 'सामान्यद्रव्यमिति' पदमुपलक्षकम् । अतस्तेन परकीयद्रव्यमपि लक्ष्यत इत्यभिमेत्य उपलक्षकत्वे हेतुं दर्शयन् अभिमतमर्थमाह । **यथेष्टमिति** । अयमभिप्रायः । साधारणद्रव्यस्य यथा यथेष्टविनियोगार्हत्वं तथा परद्रव्यस्यापीति तदपहरणमपि साहसं भवतीति । **राजदंडं जनाक्रोशं**
१० **वेति** । राजदंडभयं जनाक्रोशभयं चोल्लंघ्येत्यर्थः । राजपुरुषश्च इतरजनाश्च राजपुरुषेतरजनाः तयोः समक्षमिति समासः ।

ननु सहसा कृतं साहसमित्येतल्लक्षणं चौर्यादिष्वप्यविशिष्टमिति तेष्वेवांतर्भावादस्य प्रकरणस्य पृथगभिधानमनुपपन्नमित्याशंक्य भवत्वेवैतल्लक्षणं चौर्यादिष्वनुस्यूतं, तथाऽप्यवांतरोपाधिभेदादितरेभ्य एतत्प्रकरणं भिद्यत इति पृथगुपादानं युज्यत इत्याह । **तदिदं साहसमिति** । अयमभिप्रायः ।
१५ सहसा कृतं साहसमित्येतत्सामान्यलक्षणं अत एव चौर्यादिषु सर्वत्रानुस्यूतम् । अत्र तु बलं दर्पश्चोपाधिः । अनेनैवोपाधिना विशेषलक्षणेन लक्षितं साहसपदाभिधेयमेवं चौर्यादिष्वपि विशेषलक्षणं मृग्यमिति । **तस्य चेति** । तस्य साहसस्य । **प्रथमादिभेदेनेति** । प्रथमसाहसमध्यमसाहसोत्तमसाहसभेदेनेत्यर्थः । एतानि प्रथमसाहसादीनि कर्मनामधेयानि । न तु दंडस्य नामानि । **तेनैवेति** । तेन **नार**देन । **भंगाक्षेप इति** । भंगो भंजनं । आक्षेपो दोषोत्पादः । उपमर्दो म्लानतापादानं । आदिशब्दाच्छेदनादिकं
२० गृह्यते । **एतेनैव प्रकारेणैवेति** । एतेनैव भंगादिभिरेव । **क्रिया** करणं कर्मेति यावत् । प्रथमसाहसरूपकर्मापेक्षो मध्यमसाहसरूपकर्मापेक्ष उत्तमसाहसरूपकर्मापेक्ष इत्यर्थः । एतदेव विविच्य दर्शयति । **प्रथमस्येत्यादिना । समस्ता व्यस्ता वेति** । समस्ता मिलिताः । व्यस्ता भिन्नाः ।

स्मृत्यंतरोक्तान् विशेषानभिधाय प्रकृतमनुसरति । **तत्र परद्रव्यापहरणरूप इति । यः पुनः साहसं कृत्वेति** । निह्नवानंतरं साक्ष्यादिभिर्भावितः स चतुर्गुणं दंडमर्हति । न तु निह्नव-
२५ मात्रेणेत्यभिप्रायः ।

ननु प्रथमसाहसादिष्वपराधेषु शतपणादयो दंडा विहिताः पूर्वम् । अत्र मूल्याद्द्विगुणचतुर्गुणौ दंडौ विधीयेते । ततश्च परस्परविरोधादप्रामाण्यं वा पक्षे प्रामाण्यमंगीकृत्य विकल्पो वाऽष्टदोषदुष्टः समाश्रयणीयः स्यादित्यत आह । **एतस्मादेवेति** । अयमभिप्रायः । नाप्रामाण्यं न विकल्पः । अपि तु विशेषस्य सामान्यापवादकत्वेन अपहाररूपे विषयविशेषे द्वैगुण्यचातुर्गुण्यविधायकेन विशेषवाक्येन
३० सामान्यविधायकवाक्यं बाध्यत इति ॥

## याज्ञवल्कीये २३१ श्लोकः ।

**अनुबंधातिशयादिति** । अवष्टंभाधिक्याद्दोषाधिक्यादिति यावत् ॥

---

१ ज–अभिप्रेतम् । २ ख–कर्माक्षेपो—कर्मक्षेपे—कर्माक्षेप । ३ क–ज–अथ ।

## याज्ञवल्कीये २३२ श्लोकः ।

**अर्घ्याक्रोशेति** । अर्घ्यस्याक्रोशश्च अतिक्रमश्च तौ करोतीति तत्कृदिति समासः । **ते सर्वे पंचाशदिति** । ते सर्वे प्रत्येकं पंचाशत्पणपरिमितेन दंडनीया इत्यर्थः । शेषं सुबोधम् ।

॥ इति साहसप्रकरणम् ॥

## अथ नेजकादीनां दण्डविधानं नाम प्रासङ्गिकप्रकरणम् ५

**तत्सदृशापराधेष्विति** । साहससदृशा अपराधा वस्त्रधावकादिभिः क्रियमाणा वस्त्रछादनादयः तेष्वपराधेषु तत्कर्तॄणां दंडोऽभिधीयत इत्यर्थः ।

## याज्ञवल्कीये २३८ श्लोकः ।

**अवक्रयं चेति** । अवक्रयं वा यो ददातीत्युत्तरेणान्वयः । अवक्रयस्वरूपमेव दर्शयति । **एतावत्कालमिति** । भाटकं यथा भवति तथेत्यर्थः । १०

'मूल्याष्टभाग' इत्यादि**नारद**वचनजातं व्याचष्टे । **अष्टपणक्रीतस्येत्यादिना** । अवधिमंतरेणाष्टमांशादिभ्यो न्यूनताया वक्तुमशक्यत्वात् दिङ्मात्रप्रदर्शनायाष्टपणमूल्यकथनं । **अष्टमभागोनं** सप्तपणा इत्यर्थः । **पादोनमिति** । चतुर्थांशन्यूनम् । 'अर्धक्षयात् तु पठत' इत्यमुमंशं व्याचष्टे । **ततःपरं प्रतिनिर्णेजनमिति** । अयमभिप्रायः । अष्टपणक्रीतस्य वाससः चतुर्थे प्रक्षालने नष्टस्य मूल्यादर्धस्य पणचतुष्टयस्य क्षयो जायते । पंचप्रक्षालनादिषु नष्टस्यार्धमूल्यक्षयादुपरि क्षयो १५ जायते । एवं स्थिते पंचमे प्रक्षालने नष्टस्य पादन्यूनं मूल्यमवशिष्टपणचतुष्टयान्मूल्यात्त्रयः पणाः । षष्ठे तु क्षालने नष्टस्यावशिष्टपणत्रितयाच्चतुर्थांशन्यूनमित्येवं यावता कालेन वस्त्रं जीर्णं भवति तावदेव चतुर्थांशन्यूनं मूल्यं देयम् । जीर्णता च दशासु क्षीणासु भवतीति 'जीर्णस्य नियमः पुनरि'त्यमुमंशं व्याचष्टे। **जीर्णस्य पुनरिति** । अयमर्थः । जीर्णस्य नाशे परीक्षकाणामिच्छैव मूल्यदानकल्पनायां प्रमाणं न पूर्वोक्तरीत्या वचनप्रवृत्तिर्नापि स्वेच्छाप्रवृत्तिरिति ॥ २०

पूर्वं नेजकादीनां दंडमाहेत्युक्तम् । तत्रादिशब्दवाच्यानां दंडान् दर्शयति । 'पितापुत्रविरोधे' इत्यादिभिः 'पणस्योपसंस्थाप्य' इत्येतैः पंचदशभिः श्लोकैः ।

## याज्ञवल्कीये २३९ श्लोकः ।

कलहनिवारणसमर्थः सन्नपि यः कलहमीदृशस्थले अनिवारयन् साक्ष्यमंगीकरोति तस्यापि दंड इत्यनेनाभिप्रायेणाह । **पितापुत्रयोरिति** । दंपत्यादिष्वपीति । आदिशब्दाद्गुरुशिष्यप्रभृतयो २५ गृह्यंते इति ।

## याज्ञवल्कीये २४२ श्लोकः ।

**तिर्यगादिषु मूल्यविशेषेणेति** । तिर्यक्षु मूल्यविशेषेण, मानुषेषु ब्राह्मणत्वादिवर्णविशेषेण, राजपुरुषेषु प्रत्यासत्तिविशेषेण दंडस्य लघुत्वं गुरुत्वं च कल्पनीयमित्यर्थः ।

## याज्ञवल्कीये २४३ श्लोकः । ३०

अप्राप्तव्यवहारमि'त्यस्य पदस्यार्थमाह । **अनिर्वृत्तव्यवहारमिति** ।

---

१ क-अध्याक्रोशश्च । २ क-ख-द्विश्चात्र । ३ अनिवृत्तव्यवहारम् ।

## याज्ञवल्कीये २४४ श्लोकः ।

कूटमानादिनाऽपहृतस्याष्टमांशादप्यधिकत्वे न्यूनत्वे वा दंडद्रव्यस्यापि द्विशताद्वृद्धिं हानिं च कल्पयेदित्याह । **अपहृतस्य पुनरिति** ॥

## याज्ञवल्कीये २४६ श्लोकः ।

५ **विक्रेयस्यापादितसादृश्यं यस्येति** । अयमभिप्रायः । वर्णोत्कर्षापादनेनापादितवर्णरागाद्यात्मकस्य स्फटिकादेर्विक्रेयद्रव्यस्य यन्मूल्यं तस्मादष्टगुणो दंडो ग्राह्य इति ।

## याज्ञवल्कीये २४७–२४८ श्लोकः ।

' भिन्ने पणे तु पंचाशदि ' त्यमुं श्लोकं व्याचष्टे । **कृत्रिमकस्तूरिकादेरित्यादिना**।

## याज्ञवल्कीये २५१ श्लोकः ।

१० **पंचरात्रे पंचरात्र इति** । अस्यार्थः । अस्थिरार्घाणां पदार्थानां पंचपंचसु दिनेषु गतेषु स्थिरार्घाणां तु पक्षे पक्षे गते **एषां** पूर्वोक्तानामर्घं राजा स्वसमक्षं कुर्यादिति । अत्र वीप्सया दशसु दिनेषु मासे चातीतेऽर्घनिरूपणमिति न मंतव्यमपि तु पंचरात्रानंतरं पक्षांतरमिति एवं मिलित्वाऽवश्यकर्तव्यत्वेन नित्यतां बोधयति । ' वसंते वसंते ज्योतिष्टोमेतिवत् ' ।

## याज्ञवल्कीये २५२ श्लोकः ।

१५ राज्ञाऽर्घो निरूपणीयः । वणिग्भिरपि स्वदेशप्राप्ते पण्ये पणशते पंचपणो लाभः, परदेशप्राप्ते तु दशपणलाभो ग्राह्य इत्युक्तम् । एवं स्थिते राज्ञा केन प्रकारेणार्घः स्थापनीय इति विवक्षायामुपरितनवचने परदेशसंप्राप्तपण्ये अर्घस्थापनप्रकारस्य वक्ष्यमाणत्वात् तन्न्यायेनार्थसिद्धमर्घनिरूपणप्रकारं स्वदेशप्राप्तपण्ये दर्शयति । **एवं च यथार्घ इति** ।

## याज्ञवल्कीये २५३ श्लोकः ।

२० **पण्यस्योपरिसंस्थाप्येति** । नन्वत्र सामान्येनार्घनिरूपणप्रकारस्य प्रतीयमानत्वात्पारदेश्यपण्यस्यार्घनिरूपणप्रकारस्य अपरत्वकथनमनुपपन्नमिति चेत्, मैवं । 'व्ययं पण्यसमुद्भवमिति ' हेतूपादानात्तदपरत्वं प्रतीयते । अयमभिप्रायः । प्रायशः परदेशादानीयमानस्यैव द्रव्यस्य व्ययसंभवात् तत्पदत्वमिति सूक्तमिति ।

॥ इति नेजकादीनां दंडविधानं नाम प्रासंगिकं प्रकरणम् ॥

## २५ अथ विक्रीयासंप्रदानप्रकरणम् २१ ।

**चराचरभेदेनेति** । चरं जंगममचरं स्थावरम् । **षड्विधस्तस्य च तु बुधैरिति तस्य** पण्यस्य **बुधैर्मन्वा**दिभिर्दानस्यादानस्य च विधिक्रमो विज्ञानक्रमः करणप्रकारः षड्विधः कथित इत्यस्यार्थः । ' रूपत ' इत्यत्र सार्वविभक्तिकैस्तसिल्, अतश्च रूपेणेति तृतीयार्थे । साऽपि **तृतीया** उपलक्षणार्था इत्यनाभिप्रायेणाह । **रूपतः पण्यांगनादीति** ।

३० अधुना मूलवचनमवतारयति । **इत्येतदिति** ।

---

१ ज–वर्णान्तराद्या धाने । २ ज–पद्म । ३ ज–वीप्सावत्कर्तव्यत्वेन । ४ व्या–मू.–इतराभ्योऽपि दृश्यन्ते ।

## याज्ञवल्कीये २५४ श्लोकः ।

'सोदयं तस्य दाप्य' इत्यत्रोदयश्चतुर्धा संभवति । तद्यथा । विक्रयकालापेक्षया कालांतरे समर्घत्वे साम्ये महार्घत्वे चा[1]समर्घत्वे तावत् पंचभिः पणैः पण्ये क्रीते कालांतरे चतुर्भिर्लभ्ये सति समर्घत्वेन पण्यस्योदयः तदा चतुर्भिरेव पणैः पण्यं क्रेत्रे दाप्यमित्येक उदयः वृद्धिः । एतादृशि स्थले लौकिकाः समर्घं पण्यमित्याचक्षते । क्रयकालापेक्षयाऽर्घस्य कालांतरे साम्ये तु द्वेधा उदयः यस्मिन् नगरादौ हट्टादिप्रदेशेषु पण्यं क्रीत्वा क्रयस्थानादन्यत्र गृहादिषु विक्रीणानस्य यः कश्चन लाभः स एक उदयः । अथवा येन द्रव्येण पण्यं गृहीतं तस्मिन्नेव द्रव्ये उद्धारत्वेन दीयमाने 'अशीतिभागो वृद्धिः स्यान्मासि मासि सबंधके । वर्णक्रमाच्छतं द्वित्रिचतुःपंचकमन्यथे' त्यनेन प्रकारेण या कालवृद्धिः सोऽन्य उदयः । महार्घत्वे त्वेकः पंचभिः पणैः क्रीते कालांतरे षड्भिर्दशभिर्वा लभ्ये सति तदा वस्त्रगृहप्रभृतिषु परिधानस्थित्यादिरूपो य उपभोगः स उपभोगात्मक एव लाभोऽपर उदय इति । एतदुक्तं भवति । वस्तुनः समर्घत्वे तु एक उदय इत्याद्यः पक्षः[2] । अर्घस्य साम्ये एकस्मिन्नेव देशे क्रयस्थानादन्यत्र विक्रीते यो लाभः स द्वितीयः । पण्यमूलद्रव्ये ऋणत्वेन दत्ते मासि मासि या वृद्धिः स तृतीयः । महार्घत्वे वस्तूनामुपभोग एव चतुर्थ इति । एतेषु चतुर्ष्वपि पक्षेषु क्रेतुरिच्छया सोदयं पण्यं दाप्यः ।

मूल्यं गृहीत्वाऽप्रयच्छन् विक्रेतेत्यभिधास्यन् प्रथमं पक्षं तावदाह । **तच्च पण्यं यदीत्यादिना** । अयमर्थः । पंचभिः पणैः विक्रीय मूल्यमपि गृहीत्वा क्रेतरि प्रार्थयमानेऽपि तत्पण्यं यदि विक्रेता न ददाति, कालांतरे चतुर्भिर्लभ्यते, एकेन वा, तदा कालांतरमूल्येनैव तस्मै क्रेत्रे दत्त्वाऽवशिष्टं पूर्वगृहीतं मूल्यमपि विक्रेत्रा देयमिति ।

द्वितीयं पक्षमाह । **यदा मूल्यह्रासकृत इति** । एतदुक्तं भवति । स्वक्रयकाले कालांतरे चार्घस्यैकरूपत्वे हट्टादिस्थानेषु क्रीत्वा गृहादिषु विक्रीणानस्य यो लाभस्तत्सहितं पण्यं देयमिति ।

तृतीयं पक्षमाह । **द्विकं त्रिकमित्यादीति** । अर्घस्य ह्रासे साम्ये च सोदयं पण्यं दापयेदित्युक्तम् । तत्र पक्षद्वयेऽपि **नारद**वचनं प्रामाणयति । **अर्घश्चेति** । अस्यार्थः । चेदित्यनेन पक्षांतरं द्योत्यते । यदाऽर्घोऽवहीयेत अर्घह्रासः पण्यस्य समर्घता भवति तदा सोदयं समर्घमूल्येन पण्यं दद्यात् चेदर्घो नावहीयते । साम्यमेवार्घस्य तदापि सोदयं दद्यात् । अत्र सोदयदानं पूर्वोक्तं द्रष्टव्यम् । एवं[3] नियमस्थानानां स्वदेशस्थितानामेव दिग्विचारिणां दिग्लाभं वक्ष्यमाणप्रकारं दद्यादिति ।

चतुर्थं पक्षमाह । **यदा त्वर्घमहत्त्वेनेति** । अयमभिप्रायः । विक्रयकाले पंचभिः पण्यैर्लभ्यं पण्यं कालांतरे षड्भिर्दशभिर्वा लभ्यं स्यात्तदा विक्रयकालमूल्येनैव क्रेत्रे दापयित्वा विक्रयकालादारभ्य दानकालमध्ये योऽयमुपभोगः तन्मूल्यमपि दापयेत् । न तु साक्षादुपभोगदानं, तस्य सर्ववस्तुषु ज्ञातुमशक्यत्वादिति ।

**जंगमस्य विक्रियाफलमिति** । जंगमस्य दास्यादेः क्रियाफलं शुश्रूषादिफलमित्यर्थः । **नारद**वचनस्य क्षयशब्दार्थमाह । **विक्रेतुरुपभोग इति** । तत्र हेतुः 'क्रेतृसंबंधित्वेनेति' । 'विक्रियासंप्रयच्छतः' इत्यप्रोक्तत्वादिति । **अत्रास्मिन्** वचने **नारदेन** कुड्यावपातने विक्रेतुर्हानिरित्युक्तत्वेन पुनरपि 'क्षयं क्षाप्य' इत्यत्राभिधीयमाने पौनरुक्त्यं स्यादित्यर्थः ।

१ ज—च असमर्घत्वे । २ क—समर्घत्ववस्तुनः समर्घत्वे वैक उदय इत्याद्यः पक्षः । ज—समर्घत्वे वस्तुनः [illegible] उदय इत्याद्यः पक्षः । ३ ज—एवं नियमस्थानिनां ।

'दिग्लाभं वा दिगागते' इत्यमुं मूलवचनांशं व्याचष्टे। **यदा त्वसाविति। अनुशयाभाव इति।** अनुशयो नामानुचितमूल्येन विक्रीतमित्यादि **मनू**क्तं वेदितव्यं इति। यस्येहानुशयो भवेत् सोऽत- र्दशाहात्तद्द्रव्यं दद्याच्चैवाददीतेति ' श्लोकशेषः।

## याज्ञवल्कीये २५५ श्लोकः।

**तत्क्रेतुरेवासौ हानिरिति**। तस्य पण्यस्य क्रेतुरित्यर्थः।

५

## याज्ञवल्कीये २५६ श्लोकः।

विक्रेतुरेवासावित्यत्रैवकारद्योत्यमर्थमाह। **अतोऽन्यदद्दुष्टमिति**।

## याज्ञवल्कीये २५७ श्लोकः।

' प्रासंगिकं परिसमाप्ये ' त्यादिनाऽभिहितस्य दंडादिविधानस्य विषयं दर्शयति। **सर्वश्चायं विधिरिति**। अयमभिप्रायः। यस्य पणस्य यावन्मूल्यमुभयसंप्रतिपन्नं तावद्गृहीत्वा विक्रेता यत्र

१० पण्यं क्रेत्रे[1] ददाति तद्विषयमित्यर्थः। **नियमकारिणः समयादृत इति**। मूल्यमदत्त्वाऽपि यत्रैतत्पण्यस्य मूल्यद्रव्यं त्वदीयं पण्यं न मदीयमिति योऽयं नियमः (सः) **समयः** तेन विना विक्रयादौ, सत्यां निवृत्तौ[2] वा न दोष इत्यर्थः। **न विक्रेतुरविक्रय इति**॥ २५७॥

' गृहीतमूल्यं[3] यः पण्यमि' त्यादिना ' अन्यहस्ते तु[4] विक्रीतमि ' त्यंतेन ग्रंथजातेनाभिहित- मित्यर्थः। **क्रीतानुशयस्वरूपमिति**। दत्ताप्रदानिकप्रकरणानंतरं पूर्वप्रपंचितामित्यवगंतव्यम्।

१५

## याज्ञवल्कीये २५८ श्लोकः।

**परीक्षितक्रीतपण्यानामित्यादिः**। अयमाशयः। अदुष्टं पण्यं चतुर्भिः पणैः[5] क्रीत्वा शास्त्रोक्तानुशयकालमध्ये पणत्रयादिरूपार्घवृद्धिमज्ञात्वा क्रेत्रा नानुशयः कार्यः। तथा विक्रेत्राऽपि पणपंचकादि[6]रूपमर्घह्रासमजानता नानुशयः कार्य इति।

**पण्यवैगुण्यनिबंधनेति**। पण्यगतदोषनिबंधनेत्यर्थः। **इत्यादिना दर्शित एवेति**।

२० ' **क्रयानुशयप्रकरण** ' एव दर्शितो विधिरित्यर्थः। क्रयकालार्घपरिमाणापेक्षयाऽर्घस्य वृद्धिक्षयपरि- ज्ञानेऽनुशयः कार्यः। अपरिज्ञाने तु नेत्यन्वयव्यतिरेकावभिहितौ ताभ्यां सिद्धमर्थं निष्कृष्य दर्शयति। **तदनया वाचो युक्त्येति**। दृष्टांत[7]व्याजेनानुशये हेत्वंतरमपि। **यथा पण्यपरीक्षेति**। " क्रेता पण्यं परीक्षेतेति[8] " परीक्षाविधिवशात्परीक्षायां क्रियमाणायां यदि दोषाः स्युः तदाऽनु- शयो भवतीति दोषाणामप्यनुशयकारणत्वमस्तीत्यर्थः।

२५ ॥ इति विक्रीयासंप्रदानं नाम प्रकरणम्॥

# अथ संभूयसमुत्थानप्रकरणम् २३।

' वणिजामिति ' मूलवचस्थपदमन्येषां अप्युपलक्षणमतो वणिक्पदेन नटादयोऽपि गृह्यन्ते इत्यनेनाभिप्रायेणाह। **ये वणिङ्नटनर्तकप्रभृतय** इति। अयमर्थः। पंचभिर्मिलित्वा[9] वाणि- ज्यमन्यद्वा कर्म यदा क्रियते। तत्रैकेन पंचनिष्का अपरेण दश अन्येन पंचदशेत्येवं द्रव्यं दत्त्वा

३० परिभाषामृते[10] अहमहमिकया तस्मिन् कर्मणि क्रियमाणे मूलभूतद्रव्यस्य त्रिंशन्निष्कात्मकस्य लाभ- वशात् षट्त्रिंशन्निष्कत्वे यस्य पंचमूलं स निष्करूपाल्लाभादेकनिष्कं, यस्य तु दशमूलं स निष्कद्वयं, यस्य

---

१ क-ख-क्रेत्रे ददाति। २ ज-प्रवृत्तौ निवृत्तौ. ३ या. व. व्य. अ. २५४॥ ४ या. व. व्य. अ. २५७॥ ५ क-ख-पण्यैः। ६ पण पंचकादि पंचादिशमर्घह्रासमजानता। ७ दृष्टान्तव्याजतः। ८ क-उपरितन ११५ पृष्ठे १७ पंक्तौ। ९ ज-पंचैर्मिलित्वा। १० क-ज-परिभाषाक्रमेण।

पुनः पंचदशमूलं सु निष्कत्रयमित्येवं स्वस्वमूलद्रव्यानुसारेण गृह्णीयात्। एवं मूलद्रव्यादपचयेऽप्यपचयो द्रष्टव्य इति। 'यथा वा संविदा कृतावि' त्यस्याभिप्रायमाह। **यद्वा प्रधानगुणेति**। प्रधानो मुख्यो गुण उपसर्जनभूतः। मुख्यस्याधिकोंऽशः उपसर्जनस्य तस्य तस्मान्न्यूनः ततोऽपि न्यूनत्वादिपरिकल्पनया न्यूनतरन्यूनतमांशपरिकल्पनमित्यर्थः।

## याज्ञवल्कीये २६१ श्लोकः। ५

**राजतो निरूपणादिति**। राज्ञा निरूपणादित्यर्थः। **असाविति** राज्ञो निर्देशः। अयमर्थः। अर्धस्य राज्ञा निरूपितत्वाद्यस्य पण्यस्य विंशतिः पणा मूल्यं तस्मादेकं पणं राजा गृह्णीयादिति। **राजगामि मूल्यदाननिरपेक्षमिति**। मूल्यदाननिरपेक्षं सद्राजगामीत्यन्वयः। अस्यैव तात्पर्यार्थं दर्शयति। **तत्सर्वमिति**।

## याज्ञवल्कीये २६२ श्लोकः। १०

**ते सर्वे पण्यादष्टगुणं इति**। ते सर्वे प्रत्येकं दंडनीयाः। न संमुचितमिति बोद्धव्यम् अपराधस्य समत्वात्।

## याज्ञवल्कीये २६३ श्लोकः।

**पणं यानं तरे दाप्य इत्यादि**। अस्यार्थः। 'भांडपूर्णानि यानानीति' वक्ष्यति। अतोऽत्र रिक्तं यानं गृह्यते। रिक्तं यानं शकटादिकं तर्तृतरणं तरतेऽनेन तन्मूल्यं लक्ष्यते। तरं तरणमूल्यं दाप्यं। १५ यानादिशब्दैर्यानादि स्वामी लक्ष्यते। किं तन्मूल्यमित्याकांक्षायामाह। **पणमिति**। पणपरिमितमिति यावत्। पुरुषः पुरुषवाह्यो भारः। सोऽर्धपणं तरं दाप्यः। पशुर्गवादिकं स्त्री च, पादं चतुर्थांशं दाप्यः। **रिक्तकः पुमान्**। भांडरहितः पुरुषः पणाष्टभागं दाप्यः। द्रव्यपूर्णानि शकटादीनि यानानि सारतः द्रव्यतोत्कर्षापकर्षवशात्। तार्यं तरणमूल्यं। दाप्यानि। रिक्तभांडानि रहितानि शुकमंजूषादीनि **यत्किंचिद्**ल्पं दाप्यानि। **पुमांसश्चापरिच्छदाः**। विक्रेयवस्तुरहिताः वणिक्- २० प्रभृतयः पुमांसश्च यत्किंचिद्दाप्याः। पूर्वोक्तं 'पादार्धं रिक्तकः पुमानिति' तु वणिगादिव्यतिरिक्तविषयमिति। **न भिन्नकार्षापणमिति**। अयमर्थः। भिन्नकार्षापणं न्यूनकार्षापणं कार्षापणन्यूनमूल्यमिति यावत्। तत्पति शुल्कं नास्ति। तथा शिल्पवृत्त्यादिषु। **हृतावशेषेन** चोरादिभिर्हृतावशिष्टद्रव्ये शुल्कं **न यद्ने**। तदुपयुक्तद्रव्येषु आनीयमानेषु तदर्थं गच्छत्सु च मनुष्येषु शुल्कं नास्तीति।

अधुना मूलवचनं व्याचष्टे। **तीर्यतेऽनेनेत्यादिना**। २५

## याज्ञवल्कीये २६४ श्लोकः।

**संभूयकारणमिति**। मिलित्वा वाणिज्यादिकं कुर्वतामित्यर्थः। **ज्ञातयोऽपत्यवर्गव्यतिरिक्ता इति**। अत्र सपिंडा वा अपत्यवर्गव्यतिरिक्ता वा ज्ञातय इत्येवं नान्वयः। अपि त्वपत्यवर्गव्यतिरिक्ताः सपिंडा ज्ञातय इति। एवं च वाशब्दो वक्ष्यमाणागतशब्दवाच्यैः सहापत्यवर्गादिसपिंडानां विकल्पद्योतनार्थः। स च विकल्पो व्यवस्थित एव नैच्छिकः अयमेवार्थस्तूत्तरत्र स्फुटी- ३० भविष्यति।

ननु 'वाशब्दो यदि वैकल्पिकाधिकारद्योतनार्थः तथा च 'व्रीहियवव' दैच्छिकविकल्पे सति 'पत्नी दुहितर' इति क्रमाभिधायकवचनविरोधः स्यादित्यत आह। **पौर्वापर्यनियम-**

---

१ ज-न समुच्चिता इति। २ ज-कर्तृतरं तरत्यनेन। ३ ज-पौरुषः। ४ क-रिक्तभाडान्युरुरहितानि। ५ ख-भूषकमंजूषादीनि। ६ क-वक्ष्माणं णागतशब्द। ख-वक्ष्यमाण व्यगतशब्द।

**स्त्विति** । अयमाशयः । व्यवस्थितोऽयं विकल्पः । **व्यवस्था च 'पत्नी दुहितर' इति प्रतिपादित,** पौर्वापर्याबाधेन विज्ञेयेति ।

यदि पत्न्यादि**क्रमेणैव** रिक्थभाक्त्वं तर्हि प्रयोजनाभावा 'देशांतरगते प्रेत' इत्यादि **वचन-** मनारंभणीयं स्यादित्यत आह । **शिष्यसब्रह्मचारीति** । अयमाशयः । 'गोत्रजा बंधुः शिष्यः
५ स ब्रह्मचारिण' इति बंधूनामभावे शिष्यसब्रह्मचारिणौ क्रमेण धनभाजौ, तदभावे सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिन इति । 'ब्राह्मणा रिक्थभाज' इति पूर्वप्रतिपादितशिष्यादिनिवृत्तिः । वणिक्प्राप्तिश्च प्रयोजनम् । अतः पुत्रादीनां बंधुपर्यंतानामभावे संभूयकारिणो वणिजो गृह्णीयुरिति ।

वणिजामप्यभावे दशवर्षपर्यंतं स्थापयेदित्युक्तं, तदेत**न्नारदे**न स्पष्टीकृतमित्याह । **तद्विदमिति** । **एकस्य चेत्स्यान्मरणमिति** । संभूयकर्मकुर्वतां वणिजां मध्ये एकस्य चेन्मरणं स्यात्
१० अस्य मृतस्य तद्वस्तु दायादः पुत्रबांधवांतो जनः पूर्वपूर्वाभाव उत्तरोत्तर आप्नुयात् । दायादेऽसति **अन्यो** वणिग्वा पिंडदानादिसमर्थ आप्नुयात् । असामर्थ्ये पिंडदानादावेकस्य ते सर्वे वणिज आप्नुयुरित्यर्थः । तदभावे इत्यादि सुगमम् ।

## याज्ञवल्कीये २६५ श्लोकः ।

**कर्मिपदव्याख्यानाह** । **नटनर्तकेति** । श्रुतिविहितदक्षिणाया विभागप्रकारस्यास्मिन् **मनु-**
१५ **वचने**ऽभिधीयमानत्वाद्दक्षिणाप्रापकं वचनमाह । **तं शतेन दीक्षयंतीति** । अस्यार्थः । पूर्वं गवां प्रस्तुतत्वात् शतेन गवां शतेन तं यजमानं अध्वर्याद्यो दीक्षयंतीति । यदा 'नतं शतेनेति' पाठः तदा नतं नतिं आनतिं यजमानायत्ततां प्रति शतेन दीक्षयंतीत्यर्थः । यतो दक्षिणाग्रहणेनर्त्विजो यजमानायत्ता भवंति ।

नन्वस्मिन्वाक्ये दीक्षोद्देशेन गोशतग्रहणं प्रतीयते तद्[1] न दक्षिणाविधिः अतः कथं
२० दक्षिणाप्रापकमेतद्वचनमित्यत आह । **इति वचनेनेति** । अयमाशयः । यथा भुजिक्रियासाध्ये तृप्त्यात्मके कार्ये 'पयसा तृप्तिं कुर्वीतेति' पयोद्रव्ये विहिते तत्पयोभोजनसाधनस्यौदनस्य स्थाने निपतति, तद्वदत्रापि'दीक्षयंतीति दीक्षाकरणम्'आनतिरूपं दक्षिणादानकार्यम् । आनतिर्नाम नम्रीभावः स्वायत्तता । भृतिं गृहीत्वा भृत्या इव दक्षिणां गृहीत्वा स्वायत्ता भवंतीह ऋत्विजः । तस्मिन्नानतिरूपे दक्षिणादानकार्ये गोशतं विधीयमानं दक्षिणादानरूपव्यापारसाधने दक्षिणास्थाने
२५ नियतीत्यर्थाद्गोशतमेव दक्षिणा भवतीति दक्षिणाप्रापकं वचनमिति । एतदुक्तं भवति । गोशतं दक्षिणात्वेन विधीयत इति ।

अधुना 'सर्वेषामर्धिन' इत्येत**न्मनु**वचनं व्याख्यातुमवतारयति । **ऋत्विजश्चेति** । 'ते गोशतस्यार्धिन' इत्युक्ते शतापेक्षया पंचाशतोऽर्धत्वात्तथैव विभागप्राप्तावभिप्रायमाविष्कुर्वन् वि**शेष**माह । **सर्वेषां भागपरिपूरणेति** । विभागपरिपूरणार्थमुपपत्तिः तस्यावशस्तदनुसरणं तेन
३० आयातः प्राप्तः । स चासावष्टाचत्वारिंशद्रूपार्धः तेनेति समासः । प्रकारांतरेणार्ध्यादीनां दक्षिणाविभागस्य कर्तुमशक्यत्वादित्यर्थः । **तस्य मुख्यांशस्येति** । तत्र मुख्यांशोऽष्टचत्वारिंशद्रूपः ।

**न तावदत्र समय इति** । प्रधानस्याधिकांशः अन्येषां न्यूनन्यूनतरन्यूनतमांशा[2] इति न समयः कृतः । न चैकेन दशान्येनाष्टावपरेण षडित्येवं वाणिज्य इव द्रव्यसमुदायः कृत इत्यर्थः । दशम-

---

१ ज-क्रमेणात्र । २ क-ख-तदा रक्षणविधिः ।

**तृतीयपादाधिकरणम्** । ' समं स्यादश्रुतत्वात् ' । ज्योतिष्टोमे श्रूयते । गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्च वयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणेति पूर्वतराधिकरणे गवां द्वादशशतं इतराण्यश्वादीनि च दक्षिणेति प्रतिपादितम् । पूर्वाधिकरणे त्वियमेव दक्षिणा विभाज्येत्यपि चोक्तम् । अत्र तु स्थिते विभागे चिंत्यते । किं समो विभागः स्यात् उत प्रयासानुरूपः । अथवाऽर्धिन इत्यादि समाख्यानुरूप इति संदेहः । तत्र विशेषाश्रवणात् समो विभागः सर्वेषां ऋत्विजां स्यादिति प्राप्ते सिद्धांतैकदेश्याह । लोकवत्प्रयासानुरूपेण विभाग इति । एवं प्राप्ते सिद्धांतः । द्वादशाहे दीक्षाक्रमवाक्ये अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति । तत उद्गातारं ततो होतारं ततस्तं प्रतिप्रस्थाता दीक्षयित्वा अर्धिनो दीक्षयति ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति । ततस्तमुन्नैता दीक्षयित्वा पादिनो दीक्षयतीत्येवंविधाऽर्ध्यादिसमाख्या श्रूयते । अतस्तद्वशात् ब्राह्मणाच्छंसिप्रभृतीनां तदनुरूपो विभागो द्वादशाहप्रकृतौ ज्योतिष्टोमेऽध्यवसीयत इति ।

प्रकृतमनुसरामः । पूर्वपक्षिणो मतं सिद्धांतैकदेशिमतं चावलंब्य शंकाद्वयमाह । **समं स्यादश्रुतत्वादिति** । विशेषाश्रवणात्सममिति पूर्वपक्ष्याशयः । ऋत्विजां स्वस्वकर्मणि वैषम्यात् ' त्कर्मानुरूपेणेति ' सिद्धांतैकदेश्यभिप्रायः । सिद्धांतावलंबनेन परिहरति । **तत्रोच्यत इत्यादिना** । अयमभिप्रायः । श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्या इति षट् प्रमाणानि शेषत्वे[1] बोधकानि, समाख्या नाम संज्ञा, ज्योतिष्टोमविकृतिभूते द्वादशाहे अर्धिन[2] इत्यादि समाख्या श्रूयते । समाख्याप्रमाणबलात्तत्प्रकृतौ ज्योतिष्टोमे तथैव दक्षिणाविभागः कर्तव्यः । अन्यथा विकृतौ द्वादशाहे अर्धिन इत्यादिसिद्धानुवादो न स्यादिति । एतदुक्तं भवति । विकृतिगतसमाख्यान्यथानुपपत्त्या प्रकृतौ पूर्वोक्तो दक्षिणाविभागः कल्प्य इति । ॥ इति संभूयसमुत्थानं नाम प्रकरणम् ॥

## अथ स्तेयप्रकरणम् २४ ।

' स्यात्साहसं त्वन्वयवदि ' त्येतन्मनुवचनं व्याचष्टे । **अन्वयवद्द्रव्यरक्षीत्यादिना** ' कृत्वाऽपह्नुवते च यदी ' त्यस्यांशस्य तात्पर्यमाह । **यच्च सान्वयमपीति** ।

मूलवचनमवतारयति । **तत्र तस्करग्रहणेति** ।

### याज्ञवल्कीये २६६ श्लोकः ।

**अपहृतभाजनादिना वेति** । यस्य गृहे यन्नष्टमपहारादिना, तद्यस्य गृहे हस्ते वा दृश्यते तेन चिह्नेन स पुरुषो ग्राह्य इत्यर्थः । **वासः स्थानं यस्यासाविति** । उष्यतेऽस्मिन्निति वासः । उषितस्यैव[3] प्रतिपदं स्थानमित्येतत् । न तु वासः स्थानमित्येकं पदमित्यवबोद्धव्यम् ।

### याज्ञवल्कीये २६७।२६८ श्लोकौ ।

'शुष्कभिन्नमुखस्वरा' इत्यत्र शुष्कमुखो भिन्नस्वर इति च प्रकृत्या द्वावेव उपात्तौ, प्रत्ययेन तु जसा बहव उपात्ताः । अतः प्रकृतिप्रत्यययोः परस्परविरोधादनुपपन्नं पदं स्यादित्याशंक्याह । **बहुवचनादिति** । अयमभिप्रायः । प्रकृतिरन्येषामुपलक्षिका तेन स्विन्नललाटादयोऽपि गृह्यंते । एवं च बहुत्वविवक्षायामेव[4] बहुवचनविधानान्न प्रकृतिप्रत्ययविरोध इति ।

---

१ ज–शेषत्वबोधकानि । २ क–ज–अर्धिनः । ३ ज–पुंसितस्यैव ४ ज–बहुविवक्षायाम् ।

**अन्यहस्तात्परिभ्रष्टमिति**। अन्यस्य चौरादेर्हस्तादस्य गृहे च्युतं वा भुवि खन्यमानायां तत्र पूर्वमन्यैः स्थापितमनिच्छया प्राप्तं वेति परीक्षणं कर्तव्यमित्यर्थः।

## याज्ञवल्कीये २६९ श्लोकः।

मानुषेण दिव्येन वाऽऽत्मा शोधनीय इत्युपदेशो नोपपन्नः। प्रमाणस्य भावगोचरत्वेन निःस्वरूपे- ५ ऽभावात्मके शुद्धमिथ्योत्तरे प्रमाणप्रसराभावादित्यभिप्रायेणाक्षिपति। **ननु नाहं चोर इतीति**। समाधत्ते। **उच्यत इत्यादिना**। **मानुषं पुनरिति**। अयं भावः। अत्र शुद्धमिथ्योत्तरस्याभावरू- पत्वेन यद्यपि तत्र मानुषं प्रमाणं न प्रसरत्येव तथापि कारणसंसृष्टे मिथ्योत्तरे मानुषं भावमपि गोचर- यत्येवेति। कथं? भावरूपमिथ्याकारणसाधनमुखेनेत्यन्वयः। एतदुक्तं भवति। शुद्धमिथ्योत्तरे दिव्यमेव संसृष्टे तु मानुषमपि संभवतीति। एतदेवोदाहृत्य दर्शयति। **यथा नाशापहारकाल इति**। १० चौर्यशंकयाऽभियुक्ते, द्रव्यनाशकालेऽयं देशांतरस्थ इति साक्ष्यादिभिः साधिते चौर्याभावस्याप्यर्थसिद्धेः शुद्धिर्भवत्येवेत्यर्थः।

## याज्ञवल्कीये २७० श्लोकः।

उक्तार्थे **नारद**वचनं प्रमाणयति। **साहसेषु य एवोक्त इति**। साहसेषु साहसाख्यकर्मसु त्रिषु उत्तममध्यमाधमसाहसेषु[३] यो दंड उक्तः स एव स्तेयेष्वपि त्रिषु उत्तमादिसाहसयोग्येषु द्रव्येषु[४] १५ अनुक्रमाद्दंडो भवतीत्यर्थः। अनेनैतदुक्तं भवति। उत्तमद्रव्यापहारे उत्तमसाहसदंडविधानाद्वधस्याप्युत्तम- साहसात्मकदंडत्वेनोत्तमद्रव्यापहारविषयत्वमेव युक्तं इति। **एतच्च दंडोत्तरकालमिति**। एतत् श्वपदाकारमंकनम्।

## याज्ञवल्कीये २७१ श्लोकः।

**तद्विषयाधिपतिरिति**। तद्देशाधिपतिरित्यर्थः। **चौरं धनं चेति**। चौरमर्पयेत्तदशक्तौ धनमित्यर्थः। **अथवाशेषमिति**। अशेषमिति पदविभागः। **विवीते त्वपहार इति**। प्रचुरतृण- २० काष्ठे[५] रक्ष्यमाणः परिगृहीतो भूप्रदेशो विवीत इति स्वामिपालप्रकरणेऽभिहितो[६] द्रष्टव्यः।

## याज्ञवल्कीये २७२ श्लोकः।

**विकल्पवचनं तु यथा तत्प्रत्यासत्तीति**। अपहृतभूप्रदेशाद्ये ग्रामाः सन्निहिता त एव दद्युर्न पुनः पंचग्राम्ये वा दशग्राम्ये वेत्येवं नियम इति। नियमनिवृत्त्यर्थं अथवेति विकल्पवचनमित्यर्थः। **यदि तस्मिन् दाप्य इति**। 'चोर' इति गृहीते तस्मिन् पुरुषे धने दाप्यमाने सति मोषे चौर्ये २५ यदि संदेहो भवेत् तदा शपथं दाप्यः। अथवा बंधुभिर्धर्मबंधुभिः साक्ष्यादिभिः साधयेत्। संदेह- निवृत्तिं कुर्यादित्यर्थः।

## याज्ञवल्कीये २७३ श्लोकः।

ननु 'शूलानारोपयेन्नरानि' त्यनेन बंदिग्राहादीनां शूलारोपणमात्रं प्रतीयते न वधः। ततश्च 'श्रोत्रियायोपकल्पयेदि'त्यत्र यथाविधिसिद्धिस्तथा शूलारोपणमात्रेणैव विधिसिद्धेस्तन्मात्रमेव कृत्वा पुन- ३० रुत्तरणीया न वध्याः स्युरित्यत आह। **अयं च वधप्रकार इति**। **अग्न्यगारेति मनु**वचने- नैवैतेषामपि वधसिद्धौ केन प्रकारेण वध इत्याकांक्षायां शूलारोपणरूपवधप्रकारविशेषोऽस्मिन् वचने विधीयत इत्यर्थः।

---

१ क–तुच्छमिथ्योत्तरे ज–तुच्छे। २ ज–प्रसाराक्रमात्। ३ क ख–उत्तममध्यमाधमपुरुषेषु। ४ क–उत्तमसाहस- योग्येषु दण्डयेषु। ५ ज–तृणकाष्ठो। ६ मिताक्षरा व्य. अ, पृ, १०९ पं. १७७ ज–वा।

## याज्ञवल्कीये २७४ श्लोकः ।

तौ यथाक्रममिति । **उत्क्षेपकः** करणहीनः **ग्रंथिभेदकः** तर्जन्यंगुष्ठेन हीन इति विवेकः । **प्रथमे ग्रह इति** । प्रथमग्रहणं प्रथमचौर्यं इति यावत् ॥ २७४ ॥

## याज्ञवल्कीये २७५ श्लोकः ।

**परिग्रहविनियोगेति** । 'ब्राह्मणपरिगृहीतायाः गोर्हरणेऽधिको दंड' इति । ब्राह्मणपरिग्रहो अधिकदंडकारणं तथा सा गौर्दोहाय यद्यग्निहोत्रे विनियुक्ता तस्या हरणे ततोऽप्यधिको दंड इति विनियोगोऽप्यधिकदंडकारणम् । एवंविधपरिग्रहविनियोगयोरभावो न्यूनदंडकारणं इत्यवबोद्धव्यं । 'साहसेषु य एवोक्त' इत्यनेन **नारद**वचनेन क्षुद्रमध्यमोत्तमद्रव्यापहारेष्वविशेषेण यथाक्रमं प्रथम-मध्यमोत्तमसाहसदंडप्राप्तौ विशेषप्रापकं मूलवचनं पूर्वार्धं तात्पर्यतो व्याचष्टे । **मृन्मयेषु मणि-मल्लिकादिष्विति** । अत्र मृन्मयेष्वितीति क्षुद्रस्य द्रव्यस्योपलक्षकम् । 'गोव्यतिरिक्तेष्विति' मध्यमस्य, 'ब्राह्मणसंबंधिष्वि' त्युत्तमस्येति विवेकः । मूल्याद्यनुसारेण दंडः कल्पनीय इत्युक्तं । तत्रादिशब्दवाच्यान् प्रदर्शयिषुर्मूलवचनस्योत्तरार्धं व्याचष्टे । **तत्र दंडकल्पनायामिति** ।

नन्वत्र वचन उपात्ता देशकालवयःशक्तय एव किं दंडकल्पनायां हेतव इत्याशंक्य नैवमपि तु हेत्वंतराण्यप्यनेन देशादिकेनोपलक्ष्यन्ते इत्याह । **एतच्च जातिद्रव्येति** । जात्यपेक्षया गुणापे-क्षया च दंडविधिं दर्शयति । **तथा ह्यष्टापाद्यमिति** । **विट्क्षत्रियब्राह्मणादीनामिति** । अत्र 'विदुषामित्ये' तत् विट्क्षत्रियादिविशेषणम् । शूद्रत्वद्विजात्यपेक्षया विद्वत्त्वरूपगुणापेक्षया च दण्डविधानमिति जातिर्गुणापेक्षा ।

ननु 'हरतोऽप्यधिकं वध' इति **मनुना** वधदंडोऽभिहितः । वधशब्देन च ताडनादि प्राणवियोजनांता व्यापाराः कथ्यंते । ते सर्वत्र समुचिता एव प्रयोक्तव्या इत्यत आह । **हर्तुर्ह्रिय-माणेति** । हर्तुर्गुणापेक्षया ह्रियमाणस्य द्रव्यस्वामिनो गुणापेक्षया चेत्यर्थः ।

**द्विजोऽध्वगः क्षीणवृत्तिरिति** । **क्षीणवृत्तिः** क्षीणपाथेयः । **अध्वगः** पथिकः । **द्विजो** द्विजातिः । अध्वगक्षीणवृत्तिपदे द्विजविशेषणे । **हीनकर्मण** इति । हीनकर्मणोऽल्पाचाराद्दतव्यम् । न पुनरुत्कृष्टादित्यर्थः ॥

## याज्ञवल्कीये २७७ श्लोकः ।

**शतं दंडोऽभिहित इति** । साहसप्रकरणेऽभिहित इत्यर्थः । **ब्रह्महत्यातिदेशं वक्ष्यत इति** । प्रायश्चित्ताध्याये वक्ष्यत इत्यर्थः । **पुरुषस्य स्त्रियाश्च प्रमापण इति** । शीलाचारवतः पुरुषस्य तथा स्त्रियाश्च मारणे उत्तमसाहस एव दंडः । शीलाचाररहितायास्तु मारणे प्रथमसाहस एवेति विकल्पव्यवस्था ज्ञेया । ईषच्छीलाचारवतोस्तु प्रमापणे पारिशेष्यान्मध्यमसाहसदंडो व्यवतिष्ठते ॥

## याज्ञवल्कीये २८२ श्लोकः ।

**कटैर्वीरणमयैरिति** । यस्य तृणस्योशीरं मूलं स तृणविशेषो वीरणं । 'स्याद्वीरणं वीरतरं मूलेऽस्योशीरमस्त्रियामि' **त्यमरः** ( २।४।१६४ ) ।

॥ इति स्तेयप्रकरणम् ॥

१ क-ख-अभावे न्यूनदण्डकारणे । २ क-ख-ज-शूद्रत्वद्विजापेक्षया । ३ ख-जातिगुणापेक्षया ।

## अथ स्त्रीसंग्रहणप्रकरणम् २५ ।

**परस्परमुपाश्रय इति** । आलिंगनांशुकहस्तावलंबनादिभिः अन्योन्यसंश्रय इत्यर्थः । **सम्यक् संग्रहणमिति** । सम्यग्यथावत् संपूर्णं उत्तमेसंग्रहणमिति यावत् ॥

संग्रहणस्य त्रैविध्यमभिधाय मूलवचनमवतारयति । **संग्रहणज्ञानपूर्वकत्वादिति** ।

५

## याज्ञवल्कीये २८३ श्लोकः ।

केशाकेशीत्यत्र कः समासः कथं वा शब्दनिष्पत्तिरित्याकांक्षायां आह । **तत्र तेनेदमितीति । सरूपे** । 'तत्रेति' सप्तम्यंते सरूपे पदे 'तेनेति' तृतीयांते सरूपे पदे **इदमि**त्येतास्मिन्नर्थे समस्येते । समासो बहुव्रीहिसंज्ञो भवतीत्यस्य सूत्रस्यार्थः । केशेषु केशेषु गृहीत्वा इदं प्रवर्तते इति विग्रहे कृते 'इच्कर्मव्यतिहारे' (व्या. सू. ५।४।१२७) अन्यसंबंधिन्याः क्रियाया अन्येन करणं
१० कर्मव्यतिहारः । कर्मव्यतिहारे यो बहुव्रीहिः 'तत्र तेनेदमिति सरूप' इति विहितः । तस्मादिच्प्रत्ययो भवतीत्यस्य सूत्रस्यार्थः । 'अन्येषामपि दृश्यत' (व्या. सू. ६।३।१३७) इत्यनेन पूर्वपदस्य दीर्घत्वम् । समासप्रत्ययांतत्वेन प्रातिपदिकसंज्ञायां 'तिष्ठद्गुप्रभृतीनि चे'त्यनेन (व्या. सू. २।१।१७) सूत्रेण । तिष्ठद्गुगणे पाठात् केशाकेशीत्यस्याव्ययीभावसंज्ञायां 'अव्ययीभावश्चे'त्यव्ययसंज्ञाया (व्या. सू. २।४।१८) 'अव्ययादाप्सुपः' (व्या. सू. २।४।८२) इति
१५ तृतीयाविभक्तेः लुकि कृते केशाकेशीति शब्दो निष्पन्नो भवतीत्यर्थः ।

ननु नखादिकृतव्रणरूपैर्लिंगैः संग्रहणप्रवृत्त इति ग्रहीतुं न शक्यते क्रोधप्रमादादिभिरपि तत्संभवादित्यत आह । **रागकृतैर्लिंगैरिति** । **द्वयोः संप्रतिपत्त्या वेति** । द्वयोः स्वैरिणीजारयोः संप्रतिपत्त्या अंगीकारेणेत्यर्थः । **परस्त्रीग्रहणमिति** । यद्यपि नियुक्तायां नखक्षतादिचिह्नानि न संति, घृताभ्यंगविधानेनैव मिथुनीभावविधानात् नखक्षतादिकरणस्य निषिद्धत्वात् तथापि द्वयोः संप्रति-
२० पत्तिरस्तीति तेन लिंगेन न ग्राह्यं नियोगविधिसंभवादेव । अवरुद्धादीनां तु साधारणत्वात् पूर्वोक्तैर्भिह्नैरपि तद्विषये ग्रहणमुचितम् । अतो नियुक्तादयः परस्त्रीशब्देन व्युदस्यंते इत्यर्थः । एतच्चावसरे स्फुटीभविष्यति ॥

## याज्ञवल्कीये २८४ श्लोकः ।

**यस्त्वनाक्षारित इति** । अनाक्षारितो नाभिनंदितः 'असौ विट्' इति न निंदित इत्यर्थः ॥

२५ **प्रतिषिद्धयोः स्त्रीपुंसयोरिति** । 'अनेन सह त्वया न वक्तव्यं' 'अनया सह त्वया न वक्तव्यमिति' पूर्वं प्रतिषिद्धयोः स्वैरिणीजारयोरित्यर्थः ।

## याज्ञवल्कीये २८५ श्लोकः ।

**नैष चारणदारेष्विति** । चारणा नटादयः । आत्मोपजीविषु वेशवृत्तिजीविदारेष्विति भावः । यस्मात्ते परपुरुषेषु स्वनारीः संज्यंति । निगूढाश्च व्यवाये चारयंतीत्यस्यार्थः ॥

३०

## याज्ञवल्कीये २८६ श्लोकः ।

पूर्वं 'यदा पुनः सवर्णामगुप्तां व्रजति आनुलोम्येन गुप्तां वा व्रजतीति' विषयद्वयमभिहितं । तत्र गुप्तसवर्णागमने दंडमाह । **सहस्रं ब्राह्मणो दंड्य इति** । अस्यार्थः । अत्र पूर्वार्धे तु 'सजातावुत्तमो दंड' इति **याज्ञवल्क्योक्तेन** समानविषयम् । अत्र ब्राह्मण इति क्षत्रियादेरप्युप-

---

१ ज-उपपदे । २ क-ख-समासोऽत्र बहुव्रीहिसंज्ञो ज-स समासो । ३ ख-युद्धं वृत्तमिति । ज-प्रवृत्त तदिति । ४ अव्ययीभावसंज्ञायां । ५ ज-धृताभ्यंगविधानेनापि । ६ ज-ग्राह्या । ७ ज-अवरुद्धादीनां साधारणत्वं । ८ यस्मात्ते-पपरपुरुषेषु । ९ क-संज्ञयति । ज-सअयन्ति । ख-संज्ञायंति ।

क्षणम्। तथा विप्रापदमपि। अतः क्षत्रियादीनामपि गुप्तसवर्णपरदाराभिगमने एष एव विधिर्बोद्धव्यः।

एतच्च पूर्वार्धं प्रकरणशुद्ध्यर्थं निबंधकारेण पठितं। प्रकृतोपयुक्तं तूत्तरार्धमेव। तस्यायमर्थः। पूर्वार्धे गुप्तामित्यपादानादत्र च तद्विपरीतार्थस्याभिलषितत्वादगुप्तपदमर्थलभ्यम्। तथा चागुप्तया अरक्षितव्या इत्थं सवर्णया सह संगतः पंचशतानि दंड्य इति।

आनुलोम्येन गुप्तायाः गमने दंडमाह। **सहस्रं ब्राह्मणो दंडं दाप्य इति**। अस्यायमर्थः। क्षत्रियवैश्ययोः प्रकृतत्वात् ते क्षत्रियावैश्ये गुप्ते व्रजन् गच्छन् ब्राह्मणः सहस्रं दंडं दाप्यः। शूद्रायां रक्षितायां गमनं कुर्वतोः क्षत्रियवैश्ययोरपि सहस्रं दंडो भवेदिति। समानन्यायत्वाद्वैश्यस्त्रियं रक्षितां गच्छतः क्षत्रियस्यापि सहस्रं दंड इत्युक्तं भवति। ५

मूलवचनस्य द्वितीयार्धं व्याचष्टे। **प्रातिलोम्य उत्कृष्टस्त्रीगमन इत्यादिना। उभावपि तावेवेति**। तावेव क्षत्रियवैश्यौ रक्षितया ब्राह्मण्या सह कृतमैथुनौ शूद्रवद्दंड्यौ। 'गुप्तं सर्वेण हीयत' इत्यत्रोक्तप्रकारेण सर्वेण शरीरेण धनेन च हीनौ कर्तव्यौ सर्वस्वं गृहीत्वा वध्याविति भावः। **कटाग्निना वा दग्धव्या इति** मारणप्रकारविशेषोपदेशः। कटाग्निदाहप्रकारस्तु स्तेयप्रकरणेऽभिहितः। १०

इदं चात्यंतश्रोत्रियदारगुणवद्ब्राह्मणीविषयम्। दंडगुरुत्वात्। 'वैश्यः सर्वस्वं दंड्यः स्यात् सहस्रं क्षत्रियो दंड्य इति च इतरत्र दंडविधानाच्च एतच्च गुप्ताविषयमिति[3] पूर्वत्राभिहितम्। तत्र मानसंमतिमभिधायान्यत्र तु धनदंड इत्यत्रापि **मनु**वचनं प्रमाणयति। **ब्राह्मणी यद्यगुप्तामिति**। अरक्षितां ब्राह्मणीं गच्छंतं क्षत्रियं सहस्रदंडवंतं कुर्यात्। रक्षायामधिकृतत्वेन क्षत्रियस्य वैश्यापेक्षयाऽधिकदंडविधिरिति भावः। **शूद्रो गुप्तमगुप्तं वेति**। शूद्रो यदि भर्त्रादिरक्षितामरक्षितां वा द्विजातिस्त्रियं गच्छति तदा वक्ष्यमाणो दंडो ज्ञेयः। १५

तमेव दंडं विभज्य दर्शयति। **अगुप्तैकांगसर्वस्वेति**। अगुप्तां गच्छन् एकांगसर्वस्वी एकांगलिंगं सर्वस्वं च दंडोऽस्यास्तीत्येकांगसर्वस्वी। लिंगं छित्वा सर्वस्वेन दंड्य इति भावः। गुप्तौ रक्षितायामित्यर्थः। तां गच्छन् सर्वस्वेन शरीरेण च हीयते। सर्वस्वं गृहीत्वा वध्य इत्यस्यार्थः। २०

'नार्याः कर्णादिकर्तनमित्य' मुमंशं व्याचष्टे। **नार्याः पुनरिति**। प्रातिलोम्येन गच्छंत्याः स्त्रियः कर्णाद्यंगछेदविधानात् प्रातिलोम्यगमनव्यतिरिक्तेन गमनेऽल्पदोषत्वेनांगभेदाभावस्य युक्तिगम्यत्वात्। आनुलोम्यगमने गुणवदगुणवदपेक्षयोचिति धनदंडः सवर्णगमने तु धिक्कारादिभिः वाग्दंड इति देशाद्यनुसारेण दंडः कल्प्य इत्यनेनाभिप्रायेणाह। **आनुलोम्येन वेति। क्षत्रियवैश्ययोरन्योन्यस्याभिगमने इति**। अत्र समुच्चयोऽविवक्षितः प्रत्येकमेव पापहेतुत्वात्। अत्रापि रक्षितागमन इत्येव बोद्धव्यम्। **वैश्यश्चेत् क्षत्रियामिति**। यो दंडो ब्राह्मण्या अरक्षिताया गमने प्रतिपादितः 'वैश्यं पंचशतं कुर्यात् क्षत्रियं तु सहस्रिणम्' इति तं दंडं यथाक्रमेणार्हत इति। क्षत्रियस्य वैश्यापेक्षयोत्कृष्टत्वेऽपि रक्षायामधिकृतत्वादधिकदंड इति ज्ञातव्यम्। २५

१ ज—उपपादनात्। २ ज—गुप्तौ। ३ ख—गुप्ताविषयामिति। क—मान वासयतिमभिधाय। ४ ज—मानवीं संमतिमभिधाय। ५ ज—अगुप्तां। ६ ज—सहस्रं दंडमेव। ७ ज—रिक्ते। ८ क—अत्र समुच्चयोविवक्षित प्रत्येकंयेकपापहेतुत्वात्। क—ख—अयंदंडो।

## याज्ञवल्कीये २८७ श्लोकः ।

**तदनभिमुखीमिति** । विवाहानभिमुखीमित्यर्थः ॥

## याज्ञवल्कीये २८८ श्लोकः ।

**अविषह्य तु यः कन्यामिति** । यो बलात्कारेण दर्पादिभिः कन्यामंगुलिप्रक्षेपयोगेन योनौ ५ क्षतवतीं कुर्यात् तस्यांगुलिद्वयं च्छेतव्यम् तथा षट्शतं दंडं चार्हतीत्यस्यार्थः । **सानुरागां पूर्ववद्दूषयतीति** अंगुलिप्रक्षेपादिना योनिक्षतं कुर्वन् दूषयतीत्यर्थः । ' उत्तमायां वधस्तथे ' त्यमुमंशं व्याचष्टे । **यदा पुनरुत्कृष्टजातीयामिति** ॥

## याज्ञवल्कीये २८९ श्लोकः ।

**संसृष्टमैथुनत्वादिति** । संसृष्टं प्राप्तं मैथुनं संभोगो ययेति । एकपदं समासांतर्गतम् ॥

## १० याज्ञवल्कीये २९० श्लोकः ।

**उक्तलक्षणा वर्णस्त्रियो दास्य इति** । अभ्युपेत्याशुश्रूषाप्रकरणे ' गृहजातस्तथा क्रीत ' इत्यादिनोक्तलक्षणा इत्यर्थः । **स्वैरिणी ब्राह्मणीति** । स्वैरिणी चासौ ब्राह्मणी च । ब्राह्मणीत्युपलक्षणं । अतः क्षत्रियादिस्त्रियोऽपि स्वैरिण्यो गृह्यंते । तथा वेश्या च दासी चासौ निष्काशनी चेति विवेकः । **दास्यश्च तावद्वर्णस्त्रिय एवेति** । अत्र वर्णशब्दोऽनुलोमजातीनामप्युपलक्षकः । अतो १५ मूर्धावसिक्ताद्यनुलोमजातिष्वपि दास्यमस्तीति ज्ञेयम् ।

ननु भवंतु स्वैरिण्याद्या वर्णस्त्रिय एव तथाप्यासां साधारणत्वाभावः कथमित्याशंक्य स्वपुरुषपरत्वविधानात्पुरुषांतरनिषेधपरत्वविधानाच्च साधारणत्वाभाव इत्याह । **न च वर्णस्त्रीणां इत्यादिना** । तथाविधाया एव रक्षिताया अदुष्टाया इति यावत् ।

ननु यथा सूतकादिवशात्स्वधर्मभूतसंध्याध्यधिकाराभावस्तद्वद्दासीभावात्स्वधर्मभूतस्वपुरुषपरत्वादि-२० धर्माधिकारच्युतिर्भविष्यति । तथा च सकलपुरुषसाधारणत्वमस्त्वित्यनेनाभिप्रायेणाशंक्य परिहरति । **न च दासीभावादिति** । अयमभिप्रायः । सूतकादौ तु वचनादधिकाराभावो, न स्वरूपेण । अत्र तु न वचनं नापि स्वरूपतः । यतो दास्यं नाम पारतंत्र्यमात्रमेव शिष्यत्वादिवत् । अतो न स्वधर्मत्यागः येन साधारण्यं स्यादिति ।

ननु मा भूत्स्वैरिणीदास्योः साधारणत्वाभावाद्गम्यत्वं । वेश्यायाः साधारणत्वेन गम्यत्वं भवत्वित्या-२५ शंक्य एवं वदता वक्तव्यं किमियं वेश्या ब्राह्मणादिवर्णमूर्धावसिक्ताद्यनुलोम्यजव्यतिरिक्तगम्यजात्यंतरांतःपातित्वेन गम्या उत वर्णानुलोमजांतःपातित्वेन ? अथवा प्रतिलोमजांतःपातित्वेनेति विकल्पं दूषयितुमुपक्रमते । **नापि वेश्येति** । आद्यं दूषयति । **वर्णानुलोमजेति** । तादृशजात्यंतराभावादेव तदंतःपातित्वेन गम्यत्वं नास्तीत्यर्थः ।

न द्वितीयेत्याह । **तदंतःपातित्वेति** । वर्णानुलोमजांतःपातित्वेनासां पतिपरायणत्वविधाना-३० देव पूर्ववत् स्वैरिणीवद्दासीवच्च न गम्यत्वमित्यर्थः । नापि तृतीय इत्याह । **प्रतिलोमजस्येति** । प्रतिलोमजानां दुष्टत्वेन तद्गमनस्य निषिद्धत्वादित्यर्थः ।

---

१ मिताक्षरा पृ. ११९ पं. ९ ॥ २ ज-तासां । ३ क-प्रतिलोमजातो

किंच वर्णानुलोमजप्रतिलोमजानां सर्वासामपि परपुरुषोपभोगस्य निषिद्धत्वान्निषिद्धकर्माचरणे च पातित्यात्पतितसंपर्कस्यापि निषिद्धत्वान्न स्वैरिण्यादयः परपुरुषोपगम्या इत्याक्षेपोपसंहारव्याजेनाह । **अतः परपुरुषांतरभोग इति ।**

समाधत्ते । **सत्यमेवमित्यादिना** । अयमभिप्रायः । दोषो द्विविधः । दृष्टोऽदृष्टश्चेति । तत्र दृष्टदोषरूपं यन्न रक्षकपित्रादिभ्यः ताडनादिभयं राज्ञः सकाशाद्दंडात्मकं भयं च तदभावादुभयदोषवत्सु परदारेषु यथा सर्वात्मगम्यत्वाभावः तथा न स्वैरिण्यादिष्विति साधारण्येन गम्यत्वकथनमिति । अस्तु नाम गम्यत्ववाचो युक्तिः तद्गमने दंडाभावः कथमित्यत आह । **दंडाभावश्चेति** । अयमाशयः । 'अवरुद्धासु दासीष्वि' त्यनेन वचनेन एकैकस्मिन् पुरुषे नियतानामन्यपुरुषोपभोग उपभोक्तु-र्दंडविधानादनियतपुरुषपरिग्रहो दंडग्रहणे हेतुरित्युक्तं भवति । तथा च यत्र हेत्वभावः तत्र दंडा-भाव इत्यर्थसिद्धत्वात् तादृशहेत्वभावेन स्वैरिण्यादिगमने दंडाभाव इत्यर्थः ।

ननु मा भूत्स्वैरिण्यादिगंतुः पुरुषस्य दंडः रमयित्रीणां स्वैरिण्यादीनामेव दंडोऽस्त्वित्यत आह । **स्वैरिण्यादीनां पुनरिति** । अत्रैव हेत्वंतरमाह । **कन्यां भजंतीमिति** । अयमर्थः । उत्कृष्टं भजंतीं कन्यां किमपि न दापयेदिति । कन्यादंडनिषेधो लिंगम् । एवंविधलिंगदर्शनाच्च स्वैरि-ण्यादीनां दंडाभाव इति । एतदुक्तं भवति । लिंगदर्शनं नाम निमित्तमात्रं नाव्यभिचरितो हेतुः । कन्याऽपि स्त्री, स्वैरिण्यादयोऽपि स्त्रियः अत उभयत्र स्त्रीत्वाविशेषात् कन्याया इव स्वैरिण्यादी-नामपि दंडाभाव इति हेतुमात्रमेव । न तु मुख्यो हेतुस्तद्दंडविद्ध्यभाव एवेति यद्येवं दंडाभावस्तर्हि प्राय-श्चित्तमपि न स्यादित्यत आह । **प्रायश्चित्तं त्विति ।**

केश्चिदुक्तं वेश्यानां वर्णाद्यंतःपातित्वं तद्दूषणपुरःसरं । स्वमतमभिधातुं तदनुभाषते । **यत्पुन-र्वेश्यानामिति** । अनुमानैशिक्षात्वेवं कर्तव्या । वेश्याः वर्णानुलोमांतःपातिन्यो भवितुमर्हंति । प्रतिलोमजात्यंतरासंभवे सति मनुष्यजात्याक्रांतत्वाद्यत्र यत्रोक्तो हेतुः तत्र तत्र वर्णाद्यंतःपातित्वम् । यथा ब्राह्मणादिष्विति । हेतोरनैकांतिकत्वेनानुमानं दूषयति । **तत्रेत्यादिना** । कुंडगोलकादीनां आ-चाराध्याये वर्णाद्यंतःपातित्वाभावस्योक्तत्वेन अत्रोक्तहेतुसद्भावेऽप्युक्तसाध्यस्याभावादित्यर्थः ।

इदानीं स्वमतमाह । **अतो वेश्याख्येति** । तामेव जातिमाह । **उत्कृष्टजातेरिति ।** अनिषिद्धपुरुषोत्पन्नत्वे सति पुरुषसंभोगवृत्तित्वं जातिरित्यर्थः । **पंचमी जातिरितीति** । ब्राह्मण-त्वादिजात्यंतरापेक्षया वेश्याजातिः पंचमीत्यर्थः ।

**पशुवेश्याभिगमन इति** । पश्वभिगमने वेश्याभिगमने चेत्यर्थः ॥

## याज्ञवल्कीये २९१ श्लोकः ।

**वडवा स्मृतेति** । वडवा गृहदासी ॥

## याज्ञवल्कीये २९२ श्लोकः ।

**आक्रमेण च संगच्छन्निति** । अनिच्छन्तीं तां तु पुनर्दन्तनखव्रणादिभिःकरणैराक्रम्य गच्छ-न्नित्यर्थः । **बहुभिर्वाऽपि वासयेदिति** । शुल्कमदत्वा वा एकमेव शुल्कं दत्वा वा यो बहुभिः संगमयति स इत्यर्थः ॥

१ क-ख-दंडविधानान्नियतपुरुषपरिग्रहो । २ क-ख-एवमपि स्त्रीणाम् । ३ ख-अनुमान शिक्षात्वेन न कर्तव्या । ज-तत्रोक्तं ।

## याज्ञवल्कीये २९३ श्लोकः ।

**पुरुषं वाऽभिमुखो मेहतीति** । 'पुरुषं वेति' पदं काकाक्षिवदुभयत्र संबध्यते । अतश्च पुरुषं वाऽपि मुखादावभिगच्छति पुरुषं प्रत्यभिमुखः सन् मेहति मूत्रादिकं करोति चेत्यन्वयः ।

नन्वत्र प्रव्रजितागमने चतुर्विंशतिपणात्मको दंडः **नारदे**न तु 'राज्ञीं प्रव्रजितां धात्रीं' ५ इत्यनुक्रम्य 'आसामन्यतमां गच्छन् गुरुतल्पग उच्यते' 'शिश्नस्योत्कर्तनात्तत्र नास्य दंडो विधीयत' इति शिश्नोत्कर्तनदंडोऽभिहितः । अतः परस्परविरोध इति चेत् मैवं । अत्यंतगुणवत्प्रव्रजितागमन विषयं तत्रैवाभ्यासविषयं वा **नारद**वचनम् । एतद्विपरीतविषयं **योगीश्वर**वचनं इति न किंचिदत्र ।

## याज्ञवल्कीये २९४ श्लोकः ।

**दंडनमेवेति** । नांकनमित्यर्थः । इति स्त्रीसंग्रहणप्रकरणं ।

१० **विवाहादिविधिः स्त्रीणामिति** । यत्र विवादपदे स्त्रीणां पुंसां च विवाहादिविधिः कीर्त्यते तद्विवादपदं स्त्रीपुंसयोगसंज्ञमुच्यत इत्यन्वयः । एतदुक्तं भवति । यत्र विवाहे स्त्रीपुंसयोर्व्यतिक्रमो भवति । तद्यथा कन्या त्वेकं वृणीते भृयमाणश्च पुमान् न तां दोषशंकादिभिः एवमेव पुरुषः परिणेतुमिच्छति कामपि कन्यकां, कन्यका तु न तं दोषशंकादिभिः । एतादृशभेवे व्यवहारः प्रवर्तते । तथा विवाहादीत्यत्र आदिशब्दात्पुरुषेण स्त्री रक्षणीया सर्वात्मना स्त्रियाऽपि भर्तृपरतया भवितव्य- १५ मित्यादिनियमव्यतिक्रमे च विवादो भवति । एतत् सर्वं 'स्त्रीपुंसयोगाख्यं' विवादपदमिति ।

# अथ प्रकीर्णप्रकरणम् २५ ।

**तत्कर्मकरणं तथेत्यादि** । तत्कर्मकरणं राजकर्मकरणम् । पुनः प्रदानं कृतस्य कर्मणः प्रत्यर्पणम् । 'राज्ञे पुरप्रदानमिति' पाठे दुर्गगुल्मस्थानादिरूपपुराणां पालनाय दानं । **संभेदः प्रकृतीनां** संमेलनम् । अथवा प्रकृतीनां संभेदः अंर्ततो यः परस्परविरोधः । **प्रतिग्रहविलोपः** २० प्रतिग्रहस्य विलोपो नाशः । यथा ब्राह्मणाय प्रतिग्रहयोग्याय पात्रभूतायादानम् । अथवा प्रतिग्रहायोग्यशूद्रादौ प्रतिग्रहप्रवृत्तेः प्रतिग्रहस्य विलोपः । **आश्रमिणां** ब्रह्मचर्यादीनां । **कोपः** प्रकोपः उद्रेकः सिक्तातास्वधर्मभ्रंश इति यावत् । अथवा आश्रमिणां परस्परविरोधः कोपः । **न दृष्टं यच्च पूर्वेषु** । पूर्वोक्तेषु ऋणादानादिपदेषु यच्च व्यवहारपदं न दृष्टं तदित्यर्थः । इत्येवं परिगणितानां विवादानां निर्णयो यत्र तत्प्रकीर्णकमिति भावः । एवं च वदता **यो नृपाश्रय इति** केवलं २५ नृपानिर्णेयो यो व्यवहारः स इत्यर्थः ।

## याज्ञवल्कीये २९५ श्लोकः ।

अधुना मूलमवतारयति । **तत्रापराधविशेषेणेति** ।

## याज्ञवल्कीये २९६ श्लोकः ।

**दंडतारतम्यमूहनीयमिति** । प्रायश्चित्तविधिबलाद्दोषतारतम्यभावं ज्ञात्वा ब्राह्मणादिवर्ण ३० सगुणनिर्गुणत्वादिपर्यालोचनया च दंडैः कल्प्य इत्यर्थः ।

---

१ ज-स्थले । २ ज-अन्तर्जो । ३ ज-दंडाः कल्प्याः ।

## याज्ञवल्कीये २९७ श्लोकः ।

'विमांसस्य च विक्रयी' त्यत्रत्य चशब्दार्थमाह । **चशब्दात् कूटेति** । दाप्यश्चोत्तमसाहसमित्यत्रत्यचशब्दाभिप्रायमाह । **चशब्दादंगेति** । अयमर्थः । अंगच्छेदनमपि कृत्वा उत्तमसाहसदंडमपि दापनीया इति ।

## याज्ञवल्कीये २९८ श्लोकः । ५

**पाषाणोत्क्षेपणेन बाहुनेति** । बाहुना कर्त्रा पाषाणोत्क्षेपणेन करणेन यो दोषः कृतः स इत्यर्थः । पाषाणोत्क्षेपकेणेत्यपि पाठोऽस्ति । एतदुक्तं भवति हस्तेन लगुडादिकमुत्क्षिप्यमाणे प्रमादाद्यस्य कस्याप्युपरितिनेनांगभंगादिके जातेऽपि दोषभाक् न स भवतीति ।

## याज्ञवल्कीये २९९ श्लोकः ।

**छेदने चैव यंत्राणामिति** । यंत्राणां[1] चर्मबंधानां योत्क्रं युग्मं बलीवर्दादिग्रीवासंबद्धकाष्ठं १० रश्मयो रज्जवः एतेषां छेदने । **अपैहीति** । एवं च सति स्वामिनो न दंड इत्यर्थः ॥

## याज्ञवल्कीये ३०५ श्लोकः ।

'दुर्दृष्टांस्त्वित्यस्य' वचनस्य 'रागाल्लोभाद्भयाद्वाऽपि स्मृत्यपेतादिकारिणः । सभ्याः पृथक् पृथक् दंड्या विवादाद्विगुणं दममि' त्यनेन पौनरुक्त्यं परिहराति । **अप्राप्तजेतृदंडविधिपरत्वादिति** । यः पूर्वव्यवहारे जितवान् स विचार्यमाणो यदि दोषवान् तदा दुष्टत्वेन स जयी दंड्य इति १५ जेतृदंडो विधीयते । 'दुर्दृष्टांस्त्वि' त्यनेन वचनांतरेण अप्राप्तत्वात् । इतरांशे त्वनुवाद इति पुनरुक्तिरित्यर्थः ।

राजसहिताः सभ्याः दंडनीया इत्युक्तं । तत्र वचनं प्रमाणयति । **पादो गच्छतीति** । कर्त्रादीनां सर्वेषामपि पापप्राप्तिप्रतिपादकवचनबलाद्दुष्टत्वेन दंड्या इत्यर्थः ।

नन्वेकस्यैव पापस्य कर्त्रादीनामंशतः प्राप्तिर्दंडोऽप्येतेषामेक एव स्यात् न पृथक् पृथगित्यत २० आह । **एतच्च प्रत्येकमिति** । एतद्वचनं अस्य वचनस्य दोषप्रतिपादनमात्रे तात्पर्यं न त्वंशतो दोषप्रापणे इत्यर्थः ।

तत्र हेतुमाह । **कर्तृसमवायीति** । अयमर्थः । 'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्' इत्यनेन न्यायेन यः कर्ताऽस्मिन्नेव फलं समवैति । तच्च फलं द्विविधं । ऐहिकं पारलौकिकं चेति । ऐहिकं तु धर्मशास्त्रोक्तं दंडादि । पारलौकिकं तु नरकादि । एवं स्थिते 'रागाल्लोभादि' त्युपक्रम्य 'सभ्याः २५ पृथक् पृथक् दंड्या विवादाद्विगुणं दममिति' प्रतिपुरुषं दंडरूपसंपूर्णफलसंबंधविधानादधर्मस्य च यत्र कर्तरि स्वयमुत्पन्नं तत्रैव फलोत्पादकस्वभावत्वाच्च प्रत्येकं समग्रफलसंबंधविध्यन्यथानुपपत्त्या प्रत्येकं समग्रदुरितापूर्वसंबंध[2] इति ।

१ ज-चर्मबंधनानि । २ ज-अपूर्वस्य ।

## याज्ञवल्कीये ३०६ श्लोकः।

**नारद**वचनस्थतीरितशब्दार्थमाह । **तीरितमित्यादिना । अनुशिष्टदंडमित्यंतेन**। अनुशिष्टशब्दार्थमाह । **अनुशिष्टमित्यादिना यावदित्यंतेन** ।

ननु तीरितं चेति **नारद**वचने निर्णीतस्य व्यवहारस्य दंडावष्टंभपुरस्सरकरणं प्रतीयते । **मनु**-
५ **वचने** त्वेतद्वैपरीत्यं । अतः परस्परविरोध इत्याशंक्य परिहराति । **यत्पुनर्मनुवचनमित्यादिना** । अयमभिप्रायः । धर्मतो व्यवहारो निर्णीत इति निश्चिते पुनः स एव व्यवहारो न निवर्तनीय इत्युच्यते। न पुनर्धर्मतो निर्णीतं न वेति संदेहे न निवर्तनीय इत्युच्यत इति । एतदुक्तं भवति । **नारद**वचनं संशयविषयं । **मनु**वचनं निश्चितविषयमिति ।

इति प्रकीर्णप्रकरणम् ।

१० ग्रन्थसंख्या ३६०४.

माता पुण्यचरित्रकीर्तिविभवा **यस्यांबिका**नामतः ।
**शाकल्या**परमूर्तिरार्यचरितः **श्रीपेदिभट्टः** पिता ।
सोऽयं **कौशिकवंश**भूषणमणिः **श्रीभट्टविश्वेश्वरो**।
**विज्ञानेश्वर**सूक्तिभावविवृतौ दक्षश्चिरं वर्द्धते ॥
१५ अत्रानुक्तं दुरुक्तं किमपि यदि भवेत्तद्धि सूक्तं क्षमीरन् ।
संख्यावंतो महांतो यदुपकृतिविधौ शीलमेषामतंत्रम् ॥
आलोकं लोकहेतोर्दधति हि निबिडध्वांतमुद्रासयंतः ।
प्रालेयांशुप्रदीपद्युमणिमणिगणास्तत्र को हेतुरास्ते ॥

इति श्रीमहापंडितसूरि**श्रीपेदीभट्टात्मजभट्टविश्वेश्वर**विरचितायां **मिताक्षरा**व्याख्यायां
२० **सुबोधिन्या**ख्यायां व्यवहारालोको नाम द्वितीयोऽध्यायः समाप्तः ॥

॥ श्रीकृष्णार्पणमस्तु ॥ ॥ श्रीरस्तु ॥ ॥ श्रीलक्ष्मीनृसिंहाय नमः ॥

**ज**—नेत्रबाणाङ्कचन्द्राब्दे मेवामिश्रोहि शर्मणा ।
श्रीमद्गोविन्ददासार्थमलेखीयं सुबोधिनी ॥ १ ॥